# भट्टिकाव्यम् ।

जयमङ्गलरचितजयमङ्गलया

भरतमल्लिककृतमुग्धबोधिन्या टीकया च

समेतम् ।

श्रीभुवनचन्द्रवसाकेन संस्कृत्य

प्रकाशितम् ।

कलिकातानगर्य्यां

सरस्वतीयन्त्रे

मुद्रितम् ।

इं १८८५ ।

# जयमङ्गलाटीका ।

प्रणिपत्य सकलवेदिनमतिदुस्तरभट्टिकाव्यसलिलनिधेः ।
जयमङ्गलेति नाम्ना नौकेव विरच्यते टीका ॥

लक्ष्यं लक्षणं चोभयमेकत्र विदुषः प्रदर्शयितुं श्रीस्वामिसूनुः कविर्भट्टिनामा रामकथाश्रयमहाकाव्यं चकार । तथा-स्यापनिबन्धनं कविना द्विधाकृतम् । एकं लक्षणसूचकैः प्रकीर्णाधिकारप्रसन्नतिङन्तकाण्डैश्चतुर्भिः । द्वितीयं लक्ष्य-सूचकै रामसम्भवादिभिर्द्वाविंशत्या सर्गैः । तत्र लक्षणं द्विवि-धम् । शब्दलक्षणं काव्यलक्षणञ्च । तत्र प्रथमस्य प्रकीर्णा-धिकारतिङन्तकाण्डानि द्वितीयस्य प्रसन्नकाण्डं यत्रोच्चा-वचेन बहूनां लक्षणानां प्रकरणं तत्प्रकीर्णकाण्डं तदेवात्र प्रथममुक्तं तस्य व्यापित्वात् । उत्तरत्रापि द्रष्टव्यमितिप्रद-र्शनार्थम् । अत्र यद्यप्यादौ कविना देवतानमस्कारो न कृतः तथापीष्टदेवतासङ्कीर्त्तनमपि विघ्नोपशमनहेतुर्भवतीति मन्यमान आह अभूदित्यादि । तस्य हीष्टदेवता सनातनो विष्णुः, स चादौ कीर्त्तितः । तत्प्रतिबन्धना चेयं कथेति प्रबन्धे नैवात्र सङ्कीर्त्तनं रामायणवत्तत्र विष्णोर्यस्मिन् काले जगत्कार्य्यवशादवतारः कृतः तदेव प्रथमं दर्शयति ।

# भरतटीका ।

नत्वा शङ्करमम्बष्ठगौराङ्गमल्लिकात्मजः ।
भट्टिटीकां प्रकुरुते भरतो मुग्धबोधिनीम् ॥
विहिताः पाणिनीयाद्यैः पठनीयादिबोधिकाः ।
भट्टिटीका मम त्वेष मौग्धबोधार्थ उद्यमः ॥
कविकल्पद्रुमोक्तानां धातूनामनुबन्धतः ।
स्पष्टानि यानि कार्य्याणि ततो बोध्यानि तानि तु ॥
नातिस्पष्टानि कार्य्याणि ग्रन्थगौरवभीतितः ।
वाच्यान्यत्र न चाप्यर्था अतिविस्तृतवाग्भवाः ॥

भर्त्तृहरिर्नाम कविः श्रीरामकथाश्रयं महाकाव्यं चकार । अत्र सर्गबन्धो लक्ष्यसूचनाय काण्डबन्धो लक्षणसूचनाय । अत्र सर्गा द्वाविंशतिः प्रकीर्णाधिकारप्रसन्नतिङन्तकाण्डानि चत्वारि । शब्दलक्षणकाव्यलक्षणभेदाल्लक्षणं द्विविधम् । तत्र काण्डत्रये शब्दलक्षणं प्रसन्नकाण्डे काव्यलक्षणम् । आदौ बहुलक्षणप्रदर्शनं प्रकीर्णकाण्डं व्यापकत्वाद्दर्शितम् । महाकाव्यस्यादावाशीर्नमस्क्रिया वस्तुनिर्देशो वा कर्त्तव्य इति सम्प्रदायानुरोधाद्वस्तुनिर्देशं कुर्वन्नेवेष्टदेवतास्मरणात्मकं मङ्गलमप्यादौ प्रकाशयति ।

# भट्टिकाव्यम् ।

## प्रथमः सर्गः ।

अभून्नृपो विबुधसखः परन्तपः
श्रुतान्वितो दशरथ इत्युदाहृतः ।
गुणैर्वरं भुवनहितच्छलेन यं
सनातनः पितरमुपागमत् स्वयम् ॥ १ ॥

अभूदिति । भूतसामान्ये लुङ् भूत इत्यर्थः । अन्यथा राज्ञश्चिरातीतत्वात् कवेः परोक्षत्वाच्च लिट् स्यात् । गातिस्थेति सिचो लुक् । भूसुवोस्तिङीति गुणप्रतिषेधः । नयतेर्डिच्चेति नयतेरौणादिक ऋन् नरो मनुष्यास्तान्नॄन् पातीति आतोऽनुपसर्गे कः आतो लोपः नृपो राजा अत्यन्तधर्मविजयित्वाद्देवराजस्य मित्रमासीदित्याह विबुधसख इति विबुध्यन्त इति विबुधाः देवास्तेषामपि प्रधानत्वात्तत्रेगुपधलक्षणः कः सामान्यशब्दोऽपि देवेषु वर्त्तमानोऽप्यर्थवशाच्छक्रे प्रयुक्तस्तस्य सखेति राजाहःसखिभ्यष्टच् विबुधसखः अनेन धर्मविजयित्वं दर्शयति विबुधसखत्वस्य धर्मकार्य्यत्वात् । धर्मविस्मरणसुरलोकविजयिनश्च ये राजानस्तेषां धर्मविजयी प्रधानम् । परे शत्रवस्त्रिविधाः उच्छेदनीयोपपीड़नीयकर्षणीयाः तत्र ये उपपीड़नीयकर्षणीयास्तान् परांस्तापयतीति परन्तपः द्विषत्परयोस्तापेरिति खच् । खचि ह्रस्वः अरुर्द्विषदजन्तस्येति मम् नृप इत्यनेन समस्तभूमण्डले ख्यातिराख्याता परन्तप इति परमण्डले श्रूयन्त इति श्रुतानि वेदादीनि तैरन्वितः सर्वज्ञः अन्यतोऽर्थतश्च गृहीतत्वात् । दशरथ इत्यनेन नाम्ना

उदाहृतो लोके गीतः । गुण्यन्ते अभ्यस्यन्ते इति गुणाः गुण आमन्त्रणे इति चौरादिकोऽदन्तः तस्मादकर्त्तरि चेत्यादिना घञ् येषामेरजयन्तानामिति दर्शनम् । येषां तन्नास्ति तेषामेरच् स्वरं प्रति विवादो न रूपं प्रति । गुणैरभिरामादिभिर्वरं श्रेष्ठं यं नृपं पितरमुपागमदिति सम्बन्धः । व्रियत इति वरः पचादिना कर्मण्यप् । केन हेतुना उपगतवांस्तं पितरं सनातन इत्यत आह भुवनहितच्छलेनेति भवन्ति उत्पद्यन्ते इति भुवनानि भूर्भुवःस्वरिति त्रयो लोकाः । रञ्जक्युन्नित्यनुवर्त्तमाने भूसूधूभ्रस्जिभ्यश्छन्दसीत्यौणादिकः क्युन् बहुलवचनाद्भाषायामपि भवति तेभ्यो हिताः भुवनहिताः विष्णोर्दशावताराः इह तु रामो द्रष्टव्यः तच्छलेन व्याजेन भुवनहितच्छलेन इदानीं रावणादिकण्टकोद्धरणात् तथाचोक्तं परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युग इति । सनेत्यव्ययं सदार्थे वर्त्तते सना भवतीति सायं चिरमिति ट्यु ट्युलौ टच् तु सनातनो विष्णुः उपागमत् उपजगाम लृदित्वादङ् । सत्स्वन्येषु राजसु गुणैर्वरत्वात् यं पितरं जनकमङ्गीकृतवान् सोऽभूदिति योज्यम् । स्वयमित्यात्मना न कर्मणान्येन वा प्रेरित इत्यर्थः ॥१॥ ज० म०

अभूदिति । दशरथ इति नाम्ना उदाहृतः ख्यातो नृपो राजा अभूत् स कथम्भूतः विबुधसखः विबुधानां देवानां सखा मित्रम् अथवा विबुधस्य इन्द्रस्य सखा सामान्यदेवतावाचिनोऽपि विबुधशब्दस्य विशेषपरत्वात् प्राधान्याद्वा इन्द्रवाचित्वम् एतेन विजयित्वं दर्शितं विबुधसखत्वं विनयेनापि भवतीति प्रतापं दर्शयन्नाह परान् शत्रून् तपतीति परन्तपः श्रुतान्वितः श्रूयन्ते गुरुभ्य इति श्रुतानि शास्त्राणि तैरन्वितो युक्तः अधीतशास्त्र इत्यर्थः सोऽध्यैष्ट वेदानिति वक्ष्यमाणश्लोके वेदाध्ययनस्य नित्यत्वज्ञापनार्थं पुनरुक्तः श्रुतमत्र वेदादन्यच्छास्त्रम् । इत्युदाहृत इत्यत्र केचिद्व्याचक्षते इतं ज्ञानं विद्यतेऽस्येति इती ज्ञानी उदाहृतः ख्यात एव यद्वा इतिषु ज्ञानिषु उदाहृतः इतीति इण गतावित्यस्माद्भावे क्तः सर्वे गत्यर्था ज्ञानार्था इति इतं ज्ञानं ततोऽस्त्यर्थैनैकाजादिति इन् । सनातनो विष्णुर्भुवनहितच्छलेन यं

न्टपं स्वयमात्मना न पुनरन्यप्रकारेण पितरम् उपागमत् अङ्गीकृतवान् सोऽभूदिति योज्यं भुवनेति भुवनानां हितं रावणवधादिरूपं तदेव छलं व्याजस्तेन एतेन भुवनहितमपदिश्य अस्य राज्ञो महत्त्वेनैव पुत्त्रत्वं प्राप्तवानित्यर्थः। अत्र हेतुगर्भविशेषणमाह गुणैर्धैर्य्यगाम्भी- र्य्यादिभिर्वरं श्रेष्ठम्। अभूदिति भूधातोरूपम् अस्तेश्चेत् भूररे इति भ्वादेशः भवद्भूतभव्ये त्रिशः क्याद्या इति भूते टी भूतसामान्यविव- क्षायां लुङिति पाणिनीयाः कातन्त्रेऽपि सम्प्रति वर्त्तमानेत्यत्र सम्प्रतिग्रहणं स्वस्वसंज्ञाकालव्यभिचारसूचनार्थमिति वर्द्धमानमिश्रेण व्याख्यातम्। शास्त्रस्य विवक्षाधीनत्वात् सत्यपि परोक्षत्वे भूतसामान्य- विवक्षायामद्यतनीति पुरुषोत्तमेनाप्युक्तम् अनद्यतनेऽपि वाक्यगम्ये इति क्रमदीश्वरेणोक्तं तेन वोपदेवेन भूतसामान्य एव ष्यादय उक्ताः नत्वनद्यतनाद्यतनपरोक्षत्वविभागेन षीटीथीष्वमिति अस् वर्षे सिः भूस्थापिबेति सेर्लुक् सर्वविधिभ्यो लोपविधिर्बलवानिति न्यायान्नादौ नसोरस्येतीम् सेर्लुकि लुकि न तन्त्रेत्यनेन णुर्घुङ इति न णुः ञ्जवदे- त्यादिना त्रिश्च निषिद्धः पश्चरः शिङ्गेति श्चा रत्वं ङिद्दपिद्र इति अपिद्रस्य ङित्वं तेनादावपि णुर्घुङ इति न गुणः न्टप इति नृम्नु- ष्यान् पाति रक्षतीति पालरक्षणे इत्यस्मात् आदन्तत्वात् ह्नजना- दिति डः टेर्लोपो ङितीति टेर्लोपः विबुधेति विबुध्यन्ते इति अपूर्व- बुधधातोरिजुङत्वात् कृगृज्ञाप्रीजुङः क इति कः विबुधसख इति सख्यहोराज्ञः ष इति षः ययोर्लोप इति इकारलोपः परन्तप इति टम्टष्टटजीत्यादौ नाम्नीत्यत्र चकाराध्याहारादसंज्ञायामपि खः नाम्नये- वेदं सूत्रमिति चेत् कृत्तद्धितसमासानामभिधानं नियामकमित्युक्तेरः- संज्ञायां खः खित्यव्याजरुष इति मन् दशरथ इति शब्देनोक्तत्वात् त्यर्थे वा त्यर्थसम्प्रयुक्तार्थ इति षी दशरथो न्टपोऽभूत् कीदृशः इत्यु- दाहृतः वक्ष्यमाणश्लोकैरुदाहरणतां प्राप्त इति केचित् गुणैरिति गुण्यन्ते अभ्यस्यन्ते इति गुणाः गुणत्कमन्त्रे इत्यस्मात् घञलनड़िति अल् ञेर्लोपोऽनाल्विति ञेर्लोपः इसाल्लोपोऽशितीत्यकारलोपः वर- मिति वृञधातोः व्रियते योऽसाविति पूर्वेणाल् णुर्घुङ इति णुः

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनपारीत् सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥२॥

सनातन इति नित्यार्थात् सनाशब्दात् त्युतनाद्यचिरेत्यादिनाष्टनः सनातनः शाश्वतकंसवैरिणोः शिवेऽपि व्यात्मन्यतियौ सुनिश्चय इति विश्वः। उपागमदिति औगम्लृगत्यां लृदित्वात् शासद्युदिति ङः इनगमेत्यादावङ इत्युक्तेर्नोङ्लोपः। दशरथगुणानाह ॥ १ ॥ भ०

सोऽध्यैष्टेत्यादि। चत्रियस्य धर्मोऽध्ययनं यजनं दानं शस्त्राजीवो भूतरक्षणं चेति उभयं नृप इत्यनेनोक्तम्। भूतरक्षणे शस्त्रमङ्गं स नृपो वेदानध्यैष्ट अधीतवानिति स्वाध्याय उक्तः। वेदयन्ति ज्ञापयन्ति धर्माधर्माविति वेदाः सामादयः पचाद्यच्। इङोऽधिपूर्वस्य विभाषा लुङ्लृङोरिति गाङ् विभाषयेति गाङभावपक्षे रूपम् अजादित्वादाट्। आटश्चेति वृद्धिः ङित्वादात्मनेपदमादेशप्रत्यययोरिति षत्वं ष्टुत्वञ्च। त्रिदशान् देवानयष्ट अग्निष्टोमादिभिः पूजितवान् यजनमुक्तम्। यजेः स्वरितञित इति तङ् अनिक्समीपगत्वात् हलः लिङ्सिचाविति कित्वं न भवति। अनिगन्तत्वात् व्रश्चादिना षत्वं झलोझलीति सिचो लोपः। पितॄनपारीत् आप्यायितवान् पितरमुद्दिश्य यजनं पॄपालनपूरणयोरित्यस्मात् पूरणार्थात् लुङिरूपं सिचि वृद्धिः इटईटीति सिचो लोपः अथवा पितॄनतार्प्सीदिति पाठः तृपप्रीणन इत्यस्मात् लुङि स्पृशमृशकृषतृपदृपां सिज्वक्तव्य इति च्लेः सिचि। अनुदात्तस्य चेत्यादिना अमभावपक्षे रूपं पितॄन् तर्पितवानित्यर्थः। सममंस्त बन्धून् मातृपित्रादिज्ञातीन् सम्मतवान् सदा दानमानादिभिः पूजितवानित्यर्थः मन्यतेरनुदात्तत्वात्तङ्। इत्प्रतिषेधश्च येषां सिच इकार उच्चारणार्थो येषां त्वनुबन्धार्थः तेषां हनः सिजिति कित्करणज्ञापकान्नलोपाभावः। येषां तु इकार इत् तेषामिदित्वान्नकारलोपाभावः। आभ्यन्तरं शत्रुमजित्वा कथं परन्तप इत्याह व्यजेष्ट षड्वर्गमिति कामक्रोधलोभमोहमदमात्सर्याणां षण्णां वर्गः षड्वर्गः तमभिभूतवान् विपूर्वस्य जयतेर्विपराभ्यां जेरिति तङ्।

अरंस्त नीतौ सामादिषु सन्ध्यादिषु च रतः नीतिमानित्यर्थः । समूलघातं न्यवधीत् समूलान्निःशेषानरीन् शत्रून्निहतवान् उच्छेदनीया ये शत्रवः तेष्विदं विधानं समूलोपपदाद्धन्तेः समूलाकृतेत्यादिना णमुल् । ह्रोहन्तेरिति घत्वं वृद्धिः हनस्त इति तत्वं कषादिषु यथेत्यादिना यथाविध्यनुप्रयोगः अनुप्रयोगे लुङि चेति वधादेशः । तस्याकारान्तत्वादुपदेशेऽनेकाच्त्वादिङ्निषेधो न भवति । अतो लोपे कृते तस्य स्थानिवद्भावादतो हलादेरिति विभाषावृद्धिर्न भवति ॥ २ ॥ ज० म०

सोऽध्यैष्टेति । स दशरथो वेदानध्यैष्ट अधीतवान् अधीङ् अध्ययने नवशः प्रमे इति ङित्वात् न्यां सिरिति सिः षीटीधीष्वित्यमं कृत्वा आदिशेचोरिति णौ कृते भूयोऽमजादेरिति पुनरमं कृत्वा आदिशेचोरिति त्रिः किलादिति षः ष्टुभिरिति तस्य टः वेदानिति वेदयन्तीति वेदाः सामादयः पचादित्वादन् घञवनट् इति करणे वा घञ् त्रिदशान् देवान् अयष्ट अग्निष्टोमादिना पूजितवान् केचित्तु यजेरेव देवपूजावाचित्वात् त्रिदशानित्यस्य वैयर्थ्यापत्तेस्त्रिदशानयष्ट सङ्गतवानित्याहुः वस्तुतस्तूपचारात् पूजामात्रवाचित्वेऽपि यजत्रौ-देवार्चादानसङ्गतावित्यत्र देवो देवनं क्रीड़ा अर्चा चेति द्वन्द्वः देवस्यार्चेति तत्पुरुषोऽपि तात्पर्यभेदाद्वाक्यभेदो लौकिके न दोष इति केचित् अच्छ्राजिति जस्य षड् झलस्तादिति सेर्लोपः ष्टुभिरिति तस्य टः पितॄन् अपारीत् आप्यायितवान् त्रिष्टुलिभो पालने पूर्तौ च्यां सिः रुदाद्यस्तीति ईम् वसोऽरस्येति इम् झलस्तादिति सेर्लोपः त्यलोपे त्यलक्षणमिति न्यायात् सेर्लोपेऽपि व्रजवदेत्यादिना त्रिः अतापर्षीदिति क्वचित् पाठः तृपधातुः प्रीणने सकर्मकः प्रीतिमात्रे त्वकर्मक इति चीरस्वामिप्रभृतयः । बन्धून् सममंस्त आदृतवान् मन्योङ् बोधे सम्पूर्वोयमादरार्थ औदित्वादनिम् । षड्वर्गं कामक्रोधलोभमानमदहर्षरूपं व्यजेष्ट अभिभवतिस्म जिजये चकारात् अभिभवे विपराभ्यांजीति सं नीतौ अरंस्त क्रीड़ितवान् रमूङ् जौ क्रीड़े अरीन् शत्रून् समूलघातं यथा स्यात्तथा न्यवधीत् हतवान् समूलानां शत्रूणां घातः । प्राणवियोगफलकव्यापारो यत्र हिंसाक्रियायाम् अन्ये त

वसूनि तोयं घनवद् व्यकारीत्
सहासनं गोत्रभिदाध्यवात्सीत्।
न त्र्यम्बकादन्यमुपास्थिताऽसौ
यशांसि सर्वेषुभृतां निरास्थत्॥ ३॥

समूलशब्दात् पराङ्गतार्थाद्धन्तेर्णमुल् विभक्त्यन्ततदनुप्रयोगश्चेत्याङः। समूलान्निःशेषान् अरीन् प्राप्य हतवानित्यर्थः चर्णं वाभीक्ष्ण्ये पूर्वकाले इत्यत्र वाशब्दस्य व्यवस्थावाचित्वात् योगविभागाद्वा अन्यत्रापि णमुल् वा स्यादिति देवीदासचक्रवर्त्तिना व्याख्यातम्। अरीन् समूलान् हत्वा तत्प्राणत्यागानुकूलव्यापारं कृतवानित्यर्थस्तेन पूर्वकालत्वमपीति दुर्गसिंहप्रभृतयः। एतेन पुनः सम्भ्रान्तशङ्कया सदा सावधानत्वं सूचितम्। घातमिति हन्तेर्घञि णमुल् वा हनस्तऽचिति नस्य तः खेढौष इति हस्य घः जुषिलन्ते जुङ्तोरिति त्रिः न्यवधीदिति हनौ हिंसागत्योः हनवधष्टीति वधादेशेन वधान्तत्वाङ्क्सादेः सेम इत्यादौ वधवर्जनाद्वधेः सेमृत्वस्चनाद्वा वसौरस्येतीम् इसादेः सेम इति वधवर्जनान्न त्रिः व्यजेष्ट षड्वर्गमित्यनेन मानसा रिपवः अरीन् न्यवधीदित्यनेन च बाह्याश्च निर्जिता अतः परन्तप इति प्रागुक्तमुपपादितम्॥ २॥ भ०

वसूनीति। वसूनि द्रव्याणि बन्धुव्यतिरेकेण बालादिभ्यो व्यकारीत् दत्तवान् विक्षिप्तवानिति वा। किरतेर्लुङि रूपं कः किमिवेत्यपेक्षायामाह तोयं घनवदिति तोयम् उदकं घनो मेघः फलनिरपेक्षतया यथा विकिरति तद्वत्। एवं सम्यक्पालनादिन्द्रेण तुल्यत्वमाह सहासनं गोत्रभिदाध्यवात्सीदिति गोत्रभिदा इन्द्रेण सहासनम् अध्यवात्सीत् अध्युषितवान् अनेनात्यन्तधर्मविजयित्वस्य फलं दर्शयति वस निवास इत्यस्य रूपं वसिः संप्रसारणीति वचनादिड़भावः। अस्तिसि च इतीट्। वदव्रजेत्यादिना वृद्धिः सस्यार्द्धधातुक इति तत्वम् आसनमिति उपान्यध्याङ्वस इति अधिकरणस्य कर्मसंज्ञा। त्रीणि अम्बकानि अक्षीणि यस्येति त्र्यम्बको महादेवः तस्मादन्यं

पुण्यो महाब्रह्मसमूहजुष्टः सन्तर्पणो नाकसदां वरेण्यः।
जज्वाल लोकस्थितये स राजा यथाऽध्वरे वह्निरभिप्रणीतः॥४॥

नोपास्थित न पूजितवानित्यर्थः उपपूर्वात्तिष्ठतेः देवपूजासङ्गतिकरण-
पथिष्विति देवपूजायां तङ् स्थाघ्वोरिच्चेत्यादिना इत्वं कित्वं च।
ह्रस्वादङ्गादिति सिचो लोपः। इषून् बिभ्रतीति अन्येभ्योऽपि दृश्यत
इति क्विप् इषुभृतो धनुर्द्धराः सर्वेषां तेषां यशांसि निरास्थत् निरस्त-
वानित्यर्थः एतेनास्य असाधारणीकृतास्त्रत्वं दर्शितम्। उपसर्गादस्य-
त्यूह्योर्वा वचनमिति वचनाद्यदा तङ् नास्ति तदा तिप् अस्यतीत्या-
दिना च्लेरङ् अस्यतेस्थुक्॥३॥ ज० म०

वसूनीति। असौ दशरथः वसूनि धनानि व्यकारीत् दत्तवान् क
इव घनवत् मेघ इव वत् साम्ये इति वत् चित्त्वादव्ययत्वं तोयमिति
तोयमिव तोयतुल्यानि वसूनीत्यर्थः तोयशब्दोऽयं स्वप्राधान्यैकत्वाद्-
त्युक्तैकवचनः अनेकेषामपि वसूनामेकतुल्यतेत्याशयः कृञ् विक्षेपे सौ
व्रजवदेति वृद्धिः गोत्रान् पर्वतान् भिनत्तीति गोत्रभिदिन्द्रः सत्सूद्विषेत्या-
दिना क्विप्। तेन सह एकमासनमध्यवात्सीत् वसौ निवासे अनिट्-
त्वात् व्रजवदेति वृद्धिः सस्यार्धधातुके इति सस्य तः कर्मक्रिया इत्यादिना डस्य
ढत्वं त्र्यम्बकात् महादेवादन्यं न उपास्थित न पूजितवान् नैनाम्ब-
सञ्ज्ञाराध इति आराधनार्थे मं स्थादोर्ङिरिति गुणनिषेधस्त्रीणि
अम्बकानि नेत्राणि यस्येति विग्रहः द्यौर्भूमिरापस्तिस्रोऽम्बा यस्येति
भारतम्। त्रयाणां लोकानामम्बः पितेत्यन्ये तिस्रोऽम्बाः शक्रयो-
ऽस्येति केचित् अन्यारभ्येति पी सर्वेषुभृतां सकलधनुर्द्धराणां यशांसि
निरास्थत् निरस्तवान् ततोऽधिकत्वात् वक्तास्स्यास्लिष इति ङः वच्य-
स्येति अस्यतेरस्थादेशः इषून् बाणान् बिभ्रतीति पूर्ववत् क्विप् तस्य
तन् पितीति तन्॥३॥ म०

पुण्य इति। पुनातीति पुण्यः पूञो यत् णुक् ह्रस्वस्येति
औणादिकौ यत्। णुगागमस्य ह्रस्वस्य अत्यन्तपुण्यकरणाद्राजापि
पुण्य इत्युच्यते। तन्मयत्वाद्राजा अग्निरपि पुण्यः पावनात् पुण्यः

यागादि: पुण्य: तेन पुरुष: पूज्यते । महतां वेदविदां ब्रह्मणां ब्राह्मणानां समूहेन जुष्ट: सेवितो राजा अग्निश्च ब्रह्मशब्दोऽत्र ब्राह्मणपर्य्याय: । नाके स्वर्गे सीदन्तीति सत्सूद्विषेत्यादिना क्विप् नाकसदो देवा: तेषां कर्मणि षष्ठी सन्तर्पयति प्रीणयतीति सन्तर्पण: सन्तर्पयते कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् राजा यागादिना तर्पयति अग्निरप्यग्निमुखत्वाद्देवानां वरेण्य: श्रेष्ठ: राजा अग्निश्च वृङ् एण्य: जज्वाल प्रदीप्तवान् लोकस्थितये मा भूल्लोकस्य स्थित्यतिक्रम इत्येवमर्थो अग्निरपि लोकस्य स्थितये ज्वलति । यथोक्तम्, अग्नौ प्रास्ताहुति: सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं तत: प्रजा इति । अभिप्रणीत इत्यग्निविशेषणम् । आभिमुख्येन प्रणीत इति प्रादिसमास: उपसर्गादसमास इत्यादिना णत्वं मन्त्रेणाभिमुखीकृत इत्यर्थ: । तथाऽध्वरे यागेऽभिप्रणीतो वह्निर्ज्वलति तथा राजापीत्यर्थ: ॥ ४ ॥ ज० म०

पुण्यो महेति । स राजा लोकस्य स्थितये मर्य्यादायै जज्वाल दीप्तवान् प्रतापवान् बभूवेत्यर्थ: यथा अध्वरे यज्ञे अभिप्रणीतो मन्त्रेण संस्कृतोऽग्निर्ज्वलति अग्निज्वलनमपि लोकस्थित्यर्थं स्यात् । यदुक्तम्, अग्नौ प्रास्ताहुति: सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं तत: प्रजा इति उभयोर्विशेषणमाह पुण्य: पुनातीति पुण्यं धर्म: नाम्नन्ये तिक्चेति सूत्रेणान्येऽपि कृता: प्रयोगा: स्युरिति सूचितं तेन पूधातोडुण्य टेर्लोपो भितीति टेर्लोप: पुण्ययोगात् पुण्य: अर्शादित्वाद: । पुण्यं धर्मे मनोज्ञे च पावने च प्रयुज्यते । महतां ब्रह्मणां समूहेन जुष्ट: सेवितस्तेन प्रीतो वा ब्रह्मा विरिञ्चिद्विजयोरिति विश्व: । शङ्खे तैले तथा मांसे वैद्ये ज्योतिषिके द्विजे यात्रायां पथि निद्रायां महत् शब्दो न दीयत इति निषेधान्महता ब्रह्मसमूहेन जुष्ट इति वा विगृह्यते । महांश्चासौ ब्रह्मसमूहजुष्टश्चेति वा यद्वा महद्ब्रह्म तपो येषां तेषां समूहेन जुष्ट: । वेदस्तत्वं तपो ब्रह्म ब्रह्मा विप्र: प्रजापतिरित्यमर: । यद्वा अमहा अश्वेव विष्णोरिव महस्तेजो यस्यासावमहा इति पृथक् पदम् । यद्वा मह्यते

स पुण्यकीर्त्तिः शतमन्युकल्पो महेन्द्रलोकप्रतिमां समृद्ध्या ।
अध्यास्त सर्वर्त्तुसुखामयोध्यामध्यासितां ब्रह्मभिरिद्धबोधैः ॥५॥

पूज्यतेऽसौ महाः स्वार्चुसिति कर्मण्यस् । यद्वा अमो रोगस्तं हन्ती-त्यमहा तस्मिन् राजनि सति लोकानां व्याधिभयं नासीदित्यर्थः । आरोग्यमपि कविभिर्वर्ण्यते तथाच कालिदासः जनपदे न गदः पद-मादधावभिभवः कुत एव सपतज इत्यग्नेर्व्याधिहन्तृत्वमस्त्येव । शङीजि जुषसुदि सेर्वे ईदित्वान्नेम् शीङीदितीम्निषेधः । नाके स्वर्गे सीदन्तीति नाकसदो देवाः पूर्ववत् क्विप् तेषां सन्तर्पणः षड्नन्दीति षेऽनः ढषे ऋतीति ढे षी सम्यक् तर्पणं यस्मादिति विद्यमानसम्बन्धे षष्ठीत्यन्ये । कं सुखं तद्विपरीतमकं नास्त्यस्मिन्निति नाकः णञोऽनो-वाजञसोरिति व्यवस्थितविकल्पत्वान्नञोऽनादेशः । वरेण्योऽन्या-भिलषया श्रेष्ठः वृञधातोः श्रेष्ठार्थे नाम्नयन्ये तिक् चेत्यन्यकृत्सूचना-देन्यः ॥ ४ ॥ भ०

यतस्तो राज्यं चकार तां नगरीं दर्शयन्नाह, स पुण्येत्यादि । स्वामिगुणपूर्वका हि निवासस्य गुणा भवन्तीति प्रदर्शनार्थं पश्चात्तद-भिधानं तथा चोक्तम् । स तु यच्छीलस्तच्छीला अस्य प्रकृतयो भव-न्तीति । स राजा पुण्यकीर्त्तिः पुण्याः पवित्राः कीर्त्तयो यस्य सः । शतमन्युकल्प इति प्रभावं दर्शयति ईषदसमाप्ताविति कल्पः शतमन्यु-रिन्द्रः महेन्द्रलोकप्रतिमामयोध्यामिति योज्यम् । प्रतिमीयते तुल्यते इति प्रतिमा आतश्चोपसर्ग इत्यङ् । महेन्द्रलोकेन प्रतिमा तुल्या तृतीयेति योगविभागात् समासः अमरावतीमिवेत्यर्थः कया समृद्ध्या सम्यगतिशयेन ऋद्धिः समृद्धिः प्रादिसमासः अध्यास्त अध्यासितवान् भूतसामान्ये लङ् । आस्तेरनुदात्तत्त्वात्तङ् अधिशीङ्स्थादिना अधिकरणस्य कर्मसंज्ञा सुखयतीति सुखा पचाद्यच् सुखहेतुत्वाद्वा सुखा । सर्वेषु ऋतुषु सुखेति सप्तमीति योगविभागात् समासः । अध्यासिताम् अध्युषितां ब्रह्मभिर्ब्राह्मणैरिद्धबोधैः सर्वशास्त्रपरि-ज्ञानात् पटुबुद्धिभिरित्यर्थः इन्धेर्निष्ठायामनुनासिकलोपः ॥५॥ ज०म०

निर्माणदक्षस्य समीहितेषु सीमेव पद्मासनकौशलस्य ।
ऊर्द्ध्वस्फुरद्रत्नगभस्तिभिर्या स्थितावहस्येव पुरं मघोनः ॥ ६ ॥

स पुण्येति । स राजाऽयोध्यामध्यास्त अध्युवास कर्मक्रियेत्यादिना डस्य च ढत्वम् । जिलासङ् उपवेशे घ्यां लुगङ्गोऽपं इति शपो लुक् स किम्भूतः पुण्या शोभना कीर्त्तिर्यस्य स तथा । पुण्यं सुगन्धे सुकृते पुण्यं शोभनमुच्यत इति शाश्वतः । शतं मन्यवो यज्ञा यस्य स शतमन्युरिन्द्रस्तस्यादीषदून इत्यादेशोने इति कल्पः । अयोध्यां किम्भूतां सन्द्धा सम्पत्त्या महेन्द्रलोकेनामरावत्या प्रतिमा सादृश्यं यस्याः सा तां सर्वेष्वृतुषु सुखयतीति पचादित्वादन् सुखहेतुत्वात् सर्वर्त्तुसुखाम् इज्ञबोधैर्दीप्तज्ञानैर्ब्राह्मणैरध्यासिताम् इन्धेः क्तः इज्ञः बुधेर्घञि बोधः ॥५॥ भ०

निर्माणेति । पद्मासनो ब्रह्मा पद्ममासनं यस्येति कृत्वा तस्य कौशलं नैपुण्यमिति षष्ठीसमासः । तस्य पूरणगुणेत्यादिना न प्रतिषेधः तत्र विशिष्टा एव गुणाः रूपरसगन्धस्पर्शाः तद्विशेषाश्च शुक्लनीलादयः कटुकाम्लादयः सौरभ्यादयः शीतोष्णादयश्च गृह्यन्ते तत्र रूपादिभिः समासो भवत्येव । तत्स्थैश्च गुणैः षष्ठी समस्यते न तु तद्विशेषगुणैरिति वचनात् अन्यैस्तु समासप्रतिषेधः । एवञ्च कृत्वा मुनित्रयवचनमर्थवद्भवति तद्यथा । अधिकरणैतावत्त्वे च तदशिष्यं संज्ञाप्रमाणत्वादिति पाणिनेः युगपद्दर्शनादिति रूपसामान्याद्वा इति वचनप्रामाण्यादिति चेल्लोपप्रतिषेध इति कात्यायनस्य नकारग्रहणसामर्थ्यात् लोपो न भविष्यतीति किं पुनरत्नासत्त्वमिति भाष्यकारस्येति । तस्य सीमेव मर्यादेव अयोध्या ततो न ह्यन्यत्परं शोभनमस्तीत्यर्थः । कीदृशस्य निर्माणदक्षस्य निर्मितिर्निर्माणं सृष्टिः तत्र दक्षस्य पटोः । क्व विषयेषु समीहितेषु सृष्टुमीप्सितेष्वित्यर्थः । ऊर्द्ध्वमुपरिष्टात् स्फुरद्रत्नगभस्तिभिः स्फुरन्तो ये रत्नानां गभस्तयो रश्मयः तैर्हासभूतैर्मघोनः इन्द्रस्य पुरममरावतीम् अवहस्येव स्थिता या तामध्यास्त मघवन् श्वन् उक्षन् इत्यौणादिकाः श्वयुवमघोनामिति संप्रसारणम् ॥ ६ ॥ ज० म०

सद्रत्नमुक्ताफलवज्रभाञ्जि विचित्रधातूनि सकाननानि ।
स्त्रीभिर्युतान्यप्सरसामिवौघैर्मेरोः शिरांसीव गृहाणि यस्याम् ७

निर्माण इत्यादि । ऊर्द्ध्वं स्फुरन्तो ये रत्नानां गभस्तयो रश्मयस्तैर्हासभूतैर्मघोनः इन्द्रस्य पुरम् अवहस्येव निर्माणदक्षस्य विश्वकर्मणः समीहितेषु सम्यक् चेष्टितेषु या स्थापिता तामयोध्यामध्यास्तेति पूर्वेणान्वयः समुपसर्गेण बहुत्वेन च चेष्टाया आधिक्यं सूचितम् । विश्वकर्मणा नेदृशी शोभना पुरी निर्मिता अत इमां विलोक्य ईदृक् पुरीनिर्माणे चेष्टा जातेत्यभिप्रायः । पद्ममेव आसनं यस्य स पद्मासनो ब्रह्मा तस्य कौशलस्य नैपुण्यस्य सीमा इव उत्कर्षायां ब्रह्मणा नेदृशी शोभनान्या पुरी निर्मितेति भावः । अतः सुतरां विश्वकर्मण ईदृक् निर्माणे चेष्टावत्त्वम् । यद्वा निर्माणदक्षस्य विश्वकर्मणः समीहितेषु निर्मितेषु सीमेवेतः परं शोभनं न निर्मितम् प्रत्यभिप्रायः । किम्भूतस्य पद्मासनस्येव कौशलं यस्य यद्वा पद्मासनस्य कौशलं सौन्दर्यं यस्य स पद्मासनकौशलो ब्रह्मा तस्य समीहितेषु वाञ्छितेषु सीमेव तस्य किम्भूतस्य निर्माणदक्षस्य निर्माणचतुरस्य । यद्वा कौ पृथिव्यां शलते चलतीति कौशलः पचादित्वादच् सरसिजमित्युदाहरता वोपदेवेन क्वचित् समासे विभक्तेर्न लुक् इति सूचितं तेनात्र सप्तम्या अलुक् पद्मासनश्चासौ कौशलश्चेति कर्मधारयस्तस्य समीहितेषु सीमेव क्वचिद्विशेष्यः प्राक् प्रयुज्यते प्राग्भावस्य विवक्षाधीनत्वात् इति पद्मासनस्य प्राग्भावः कौशल इति विशेषणात् पृथिव्यां विहितसृष्टेर्नैतादृशी सृष्टिरिति सूचितम् अत एव पृथिव्यां प्रतियोग्यभावात् स्वर्गमुपहस्य स्थिता मघोनः किम्भूतस्य निर्माणदक्षस्य स्वपुरनिर्माणं दक्षते हन्तीति पचादित्वादच् इमां पुरीं दृष्ट्वा स्वपुरीनिर्माणनिन्दकस्येत्यर्थः ॥६॥ म०

सद्रत्नेति । सन्ति शोभनानि यानि रत्नादीनि तानि भजन्ते यानि गृहाणि तानि सद्रत्नमुक्ताफलवज्रभाञ्जि मुक्ताफलवज्रयो रत्नान्तर्भावेऽपि प्राधान्यख्यापनार्थं वचनं गोबलीवर्दन्यायाद्वा रत्नशब्देन मरकतपद्मरागवैदूर्यादयो गृह्यन्ते । सद्रत्नादियुञ्जीति पाठा-

अन्तर्निविष्टोज्ज्वलरत्नभासो गवाक्षजालैरभिनिष्पतन्त्यः।
हिमाद्रिटङ्कादिव भान्ति यस्यां गङ्गाम्बुपातप्रतिमा गृहेभ्यः ८

न्तरम्। युजेरसमासे इति प्रतिषेधो न भवति अनपुंसकविषयत्वात् नपुंसके तु झलचलस्य नुमोविधानात्। विचित्रधातूनि विचित्राः नानाप्रकाराः धातवो मनःशिलादयो येषु गृहेषु सेवाविरचितचित्रकर्मत्वात् सकाननानि सौधानि स्त्रीभिर्युतानि अप्सरसामिवौघैः तत्रत्याभिः स्त्रीभिरप्सरोभिरिवेत्यर्थः। मेरोः शिरांसीव मेरोः शृङ्गाणीव एवंविधानि गृहाणि यस्यामयोध्यायां तामध्यास्त। गृह इति गेहे कः तत्र गृहशब्दो वेश्मनि नपुंसकलिङ्गः तत्स्यायिषु पुंलिङ्गो नित्यं बहुवचनान्तश्च ॥ ७ ॥ ज० म०

यस्यामयोध्यायां गृहाणि मेरोः शिरांसीव उभयविशेषणमाह, सद्रत्नेत्यादि। सन्ति शोभनानि रत्नानि पद्मरागादीनि मुक्ताफलानि मौक्तिकानि वज्राणि हीरकाणि च भजन्ते इति विण् ञ्णित्यन्ते जुङ्तोरिति वृद्धिः मुक्ताफलवज्राणां रत्नत्वेऽपि प्राधान्यात् प्राचुर्य्याद्वा पृथगुपादानं, जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्ष्यते इत्यनुशासनात्। सद्रत्नानि शोभनमध्ये उत्कृष्टानीत्यर्थः। युञ्जीति पाठे रत्नादीनां युक् योगो येषु तान्युसिति क्विप् विचित्राः धातवो येषु मनःशिलादिभिः कृतचित्रत्वात् सुमेरुशृङ्गेषु सहजत्वात् काननैः सह वर्त्तमानानि गृहसन्निधिविहितोद्यानात् मेरुशृङ्गेषु सहजत्वात् सहःस्रो वेति विभाषया सहशब्दस्य सो बहुव्रीहौ अप्सरसामोघैरिव स्त्रीभिर्युतानि ओघशब्दादेकैकशोऽपि स्त्रीणामप्सरःसमूहसादृश्येनातिसौन्दर्य्यं दर्शितम्, ओघो वृन्देऽम्भसां रये इत्यमरः ॥ ७ ॥ भ०

अन्तरित्यादि। अन्तः गृहमध्ये निविष्टानि निहितान्युज्ज्वलरत्नानि यानि तेषां भासो रश्मयः गृहेभ्यो गवाक्षजालैः अभिनिष्पतन्त्यः निर्गच्छन्त्यः यस्यां भान्ति तामध्यास्तेति योज्यं पर्वतस्य उन्नतप्रदेशष्टङ्क इत्युच्यते तस्मात् हिमवत्पर्वतटङ्कादिव गङ्गाम्बुपातप्रतिमा गङ्गाजलप्रवाहतुल्याः स्वच्छत्वात् ॥ ८ ॥ ज० म०

धर्म्यासु कामार्थयशस्करीषु मतासु लोकेऽधिगतासु काले।
विद्यासु विद्वानिव सोऽभिरेमे पत्नीषु राजा तिसृषूत्तमासु ॥९॥

अन्तरित्यादि। यस्यामन्तर्मध्ये निविष्टानामर्पितानाम् उज्ज्वलानामुद्दीप्तानां रत्नानां भासो दीप्तयो गवाक्षजालैर्वातायनसमूहैर्जालानतिगवाक्षवर्णा रन्ध्रेभ्योऽभिनिष्पतन्त्यो निःसरन्त्यो भान्ति हिमाद्रेर्हिमालयस्य टङ्कात् पाषाणदारणात् विदीर्णप्रस्तरभागात् अभिनिष्पतन्त्यो गङ्गाम्बुपातप्रतिमा इव गङ्गाजलपतनच्छटा इव, टङ्कः कपित्थभेदे स्यात् मानान्तरखनित्रयोः। कोषेऽधिकोषे जङ्घायां पाषाणदारणे इति विश्वः। गवामक्षीव गवाक्षः अक्ष्णोऽदर्शनादिति अः यस्येति लोप इतीकारलोपः। हिमप्राधान्यात् हिमस्याद्रिर्हिमाद्रिरिति षष्ठीसमासः हिमेन युतोऽद्रिरिति वा अभिनिष्पतन्त्य इति नदन्तसौत्रस्त्यर्थे चेति सूत्रेण पदत्वनिषेधात् समासे लुप्तविभक्तिकस्य पदान्तत्वं ज्ञापकसिद्धं ज्ञापकसिद्धस्यानित्यत्वं तेन समासे लुप्तविभक्तिकस्य कचिदपदान्तत्वमपि तेन सेतुकखपफे वेति सूत्रेण विसर्गसम्बन्धिसस्य कृतत्वात् किलादिति षत्वं स्यादिति तु वेसूदित्यादिसूत्रे निष्कुष इति मूर्द्धन्यषनिर्देशात् सूचितं तेनात्र सेतुकखपफे वेति विसर्गस्य से कृते किलादिति षत्वं मनीषादित्वाद्वा सेतुकखपफे वेत्यत्र वाशब्दो व्यवस्थावाची तेनात्र नित्यं सकार इति बोध्यम् ॥ ८ ॥ भ०

धर्म्यास्विति। धर्मादनपेतासु धर्मपथ्यर्थेत्यादिना यत्। कामार्थयशांसि कर्तुं शीलं यासां तासु। कृञो हेत्वित्यादिना ताच्छील्ये टः अतः कृकमीत्यादिना विसर्जनीयस्य सत्वं टित्त्वात् ङीप् मतासु पूजितासु लोके तासां प्रतीतत्वात्। अधिगतासु काले विवाहयोग्ये काले परिणीतासु सोऽभिरेमे स राजाऽभिरतवान् पत्नीषु पत्युर्नो यज्ञसंयोग इति नकारः। तिसृषु कौशल्याकैकेयीसुमित्रासु उत्तमास्विति सच्चारीगुणैः श्रेष्ठासु विद्यास्विति विदन्ति आभिर्धर्माधर्माविति विद्याः संज्ञायां समजेत्यादिना क्यप्। तिसृषु सामर्ग्यजुराख्यासु धर्म्यास्वित्यादिकं तुल्यम्। विद्वानिव यथा अधिगतविद्य इत्यर्थः विदेः शतुर्वसुः दीर्घ-

पुत्त्रीयता तेन वराङ्गनाभिरानायि विद्वान् क्रतुषु क्रियावान्।
विपक्त्रिमज्ञानगतिर्मनस्वी मान्यो मुनिः स्वां पुरमृष्यशृङ्गः १०

ष्ठल्ङ्यादि संयोगान्तलोपः तस्य राज्ञः पत्नीभिस्ताभिः सह रममाणस्य सुता नैवासन् ॥ ९ ॥ ज०म०

धर्म्यास्विति। स राजा तिसृषु पत्नीषु अभिरेमे चिक्रीड़ दूफले-त्यादिना अकारस्यैत्वं खिलोपश्च यथा विद्वान् पण्डितो विद्यासु रमते ऐतेः ग्रतुः कतुर्वेति वाशब्दस्य व्यवस्थावाचित्वात् पाण्डित्यार्थे नित्य-मिति बोध्यं विदन्तीति विद्याः भीव्रजयजेत्यादिना क्यप् उभयविशे-षणमाह धर्म्यासु धर्मादनपेतासु ढधेकात् ण्गीकेत्यादिना ण्यत्रः तेषां ण्यत्रादीनां सेत्त्वमणित्त्वञ्च स्यात् अतोणित्त्वं तेन णित्त्वे त्रिरित्यादिना न त्रिः ङ्गिल्लेति न ङीप् कामसर्थं यशः कुर्वन्ति इति स्तकुष्ट इति टः। हेत्वाद्यर्थे ट इति परे स्मते यशस्करी विद्येति उदाहरणेन हेत्वा-द्यर्थः सूचितः विद्याया यशस्करणे हेतुत्वात् अन्यथा विद्येति निर्देशो निरर्थकः टित्त्वात् ङ्गिन्नश्चाहेति ङीप् सेतुकखपफे वेति वेः सः लोके मतासु पूजितासु काले विवाहसमये अधिगतासु परिणीतासु पच्चे शैशवसमये गृहीतासु श्रेष्ठासु ॥ ९ ॥ भ०

ऋष्यशृङ्गनामा मुनिः पुत्त्रीयं क्रतुं जानातीति पुरोधसो वशिष्ठा-दुपश्रुत्य राज्ञा वारविलासिनीभिरानायितो मुनिरित्येतत् कथयितुमाह, पुत्त्रीयतेत्यादि। पुत्त्रीयता आत्मनः पुत्त्रमिच्छता इच्छायां सुप आत्मनः क्यजिति क्यच् क्यचि चेतीत्त्वम्। तेन राज्ञा प्रयोजककर्त्रा वराङ्गना-भिर्वरस्त्रीभिः प्रयोज्यकर्त्रीभिः आनायि स्वां पुरमिति योज्यम्। नीवह्योरित्यादेरपि अकथितञ्चेति चकारेण संगृहीतत्वात् नयतिर्द्वि-कर्मकः। तत्र प्रधानकर्मणि लुङ्। चिण्णिलोपौ चिणो लुगिति त-शब्दस्य लुक् गुणकर्मणि तु पुरमिति द्वितीया गतिबुद्धीत्यादिना प्रयोज्य-कर्त्तरि द्वितीया न भवति। नीवह्योः प्रतिषेध इति वचनात् विद्वान् वेदार्थतत्त्ववित् एवञ्च ज्ञात्वा क्रतुषु क्रियावान् प्रशस्तक्रियः प्रशंसायां मतुप्। विपक्त्रिमज्ञानगतिरिति विपाकेन निर्वृत्तम्, पचतेः क्त्रिः क्त्रेर्मप्

ऐहिष्ट तं कारयितुं कृतात्मा क्रतुं नृपः पुत्रफलं मुनीन्द्रम्।
ज्ञाताशयस्तस्य ततो व्यतानीत्स कर्मठः कर्म सुतानुबन्धम् ११

यत् पूर्वजन्मकृतमनिवर्त्तनीयं कर्म तस्योपतापः प्रत्ययाद्विनोपदेशात् ज्ञानाद्
प्रवृत्तिर्बुद्धावस्य जातेत्यर्थः। मनस्वी प्रशस्तमनाः प्रशंसायामस्मायामेधे-
त्यादिना विनिः। मान्यो मानार्हः अर्हे कृत्यतृचश्चेति ण्यत्। धर्मादि-
मननान्मुनिः मनेरुच्चोपधाया इति इन्, उपधाया उकारः। ऋष्यस्य
शृङ्गम् ऋष्यशृङ्गं तच्छृङ्गमिव शृङ्गं यस्य स ऋष्यशृङ्गः। सप्तम्युपमाने-
त्यादिना उत्तरपदलोपी समासः॥ १०॥ ज०म०

पुत्त्रीयतेत्यादि। आत्मनः पुत्त्रमिच्छता तेन राज्ञा प्रयोजककर्त्रा
वराङ्गनाभिः प्रयोज्यकर्त्रीभिर्ऋष्यशृङ्गनामा मुनिः स्वां पुरमानायि
णीञ् प्रापणे द्विकर्मकः ण्यादिजन्ताद्धेत्यादिना मुख्यकर्मोक्तं रतनो-
र्यगिणाविति तनि इण् इणस्तल्लोप इति तनो लोपः। ञेर्लोप इति
ञिलोपः तदानयने हेतुगर्भविशेषणमाह विद्वान् पण्डितः क्रतुषु यज्ञेषु
क्रियावान् प्रशस्तक्रियः मोऽङ्मकृपादिति अस्त्यर्थे वतुः अस्त्यर्थप्रत्ययाः
प्राशस्त्यादिविवक्षया भवन्ति। यदुक्तं भूमनिन्दाप्रशंसासु नित्ययोगेति-
शायने। संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादय इति। विपाकेन जाता
ज्ञानस्य गतिर्मार्गो यस्य स तथा विनोपदेशाज्ज्ञानं जातमित्यर्थः
अतिपरिणतज्ञानमार्ग इत्यर्थो वा। ङ्वितस्त्क्त इति क्तिसक् गति-
मार्गे दशायाञ्च ज्ञाने यात्राद्युपायने इति विश्वः। मनस्वी प्रशस्त-
मनाः। अस्मायामेधास्रजो विनिरिति विन् मान्यः मानार्हः ढघेकादिति
अर्हार्थे साध्वर्थे वा यत्रः धर्मादिमननान्मुनिः मनेर्निपातनात् ऋष्यस्य
मृगस्य शृङ्गमिव शृङ्गमस्य आकर्षस्य इत्युदाहरणेन कचिन्मध्यमपदलोप
इति सूचितं षष्ठीप्रथमयोरिवार्थः समास इति श्रीपतिदत्तः तन्मते
ऋष्यस्येव मृगस्येव शृङ्गमस्येति विग्रहः। प्रशस्तान्यङ्गान्यासामिति
गोत्वणेति पामादित्वान्नप्रत्ययेऽङ्गनाः पुत्त्रीयतेति क्योऽस्वत्रादिति क्यः
अकारस्य ईकारः॥ १०॥ भ०

ऐहिष्टेति। तं मुनीन्द्रं क्रतुं कारयितुं नृप ऐहिष्ट ईहित-

रक्षांसि वेदीं परितो निरास्थदङ्गान्ययाक्षीदभितः प्रधानम् ।
शेषाण्यहौषीत्सुतसम्पदे च वरं वरेण्यो नृपतेरमार्गीत् ॥ १२ ॥

वान् ईहतेरात्मनेपदिनो लुङि सेट्त्वादिटि च रूपम् । द्विकर्मकता तु हृक्रोरन्यतरस्यामिति । कृतात्मा वशीकृतात्मेति भावः । पुत्त्रफलं पुत्त्रः फलं कार्य्यं यस्य क्रतोः तत उत्तरकालं स मुनिः परचित्तज्ञत्वात् ज्ञाताशयो ज्ञाताभिप्रायो राजाभिमतं कर्म कारयितुं तस्य नृपस्य कर्म व्यतानीत् प्रारब्धवान् । तनोतेर्नेटीति हलन्तलक्षणायां प्रतिषिद्धायाम् अतो हलादेरिति विभाषाप्राप्तिः कर्मठः कर्मणि घटते कर्मणि घटो ठच् । यागक्रियानिष्पादक इत्यर्थः सुतानुबन्धं सुतानुबध्नातीति कर्मण्यण् । सुतानुबन्धीति पाठान्तरम् । सुतानुबन्धुं शीलमस्येति । सुप्यजातौ णिनिः सुपीत्यनुवर्त्तमाने सुब्ग्रहणमुपसर्गनिवृत्त्यर्थमिति केवलस्योपसर्गस्य निवृत्त्यर्थं द्रष्टव्यम् अन्यथा जाताविति किं ब्राह्मणानामन्त्रयितेति न युज्यते आङित्यस्योपसर्गत्वात् ॥ ११ ॥ ज० म०

ऐहिष्टेत्यादि । तं मुनीन्द्रं नृपः पुत्त्रफलं क्रतुं कारयितुम् ऐहिष्ट चेष्टे ल्यां सिः वसोरस्येतीम् षीटीयीध्वित्यम् आदिशेचोरिति त्रिः णोऽजौञेरिति प्रयोज्यकर्त्तुः कर्मत्वं कृतात्मा कृतः आत्मा यत्नो येन आत्मा यत्नो धृतिरित्यमरः । ततोऽनन्तरं ज्ञाताभिप्रायः स मुनीन्द्रस्तस्य नृपस्य सुतानुबन्धं कर्म व्यतानीत् तनुदज विस्तृतौ ल्यां सिः रुदाद्यस्तीति ईम् वसोऽरस्येति इम् हलादेः षेम इति त्रिः सुताननुबध्नाति जनयतीति टातृषस्येति षणि सुतानुबन्धीति पाठान्तरं सुतस्यानुबन्धः सुतानुबन्धः घञन्तः ततोऽस्त्यर्थेनैकाजिति इन् कर्मणि कुशलः कर्मठः कृत्तद्धितसमासानामभिधानं नियामकम् इत्युक्तेः कर्मणः कौशले ठ इति बोध्यम् ॥ ११ ॥ भ०

रक्षांसीत्यादि । वेदीं परितः यजनवेद्याः समन्तात् विघ्नायोपस्थितानि रक्षांसि रक्ष्यते एभ्य इत्यसुन् तानि रक्षोघ्नैर्मन्त्रैर्निरास्थत् निरस्तवान् । पर्य्यभिभ्यां सर्वोभयार्थे तसिल् । अभितः परित इत्यादिना द्वितीया अङ्गान्ययाक्षीदभितः प्रधानमिति । यद्देवतामयो यागः

निष्ठां गते दत्तिमसभ्यतोषे विहित्रिमे कर्मणि राजपत्न्यः।
प्राशुर्हुतोच्छिष्टमुदारवंश्यास्तिस्त्रः प्रसोतुं चतुरः सुपुत्रान् १२

सा देवता तत्र प्रधानं पुत्त्रफलत्वाद्विष्णुः प्रधानम्। तस्मिन्द्वा तस्योभयतः पार्श्वयोर्यान्यङ्गानि चक्षुरादीनि देवतान्तराणि तान्ययाचीत्। सम्मा- वाक्तया पूजितवान् कर्त्तुः क्रियाफलाभावात्तङ् न भवति यत्रकत्वे शेषाग्रहोमीदिति स्वाङ्गं विष्णुविद्वा शेषाणि प्रतिकृतानि पिष्टक- मयानि सुतानां सम्पद्यमग्नौ हुतवान्। जुहोतेः सिचिद्वाबीटि च रूपम्। वरेण्यः श्रेष्ठः वरं चामार्गीत् मार्गितवान्। हे देवा अग्नि- प्रभृतयो न्टपतेः सुता भूयासुरिति। मार्ग अन्वेषणे। आङ्गपाडेति यदा णिजनास्ति तदा चङभावात् सिजेव भवति ॥ १२ ॥ ज० म०

रक्षांसीत्यादि। वरेण्यो मुनिर्वेदीं परितो वेद्याः समन्तात् रक्षांसि निरास्यन्निराकृतवान् पूर्ववदस्यतेर्ङः अस्यादेशश्च प्रधानमभितः प्रधानयागस्योभयपार्श्वे आदावन्ते च अङ्गानि अयाचीत् अङ्गयागान- कार्षीत् यद्वा प्रधानदेवताया विष्णोरुभयपार्श्वेऽङ्गानि चक्षुरादीनि लोकपालनवग्रहादीन् वा पूजितवान् एतेन साङ्गाद्वैदिककर्मणः फला- वश्यम्भाव इति सूचितं ङलिहोमेदन्ने आकायकुलिसाङ्कुशशेषवेशेत्यादि नपुंसकसंग्रहे हेमचन्द्रेण पठितं न्टपतेः सुतसम्पत्यै च वरममार्गीत् मार्ग अन्वेषणे अयाचीदिति यजेरनिमृत्वात् व्रजवदेति सिः यक्ष्ना- र्जेति षङ् षढोः क इति कः क्रिलादिति षत्वं वेदीं प्रधानञ्चेत्यत्र परितोऽभितोयोगे धिक्समयेत्यादिना द्वितीया ॥ १२ ॥ म०

निष्ठामिति। निष्ठां समाप्तिं गते कर्मणि यागक्रियायां समा- प्तायां राजपत्न्यः हुतोच्छिष्टं हुतावशेषं शिष्टचरुं प्राशुः भक्षितवत्यः अश्नातेर्लिटि उसि रूपं दत्तिमसभ्यतोषे दानेन निर्वृत्तो दत्तिमः सभ्यानां ब्राह्मणानां तोषो यत्र कर्मणि। विहित्रिमे विधानेन निर्वृत्ते कर्मणि। दाणो धाजस्तद्वितः क्रिरिति क्री विहिते प्रथमस्य दोदद्योरिति ददादेशः द्वितीयस्य दधातेर्हिरिति हिरादेशः सप् सभायां साधव इति सभ्याः सभाया यः। उदारवंश्याः महावंशोद्भवाः शेषे

कौशल्ययासावि सुखेन रामः प्राक्केकयीतो भरतस्ततोऽभूत्।
प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेन ॥१४॥

यत्। कौशल्या कैकेयी च क्षत्रिये सुमित्रा तु वर्णसंकरजा किमर्थं प्रापुः। प्रसोतुं सुपुत्रान् विनीतान् प्रसवितुं तत्र कौशल्या केकयी च एकैकं पिण्डं प्राशितवत्यौ ताभ्यां चावयोः परिचारिकेति पिण्डभागद्वयं दत्तं सुमित्रा प्राशितवती। ततश्च पुत्त्रद्वयं जनयिष्यति एवञ्चाभिसन्धाय चतुर इत्युक्तं न तु त्रीनिति। षूङ् प्राणिगर्भविमोचने स्वरतीत्यादिना विभाषितेट् ॥ १३ ॥ ज० म०

निष्ठामित्यादि। कर्मणि निष्ठां निष्पत्तिं गते सति उदारवंश्यास्तिस्रो राजपत्न्यः चतुरः शोभनपुत्त्रान् प्रसोतुं कृतशेषं प्रापुः। अशन भोजने षूङ्च प्रसवे तादर्थ्ये चतुम् वेमूदिदिति इम् पक्षे इमोऽभावः। वंश्या इति ढघेकादिति भवार्थे ण्यः तस्यानित्त्वात्र ञ्निं ङीप्। कर्मणि कीदृशे दानेन जातः सभ्यानां तोषो यत्र। डुदाञ्जिदाने ञ्जितस्तक्ते इति त्रिमक् दधातेर्ध इति दत्। सभायां साधुः सभ्यः पूर्ववत् ण्यः। विहितिमे विधानेन जाते पूर्ववत् त्रिमक् धाञो ह्रिरिति हिः ॥१२॥ म०

कौशल्ययेत्यादि। कोशलस्य राज्ञोऽपत्यमिति वृद्धेत्कोशलाजादाञ्ञ्यङ्। यङश्चाप् कौशल्यया प्राक् प्रथमम् असावि रामः जन्यते स्म। षूङः कर्मणि लुङि चिणिरूपम्। सुखेनेति प्रकृत्यादित्वात् तृतीया। महतां जन्मनि न काचिदपि पीड़ाऽस्ति। तदनन्तरं केकयीतो भरतोऽभूत्। केकयानाचष्ट इति णिच्। स हि ईदृशास्तादृशाः केकया इति कथयति। तदन्तादच इरिति इकारप्रत्यय औणादिकः णिलोपः। कृदिकारादक्तिन इति ङीप्। अपादाने चाहीयरुहोरिति तसिः। यदा च केकयस्यापत्यं जनपदशब्दात् क्षत्रियादञित्यञ्। केकयमित्रयुप्रलयाणां यादेरिय इतीयादेशः। टिड्ढाणञिति ङीप् तदा कैकेयीति द्वितीयं रूपं सुमित्रा शत्रुघ्नम् उदारचेष्टम् उदारा चेष्टा यस्येति प्रासोष्ट प्रसूतवती कर्त्तरि लुङ्। ङित्वात्तङ् जातमात्रस्य हि तस्य किल महासत्वतया तादृशस्यैव चेष्टाभूदिति श्रूयते।

आर्चीद्द्विजातीन् परमार्थविन्दानुदेजयान् भूतगणान्यषेधीत्।
विद्वानुपानेष्ट च तान् स्वकाले यतिर्वशिष्ठो यमिनां वरिष्ठः १५

एकेति एकैर्वेति गम्यमानत्वादेवशब्दो न प्रयुक्तः। सह लक्ष्मणेन लक्ष्मणेन सह ॥ १४ ॥ ज० म०

कौशल्येत्यादि। कौशल्यया राजकन्यया प्राक् पूर्वं सुखेन रामोऽसावि प्रसूयते स्म षूङ्प्राणिप्रसवे लुङ्यात्मनि कर्मणि रूपं कोशलशब्दादपत्यार्थे बाह्वादीत्यादिना ष्यञः तस्य षकारेत्त्वाविवक्षया द्विस्न्त्राहेति नेप् अदन्तत्वात् स्त्रियामत आप्। ततोऽनन्तरं भरतः कैकयीतोऽभूत् केकयस्य स्त्र्यपत्यमिति बाह्वाद्यत इति ष्यञस्तस्य षकारेत्त्वाविवक्षया न ङीः यते पायेति जं मी च तस्त्रोरिति तस् एका सुमित्रा लक्ष्मणेन सह उदारचेष्टं शत्रुघ्नं प्रासोष्ट सूङ्प्राणात्मनि रूपं सह कारणेति सहयोगे तृतीया सहकारणेति सूत्रे सहयोगस्य प्रधानत्वाप्रधानत्वाविशेषोक्तेरत्र सहयोगस्य प्राधान्यं विवक्षितं पिता सहागतः पुत्रः राज्ञा सह वनं यातीत्यादिवत् तेन लक्ष्मणो ज्येष्ठ इति बोध्यं ये तु क्रियादिगौणात् सहार्थे तृतीया इत्याहुस्तन्मतेऽपि लक्ष्मणस्य ज्येष्ठत्वम्। तथाहि, युगपदारब्धप्रसवक्रियायां लक्ष्मणस्य गौणत्वं क्रियाया असमापकत्वादियं प्रसूतेति व्यवहाराभावात् शत्रुघ्नस्य प्राधान्यं क्रियायाः समापकत्वात् इयं प्रसूतेति व्यवहारात् तेन लक्ष्मणे जाते प्रसवक्रिया न समाप्ता पश्चादव्यवहितकाले शत्रुघ्नस्य सहयोगो विवक्षितः। शत्रुघ्नस्य तु क्रियाव्याप्यत्वात् कर्मत्वम्। वस्तुतस्तु यस्य हि क्रियादिसम्बन्धः साक्षात् शब्देन प्रतिपाद्यते तत् प्रधानं यस्य न प्रतीयते तत् गौणम् एतच्च शक्तिस्वभावात् पिता सहागतः पुत्र इत्यत्र पितुर्गौणत्वं साक्षात् क्रियासम्बन्धाभावात्। न च पिता पुत्रसम्बन्धेन प्रधानाप्रधानता तस्मात् क्रियागुणद्रव्यसम्बन्धे गौणात् सहार्थैर्युक्तात् तृतीया स्यादिति बोध्यम्। शत्रुं हन्तीति हनचरगष्टक् हनगमित्युङ् लोपे हनोक्तो घ्नः ॥१४॥ भ०

आर्चीदित्यादि। तेषु जातेषु द्विजातीन् द्वे जाती येषामिति तान् ब्राह्मणक्षत्रियवैश्यान् परमार्थविन्दान् विन्दन्तीति विन्दाः विद्-

वेदोऽङ्गवांस्तैरखिलोऽध्यगायि शस्त्राण्युपायंसत जित्वराणि ।
ते भिन्नवृत्तीन्यपि मानसानि समं जनानां गुणिनोऽध्यवात्सुः १६

ऌलाभे इत्यस्मात् अनुपसर्गादित्यादिना शः मुचादित्वान्नुम् । परमार्थस्य विन्दान् लाभिन इति कर्मणि षष्ठी तस्याः कृद्योगाच्च षष्ठी समस्यत इति वक्तव्यमिति समासः । तानार्चीत् स्रगादिभिः पूजितवान् । अर्चपूजायामित्यस्मात् लुङि तिप् इट्, सिचो लोपः । भूतगणान् राक्षसादिगणान् उदेजयान् उत्कम्पान् । तस्मिन्नेव सूत्रे उत्पूर्वं एजिरण्यन्तो निर्दिष्टः तस्मादुदेजयन्तीति शः तान् न्यषेधीत् उत्सादितवान् । षिधेर्नेटीति हलन्तलक्षणायाः प्रतिषेधः विद्वान् पौरोहित्यकर्मणि कुशलः उपानेष्ट च तान् रामादीन् तेषामुपनयनादिक्रियां चकार सम्माननेत्यादिना आचार्य्यकरणे तङ् । स्वकाल इति गर्भादेकादशे वर्षे जातस्य गर्भैकादशेष्वित्यादिना वचनेन उपनयनकाल उक्तः । यमनियमेषु यतत इति यतिः । सर्वधातुभ्य इनिति इन् । अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यमकल्मषम् । इति पञ्च यमा येषां सन्तीति यमिनः स्मृताः । तेषां वरिष्ठः उत्तमः प्रियस्थिरेत्यादिना उरुशब्दस्य वरादेशो महत्पर्य्यायस्य ॥ १५ ॥ ज० म०

आर्चीदित्यादि । वशिष्ठः पुरोहितो द्विजान् परमार्थविद्वान् उत्कृष्टधनलाभिनः आर्चीत् परमधनेन पूजितवान् इति पर्य्यवस्यति विद्लृलाभ इत्यस्मात् शाहिशातीत्यादिना शः मुचादित्वान्नुमागमः । परमार्थं आत्मसाक्षात्कारः अर्चक् पूजायाम् । उदेजयान् भयहेतुक्रूरभूतगणान् राक्षसादीन् न्यषेधीत् दूरीचकार एजृकम्पने पूर्ववत् शप्रत्ययः । विद्वान् विधिज्ञः तान् रामादीन् स्वकाले गर्भैकादशे वर्षे क्षत्रियोपनयनयोग्ये उपानेष्ट ज्ञानाचौंतत्क्षेपणोपनयेत्यादिना सं । यतते यमनियमादिष्विति यतिः औणादिक इः यमिनां मध्ये वरिष्ठः उरुतमः गुणाद्गेष्ठेयस् इति गुणवचनादिष्ठे कृते वाढ़ान्तिकेति उरुशब्दस्य वरादेशः । वसिष्ठ इति पूर्ववदिष्ठः वसनिवासे इति दन्त्यमध्यं पारायणिकाः साधयन्ति प्रकृष्टो वशी वशिष्ठ इति तालव्यमध्यमपि प्राहुः ॥ १५ ॥ भ०

वेद इत्यादि। शिक्षा कल्पो व्याकरणं छन्दो विष्टतिर्निरुक्तं ज्योतिषञ्चेति षडङ्गानि शास्त्राणि तानि विद्यन्ते यस्य वेदस्येति षडङ्गवान्। तैरुपनीतैरामादिभिः अखिलो निःशेषो वेदोऽध्यगायि अधीत इत्यर्थः इङोऽधिपूर्वात् कर्मणि लुङि, विभाषा लुङ्लृङो-रिति गाङादेशः चिण्युक् तलुक्। यद्वा इक् स्मरणे इन्वदिक इति वक्तव्यमिति गाङादेशः। अत एव तैरामादिभिः पूर्ववेदिताः साङ्गा वेदा वशिष्ठमुखादधीता इत्यर्थः। शस्त्राणि धनुरादीनि जित्वराणि जयशीलानि। इणनशजीत्यादिना क्वरप् तैरुपायंसत स्वीकृतानि। उपपूर्वो यमिः स्वीकरणे वर्त्तते तस्मात् कर्मणि लुङ्। आत्मनेपदे-ष्वित्यादिना अदादेशः इनः सिजिति ज्ञापकादनुनासिकलोपाभावः। ततस्ते रामादयो गुणिनो मानसानि मनांसि प्रज्ञादित्वात् स्वार्थे णः भिन्नवृत्तीनि नानाविधप्रवृत्तीनि विषयेषु तानि मानसान्यपि जनानां समं साधारणं क्रियाविशेषणम् अध्यवात्सुः अध्युषितवन्तः। अधि-पूर्वाद्वसेः सिचि वदव्रजेत्यादिना वृद्धिः तस्येति तत्त्वम् सिजभ्यस्तेति जुस्। उपाधीत्यादिना अधिकरणस्य कर्मसंज्ञा ॥ १६ ॥ ज० म०

वेद इत्यादि। तैरामादिभिः समस्तः साङ्गो वेदोऽध्यगायि अधी-ङ्लध्ययने गीङ्ष्टीथ्योर्वेति ग्यादेशः। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः। ज्योतिषां निचयश्चेति वेदाङ्गानि वदन्ति षट्। तैः शस्त्राणि उपायंसत स्वीकृतानीति उपपूर्वो यमिः स्वीकारे मान्तो-ऽदनत इत्यत्। जिजये जयन्तीति जित्वराणि क्वरप् इजीति क्वरप् स्वस्य तन् पितीति तन् शीलार्थे क्वरबिति परे। स्वमतेऽपि शीलार्थे तृन्नित्युक्तेः कचित्तृन्-णिन्-इष्णु-क्वरप्-प्रभृतयः शीलार्थेऽपि स्युरिति बोध्यम्। ते रामादयो जनानां मानसानि विषयेषु भिन्नवृत्तीन्यपि समं साधारणं यथा स्यात्तथा अध्यवात्सुः। वसौ निवासे अनिमन्तात् व्रजवदेति व्रिः, सत्स्यरे इति सस्य तः, अनुस्विद्वेरिति अन उस् गुणिनो गुणवन्तः नैकाजादितीन्। मन एव मानसं विकारसंघेत्या-दिना स्वार्थे ष्णः णित्ते व्रिरिति व्रिः, कर्मक्रियेत्यादिना डस्य ढत्वम् ॥ १६ ॥ भ०।

ततोऽभ्यगाद्गाधिसुतः क्षितीन्द्रं रक्षोभिरभ्याहतकर्मवृत्तिः।
रामं वरीतुं परिरक्षणार्थं राजार्जिहत्तं मधुपर्कपाणिः॥१७॥
ऐषीः पुनर्जन्मजयाय यत्त्वं रूपादिबोधान्न्यवृतच्च यत्ते।
तत्त्वान्यबुद्धाः प्रतनूनि येन ध्यानं नृपस्तच्छिवमित्यवादीत्॥१८

तत इत्यादि। तेषु रामादिषु तथाभूतेषु गाधिसुतो विश्वामित्रः क्षितीन्द्रं राजानमभ्यगात् अभिगतवान् इणो गादेशः गातिस्थेत्यादिना सिचो लुक्। रक्षोभिर्निशाचरैः अभ्याहता अभिभूता यागादेः कर्मणो वृत्तिः प्रवृत्तिर्यस्येति रामं वरीतुं प्रार्थयितुम् वृतो वेति इटो दीर्घत्वम्। परिरक्षणार्थं विहन्यमानस्य कर्मण इत्यर्थः तं गाधिसुतम् आर्जिहत् पूजितवान् अर्ह पूजायामिति स्वार्थिकण्यन्तश्चौरादिको गृह्यते न भौवादिकः। तस्माद्धेतुमण्णिचात्र न भवितव्यम्, णिश्रीत्यादिना चङ् णिलोपः द्विर्वचनेऽचीति स्थानिवद्भावादजादेर्द्वितीयस्येति ह्शब्दो द्विरुच्यते रेफस्य न नद्रा इति प्रतिषेधः चुत्वं वा आट्वृद्धिः मधुपर्कपाणिः दधिघृतमधूनि एकीकृतानि मधुपर्क इत्युच्यते तस्मिन् पात्रे स्थितः पाणिर्यस्येति विग्रहः सप्तम्युपमानेत्यादिना उत्तरपदलोपी समासः। पात्रादुद्धृत्य मधुपर्केण पूजितवानित्यर्थः॥१७॥ज०म०

तत इत्यादि। अनन्तरं गाधिसुतो विश्वामित्रो रक्षोभिरभ्याहतकर्मवृत्तिः सन् अर्थात् कर्मणा आत्मनो वा परिरक्षणार्थं रामं वरीतुं क्षितीन्द्रमभ्यगात्। इणो गा लुङीति गादेशः भूस्थापिबेत्यादिना सेर्लुक्, राजा तम् आर्जिहत्। अर्हक्पूजायां चुभ्योंजिर्वेति णिः णिश्रीत्यङ् धुर्द्विश्याङीति हेर्द्वित्वं नाजन्तादेरादिर्द्विः स्यादौ नवद्रोये इति च निषेधान्नादिरेफयोर्द्वित्वं भभस्ययेति हस्य जः ञ लोपः मधुपर्कः पाणौ हस्ते यस्य स तथा एतेन मधुपर्केणार्चनं गम्यते। वरीतुमिति नेमकाजादित्यादौ वृवर्जनात् वसोरस्येतीम् वृतोर्वमोर्घ इति घः॥१७॥भ०

ऐषीरित्यादि। मुक्तिस्तत्त्वावबोधस्तस्मा ध्यानं प्रयोजनं तत्र पुनर्जन्म भूयोजन्म तस्य जयाय यत् ध्यानं त्वमैषीः एषितवानसि। इषेर्लुङ् मध्यमैकवचने इट्, इटीति सिचो लोपे रूपं रूपादिबोधान्न्यवृतच्च

आख्यन्मुनिस्तस्य शिवं समाधेर्विघ्नन्ति रक्षांसि वने क्रतूंश्च।
तानि द्विषद्वीर्य्यनिराकरिष्णुस्तृणेढु रामः सह लक्ष्मणेन ॥१९॥

यत्ते रूपादिषु शब्दस्पर्शरूपरसगन्धेषु चक्षुरादिद्वारेण यो बोधः अध्यवसायलक्षणा बुद्धिः तस्मान्न यत् ध्यानं न्यवृतत् निवृत्तम्। वृतेर्द्युतादित्वात् द्युद्भ्यो लुङीति तिप् च्लेरङ् तत्त्वानि पञ्चविंशतिः पुरुषप्रधानमहदहङ्कारादीनि। प्रतनूनि सूक्ष्माणि येन ध्यानेनाबुद्धाः ज्ञातवानसि बुधेरनुदात्तेतो लुङ् थास् सिच् लिङ्सिचावात्मनेपदेष्विति सिचः कित्त्वाद्गुणाभावः सिज्लोपधत्वजशत्वादि। तद्ध्यानं शिवं शोभनं कच्चिदिति नृपः अवादीत् न तस्य व्याघात इति। वदव्रजेत्यादिना वृद्धिः ध्यैचिन्तायां भावे ल्युट् ध्यानम् ॥ १८ ॥ ज० म०

ऐषीरित्यादि। तत्र तद्ध्यानं शिवं निर्विघ्नं तस्य कल्याणमिति वा इति नृपोऽवादीदुक्तवान् व्रजवदेति वृद्धिः यद्ध्यानं पुनर्जन्मनो जयाय अभिभवाय त्वम् ऐषीः इषुश इच्छायां सिः रुदाद्यस्तीतीम् वसोरस्येतीम्, झलस्ताज्झलीम इति सेर्लोपः षीढीधीष्विति अम्, आदिगेचोरिति वृः, भूयोमजादेरिति पुनरम्, आदिगेचोरिति वृद्धिः। यच्च ध्यानं ते तव रूपादिबोधात् चक्षुरादिद्वारेण रूपरसादीनां यो बोधो ज्ञानं तस्मात् न्यवृतत् निवृत्तं ध्यानं ध्यानं न रूपरसगन्धादिविषयकं स्यात् वृतेर्द्युतादित्वात् शासुलिद्युदिति ङः ङविधानम् अत एव पं। येन ध्यानेन प्रतनूनि दुर्बोधादतिसूक्ष्माणि तत्त्वानि त्वम् अबुद्धाः बुधेस्थासि झलस्सादिति सिलोपे ढभात्तयोरिति थस्य धः झषभषोरिति धस्य दः ॥ १८ ॥ भ०

आख्यदित्यादि। पृष्टो मुनिस्तस्य समाधेर्ध्यानस्य शिवमनुपद्रवमाख्यत् कथितवान्। चक्षिङः ख्याञ् अस्यतीत्यादिना च्लेरङ् आतो लोपः किन्त्वयं दोषः विघ्नन्ति रक्षांसि वने क्रतून्। गमहनेत्यादिना उपधालोपः होहन्तेरिति कुत्वम्। किं क्रियतामिति चेदाह, तानि रक्षांसि द्विषतां वीर्य्यं सामर्थ्यं वीरैः पार्ष्णिकण्यन्तादचो यत् तस्य निराकरिष्णुः निराकरणशीलः अलङ्कृञित्यादिना इष्णुच तृणेढु

स शुश्रुवांस्तद्वचनं मुमोह राजासहिष्णुः सुतविप्रयोगम् ।
अहंयुनाथ क्षितिपः शुभंयुरूचे वचस्तापसकुञ्जरेण ॥२०॥

हिनस्तु तृहेर्विधौ लोट् । एरुः रुधादित्वात्श्नम् । तृणह इम् होढः एत्वं ढोढ इति ढलोपः । सह लक्ष्मणेन लक्ष्मणेन सह ॥ १९ ॥ ज० म०

आख्यदित्यादि । ततो मुनिराख्यत् कथितवान् वक्तृख्याति-पेति ङः उस्योचीत्याल्लोपः । तस्य समाधेः शिवं कल्याणं तस्य नृपस्य आख्यत् सम्बन्धविवक्षया षष्ठीत्यन्ये । तुशब्दो वाक्यभेदे विषयद्योतकत्वे वा । रक्षांसि वने क्रतून् यज्ञान् विघ्नन्ति हनगमेत्युङ्लोपः हनोघ्नो घ्नः । तानि रक्षांसि रामो लक्ष्मणेन सह तृणेढु हन्तु तृहधकि हिंसे विधिनिमन्त्रणेति प्रार्थनायां गौ तुपि रुधादित्वात् दियस्तुरुद-रुधेति नण् तृह इन् पिद्वक्ते इति इन् हो ढो भाविनि हस्य ढः ढभात्तयोरिति तस्य धः ष्टु भिरिति धस्य ढः ढ्रढ्रीति ढलोपः । द्विषतां शत्रूणां वीर्य्यं निराकरोतीति भ्राजभूसहेति इष्णुः शीलार्थे वा इष्णुरित्यन्ये ॥ १९ ॥ भ०

स इत्यादि । स राजा तस्य मुनेस्तद्वचनं शुश्रुवान् श्रुतवान् सन् सुतविप्रयोगमसहिष्णुः असहनशीलः मुमोह मोहमुपगतः शृणोते-र्भाषायां सदवसश्रुवेत्यनेन क्वसुः । सुतेन विप्रयोगमिति कर्त्तृकरणे कृता-बहुलमिति समासः नलोकाव्ययनिष्ठेति षष्ठ्याः प्रतिषेधः । अथानन्तरम् अहंयुना अहङ्कारवता अहंशुभयोर्युस् । तापसकुञ्जरेण तपःसहस्राभ्यां विनीनिरित्यनुवर्त्तमाने अण् चेति मत्वर्थेऽण् तापसश्च स कुञ्जरश्चेति वृन्दारकेत्यादिना समासः । तेन क्षितिपो राजा शुभंयुः कल्याण-वान् पूर्ववद्युस् । वचो वक्ष्यमाणमूचे उक्तः कर्मणि लिट् सम्प्रसार-णम् अहंयुनाथ इति विसर्गान्तपाठान्तरम् तत्र अहंयूनां क्षत्रियाणां नाथ इति योज्यम् ॥ २० ॥ ज० म०

स शुश्रुवानित्यादि । तस्य मुनेर्वचनं शुश्रुवान् स राजा मुमोह मुहलृञ्जि वैचित्ते यतः सुतविप्रयोगं पुत्रस्य विरहम् असहिष्णुः

मया त्वमाप्थाः शरणं भयेषु वयं त्वयाप्याप्स्महि धर्मवृद्धैः।
क्षात्रं द्विजत्वञ्च परस्परार्थं शङ्कां कृथा मा प्रहिणु स्वसूनुम् २१

अथानन्तरं तापसकुञ्जरेण तपस्विश्रेष्ठेन क्षितिपो वक्ष्यमाणं वच जच व्ययम्भेति खेर्जिः यङ्ख्सपाद्योरिति प्रकृतेर्जि न्यादिनान्तेति गौण-कर्म उक्तं कीदृशेन स्वप्रार्थनाभङ्गसम्भावनया क्रोधादहङ्कारवता की-दृशो राजा शुभंयुः शुभयुक्तः गोत्वणमेभेति अव्ययाभ्याम् अहंशुभं-शब्दाभ्यां युरस्त्यर्थे॥ २०॥ भ०

भयेत्यादि। भयेषु त्वं शरणम् आप्थाः प्राप्तोऽसि मया आप्तेः कर्मणि लुङ्सिज्लोपः। त्वयापि धर्मवृद्धौ धर्मोपचयाय वयमाप्स्महि प्राप्ताः। पूर्ववल्लुङादिः उत्तमबहुवचनं सिचो लोपाभावः मकारस्या-झलत्वात्। तदित्थं क्षात्रं द्विजत्वं च धर्मवृद्धौ परस्परार्थम् अन्योन्य-प्रयोजनकर्मव्यतीहारे सर्वनाम्नो द्वे भवतः समासवच्च बहुलमिति यदा न समासवत् तदा अयम्। तस्मान्मा शङ्कां कृथाः माकार्षीः कथ-मस्मिन् सङ्कटे पुत्रं वियोजयामीति। माङि लुङ् अडभावः उश्चेति कित्वाद् गुणाभावः ह्रस्वादङ्गादिति सिचो लोपः प्रहिणु प्रेषय स्वं पुत्रं हिनोतेः प्रार्थनायां लोट् श्नुः अपित्वात् ङित्त्वं गुणाभावः उत-श्चप्रत्ययादिति हेर्लुक् हिनुमीनेति णत्वम्॥ २१॥ ज० म०

मयेत्यादि। मया भयेषु शरणं रक्षिता त्वम् आप्थाः प्राप्तः ह्रे थास् आप्लृ लौकिप्रापणे झलस्यादिति सेर्लोपः। त्वयापि धर्मवृद्धौ वयम् आप्स्महि प्राप्ताः अत्रापि ह्रे महि तस्मात् क्षत्रियत्वं ब्राह्मण-त्वञ्च अन्योन्यप्रयोजनकं जातिव्यक्त्योरभेदोपचारात् व्यतीहारे गति-हिंसेति सूत्रेऽनन्योन्यार्थ इति ज्ञापकात् परस्परं व्यतिलुनन्तीत्युदा-हरणेन च क्रियाव्यतीहारे परस्परार्थं भवतीति बोद्धव्यम्। त्वं शङ्कां मा कृथाः झलस्यादिति सेर्लोपः मीटीथोस्त्वितमेति वाक्यात् मा-योगे अन्निषेधः स्वसूनुं प्रहिणु प्रस्थापय विधिनिमन्त्रणेति प्रार्थ-नायां गो हिन वर्द्धने गतौ स्वादित्वात् दिवसतुदेति नुः हेर्लोप इति हिलोपः प्राग्वन्नोण इति णत्वम्॥ २१॥ भ०।

घानिष्यते तेन महान् विपक्षः
स्थायिष्यते येन रणे पुरस्तात् ।
मा मां महात्मन् ! परिभूरयोग्ये
न मद्विधो न्यस्यति भारमग्रम् ॥ २२ ॥

घानीत्यादि । अनागतमर्थं ज्ञानेन समीक्ष्याह । महान् विपक्षो रावणः त्रैलोक्यविजयित्वात् सोऽपि रामेण घानिष्यते किमुत इतरे राक्षसाः । हन्तेः कर्मणि लृट् स्यसिजित्यादिना चिण्वदिट् उपधावृद्धिः । हो हन्तेरिति कुत्वं पुरस्तादग्रतो यद्रणं युद्धं भावि परशुरामेण सार्द्धमिति भावः । तत्र येन स्थायिष्यते तेन घानिष्यते इति योज्यम् अत्र तिष्ठतेर्भावे लृट् चिण्वदिड्ढा आतोयुक् हे महात्मन् ! महासत्व ! मा मां परिभूः मावज्ञासीः । किमेवं वदसीति परिपूर्वो भवतिर्निराकरणे वर्त्तते । मद्विध इति विधानं विधा प्रकारः आतश्चोपसर्ग इत्यङ् विधा भेदः सादृश्यञ्च इह सादृश्यं गृह्यते मया विधा सादृश्यं यस्येति मद्विधः प्रत्ययोत्तरपदयोश्चेति मदादेशः मद्विधो मत्सदृशोऽन्यो भारमग्रम् अग्राद्यत् अयोग्ये असमर्थे न्यस्यति निक्षिपति किमहं येनानागतं समीक्षितमिति भावः । योगाय प्रभवति योग्यः योगाद्यत् ॥ २२ ॥ ज० म०

शङ्काया अकरणे हेतुमाह, घानिष्यत इत्यादि । येन रामेण रणे पुरस्तादेव स्थायिष्यते न च पराङ्मुखीभविष्यते तेन महान् विपक्षोऽपि घानिष्यते यद्वा येन हेतुना रामेणैवमेवं करिष्यते ततः शङ्कां मा कृथा इति पूर्वेणान्वयः हनग्रहदृश च इति चिण् खेर्हो-घोऽञ्णिति चेति हस्य घः हनस्तङ् इत्यत्र इण्वर्जनात् न तङ् चिण्णलोः समानत्वात् स्थायिष्यते इति पूर्ववत् चिण् यञ्ञ्णित्कृदि-न्यात इति यन् पुरस्तादिति दिक्शब्दाद्दिग्देशकाले इति सप्तम्याः स्तात् पूर्वाधरावराः पुराधावेति पूर्वस्य पुरादेशः हे महात्मन् ! हे महामते ! त्वं मां मा परिभूः न तिरस्कुरु माङि वेति भूस्थापिबेति सेर्लुक् मायोगेऽम्निषेधः । आत्मादेहमनोब्रह्मस्वभावधृतिबुद्धिष्विति

क्रुध्यन् कुलं धक्ष्यति विप्रवह्निर्यास्यन् सुतस्तप्स्यति मां समन्युम्
इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य ॥ २२ ॥

विश्वः । मद्विधो जनः अयोग्योऽसमर्थे अप्रत्रं श्रेष्ठं भारं न न्यस्यति नार्पयति योगाय प्रभवति योग्यः दण्डादिभ्यो यत् इति यत्रः अनित्यत्वविवक्षया न त्रिः तत्पुरुषो वा नञः समास इति । नञ्तत्पुरुषसंज्ञकसमासार्थं परे सूत्रं कुर्वन्ति तन्मते न योग्योऽयोग्य इति विग्रहः स्वमते योग्याद्न्यः अयोग्यः अन्यारभ्येत्यादिना नञोऽन्यार्थत्वात् पञ्चमीसमासः अपूर्वमिति नञः प्रागभावः नञोनैवेत्यः एवमब्राह्मण इत्यत्र ब्राह्मणस्य न सदृशोऽब्राह्मणः समार्थेनेत्यादिना नञः समार्थत्वात् षष्ठी तेनात्र षष्ठीसमासः अनिमित्तान्यपश्यन्नित्यत्र एकार्थेन निन्दितानि च तानि निमित्तानि चेति कर्मधारयः नञो निन्दितार्थे एकार्थत्वात् अपापमित्यत्र पापस्याभावोऽपापमित्यव्ययीभावः नञोऽव्ययत्वात् एवमन्यत्र यथान्वयं बोद्धव्यम् । तत् सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥ इत्यसमासे तु नञो वाचकत्वानङ्गीकारात् तद्योगे उक्तव्याख्या प्राप्तविभक्तिर्न स्यात् । सर्वैव विधा प्रकारो यस्य तादृशः सर्वं जानातीत्यभिप्रायः ॥ २२ ॥ भ०

क्रुध्यन्नित्यादि । यद्यहं भूतरक्षणेऽधिकृतोऽस्य वचनं न कुर्यां तदा क्रुध्यन् सन् दिवादित्वात् श्यन् विप्रो वह्निरिव उपमितिसमासः धक्ष्यति कुलं भस्मसात् करिष्यति दहेर्लृट् दादेर्घ इति घः भष्भावः चर्त्वं घकारस्य ककारः । इणकोरिति षत्वं यास्यन् गमिष्यन् सुतः मां समन्युं सशोकं तप्स्यति सन्तापयिष्यति तपेर्लृट् इत्यमेवं प्रकारं नृपः पूर्वमादौ अवालुलोचे अवलोचितवान् अवाङ्पूर्वोल्लोचेर्लिट् तत उत्तरकालं सुतस्य गमनमनुजज्ञे अनुज्ञातं नृपेणेति विभक्तिविपरिणामेन तेनेति योज्यं कर्मणि लिट् ज्ञा अवबोधने इति परस्मैपदित्वात् न चानुपूर्वाद्स्मादात्मनेपदं विहितम् ॥ २२ ॥ ज०म०

क्रुध्यन्नित्यादि । विप्र एव वह्निः क्रुध्यन् कुलं धक्ष्यति भस्मीकरिष्यति दहो दाहे भ्वादित्वाच्चेम दादेर्घ इति हस्य घः झषभषोरिति

आशीर्भिरभ्यर्च्य ततः क्षितीन्द्रं प्रीतः प्रतस्थे मुनिराश्रमाय ।
तं पृष्ठतः प्रष्ठमियाय नम्रो हिंस्रेषु दीप्रास्त्रधरः कुमारः ॥२४

चस्य कः किलादिति पः यास्यन् गमिष्यन् सुतः समन्युं सशोकं मां तपस्यति तपो दाहे इत्यमनेन प्रकारेण नृपः पूर्वमवालुलोचे आलो- चितवान् लोचृङीक्षे धुर्बिन्दुङीति द्विः ऋभखयदृर्षेति ओकारस्य उकारः । ततोऽनन्तरं सुतगमनम् अनुजज्ञे अत्रानुशब्दस्य उपसर्ग- प्रतिरूपकत्वेन जिञ्ज्ञत्रन्तपिबेति मं । यद्वा विभक्तिव्यत्ययेन नृपेण सुतस्य गमनमनुजज्ञे अनुज्ञातं कर्मणि प्रत्ययः यद्वा अनु पश्चात् तत- स्तेन सुतस्य गमनं जज्ञे ज्ञातं तस्क्तेरिति तस् यद्वा जनीङो रूपम् अनुज्ञातार्थता ह्नगमित्युङ्लोपः ॥ २२ ॥ भ०

आशीर्भिरित्यादि । रामगमनस्यानुज्ञातत्वात् प्रीतो मुनिः क्षि- तीन्द्रं राजानम् आशीर्भिरभ्यर्च्य पूजयित्वा आङ्शासेः क्विप्युपसंख्या- नात् उपधाया इत्वं प्रतस्थे पुनराश्रमाय आश्रमं पुनः प्रस्थितवान् । तिष्ठतेः समवेत्यादिना लिटि तिङ् प्रष्ठम् अग्रयायिनं तं प्रष्ठोऽग्र- गामिनीति षत्वं पृष्ठतः पश्चात् इयाय कुमारः । इणोयणि इट्त्रि- टायादेशः द्विर्वचने चीतिस्थानिवद्भावात् द्विर्वचनमिकारस्य अभ्यास- स्यासवर्णे इतीयङ् नम्रोऽनुकूलः हिंसनशीलाः इस्रवः शराः हिंस्रेषवः आप्तमविसंवादि यद्धनुः तत् हिंस्रेषु दीप्रमाप्तं धनुर्यस्य कुमारस्येति विग्रहः । अत्र धनुषश्चेति अनङ् न भवति समासान्तविधिरनित्य इति । दीप्रास्त्रधनुरिति पाठान्तरं दीप्रमस्त्रं दृष्टतया यस्य धनुष- स्तत् दीप्रास्त्रं धनुर्यस्येति सः । कस्मिन् विषये हिंस्रेषु नान्येषु नम्रादयो नमिकम्पीत्यादिना रप्रत्ययान्ताः ॥ २४ ॥ ज० म०

आशीर्भिरित्यादि । मुनीरामस्य गमनानुज्ञया प्रीतः सन् क्षितीन्द्रं पुनराशीर्भिरभ्यर्च्य आश्रमाय प्रतस्थे प्रतिज्ञानिर्णयप्रकाशे संप्रव्यवाच्चस्थ इति सं गत्यर्थमन्यढे इति चतुर्थी आङः शासः क्विप् शासइङ्‌ह्रस इति उङ आकारस्य त्र: सपेस्त्सोति रङ्व्यिनचतयीति र्घः कुमारो रामस्तं प्रष्ठम् अग्रगं मुनिं पृष्ठतः पश्चात् इयाय । इनूत्रगतौ णप्

प्रयास्यतः पुण्यवनाय जिष्णो-
रामस्य रोचिष्णुमुखस्य धृष्णुः ।
त्रैमातुरः कृत्स्नजितास्त्रशस्त्रः
सध्र्यङ् रतः श्रेयसि लक्ष्मणोऽभूत् ॥ २५ ॥

धुर्हिंघ्युङीति हिः अ्णित्यन्तेजुङन्तोरिति ग्रिः खेर्यौरियुवर्णे इति इय प्रातृस्थोऽग्रगे इति षत्वं पृष्ठत इति ख्यातम् । नम्रो विनयावनतः हिंसदीपेति कर्त्तरि रः हिंस्रेषु हिंसकेषु दीप्रं दीप्यमानम् अस्त्रं धरतीति पचादित्वादच् हिंसदीपाभ्यां पूर्वेण रः । हिंस्रेषु दीप्राच-धनुरिति पाठे हिंस्रेण इषुणा दीप्रमात्तं गृहीतं धनुर्येन इति विग्रहः ॥ २४ ॥ भ०

प्रयास्यत इत्यादि । प्रयास्यतो गमिष्यतो रामस्य लक्ष्मणः सध्र्यङ् अभूत् सहायीभूतः सहाञ्चतीति क्विन् अनुषङ्गलोपः उगिदचामिति नुम् हलन्तादिसंयोगान्तलोपौ क्विन्प्रत्ययस्येति कुत्वं नकारस्य ङकारः सहस्य सध्रिरिति सध्र्यादेशः पुण्यवनाय पुण्यहेतुत्वात् पुण्यं वनं गन्त्य-र्थात् कर्मणि चतुर्थी जिष्णोः जयशीलस्य ग्लाजिस्थश्चेति ग्स्नुः रोचिष्णु रोचनशीलं मुखं यस्य रामस्य पितुराज्ञया तुष्टत्वात् अलङ्-कृञित्यादिना इष्णुच् धृष्णुः शत्रुविध्वंसने प्रगल्भः । त्रसिगृधीत्यादिना क्नुः त्रैमातुरः तिसृणां मातृणामपत्यमिति तद्धितार्थविषये समासः पश्चान्मातुरुत्संख्या इत्यादिना अण् उत्वञ्च द्विगोर्लुगनपत्य इति लुङ् न भवति स हि पितृद्वयप्राशनात्ताभ्याञ्च जनितः अस्त्रञ्च शस्त्रञ्चेति द्वन्द्वः । कृत्स्नं समग्रं जितमधिगतमस्त्रं शस्त्रं येनेति विग्रहः रतः श्रेयसि कल्याणे प्रकृत्यैकाच् प्रशस्यस्य श्रः लक्ष्मीरित्यौणादिकः लक्षेर्मुट् ईप्रत्ययश्च सा यस्य विद्यत इति लक्ष्मणः । लोमादिषु लक्ष्म्या अश्चेति अच् न प्रत्ययः अत्वञ्च ॥ २५ ॥ ज० म०

प्रयास्यत इत्यादि । रामस्य श्रेयसि कल्याणे रतो लक्ष्मणः सध्र्यङ् सहचरोऽभूत् । सह अञ्चति गच्छतीति क्विप् सहसमितिरः सध्रीसमिति-रीति सहशब्दस्य सध्र्यादेशः किम्भूतस्य पुण्यहेतुत्वात् पुण्यं पवित्रं

इषुमति रघुसिंहे दन्दशूकान् जिघांसौ
धनुररिभिरसह्यं मुष्टिपीडं दधाने ।
व्रजति पुरतरुण्यो बद्धचित्राङ्गुलित्रे
कथमपि गुरुशोकान्मा रुदन् माङ्गलिक्यः ॥२६॥

या यद्वनं तस्मै प्रयास्यंतो गमिष्यतः गत्यर्थमन्यढे इति कर्मणि चतुर्थी जयतीति जिष्णुः ग्स्नुकभूजेरिति ग्स्नुक् यज्ञरचार्थे गमनानन्दात् रोचिष्णु दीप्यमानं मुखमस्य जिभ्राजेति इष्णुः किम्भूतः धृष्णुः प्रगल्भः त्रिपत्रसन्टधष्टषः क्नुरिति क्नुः शीलार्थे ग्स्नुक् इष्णु क्नुप्रत्यया इत्येके तिसृणां मातृणामपत्यं त्रैमातुरः संख्यासंभद्रान्मातुर्डुगण् इति डुर् । कृत्स्नं समस्तं जितमस्त्रं शस्त्रञ्च येन स तथा रतः रमुधातोः क्तप्रत्यये वनतनाद्यनिमामिति मलोपः ॥ २५ ॥ भ०

इषुमतीत्यादि । रघुसिंहे रामे रघुषु रघुवंशभवेषु सिंह इव शौर्यादियोगात् व्रजति सति इषुमति सनिषङ्गे प्रशंसायां मतुप् । दन्दशूकान् हिंस्रान् दंशेः लुपसदेत्यादिना यङ् जपजभेत्यादिना अभ्यासस्य नुक् । तदन्ताद्यजजपेत्यादिना ऊकः । अतो लोपः यस्य हलः जिघांसौ हन्तुमिच्छौ अज्झनेति दीर्घः । अभ्यासाच्चेति कुत्वं सनाशंसेति उः न लोकेति षष्ठीप्रतिषेधात् द्वितीयैव । धनुर्दधाने बिभ्राणे अरिभिरसह्यं सोढुमशक्यं शकिसहोश्चेति यत् मुष्टिपीडं मुष्टिना पीडयित्वा मुष्टिशब्दे तृतीयान्ते उपपदे सप्तम्यां चोपपीडेति णमुल् तत्र चकारेण तृतीयानुकर्षणात् । बद्धं चित्रमङ्गुलित्रं येन अङ्गुलिं त्रायत इति कः पुरे तरुण्यः पुरतरुण्यः णञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानमिति ङीप् । यदि तद्वचोऽर्थवत् नो चेद्गौरादिपाठात् ङीप् रामो गत इति गुरुः शोको यासां ताः । कथमपि मा रुदन् न रुदितवत्यः । रुदेरिरितो वेति लुङि अङ् यतो माङ्गलिक्यः मङ्गलप्रयोजनाः तदस्य प्रयोजनमिति ठञ् टिड्ढाणञित्यादिना ङीप् ॥२६॥ ज०म०

इषुमतीत्यादि । रघुसिंहे रघुश्रेष्ठे रामे व्रजति सति तद्विच्छेदात् गुरुशोकात् पुरतरुण्यः कथमपि महाकष्टेन मा रुदन् लघिरुदरोदे

अथ जगदुरनीचैराशिषस्तस्य विप्रा-
स्तुमुलकलनिनादं तूर्य्यमाजघ्नुरन्ये ।

यतो माङ्गलिक्य: मङ्गलाय हिता: मङ्गलप्रयोजना वा विकारसङ्घेति ष्णिक: क्षिन्नुष्णाहेति ईप् नदादित्वात् तरुणशब्दादीप् वयस्यचरमे इति क्रमदीश्वरादय: । रामे कीदृशे इषुमति मतुरस्त्यर्थे प्रशंसायाम् । दन्दशूकान् जिघांसौ दंशी दंशने इत्यस्मात् जाग्टयङन्तेति जक: यङो लुग्वेति यङो लुक् दंशो नलोपो वेति नलोप: दन्दशूकान् दंशनशीलानिति धातुचन्द्रादय: दन्दशूकस्तु पुंलिङ्गो राक्षसे च सरीसृपे इति मेदिनी हन्तुमिच्छुर्जिघांसु: सन्निच्छायामिति सन् अत्तुमिच्छति जिघत्सतीत्युक्तेरशुभगर्भाद्धातो: सन्निति बोध्यम् अन्यथाऽत्तुमिच्छतीत्युक्तेर्वैयर्थ्यं स्यात् सन्यङन्तो द्विरिति द्वि: खेराद्यचो लोप इति खेर्लोप: झभखयेति हस्य ज: ख्यस्येत् सनीति इ: खेर्होर्घोऽञ्णिति चेति हस्य घ: घोर्झनिङ्क्समामिति दीर्घ: अरिभिरसह्यं धनुर्दधाने किम्भूतं तत् मुष्टिपीडं मुष्टिना पीडा यस्य तत्तया एतेन मुष्टेर्दार्ढ्यं सूचितम् अन्ये तु प्रमाणाद्यन्तरोस्तृतीयासप्तमीभ्यां क्तान्तस्य समासो वेत्याहु: । तन्मते मुष्टिना पीडयित्वा इत्यर्थ: । मुष्टिं पीडयतीति पचादित्वादन् मुष्टिपीडमिति विशेषणेन धनुषोऽतिदार्ढ्यं सूचितमिति केचित् । केचित्तु मुष्टिं मोषणं पीडयति खण्डयति इत्यनेन चौर्य्यापसारणमपि कविभिर्वर्ण्यते स्मृतौ तस्करता स्थितेति कालिदास इत्याह मुष्टिं हि सामर्थ्यात् शत्रुकृतां पीडयतीति केचित् धारणक्रियाविशेषणमिति केचित् विचितम् अङ्गुलित्रं बद्धं येन अङ्गुलिं त्रायते रक्षतीति हनजनादिति ड: ॥ २६ ॥ भ०

अथेत्यादि । तस्य रामस्य व्रजत: विप्रा: अनीचै: महता ध्वनिना आशिष: इष्टवचनानि जगदु: गदितवन्त: अन्ये वादका: तूर्य्यं कांस्यतालपटहादिसमूहम् आजघ्नु: ताडितवन्त: आङो यमहन इति आत्मनेपदं न भवति । अकर्मकादित्यनुवर्त्तते तुमुलो महान् कलो मधुरो निनादो ध्वनिर्यस्येति अभिमतम् इष्टं फलं शंसितुं शीलं

अभिमतफलशंसी चारु पुस्फोर बाहु-
स्तरुषु चुकुवुरुच्चैः पक्षिणश्चानुकूलाः ॥ २७ ॥

इति भट्टिकाव्ये रामोत्पत्तिर्नाम प्रथमः सर्गः ।

---

यस्य बाहोः स च पुस्फोर सुतरां स्फुरितवान् । अत्र दक्षिणो बाहुः सामर्थ्याद्गम्यते स्वाङ्गत्वात् अनेन सीताप्राप्तिबीजमुपन्यस्तं स्फुरतेरभ्यासस्यशर् पूर्वाः खय इति खयः शेषः चर्त्वम् ॥ दक्षिणाश्च तरुषु स्थिताः अनुकूलाः सन्तः उच्चैः सुष्ठु चुकुवुः कूजितवन्तः । कुशब्दे इत्यस्य लिटः कित्त्वादुवङादेशः ॥ २७ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे
रामसम्भवः प्रथमः सर्गः ।

अथेत्यादि । अनन्तरं विप्रास्तस्य रामस्य अनीचैरुच्चैराशिषो जगदुः उक्तवन्तः अन्ये तूर्य्यं वाद्यम् आजघ्नुः वादितवन्तः कीदृशं तमुखो महान् कलो मधुरास्फुटो निनादो ध्वनिर्यस्य । तूर्य्योस्त्री वाद्यनिर्घोषे वादित्रं वादनञ्च तदिति कोषः । तस्य रामस्य बाहुश्चारु यथा स्यात्तथा पुस्फोर किम्भूतः अभिमतं फलं शंसति कथयतीत्यर्थात् दक्षिणबाहुस्पन्दनं कान्तालिङ्गनसूचकमिति वृद्धाः । ग्रहादित्वाणिन् अन्ये तु शीलार्थे णिन् इत्याहुः । अनुकूलाः पक्षिण उच्चैश्चुकुवुः शब्दं चक्रुः कुङ् शब्दे एतेन गमनमङ्गलमुक्तम् । यदुक्तं वामे मधुरवाक् पक्षी दृश्यः सम्भवितोऽग्रतः । अनुकूलो वहन् वायुः प्रयाणे शुभशंसिन इति ॥२६भ०

इति श्रीभरतसेनकृतायां भट्टिटीकायां मुग्धबोधिन्यां प्रकीर्णकाण्डे
श्रीरामसम्भवो नाम प्रथमः सर्गः ॥

---

# द्वितीयः सर्गः ।

——००——

वनस्पतीनां सरसां नदीनां तेजस्विनां कान्तिभृतां दिशाञ्च ।
निर्याय तस्याः स पुरः समन्ताच्छ्रियं दधानां शरदं ददर्श ॥१॥
तरङ्गसङ्गाच्चपलैः पलाशैर्ज्वालाश्रियं सातिशयां दधन्ति ।
सधूमदीप्ताग्निरुचीनि रेजुस्ताम्रोत्पलान्याकुलषट्पदानि ॥२

इदानीं विजिगीषूणां कण्टकान् समुद्धर्त्तुं शरत्काले समुद्योग इति तमेव वर्णयन्नाह, वनस्पतीनामित्यादि । स रामः तस्याः पुरः अयोध्यायाः निर्य्याय निर्गत्य समन्तात् सर्वतः शरदं ददर्श दृष्टवान् कालस्याप्रत्यक्षत्वात् कार्य्याणां दर्शनात्तद्दर्शनमिति मन्यते श्रियं दधानां धारयन्तीं केषां वनस्पतीनां पारस्करादिदर्शनात् सुट् । अत्र लोकप्रतीत्या वृक्षा द्रष्टव्याः न तु पारिभाषिकाः । तथा सरसां तड़ागानां नदीनां गङ्गादीनां तेजस्विनाञ्चन्द्रतारादीनां कान्तिं नैर्मल्यं बिभ्रतां दिशाञ्च तदा हि निर्मला दिशो भवन्ति । वनस्पत्यादीनां श्रियं दधानां शरदं ददर्श तां रामव्यापारं विना सामान्येन वर्णयन्नाह ॥ १ ॥ ज० म०

: वनस्पतीनामित्यादि । स रामस्तस्याः पुरोऽयोध्याया निर्गत्य समन्तात्सर्वतः शरदं ददर्श । यद्यपि कालस्य प्रत्यक्षता नास्ति यथापि तद्व्यञ्जकदर्शनात्तथा व्यपदेशः किम्भूतां वनस्पत्यादीनां श्रियं दधानां वनस्पतयो वृक्षाः परस्परं व्यतिलूनन्तीति ज्ञापकात् क्वचिदभिधानात् सकारागम इति बोध्यम् । वानस्पत्येतरद्रौ स्याद् द्रुमात्रेऽपि वनस्पतिरिति रभसः तेजो विद्यते येषां ते तेजस्विनश्चन्द्रादयः स्वङ्मेधास्रमायादिति विन् एषां कान्तिभृतामिति सम्बन्धः कान्तिं बिभ्रतीति क्विप् स्वस्य तनुपितीति तन् । वनस्पतीनां पुष्पसम्बन्धात् सरसां विकसितपद्मादिमत्त्वात् नदीदिक्तेजस्विनाम् अन्यत्कान्तिभृत्त्वम् ॥ १ ॥ भ०

तरङ्गेत्यादि । तरङ्गसङ्गात् सलिलोर्मिसम्पर्काच्चपलैः चञ्चलैः पलाशैः

विम्बागतैस्तीरवनैः समृद्धिं निजां विलोक्यापहृतां पयोभिः ।
कूलानि सामर्षतयेव तेनुः सरोजलक्ष्मीं स्थलपद्महासैः ॥३॥
निशातुषारैर्नयनाम्बुकल्पैः पत्रान्तपर्य्यागलदच्छविन्दुः ।

पत्रैः ज्वालाश्रियं सातिशयां दधन्ति सधूमदीप्ताग्निरुचीनि सधूमदीप्ताग्नेरिव रुचिर्येषां रक्तोत्पलानां तानि रेजुः दीप्यन्ते स्म राजेर्लिटि फणाञ्च सप्तानामिति एत्वाभ्यासलोपौ । आकुलाः इतस्ततोयायिनः षट्पदा येष्विति चलितपत्राणामग्निशिखातुल्यत्वात् षट्पदानाञ्च धूमतुल्यत्वात् सधूमदीप्ताग्निरुचीनीत्युक्तम् ॥ २ ॥ ज० म०

तरङ्गेत्यादि । ताम्रोत्पलानि रक्तोत्पलानि रेजुः राजृञ् ण दीप्तौ फणादित्वात् तृफलभजत्रपेति अत एत्वं खिलोपश्च । कीदृशानि तरङ्गसङ्गाच्चपलैश्चञ्चलैः पलाशैः पत्रैः सातिशयां ज्वालाश्रियं दधन्ति धारयन्ति धूमेन सह वर्त्तमानस्य दीप्ताग्नेरुचिरिव रुचिर्येषाम् । आकुलाश्चञ्चलाः षट्पदा भ्रमरा यत्र रक्तोत्पलदलानां वह्निज्वालासादृश्यं भ्रमरस्य धूमसादृश्यमिति भावः ॥ २ ॥ भ०

विम्बेत्यादि । विम्बं प्रतिविम्बं तेनागतैर्निपतितैरिति । तृतीयेति योगविभागात् सः । तीरवनैः कुसुमितैरित्यर्थात् तैः करणभूतैः पयोभिः कर्त्तृभिः समृद्धिं विभूतिं निजामात्मीयाम् अपहृतां विलोक्य कूलानि कर्त्तृभूतानि सामर्षतयेव सरोजलक्ष्मीं कमलशोभां पयःसम्बन्धिनीं तेनुः विस्तारितवन्तः । अत एकहल्मध्य इत्यादिना एत्वाभ्यासलोपौ । कूले सरोजासम्भव इति चेदाह स्थलपद्महासैरिति स्थलकमलविकाशैरित्यर्थः ॥ ३ ॥ ज० म०

विम्बेत्यादि । प्रतिविम्बेनागतैस्तीरवनैः करणभूतैः पयोभिः कर्त्तृभिरात्मीयां समृद्धिं सम्पत्तिम् अपहृतां विलोक्य नद्यादीनां कूलानि सामर्षतया सक्रोधतया स्थलपद्महासैः स्थलकमलविकाशैः पयःसम्बन्धिनीं सरोजलक्ष्मीं पद्मशोभां तेनुः तनदुञ् विस्तारे इवोत्प्रेक्षायाम् ॥ ३ ॥ भ०

निशेत्यादि । निशायां तुषारैः हिमैः नयनाम्बुकल्पैः अश्रुतुल्यैः

उपारुरोदेव नदत्पतङ्गः कुमुद्वतीं तीरतरुर्दिनादौ ॥ ४ ॥
वनानि तोयानि च नेत्रकल्पैः पुष्पैः सरोजैश्च निलीनभृङ्गैः।
परस्परां विस्मयवन्ति लक्ष्मीमालोकयाञ्चक्रुरिवादरेण ॥ ५॥

नयनानुकारिषु पत्रेषु स्थितत्वात्। तैर्हेतुभूतैः पत्रान्तपर्य्यागलदच्छ-बिन्दुः पत्रान्तात्पर्य्यागलन्तः अच्छास्तुषारबिन्दवो यस्य तीरतरोः। स दिनादौ दिनारम्भे कुमुद्वतीमुपारुरोदेव आक्रन्दितवानिव भाति शशि-वियोगादीदृशी त्वं भूतासीति रोदनक्रियया आक्रन्दनविशिष्टया कुमु-द्वत्या ईप्सिततमत्वात् रुदिः सकर्मकः। तदाक्रन्दनं योजयन्नाह नदत्पतङ्ग इति कूजत्पक्षीत्यर्थः पतेरङ्गत्पक्षीणीत्यौणादिकः। कुमुद्वती कुमुदनडेत्या-दिना ड्मतुप् झय इति वत्वम् उगीत्त्वात् ङीप् ॥ ४ ॥ ज० म०

निशेत्यादि। रात्रिसम्बन्धिहिमैर्नयनाम्बुतुल्यैर्हेतुभिः पर्णान्तपर्य्या-गलदच्छबिन्दुः सन् दिनादौ प्रातःकाले तीरस्थितो वृक्षः कुमुद्वतीम् उपारुरोद इव चन्द्रस्य विरहात् त्वमीदृशी जातेति क्रन्दितवानिव पर्णा-न्तेभ्यः समन्तात् गलन्तो निर्मला हिमानां बिन्दवो यस्य एतेन नयना-म्बुतुल्यत्वं सूचितम्। नदन्तः कूजन्तः पतङ्गाः पक्षिणो यत्र एतेन पतङ्गशब्दैरेव रोदनं सूचितम्। आह्वानविशिष्टाया रोदनक्रियायाः सकर्मकत्वं केवलायास्त्वकर्मकत्वमिति वृद्धाः वतौ कुमुदस्यातो लोपो निपातनात् ॥ ४ ॥ भ०

वनानीत्यादि। वनानि पुष्पैर्निलीनभृङ्गैः स्थितभ्रमरैः लीयतेः स्वादय ओदित इति निष्ठा नत्वं नेत्रकल्पैः नेत्रतुल्यैः। तोयानि च सरोजैः निलीनभृङ्गैर्नेत्रकल्पैः विस्मयवन्ति जातविस्मयानि परस्परामन्योन्यस्य लक्ष्मीं शोभाम् आलोकयाञ्चक्रुरिव। आदरेण तात्पर्य्येण ॥५॥ज०म०

वनानीत्यादि। नेत्रसदृशैः पुष्पैर्वनानि सरोजैस्तोयानि च परस्पराम् अन्योन्यस्य लक्ष्मीं शोभाम् आदरेण आलोकयाञ्चक्रुरिव शोभातिशयात् विस्मययुक्तानि परस्परामिति क्रियाव्यतीहारे निपातः परस्परमिति पाठोऽपि तथा क्रियाविशेषणं वा नेत्रसादृश्ये हेतुगर्भविशेषणमाह निलीना आश्लिष्टा भृङ्गा येषु ॥ ५ ॥ भ०

प्रभातवाताहतिकम्पिताकृतिः
कुमुद्वतीरेणुपिशङ्गविग्रहम् ।
निरास भृङ्गं कुपितेव पद्मिनी
न मानिनी संसहतेऽन्यसङ्गमम् ॥ ६ ॥

दत्तावधानं मधुलेहिगीतौ प्रशान्तचेष्टं हरिणं जिघांसुः ।
आकर्णयन्नुत्सुकहंसनादान् लक्ष्ये समाधिं न दधे मृगावित् ॥ ७

प्रभातेत्यादि । प्रभाते यो वातस्तस्याघातेन कम्पिता चलिता आकृतिराकारो यस्याः पद्मिन्याः सा भृङ्गं निरास निरस्तवती । कुमुद्वतीरेणुना पिशङ्गः कपिशः विग्रहो यस्य भृङ्गस्य कुपितेव । यथा अन्यया स्त्रिया सम्भोपितं तदङ्गसंक्रान्तपरिमलकण्ठमालमात्मदयितं काचित् कुपिता निरस्यति तद्वत् । सा किमिति निरस्यति यतो मानिनी मानवती अन्यसङ्गमम् अन्यया सह सङ्गमं न सहते आत्मसङ्गादन्यसङ्गमं न संसहते न क्षमते ॥ ६ ॥ ज० म०

प्रभातेत्यादि । पद्मिनी कुपितेव भृङ्गं निरस्यति स्म । कीदृशं कुमुद्वत्या रेणुभिः पिशङ्गः कपिलो विग्रहः शरीरं यस्य । कीदृशी प्रातःकालसम्बन्धिवाताभिघातेन कम्पिता आकृतिर्यस्याः सा यथा कुपिता स्त्री अन्ययोषिता सह गमितरात्रिं पतिं तदङ्गलग्नचन्दनचिह्नेन निर्णीय क्रोधात् कम्पितवती निरस्यति तथेयमपीति भावः यतः प्रशस्तमानवती स्त्री अन्ययोषित्सङ्गमम् ईशं पतिं न सहते अन्याशब्दस्य पुंवत्कर्मेरिति पुंवत् । संसहत इति पाठे अर्थात् पत्युरन्यस्त्रीसंसर्गं न सम्यक् सहते ॥ ६ ॥ भ०

दत्तेत्यादि । मधुलेहिगीताविति मधु लेढुं शीलमेषामिति णिनिः । मधुलेहगीताविति पाठान्तरं तत्र लिहन्तीति लेहाः पचाद्यच् मधुनो लेहा इति षष्ठीसमासः मधु लिहन्तीति वा कर्मण्यण् दत्तावधानं दत्तमानसं हरिणं प्रशान्तचेष्टं जिघांसुः हन्तुमिच्छुरपि मृगावित् व्याधः मृगान् विध्यतीति क्विप् । नहिवृत्येत्यादिना सम्प्र-

गिरेर्नितम्बे मरुता विभिन्नं तोयावशेषेण हिमाभमभ्रम् ।
सरिन्मुखाभ्युच्चयमादधानं शैलाधिपस्यानुचकार लक्ष्मीम् ॥८॥

सारणम् । नह्वृतीत्यादिना दीर्घः । लक्ष्ये बध्ये समाधिं चित्तैकाग्रतां न दधे न धारितवान् जित्वातङ् लिटः कित्त्वे आतो लोपः उत्सुकानां हंसानां नादानाकर्णयन् शृण्वन् तत्राभिरतचित्तकत्वात् । वर्त्तमानकालो भूतेनाभिसम्बध्यमानः साधुः । धातुसम्बन्धे प्रत्यया इति च आकर्णयन्निति प्रातिपदिकाद्धात्वर्थे बहुलमिति णिच् लक्षणहेत्वोरिति शतृप्रत्ययः ॥ ७ ॥ ज० म०

दत्तावधानमित्यादि । प्रशान्ता चेष्टा शरीरक्रिया यस्य तादृशमपि हरिणं जिघांसुर्हन्तुमिच्छुर्मृगाविद् व्याधः उत्सुकानां हंसानां नादान् आकर्णयन् शृण्वन् लक्ष्ये शरव्ये हरिणे समाधिम् अवधानं न दधे न धृतवान् हंसध्वनिश्रवणेन समुत्कण्ठितत्वात् प्रशान्तचेष्टत्वे हेतुगर्भविशेषणमाह मधुलेहिनां भ्रमराणां गीतौ दत्तमवधानं येन । मधुलेहीति ग्रहादित्वाणिन् मृगं विध्यतीति क्विप् वीरुहो धङ्काविति दीर्घनिर्देशात् क्वचित् क्विबन्ते पूर्वपदस्य दीर्घत्वं स्यादिति सूचितं तेनात्र दीर्घत्वम् आङ्पूर्वस्य विध्यते रूपं वा व्यध्यौ ताड़े इत्यस्य दन्त्यवत्त्वात् न जयत्वं तेन भभान्तस्यादिजत्वमित्यस्य न विषयः कर्णतुकमिदीत्यस्याङ्पूर्वस्य श्रवणार्थकत्वम् । वेध्यं लक्ष्यं शरव्यञ्च इष्टार्थोऽद्युक्त उत्सुक इति चामरः । शाकटायने तु उन्मनसि उत्सुकः साधितः ॥७॥ भ०

गिरेरित्यादि । गिरेः कस्यचित् नितम्बे मध्यभागे स्थितमभ्रं कर्त्तृ, मरुता विभिन्नं विश्लेषितं तोयावशेषेण पयसोऽवशिष्टतया हिमाभं हिमसदृशं सरिन्मुखानां गिरिनदीनिर्गमाणामभ्युच्चयं वृद्धिम् आदधानं कुर्वाणं शैलाधिपस्य हिमवतः लक्ष्मीं शोभामनुचकार अनुकृतवत् ॥ ८ ॥ ज० म०

गिरेरित्यादि । पर्वतस्य नितम्बे शिखरे स्थितम् अभ्रं मेघः शैलाधिपस्य हिमालयस्य लक्ष्मीं शोभामनुचकार सदृशीचकार । कीदृशं मरुता वायुना विभिन्नं तोयावशेषेण हिमस्येव आभा यस्य सरिन्-

गर्जन् हरिः साम्भसि शैलकुञ्जे प्रतिध्वनीनात्मकृतानिशम्य ।
क्रमं बबन्ध क्रमितुं सकोपः प्रतर्कयन्नन्यमृगेन्द्रनादान् ॥ ९ ॥
अदृक्षताम्भांसि नवोत्पलानि रुतानि चाश्रोषत षट्पदानाम्
आघ्रायि वान् गन्धवहः सुगन्धस्तेनारविन्दव्यतिषङ्गवांश्च ॥१०॥

सुखस्य गिरिनदीनिर्गमस्थानस्य अभ्युदयं वृद्धिं दृष्ट्वा चाद्धानं कुर्वाणम् अभ्रतीति अभ्रम् अभ्रगत्यां पचादित्वादच् । यद्वा न भ्रश्यन्ति जलान्यस्मादिति गमादित्वात् कृनजनाद्गमादेर्डे इति डः । न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्युत इति निरुक्तिः । आपो भ्रश्यन्त्यस्मादिति वा पूर्ववत् डः छन्दोरित्युक्तेः तेन वकारवानप्यब्भ्रशब्दः । आपो बिभर्त्तीत्यब्भ्रमिति केचित् नितम्बो रोधसि स्कन्धे शिखरे च कटीरके इति विश्वः ॥ ८ ॥ भ०

गर्जन्नित्यादि । हरिः सिंहः गर्जन् शब्दं कुर्वन् क शैलनिकुञ्जे गिरेर्गह्वने साम्भसि ससलिले एवंविधे प्रदेशे प्रतिध्वनीन् प्रतिशब्दान् आत्मकृतान् निशम्य श्रुत्वा सरोषः सकोपः क्रमं बबन्ध क्रमितुमुत्पतितुं यत् सामर्थ्यं तच्चकारेत्यर्थः। अनेकार्थत्वाद्धातूनां बधिरत्व करणे वर्त्तते । किमिति प्रतर्कयन्नन्यमृगेन्द्रनादान् । इदानीं रामं व्यापारेण वर्णयन्नाह ॥ ९ ॥ ज० भ०

गर्जन्नित्यादि । हरिः सिंहः सजले पर्वतसन्धिलतादिपिहितस्थाने गर्जन् शब्दं कुर्वन् आत्मकृतान् प्रतिनादान् वितर्कयन् सकोपः सन् क्रमितुमुत्पतितुं क्रमसुत्पतनानुकूलशरीरक्रियां बबन्ध चकारेत्यर्थः। क्रमः शक्तौ परीपाट्यां क्रमं चरणपङ्क्त्योरिति विश्वः। तर्कद्दीप्ताविति दीप्त्यर्थोऽपि तर्कधातुर्वितर्कमाह । प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातव इत्यभिधानात् ॥ ९० ॥ भ०

अदृक्षतेत्यादि । नवान्युत्पलानि येष्वम्भस्सु जलेषु तानि रामेणादृक्षत दृष्टानि दृशेः कर्मणि लुङ् शल इगुपधा इति प्राप्तस्य कसादेशस्य न दृश इति प्रतिषेधात् इरितो वेति सिजेव भवति । तेन विकल्पेनाङ्गोऽविधीयमानत्वात् सिज्‌सिचाविति कित्त्वे गुणाभावः । षट्पदानां

लतानुपातं कुसुमान्यगृह्णात् स नद्यवस्कन्दमुपास्पृशच्च।
कुतूहलाच्चारुशिलोपवेशं काकुत्स्थ ईषत् स्मयमान आस्त ११

रुतानि अश्रोषत श्रुतानि। श्रृणोतेः कर्मणि लुङ्। वहतीति वहः पचाद्यच् गन्धस्य वह इति कृद्योगे षष्ठी समस्यते। गन्धवहो वायुराघ्रायि आघ्रातः कर्मणि लुङ्। अरविन्देन पद्मेन व्यतिषङ्गः सम्पर्कः सोऽस्ति यस्य वायोः स वातीति वान् वातेः शतृप्रत्ययः सुगन्धः शोभनो गन्धो यस्य सः अरविन्दव्यतिषङ्गवत्त्वात्। गन्धस्येदुत्पूतिसुसुरभिभ्य इतीकारः समासान्तो न भवति। गन्धस्येत्वे तदेकान्तग्रहणमिति वचनात् सुगन्ध आपणिक इति यथा॥ १०॥ ज० म०

अदृत्यतेत्यादि। तेन रामेण अम्भांसि अदृश्यत दृष्टानि नवानि उत्पलानि यत्र अम्भांसि नवानि उत्पलानि चादृश्यत इति वा षट्पदानां भ्रमराणां रुतानि शब्दा अश्रोषत श्रुतानि। वहतीति वहः पचादित्वादच् गन्धस्य वहो गन्धवहो वायुराघ्रायि वान् गच्छन् वालगमनहिंसयोः अरविन्देन पद्मेन व्यतिषङ्गवान् संसर्गवान् अत एव सुगन्धः शोभनो गन्धोऽस्य इति सूत्त्सुरभिपूतेर्गन्धादिदिति समवेतस्यैव गन्धस्य ग्रहणम् अत्र तु परम्परया गन्धसम्बन्धान्न इप्रत्ययः। सुगन्धिरिति पाठे विकारसंघेत्यादिना सुगन्धशब्दात् स्वार्थे ष्णिः क्वचित्तु समवायाध्याहारात् सुगन्धिः समीरण इति प्रयोग इति पाणिनीयाः। अगन्धादेर्वा इति कालापाः। अदृत्यतादिषु कर्मणि टी अदृत्यतेत्यत्र इगुर्डुर्मढोस्य निम् किदिति कित्त्वान्न गुः मान्तोऽदनत इत्यन्तस्य अत् आघ्रायीत्यत्र रतनोर्यगिणाविति इण् तनोलोपः यनृवृणिदिति यन्॥ १०॥ भ०

लतेत्यादि। विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोरिति द्वितीयान्त उपपदे नमुल् विधीयते। तत्र व्याप्यमाने द्रव्यवचनस्य आसेव्यमाने च क्रियावचनस्य नित्यवीप्सयोरिति द्विर्वचनं विधीयते अत्र तु समासेनैवोक्तत्वात् नोपयुज्यत इति स्थितम्। स काकुत्स्थो रामो गच्छन् लतां लताम् अनुपात्य कुसुमान्यगृह्णात् गृहीतवान् लताम्

अनुपात्यानुप्लुत्य च। तृतीयाप्रभृतीन्यन्यतरस्यामिति समासः पश्चे लेङ्। ल्यप्रत्ययस्य अपिदिति ङित्त्वे ग्रहिज्याादिना सम्प्रसारणम्। नद्यवस्कन्दमिति नदीं नदीम् अवस्कन्द्य सर्वां नदीम् अवस्कन्द्य ढौकित्वा नदीं वा अवस्कन्द्यावस्कन्द्य उपास्पृशत् आचमनं कृतवान्। कौतूहलादिति सर्वत्र योज्यम्। चारुशिलोपवेशमिति चारुशिलाः चारुशिला उपविश्य चारुशिला उपविश्योपविश्य वा आस्त आसितवान्। आसेर्लङि रूपम् ईषत् स्मयमानः ईषद्धसन्॥ ११॥ ज० म०

लतानुपातमित्यादि। स काकुत्स्थो रामः लतानुपातं कुसुमानि पुष्पाणि अगृह्णात् गृहीतवान्। लतानां पातस्य पश्चात् लतानुपातमित्यव्ययीभावः लतानां पातमनुक्रम्येति लतानां पतनमनतिक्रम्येति वा अव्ययानामनेकार्थत्वादनुशब्दोऽनतिक्रमेऽपि। नद्यवस्कन्दम् उपास्पृशत् स्नातवान् नद्यामवस्कन्दोऽवगाहो यत्र स्नानक्रियायां नदीयमिति बोधो यत्रेति वा उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपीति विश्वः। कुतूहलादिति सर्वत्र योज्यं चारुशिलोपवेशमास्त चारुशिलायामुपवेशो वसनं यत्रासनक्रियायां चारुशिलानां रत्नशिलानामुपगता वेशा यस्मादिति वा। एतेन रामस्थित्या रत्नशिलानां सौन्दर्यं सूचितम् ईषत् स्मयमान ईषद्धसमानः। यद्यपि स्मिङ्धातोरीषद्धसनमेवार्थस्तथापि ईषत् शब्देन अत्यन्तानुपलभ्यहास्यत्वेन गाम्भीर्यं सूचितम्। पातादयो घञन्ताः लतानुपातमादयो णमन्ता इति पाणिनीयाः। तन्मते लतां लतामनुपात्य नदीं नदीमवस्कन्द्य गत्वा चारुशिलायाम् उपविश्येत्यर्थः। स्वमते चणम् समूलघातमित्यत्र व्याख्यातः अगृह्णादित्यादिषु घी वृषरूपस्य इन्द्रस्य ककुदि स्थितत्वात् ककुत्स्थ इक्ष्वाकुः पृषोदरादित्वाद्दकारलोप इति रायमुकुटादयः। स्वमते मनीषादित्वादिति यथा देवीदासचक्रवर्त्ती कदाचिद्वानरेश्वर इव सुग्रीवो वैदेहीति ब्रुवाणस्यालघुकाकुस्यस्यार्थिनः प्रार्थना क्रियतां सफलेति वानरपुङ्गवानादिशदिति नलचम्पूश्लेषः तेन निस्तकारकाकुस्थशब्द इति बोध्यं प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियामित्यमरः केचित्तु निपातनात् ककुदशब्दस्यातो लुकि ककुत्स्थशब्दस्तकारवान् इत्याहुः। तेस्व

तिग्मांशुरश्मिच्छुरितान्यदूरात्प्राञ्चि प्रभाते सलिलान्यपश्यत् ।
गभस्तिधाराभिरिव द्रुतानि तेजांसि भानोर्भुवि सम्भृतानि १२

दिग्व्यापिनीर्लोचनलोभनीया
मृजान्वयाः स्नेहमिव स्रवन्तीः ।
ऋज्वायताः शस्यविशेषपङ्क्ती
स्तुतोष पश्यन् वितृणान्तरालाः ॥ १३ ॥

निपातनात् ककुदस्यातो लुगिति दृष्योक्तं दान्तककुच्छब्दस्य विद्यमानत्वात् । तथाहि, ककुदोऽस्त्री ककुच्च स्त्री इत्यादौ राजलक्ष्मणीति भूरिप्रयोगः ककुदंशे इत्यागमश्च निस्तकार एव ककुस्थ शब्द इति कश्चित् तन्न तकारवतोऽपि प्रयोगस्य दृश्यमानत्वात् । तथाच राघवपाण्डवीये । सार्द्धं द्विजैः संहृतधाम्नि जिष्णावुपेयुषि ख्यातककुत्स्थवंश्य इति छनजनादिरिति तिष्ठतेर्डः ततोऽपत्ये अण् ॥ ११ ॥ भ०

तिग्मांश्वित्यादि । अदूरात्समीपे सलिलान्यपश्यत् । दृशेर्लङि पाघ्रेति पश्यादेशः तिग्मांशोरादित्यस्य रश्मिभिः छुरितानि रञ्जितानि तुक् । प्राञ्चि पूर्वस्यां दिशि अवस्थितानि । प्रपूर्वादञ्चतेर्ऋत्विगित्यादिना क्विप् अनुषङ्गलोपः शिः नपुंसकस्य नुम् । भानोरिव तेजांसि भुवि सम्भृतानि पिण्डीकृतानि । गभस्तिभिः रश्मिभिः धाराभिरिव द्रुतानि गलितानि धारा प्रपात इति भिदादिपाठाद्द्रष्टव्यम् ॥ १२ ॥ ज० म०

तिग्मांश्वित्यादि । रामोऽदूरात् समीपे सलिलानि अपश्यत् स्यादानपेति दृशः पश्यादेशः किम्भूतानि प्रभाते तिग्मांशोः सूर्यस्य रश्मिभिश्छुरितानि प्राञ्चि पूर्वदिगवस्थितानि । अतोऽभ्युच्यते भानोस्तेजांसि गभस्तीनां रश्मीनां धाराभिर्द्रुतानि द्रवीभूतानि सन्ति भुवि सम्भृतानि धाराभिरिति इजस्खलेच्छेत्यादौ निपातः ॥ १२ ॥ भ०

दिग्व्यापीत्यादि । शस्यविशेषाणां शाल्यादीनां पङ्क्तीः पश्यंस्तुतोष तुष्टवान् । दिग्व्यापिनीः सर्वदिग्व्यापनशीलाः लोभयन्तीति लोभनीयाः बहुलवचनात् कर्त्तर्य्यनीयः । लोचनानां लोभनीया इति षष्ठीसमासः । मार्जनं मृजा शुद्धिः षिद्भिदादिभ्योऽङ् तया अन्वयो अनुगमो यासां

वियोगदुःखानुभवानभिज्ञैः काले नृपांशं विहितं ददद्भिः।
आहार्यशोभारहितैरमायैरैक्षिष्ट पुंभिः प्रचितान् स गोष्ठान् ॥ १४

गुह्यानुगता इत्यर्थः। ततः स्नेहमिव स्रवन्तीः ऋजवश्च ता आयताश्च विततान्तरालाः उत्पाटितानि तृणानि अन्तराले मध्यभागे यासां ताः ॥ १३ ॥ ज० म०

दिग्व्यापिनीरित्यादि। स रामः शस्यविशेषाणां धान्यादीनां पङ्क्तीः प्रशस्यं स्तुतोष। किम्भूताः दिशं व्याप्नुवन्तीति ग्रहादित्वात् णिन् शीलार्थे णिन्नित्यन्ये। लोचनानां लोभनीया आकाङ्क्षणीयाः तव्यानीयया इत्यनीयः। यद्वा लोचनानां लोभनीयं लोभो दर्शनेच्छारूपो यत्र पूर्वेण भावेऽनीयः लोचनानि लोभयन्तीति कर्त्तर्यनीय इति केचित् स्वमतेऽपि नियोक्तुमर्हन्तीति नियोग्यः प्रभुरिति वाक्यात् क्वचित् कर्त्तर्यपि तव्यादयः स्युरिति सूचितम्। ऋजूपलक्षुद्रौ षित्त्वात् भीषिचिन्तीत्यादिना ङः स्त्रियामाप् अनुयन्तीति अन्वयाः पचादित्वादन् ऋजाया अन्वयाः गुह्यानुगता इत्यर्थः ऋजाया अन्वयः सम्बन्धो यत्र इति वा स्नेहं स्निग्धताम् अनुरागं वा स्रवन्तीरिव अतिस्निग्धत्वादुत्प्रेक्षा ऋजवः सरलाश्च ता आयता दीर्घाश्चेति उत्पाटिततृणत्वात्तृणरहितम् अन्तरालम् अभ्यन्तरं यासाम् ॥ १३ ॥ भ०

वियोगेत्यादि। पुम्भिः गोपैः प्रचितान् व्याप्तान् गोष्ठान् गावस्तिष्ठन्ति येष्विति सुपिस्थ इति कः अम्बाम्बेत्यादिना मूर्द्धन्यः तान् स राम ऐक्षिष्ट दृष्टवान् अनुदात्तेत्त्वात्तङ् इट् वियोगदुःखस्य योऽनुभवः अनुभवनं तस्यानभिज्ञैः तेषां पुत्रदारैः सहैव सर्वत्र गमनात्। एतावता कालेन एतावद्देयमिति विहितं कृतं दधातेर्हिः नृपांशकं ददद्भिः आहार्या कटकादिभिः आहरणीया या शोभा दीप्तिः तया रहितैः अमायैः ऋजुभिः आहार्येति ऋहलोर्ण्यत् शोभयतीति शोभा पचाद्यच्। ण्यासश्रन्थोयुजिति युच् न भवति तस्य स्त्रीलिङ्गे भावे अकर्त्तरि च कारके विधानात्। नन्द्यादिपाठात् ल्युर्न भवति तस्य वाऽसरूपोऽस्त्रियामिति विकल्पितत्वात् अथवा शोभन शोभा स्त्रीलिङ्गे

स्त्रीभूषणं चेष्टितमप्रगल्भं
चारूण्यवक्राण्यपि वीक्षितानि।
ऋजूंश्च विश्वासकृतः स्वभावान्
गोपाङ्गनानां मुमुदे विलोक्य॥ १५॥

भावे घञ्। कृत्यल्युटो बहुलमिति बहुलवचनादन्योऽपि कृतः प्राप्त॰मपि स्वाभिधेयं व्यभिचरन्ति॥ १४॥ ज॰ म॰

वियोगेत्यादि। स रामो गोष्ठान् गोस्थानानि ऐक्षिष्ट दृष्टवान् ईक्षङ्दर्शने। किम्भूतान् पुंभिः पुरुषैः प्रचितान् व्याप्तान् किम्भूतैः प्रवासित्वात् वियोगेन स्त्रीपुत्रादिविच्छेदेन यो दुःखानुभवस्तत्रानभिज्ञैः एतावति काले एतावद्देयमिति विहितं न्यपस्यार्थं करं ददद्भिः। आहार्य्यालङ्कारादिभिराहरणीया कृत्रिमा या शोभा तया हीनैः आहार्य्येति ऋहलोर्ण्यदिति घ्यण् शुभेर्घञन्तस्य स्त्रीलिङ्गत्वं क्वचिदभिधानात् नास्ति माया येषां गव्यावादेरिति स्वः। गोष्ठशब्दोऽपि पुंलिङ्गोऽस्तीति प्राञ्चः गावस्तिष्ठन्ति यत्रेत्यादन्ताज्जनजनादिति डः कृत्तोरित्युक्तगोभूमिद्वितीत्यादिना रामानन्दस्तत्रेण षत्वं मनीषादित्वाद्वा गोष्ठान् गोष्ठसहितान् प्रदेशानिति केचित्॥ १४॥ भ॰

स्त्रीभूषणमित्यादि। गोपाङ्गनानां चेष्टितं गमनागमनादि अप्रगल्भं लज्जावत् तच्च स्त्रीविभूषणं स्त्रीणामलङ्कारस्तथा वीक्षितानि विलोकितानि अवक्राण्यपि कटाक्षादिरहितान्यपि चारूणि शोभनानि स्वभावान् स्वाभिप्रायान् ऋजून् अकुटिलान् विश्वासकृतो विश्वासस्य जनकान् विलोक्य मुमुदे हृष्टवान् स रामः लिटोऽपित्त्वात् कित्त्वे गुणाभावः। कार्य्याणां दर्शनात् स्वभावानां दर्शनमित्युक्तम्॥१५॥ ज॰ म॰

स्त्रीभूषणमित्यादि। रामो गोपस्त्रीणामेतानि विलोक्य दृष्ट्वा मुमुदे ञिमुदङ्हर्षे तानि कानीत्याह स्त्रीभूषणं मेखलाकङ्कणादिकं चेष्टितं गमनादिकं स्त्रीणां भूषणमिव यतोऽप्रगल्भं सलज्जं तथा अवक्राणि कटाक्षादिरहितान्यपि चारूणि वीक्षितानि विलोकितानि तथा विश्वासजनकान् ऋजून् कपटरहितान् स्वभावान् तत्कार्य्यविलोकनादेव

विवृत्तपार्श्वं रुचिराङ्गहारं समुद्वहच्चारुनितम्बरम्यम्।
आमन्द्रमन्थध्वनिदत्ततालं गोपाङ्गनानृत्यमनन्दयत्तम् ॥१६॥
विचित्रमुच्चैः प्लवमानमारात् कुतूहलं त्रस्नु ततान तस्य।
मेघात्ययोपात्तवनोपशोभं कदम्बकं वातमजं मृगाणाम्॥१७

तद्विलोकनव्यपदेशः गोपाङ्गनानां विलासवत्त्वाभावेऽपि स्वभावसिद्ध-चरितान्येव हर्षजनकानि भवन्ति। तथाहि विलासा नागरस्त्रीणां न तथा रमयन्ति नः। यथा स्वभावसिद्धानि वृत्तानि वनयोषितामिति कौमुदी। अन्येनाप्युक्तं सर्वः प्रियः खलु भवेदनुरूपचेष्ट इति ॥१५॥भ०

विवृत्तेत्यादि। गोपाङ्गनानान्दधिमन्थनाय यत् स्थानं कृतन्तत्। नृत्यमिवेति गोपाङ्गनानृत्यं कर्तृ तं रामम् अनन्दयत् सन्तोषितवत् नन्देर्ण्यन्तस्य लङि रूपम् विवृत्ते तिर्य्यक् चलिते पार्श्वे यत्र नृत्ये। रुचिरः शोभनोऽङ्गहारोऽङ्गविक्षेपो यत्र समुद्वहता तिर्य्यक् समुद्गच्छता चारुनितम्बेन कटिभागेन रम्यम् मनोहरम्। आमन्द्र ईषद्गम्भीरो यो मन्थकृतो ध्वनिः तेन दत्तस्तालो यत्र ॥ १६ ॥ ज० म०

विवृत्तपार्श्वमित्यादि। दधिविलोडनावसरे गोपाङ्गनानां गात्र-विक्षेपो नृत्यत्वेन वर्ण्यते गोपस्त्रीणां नृत्यमिव नृत्यं कर्तृ तं राम-मनन्दयत् अतोषयत्। कीदृशं विवृत्तं तिर्य्यक् चलितं पार्श्वं यत्र रुचिरो मनोहरोऽङ्गहारोऽङ्गविक्षेपो यत्र। समुद्वहता तिर्य्यगूर्द्ध्वमध-श्चलता चारुणा नितम्बेन रम्यम् आमन्द्रेण ईषद्गम्भीरेण दधिमन्थन-दण्डध्वनिना दत्तस्तालो यत्र एतेन नृत्यसादृश्यं व्यज्यते ॥ १६ ॥ भ०

विचित्रमित्यादि। मृगाणां कदम्बकं वृन्दन्तस्य रामस्य कौतूहल-न्ततान विस्तृतवत् विचित्रं कृष्णश्वेतत्वात् उच्चैः प्लवमानम् ऊर्द्ध्वं जिहानम् आरात् समीपे त्रस्नु, त्रसनशीलं त्रसि गृधीत्यादिना क्नुः। मेघात्ययेन मेघापगमेन उपात्तवनोपशोभम् उपात्तं गृहीतं वनम् उप-शोभा च येनेति व्यधिकरणबहुव्रीहिः वातमजति वातमजं वाताभि-मुखं गच्छतीत्यर्थः वातशुनीति तशर्भेष्विति खश्। अरुर्द्विषदिति मुम् ॥ १७ ॥ ज० म०

सितारविन्दप्रचयेषु लीनाः संसक्तफेनेषु च सैकतेषु।
कुन्दावदाताः कलहंसमालाः प्रतीयिरे श्रोत्रसुखैर्निनादैः॥१८

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदम्।

विचित्रमित्यादि। मृगाणां कदम्बकं समूहस्तस्य रामस्य कुतूहलं ततान विस्तारितवत् कीदृशं विचित्रं नानावर्णम् उच्चैः प्लवमानं शुङ्गसर्पेषो विचित्रं यथा स्यात्तथा उच्चैः प्लवमानं वा आरात् समीपे तस्थतीति तस्थु क्षिपतस्रेति कर्त्तरि क्तुः। शीलार्थे क्तुरित्यन्ये मेघात्ययेन शरत्कालेन मेघापगमेन वा प्राप्तं वनम् उपशोभा च येन प्राप्तेन वनेन उपशोभते इत्रि वा वातमजं वायोरनुगामि अभिमुखधावि वा तृम्रद्दृजीत्यादिना खः परन्तपवत् ॥ १७ ॥ भ०

सितेत्यादि। सितारविन्दानाम्प्रचयेषु समूहेषु एरच् सङ्के चानौत्तराधर्य्ये इति घञ् कौ न भवतः प्राणिषु सङ्घशब्दस्य रूढ़त्वात् लीनाः कलहंसमालाः तथा संसक्तफेणेषु च सैकतेषु पुलिनेषु लीनाः सिकता येषु विद्यन्त इति देशे लुविलचौ चेति चकारादण् कुन्दावदाता कुन्दमिवावदाताः शुक्लाः उपमानानीत्यादिना समासः। प्रतीयिरे ज्ञाताः तेन रामेणेति विभक्तिविपरिणामेण सम्बन्धः। कर्मणि लिट् इणो यण् द्विर्वचनेऽचीति स्थानिवद्भावाद्द्विर्वचनम्। श्रोत्रसुखैर्मधुरैर्निनादैः करणभूतैः नौ गदेत्यादिना घञ् शरद्वर्णनमुपसंहरन्नाह ॥ १८ ॥ ज० म०

सितारविन्देत्यादि। अर्थाद्रामेण कर्त्रा श्रवणसुखकारिभिर्निनादैः कलहंसमालाः प्रतीयिरे ज्ञाताः कर्मणि ठो यिणोऽच्यराविति इणो यादेशः निनादस्युतिव्यतिरेकेणाप्रत्यये हेतुगर्भविशेषणमाह शुक्लपद्मसमूहेषु फेणयुक्तेसु सैकतेषु च लीना शुभ्राः कन्दपुष्पवत् शुक्लाः सिकताशब्दात् विकारसंघेत्यादिना इदमर्थे विकारार्थे अस्त्यर्थे वा णः सैकतं वालुकामयस्थानमुच्यते कादम्बे कलहंसः स्याद्राजहंसे च दृश्यते ॥ १८ ॥ भ०

न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः॥ १९॥

तं यायजूकाः सह भिक्षुमुख्यैस्तपःकृशाः शान्त्युदकुम्भहस्ताः।
यायावराः पुष्पफलेन चान्ये प्रानर्चुरर्च्यं जगदर्चनीयम्॥२०॥

न तज्जलमित्यादि। किं बहुनोक्तेन सर्वथा न तज्जलं यत् सुचारुपङ्कजन्न बभूव पङ्कजमपि यद्लीनषट्पदन्तदपि न। असौ षट्पदोऽपि तथाविधो नाभूत्। यः कलम्मधुरन्न जुगुञ्ज न गुञ्जितवान्। गुजि अव्यक्ते शब्दे इदितोनुम् धातोरिति नुमि लिटि रूपम्। गुञ्जितमपि तन्नैवासीत् यन्मनो न जहार न हृतवत् रामस्य लोकस्य वा॥ १९॥ ज० म०

न तदित्यादि। शरदि तज्जलं नास्ति यत्र न सुचारूणि पङ्कजानि सन्ति तत् पङ्कजमपि नास्ति यत्र षट्पदा न लीनाः अनाश्लिष्टा लीङ्य श्लेषेपि क्त्वाप्योरिति क्तस्य नत्वम्। असौ षट्पदोऽपि नास्ति यः कलं मधुरास्फुटं न जुगुञ्ज गुजिकूजने तद्गुञ्जितमपि नास्ति यन्मनो न जहार॥ १९॥ भ०

तमित्यादि। यायजूकाः अत्यर्थं यजनशीलाः यजजपदशां यङ इत्यूकः अतोलोपः यस्य हलः ते तपोवनस्थितास्तं राममागच्छन्तमानर्चुः सुष्ठु पूजितवन्तः अर्चेर्लिटि द्विर्वचनम् अत आदेरिति दीर्घत्वम्। तस्मान्नुड्द्विहल इति नुट् सह भिक्षुमुख्यैः भिक्षणशीला भिक्षवः परिव्राजकाः सनाशंसभिक्ष उः तेषां ये प्रधानाः तैः सह तपःकृशाः तपसा दुर्बलाः शान्त्यर्थमुदकं तेन पूर्णः कुम्भः एकहलादावित्यादिना उदकस्य उदभावः स हस्ते येषामिति बहुव्रीहिः परनिपातश्चात्र वाहिताग्न्यादिदर्शनात् प्रहरणार्थेभ्यश्च इति वा। शान्त्युदकुम्भस्त्वहितनिवारणसाधर्म्यात् उपचारेण प्रहरणन्ते शिरःसूदकदानेन प्रानर्चुः। अन्ये मुनयो यायावरा एकत्रानियतनिलयाः यातेर्यङन्तात् यश्चयङ इति वरच्। अतोलोपादि पुष्पफलेन प्रानर्चुः पुष्पाणि च फलानि चेति जातिरप्राणिनामिति एकवद्भावः। अर्च्यं अर्चनार्हं अर्हेकृत्यः

विद्यामथैनं विजयां जयाञ्च
रक्षोगणं क्षिप्नुमविक्षतात्मा ।
अध्यापिपद्गाधिसुतो यथाव-
न्निघातयिष्यन् युधि यातुधानान् ॥ २१ ॥

अर्चनीयमित्यत्रापि । जगताञ्जगद्भिर्वा अर्चनीयम् क्तस्यानां कर्त्तरि वेति पक्षे षष्ठी ॥ २० ॥ ज० म०

तमित्यादि । यायजूकाः पुनः पुनरतिशयेन वा यजनशीलाः भिक्षूणां परिव्राजकाणां मुख्यैः सह जगतामर्चनीयं तं रामं प्रानर्चुः अर्च पूजायां स्वान्तादाद्दादाद्यन्तोरिति खेरान् जाग्यङन्तेति जकः । सन-भिक्षेति भिक्षेरुप्रत्ययः कीदृशाः तपोभिः लशाः शान्त्यर्थं यदुदकं तस्य कुम्भो हस्ते येषाम् एतेन शान्तिजलेनार्चा प्रतीयते उदकुम्भ इत्यत्र समासे उदकस्यासंयुक्तहलादौ पूर्व्य इति उदादेशो विकल्पेनेति परे स्वमते उदशब्दोऽप्यस्ति । अन्ये मुनयः पुष्पफलेन प्रानर्चुः यायावराः सन्तो नानावनभ्रमणशीलाः यातेर्यङन्तात् यायायभासकसेति वरः यङ्लुक गत्यर्थादिक्के यङिति केचित् यातिरत्र ज्ञानार्थः सर्वे गत्यर्थाः प्राप्त्यर्थाः ज्ञानार्थाश्चेति न्यायादत्यर्थज्ञानशीला इत्यर्थः । अर्च्याः स्तुत्यर्हाः ऋच् शनुत्यां तेऽस्याः शक्यार्हप्रैष्येति घ्यण् सेमन्तात् न चजोः कगाविति कत्वम् ॥ २० ॥ भ०

विद्यामित्यादि । तपोवनस्थाप्तः गाधिसुतः एनं रामं द्वितीया-टाविच्येनादेशः । विद्यानाम्ना विजयाञ्जयाञ्च यथावत् यथाविधि अध्यापिपत् पाठितवान् णौजसंश्वङोरिति गाङ्भावपक्षे रूपम् अधि-पूर्वादिङो हेतुमण्णिचि क्रीङ्जीनां णौ इत्यात्वम् पुगादिविधयः । रक्षो-गणम् क्षिप्नुम् क्षेरयितारम् त्रसिगृधीत्यादिना क्नुः नलोकेति षष्ठीप्रति-षेधात् द्वितीयायैव । अविक्षतात्मा रागादिभिरनभिभूतचित्तवृत्तिः । तस्य हि विद्या अमोघा भवति युधि संग्रामे यातुधानान् रक्षांसि नि-घातयिष्यन् मारयिष्यन् । हन्तेर्हेतुमण्णिच् भृत्ने ऌट् ऌटः सदा-देशः ॥ २१ ॥ ज० म०

आयोधने स्थायुकमस्त्रजातममोघमभ्यर्णमहाहवाय ।
ददौ बधाय चणदाचराणां तस्मै मुनिः श्रेयसि जागरूकः २२

विद्यामित्यादि । अथानन्तरं युधि संग्रामे यातुधानात् राक्षसान् रामद्वारा निघातयिष्यन् गाधिसुतो विश्वामित्र एनं रामं नाम्ना विजयां जयाख्यां विद्यां यथावत् यथाविधि अध्यापिपत् पाठयामास । किम्भूतां रक्षोगणं क्षिप्नुं क्षिप श औ लुदि क्षिपतसीति कर्त्तरि क्नुः शीलार्थे क्नुरित्यन्वे । ढधेकत्वेति सूत्रे उदन्तकत्प्रत्ययवर्जनात् न ढे षी । कीदृशः अविक्षतो बाणादिभिरनुपक्षत आत्मा यस्य । एनमिति इदमसमानार्थकस्य एनशब्दस्य रूपं द्विटौसीति सूत्रस्यानूक्तिविषयत्वात् । यद्दाह नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते य इति भारविः । अध्यापिपदिति अधीङ्‌ध्ययने णिः प्रेरणे इति णिः क्रीजीङोऽजेत्या क्लीलीति पन् णिश्रीत्यङ् नाज्जन्तादेरिति निषेधात् धुर्द्विष्ड्डीति षीत्यस्यैव द्वित्वं ओर्लोपः निघातयिष्यन्निति पूर्ववत् णिः हनस्तङिति तङ् खेर्हौघ इति घः ॥ २१ ॥ भ०

आयोधन इत्यादि । स मुनिः तस्मै रामायास्त्रजातम् अस्त्रसमूहं ददौ दत्तवान् । ददातेर्लिट् णल् आत औ णलः आयुध्यन्ते अस्मिन्निति आयोधनं संग्रामः अधिकरणे ल्युट् तत्र स्थायुकं स्थितिकरणशीलम् जयावहत्वात् । लषपतेत्यादिना उकञ् आतो युक् अत एवामोघम् अवन्ध्यम् अव्यामोघत्वात् अभ्यर्णो निकटो महाहवो यस्य तस्मै अभिपूर्वादर्दः निष्ठायाम् अभेश्चाविदूर्य्ये इतीट् प्रतिषेधः रदाभ्यामिति नत्वम् अभ्यर्णः आहव इति आह्वयन्ते अस्मिन्युद्धायेति ह्वयतेराङ्पूर्वादाङि युद्धे इति सम्प्रसारणम् अप्प्रत्ययः गुणावादेशौ बधाय चणदाचराणामिति चणदा रात्रिः तत्र चरन्तीति चरेष्टः तत्र हि महाहवेः रामो राक्षसान् हनिष्यतीति हनस्च बध इति बधादेशः कत्प्रयोगे चणदाचराणामिति कर्मणि षष्ठी । श्रेयसि जागरूकः तत्कल्याणे सावधानः जागर्त्तेरूकः ॥ २२ ॥ ज० म०

आयोधन इत्यादि । मुनिः चणदाचराणां राक्षसानां बधाय

तं विप्रदर्शं कृतघातयत्ना यान्तं वने रात्रिचरी डुढौके।
जिघांसुवेदं धृतभासुरास्त्रस्तां ताड़कास्तां निजघान रामः २२

हिंसार्थं तस्मै रामाय अस्त्रजातं ददौ कीदृगम् आयोधने युद्धे स्थायुकं स्थितिशीलं जयावहत्वात् गुस्थाभूकमिति उकः यनञ् यिदिति यत् अमोघम् अव्यर्थं तस्मै कीदृशाय अभ्यर्णः समीपवर्त्ती महानाहवो युद्धं यस्य अभ्यर्णे त अभिपूर्वस्यार्दतेः क्तान्तरूपं क्षुब्धवाढेति निपातः। आह्वयन्ते योद्धारोऽस्मिन् इति आह्वयः अभिधानाज्जिः कीदृशो रामस्य साधूनां वा श्रेयसि कल्याणे जागरूकः सावधानः जागृयङ-न्तेति जागर्त्तेरूकः। आयुध्यन्तेऽस्मिन् योद्धार इत्यायोधनम् आधा-रेऽनट्। हन्तेः कभावेऽमी इत्यनि कृते हतबधष्टेत्यस्मीति बधादेशः समूहार्थस्य जातस्य चवर्गादित्वमीरितमिति विश्वः॥ २२ ॥ भ०

तमित्यादि। विद्यामस्त्रजातञ्चादाय यज्ञकर्मणि विघ्नोपशमनार्थं वने यान्तं रामं रात्रिचरी राक्षसी ताड़काभिधाना डुढौके ढौकते स्म। ढौकतेरात्मनेपदिनो लिटि रूपम्। ताञ्च रामो निजघान निहत-वान् विप्रदर्शं कृतघातयत्ना विप्रान् ब्राह्मणान् दृष्ट्वा कृतमारणाभियोगा रात्रिचरी रामोऽपि जिघांसुवेदं धृतभासुरास्त्रः जिघांसुं विदित्वा धृतम्भासुरं भासनशीलम् अस्त्रं येनेति बहुव्रीहिः विप्रदर्शञ्जिघांसुवेद-मिति कर्मणि दृशिविदोः साकल्य इति णमुल्॥ २२ ॥ ज० म०

तमित्यादि। वने यान्तं गच्छन्तं तं रामं रात्रिचरी डुढौके प्राप्त-वती ढौकङ् गत्यां भ्रभवयेति खेरौकारस्य ह्रस्व उकारः रात्रौ चर-तीति पचादित्वादन् ततो नदादित्वादीप् कीदृशी विप्रदर्शं विप्रं दृष्ट्वा कृतो घाते यत्नो यया घात इति हन्तेर्घञन्तस्य रूपं यत्न इति स्वपर-श्चेति यतेर्नङ् जिघांसुं विदित्वा धृतं भासुरं दीप्तमस्त्रं येन स रामः तां ताड़कानाम्नीं रात्रिचरीं निजघान भाससुङ् दीप्तौ सिद्धासभनूज इति घुरः विप्रदर्शं जिघांसुवेदमिति चणम्वाभीक्ष्ण इत्यत्र योगविभागा-न्नणम्। यद्वा विप्राणां दर्शो दर्शनं यस्मात् रामस्य विशेषणम् एतेन रक्षोभिया पलायमानानां विप्राणां पूर्वं दर्शनं नासीत् रामागते तु

अथालुलोके हुतधूमकेतुशिखाञ्जनस्निग्धसम्रुद्धशाखम् ।
तपोवनं प्राध्ययनाभिभूतसमुच्चरच्चारुपतत्त्रिशिञ्जम् ॥ २४ ॥
क्षुद्रान्न जक्षुर्हरिणान् मृगेन्द्रा विशश्वसे पक्षिगणैः समन्तात् ।
नंनम्यमानाः फलदित्सयेव चकाशिरे तत्र लता विलोलाः २५

त्रिप्रदर्शनमिति व्यज्यते जिघांसुं वेत्तीति ढात् सण् पचादित्वादन् वा कूटमपि रामस्य विशेषणम् ॥ २३ ॥ भ०

अथेत्यादि। अथासौ रामो राक्षसीं हत्वा तपोवनम् आलुलोके दृष्टवान्। कथम्भूतं हुतधूमकेतुशिखाञ्जनस्निग्धसम्रुद्धशाखं हुतश्चासौ धूमकेतुरग्निश्च हुतधूमकेतुः तस्य शिखाञ्जनेन स्निग्धाः सम्रुद्धाश्च फलादिना शाखा यस्य तपोवनस्य। प्राध्ययनेन वेदपाठेन अभिभूता तिरस्कृता समुच्चरन्ती चार्वी शोभना पतत्त्रिणाम्पक्षिणां शिञ्जा ध्वनिर्यत्र शिजि अव्यक्ते शब्दे शिञ्जनं शिञ्जा गुरोश्च हल इत्यकारप्रत्ययः। पतत्त्रं त्रायन्त इति पतत्त्राणि पक्षाः आतोऽनुपसर्गे कः तानि येषां सन्तीति पतत्त्रिणः। पतङ्गशिञ्जमिति पाठान्तरम् ॥ २४ ॥ ज० म०

अथेत्यादि। ताड़कावधानन्तरं रामस्तपोवनम् आलुलोके लोकाञ्चक्रे कीदृशं हुतस्य धूमकेतोरग्नेः शिखाया यदञ्जनं तेन स्निग्धा सम्रुद्धा फलपुष्पवती शाखा यत्र तथा धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोरिति विश्वः। प्राध्ययनेन प्रकृष्टाध्ययनेन अभिभूता समुच्चरन्ती उद्गच्छन्ती चारूणां पतत्त्रिणां पक्षिणां शिञ्जा अस्फुटशब्दो यत्र शिजि च किञ्चस्फुटध्वनौ सेमक्षात्गुरोरिति ङः स्त्रीत्वञ्च अमरकोषे तु भूषणानान्तु शिञ्जितमित्युपलक्षणम् ॥ २४ ॥ भ०

क्षुद्रानित्यादि। तत्र तस्मिंस्तपोवने तपोधनानाम्प्रभावात्। क्षुद्रानितरानपि हरिणान्मृगेन्द्राः सिंहाः न जक्षुः न बाधितवन्तः क्षुद्यन्त इति क्षुद्राः स्फायितञ्चीत्यादिना औणादिको रक् लिड्न्यतरस्यामिति अदेर्घस्लृ गमहनेत्युपधालोपः खरि चेति चर्त्वं शासिवसीत्यादिना षत्वं पक्षिगणैः समन्तात्सर्वत्र विरुद्धैरपि काकोलूकादिभिः परस्परं विशश्वसे विश्वस्तम् भावे लिट् लताश्च विलोलाश्चपलाश्चकाशिरे

अपूपुजन् विष्टरपाद्यमाल्यैरातिथ्यनिष्णा वनवासिमुख्याः।
प्रत्यग्रहीष्टां मधुपर्कमिश्रं तावासनादि क्षितिपालपुत्रौ ॥२६

शोभन्ते स्म फलदित्सयैव मुनिभ्यः फलं दातुमिच्छयैव नन्नम्यमानाः अत्य-र्थन्नमन्त्यः दातुमिच्छा दित्सा ददातेः सन् सनिमीमेत्यादिना इस् अत्र लोपोऽभ्यासस्येति अभ्यासलोपश्च। सस्येत्यादिना सकारस्य तकारः अप्रत्ययादित्यकारप्रत्ययः। फलानां दित्सेति कर्मणि षष्ठीं विधाय तद्योगे समासः। नन्नम्यमाना इति नमेर्यङि नुगतोऽनुनासिकेति नुक् यङन्ताच्छानच् शाने मुक् ॥ २५ ॥ ज० म०

क्षुद्र इत्यादि। तत्र तपोवने मृगेन्द्राः सिंहाः क्षुद्रान् हरिणान् न जक्षुः अद् लौ भक्षे घ्लृवेति घसादेशः हनगमित्युङ्लोपः। खप-भसोरिति घस्य कः किलादिति षः पक्षिगणैः समन्तात् सर्वतो विश्र-ब्धे तपःप्रभावात्। नित्यविरोधस्याप्यभावाद्भावे ठौ विलोलाश्चञ्चला लताश्चकाशिरे काष्ठेन्द्युतौ फलानि दित्सयेव नन्नम्यमाना अतिशयेन नताः नमेर्यङन्तस्यो जपजभेति खेऽनुन् फलभारनतानामुत्प्रेक्षेयम्। दातुमिच्छा दित्सा दाञः सनि मिमीमादेतीस् खिलोपश्च संख्यारे इति तः संख्यादः स्त्रियामाप् ॥ २५ ॥ भ०

अपूपुजन्नित्यादि। वनवासिमुख्याः महर्षयो विष्टरादिभिः अपू-पुजन् पूजितवन्तः तौ क्षितिपालपुत्रावित्यर्थात् द्वितीयान्तेन योज्यम् वनवासीति शयवासेत्यादिना विकल्पेन सप्तम्या अलुक् पूजेः स्वार्थिक-ण्यन्तस्य णौ चङि ह्रस्वः। दीर्घो लघोरिति अभ्यासस्य दीर्घः विष्टर-मासनम् वृक्षासनयोर्विष्टर इति निपातनात्। पाद्यं पादार्थमुदकम्। पादार्घाभ्यामिति यत् तदर्थत्वात्सङ्गवाभावः माल्यानि कुसुमानि मालायां साधूनि तत्र साधुरिति यत्। आतिथ्यनिष्णाः अतिथ्यर्थम् आति-थ्यम् अतिथेर्ञ्यः तत्र निष्णाः कुशलाः निनदीभ्यां स्नातेः कौशल इति षत्वम्। तौ च क्षितिपालपुत्रौ रामलक्ष्मणौ तदासनादि प्रत्यग्रहीष्टा-मतिगृहीतवन्तौ प्रतिपूर्वात् ग्रहेर्लुङ् तस्ताम् ग्रहोऽलिटि इति दीर्घः षत्वष्टुत्वे मधुपर्कमिश्रम् मधुपर्केण सहेत्यर्थः ॥ २६ ॥ ज० म०

दैत्याभिभूतस्य युवामवोढं मग्नस्य दोर्भिर्भुवनस्य भारम् ।
हवींषि संप्रत्यपि रक्षतं तौ तपोधनैरित्थमभाषिषाताम् ॥२७

अपूपुजन्नित्यादि । वनवासिनां मुनीनां मुख्या विष्टरपाद्यमाल्यैरपूपुजन् अर्थात् रामलक्ष्मणौ पूजक्पूजे टौ णिश्रीत्यङ् अङ्‌इुडः ख इति ख खेः सन्वदित्यादिना खेर्घः विष्टरम् आसनं वेलो नाम्नीति रामानन्दसूत्रेण मनीषादित्वात् वा षत्वम् । वृक्षासनयोर्विष्टर इति क्रमदीश्वरः । आसने कुशमुष्टौ च विष्टर इति विश्वः । विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनमित्यमरः । पादार्थं जलं पाद्यं विकारसंघेति ष्णत्रः पाद्यं पादाय वारिणीत्यमरः । मालैव माल्यं स्वार्थे ष्णत्रः मालायां साधूनि माल्यानि कुसुमानि वा किम्भूताः आतिथ्यनिष्णाः अतिथ्यर्थम् आतिथ्यम् अतिथिशब्दात् तादर्थ्ये ष्णत्रः स्वार्थे ष्णत्रः इति केचित् क्रमादातिथ्यातिथेये ह्यतिथ्यर्थेऽत्र साधुनीत्यमरः । वस्तुतस्तु आतिथ्यशब्देन अतिथिसेवनमुच्यते तत्र निष्णाः कुशलाः नदीस्नातिनिस्नात्योर्दक्षे इति रामानन्दसूत्रेण मनीषादित्वाद्वा षत्वम् । निनदीभ्यां स्नः कौशले इति षत्वविधायकं क्रमदीश्वरसूत्रम् । क्षितिपालस्य पुत्रौ रामलक्ष्मणौ मधुपर्केण सहितम् आसनादि प्रत्यग्रहीष्टां ग्रहं सिः ग्रहेरिमोघोऽशामिति घः क्विलादिति षः एभिरिति तस्य टः ॥ २६ ॥ म०

दैत्येत्यादि । दितेरपत्यानि दैत्याः दित्यादित्येत्यादिना ष्णत्रः तैरभिभूतस्य मग्नस्य शरणस्य भुवनस्य भारमितिकर्त्तव्यतालक्षणन्दोर्भिर्भुजैः युवामवोढम् ऊढवन्तौ नरनारायणौ युवामित्युक्तौ त्वञ्च त्वञ्चेति एकशेषः अवोढमिति वहेर्लुङ् यसस्तम् हलन्त लक्षणा विद्धिः सिजलोपः सहिवहोरित्योत्वं ढत्वष्टत्वढलोपः दोरिति दमेर्डोसित्यौणादिको डोस् । हवींषि होतव्यानि सम्प्रत्यपि रक्षतम् अर्चिरुचिहुसृपिच्छादिच्छर्दिभ्य इसिरित्यौणादिक इसिः । राक्षसैः उपहन्यमानानि रक्षतं प्रार्थनायां लोट् । थस्थसस्तम् इत्थमिति इदमस्थमुः अनेनोक्तप्रकारेण तपोधनैस्तप एव धनं येषामिति अभाषिषाताम् अभिहितौ भाषतेः कर्मणि लुङ् सिजिटौ ॥ २७ ॥ ज० म०

तान् प्रत्यवादीदथ राघवोऽपि यथेप्सितं प्रस्तुत कर्म धर्म्यम्।
तपोमरुद्भिर्भवतां शराग्निः संधुक्ष्यतां नोऽरिसमिन्धनेषु ॥२८

दैत्येत्यादि। तप एव धनं येषां तैस्तपोधनैस्तपस्विभिस्तौ रामलक्ष्मणौ इत्यमभाषिषातां भाषृङ्वाचीति कर्मणि टी इदं प्रकारम् इत्थं निपातनात् किं तदित्याह युवां भुवनस्य भारं परिरक्षणं दोर्भिर्भुजैः अवोढं वहेश्छान्तं अनिट्त्वादिति सेर्लुक् होढोभाविति हस्य ढः ढभान्तथोरिति तस्य धः ष्टुभिरित्यादिना धस्य ढः सहवहोऽदोढि इत्योत्वं ढ्रेढ्रीति ढस्य लोपः कीदृशस्य दैत्याभिभूतस्य अत एव भग्नस्य नष्टप्रायस्य दितेरपत्यानि दैत्याः वाह्लाद्यत इत्यादिना गर्गादित्वात् यञः भ्रस्जेरौदित्वात् स्वल्याद्योरित्यादिना क्तस्य नः स्कादेः सलोपः इत्यनेन सलोपः। चजोः कगाविति सूत्रे अनिम् यज्ञाङ्गयज इति कृते ये अनिम्धातवस्तेषां चजोः कगौ स्याताम् इति सर्वं सङ्गतं भवति तथापि यतोऽस्मिन् इतिकृतं चजोर्घिति क्तौ च परे चजोः कगौ भवत इति सूचनार्थं तेन भग्नरुग्नभुग्नादयः सिध्यन्ति भ्रस्जेः कङ् चेति कङ्विधानं शक्ष्राजेति षङ्विधाननिरासार्थं तेन भृजस्तु भृष्ट इत्यत्र षङ्विशेषविधित्वादिति देवीदासचक्रवर्त्तिना व्याख्यातं तेनैव सूत्रेण जस्य गः मनीषादित्वाद्वा सम्प्रत्यपि हवींषि होतव्यानि राक्षसेभ्यः रक्षतं विधिनिमन्त्रणेति प्रार्थनायां लोट् डुलिहोमेदने तामविति तस् ॥२७॥ भ०

तानित्यादि। अथैतस्मिन् प्रस्तावे राघवोऽपि रघुसुतः तान्मुनीन् प्रत्यवादीत वदव्रजेति वृद्धिः यथेप्सितं यथाभिमतम् आप्नोतेः आप्ज्ञप्यधामीदितीत्त्वम् अभ्यासलोपश्च सनन्तात्कर्मणि निष्ठा। धर्मादनपेते धर्म्यं यागादि कर्म प्रस्तुत प्रारभध्वम् प्रपूर्वस्तौतिः प्रारम्भे वर्त्तते तस्माद्विमन्त्रणे नियोगकरणे लोट् थस्य तः शपोलुक् तपांसि मरुत इव तपोमरुद्भिः भवतान्तपोमरुद्भिः नोऽस्माकं बहुवचनस्य वस्नसाविति नसादेशः शराग्निः शरोऽग्निरिव संधुक्ष्यतां दीप्यतां धुक्षधिक्षसन्दीपनक्लेदनजीवनेषु तस्मात् कर्मणि लोट् अरिसमिन्धनेषु अरिकाष्ठेषु समिध्यते एभिरिति समिन्धनानि करणे ल्युट् अरयः समिन्धनानीव ॥ २८॥ज०म०

प्रतुष्टुवुः कर्म्म ततः प्रक्लृप्तैस्ते यज्ञियैर्द्रव्यगणैर्यथावत् ।
दक्षिण्यदिष्टां कृतमार्त्त्विजीनैस्तद्यातुधानैश्चिचिते प्रसर्पत् २८

तानित्यादि । अथ तद्वचनानन्तरं रघोरपत्यं रामोऽपि तान् प्रत्यवादीत् प्रत्युक्तवान् वदेर्ण्यौ सौ व्रजवदेति वृद्धिः यूयं यथेप्सितं धर्माद्दनपेतं कर्म प्रस्तुत आरभध्वं विधिनिमन्त्रणेति विधौ गौ लुगङ्गोऽप इत्यदादित्वात् शपोलुक् आप्लृ लम्भने व्याप्तौ किव्याप्तौ सनि प्रपत्र्योसामीर्यं इतीखिलोपौ भवतां तपोवायुभिर्नोऽस्माकं शराग्निः अरिसमिन्धनेषु शत्रु-काष्ठेषु इंधुच्यतां धुच्ङ् सन्दीपने समर्थनाग्निषोर्गोति आशिषि कर्मणि गौ तपांसि मरुत इव शरोऽग्निरिव अरयः समिन्धनानीव इति व्याघ्राद्यैस्तद्गणस्तुत्यस्येति समास इति क्रमदीश्वरादयः स्वमते इवादेर्द्योतकत्वात् एकार्थताऽस्त्येव अविशेषणत्वाखदो बहुत्वमेकत्वद्वित्व-योर्विकल्पेनेति पाणिन्यादयः स्वमते कद्वयात्नेकद्विबहुष्वेकश इति सूत्रे एकद्विबहुत्वं विवक्षया साक्षात्सम्बन्धेन परम्परासम्बन्धेन वेति व्याख्यानादत्रात्मगुणानां बहुत्वेनैव बहुजनसाध्यकार्य्यकारित्वात् द्वित्वे बहुत्वम् ॥ २८ ॥ भ०

प्रतित्यादि । ततो रामवचनादनन्तरन्तपोधनाः कर्म यागक्रियाप्रतुष्टुवुः यथावत् यथाविधि प्रारब्धवन्तः यज्ञियैः यज्ञकर्मार्हैः द्रव्यगणैः प्रक्लृप्तैः मिलितैः क्लृपो रो लः दक्षिणामर्हन्तीति दक्षिण्याः महामुनयः कडङ्करदक्षिणाच्छ चेति चकाराद्यत् तैर्दिष्टमुक्तम् कृतमार्त्त्विजीनैः ऋत्विक्कर्मार्हैरनुष्ठितम् ऋत्विजश्च ब्रह्मादयः षोडश पठिताः तच्च कर्म प्रसर्पत् प्रविशच्छत् यातुधानै राक्षसैः चिचिते ज्ञातम् चितीसंज्ञाने इत्यस्मात् कर्मणि लिट् । यज्ञियैरार्त्त्विजीनैरिति यज्ञर्त्विग्भ्यां घखञाविति तत् कर्मार्हतीति ॥ २९ ॥ ज० म०

प्रतुष्टुवुरित्यादि । ततो रामवचनानन्तरं ते मुनयो द्रव्यगणैः स्रुवादिभिः करणभूतैर्यथाविधि यागकर्म प्रतुष्टुवुः आरब्धवन्तः । किम्भूतैः प्रक्लृप्तैर्विरचितैः क्लृपः क्लृपोऽक्लृपादाविति क्लृपादेशः यज्ञियैः यज्ञैः स्वपरचलपयतेति नञ् जिनिषेधश्च यज्ञाय साधवो यज्ञिया ढषेकादिति

आपिङ्गरुचोर्द्ध्वशिरस्यबालैः शिरालजङ्घैर्गिरिकूटदघ्नैः।
ततः चपाटैः पृथुपिङ्गलाक्षैः खं प्रावृषेण्यैरिव चानशेऽब्दैः ३०

इयः तत् कर्म यातुधानैराक्षसैश्चिचिते व्याप्तं चिञ् संज्ञाने कर्मणि ठी। कीदृशं दक्षिण्यदिष्ट' दक्षिणामर्हन्ति ढषेकादिति ण्यः तस्यानित्त्वविवक्षया न वृद्धिः दक्षिणया ब्रह्मत्वेनारोपिता मुनयः तैर्दिष्टम् आर्त्विजीनैः ऋत्विक्कर्माहैः कृतम्। ऋतौ यजतीति क्विप् यहस्यपेति जिः ऋत्विजः कर्म आर्त्विजं कर्मार्थे विकारसंघेत्यादिना षणः तदर्हतीति ढषेकादित्यादिना खीनः ऋत्विक्शब्दात् स्वार्थे खीनो वा प्रसर्पदृद्धिं गच्छत्॥ २६॥ म०

आपिङ्गेत्यादि। ततः कर्मप्रवर्त्तनादनन्तरम् चपाटैः निशाचरैः अटन्तीत्यटाः पचाद्यच् चपायामटा इति सप्तमीति योगविभागात् समासः खमाकाशमानशे व्याप्तम् अश्नोतेः कर्मणि लिट् अश्नोतेश्चेति नुट्। शिरसि जाताः शिरस्याः शरीरावयवाद्यत् आपिङ्गा आ समन्तात् पिङ्गा विद्युदिव रुचाः सूक्ष्माः ऊर्द्ध्व शिरस्या बाला येषां तैः। अन्योऽपि शिरस्यो भवति इति बालग्रहणम् अमङ्गलबाला इत्यर्थः। शिराः सन्ति यासामिति प्राणिस्थादातोलजन्यतरस्यामिति लच् शिराला जङ्घा येषां तैः गिरिकूटदघ्नैर्गिरिकूटप्रमाणैः प्रमाणे द्वयसज्दघ्नञ्। पृथूनि विस्तीर्णानि पिङ्गलानि चाक्षीणि येषान्तैः। बहुव्रीहौ सक्थ्यक्ष्णोरिति षच्। प्रावृषेण्यैरिति प्रावृष एण्यः अब्दैमेघैः कृष्णसाधर्म्यात्। अपो ददतीति अब्दाः चकारः पादपूरणार्थः॥ ३०॥ ज० म०

आपिङ्गेति। ततस्तज्ज्ञानानन्तरं चपाटै राक्षसैः खम् आकाशम् आनशे व्याप्तम् अशूङ्व्याप्तिसंहत्योः कर्मणि ठी स्थान्तादिति खेरान्। कीदृशैः आपिङ्गा ईषत्कपिला रुचा ऊर्द्ध्वाः शिरस्याः शिरसि भवाः केशा येषां शिरस्यग्रहणं श्रवणकुण्डलादिवत् तद्वाहङ्गिप्रतिपत्त्यर्थं शिरस्यबलैरिति क्वचित् पाठः शिरा नाड़ी तया व्याप्ता जङ्घा येषां शिरःशब्दात् गोत्वणमेधेत्यादिना चूड़ादित्वाल्लः। गिरिकूटदघ्नैः गिरि

**अधिज्यचापः स्थिरबाहुमुष्टिरुदञ्चिताक्षोऽञ्चितदक्षिणोरुः ।**
**तान् लक्ष्मणः सन्नतवामजङ्घो जघान शुद्धेषुरमन्दकर्षी ॥ २१ ॥**
**गाधेयदिष्टं विरसं रसन्तं रामोऽपि मायाचणमस्त्रचुञ्चुः ।**

स्तङ्गप्रमाणैः दघ्नमात्रद्वयसज्मात्रे इति दघ्नः पृथूनि पिङ्गलानि च अक्षीणि येषां सक्थ्यक्ष्णः स्वाङ्गे इति बहुव्रीहौ षः प्रावृषेण्यैर्वर्षाकालीनैः अब्दैर्मेघैरिव प्रावृष एण्यो भवार्थे अभिधानात् अपो ददातीत्यब्दः आदन्तात् हनजनादिति डः न केवलं चिचिते चानशे च इति चार्थः । पादपूरणे चेति केचित् ॥ २० ॥ भ०

अधीत्यादि । तान् क्षपाटान् गगनस्थान् लक्ष्मणो जघान हतवान् कीदृशः अधिज्यचापः अध्यारूढा उत्कलिता ज्या गुणो यस्य चापस्य तदधिज्यम् प्रादिभ्यो धातुजस्येति समासः अधिज्यं चापो यस्य लक्ष्मणस्य । स्थिरो निश्चलो बाहुर्मुष्टिश्च यस्य । उदञ्चिते उत्क्षिप्ते अक्षिणी येन स उदञ्चिताक्षः आकाशस्थापितदृष्टिरित्यर्थः । अञ्चितः सङ्कोचितो दक्षिणोरुर्येन सोऽञ्चितदक्षिणोरुः अञ्चेः पूजायामितीटोऽनुत्पन्नत्वात् ण्यन्तस्य रूपम्, न चात्र पूजा गम्यते किन्तु गतिविशेष एव अनुषङ्गलोपोऽपि न भवति णिलोपस्य स्थानिवद्भावात् । समन्तात् नता वामजङ्घा यस्य स सन्नतवामजङ्घः । शुद्धेषुः निशितबाणः अमन्दमत्यन्तं क्रष्टुं शीलमस्यासावमन्दकर्षी कर्णान्ताकृष्टचाप इत्यर्थः ॥ २१ ॥ ज० म०

अधिज्येत्यादि । लक्ष्मणस्तान् राक्षसान् जघान । कीदृशः अधिरूढा ज्या गुणो यत्र तादृशश्चापो यस्य । स्थिरो निश्चलो दृढो वा बाहुमुष्टिर्यस्य स लक्ष्मणः दर्शनार्थम् उदञ्चिते ऊर्द्ध्वमुखार्पिते अक्षिणी येन आकाशक्षिप्तदृष्टिरित्यर्थः । अञ्चितः सङ्कुचितो दक्षिणोरुर्येन णेर्लोपेऽपि स्थानिवद्भावात् नाञ्चेर्न लोपः सन्नता वामजङ्घा यस्य शुद्धो निशित इषुर्यस्य अमन्दं यथा स्यात्तथा धनुः कर्षतीति ग्रहादित्वात् णिनि कर्ष्टुं शीलमस्येति परे ॥ २१ ॥ भ०

गाधेयेत्यादि । गाधेरपत्यङ्गाधेयो विश्वामित्रः ढ्वच इत्यनुवर्त्तमाने

स्थास्नुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम् ॥२२

आत्मम्भरिस्त्वं पिशितैर्नराणां

फलेग्रहान् हंसि वनस्पतीनाम् ।

शौवस्तिकत्वं विभवा न येषां

व्रजन्ति तेषां दयसे न कस्मात् ॥ २३ ॥

इतश्चानिञ इति ढक् तेन दिष्टङ्कथितं मारीचं नाम राक्षसं रामो जगाद गदितवान् रसन्तं वदन्तं विरसमश्राव्यमिति क्रियाविशेषणम् मायाचणम्मायया वित्तम् अस्त्रचुञ्चुः अस्त्रैः प्रतीतो रामः तेन वित्तश्चुञ्चुचणपाविति । स्थास्नुं रणे स्थितिशीलं तस्य सेनापतित्वात् स्मेरमुखः चित्तस्याक्षोभादीषद्धसनशीलवदनः नमिकम्पीत्यादिना रः । उच्चैस्तराञ्जगादेति क्रियाविशेषणम् वचनं वक्ष्यमाणम्महार्थम्प्रधानं ब्रुविशासीत्यत ब्रुवीत्यर्थग्रहणात् द्विकर्मकता मारीचं वचनञ्च ॥२२॥ ज०म०

गाधेयेत्यादि । रामः अपिशब्दात् लक्ष्मणोऽपि महार्थमुच्चैर्वचनं मारीचं जगाद । याच्ञार्थदुहेति सूत्रे ब्रुवीत्यर्थस्य ग्रहणं तेन द्विकर्मकत्वं पचादित्वाद्वा । कीदृशं मारीचं गाधेयेन विश्वामित्रेण दिष्टं कथितं गाधेरपत्यार्थे वाह्वाद्यत इत्यनेन अत्यादित्वात् ण्येयः । विरसं कठोरं यथा स्यात्तथा रसन्तं शब्दायमानं मायया ख्यातं मायाचणं वित्ते चुञ्चुचणाविति चणः । रणे स्थास्नुं स्थितिशीलं ग्लाजिस्थश्च इति स्नुः । रामः कीदृशः अस्त्रचुञ्चुः अस्त्रेण ख्यातः स्मेरमीषद्धसनशीलं मुखमस्य हिंसदीपकम्पेति रः ॥ २२ ॥ भ०

आत्मेत्यादि । नराणां पिशितैर्मांसैः आत्मानं बिभर्षि पुष्णासि नान्यदपि शरीरस्थितिहेतुर्भवतीति भावः । स त्वमात्मम्भरिः आत्मभरणाय फलानि गृह्णन्ति ये वनस्पतीनां तान् फलेग्रहीन् फलाशिनो मुनीन् हंसि मारयसि शपो लुक् फलेग्रहिरात्मम्भरिश्चेति निपातितौ । श्वोभवितारः शौवस्तिकाः श्वसस्तुट्चेति ठञ् तुडागमश्च । द्वारादित्वादैजागमः शौवस्तिकत्वं तद्येषां विभवा न व्रजन्ति तेषामश्वस्तनिकद्धनीनां कस्मान्न दयसे न रक्षसि अधीगर्थदयेशामिति कर्मणि षष्ठी ॥२३॥ ज०म०

अद्मो द्विजान् देवयजीन्निहन्मः कुर्मः पुरं प्रेतनराधिवासम् ।
धर्मो ह्ययं दाशरथे निजो नो नैवाध्यकारिष्महि वेदवृत्ते ॥२४

आत्मम्भरिरित्यादि । त्वं वनस्पतीनां फलेग्रहीन् मुनीन् हंसि फलानि गृह्णन्ति तन्मात्रभोजित्वेन स्वीकुर्वन्तीति सञ्ज्ञत्स्तम्भादित्यादिना इप्रत्ययः । फले इति सूत्रे निर्देशादेत्वं वनस्पतीनां मध्ये फलेग्रहीन् मुनीन् हंसि उन्मूलयसीति केचित् । त्वं कीदृशः नराणां पिशितैर्मांसैरात्मम्भरिः आत्मानमेव बिभर्त्तीति कुच्यात्मोदराङ्गः खिरिति खिः खित्यव्यजेति मनुं येषां विभवाः सम्पदः शौवस्तिकत्वं भाविदिनस्थितत्वं न व्रजन्ति तेषां कस्मान्न दयसे समार्थेनेति कर्मणि षी श्वोभवः शौवस्तिकः श्वसोभवार्थेति कस्वभिधानात् कणि मनीषादित्वात् त्यागमः द्वारस्वरेति उम् णित्तेत्रिरिति त्रिः तलौ भावे इति त्वं देवीदासचक्रवर्त्ती तु श्वस्तेकते श्वस्तिकः तिकज् गत्यां इजुडत्वात् कृगृह्यापीति कः ततः स्वार्थे ष्णः अन्यत् पूर्ववदित्याह ॥ २२ ॥

अद्म इत्यादि । राक्षसः माह द्विजान् ब्राह्मणक्षत्रियवैश्यान् अद्मो भक्षयामः देवयजीन् देवान् यजन्ति आराधयन्ति ये तान्निहन्मः अच इरित्यनुवर्त्तमाने खनीत्यादिषूह्यमानेष्वौणादिकेषु सूत्रेषु यद्यपि यजिर्न पठितस्तथापि नायजेरिः प्रकृतेश्च तदूह्यमिति वचनात् । जासिनिप्रहणेत्यत्र सङ्घातविग्रहीतविपर्य्यस्तग्रहणात् षष्ठी प्राप्तापि न भवति कर्मणः शेषत्वेनाविवक्षितत्वात् पुरन्नगरम्प्रेतनराणाम्प्रेतनराणाम् अधिवासमवस्थानं कुर्मः नित्यहननेन श्मशानतुल्यम् इत्यर्थः । कस्मादेवमित्याह धर्म इति दशरथस्यापत्यं दाशरथिः अत इञ् हे दाशरथे ! हि यस्मादर्थे वर्त्तते यस्मादयं धर्मः आचारः निजो नित्यः न इक्ष्वाकं वेदविरुद्ध इति चेत् नैवाध्यकारिष्महि वेदवृत्ते वेदविहितं वृत्तमिति मध्यमपदलोपी समासः । यद्ब्राह्मणानाम् उक्तमनुष्ठानन्तत्र वयं नैवाधिकृता इत्यर्थः । अधिपूर्वात् करोतेः कर्मणि लुङ् स्यसिजित्यादिना चिण्वदिट् ॥ २४ ॥ ज० म०

अद्म इत्यादि । पूर्वापरपरामर्शान्मारीचप्रत्युत्तरमिदं वयं द्विजान्

धर्मोऽस्ति सत्यं तव राक्षसायमन्यो व्यतिस्ते तु ममापि धर्मः ।
ब्रह्मद्विषस्ते प्रणिहन्मि येन राजन्यवृत्तिर्धृतकार्मुकेषुः ॥२५॥

अस्मः भक्षयामः देवयजीन् देवपूजकान् निहन्मः । यहेरिमोर्णोऽर्थां प्रजेर्वंदेरित्यादिनिर्देशात् सर्वधातुभ्य इमत्ययः स्यादिति सूचितं तेन यजिरिति सिद्धं वातप्रमीवत् दीर्घान्तोऽयमित्येके । पुरं स्मृतमनुष्याधिवासं श्मशानतुल्यं कुर्मः कुरुव्वोपोब्मो इति कञ उपो जोपः कञोऽद्वनौरे इत्युकारः हे दाशरथे ! हि यस्मात् अयमेव अस्माकं निजो नित्यो धर्मः स्वभाव आचारो वा । धर्म्माः पुण्ययमन्यायस्वभावाचारसोमपा इत्यमरः वेदवृत्ते वेदविहिते कर्मणि नैव अध्यकारिष्महि वयं नाधिकृताः विधात्रा इत्यर्थः । कर्मणि टी हनपहद्दश च इति मिण् ॥ २४ ॥ भ०

धर्म इत्यादि । रामः प्राह हे राक्षस ! रक्ष एव राक्षसः प्रज्ञादित्वादण् स्वार्थिका अतिवर्त्तन्त इति पुंलिङ्गता तवायं पूर्वोक्तः पराभिद्रोहलक्षणो धर्मोऽस्तीति सत्यमेतत् किन्तु ममापि रामस्य अन्यो धर्मोऽशिष्टनिग्रहलक्षणो व्यतिस्ते व्यतिभवते इदमुक्तं भवति यद्यप्येवंप्रकारस्त्वद्धर्मो भविष्यति तथापीदानीमेव या तद्धर्मेण विद्यमानतया निष्पाद्या सा अस्मद्धर्मेणैव निष्पादकत्वेन व्यतिस्ते । ततश्चान्यसम्बन्धिनीं क्रियामन्यः करोति इतरसम्बन्धिनीमितरः इति धर्मव्यतीहारसम्भवात् अस्तेः कर्मव्यतीहारे तङ् । तथाहि यो यदवसरे यां काञ्चित् क्रियां करोति स तत्क्रियाकारीत्युपचारात् लोक उच्यते । येन धर्मेण हेतुना ब्रह्मद्विषस्ते प्रणिहन्मि मारयामि स व्यतिस्ते इति योज्यम् । नेर्गदेत्यादिना णत्वम्, जासिनीत्यादिना कर्मणि षष्ठी । तथा कथं तव धर्म इति चेदाह राजन्यवृत्तिरिति क्षत्रियवृत्तिः ततो राज्ञोऽपत्यम् राजश्वशुराद्यत् ये चेति प्रकृतिभावः । धृतं कार्मुकम् इषवश्च येन सः यतः अहं राजन्यवृत्तिः ततोऽहं धृतकार्मुकेषुरिति धृतकार्मुकेष्विति पाठान्तरम् क राजन्यवृत्तिः सायुधेष्वित्यर्थः ॥ २५ ॥ ज० म०

धर्म इत्यादि । रामवाक्यमिदं हे राक्षस ! तव अयं धर्मोऽस्तीति

इत्थं प्रवादं युधि संप्रहारं प्रचक्रतू रामनिशाविहारी ।
तृणाय मत्वा रघुनन्दनोऽथ बाणेन रक्षः प्रधनान्निरास्थत् २६

सत्यं रक्षःशब्दात् विकारसंघेत्यादिना स्वार्थे ष्णः तं लोकमित्युदाहरणेन स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति सूचितं तेन पुंस्त्वम् किन्तु ममापि अन्यो धर्मो व्यतिस्ते असतेर्व्यतीहारे गतिहिंसेति सं लोपोऽस्त्यसोरित्यकारलोपः यथा तव हिंसारूपो धर्मोऽस्ति तथा मम हिंसकहिंसाकारित्वरूपो धर्मोऽस्ति इत्यर्थः धर्मं प्रकाशयति येन धर्मेण हेतुना ब्रह्मद्विषस्ते तव प्रणिहन्मि कर्मणि षौ प्राग्वत्तो ण इति णत्वम् । कुतस्तेऽयं धर्म इत्याह यतो राजन्यानां वृत्तिः धृतं कार्मुकमिषुश्च यत्र तथा भवति क्षत्रियाणां धनुर्बाणधारित्वं हिंसनाशार्थमेव राजन्येति मनुवर्जानित्यादिना नलोपनिषेधः ॥ २५ ॥ भ०

इत्थमित्यादि । इत्थम् अनेन प्रकारेण प्रवादो अन्योन्याभिघातो यत्र सम्प्रहारे तं सम्प्रहारम्परस्पराभिभवलक्षणम्प्रकृतवन्तौ युधि रणभूमौ युध्यन्ते अस्यामिति सम्पदादित्वादधिकरणे क्विप् रामनिशाविहारौ रामो निशाविहारो निशाचरो मारीचश्चेत्यर्थः निशायां विहारो यस्येति समासः अथानन्तरं रघुनन्दनो रघुवंशस्य नन्दयिता रामो मारीचं बाणेन तत्सम्बन्धिनि सत्यपि तृणाय मत्वा तृणमपि नावमत्य मन्यकर्मण्यनादर इति चतुर्थी तत्र प्रकृष्टकुत्सितग्रहणङ्कर्त्तव्यम् इह माभूत् तृणम्मत्वेति प्रधनात् संग्रामात् निरास्थत् अपनीतवान् ॥ २६ ॥ ज० म०

इत्थमित्यादि । उक्तप्रकारं प्रवादं तदनन्तरं युधि युद्धे संप्रहारं रामनिशाविहारौ प्रचक्रतुः निशायां विहारोऽस्येति निशाविहारो मारीचः सम्यक् प्रहारो यस्मात् इति संप्रहारं प्रवादविशेषणमित्येके अथ रघुनन्दनो राक्षसं मारीचं तृणाय मत्वा बाणेन प्रधनात् युद्धात् निरास्थत् गत्यर्थमन्यद्वे इति चौ तृणोपमानेनैवावज्ञा गम्यतेते न तृणादेव चतुर्थी ॥ २६ ॥ भ०

जग्मुः प्रसादं द्विजमानसानि द्यौर्वर्षुका पुष्पचयं बभूव।
निर्व्याजमिज्या ववृते वचश्च भूयो बभाषे मुनिना कुमारः ॥२७
महीय्यमाना भवतातिमात्रं सुराध्वरे घस्मरजित्वरेण।
दिवोऽपि वज्रायुधभूषणाया ह्रिणीयते वीरवती न भूमिः २८

जग्मुरित्यादि। यागविघ्नकारिषु निरस्तेषु द्विजानां मानसानि मनांस्येव मानसानि प्रज्ञादित्वादण् प्रसादम् अव्याकुलत्वं जग्मुः गतानि गमहनेत्युपधालोपः द्यौः पुष्पचयं वर्षुका वर्षणशीला बभूव भवति स्म लषपतपदेत्यादिना उकञ् नलोकेति षष्ठीप्रतिषेधः। निर्व्याजं निर्विघ्नं इज्या यागः व्रजयजोर्भावे क्यप् ववृते वृत्तः लिट् भूयः पुनरपि मुनिना गाधेयेन कुमारः रामः अकृतदारकर्मत्वात् वचो वक्ष्यमाणम्बभाषे कर्मणि लिट् ब्रुवीत्यर्थग्रहणात् द्विकर्मकता वचः कुमारस्य ॥२७॥ ज० म०

जग्मुरित्यादि। शत्रुवधात् द्विजानां मानसानि प्रसादम् अव्याकुलत्वं जग्मुः हनगमित्युङ्लोपः द्यौः स्वर्गः पुष्पस्य चयं समूहं वर्षुका बभूव वर्षतीति वर्षुका वृषेः लषपताभूकमगमेति उकः ढषेञतीति स्तुते उकवर्जनात् न कर्मणि षष्ठी। निर्व्याजं निर्विघ्नं यथा स्यात्तथा मुनीनां इज्या यज्ञो ववृते निष्पन्ना यजेः शीव्रजेति क्यप् स्त्रियां मुनिना विश्वामित्रेण कुमारो रामः भूयः पुनरपि बभाषे ब्रुवीत्यर्थात् द्विकर्मकत्वं कुमारत्कर्के तौ पचादित्वादन् कुमारो बालके स्कन्दे युवराजेऽश्ववारके इति विश्वः ॥ २७ ॥ भ०

महीत्यादि। भवता भूमिः पृथिवी महीय्यमाना पूज्यमाना अतिमात्रं सुष्ठु सम्यक् पालनाद्दिवोऽपि स्वर्गस्य न ह्रिणीयते न लज्जते किन्तु प्रतिस्पर्द्धते इति भावः ह्रिणो महीङिति कण्ड्वादिपाठाद्यक् ङित्वात्तङ् अवयवे कृतं लिङ्गं समुदायस्य विशेषकम्भवतीति महीयशब्दात् कर्मणि लकारः शानच् यक् अतो लोपः मुक् महीय्यमानेति रूपं सुराध्वरे सुरानुद्दिश्य योऽध्वरो यज्ञः क्रियते तत्र ये घस्मराः अदनशीलाः राक्षसाः सृघस्यदः क्मरच् तेषाञ्जित्वरेण जयशीलेन भवता

बलिर्बबन्धे जलधिर्ममन्थे
जह्रेऽमृतं दैत्यकुलं विजिग्ये ।
कल्पान्तदुःस्था वसुधा तथोहे
येनैष भारोऽतिगुरुर्न तस्य ॥ ३९ ॥

इण्नशजीत्यादिना करप् वज्रायुधभूषणायाः शक्र एवालङ्कारो यस्याः दिवः वीरवती त्वद्विधो वीरो यस्यामस्ति भावित ॥ ३८ ॥ ज० म०

महीय्येत्यादि । भूमिर्दिवोऽपि स्वर्गादपि न ह्रिणीयते न लज्जते तामपि स्पर्द्धत इत्यर्थः यतो भवतातिमात्रम् अतिशयेन वीरवती प्रशस्तवीरान्विता अत एव लोकैर्महीय्यमाना पूज्यमाना महीङ् वृद्धिपूजनयोः ह्रिणीङ् लज्जायाम् आभ्यां कण्ड्वादित्वात् नमस्तपोवरिव इत्यादिना क्यः कीदृशेन भवता सुराध्वरे देवानां यज्ञे घस्मराणां बहुभक्षणशीलानां राक्षसानां जित्वरेण लब्धसौभञ्जे इत्यस्मात् घसस्दः क्मर इति क्मरः त्वरप् स्जीनेति जेः त्वरप् स्वस्य तन् पितीत्यनेन तन् दिवः कीदृश्याः वज्रमायुधमस्येति वज्रायुधः इन्द्रः स एव भूषणं यस्याः इन्द्रो यथा दिवः परिपालकस्तथा त्वं भूमेरिति भावः । आयुध्यतेऽनेनेति आयुधम् इगुपधात् कृगृज्ञाप्रीज्ञुङः इति कर्त्तरि विहितप्रत्ययः करणेऽपि बोध्यः । क्षत्रोः कभावे इत्युक्तेरन्यत्रापि प्रयोगत इत्युक्तेः ॥ ३८ ॥ म०

संक्षेपेण स्तुतिमाह बलिरित्यादि । येन भवता बलिर्बबन्धे बद्धः जलधिर्ममन्थे मथितः मन्दरं दोर्भिर्गृहीत्वा मन्थविलोडन इत्यस्य रूपम् संयोगान्तत्वाल्लिटोऽकित्वे अनुनासिकलोपो न भवति जह्रेऽमृतम् स्त्रीरूपधारिणा दैत्यबलं विजिग्ये विजितमनेकधा संलिटोर्जेरिति कुत्वम् एरनेकाच इति यणादेशः तथा कल्पान्ते प्रलये दुःस्था दुःस्थिता वसुधा पृथिवी ऊहे उद्धृता वराहरूपिणा वहेर्यजादित्वात् सम्प्रसारणम् तस्य भवत एष भारो मुनिजनरक्षणम् अतिगुरुर्न भवति सर्वत्र कर्मणि लिट् ॥ ३९ ॥ ज० म०

बलिरित्यादि । येन भवता वामनावस्थायां बलिनामासुरो बबन्धे

इति ब्रुवाणो मधुरं हितञ्च
तमाञ्जिहन्मैथिलयज्ञभूमिम् ।
रामं मुनिः प्रीतमना मखान्ते
यशांसि राज्ञां निजिघृक्षयिष्यन् ॥ ४० ॥

मद्रः जलधिः समुद्रो ममन्थे मथितः मन्थेः स्वात्यपितृकिद्वेति किद्भावपक्षे उङो लोपाभावः स्त्रीरूपेण अनुरग्टहीतमन्वतं जह्रे हृतं दैत्यवंशो विजिग्ये विजितः जेर्गिः सन्योः गुध्वोरस्यचीति यत्वं कल्पान्ते प्रलयकाले दुःस्था जलप्लाविता वसुधा पृथिवी वराहरूपेण जह्रे उद्धृता सर्वत्र कर्मणि ठी वह्रेर्यजादित्वात् व्यघ्यह्रेति खेर्जिः ग्रहस्वपाद्योरिति प्रकृतेर्जिः दुःखेन तिष्ठतीति दुःस्था हनजनादिति डः खसयुक्तशसिविसर्गस्य श्रा लोपो मनीषादित्वात् तस्य भवत एष भारो मुनिरक्षणरूपो नातिगुरुर्भवति ॥ ३९ ॥ भ०

इतीत्यादि । इति यथोक्तप्रकारेण मधुरं श्रोत्रसुखं हितञ्च ब्रुवाणो अभिदधानः लक्षणहेत्वोरिति शानच् मुनिः प्रीतमनाः मखान्ते यज्ञावसाने तं रामं मैथिलस्य यज्ञभूमिम् आञ्जिहत् गमितवान् मिथिलानां राजेति जनपदशब्दात् क्षत्रियादञित्यत्र तस्य राजन्यपत्यवदित्यतिदेशादञ् अहिगतौ इदितो नुम् प्रयोजकव्यापारे णिच् लुङ् आट् चङि णिलोपः द्विर्वचनेऽचीति स्थानिवद्भावादजादेर्द्वितीयस्येति हिशब्दस्य द्विर्वचनम् नन्द्रा इति नकारस्य प्रतिषेधः अभ्यासकार्य्यम् आञ्जिहदिति रूपम् । राज्ञां यशांसि निजिघृक्षयिष्यन् निग्रहीतुमभिभवितुमेषयिष्यन् ग्रहेः सन् सनि ग्रहगुहोश्चेति इट्प्रतिषेधः द्विर्वचनादिः रुदविदेत्यादिना सनः कित्त्वम् ग्रहिज्येत्यादिना सम्प्रसारणम् ढत्वभष्भावौ गकारस्य घकारः कत्वषत्वे षस्यान्णिच् तदन्ताद्भविष्यत्सामान्यविवक्षायां लृट् तेन भविष्यदनद्यतने लुङ् न भवति ॥ ४० ॥ ज० म०

इतीत्यादि । उक्तप्रकारेण मधुरं हितं ब्रुवाणो मुनिः प्रीतमना मखस्य यज्ञस्यान्ते तं रामं मैथिलस्य जनकस्य यज्ञभूमिम् आञ्जिहत् प्रापयामास राज्ञां यशांसि निग्रहीतुम् अभिभवितुम् इच्छां कारयिष्यन्

**इतः स्म मित्रावरुणौ किमेतौ किमश्विनौ सोमरसं पिपासू।**
**जनं समस्तं जनकाश्रमस्थं रूपेण तावोजिहतां नृसिंहौ ॥ ४१॥**

राम एव प्रयोज्यकर्त्ता मिथिलाया राजा मैथिलः विकारसंघेति ण्णः ओहिङ् गतौ इदितो नुम् ञिः प्रेरणे ञिश्रीत्यङ् नाजन्तादेरिति खादौ नवद्रोऽये इति निषेधात् हिशब्दस्य द्वित्वं खेर्झभखयेति हस्य जः ञेर्लोपः यहेः सनि नेसुगुह इतीम्निषेधः यहस्वपेति ञिः होढः झभान्तखादिजवामिति घः षढो कः से इति ढस्य कः किलादिति षः सनयङन्तोद्विः खेराद्यचो लोपः झभखयेति खेर्घस्य जत्वम् ऋकारस्य अत्वञ्च ख्यस्येत्सनि ततो ञिः ततः स्तटः ॥ ४० ॥ भ०

इत इत्यादि। एतौ तत्रागतौ नृसिंहौ नरौ सिंहाविव जनकाश्रमस्थं जनं रूपेण स्वरूपतया औजिहतां वितर्कङ्कारितवन्तौ ऊह॰ वितर्के इत्यस्माद्धातोः ण्यन्तात् कर्त्तुः क्रियाफलाविवक्षायां णिचश्चेति तङ् न भवति चङि णिलोपस्य स्थानिवद्भावात् अजादेर्द्वितीयस्येति द्विर्वचनम्। ऊहमाह मित्रावरुणौ आदित्यवरुणौ देवताद्वन्द्वे इत्यानङ् तयोर्महानुभावत्वात् सोमरसम्पिपासू पातुमिच्छू न लोकेति षष्ठीप्रतिषेधः एतावागतौ आङ्पूर्वस्येणो निष्ठायां रूपं किमश्विनौ अश्विनीकुमारौ सोमरसम्पिपासू एताविति एवञ्जनम् औजिहतां सुशब्द इति पाठे एतौ सुमित्रेति पाठः एतौ स्म मित्रेति स्मशब्दो निपातः पादपूरणार्थः ॥ ४१ ॥ ज० म०

इत इत्यादि। तौ नृसिंहौ मनुष्यश्रेष्ठौ रामलक्ष्मणौ रूपेण सौन्दर्य्येण समस्तं जनकाश्रमस्थं जनम् औजिहतां वितर्कं कारितवन्तौ ऊहङ् वितर्के ञिः प्रेरणे ञिश्रीत्यङ् नाजन्तादेरिति निषेधात् हेर्द्वित्वं योजौञेरिति ज्ञानार्थत्वात् कर्त्तुः कर्मत्वम्। वितर्कमाह किमेतौ मित्रावरुणौ सूर्य्यवरुणौ सोमरसं पातुमिच्छावन्तौ इतःस्म अमुं देशं प्राप्तवन्तौ इण्गतौ की लोनातीते इति की किंवा एतौ अश्विनौ अश्विनीकुमारौ नासत्यदस्रौ नासत्यश्चैव दस्रश्च स्मृतौ तौ नामतोऽश्विनाविति मार्कण्डेयपुराणम्। केचित्तु स्मशब्दः पादपूरणे इतोऽस्मिन् देशे एतौ

अजिग्रहत्तं जनको धनुस्तत् येनार्दिदद्दैत्यपुरं पिनाकी ।
जिज्ञासमानो बलमस्य बाह्वोर्हसन्नभाङ्क्षीद्रघुनन्दनस्तत् ॥४२

ततो नदीष्णान् पथिकान् गिरिज्ञा-
नाह्वाययकान् भूमिपतेरयोध्याम् ।

आगतो आङ्पूर्वादिणः क्त इत्याहुः । मितञ्च वरुणश्चेति द्वन्द्वे सह-चरितदेवताद्वन्द्वे पूर्वपदस्यादन्तता निपातनात् देवोदासचक्रवर्त्ती तु एका-दश इत्युदाहरता विश्वराजोऽदेत्यस्य योगविभागात् क्वचित् समासे पूर्वपदस्य दीर्घत्वं सूचितमित्याह ॥ ४१ ॥ म०

अजिग्रहदित्यादि । येन धनुषा दैत्यपुरं पिनाकी महादेव आर्दि-दत् हिंसितवान् अर्दैः स्वार्थिकण्यन्तात् चङि अजादेर्द्वितीयस्येति द्विशब्दो द्विरुच्यते रेफस्य प्रतिषेधः तद्धनुः तं रामं जनकः अजिग्रहत् बोधितवान् अनेन धनुषा त्रिपुरन्दग्धमिति ग्रहेर्हेतुमण्ण्यन्ताच्चङि णिलोपः णौ चङि ह्रस्वः सन्वद्भावादित्वम् ग्रहेश्च बुद्ध्यर्थत्वात् गतिबुद्धी-त्यादिना रामस्य कर्मसंज्ञा । अस्य रामस्य बाह्वोर्भुजयोर्बलञ्जिज्ञासमानो जनकः एवम्भूतन्धनुः हसन् स्मयमानो रघुनन्दनो रामः अभाङ्क्षीत् भग्नवान् भञ्जेर्लुङि सिचि हलन्तलक्षणा वृद्धिः तत्र हि हल्ग्रहणं समुदायप्रतिपत्त्यर्थमित्युक्तम् ॥ ४२ ॥ ज०म०

अजिग्रहदित्यादि । जनको राजा तं रामं तद्धनुरजिग्रहत् ग्राह-यामास धातूनामनेकार्थत्वात् ग्रहिरत्र ज्ञानार्थ इत्यन्ये घोजौजेरिति प्रयोज्यकर्त्तुः कर्मत्वं अग्रङ्ग्रङः स्व इति ह्रस्वः स्वेः सन्वदिति सन्वत् येन धनुषा पिनाकी शिवो दैत्यानां पुरं त्रिपुरम् अर्दिदत् हतवान् अर्दक्-वधे स्यादौनवद्धोऽये इति निषेधात् देर्द्वित्वं केचित्तु धनुषा प्रयोज्यकर्त्रा घातयामास इत्यर्थमाहुः जनकः कीदृशः अस्य रामस्य बाह्वोर्बलं जि-ज्ञासमानः ज्ञातुमिच्छन् स्मृदृशमनुज्ञेति सनन्तज्ञो मं हसन् लीलयैव तद्धनुरभाङ्क्षीत् भन्जधौ मोटने ग्यां सिः अनिमत्वात् व्रजवदेति त्रिः ञ्ञङिति क्रुङ् ॥ ४२ ॥ भ०

तत इत्यादि । धनुर्भङ्गादनन्तरम्महानयमिति ज्ञात्वा जनकः सुतां

दित्सुः सुतां योधहरैस्तुरङ्गैः
व्यसर्जयन्मैथिलमर्त्यमुख्यः ॥ ४२ ॥

दुहितरं दित्सुः दातुमिच्छुः ददातेः सनि मीमेत्यादिना अच इस् द्विर्वचनम् अत्र लोप इत्यभ्यासलोपः सस्येति तत्वम् सनाशंसभिक्ष उः भूमिपतेर्दशरथस्य आह्वायकान् आह्वयन्ति आकारयन्तीति कर्त्तरि ण्वुल् आतो युक् कृत्ययोगे भूमिपतौ कर्मणि षष्ठी तान् अयोध्यां व्यसर्जयत् विसर्जितवान् विपूर्वस्य सृजेर्हेतुमण्ण्यन्तस्य लङि रूपं गत्यर्थत्वात् द्विकर्मकता । नद्यां स्नान्तीति नदीष्णाः सुपिस्थ इति योगविभागात् कः आतो लोपः निनदीभ्यां स्नातेरिति षत्वम् नदीन्तरीतुङ्कुशलान् इत्यर्थः । पथिकान् पथि कुशलान् तत्र कुशलः पथ इति ठक् गिरिज्ञान् यथाप्रदेशङ्गिरिज्ञान् इगुपधेत्यादिना कः तुरङ्गैः अश्वैः करणभूतैः युध्यन्त इति योधाः पचाद्यच् । तानाहर्त्तुं क्षमैः वयसि चेत्यच् । हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्नित्यौणादिकस्तन् । म्रियन्ते प्राणिनोऽस्मिन्निति मर्त्यो भूर्लोकः तत्र भवा मर्त्या मनुष्या दिगादेराकृतिगणत्वात् यत् आकृतिगणत्वस्य लिङ्गं देवमनुष्यपुरुषपुरुमर्त्येभ्य इति निर्देशः मुखमेव मुख्यः प्रधानम् शाखादिभ्यो यः । मर्त्यानाम्मुख्यो मर्त्यमुख्यः मैथिलश्चासौ मर्त्यमुख्यश्चेति विशेषणसमासः जनक इत्यर्थः ॥४२॥ ज० म०

तत इत्यादि । धनुर्भङ्गानन्तरं मिथिलासम्बन्धिमनुष्यश्रेष्ठो जनकः रामाय सुतां दित्सुर्दातुमिच्छुः सन् भूमिपतेर्दशरथस्य आह्वायकान् दूतान् तुरङ्गैरयोध्यां व्यसर्जयत् प्रेरयामास तुरङ्गैः कीदृशैः योधहरैः योधान् हर्त्तुं क्षमैः हृञः पचादित्वादच् वयोबोधकत्वहनार्थेऽनितिकमदीश्वरादयः एतेन शीघ्रगमनं दर्शितं शङ्कजहेत्यादिना तुरङ्गो निपातितः किम्भूतान् नदीष्णान् नदीसन्तरणकुशलान् नदीस्नातिनिस्नात्वो दोक्ष्ये इति रामानन्दकृतेन मनीषादित्वाद् वा षत्वं नदीष्णो नदीज्ञ इति पुरुषोत्तमः । पन्थानं गच्छति वेत्ति वा इति निपातनादकः ण्यान्तात् स्वार्थे को वा पथि कुशलः पथिक इति केचित् गिरिं जानन्तीति गिरिज्ञा हनजनादिति डः ॥ ४२ ॥ भ०

क्षिप्रं ततोऽध्वन्यतुरङ्गयायी
यविष्ठवद्वृद्धतमोऽपि राजा ।
आख्यायकेभ्यः श्रुतसूनुवृत्ति-
रग्लानयानो मिथिलामगच्छत् ॥ ४४ ॥

क्षिप्रमित्यादि । आख्यानि कथयन्ति ये ते आख्यायकास्तेभ्यः श्रुता सूनुवृत्तिर्येन स राजा दशरथः सूयत इति सूनुः पुत्रः दाभाभ्यां नुरिति वर्त्तमाने सुवः कित्येत्यौणादिको नुप्रत्ययः । ततोऽनन्तरमेव क्षिप्रं शीघ्रं स्फायितञ्चीत्यादिना रक् क्रियाविशेषणञ्चैतत् मिथिलामगच्छत् भरतशत्रुघ्नाभ्यां सहेत्यर्थादवगन्तव्यं गमेर्लङि इषुगमियमाञ्छः अध्वानम् अलङ्गामिनो ये तुरङ्गा अश्वाः ते अध्वन्याः अलङ्गामीत्यस्मिन्नर्थे अध्वनो यत्खाविति यत् ये चाभावकर्मणोरिति प्रकृतिभावः तैः साधु यातीति साधु कारिणि णिनिः अध्वन्यतुरङ्गयायी एवञ्च कृत्वा अग्लानयानः न विद्यते ग्लानं ग्लानिर्यस्मिन्याने तत् अग्लानम् अग्लानं यानं यस्य तादृशैस्तुरङ्गैः सुखयानः ग्लानेति भावे निष्ठा संयोगादेरात इति नत्वम् । वृद्धतमोऽपि यविष्ठवत् युवशब्दस्य इष्ठनि स्थूलदूरेत्यादिना यणादिपरलोपः पूर्वस्य च गुणः प्रशस्तेन तुल्यम् इति वतिः ॥ ४४ ॥ ज० म०

क्षिप्रमित्यादि । ततोऽनन्तरम् आख्यायकेभ्यः श्रुता सूनोः पुत्त्रस्य वृत्तिर्व्यवहारो येन स राजा दशरथः मिथिलां जनकपुरीं शीघ्रमगच्छत् कीदृशः अध्वन्यैस्तुरङ्गैर्यातीति ग्रहादित्वाणिन् शीलार्थे णिन्नित्येके आवश्यके णिन् इति केचित् अध्वानमत्यर्थं गच्छतीति णत्रः अनित्यविवक्षया न वृद्धिः ननु वर्जानवर्मेति नलोपाभावः अध्वनि कुशलोऽध्वन्यो वा वृद्धतम इति अयमेषामतिशयेन वृद्धोऽपि यविष्ठवत् प्रकृष्टयुववत् गुणाद्विष्ठे यस् इतीष्ठः बाढान्तिकेति यूनो यवादेशः जीमंसडिसैकाच इति डित्त्वात् टेर्लोपः । अग्लानमक्लिष्टं यानं यस्य ग्लैकान्तिसंचये क्तः यलयुक्तादन्तत्वात् सूल्वाद्योरिति क्तस्य नत्वम् ॥४४॥ भ०

वृन्दिष्ठमार्चीद्वसुधाधिपानां तं प्रेष्ठमेतं गुरुवद्गरिष्ठम्।
सदृङ्महान्तं सुकृताधिवासं वंहिष्ठकीर्त्तिं यशसा वरिष्ठम्॥४५
त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्रः।
विवेकदृश्वत्वमगात् सुराणां तं मैथिली वाक्यमिदं बभाषे ४६

वृन्दिष्ठमित्यादि। तं राजानमेतमायातञ्जनक आर्चीत् पूजितवान् अर्चेर्लुङि रूपम्। वृन्दिष्ठं वृन्दारकतमम्प्रशस्ततममित्यर्थः केषां वसुधाधिपानाम्पृथ्वीपतीनाम् प्रेष्ठम्प्रियतमम् गुरुवत् गुरुणा तुल्यं वर्त्तमानङ्गरिष्ठम् गुरुतमम् सदृक् समानान्ययोश्चेत्युपसङ्ख्यानाद्दृशेः क्विप् रूढ़िशब्दश्चायम् नात्र दर्शनक्रिया विद्यते। अभिजनादिभिस्तुल्यो जनक इत्यर्थः महान्तम् महानुभावसदृशमध्ये महान्तं सुकृताधिवासं सुकृतनिलयम् अधिवसत्यस्मिन्निति अधिकरणे घञ् वंहिष्ठा बहुलतमा कीर्त्तिर्यस्य स वंहिष्ठकीर्त्तिः यशसा वरिष्ठम्मुरुतमम्। अत्र वृन्दारकप्रियगुरुबहुलोरूणामिष्ठनि यथासङ्ख्यम्प्रियस्थिरेत्यादिना वृन्दप्रगरवंहवर इत्येते आदेशा भवन्ति॥ ४५॥ ज० म०

वृन्दिष्ठमित्यादि। अर्थात् जनकस्तमागतं दशरथम्आर्चीत् पूजितवान् किम्भूतं वसुधाधिपानां राज्ञां मध्ये वृन्दिष्ठं प्रशस्ततमं प्रेष्ठं प्रियतमं गुरुवत् उपदेष्टृवत् पितृवद्वा गरिष्ठं गुरुतमं महान्तं महाशयं सुकृतानि पुण्यानि अधिवसन्त्यस्मिन्निति आधारे घञ् यशसा वरिष्ठम् उरुतमं दृहत्तममित्यर्थः। जनकः कीदृशः सदृक् अर्थात् दशरथस्य समान इव दृश्यते योऽसाविति तदादिभवत् समानेति क्विप् समानेदमिति सादेशः सदृशानां महान्तमित्यन्ये वंहिष्ठा बहुतमा कीर्त्तिर्यस्य तथा वृन्दिष्ठादौ गुणाद्बेष्ठ्यसू इतीष्ठः वाढ़ान्तिकेत्यादिना वृन्दारकप्रियगुरुबहुलोरूणां वृन्दप्रगरवंहवरादेशः जीमंसेति डित्त्वात् टेर्लोपः प्रेष्टमित्यत्र एकाचत्वान्न डित्त्वम्॥ ४५॥ भ०

त्रिवर्गेत्यादि। तं दशरथम्मैथिलो जनकः वाक्यमिदम्बभाषे ब्रुवीत्यर्थग्रहणात् द्विकर्मकता किन्तद्वाक्यमित्याह असाविन्द्रो भवन्तम् एकासनमध्यासयन् आरोपयन् विवेकदृश्वत्वमगादिति सम्बन्धः आसनस्या-

हिरण्मयी साललतेव जङ्गमा
च्युता दिवः स्थास्नुरिवाचिरप्रभा ।
शशाङ्ककान्तेरधिदेवताकृतिः
सुता ददे तस्य सुताय मैथिली ॥ ४७ ॥

धिशीङित्यादिना अधिकरणे कर्मसंज्ञा भवन्तमिति गतिबुद्धीत्यादिना आस्तेरण्यन्तावस्थायामकर्मकत्वात् । पारङ्गमीत्यस्मिन्वाक्ये अवारपारेत्यादिना पारशब्दात् खः तत्र विगृहीतविपर्य्यस्तग्रहणात् त्रिवर्गस्य धर्मार्थकामस्य पारीणमिति षष्ठीसमासः त्रिवर्गपारीणम्भवन्तं सुराणां मध्ये स एवैको विवेकदृश्वत्वं विवेकज्ञतामगात् इणो गा लुङि गातिस्थेत्यादिना सिचो लुक् विवेकं दृष्टवानिति दृशेः क्वनिप् ॥ ४६ ॥ ज०म०

त्रिवर्गेत्यादि । मैथिलो जनकः तं दशरथम् इदं वाक्यं बभाषे ब्रुवीत्यर्थत्वात् द्विकर्मकता किन्तदित्याह भवन्तमेकमासनमध्यासयन्नुपवेशयन् इन्द्रः सुराणां विवेकदृश्वत्वं सदसद्विवेकज्ञत्वम् अगात् प्राप्तवान् कीदृशं त्रिवर्गस्य पारं गच्छतीति ढघेकादिति खीनः त्रिवर्गो धर्मकामार्थैरित्यमरः । असाविति बुद्धिस्थनिदर्शनं विवेकं दृष्टवानिति त्रासुसिति क्वनिप् भवन्तमिति अध्यासेः प्रागविवक्षितकर्मत्वादकर्मकत्वेन प्रयोज्यकर्त्तुः कर्मत्वम् आसनमिति कर्मक्रियेत्यादिना आधारस्य कर्मत्वम् ॥ ४६ ॥ भ०

हिरेत्यादि । तस्य दशरथस्य सुताय रामाय सूयत इति सुतः सुप्रसवैश्वर्य्ययोरित्यस्मात् कर्मणि निष्ठा सुता मैथिली सीता ददे जनकेनेत्यर्थात् कर्मणि लिट् मैथिलस्यापत्यम् अत इञ् तदन्तादितो मनुष्यजातेरिति ङीष् । रामस्य ज्येष्ठत्वात्तस्यैव कविना परिणय उक्तः न शेषाणाम् तेन अन्या अपि तदैव दुहितरो दत्ताः हिरण्मयी सुवर्णनिर्मितेव साललता दृक्षलता सुवर्णच्छवित्वात् तस्याः हिरण्यविकार इति मयटि दाण्डिनायनेत्यादिना यलोपनिपातनम् । जङ्गमा सञ्चारिणी न तु स्थावरा अत्यर्थङ्गच्छतीति यङि लुगत इति लुक् यङन्तात् पचाद्यचि यङोऽचि चेति यङो लुक् च्युता दिवः आकाशात्पतिता

लब्धां ततो विश्वजनीनवृत्तिस्तामात्मनीनामुदवोढ़ रामः ।
सद्रत्नमुक्ताफलभर्मभूषां संबंहयन्तीं रघुवंशलक्ष्मीम् ॥ ४८ ॥

अचिरप्रभेव विद्युदिव तेजस्वित्वात् इन्दीत्वाञ्च किन्तु स्थास्नुरचञ्चला सा तु चञ्चलेति व्यतिरेकः ऊङुत इति ऊङ् न भवति क्रियाशब्दत्वात् तत्र मनुष्यजातेरिति वर्त्तते शशाङ्ककान्तेर्याधिदेवता तस्या आकृतिर्यस्याः सौम्यत्वात् आक्रियते अनयेत्याकृतिः संस्थानम् अकर्त्तरि कारकेति स्त्रियां क्तिन् ॥ ४७ ॥ ज० म०

हिरण्मयीत्यादि । अर्थात् जनकेन तस्य दशरथस्य सुताय मैथिली सुता ददे मैथिलस्यापत्यं स्त्रीति यणः यद्वा मिथिलायां नगर्याम् अर्थात् मिथिलाख्यभूभागे जाता अयोनिसम्भवत्वात् पार्थिवीत्यर्थः अयोनिसम्भवत्वेन दिव्यत्वाल्लक्ष्मीत्वं सूचितं रामसमीपे सीता कीदृशी हिरण्मयी स्वर्णमयी सालवृक्षसम्बन्धिनी लतेव एतेन रामस्य सालवृक्षतुल्यत्वं सूचितं मयट् हिरण्यस्य यलोपो निपातनात् जङ्गमा सञ्चारिणी अन्या लता स्थिरेति विशेषः यद्यपि गत्यर्थाद्वक्रतायां यङ् स्यात्तथापि जङ्गमशब्दोऽयं रूढ़ः दिवसुरता अचिरप्रभा विद्युदिव स्थास्नुः स्थितिशीला विद्युच्चञ्चला इति विशेषः ग्लाजिस्थश्चेति स्नुः अतिसौम्यत्वात् चन्द्रकान्तेरधिदेवताया अधिष्ठातृदेवताया इवाकृतिर्यस्याः ॥ ४७ ॥ भ०

लब्धामित्यादि । ततो दानानन्तरं लब्धान्तामात्मनीनाम् आत्मने-हिताम् आत्मविश्वेति खः रामः उदवोढ़ वहेः स्वरितेत्त्वात् कर्त्तुः क्रियाफलविवक्षया तङ् विश्वजनीना विश्वजनाय हिता वृत्तिः प्रवृत्ति-र्यस्य रामस्य स पूर्ववत् खः सती उत्कृष्टा रत्नादिशोभा यस्याः तैरल-ङ्कृतत्वात् तां सद्रत्नमुक्ताफलभर्मशोभाम्भर्म स्वर्णं सर्वधातुभ्यो मनिन् भर्मभूषामिति पाठान्तरम् सद्रत्नादिभूषा अलङ्कारो यस्या इति योज्यं गुरोश्चहल इत्यकारः संबंहयन्तीं सम्बङ्कलामतिस्थिराङ्कुर्वाणाम् बङ्कलशब्दात्तत्करोतीति णिचि इष्ठवद्भावात् प्रियस्थिरेत्यादिना वंहादेशः पश्चात्तदन्तस्य सम्पूर्वस्य साधनेन योगः कामित्याह रघुवंशलक्ष्मीमिति

सुप्रातमासादितसम्मदं तद्वन्दारुभिः संस्तुतमभ्ययोध्यम्।
अश्वीयराजन्यकहास्तिकाढ्यमगात्सराजं बलमध्वनीनम्॥४९

रघुवंशे भवां विभूतिं वर्गान्ताच्चेत्यनुवृत्तौ अशब्दे यत् खावन्यतरस्या-मिति यत्॥४८॥ ज० म०

लक्ष्मीमित्यादि। ततोऽनन्तरम् आत्मने हितां लक्ष्मीं तां सीतां राम उद्वोढ उत्पूर्ववहः परिणये सहवहोऽदोढीति अत ओत्वं दन्त्य-वत्वात् भत्वाभावः विश्वेषां जनानां हिता वृत्तिर्व्यवहारो यस्य विकार॰ संघेत्यादिना हितार्थे ईनः मन्वर्जेत्यादिना आत्मनो नलोपाभावः। अलङ्कानि मुक्ताफलानि भर्माणि भूषा अलङ्कारो यस्याः शोभामिति पाठे तैः शोभते पचादित्वादन् सती वर्त्तमाना रत्नादीनां शोभा यत्रेति वा। हेम स्वर्णं जातरूपं सुवर्णं भर्म हाटकं शातकुम्भमिति हलायुधः रघुवंश्यलक्ष्मीं संवंहयन्तीं सम्यक् बहुलीकुर्वतीं लेः लत्याख्याने ज्ञिः वाढ़ान्तिकेति वंहादेशः॥ ४८॥ भ०

सुप्रातेति। विवाहं निर्वर्त्य प्रभाते अयोध्याभिमुखन्नृपलन्दश-रथस्यागात् गतवत्। सुप्रातन्निरुपद्रवत्वात् शोभनम्प्रातर्दिनमुखं यस्य बलस्य। सुप्रातसुश्वेत्यादिना समासान्तष्टिलोपस्य निपात्यते। आसा-दितसम्मदं प्राप्तहर्षं प्रमदसम्मदौ हर्ष इति निपातनम्। वन्दारुभिः संस्तुतं कृतस्तवम् अभ्ययोध्यम् अयोध्याभिमुखम् अभिप्रती आभिमुख्य इति अव्ययीभावः। अश्वानां समूहः अश्वीयं केशाश्वाभ्यां यञ्छाविति छः राजन्यानां क्षत्रियाणां समूहो राजन्यकम्। गोत्रोक्षेत्यादिना वुञ् प्रकृत्याकेराजन्यमनुष्ययुवान इति प्रकृतिभावादपत्ययकारलोपो न भवति। हस्तिनां समूहो हास्तिकम् अचित्तहस्तीति ठक्। एषां सेनाङ्गत्वात् द्वन्द्व एकवद्भावः तेनाढ्यमुपचितमिति तृतीयेति योगविभा-गात् समासः। सह राज्ञेति विग्रह्य साकल्यवचने यौगपद्ये वाव्ययी-भावः। अव्ययीभावे चाकाल इति सभावः अनश्चेति टच् समासान्तः। अध्वनीनमध्वानमलङ्गामीत्यध्वनो यत्खौ आत्माध्वानौ ख इति प्रकृति-भावः॥ ४९॥ ज० म०

विशङ्कटो वक्षसि बाणपाणिः सम्पन्नतालद्वयसः पुरस्तात् ।
भीष्मो धनुष्मानुपजान्वरत्निरैतिस्म रामं पथि जामदग्न्यः ॥५०

सुप्रातमित्यादि । तद्बलं दशरथसैन्यम् अभ्ययोध्यम् अयोध्यामभिमुखीकृत्य अगात् इणो गाङ्यां शोभनं प्रातर्यस्य तत् सुप्रातं निश्चिन्तत्वात् निपातनेन स्वार्थे ण्येन वा साध्यम् । आसादितः प्राप्तः सम्मदो हर्षो येन वन्दारुभिः स्तुतिपाठकैः संस्तुतं वदिङ् नुत्यभिवादयोः इत्यस्मात् आरुः अश्वराजन्यहस्तिनां समूहेन आढ्यं प्रभूतं विकारसंघेत्यादिना समूहार्थे अश्वादीयः राजन्यहस्तिभ्यां कण् राज्ञा सह विद्यमानं सराजं राजसहितम् अनवशिष्टं युगपद्वा इत्यर्थः । वःकसामीप्येति साकल्ये यौगपद्ये वा अव्ययीभावः अन इत्यनेनाप्रत्ययः । सह सोऽकाले इति सः अध्वानमनुगच्छति ढघेकादिति ढन् मन्वर्जानित्यादिना नलोपाभावः ॥ ४९ ॥ भ०

विशेत्यादि । एवमस्य गच्छतः पथि मार्गे सप्तम्यां भस्य टेर्लोपः पुरस्तादग्रतः अस्ताती चेति पूर्वस्य पुरादेशः । रामो जामदग्न्यः जमदग्नेरपत्यं रामोऽयम् गर्गादिपाठाद्यञ् स ऐति स्म आगतवान् आङ्पूर्वादिणो लट् एत्येधत्यूट्स्विति वृद्धिः । विशङ्कटो वक्षसि विशाल उरसि वेः शालच्छङ्कटचाविति शङ्कटच् । बाणः पाणावस्येति बाणपाणिः प्रहरणार्थेभ्य इत्यादिना सप्तम्यन्तस्य परनिपातः । सम्पन्नो निष्पन्नो यस्तालद्वयः स प्रमाणं यस्य स तथोक्तः प्रमाणे द्वयसच् । भीयते अस्मादिति भीष्मः भियः षुग्वेति औणादिको मक्प्रत्ययः वा षुगागमस्य । भीमादयोऽपादान इत्यपादाने साधुः । धनुष्मान् धनुषा युक्तः संसर्गे मतुप् । जानुनोः समीपमुपजानु सामीप्येऽव्ययीभावः उपजानु अरत्निर्यस्य स तथोक्तः प्रलम्बबाहुरित्यर्थः ॥ ५० ॥ ज० म०

विशङ्कट इत्यादि । अथ जामदग्न्यः परशुरामः पुरस्तात् पूर्वस्यां दिशि अग्रतो वा पथि रामम् ऐति स्म आगतः जमदग्नेरपत्यमिति गर्गादित्वात् यञ् पुरस्तादिति दिक्शब्दाद्दिग्देशकालेष्वस्तातिरिति अस्ताति पूर्वाधरावरा इति पुरादेशः । वक्षसि विशङ्कटो विशालः बाणः पाणौ

**उच्चैरसौ राघवमाह्वतेदं धनुः सबाणं कुरु मातियासीः ।**
**पराक्रमज्ञः प्रियसन्ततिस्तं नम्रः क्षितीन्द्रोऽनुनिनीषुरूचे ॥५१**

यस्य बाणयुतः पाणिर्यस्येति वा । सम्पन्नो विशालो यस्तालवृत्तः स परिमाणं यस्य दघ्नमात्रद्वयसच्प्रमाणे इति द्वयसः बिभेत्यस्माद् भीष्मो निपातनात् । धनुष्मान् प्रशस्तधनुर्युक्तः मतुरस्त्यर्थे जानुनोः समीपमुपजानु तत्रारत्निर्यस्य दीर्घबाहुत्वात् अरत्निस्तु निष्कनिष्ठेन मुष्टिना इत्यमरः । रत्न्यरत्नी स्त्रियौ हस्तौ बद्धमुष्टिततांगुली इत्यमरमाला ॥ ५० ॥ भ०

उच्चैरित्यादि । उच्चैर्महता ध्वनिना राघवन्दाशरथिम् एवं वक्ष्यमाणमाह्वत आहूतवान् स्पर्द्धायामाङ इत्यात्मनेपदम् आत्मनेपदेष्वन्यतरस्यामिति च्लेरङ् । धनुः सबाणङ्कुरु धनुषि बाणमारोप्य युद्धाय सज्जीभवेत्यर्थः मातियासीः मातिक्रम्य गमनङ्कार्षीः यातेर्माङि लुङ् अडभावः यमरमनमातांसक्चेति इट् इट ईटीति सिचो लोपः । अथ क्षितीन्द्रो दशरथः तमूचे ब्रुवोवचिः आदेशस्य स्थानिवद्भावेन कर्त्तुः क्रियाफलविवक्षायान्तङ् न वचेः परस्मैपदित्वात् वच्यादिना सम्प्रसारणम् । पराक्रमज्ञः यतस्तस्य पराक्रमञ्जानाति राजा प्रियसन्ततिः प्रिया सन्ततिर्यस्य रामे व्यापादिते माभूत्सन्तानविच्छेद इति नम्रः प्रणतो भूत्वा अनुनिनीषुः अनुनेतुमिच्छुः तदनुनयमाह ॥ ५१ ॥ ज० म०

उच्चैरित्यादि । असौ परशुरामः उच्चैर्महाशब्देन राघवं राममाह्वत स्पर्द्धयामास आह्वानं कृतवान् स्पर्द्धायामाङ इति ह्वेञो मं वक्त्रास्यख्यातिपेति ङः । इदं मदीयं धनुः सबाणं कुरु अतैव बलं ज्ञात्वा युद्धं करिष्यामि एतावतैव पराजितोऽहमिति भावः । अन्ये तु इदं त्वदीयं धनुः सबाणं कुरु धनुषि बाणमारोप्य युद्धाय सज्जीभवेत्यर्थः इत्याहुः इदमिति हस्तनिर्दिष्टत्वादुक्तं मातियासीः मातिक्रम्य गच्छमेत्यव्ययं निषेधे तद्योगेऽमुनिषेधः यमरमनमेति इमसनौ । अथ क्षितीन्द्रो दशरथस्तं जामदग्न्यमूचे वचोऽरे इति ब्रुञो वचादेशः स्थानिवद्भावात् कर्त्तुः क्रियाफलवत्त्वविवक्षायां सं व्ययम्प्रहेति खेर्ज्जिः

अनेकशो निर्जितराजकस्त्वं पितॄनतार्प्सीर्नृपरक्ततोयैः ।
संक्षिप्य संरम्भमसद्विपक्षं कास्थार्भकेऽस्मिंस्तव राम! रामे ५२

पृहस्तपाद्योरिति प्रकृतेर्जिः स किम्भूतः पराक्रमज्ञः परशुरामस्य पराक्रमं जानाति प्रिया सन्ततिः सन्तानो यस्य प्रियसन्तानः अतएव नम्रः प्रणतः सन् व्यनुनिनीषुः अनुनेतुमिच्छुः ॥ ५१ ॥ भ०

अनेकश इत्यादि । संरम्भं क्रोधं संक्षिप्य उपसंहर क्षिपेः लोटि मध्यमैकवचने रूपम् शस् एकमेकमिति विगृह्य सङ्ख्यैकवचनाच्चेति शस् पश्चान्नञ् समासः । अनेकशोऽनेकप्रकारमिति क्रियाविशेषणमेतत् निर्जितम्पराजितं राजकं राज्ञां समूहो येन स निर्जितराजकः गोत्रो क्षेत्यादिना वुञ् । त्वं पुनः पितॄनतार्प्सीः प्रीणितवानसि कैः नृपरक्ततोयैः तृपप्रीणन इत्यस्माल्लुङ् सिच् हलन्तलक्षणा वृद्धिः । असद्विपक्षम् असन्नविद्यमानो विपक्षो यस्मिन् संरम्भे निर्जितराजकत्वात् रामो विपक्ष इति चेदाह कास्थार्भकेऽस्मिंस्तव राम ! रामे, हे परशुराम ! अर्भके बालके रामे तव का आस्था क आदरोऽस्ति नैवेत्यभिप्रायः ॥ ५२ ॥ ज० म०

अनेकश इत्यादि । हे राम ! हे परशुराम ! संरम्भं क्रोधं संक्षिप्य संहर क्षिपोत्तुदि अनेकवारं निर्जितं राजकं येन तथाभूतस्त्वं अतः क्रोधो न युक्तः नृपाणां रक्तानि रुधिराण्येव तोयानि तैस्त्वं पितॄन् अतार्प्सीः प्रीणितवान् एकविंशतिवारान् निःक्षत्रीकृत्य तद्रक्तैः पितृतर्पणकरणं तस्य प्रसिद्धं त्रिप्तृपप्रीणने कषवल्पस्तृपेति विकल्पात् सिः वेमूदिति रधादित्वादिकल्पेऽभावपक्षे व्रजवदेति व्रिः । संरम्भं कीदृशम् असन्नवर्त्तमानो विपक्षो यत्र तादृशं निर्जितराजकत्वात् रामो विपक्ष इति चेदाह अस्मिन् मत्पुत्रे रामे अर्भके बालके तव का आस्था आदरो यत्नो वा न कापीति भावः । आस्था चालम्बनास्थानयत्नापेक्षासु कथ्यते इति विश्वः । रामपदद्वये न नामसाम्यादपि क्रोधो नोचित इति व्यज्यते । अनेकश एकमेकम् इति विगृह्य संख्यैकार्थाद्वीप्सायामिति चशस् पश्चान्नञ् समासः अनेकस्यापि संख्यावाचित्वात्

अजीगणद्दाशरथं न वाक्यं
यदा स दर्पेण तदा कुमारः ।
धनुर्व्यकार्षीद् गुरुबाणगर्भं
लोकानलावीद्विजितांश्च तस्य ॥ ५२ ॥

तत एव चशस् इत्येके राजकमिति विकारसंघेति राज्ञः समूहार्थे कण् ॥ ५२ ॥ भ०

अजीगेत्यादि । दाशरथन्दशरथस्येदन्दाशरथन्तस्येदमित्यण् वाक्यं वचनं यदा स्वदर्पेण स्वमदेन हेतुना जामदग्न्यः नाजीगणत् न गणितवान् गणसङ्ख्यान इत्यस्मादन्तत्वाच्च वृद्धिः चङि चेति द्विर्वचनम् ईच-गण इति अभ्यासस्येकारः तदा कुमारो रामो धनुर्व्यकार्षीत् आकृष्ट-वान् कृष आकर्षणे स्पृशमृषेत्यादिनोपसङ्ख्यानेन सिचि पक्षे रूपम् हलन्तलक्षणा वृद्धिः षढोः कस्सीति कत्वम् कृतदारकर्मापि पुत्रः पितरि जीवति कुमार इति व्यपदिश्यते । गर्भयतीति गर्भः गुरुर्बाणो गर्भो यस्य धनुषः लोकांश्च स्वप्रभावाद्विजितान् तस्य परशुरामस्य अलावीत् छिन्नवान् लुनातेर्लुङि सिचि वृद्धौ रूपम् । सम्मुच्छिद्यन्तामस्य लोका इति अमोघमस्त्रं मुक्तवानित्यर्थः ततः प्रभृति तस्य सर्वं तेजोऽप-हृतम् ॥ ५२ ॥ ज० म०

अजीगणदित्यादि । यदा स जामदग्न्यः दाशरथं वाक्यं दर्पेण दर्पात् न अजीगणत् न गणितवान् दशरथस्येदमिति विकारसंघेत्या-दिना ष्णः । गणत्कसंख्याने वेङ्गणकथः खेर्व्यङीति खेरीङ् । तदा कुमारो युवराजो बालको रामो धनुर्व्यकार्षीत् आकृष्टवान् कृषोत्वा-कृषि कृषस्पृषेति सिः व्रजवदेति त्रिः षढो कः से इति कः किवादिति षः । कीदृशं धनुर्गुरु महत् बाणो गर्भ इव मध्यवर्त्ती यत्र बाणो गर्भो यस्येति वा गुर्विति बाणविशेषणं वा ततस्तस्य जामदग्न्यस्य विजितान् वशीकृतान् लोकान् स्वर्गानलावीत् छिन्नवान् तत्र गमनं निषिद्धवानि-त्यर्थः लुञगिक्छिदि टी ॥ ५२ ॥ भ०

जिते नृपारौ सुमनीभवन्ति शब्दायमानान्यशनैरशङ्कम्।
वृद्धस्य राज्ञोऽनुमते बलानि जगाहिरेऽनेकमुखानि मार्गान् ५४

अथ पुरुजवयोगान्नेदयद्दूरसंस्थं
दवयदतिरयेण प्राप्तमुर्वीविभागम्।

जित इत्यादि। जिते नृपारौ परशुरामे बलानि सैन्यानि मार्गान् पथः जगाहिरे अवष्टब्धवन्ति। वृद्धस्य राज्ञो दशरथस्यानुमते सति गच्छतेति। जामदग्न्यसंरम्भादसुमनांसि सुमनांसि सन्ति सुमनीभवन्ति बलानि अरुर्मन इत्यादिना चावन्त्यस्य लोपे अस्य चाविताीत्वे रूपम्। शब्दायमानानि अशनैः सुष्ठु शब्दं कुर्वाणानि एवञ्जितस्तथा जितो नृपारिरिति शब्दवैरेत्यादिना क्यङ्। अशङ्कन्निर्भयञ्जगाहिर इति क्रियाविशेषणम् अनेकमुखानि पृथग्भूतानि पूर्वं भयेन बहुलीभूतत्वादनीकानाम्बहुवचनमिति ॥ ५४ ॥ ज० म०

जित इत्यादि। नृपाणाम् अरौ परशुरामे रामेण जिते सति वृद्धस्य राज्ञो दशरथस्यानुमते अनुमतौ सत्यां बलानि सैन्यानि अशङ्कं यथा स्यात्तथा मार्गान् पथो जगाहिरे आक्रान्तवन्ति गाहङ् विलोडे। कीदृशानि पूर्वं जामदग्न्यभयात् असुमनांसि सुमनांसि भवन्ति च्विः कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः। मनश्चक्षुरिति सलोपे अकारस्य ईः। अशनैरुच्चैः शब्दायमानानि जयशब्दं कुर्वाणानि शब्दसखकष्टादेरिति ङ्यः घोऽज्यरे इति दीर्घः। अनेकमुखानि पूर्वं भयात् वर्त्तुलीभूय सम्प्रति पृथग्भूतानि ॥ ५४ ॥ भ०

अथेत्यादि। अथेत्यानन्तर्ये बलन्दाशरथम् तूर्णं शीघ्रम् त्वरत्वरेत्यादिना पक्षे इड्भावः। ज्वरत्वरेति वकारोपधयोरूट् रदाभ्यामिति नत्वम्। अयोध्यासायात् आगतम् आङ्पूर्वाद्यातेर्लङि रूपम्। पुरुर्महान् वेगो जवः तेन योगात् पूर्य्यते वर्द्धते इति पुरुः कुर्म्मेत्यधिकृत्य पृभिदिव्यधीत्यादिना कुप्रत्ययः। दूरसंस्थं दूरे सन्तिष्ठत इति कः। उर्वीविभागन्नेदयत् अन्तिकञ्चकार अन्तिकशब्दात् समीपवाचिनः तत्करोतीति णिच् इष्ठवद्भावादन्तिकबाढयोर्नेदसाधाविति नेदादेशः

क्लमरहितमचेतन्नीरजीकारितक्ष्मां
बलमुपहितशोभां तूर्णमायादयोध्याम् ॥ ५५ ॥

इति भट्टिकाव्ये प्रकीर्णकाण्डे सीतापरिणयो
नाम द्वितीयः सर्गः ।

पश्चाल्लट् शतरि शप् अयादेशः । प्राप्तं विषयीकृतं चोर्वीविभागं भू॰ विभागम् अतिरयेण अतिवेगेन द्रवयत् दूरीकुर्वत् पश्चाद्भागेन दूरशब्दात् पूर्वस्मिंश्चि इष्ठवद्भावे च स्थूलदूरेत्यादिना यणादिपरलोपः पूर्वस्य च गुणः पश्चात्तया एव लडादयः । क्लमरहितम् अपगतश्रमम् अचेतत् कियद्दूरमागतोऽहमित्यबध्यमानम् चितीसंज्ञाने इत्येतस्य शतरि रूपम् । अनीरजा नीरजाः कारितेति अरुर्मन इत्यादिना चावन्त्यलोपः । अस्य च्विर्तीत्वम् नीरजीकारिता क्ष्मा भूमिर्यस्यामयोध्यायां तां सिक्तसम्मृष्टभूतलामित्यर्थः । उपहितशोभाम्कृतध्वज॰ पताकाभिरारोपितशोभाम् ॥ ५५ ॥ ज॰ म॰

इति भट्टिकाव्यटीकायाञ्जयमङ्गलाख्यायाम्प्रकीर्णकाण्डे
सीतापरिणयो नाम द्वितीयः सर्गः ।

अथेत्यादि । अथानन्तरं बलं दशरथसैन्यं तूर्णं शीघ्रम् अयोध्याम् आयात् आङ्पूर्वाद्यातेर्लङि । त्वरतेः क्ते श्विवावमवत्वरेति ऊडा सह वस्य ऊट् स्वत्वाद्योदिति क्तस्य नत्वम् । कीदृशं पुरुजवयोगात् प्रचुर॰ जवयोगात् दूरसंस्थं नेदयदन्तिकं कुर्वत् लेः कत्याख्याने णिः वाढ़ान्ति॰ केति नेदादेशः । अतिरयेण अतिवेगेन प्राप्तम् उर्वीविभागं द्रवयत् दूरं कुर्वत् णिः द्रवादेशः । क्लमरहितम् अतिहर्षात् अपगतश्रमम् अतएव अचेतत् कियद्दूरमागतमित्यजानत् चितीसंज्ञाने शतः । कीदृशीमयोध्याम् अनीरजा नीरजाः कारिता निर्धूलीकारिता क्ष्मा भूमिर्यस्यां सिक्तसंमृष्टभूतलामित्यर्थः मनश्चक्षुरिति चौ सलोपः । उपहितशोभां ध्वजपताकादिभिः प्रापितदीप्तिम् ॥ ५५ ॥ भ॰

इति भरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां
श्रीरामपरिणयो नाम द्वितीयः सर्गः ।

# तृतीयः सर्गः ।

—※—

वधेन संख्ये पिशिताशनानां क्षत्रान्तकस्याभिभवेन चैव ।
आढ्यम्भविष्णुर्यशसा कुमारः प्रियम्भविष्णुर्न स यस्य नासीत् १
ततः सुचेतीकृतपौरभृत्यो राज्येऽभिषिच्य सुतमित्यनीचैः ।
आघोषयन् भूमिपतिः समस्तं भूयोऽपि लोकं सुमनीचकार २

वधेनेत्यादि । संख्ये संग्रामे पिशिताशनानां राक्षसानाम्पिशितमांसम् अशनं येषामिति तेषां वधेन हननेन हनश्च वध इति अप्प्रत्यये वधादेशः कृत्प्रयोगे कर्मणि षष्ठी । क्षत्रान्तकस्य परशुरामस्य अभिभवेन पराजयेन च कदोरप् चैवशब्दो निपातसमुदायः समुच्चये तेन हेतुभूतेन यशसा आढ्यम्भविष्णुः अनाढ्य आढ्यो भूतः कर्त्तरि भुव इति खिष्णुच् अरुर्द्विषदिति मुम् कुमारो यस्य न प्रियम्भविष्णुः यस्यापि प्राक् प्रियो न जातः पश्चादपि तथैव न प्रियोभूतः स नासीत् न बभूव ॥ १ ॥ ज० म०

वधेनेत्यादि । संख्ये युद्धे पिशिताशनानां राक्षसानां वधेन क्षत्रियाणामन्तकस्य परशुरामस्य अभिभवेन च हेतुना यशसा आढ्यम्भविष्णुः सम्पन्नो भवन् कुमारो रामो यस्य न प्रियम्भविष्णुः स नासीदेव सर्वस्यैव प्रिय इत्यर्थः । एवशब्दो नासीदित्यनान्वितः चैवशब्दः समुच्चये वा । अनाढ्य आढ्यो भवति इति प्रागप्रियोऽपि भूत्वा पश्चात् प्रियो भवति भुवो घे खिष्णुखुकञाविति घे खिष्णुः खित्यव्याजस्य इति मनु अरुर्द्विषदजन्तस्येति मुम् ॥ १ ॥ भ०

तत इत्यादि । ततः प्रियम्भविष्णुतायाः अनन्तरम्भूमिपतिर्दशरथो लोकं सुमनीचकार किमयं सम्यक् पालयिष्यति नवेति असुचेतसः पौरा भृत्याश्च जाताः ते सम्यक् पालनात् सुचेतसः कृता येन स सुचेतीकृतपौरभृत्यः भूयोऽपि पुनरपि लोकं समस्तं सुमनीचकारः कथमित्याह

आदिद्यदादीप्तकृशानुकल्पं सिंहासनं तस्य सपादपीठम्।
सन्तप्तचामीकरवल्गुवर्णं विभागविन्यस्तमहार्घरत्नम्॥ ३॥
प्राख्यापयत् पूगकृतान् स्वपोषं
पुष्टान् प्रयत्नाद् दृढगात्रबन्धान्।

राज्ये राजकर्मणि पालने रक्षणे सुतं रामम् अभिषेक्ष्ये तदभिषेकं करिष्यामीति सिचेरभयपदित्वात्तङ् अनीचैर्महता ध्वनिना आघोषयन् घोषणाङ्कारयन् सुचेतोसुमनीशब्दौ अर्त्तेन इत्यादिना साधू॥२॥ज०म०

तत इत्यादि। ततोऽनन्तरम् अहं राज्ये राजकर्मणि सुतमभिषेक्ष्ये अभिषिक्तं करिष्ये इति अनीचैरुच्चैराघोषयन् भूमिपतिर्दशरथः समस्तं लोकं भूयः पुनरपि सुमनीचकार असुमनसं सुमनसं कृतवान्। कीदृशः असुचेतसः सुचेतसः कृताः पौरा भृत्याश्च येन स तथा अभिषेककाले किमयं सम्यक् परिपालयिष्यति नवेत्याशङ्कया पौरभृत्यादेनामसुचेतस्त्वमासीत् सम्यक् पालनात् तेषां सुचेतस्त्वं कृतं रामस्य प्रियंभविष्णुतया तदभिषेकमदृष्ट्वा पुनः पुनरसुमना लोक आसीत् रामाभिषेकाघोषणया पुनः पुनः सुमनसं चकार सुचेतोसुमनीशब्दौ पूर्ववत् मनस्चक्षुरित्यादिना सिद्धौ सिच्प्रशोज् चरणे ऋङिति कङ्॥ २॥ भ०

आदिद्यदित्यादि। तस्य रामस्य सिंहासनमादिद्यत् आदिष्टवान् एवंविधं कारयेति। दिशेः स्वरितेतो लुङि शल इगुपधादित्यादिना लेः क्सः अकर्त्तृगामिक्रियाफलत्वात्तिप् आदीप्तकृशानुकल्पं ज्वलिताग्नितुल्यं तस्य कारणमाह सन्तप्तचामीकरवर्णानि उत्तप्तसुवर्णवर्णानि वर्णानि यस्मिन् तथा विभागेषु विन्यस्तानि अतिमहार्घाणि रत्नानि पद्मरागादीनि यत्र सपादपीठं सह पादपीठेन॥ २॥ ज० म०

आदिद्यदित्यादि। दशरथस्तस्य रामस्य सिंहासनम् आदिद्यत् आदिष्टवान् दिशौ अश् अतिसर्जने टी इशसोऽनिमिज़ुङ इति शक् अच्छ्रोर्जेति षङ् षढोः कः से इति कः कीदृशं सम्यक् ज्वलिताग्नितुल्यं त्याद्देशौने इति कल्पः पादपीठेन सहितम् अग्नितुल्यस्वर्णशोभितहीरकं विशिष्टदेशार्पितमहामूल्यपद्मरागादिकम्॥ २॥ भ०

सभर्म्मकुम्भान् पुरुषान् समन्तात्
पत्काषिणस्तीर्थजलार्थमाशु ॥ ४ ॥
उच्चांप्रचक्रुर्नगरस्य मार्गान्
ध्वजान् बबन्धुर्मुमुदुः स्वधूपान्।

प्रास्थेत्यादि। तीर्थजलार्थं पुरुषान् प्रयत्नात् आदरेण समन्तात् सर्वासु दिक्षु आशु शीघ्रं प्रास्थापयत् प्राहिणोत्। प्रपूर्वस्तिष्ठतिर्गमने वर्त्तते तस्य हेतुमण्यन्तस्य लङि रूपं पूगकृतान् अपूगाः पूगाः कृता इति श्रेण्यादिषु च्व्यर्थवचनमिति समासः सङ्घीकृतानित्यर्थः स्वपोषं पुष्टान् स्वे पुष इति णमुल् अमैवाव्ययेनेति समासः यथाविध्यनुप्रयोगश्च। दृढो गात्रबन्धो येषान्तान् संयतकायान् महाभारोद्वहनक्षमत्वात् सहेमकुम्भान् सस्वर्णकलसान् पत्काषिणः पादौ कषितुं हिंसितुं शीलं येषामिति सुप्यजातौ णिनिः हिमकाषिहतिषु चेति पदादेशः पदातीनित्यर्थः। आश्विति कृवापाजीत्यादिना उण् ॥ ४ ॥ ज० म०

प्रास्थापयदित्यादि। दशरथस्तीर्थजलार्थं समन्तात् सर्वासु दिक्षु आशु शीघ्रं पुरुषान् प्रयत्नात् आदरात् प्रास्थापयत् प्रपूर्वस्थाधातुर्गत्यर्थः धी ञिः प्रेरणे ह्रीव्लीति पन् पूगकृतान् अभिधानात् अपूगाः पूगाः कृता इति च्व्यर्थे समासः सङ्घीकृतानित्यर्थः स्वपोषं यथा स्यात्तथा पुष्टान् स्वानां ज्ञातीनां पोषो यत्र पोषणक्रियायां पोषो यजन्तः गतार्थात् पोषणम् तदनुप्रयोगश्चेति पाणिनीयादयः तन्मते स्वेन धनेन पुष्टानित्यर्थः दृढो गात्राणां बन्धो येषां भारोद्वहनक्षमत्वात् स्वर्णकलससहितान् पादकषणशीलान् कषबधे ग्रहादित्वाण्णिन् पादचारिण इत्यर्थः। अत्र पादस्य पदादेश इति पाणिनीयादयः स्वमते पद्शब्दोऽस्ति पदङ्घ्रिश्चरणोऽस्त्रियामित्यमरः केन उभ्यते पूर्य्यते इति कुम्भो निपातनात् ॥ ४ ॥ भ०

उच्चामित्यादि। ये निपुणा अर्थेषु कार्य्येषु राज्ञा दशरथेन नियुक्ताः अधिकृतास्ते नगरस्य मार्गान् पथः उच्चान् सेकवतः प्रचक्रुः। उच्चणमुच्चा गुरोश्च हल इत्यकारः सा विद्यते येषामित्यर्थे आतिभ्यो-

दिशश्च पुष्पैस्सकरुर्विचित्रै-

रर्थेषु राज्ञा निपुणा नियुक्ताः ॥ ५ ॥

मातामहावाससुपेयिवांसं मोहादपृष्ट्वा भरतं तदानीम् ।
तत्कैकयी सोढुमशक्नुवाना ववार रामस्य वनप्रयाणम् ॥ ६ ॥

ऽच् इजादेश्च गुरुमत इत्यादिना आम्प्रत्यये प्रचक्रुरित्यनुप्रयोगो न घटते कृञ्चानुप्रयुज्यते इत्यनुशब्दस्य व्यवहितनिवृत्त्यर्थत्वात् ध्वजान् बबन्धुः उच्छ्रायितवन्तः मुमुचुः खधूपान् आकाशे घटिकादिभिर्धूपान् मुमुचुः प्रमुक्तवन्तः । दिशश्च पुष्पैस्सकरुः छादितवन्तः कॄविक्षेपे इत्यस्य लिटि ऋच्छत्यॄतामिति गुणः विचित्रैः नानाप्रकारैः ॥ ५ ॥ ज० म०

उक्षामित्यादि । अर्थेषु प्रयोजनेषु राज्ञा नियुक्ता निपुणाः कर्मकुशला जना नगरस्य मार्गान् उक्षां प्रचक्रुः सिक्तवन्तः उक्ष सेचने ईजादित्वाम् भ्वस्कन्धाम इति सूत्रेणाम् इति पक्षस्यैवेष्टसिद्धौ अनुग्रहणम् उपसर्गक्रियाविशेषणव्यवधानेऽपि तदनुप्रयोगज्ञापनार्थम् इति रामानन्दाचार्य्येण व्याख्यातं तेनात्र तेनैव सोपसर्गस्य कृञोऽनुप्रयोगः । क्रमदीश्वरेण तु सप्रसादिकभ्वस्तिभिश्चेति सूत्रं कृत्वा अस्यैव श्लोको निदर्शितः । केचित्तु नगरस्य उक्षां सेकं प्रचक्रुः भग्नान् मार्गान् ध्वजांश्च बबन्धुरित्याहुः । जयमङ्गलादिषु उक्षानिति पठित्वा उक्षणमुक्षा साम्येषामिति अर्श आदित्वादच् इति व्याख्यातम् । ध्वजान् बबन्धुः उत्थापितवन्तः खे आकाशे धूपान् मुमुचुः त्यक्तवन्तः पुष्पैर्दिशस्सकरुश्छादितवन्तः कॄविक्षेपे ऋतोगुणः किदृशामिति गुः ॥ ५ ॥ भ०

मातेत्यादि । तत्पूर्वोक्तमभिषेकसंविधानं सोढुमशक्नुवाना असहमाना कैकयी रामस्य वनप्रयाणं ववार प्रार्थितवती राज्ञ इत्यर्थात् । सहेः शक्नोतावुपपदे शकधृषेत्यादिना तुमुन् तत्र नञा शक्त्यर्थस्य प्रतिषेधेऽपि न दोषः प्रतिषेधस्य वहिरङ्गत्वात् शक्नोतेः परस्मैपदित्वात् शानज् नास्ति ताच्छील्यवयोवचनेत्यादिना चानश् स्वादित्वाच्छ्नुः अचि-श्नुधात्वित्यादिना उवङ् किं कृत्वेत्याह तदानीं प्रार्थनाकाले देशान्तरा-

कर्णेजपैराहितराज्यलोभा स्त्रैणेन नीता विकृतिं लघिम्ना ।
रामप्रवासे व्यमृशन्न दोषं जनापवादं सनरेन्द्रमृत्युम् ॥ ७ ॥

वस्थितत्वात् किमेवं क्रियते न वेति न भरतं पृष्टवती। देशान्तरावस्थितिं दर्शयन्नाह मातामहावासमिति मातुः पिता मातामहः पितृव्यमातुलेत्यादिना निपातनात् डामहच्। आवासः निलयम् आवसत्यस्मिन्निति अधिकरणे घञ्। उपेयिवांसम् उपेयिवाननाश्वाननूचानश्च इत्यादिना निपातितः मोहादज्ञानात् दूतप्रेषणेनाष्टष्ट्वा रामस्येति कर्तरि षष्ठी वनाय प्रयाणं गमनमिति चतुर्थीति योगविभागात् समासः। गत्यर्थकर्मणीत्यादिना चतुर्थीपरत्वात् तल्लक्षणया षष्ठ्या भवितव्यमिति चेत् न पुनर्द्वितीयाग्रहणात्परामपि षष्ठीं बाधित्वा द्वितीयैव यथा स्यादिति। यद्येवं द्वितीयैव स्यात् न चतुर्थी नैष दोषः द्वितीयाग्रहणस्योपलक्षणार्थत्वात् तथा च वृत्तावुभयमुक्तं ग्रामं गत्वा ग्रामाय गत्वेति ॥ ६ ॥ ज० म०

मातामहेत्यादि। तदानीं तस्मिन् समये तत् पूर्वोक्तमभिषेकविधानं सोढुमशक्नुवाना असमर्था कैकयी मोहादज्ञानात् भरतम् अपृष्ट्वा रामस्य वनप्रयाणं ववार राजानं प्रार्थितवती। भरतं किम्भूतं मातामहावासमुपेयिवांसम् उपगतम् अपृष्ट्वेत्यत्र हेतुरयम् एतेन भरतदोषपरिहारः कृतः मातृपितृभ्यां तत्पितरि डामहच् निपातनात् आवसन्त्यस्मिन् आवासो गृहम् अधिकरणे घञ् उपपूर्वादिणः क्वसुः वसोर्घसेमाजितीस् खेः किति घं इति घंः यिनाऽव्यणाविति यादेशः सहेश्च तुमि होढो भाविति हस्य ढः ढभात्तयोरिति तस्य धः ष्टुभिरिति धस्य ढः। सहवहो दोढीति ओत्वं ढ्रोढ्रीति ढलोपः शक्लृशक्तौ शक्तिवयस्ताच्छील्ये इति शतुः शानः वनाय वनस्य वा प्रयाणं वनप्रयाणं गत्यर्थमन्यढ इति चतुर्थी दधे कृतीति कृत्प्रयोगात् ढे षी अनयोर्विवक्षाधीनत्वात् चतुर्थ्या षष्ठ्या वा विग्रहः ॥ ६ ॥ भ०

कर्णे इत्यादि। कर्णे जपन्ति कर्णेजपाः सूचकाः मन्थरादयः स्तम्बकर्णयोरित्यच् तत्पुरुषे कृतिबहुलमिति सप्तम्या अलुक् तैरा-

वसूनि देशांश्च निवर्त्तयिष्यन्रामं नृपः संगिरमाण एव।
तयावजज्ञे भरताभिषेको विषादशङ्कुश्च मतौ निचख्ने ॥८॥

हितः आनायितो राज्यलोभो यस्याः सैवं स्त्रैणेन स्त्रिया अयं स्त्री-पुंसाभ्यान्नञ् स्नञाविति नञ् लघोर्भावो लघिमा पृथ्वादित्वादिमनिच् टिलोपः तेन विकृतिमन्यथात्वन्नीता कैकयी रामप्रवासे सति दोषञ्च व्यमृशत् नालोचितवती मृश आमर्शन इति तौदादिकस्य लङि रूपम्। किंस्वरूपं दोषं जनापवादं लोकवैमुख्यं राज्यार्हो ज्येष्ठः पुत्त्रोऽनया प्रव्राजित इति। नरेन्द्रस्य दशरथस्य मृत्युना सह वर्त्तमानम् ॥ ७ ॥ ज० म०

कर्णेजपैरित्यादि। कैकयी रामप्रवासे जनापवादरूपं दोषं न व्यमृशत् नालोचितवती मृशधौ मृशि राजार्हो ज्येष्ठोऽनया निष्काशित इति लोकापवादं किम्भूतं नरेन्द्रस्य दशरथस्य मृत्युना सहितं दोषानालोचने हेतुगर्भविशेषणमाह कर्णेजपैः पिशुनैर्मन्थरादिभिराहित आरोपितो राज्यस्य लोभो यस्याः कर्णे जपन्ति इति पचादित्वादच् अभिधानात् सप्तम्या अलुक्। परकीयबुद्ध्या दोषकर्तृत्वे हेतुमाह स्त्रैणेन स्त्रीसम्बन्धिना लघिम्ना लघुत्वेन विकृतिं प्रकृतेरन्यथात्वं नीता प्रापिता। स्त्रिया अयं स्त्रैणः पुंस्त्रियोरिति नञ् लघोर्भावो लघिमा पृथ्वादिभ्य इमनिज्वा इति इमन् अभं च डिदिति डित्त्वे टेर्लोपः ॥ ७ ॥ भ०

वसूनीत्यादि। रामं निवर्त्तयिष्यन् रामं निवर्त्तयितुं वसूनि द्रव्याणि देशांश्च सङ्गिरमाण एव प्रतिजानान एव दास्यामीति नृपो राजा कैकेय्या तदनङ्गीकरणादवजज्ञे अवज्ञातः ज्ञा इत्ययं धातुरवपूर्वोऽवज्ञाने वर्त्तते तस्मात् कर्मणि लिट् गमहनेत्युपधालोपः तत्र इतेर्हेतुमण्ण्यन्तात्क्रियार्थोपपदे लट्। सङ्गिरणञ्च क्रिया गिरेस्तौदादिकादवादृत्य इति अधिकृत्य समः प्रतिज्ञान इति तङ् शानच् ऋत इत् आनेमुक्। इदञ्चापरमनुचितं तया भरतो राज्येऽभिषिच्यतामिति भरताभिषेको मतौ मनसि निचख्ने निखातः कर्मणि

ततः प्रविव्राजयिषुः कुमारमादिक्षदस्याभिगमं वनाय ।
सौमित्रिसीतानुचरस्य राजा सुमन्त्रनेत्रेण रथेन शोचन् ॥९॥

ञिट् गमहनेत्यादिना उपधालोपः तथा विषादः शङ्कुरिव शल्यमिव निचख्ने ज्येष्ठत्वात् नायं समभिषिच्यत इति विषादः । संग्रामात्किल परिश्रान्तमागतं दशरथं कैकयी परिचचार तेन परितुष्टेनोक्तं किन्ते दास्यामीति सा प्राह यदार्थयिष्यते तदा यूयं दास्यथेति सा तदवसरं बुद्धा वरद्वयं प्रार्थितवती एको रामस्य वनगमनं द्वितीयो राज्ये भरतोऽभिषिच्यतामिति ॥ ८ ॥ ज० म०

वसूनीत्यादि । रामं निवर्त्तयिष्यन् निवारयितुं कैकय्यै वसूनि धनानि देयांश्च संगिरमाणः रामस्तिष्ठतु सर्वं दास्यामीति प्रतिजानान एव नृपो दशरथस्तया कैकय्या तदनङ्गीकारात् अवजज्ञे अनादृतः पूर्वप्रतिज्ञातस्य तदभिमतप्रदानस्यानिर्वाहात् ज्ञाऽवबोधने अवपूर्वोऽयमनादरे वर्त्तते कर्मणि ठौ ट्टतेः प्रेरणे अग्रन्तात् शतृः गिरतेस्तौदादिकात् समः प्रतिज्ञायामिति सम् । भरताभिषेकस्तत्संशयित्वेन विषादरूपशङ्कुश्च मतौ मनसि निचख्ने चिन्तितः । यद्वा दशरथस्य नृपस्य मनसि भरताभिषेको निचख्ने आरोपितः तत्प्रार्थनायाः पूर्वं प्रतिज्ञासयेन तत्स्वीकारात् शङ्कुरिव यो विषादः सोऽपि निचख्ने तत्प्रभृति विषादावतारात् खनेः कर्मणि ठौ हनगमजनेत्युङ्लोपः । पुरा परितुष्टेन राज्ञा कैकय्यै वरद्वयं देयमिति प्रतिश्रुतं तत्रेदानीमेकं रामस्य प्रवासनमपरं पुत्त्रस्य राज्यं कैकयी प्रार्थयामासेति प्रसिद्धिः ॥ ८ ॥ भ०

तत इत्यादि । कैकेयीप्रार्थनानन्तरं राजा कुमारं रामं प्रविव्राजयिषुः प्रव्रजन्तमेनं प्रव्राजयितुमिच्छुः व्रजेर्हेतुमन्ण्यन्तात् सन् । अस्य कुमारस्य रथेन वनायाभिगममभिगमनम् । ग्रहवृद्दनिश्चिगमश्चेत्यप् आदिक्षत् आदिष्टवान् अस्येति कर्त्तरि षष्ठी वनायेति गत्यर्थकर्मणीति चतुर्थी सौमित्रिसीतानुचरस्य लक्ष्मणसीतासहायस्य सुमित्राया अपत्यम् बाह्वादित्वादिञ् सहचरत्वेनाभ्यर्हितत्वात् पूर्वनिपातः । अनु पश्चाच्चरतीति अनुचरः भिक्षासेनादायेषु चेति चकारस्यानुक्तसमुच्चयार्थ-

केचिन्निनिन्दुर्नृपमप्रशान्तं विचुक्रुशुः केचन सास्रमुच्चैः।
ऊचुस्तथान्ये भरतस्य मायां धिक्कैकयीमित्यपरो जगाद॥१०॥

त्वात् टः। अनुचरश्चानुचरी च पुमान् स्त्रियां तावनुचरौ सौमित्रिसीते अनुचरौ सहायौ यस्य। कालापिकास्ततोऽन्यत्रापि पठन्ति अनधिकरणोपपदे चरेष्टः इत्यर्थः। नीयतेऽनेनेति नेत्रं लोचनं दाम्नीत्यादिना ष्ट्रन्। सुमन्त्रनामा रथवाहको नेत्रमिव यस्य रथस्य तद्यानात् तस्य प्रवृत्तेः शोचन् परिदेवयमानो राजा॥ ९॥ ज० म०

नत इत्यादि। कैकयीप्रार्थनानन्तरं राजा शोचन् कुमारं रामं प्रव्रज्यां कारयितुमिच्छुः अस्य रामस्य रथेन वनाभिगमनम् आदिष्टवान् ह्यशस इत्यादिना सक्। व्रजेः प्रेरणे अन्तात् वनायेति गत्यर्थमन्यते इति कर्मणि चतुर्थी। श्रीपतिदत्तादयस्तु नित्यं कर्मणि तत्प्रयोगिनश्चतुर्थीत्याहुः। वनं गन्तुमित्यर्थः कीदृशस्य रामस्य सीतालक्ष्मणसहायस्य सुमित्राया अपत्यम् इति बाह्वादित्वात् ण्यः अनुचरतीति अनुचरः कर्मप्रतिरूपकोऽयमनुशब्दः तेन हनचरगष्टक् इति टक्। रेफेकैकौ च परे इति निर्दिशता स्त्रीपुंसयोस्तन्मात्रकृतभेदयोरेकशेषः पुमान् भवतीति सूचितम्। तेन अनुचरश्च अनुचरी च अनुचरौ सौमित्रिसीते अनुचरौ यस्य स तथा। यद्वा सौमित्रिसीताभ्यामनुचर्यते यः स तथा घञन्तटोघे इति कर्मणि अल्। प्राग्भावस्य विवक्षाधीनत्वात् सौमित्रेः प्राग्भावः अभ्यर्हितस्य प्राग्भाव इति ये वदन्ति तन्मते सदा सहचरत्वेन सौमित्रेरभ्यर्हितत्वं कीदृशेन रथेन सुमन्त्रो नाम कश्चित् स नेत्रो नायको यस्येति तेन नेत्रं रथे च नाड्यां नेत्रो नेतरि भेद्यवदिति विश्वः। सुमन्त्रो नेत्रं चक्षुरिव यस्येति केचित् नीञः तात्सुबिति त्रः॥ ९॥ भ०

केचिदित्यादि। राज्ञा वनगमने समादिष्टे सति केचिज्जना नृपं निनिन्दुः कुत्सितवन्तः णिदि कुत्सायाम् अप्रशान्तं इष्टभावेऽपि क्लीबम्। केचन केचित् सास्रं सवाष्पमुच्चैः सुष्ठु विचुक्रुशुः सुतरामाक्रन्दितवन्तः तथान्ये भरतस्य मायां शाठ्यमूचुः उक्तवन्तः। ततस्ततोऽयं

गतो वनं श्वो भवितेति रामः शोकेन देहे जनतातिमात्रम् ।
धीरास्तु तत्र च्युतमन्यवोऽन्ये दधुः कुमारानुगमे मनांसि ११

प्रयोगो तेनात्मस्मरणार्थं मातामहनिवासे स्थितः इति । अपरो धिक् केकयीं यथैवमनुष्ठितमिति जगाद गदितवान् धिगुपर्य्यादिषु त्रिष्विति धिग्योगे द्वितीया ॥ १० ॥ ज० म०

केचिदित्यादि । राज्ञि रामस्य वनगमनमादिष्टवति सति केचिज्जना नृपं निनिन्दुः णिदि कुत्सने कीदृशम् अप्रशान्तं वार्द्धकेऽपि स्त्रीवशीभूतत्वात् शान्तिरहितं केचन सास्रं सवास्पम् उच्चैर्महाध्वनिना विचुक्रुशुः क्रन्दितवन्तः केचित् केचन इत्यत्र किमः क्वप्रत्ययाच्चिचणाविति विद्यानिवाससूत्रेण चिच्चणौ किंशा असाकल्ये तु चिच्चणाविति कोषात् विभक्त्यन्तकिमः परमनयोः प्रयोगः अन्ये भरतस्य मायां शाठ्यम् ऊचुः मातरमेव राज्यलोभाय नियुज्य स्वदोषहरणार्थं मातामहगृहं गतवानिति मायार्थः । अपरः कश्चित् केकयीं धिगिति जगाद धिक् समयेति द्वितीया धिगिति निन्दायाम् अपर इत्यत्र एकवचनात् अल्प एव लोकः केकयीं निन्दति बहवस्तु राजानं केकय्याः स्त्रीत्वेन स्वभावतो मन्दबुद्धित्वं नृपस्य तु तथाविधस्यापि स्त्रीवचनान्मतिभ्रंश इति महान् दोष इति व्यज्यते तेन प्रक्रमभङ्गोऽत्र न दोषावहः ॥१०॥ भ०

गत इत्यादि । श्व आगामिनि दिवसे वनं गतो रामो भवितेति तात् जनता जनसमूहः ग्रामजनबन्धु इत्यादिना ताल् देहे दग्धा कर्मणि लिट् अत एकहल्मिध्येत्वाभ्यासलोपौ गत इति भूतकालः श्वोभवितेति भविष्यत्कालेन सम्बध्यमानः साधुः धातुसम्बन्धे प्रत्यया इति । ये तु तत्र धीराः ते च्युतमन्यवो विगतशोकाः सन्तः कुमारानुगमे कुमारस्य पश्चाद्गमननिमित्तं मनांसि दधुः कृतवन्तः राममनुव्रजाम इति निमित्तात् कर्मसंयोगे सप्तमीति । मनांसीति कर्मणा योगात् ॥ ११ ॥ ज० म०

गत इत्यादि । रामः श्वो भाविदिने वनं गतो भविता इति हेतोः शोकेन जनता जनसमूहोऽत्यर्थं देहे दग्धा दहेः कर्मणि ठो तृफलेति

प्रस्थास्यमानावुपसेदुषस्तौ
शोशुच्यमानानिदमूचतुस्तान्।
किं शोचतेहाभ्युदये बतास्मान्
नियोगलाभेन पितुः कृतार्थान् ॥ १२ ॥

अत एत्वं खिन्नोपस्य। जनखनादित्वाज्जनात्तः सक्तो स्त्रीत्वमभिधानात् भवितेति भवद्भूतभव्ये इति भविष्यति डी श्वः प्रभृति भविष्यत्काल-मात्रे अभिधानात् श्व इति न व्यर्थं तत्सम्बन्धात् गत इति धातु-सम्बन्धे प्रत्यया इति वचनात् भविष्यत्कालेऽपि साधुः अन्ये तु तत्र ये धीरास्ते च्युतमन्यवो विगतशोकाः सन्तः कुमारस्य रामस्य पश्चाद्गमने मनांसि दधुर्धृतवन्तः धाऊध्या रूपम् अनुगम इति ढेनार्थादिति सप्तमी विषयसप्तमी वा ॥ ११ ॥ भ०

प्रस्थेत्यादि। तौ रामलक्ष्मणौ प्रस्थास्यमानौ गमिष्यन्तौ समवप्र-विभ्यः स्थ इति तङ् जनान् इदं वक्ष्यमाणमूचतुः उक्तवन्तौ ब्रवीत्यर्थ-ग्रहणात् वचेर्द्विकर्मकता उपसेदुषस्तौ ढौकितवतः जनान् भाषायां सदवसेत्यादिना क्वसुः। शोशुच्यमानान् अत्यर्थं शोकं कुर्वतः भृशार्थे यङ् किमूचतुरित्याह किं शोचतेति, हे जनाः! कस्मादस्मान् शोचत परिदेवयध्वम्, विधावपूर्वार्थप्रकाशने लोट् इहाभ्युदये बतशब्दो विस्मये तस्मिन् आश्चर्यभूते अभ्युदये वृद्धौ सत्याम्। कुत इत्याह पितुर्नियो-गलाभेन वनगमनाज्ञालाभेन कृतार्थान् लब्धप्रयोजनान् कृतार्थत्वाद-शोच्या वयमित्यर्थः ॥ १२ ॥ ज० भ०

प्रस्थास्यमानावित्यादि। प्रस्थास्यमानौ गमिष्यन्तौ तौ रामलक्ष्मणौ उपसेदुषः उपसन्नान् जनानिदं वक्ष्यमाणम् ऊचतुः। किम्भूतान् शो-शुच्यमानान् पुनः पुनरतिशयेन शोचतः मूत्रस्तत्रेत्यादिना यङ् खेर्नुः प्रस्थास्यमानाविति प्रतिज्ञानिर्णयेत्यादिना संपूर्वात् तिष्ठतेर्मे समानः। उपसेदुष इति उपपूर्वात् सदेष्ठीपमवदिति क्वसुः वसोर्धसे इतीम् तृफ-लेति अत एत्वं खिलोपस्य वसोर्वः सेमपीति उः किमूचतुरित्याह इहा-भ्युदये वृद्धौ सत्यां किमस्मान् यूयं शोचत विधिनिमन्त्रणेत्यादिशब्दात्

**असृष्ट यो यस्य भयेष्वरक्षीद्यः सर्वदास्मानपुषत् स्वपोषम् ।**
**महोपकारस्य किमस्ति तस्य तुच्छेन यानेन वनस्य मोक्षः १३**
**विद्युत्प्रणाशं स वरं प्रनष्टो यद्वोढुशोषं तृणवद्विशुष्कः ।**
**अर्थे दुरापे किमुत प्रवासे न शासनेऽवास्थित यो गुरूणाम् १४**

विधावपूर्वप्रकाशने गी वर्तेति खेदादनुकम्पासम्भोपविस्मयामन्त्रितेष्वपीति वर्द्धमानः अभ्युदयः कुतः इत्याह पितुर्नियोगलाभेन वनगमनज्ञाला-भेन कृतार्थान् लब्धप्रयोजनान् अस्मानिति द्वयोरप्यस्मदो बहुत्वमिति परः स्मरते वास्त्राध्यात्मिकभावबहुत्वविवक्षया सीतान्वितत्वाद्वा ॥१२॥ भ०

असृष्टेत्यादि । असृष्ट जनितवान् सृजेर्दैवादिकस्यात्मनेपदित्वात् लुङि रूपम्, न तौदादिकस्य परस्मैपदित्वात् सृजिदृशोरित्यम् यस्य भयेषु सत्सु अरक्षीत् पालितवान् रक्षपालन इत्यस्य लुङि रूपम्, यः सर्वदा सर्वकालं सर्वैकान्येत्यादिना दाप्रत्ययः यश्चापुषत् पुष्टवान् स्वपो॰ षम्भनेनापुषत् पुषेर्लुङि रूपम् पुषादित्वादङ् स्वपुष इति णमुल् असं-वाव्ययेनेति समासः यथाविध्यनुप्रयोगश्च तस्य पितुः सम्बन्धिनो महो-पकारस्य किमस्ति मोक्षः प्रत्युपकारो नैवेति भावः केनेत्याह तुच्छेन असारेण वनस्य यानेन यातेर्भावे ल्युट् वनस्येति शेषसामान्ये षष्ठी तल्लक्षणायास्तु षष्ठ्या गत्यर्थकर्मणि चतुर्थ्या बाध्यमानत्वात् ॥१३॥ ज०म०

असृष्टेत्यादि । योऽस्मान् असृष्ट जनितवान् सृजौ शविसर्गे यस्य भयेषु अरक्षीत् रक्षेर्लुङ्घ रूपं यः सर्वदा सर्वकालम् अस्मान् स्वपो-षम् अपुषत् स्वेन धनेन पुष्टवान् स्वपोषमिति चर्मं वाभीच्छ्यो इत्यत्र वाशब्दस्य व्यवस्थावाचित्वाण्णम् तदनुप्रयोगस्त्वभिधानात् अपुषदिति शासलिदयुदिति ङः सर्वदा इति सर्वैकात्काले दाच् तस्य पितुः सम्ब-न्धिनो महोपकारस्य तुच्छेन लघीयसा वनस्य गमनेन किं मोक्षः प्रत्युपकारोऽस्ति नास्त्येवेति भावः वनस्येति दृषे कृतीति कर्मणि षष्ठी ॥ १३ ॥ म०

विद्युदित्यादि । अर्थे कार्य्यविशेषे दुरापेऽपि लब्धुं प्राप्येऽपि ईष-द्दुस्सुष्वित्यादिना खल् गुरूणां यच्छासनमादेशः तस्मिन् यो नावस्थित

पौरा निवर्त्तध्वमिति न्यगादीत्
तातस्य शोकापनुदा भवेत।
मा दर्शतान्यं भरतश्च मत्तो
निवर्त्तयेत्याह रथं स्म सूतम् ॥ १५ ॥

नावस्थितवान् अवपूर्वात्तिष्ठतेर्लुङ् समवेत्यादिना तङ् स्थाघ्वोरिच्चेति कित्त्वमित्वञ्चात्तुस्वादङ्गादिति सिचो लोपः। स वरं विद्युत्प्रणाशं प्रनष्टः विद्युदिवोत्पत्त्यनन्तरमेव विनाशं गतः उपमाने कर्मणि चेति चकारात् कर्तौजीवपुरुषयोरित्यतः कर्तृग्रहणानुवृत्तौ कर्तृवाचिनि विद्युच्छब्द उपपदे णमुल् उपसर्गादसमास इत्यादिना णत्वम्। यद्वेत्यथवा स जर्द्दशोषं तृणवद्विमुक्तः जर्द्द शुषीत्यादिना णमुल् उभयत्रासैवेत्यादिना समासः यथाविध्यनुप्रयोगस्य। किन्तु प्रवासे किं पुनः प्रवासविषये यच्छासनं तत्र तावदनवस्थितस्य सुतरामेव पूर्वोक्तं प्रयुज्यते ॥१४॥ज०म०

विद्युदित्यादि। दुरापे दुःखेन प्राप्येऽर्थे प्रयोजने गुरूणां शासने आज्ञायां यो न अवास्थित न तस्थौ स वरं विद्युत्प्रणाशं प्रनष्टो विद्युदिव उत्पत्त्यनन्तरमेव नष्टः चणवेत्यत्र वाशब्दस्य व्यवस्थावाचित्वात् कर्त्तुरुपमानात् नशो गतार्थत्वाणम् तदनुप्रयोगस्याभिधानात् प्राग्-वन्तो णा इति शान्तनशो णत्वम्। दुराप इति ईषद्दुःसोः खल् भावद्धे इति खल् अवास्थितेति अवपूर्वात्तिष्ठतेः प्रतिज्ञानिर्णय इति सं ज्ञां सिः स्थादोर्ङिःष्टोमिनणुरिति ङित्त्वस्य गुणाभावः झस्खादिति सेर्लोपः। शासनं राजदत्तोर्वीलेखाज्ञाशास्त्रशास्तिष्विति विश्वः। वरं मनागिष्टे देवकल्पितजामातोर्वरः श्रेष्ठे पुनस्त्रिषु। मनागिष्टे भवेत् क्लीवमव्ययं त्वाङस्तदव्ययमिति रन्तिदेवः। यद्वा अथवार्थे तृणवदूर्द्दशोषं विमुक्त जर्द्दशुष्क इत्यर्थः जर्द्दाच्छुषेर्गतार्थाञ्च तदनुप्रयोगस्याभिधानात् किन्तु सुप्रवासे सुकरप्रवासविषये यत् शासनं तत्र यो नावास्थित स किं पुनः सुतरामेव पूर्वोक्तं युक्तं किन्तुतेति क्वचित् पाठः ॥ १४ ॥ भ०

पौरा इत्यादि। हे पौराः! यथागतन्निवर्त्तध्वम्, विधौ लोट्। इति ताञ्न्यगादीत् उक्तवान् रामः गदेरतो हलादेरिति वृद्धिः इटीति

**ज्ञात्वेङ्गितैर्गत्वरतां जनानामेकां शयित्वा रजनीं स पौरः ।**
**रक्षन् वनेवासकृताद्भयात्तान् प्रातश्छलेनापजगाम रामः ॥ १६**

सिचो लोपः । तातस्य पितुः शोकापनुदाः शोकस्यापहर्त्तारो भवेत तुन्दशोकयोरित्यादिना कः । भवतेर्विधौ प्रार्थनायां वा लिङ् मध्यमपुरुषबहुवचनम् । भरतञ्च मत्तो मत्तः सकाशात् अस्मदः पञ्चम्यास्तसिल् प्रत्ययोत्तरपदयोश्चेति मदादेशः अन्यं भरतं मा दर्शत मा द्रष्टारः स्थः अपि तु योऽहं स एव भरतः स च प्रतिष्ठितः राज्यं पालयिष्यतीत्येव न्यगादीत् दृशेर्माङि लुङ् इरितोवेत्यङ् ऋदृशोऽङि गुणः निवर्त्तय रथमिति सूतञ्च सुमन्त्रमाह स्म लट् स्म इति लट् ब्रुवः पञ्चानामित्याहादेशः तिपो णप् ॥ १५ ॥ ज० म०

पौरा इत्यादि । हे पौराः ! पुरवासिनो यूयं निवर्त्तध्वं निवृत्ता भवत विधिनिमन्त्रणेति विधौ णी । तातस्यास्मत्पितुः शोकापहर्त्तारो यूयं भवेत विधिनिमन्त्रणेति विधौ प्रार्थनायां खी स्या यायुस्याममिति याशब्दस्य इत्वं शोकापनुदा इति कगणा इति इजुङत्वात् नुदेः कः । मत्तोऽन्यं भरतं यूयं मा दर्शत अहमिव सोऽपि पालयिष्यतीति ध्वनिः । दृशिरौप्रेक्षणे मायोगे टो इरत्नुबन्धात् शासुलिद्युदिति विकल्पितोङः दृस्वोर्गुरिति गुणः । मत्त इति अन्यारभ्येति पञ्चमी तन्त्रोरिति तस् बाहुल्यात् त्यदां टेरक्वाविति नष्टेर इत्युक्तं रामो न्यगादीत् उक्तवान् हसादेः सेम इति वृद्धिः त्वं रथं निवर्त्तयेति सूतं सारथिं सुमन्त्रमाह स्म की स्मेनातीत इति स्मेन योगेऽतीते की पञ्चातिप्पञ्चणव्याहश्चेति तिपो णप् ब्रुव आहादेशः ॥ १५ ॥ भ०

ज्ञात्वेत्यादि । निवर्त्तध्वमित्युक्ते ये नत्वानिवृत्ताः तेषां जनानां रामो गत्वरतां गमनशीलतां ज्ञात्वा गत्वरश्चेति निपातितः । तैरिङ्गितैरभिप्रायसूचकैश्चेष्टितैः इङ्गतेर्भावे निष्ठा वनेवास इति सप्तमीति योगविभागात् समासः शयवासवासिष्विति विभाषा सप्तम्या अलुक् । तेन कृतात् सिंहादिभयात् रक्षन् पालयन् तान् पौरान् सपौरः पौरैः सह एकां रजनीं शयित्वा कालाध्वनोरिति द्वितीया । शयित्वेति

अस्राक्षुरस्रं करुणं रुवन्तो
मुहुर्मुहुर्न्यश्वसिषुः कवोष्णम्।
हा राम! हा कष्टमिति ब्रुवन्तः
पराङ्मुखैस्ते न्यवृतन्मनोभिः॥ १७॥

नक्त्वासेडिति चिण्वप्रतिषेधात् गुणो भवति प्रातः प्रातःकाले छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम गतवान्॥ १६॥ ज० म०

ज्ञात्वेत्यादि। निवर्त्तध्वमित्युक्तेऽपि तत्रानिवृत्तानामिङ्गितैरभिप्रायबोधकैश्चेष्टितैर्गत्वरतां गमनशीलतां ज्ञात्वा रामः सपौरः पौरैः सह एकां रात्रिं शयित्वा तान् जनान् वनेवासकृताद्भयात् रचन् प्रातस्छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम इङ्गितैरिति इगिगत्यर्थे भावे क्तः गत्वरतामिति त्वरप् यस्य तस्य। रजनीमिति देशाध्वकालेति कर्मसंज्ञा। शयित्वेति सेमजुषेत्यादिना किंनिषेधात् शुर्घुङ इति गुणः वने वास इति अकालवाचिनः शयवासवासिष्विति सप्तम्या अलुगिति परः। स्वमते सरसिजमित्युदाहरता क्वचित् समासे विभक्तेरलुगिति सूचितम्॥ १६॥ भ०

अस्राक्षुरित्यादि। ते पौरा राममपश्यन्तः करुणं रुवन्तो विलपन्तः रुशब्द इत्यस्य शतरि रूपम्। अस्रम् अश्रु अस्राक्षुः सृष्टवन्तः सृजेस्तौदादिकस्य परस्मैपदिनः सिचि सृजिदृशोरित्यम् हलन्तलक्षणा वृद्धिः चोः कुः खरिचेति चर्त्वम्। मुहुर्मुहुः भूयो भूयः कवोष्णमीषदुष्णमन्तःसन्तापात् कवञ्चोष्णः इति कोः कवादेशः न्यश्वसिषुः श्वसेर्लुङ् ह्मन्तेत्यादिना श्वसेर्वृद्धिप्रतिषेधः अतो हलादेर्लघोरिति विकल्पस्य प्राप्तत्वात्, हा राम! हा कष्टम्! कृच्छ्रमिति ब्रुवन्तः पराङ्मुखैः येन गतो रामस्तेन गतैर्मनोभिरित्यर्थः तैः न्यवृतन् निवृत्तवन्तः वृद्भ्यो लुङीति परस्मैपदविकल्पात् द्युतादित्वादङ्॥ १७॥ ज० म०

अस्राक्षुरित्यादि। ते पौरा राममपश्यन्तः करुणं रुदन्तो विलपन्तः अस्रं नेत्रजलम् अस्राक्षुस्त्यक्तवन्तः रुदन्त इति रुदरोदे शतः। अस्राक्षुरिति सृजौशविसर्गे च्लौ सिः वदोऽकिदिति ऋकारस्य रः व्रज-

सूतोऽपि गङ्गासलिलैः पवित्वा सहाश्वमात्मानमनल्पमन्युः ।
ससीतयो राघवयोरधीयन् श्वसन् कदुष्णं पुरमाविवेश ॥१८॥

वदेति अनिमत्वात् त्रिः शच्छाजेति षङ् षढोः कः सि इति कः किदादिति षः कनुदिसिद्धेरिति अत उस् । कवोष्णम् अन्तःसन्तापात् कत्कवौ चाग्न्युष्ण इति ईषदर्थे कवादेशः । मुहुर्मुहुर्वारं वारं न्यश्वसिषुः निःश्वसितवन्तः ह्म्यादेः सेम इत्यादौ श्वसवर्जनात् श्वसेर्न त्रिः । हा राम ! हा कष्टमिति ब्रुवन्तः ते पौराः पराङ्मुखैरामदिगनुसारिभिरपूर्णकामत्वात् परिभूतैर्वा मनोभिरुपलक्षिताः सन्तो निवृत्ताः वृतेद्युतादित्वात् शासुविद्युदिति ङः तेनैव लोपोऽतोऽदेचोरित्याकारलोपः । साधनहेतुविशेषणेति विशेषणे तृतीया । हा रामेति हाशब्दयोगे षष्ठ्यर्थे द्वितीया अत्र तु तदभाव इति श्रीपतिः । सामान्येन हाशब्दं प्रयुज्य रामः सम्बुध्यते इति दौर्गा सम्बुद्धाविति हादियोगे द्वितीयानिषेधार्थं क्रमदीश्वरसूत्रं समते हाशब्दवाच्येन कष्टेन नात्र रामस्य योगो विवक्षितः किन्तु पौराणामेव तद्योगाभावान्न द्वितीया ॥१७॥ भ०

सूत इत्यादि । सूतोऽपि सुमन्त्रः सहाश्वमश्वैः सह अनल्पमन्युः प्रवृद्धशोकः राघवयोः रामलक्ष्मणयोः सरूपाणामित्येकशेषः ससीतयोः सीतासहितयोः अधीयन् स्मरन् इक्स्मरण इत्यस्य शतरि रूपं यणादेशः अधीगर्थेति कर्मणि षष्ठी श्वसन् कदुष्णं ईषदुष्णं कवञ्चोष्ण इति चकारात् कादादेशः गङ्गातटात्प्रतिनिवृत्य पुरमयोध्यामाजगाम आगतवान् गङ्गासलिलैः आत्मनो बाह्यमाभ्यन्तरञ्च पवित्रीकृत्य पूङश्चेति विकल्पे नेट् पूङः क्त्वाचेति कित्त्वप्रतिषेधात् गुणः ॥ १८ ॥ ज० म०

सूत इत्यादि । सूतः सारथिः सुमन्त्रोऽपि गङ्गाजलैः सहाश्वम् आत्मानं पवित्वा पवित्रीकृत्य सीतासहितयो रामलक्ष्मणयोरधीयन् स्मरन् कदुष्णं श्वसन् पुरमयोध्याम् आविवेश प्रविष्टवान् अनल्पमन्युः प्रवृद्धशोकः गङ्गासलिलैः पवित्वा इत्यनेन गङ्गापर्य्यन्तं तद्गमनं ध्वन्यते पूक्लिशुदित इम् इति विभाषत इम् सेमच्चुधेत्यादिना कित्त्वनिषेधाद् गुणः पूङ इति गुणः ससीतयोरिति सहः सो वेति बहुव्रीहौ सादेशः ॥

प्रतीय सा पूर्ददृशे जनेन द्यौर्भानुशीतांशुनिराकृतेव ।
राजन्यनक्षत्रसमन्वितापि शोकान्धकारक्षतसर्वचेष्टा ॥१९॥

राघवयोरिति समार्थैनेत्यादिना कर्मणि षष्ठी अधीयन्निति अधीकल-स्मृत्याम् इणवदिक इति वाक्यात् यिणोऽन्यणाविति यादेशः कचिन्न स्यात् आतिदेशिककार्य्यमनित्यमिति न्यायात् तेनात्र सुध्वेरन्वचीति इयादेशः कदुष्णमिति कत्कयौ चेति कोः कदादेशः ॥ १८ ॥ भं०

प्रतीयेत्यादि । जनेन रामानुयायिना प्रतीय प्रतिनिवृत्य पूर-योध्या ददृशे दृष्टा कर्मणि लिट् प्रतीय इति ईङ्कृताविव्यस्य रूपन्न पुन-रिणः तस्य हि तुकि प्रतीत्येति स्यात् । षत्वतुकोरसिद्ध इत्येकादेश-स्यासिद्धत्वात् प्रतीयुषा सा ददृशे इति पाठान्तरम्, प्रतिनिवृत्तेन सा पूर्ददृशे दृष्टेत्यर्थः । अस्मिन् पाठे तु उपेयिवानित्यादिना इणः क्वसौ रूपं द्रष्टव्यमतोपसर्गस्यातन्त्रत्वात् । शोकोऽन्धकार इव शोकान्धकारः तेन क्षता नीतानुष्ठेयकर्मणि चेष्टा परिस्पन्दो यस्यां पुरि सा तथोक्ता राज्ञोऽपत्यानि राजश्वशुराद्यत् राजन्याः क्षत्रियाः ये चाभावकर्मणो-रिति प्रकृतिभावः राजन्या नक्षत्राणीव तैः समन्वितापि द्यौः भानु-शीतांशुविनाकृतेव द्यौराकाशः यथा नक्षत्रसमन्वितापि रात्रौ भानु-चन्द्राभ्यां विनाकृता रहिता अन्धकारच्युतसर्वचेष्टा तद्वत् सापि भानु-चन्द्रस्थानीययोः राघवयोर्विरहात् ॥ १९ ॥ जं० जं०

प्रतीयेत्यादि । जनेन रामानुयायिना प्रतीय प्रतिनिवृत्य सा पूर-योध्या ददृशे कर्मणि ठी प्रतीयेति इयं गत्यामित्यस्य रूपं न त्विणस्त-नागमप्रसङ्गात् प्रतीयुषेति पाठे प्रतिपूर्वादिणः क्वसुः प्रतीयिवःशब्दस्य वसोर्वः सेमपीति सेमवस्योत्वं प्रतीयुषा प्रतिनिवृत्तेन जनेन पूर्ददृशे इति योजना । कीदृशः पूः शोकोऽन्धकार इव तेन क्षता नाशिता सर्वेषां चेष्टा सर्वा वा चेष्टा यस्यां सा तथा । राजन्याः नक्षत्राणीव तैः समन्वितापि पूः सूर्य्यचन्द्राभ्यां रहिता द्यौराकाशमिव यथा नक्षत्रसमन्वितापि द्यौः सूर्य्यचन्द्राभ्यां निराकृता अन्धकारक्षतसर्वचेष्टा तद्वत् सापि सूर्य्यचन्द्रतुल्ययोराघवयोरभावादिति भावः । राजन्य

विलोक्य रामेण विना सुमन्त्रमच्योष्ट सत्वान्नृपतिश्च्युताशः ।
मधूनि नैषीद् व्यलिपन्न गन्धैर्मनोरमे न व्यवसिष्ट वस्त्रे ॥२०

आसिष्ट नैकत्र शुचा व्यरंसीत्
कृताकृतेभ्यः क्षितिपालभाग्भ्यः ।

इति राज्ञां समूह इति गर्गादित्वात् यञ् । मन्वर्जानित्यादिना नलोपनिषेधः ॥ १९ ॥ भ०

विलोक्येत्यादि । रामेण विना सुमन्त्रं विलोक्य दृष्ट्वा नृपतिर्दशरथः सत्वात् स्वभावादच्योष्ट च्युतः च्यवतेरकर्मकाल्लुङ् गतोऽपि मद्वचनमतिक्रम्य आगच्छेद्राम इति अस्य या आशा सा च्युता यस्य स च्युताशः सत्वात् च्युतश्च मधूनि पातुं नैषीत् नेष्टवान् नेटीति सिचि वृद्धिप्रतिषेधः । गन्धैश्चन्दनादिभिर्नालिपत् लिपेर्लिपिसिचिह्वश्चेत्यङ् मनोरमे चेतोहारिणि वस्त्रे न व्यवसिष्ट न परिहितवान् वस आच्छादने इत्यस्मात् लुङ् अनुदात्तेत्त्वात्यङ् ॥ २० ॥ ज० म०

विलोक्येत्यादि । रामेण विना सुमन्त्रं विलोक्य नृपतिर्दशरथः सत्वात् स्वभावात् व्यवसायाद्वा अच्योष्ट च्युतः च्युतोऽकर्मकात् टी गतोऽपि रामः कदाचित् पौराणामनुरोधान्मद्वचनमतिक्रम्य आगच्छेदित्याशा च्युता यस्य स तथा मधूनि नैषीत् इषु इच्छायां टी गन्धैश्चन्दनादिभिर्न व्यलिपत् व्यक्तस्य ख्यातिलिपेति ङः मनोरमं वस्त्रद्वयं न व्यवसिष्ट न परिहितवान् वसलङ् आच्छादने सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुषु इति विश्वः ॥ २० ॥ भ०

आसिष्टेत्यादि । एकत्र स्थाने शुचा शोकेन नासिष्ट नोपविष्ट आसेरात्मनेपदिनो लुङ् । कृतानि चाकृतानि चेति क्तेन नञ् विशिष्टेनानञिति समासः असमापितेभ्य इत्यर्थः क्षितिपालं भजन्ते यानि दूतप्रेषणादीति तेभ्यः क्षितिपालभाग्भ्यः व्यरंसीत् विरतः विमुखोऽभूदित्यर्थः जुगुप्साविरामप्रमादार्थानामुपसंख्यानमिति अपादानसंज्ञा रमेर्लुङ् व्याङ्परिभ्यो रम इति तिप् यमिरमेत्यादिना सगिटौ । स

स चन्दनोशीरमृणालदिग्धः
शोकाग्निनागाद् द्युनिवासभूयम् ॥ २१ ॥

विचुक्रुशुर्भूमिपतेर्महिष्यः केशान् लुलुञ्चुः स्ववपूंषि जघ्नुः ।
विभूषणान्युन्मुमुचुः क्षमायां पेतुर्बभञ्जुर्वलयानि चैव ॥२२॥

एवम्भूतो राजा चन्दनोशीरमृणालैः शोकाग्निप्रतीकारभूतैर्दिग्ध उपलिप्तोऽपि उद्वेगाग्निनैव द्युनिवासभूयं देवत्वमगात् गतवान् दिहेर्निष्ठायान्दादेर्घातोर्घ इति घः झषस्तथोर्धोऽधः झषांजशझशीति जश्त्वम् दिवि निवासो येषां ते द्युनिवासाः देवाः तेषां भाव इति भुवो भावः इति क्यप् ॥ २१ ॥ ज० म०

आसिष्टेत्यादि । शुचा शोकेन एकत्र एकस्थाने न आसिष्ट आसनङ् उपवेशे । क्षताक्षतेभ्यः क्षितिपालभाग्भ्यः राजकर्त्तव्यदूतसम्प्रेषणादिभ्यो व्यरंसीत् विरतवान् घे षं परात्तु इत्यादिना विपूर्वात् रमेः षं यमरमेति इमसनौ क्षतावयवसम्बन्धात् क्षतम् अकृतावयवसम्बन्धात्अक्षतम् इति एकार्थत्वात् कर्मधारयः । अनञः क्तान्तस्य तेन सनञेति कर्मधारय इति परः क्षितिपालं भजन्ते इति ढाङ्गजवहेति विण् स ईदृशो राजा चन्दनोशीरमृणालैस्तापोपशान्तिसाधनैर्दिग्धो लिप्तोऽपि शोकाग्निनैव हेतुना द्युनिवासभूयं देवत्वमगात् दिवि निवासो यस्य इति विग्रहः निवसन्त्यत्रेति घञि द्योर्निवासो यस्येति वा उहस्युङिति ऊङ् तस्य भवनं भूहनं क्यविति भुवो भावे क्यप् । दिग्ध इति दिह उपलेपे क्तः दादेर्घः ढभात्तथोरिति तस्य धः झपझसोरिति धस्य गः उशीरं वीरणमूलम् ॥ २१ ॥ म०

विचुक्रुशुरित्यादि । भूमिपते राज्ञो महिष्यः पत्न्यः अविमह्याष्टिषच् इत्यौणादिकः टिषच् । विचुक्रुशुः रुदितवत्य इत्यर्थः हा स्वामिन्निति तथा केशान् लुलुञ्चुः उत्पाटितवत्यः स्ववपूंषि स्वशरीराणि जघ्नुस्ताडितवत्यः विभूषणानि हारादीनि उन्मुमुचुर्मुक्तवत्यः क्षमायाम्भुवि पेतुः वलयानि अवैधव्यचिह्नानि बभञ्जुः चूर्णितवत्यः एते लिडन्ताः उपेरेत्ताभ्यासलोपौ ॥ २२ ॥ ज० म०

ताः सान्त्वयन्ती भरतप्रतीक्षा
तं बन्धुता न्यक्षिपदाशु तैले।
दूतांश्च राजात्मजमानिनीषून्
प्रास्थापयन्मन्त्रिमतेन यूनः॥ २३॥

विचुक्रुशुरित्यादि। भूमिपतेर्दशरथस्य महिष्यः विचुक्रुशुः क्रन्दितवत्यः हाहा स्वामिन्निति नृपमाहूतवत्यो वा यद्यपि कृताभिषेका महिषीत्यमरः सा चैकैव तथाप्युपचारात् पत्नीसात्वेऽपि तिसृणामेव कृताभिषेकत्वमिति केचित्। केशान् लुलुञ्चुः उत्पाटितवत्यः स्वात्वयपितृकिहेति अकित् पक्षे उङ् नलोपाभावः स्ववपूंषि जघ्नुः ताड़ितवत्यः विभूषणानि हारादीनि उन्मुमुचुः त्यक्तवत्यः क्षमायां भुवि पेतुः तृफलेति पतेरत एत्वं खिन्नोपत्य वलयानि अवैधव्यलक्षणानि बभञ्जुः सर्वत्र वा उस्॥ २२॥ म०

ता इत्यादि। बन्धुता बन्धुसमूहः ग्रामजनबन्धुसहायेभ्यस्तल्। ता महिषीः सान्त्वयन्ती संस्थापयन्ती सान्त्वंकरोतीति णिच्। तं दशरथं मृतं तैले न्यक्षिपत् निक्षिप्तवती आशु शीघ्रं माभूत् पूतिरिति क्षिपेर्लुङ् पुषादित्वादङ् कस्मात्तन्नक्षिपदित्याह भरतप्रतीक्षा तेन संस्कारः कर्त्तव्य इति वा भरतं प्रतीक्षते ईक्षिक्षमिभ्याञ्चेत्युपसङ्ख्यानाण्णः। दूतान् प्रास्थापयत् प्रहितवती राजात्मजं भरतमानिनीषून् आनेतुमिच्छून् अन्यथा कैकेयी वैमुख्याद्भरतेऽपि वैमुख्यात् दूता अपि नानेतुमिच्छन्ति तत्रापि मन्त्रिमतेन न स्वमतेन यूनः तेषां गन्तुं समर्थत्वात्॥ २३॥ ज० म०

ता इत्यादि। बन्धुता बन्धुसमूहः ता महिषीः सान्त्वयन्ती आश्वासयन्ती तं मृतं दशरथं शीघ्रं पूतिगन्धाशङ्कया तैले न्यक्षिपत् क्षिप० पुषादित्वात् कुतो न्यक्षिपदित्याह भरतप्रतीक्षा भरतं प्रतीक्षते इति पचादित्वादच् भरते प्रतीक्षा यस्या इति वा दूतांश्च मन्त्रिणां मतेन बुद्ध्या कैकयीं प्रति क्रोधेन भरते वैमुख्यान्न तु स्वेच्छया प्रास्थापयत् प्रहितवती राजात्मजं भरतम् आनिनीषून् आनेतुमिच्छून् ये स्वत एव

सुप्तो नभस्तः पतितं निरीक्ष्य-
श्चक्रे विवस्वन्तमधःस्फुरन्तम्।
आख्यदसन्मातृकुले सखिभ्यः
पश्यन् प्रमादं भरतोऽपि राज्ञः॥ २४॥
अभिश्रवन्नात्ययिकं तमेत्य
दूता यदार्थं प्रथियासयन्तः।

भरतमानेतुमिच्छन्ति तत्प्रस्थापनं युक्तमिति भावः यूनस्तरुणान् शीघ्र-गमनसामर्थ्यात् बन्धुतेति जनखलेति समूहार्थे तः सान्त्वयन्तीति सा-न्त्वतृक सान्त्वने णत्वः॥ २२॥ भ०

सुप्त इत्यादि। भरतोऽपि मातृकुले वसन् सखिभ्यो मित्रेभ्यः आख्यत् कथितवान् ख्यातेर्लुङ् अस्यतिवक्तीत्यादिनाऽङ् क्रियाग्रहणं कर्त्तव्यमिति सम्प्रदानसंज्ञायां चतुर्थी। किमाख्यदित्याह अहं सुप्तः सन् नभस्तो नभस्तलात् आकाशात्पतितं विवस्वन्तमादित्यं स्फुरन्तमुज्ज्व-लन्तंनिरीक्षांचक्रे निरीक्षितवान् इजेरिजादेरित्याम्। उत्तमविषये सुप्त-प्रमत्तावस्थायां चित्तव्याक्षेपात् परोक्षे लिट् पश्यन् विलोकयन् राज्ञो दशरथस्य प्रमादमनिष्टम्॥ २४॥ ज० म०

सुप्त इत्यादि। भरतोऽपि मातृकुले वसन् सन् राज्ञो दशरथस्य प्रमादम् अनिष्टं पश्यन् वितर्कयन् सखिभ्यो मित्रेभ्यो आख्यत् कथित-वान् वक्त्रस्येति ङः तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थस्तत्र चतुर्थीति परः। किमाख्यदित्याह सुप्तोऽहं नभस्त आकाशात् पतितम् अधः-स्फुरन्तं विवस्वन्तं सूर्यं निरीक्षाञ्चक्रे दृष्टवानस्मि अत्रादि चित्तस्य वि-क्षेपे ठीति परः स्वमते नियमाभावात् भवत्येव सुप्तस्य तादृशसूर्यदर्शनेन चित्तविक्षेपार्थोऽपि गम्यत एव ईक्षङ् दर्शनेर्विजादीत्याम्॥ २४॥ भ०

अभीत्यादि। दूता एत्य आगत्य भरतमातृकुलमित्यर्थः। आङ्-पूर्वादिणः क्त्वाप्रत्ययस्य ल्यपि तुकि च रूपम्। यदा तं भरतमर्थं वचन-मभिश्रवन् श्रावितवन्तः अश्रयतेऽनेनेति णिच् घञ् च श्रृणोतेरर्थं ना-

आंहिष्ट जाताञ्जिहिषस्तदासा-
वुत्कण्ठमानो भरतो गुरूणाम् ॥ २५ ॥

श्रु ङि चङि द्विर्वचनम्, स्रवतिशृणोतीत्यभ्यासस्येत्वम् । आत्ययिकम् अत्ययो विनाशः स प्रयोजनमस्येति तदस्य प्रयोजनमिति ठञ् पिता ते स्नानस्थान्द्रष्टुमिच्छतीति आत्ययिकं वचनं तमिति गतिबुद्धीत्यादिना कर्मसंज्ञा शृणोतेः शब्दकर्मत्वात् अर्थमिति कर्तुरीप्सिततममित्यनेन प्रयियाययन्तः प्रयातुमिच्छन्तो भरतं प्रयोजितवन्तः सन्नन्तस्यन्तोऽयं तदा असौ भरतो जाताञ्जिहिषः जाता अञ्जिहिषा गमनेच्छा यस्य सः अंहिगतौ इदितो नुम् तस्मादंहितुमिच्छतीति सन् इट् अजादे-र्द्वितीयस्येति हिशब्दो द्विरुच्यते नकारस्य नन्द्रा इति प्रतिषेधः अभ्यासकार्यम् अनुस्वारपरसवर्णौ अः प्रत्ययादित्यकारप्रत्ययः टाप् । आंहिष्ट गतवान् तस्मादेवात्मनेपदिनो लुङ् उत्कण्ठमानः स्मरन् मठि-कठिशोक इत्यस्मादात्मनेपदिनो रूपम् अनेकार्थत्वाद्धातूनाम् । गुरूणां पितामहादीनाम् अधीगर्थेति कर्मणि षष्ठी ॥ २५ ॥ ज० म०

अशिश्रवन्नित्यादि । दूता एत्य आगत्य अर्थात् भरतमातृकुलं तं भरतम् अत्ययरूपम् अर्थं वस्तु यदा न अशिश्रवन् श्रावितवन्तः प्रयि-याययन्तः भरतं गमनेच्छां कारयन्तः तदा असौ भरतः जाता अञ्जि-हिषा गमनेच्छा यस्य तादृशः सन् गुरूणां पित्रादीनाम् उत्कण्ठमानः स्मरन् आंहिष्ट गतवान् अशिश्रवन्निति श्रुश्रवणे जिः प्रेरणे इति जिः जिश्रित्यङ् धुर्द्विर्ध्यङीति द्विः खेः सन्वत् स्रु श्रु द्रु प्रु प्लु च्युङां वाति खेरकारस्य इत्वं ञिणित्यन्ते जुङ्तोरिति त्रिः यवायवायाव इति आव् अरङ्ग्रङः स्वः ञेर्लोपः घोऽञौञेरिति प्रयोज्यस्य कर्तुः कर्मत्वम् आत्ययिकमिति अत्ययो विनाशः विकारसंबंधेन ष्णिकः । अर्थोऽभिधेये शब्दानां धनकारणवस्तुषु । प्रयोजने निवृत्तौ च विषये च प्रयुज्यते । केचित्तु अर्थ्यते अनेनेत्यर्थं वचनम् आत्ययिकम् अनर्थसम्बन्धीत्यर्थः अर्थमित्यत्र अस्तुमिति पाठे अस्तु भरतं प्रयियाययन्तः आत्ययिकं राज्ञो मरणम् । एत्येति व्यादनञ इति आङ्पूर्वादिणः ल्यप् तस्य तन्

बन्धूनशङ्किष्ट समाकुलत्वादासेदुषः स्नेहवशादपायम् ।
गोमायुशारङ्गगणाश्च सव्यङ्नायासिषुर्भीममरासिषुश्च ॥२६॥

पितीति तन् प्रथियासयन्त इति याते: सनन्तात् ञिः शलः आंङ्किष्टेति अङ्किङ्गतौ इदित्वान्नुन् जाताञ्जिङ्घिषः इति अंहेः सन इम् नाजन्तादेराद्विहिरिति स्यादौ नवद्रोये इति च निषेधात् आदिनकारस्य न द्वित्वं संस्त्याद इति अः कठिङ् आध्याने इष्टानवाप्तौ तदवाप्तयेऽभिलाष उत्कण्ठेत्यन्ये । गुरूणामिति समार्थेनेत्यादिना कर्मणि षष्ठी ॥२५॥ भ०

बन्धूनित्यादि । दुःस्वप्नदर्शनेन अकस्माच्च पितृदूतागमनेन स्नेहवशात् चेतसि समाकुलत्वाद्भरतो बन्धूनशङ्किष्ट शङ्कितवान् उत्प्रेक्षितवानित्यर्थः शङ्कतेरात्मपदिनो लुङि रूपम् । कीदृशान् आसेदुषः अपायं विनाशं गतवतः भाषायां सदवसेत्यादिना क्वसुः अतएकहल्मध्येत्वाभ्यासलोपौ । अस्मद्बन्धुः कश्चित् व्यसनमापन्नोऽभूदिति गच्छतस्तस्य गोमायुशारङ्गगणाः शृगालमृगगणाश्च सव्यगनुकूलन्नायासिषुः नागताः याते‌र्लुङि यमरमेति सगिटौ शृगालाः प्रदक्षिणं गताः मृगाश्च सव्यमित्यर्थः । भीममुद्वेगकरमरासिषुः रसिताः रसेः परस्मैपदिनो लुङ् अतो हलादेरिति वृद्धौ रूपम् न रासेः तस्यात्मनेपदित्वात् ॥ २६ ॥ ज० म०

बन्धूनित्यादि । दुःस्वप्नदर्शनात् अकस्मात् पितृदूतागमनाच्च स्नेहवशात् चेतसि समाकुलत्वात् गच्छन् भरतो बन्धून् अपायं विनाशम् आसेदुषः प्राप्तान् अशङ्किष्ट शङ्कितवान् शकिङ्लाससशङ्कयोः गच्छतस्तस्य गोमायुशारङ्गगणाः शृगालहरिणसमूहाः सव्यगनुकूलं नायासिषुः नागतवन्तः शृगालाः प्रदक्षिणं गता इत्यर्थः । यातेर्व्यां यमरमेतीमुसनौ अनुस्विद्वेरिति अन् उस् भीमं भयानकं यथा स्यात्तथा अरासिषुः शब्दं कृतवन्तः रसशब्दे हसादेः सेम इति विः अन् उस् । चातके हरिणे पुंसि सारङ्गः शबले त्रिष्विति दन्त्यादौ रभसः । शृणोतेर्ञ्ज्रन्तादङ्गः औणादिक इति तालव्यादि केचिदाहुः ॥ २६ ॥ भ०

स प्रोषिवानेत्य पुरं प्रवेच्यन्
शुश्राव घोषं न जनौघजन्यम् ।
आकर्णयामास न वेदनादान्
न चोपलेभे वणिजां पणायाः ॥ २७ ॥

स इत्यादि । स भरतः प्रोषिवान् मातामहकुलात् प्रोषितः सन् भाषायामित्यादिना क्वसुः यजादित्वात् सम्प्रसारणं द्विर्वचनम् वस्वेकाजाद्घसामिति इट् । पुरमयोध्यामेत्य आगत्य प्रवेच्यन् गृहमित्यर्थात् पुरं प्रविष्टः घोषं शब्दञ्च शुश्राव न श्रुतवान् जनौघजन्यं जनसमूहेन जन्यमुत्पाद्यं तत्किमश्चिचतियतीति जनैर्यत् । तथा वेदध्वनीन् नाकर्णयामास न श्रुतवान् प्रातिपदिकाद्धात्वर्थे इति णिच् तदन्तात् लिड्यामि अपामन्तेत्ययादेशः न चोपलेभे नोपलब्धवान् वणिजां पण्यजीविनां पणायान् पणलाभान् कथञ्चिद्रूपव्यवहारस्योच्छिन्नत्वात् पणन्ते इति वणिजः पणेरिजादेश्चैव इत्यौणादिकः पण्यन्तः इति पणाः नित्यं पणः परिमाण इत्यप् व्यवहर्त्तव्याः । ईयन्ते प्राप्यन्ते वणिग्भिरित्ययाः लाभा एरजिति इणः कर्मणि अच् पणानामयाः पणायाः तान् । पणायामिति पाठान्तरं वणिजां वस्तूनि संव्यवहारविषयाणि नोपलेभे संव्यवहारकुशलाः साधव इति गुपादिषु स्तुत्यर्थपणिना साहचर्य्यात् पणेरपि तदर्थादेवायप्रत्ययः अः प्रत्ययादित्यकारः टाप् । वणिजां प्रलापानिति तृतीयः पाठः वणिक्प्रसारकलहानित्यर्थः ॥ २७ ॥ ज० म०

स इत्यादि । स भरतः प्रोषिवान् मातामहकुले कृतप्रवासस्तत एत्यागत्य पुरमयोध्यां प्रवेच्यन् प्रवेशं करिष्यन् जनसमूहजन्यं घोषं शब्दं न शुश्राव । प्रोषिवानिति प्रपूर्वाद्वसौ ऐनिवासे इत्यस्मात् क्वसुः यहस्वपाद्योरिति जिः द्वित्वं वसोर्घसेकाजितोम् प्रवेच्यन्निति विशौ प्रवेशे स्यटः जन्यमिति जङ्गोः कभाव इत्युक्तेः कर्त्तरि घ्यण् जनौघाज्जातमित्यर्थः किंवा तव्यानीयया इति अन्नन्ताज्जनेः कर्मणि यः वेदध्वनिं न आकर्णयामास न श्रुतवान् कर्णतक्भिदि वणिजां पणोप-

चक्रन्दुरुच्चैर्नृपतिं समेत्य तं मातरोऽभ्यर्णमुपागतास्राः ।
पुरोहितामात्यमुखाश्च योधा विवृद्धमन्युप्रतिपूर्णमन्याः ॥२८॥

जीविनां पणायाः क्रयविक्रयव्यवहारान् न च उपलेभे ददर्श पणङ् व्यवहारे स्तुतौ कम क्तेत्यादिना आयः घंस्त्याद इति क्तः क्रीतञ्च पणायानिति पाठे पण्यते इति पणाः घञबलनटोषे इत्यल् आयो लाभः इमान् व्यवहर्त्तव्यलाभानित्यर्थः वणिगापणायामिति पाठे वणिजामापणो निषद्या तत्तायानित्यर्थः आपणस्तु निषद्यायामित्य-मरः ॥ २७ ॥ म०

चक्रन्दुरित्यादि । तं भरतं गृहगतमभ्यर्णं समीपीभूतं समेत्य ढौकित्वा मातरः कौशल्याद्याः नृपतिमुच्चैरत्यर्थं चक्रन्दुः क्रन्दितवत्यः हा स्वामिन् ! हा राजन् ! क्व गतोऽसीति उपागतं प्राप्तमस्रमश्रु-जलं यासां ताः एवंविधाः युध्यन्त इति योधाः पचादित्वादच् । ते च तं समेत्य नृपतिं चक्रन्दुः पुरोधीयत इति पुरोहितः निष्ठा दधातेर्हिः । अमाशब्दः सहार्थे सह राज्ञा कार्य्येषु भवतीत्यमात्यः अमेहक्वतसित्रेभ्यः इति निपातात् पुरोहितामात्यौ मुखं प्रधानं येषां योधानान्ते पुरोहितामात्यमुखाः अमात्यस्याजाद्यदन्तत्वेऽपि पुरोहित-स्याभ्यर्हितत्वात् पूर्वनिपातः विवृद्धमन्युना शोकेन प्रतिपूर्णे मन्ये गल-धिरे येषामिति ॥ २८ ॥ ज० म०

चक्रन्दुरित्यादि । तं भरतम् अभ्यर्णं समीपवर्त्तिनं समेत्य प्राप्य मातरः कौशल्यादयो नृपतिं चक्रन्दुः तमुद्दिश्य सशब्दं रुरुदुरित्यर्थः उपागतम् अस्रं नेत्रजलं यासां तास्तथा अभ्यर्णमित्यभिपूर्वस्यार्दधातोः क्तान्तस्य रूपं क्षुब्धवाढेदिना निपातितं, युध्यन्ते इति योधाः पचा-दित्वादच् तेऽपि तं समेत्य चक्रन्दुः पुरोऽग्रे धीयते स्थाप्यते इति पुरो-हितः धाञो हिः अमाशब्दः सहार्थे सह राज्ञा कार्य्येषु भवति अमात्यः त्यब्नेर्ध्रुवे इति त्यः पुरोहितामात्यौ मुखं प्रधानं येषां योधानां ते तथा ते जना योधाश्चेति वा विवृद्धेन मन्युना शोकेन प्रतिपूर्णाः मन्या येषां यासां वा हान्तशान्तपूर्णेति निपात्यते पश्चाद्ग्रीवा शिरा मन्या इत्यमरः ॥ २८ ॥ भ०

दिदृक्षमाणः परितःससीतं रामं यदा नैक्षत लक्ष्मणञ्च ।
रोरुद्यमानः स तदाभ्यपृच्छद्यथावदाख्यन्नथ वृत्तमस्मै ॥२९॥
आवद्धभीमभ्रुकुटीविभङ्गः शेश्वीयमानाकणरौद्रनेत्रः ।
उच्चैरुपालभ्य स कैकयीञ्च शोके महत्याविरतं न्यमाङ्क्षीत् ॥३०॥

दिदृक्षमाण इत्यादि । स भरतो यदा ससीतं रामं लक्ष्मणञ्च परितः सर्वतो दिदृक्षमाणः द्रष्टुमिच्छन् ज्ञाश्रुस्मृदृशां सन इति तङ् हलन्ताच्चेति सनः कित्त्वे सृजिदृशोरित्यम् न भवति । नैक्षत न दृष्टवान् तदा रोरुद्यमानः अत्यर्थं रुदन् यङि रूपम् अभ्यपृच्छत् पृष्टवान् ऐक्षताभ्यपृच्छदिति भूतसामान्यविवक्षया लङ् अन्यथा कवेः परोक्षत्वात् लिट् स्यात् अथैतस्मिन् प्रस्तावे यथावत् यादृशं वृत्तं भूतं तथावत् आख्यन् कथितवन्तः पुरोहितामात्यमुख्या अस्मै भरताय । ख्यातेरस्यतीत्यादिना लेरङ् आतो लोपः ॥ २९ ॥ ज० म०

दिदृक्षमाण इत्यादि । स भरतः ससीतं रामं लक्ष्मणञ्च परितः सर्वतः दिदृक्षमाणः द्रष्टुमिच्छन् यदा न ऐक्षत तदा रोरुद्यमानो भृशं रुदन् अभ्यपृच्छत् पृष्टवान् अथानन्तरं यादृशं वृत्तं तादृशं तस्मै भरताय आख्यन् कथितवन्तः अर्थात् पुरोहितामात्यमुख्या योधाश्च दिदृक्षमाण इति दृशेः सन् गुणोनिमीति गुणनिषेधः स्मृदृशामनुज्ञा इति स ईक्षङ् दर्शने धौ रुदेर्भृशतरत्वे त्यादिना यङ् अक्ष्णोगुणौ शीघ्रे वी अहस्व-पायोरिति ञिः ख्यातेर्वक्त्रर्थस्येति ङः तादर्थ्ये चतुर्थी यदभिप्रेत्य प्रात्यर्थं इति चतुर्थीति परः ॥ २९ ॥ भ०

आवद्धेत्यादि । स भरत उच्चैर्महता ध्वनिना कैकयीञ्च मुहुर्मुहु-र्भूयोभूय उपालभ्य उपालब्धवान् उपाङ्पूर्वो लभिरुपालम्भे वर्त्तते तस्मा-दात्मनेपदिनो झलोझलीति सिज्लोपे धत्वजश्त्वे रूपम् शोके च महत्यां अविरतमजस्रं न्यमाङ्क्षीत् निमग्नः मस्जेर्लुङि मस्जिनशोर्झलीति नम् तत्रापि मस्जेरन्त्यादिनियमात् नुम् संयोगादिलोपः हलन्तलक्षणा वृद्धिः हल्ग्रहणं समुदायप्रतिपत्त्यर्थमित्युक्तम् । कीदृशः आवद्धभीमभ्रु-कुटीविभङ्गः भ्रमेश्च डुरित्यौणादिकोडुः कुडेश्चीतिकृदि भावे अणादिभ्य

नृपात्मजौ चिक्लिशतुः ससीतौ
ममार राजा विधवा भवत्यः।
शोच्या वयं भूरनृपा लघुत्वं
कैकय्युपज्ञं बत बन्धनर्थम् ॥ २१ ॥

इती: तदन्तात् कृदिकारादिति ङीष् भ्रुवोः कुटी कौटिल्यं भ्रुकुटी इको ह्रस्वोऽङ्यो गालवस्येति ह्रस्वः तस्या विभङ्गो विरचनम् आबद्धः कृतः प्रयत्नेनायासेनेन भीमो भयानको भ्रुकुटीविभङ्गो येन यस्य वेति शोच्यमाने अत्यर्थं स्रूयमाने अरुणे लोहिते रौद्रे भयानके नेत्रे यस्य सः श्वयतेर्यङि विभाषाश्वेरिति वा सम्प्रसारणम् तदुपालम्भमाह ॥ २० ॥ जं० म०

व्याबद्धेत्यादि। स भरतः उच्चैर्यथा स्यात्तथा हठवारं वारं कैकयीम् उपालभ्य निर्भर्त्सितवान् शोकोऽविरतं व्यसाक्षीत् निमम्ज कीदृशः आबद्धः कृतो भयङ्करो भ्रुकुटीविभङ्गो येन स तथा पुनः किम्भूतः शोच्यमाने अत्यर्थविवृद्धे अरुणे रक्ते रौद्रे भयानके नेत्रे यस्य स तथा भ्रुवोः कुटी कौटिल्यं वेकस्यचार्थेऽचे इत्यत्र व्यवस्थितविभाषायौं वाशब्दस्तेन सञ्ज्ञातिरिक्तस्थाने क्वचित् समासे ह्रस्वः स्यादिति देवीदासचक्रवर्त्तिना व्याख्यातं तेनात्र प्राचिको भ्रुवो ह्रस्वः मनीषादित्वाद्वा टु ओश्वितति इन्धोः भूतक्तेति यङ् खेर्गुः शोऽज् स्वरे उपाङ्पूर्वाक्षभेर्गर्हायां टौ तन् अवस्याजभ्रसीति सेर्लोपः टुमस्जोशचुद्धो ञ्यं सिः अनिस्त्वात् व्रजवदेति व्रिः स्यादेः सोलोपः चङिति कुङ् किलादिति यः नुण् रध इति नुण् [म्नोर्नुरित्यनुस्वारः जपेजम्नोरिति ङः ॥ २० ॥ भ०

नृपेत्यादि। नृपात्मजौ रामलक्ष्मणौ ससीतौ सीतया सह चिक्लिशतुः क्लिष्टौ ममार मृतो राजा म्रियतेर्लुङ्लिङोश्चेति नियमात्तङोऽभावः। विधवाः धवो भर्त्ता तेन विना भवत्यो जाताः शोच्याः शोचनीया वयम् अयशोभाजनत्वात् कर्हलोऽर्थं तु शङ्क्या इति पाठान्तरम् शङ्कनीया वयम् एतदुक्ततोऽयं प्रयोग इति भूश्चान्नृपा न विद्यते

नैतन्मतं मत्कमिति ब्रुवाणः
सहस्रशोऽसौ शपथानशप्यत् ।
उद्वाश्यमानः पितरं सरामं
लुठ्यन् सशोको भुवि रोरुदावान् ॥ २२ ॥

नृपो यस्यामिति नञोऽस्त्यार्थानामिति बहुव्रीहिः । लघुत्वं राज्य-प्रार्थनालक्षणं कैकय्युपज्ञम् कैकय्याः प्रथमतो ज्ञातं नान्यस्य कस्यचित् पूर्वं ज्ञातम् उपज्ञायत इत्युपज्ञम् आतश्चोपसर्ग इति स्त्रियामङ् लक्ष-णया षष्ठी कैकय्या उपज्ञेति समासः । उपज्ञोपक्रममिति नपुंसकता वत कष्टम्बह्वनर्थम्बहुदोषं क्लेशमरणाद्यनिष्टानां सम्भवात् भरतकृत एवायं प्रयोग इत्येतत्परिहरन्नाह ॥ २१ ॥ ज० म०

नृपात्मजावित्यादि । सीतासहितौ नृपात्मजौ रामलक्ष्मणौ चिक्लिशतुः दुःखितौ क्लिशुङ् उपतापे राजा ममार मृङ्प्रीडे इति नियमात् प । धवो भर्त्ता तेन विहीना भयत्यो जाताः मातृगणं सम्बोध्योक्तं कैकय्युपालम्भोऽयं वयं शोच्याः अयशोभाजनत्वात् शो-काहीः तेष्वाः शक्यार्हे इति अर्हार्थे ण्यत् इगन्तत्वात् चजोः कुघि-ण्यिति सेमुत्कवर्जनात् कत्वं किंवा आवश्यकत्वविवक्षया नावश्यके इति निषेधः शक्या इति पाठे एतदुक्ततोऽयं प्रमाद इति लोकैः शङ्क्या वितर्कनीया भूर्नृपा राजशून्या लघुत्वं राज्यप्रार्थनरूपं नीचकर्म कैकय्युपज्ञं कैकय्याः सकाशात् प्रथमत उपलब्धं नान्यतः केनापि दृष्ट-मित्यर्थः उपज्ञायत इत्युपज्ञा क्विप् । उपज्ञोपक्रमान्तश्च तदादित्व-प्रकाशने इत्यमरवचनात् नपुंसकत्वं लिङ्गस्य लोकाश्रयत्वात् बह्वनर्थं बहवोऽनर्था दोषा यत्र तत्तया वत इति खेदे ॥ २१ ॥ भ०

नैतदित्यादि । यदेतत् कैकय्यनुष्ठितं मतमभिप्रायः न मदुक्ततन्त्वत् नाहमस्य आमणीर्न प्रभुरिति अस्मच्छब्दास्य एषां आमणीरिति कन्-प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्य मादेशः मामम्मतादनुष्ठितमनयेत्यर्थः इत्येवं ब्रुवाणः सहस्रशो बहुवारानसौ भरतः शपथान् सम्प्रत्ययकार-णवचनानि अशप्यत् कृतवान् अनेकार्थत्वाद्धातूनां शपेर्दैवादिकस्य उभ-

तं सुस्थयन्तः सचिवा नरेन्द्रं
दिधक्षयन्तः समुदूहुराराात् ।
अन्त्याहुतिं हावयितुं सविप्राः
चिचीषयन्तोऽध्वरपात्रजातम् ॥ ३२ ॥

यपदिनोलु ङि रूपम् उद्वाह्यमानः आह्वयन् वाक्शब्दे दैवादिकः अनुदात्तेत् पितरं सरामं हा तात ! हा रामेति लुठन् भुवि लुठन् लुटविलोड़ने दैवादिकः परस्मैपदी सशोक इति शाब्दपरिहारार्थम् रोरुदावान् अत्यर्थं रोदनं कुर्वन् यङन्तात् अः प्रत्ययादित्यकारः अतो लोपः यस्य हलः स्त्रियामतष्टाप् सा विद्यते यस्येति मतुप् ॥३२॥ज०म०

स्वदोषं परिहरन्नाह । नैतदित्यादि । यदेतत् कैकय्या कृतं तन्न मत्कं मत्स्वामिकं मत्कर्तृकं मतम् अहमस्य प्रभुरित्यर्थे विकारसंघेत्यादिना कः इति ब्रुवाणोऽसौ भरतः सहस्रशो बहुवारान् शपथान् प्रत्ययकारणानि अशप्यत् उक्तवान् शपयौज आक्रोशे आक्रोशो भाषणं धातूनामनेकार्थत्वात् शपिरत्र करोत्यर्थो वा । सरामं पितरम् उद्वाह्यमानः, हा राम ! हा तातेति आह्वायन् ङवाञ्छब्दे भुवि लुठन् लुटविलोड़ने रोरुदावान् अत्यर्थरोदनयुक्तः रुदेर्यङन्तात् संख्यादे इतिअप्रत्ययः ततोवतः हेतमाह सशोक इति सहस्रशब्दात् सङ्ख्रकार्थादिति चशम् ॥ ३२ ॥ भ०

तमित्यादि । सचिवा अमात्याः कार्य्येषु सचन्ते समवयन्तीति सचेरिवन्नित्यौणादिक इवन् तं भरतं सुस्थं सुस्थयन्तः कुर्वाणाः तत्करोतीति णिच् नरेन्द्रं दशरथं समुदूहुः उद्वाहितवन्तः शिविकायामारोप्य वहिरन्त भवितव्यर्थोऽत्र द्रष्टव्यः यजादित्वात्सम्प्रसारणम् आरात् नातिदूरे दिधक्षयन्तः दग्धुमिच्छन्तं भरतं प्रयोजितवन्तः दहेः सनि दातेर्द्धातोर्घः भषभावत्वे प्रयोजकव्यापारे णिच् अन्ते विनाशे भवा या आहुतिः दिगादित्वाद्यत् । तामन्त्याहुतिं हावयितुमग्नौ प्रक्षेपयितुं सविप्राः ब्राह्मणैः सहिताः सचिवाश्चिचीषयन्तः चेतुमिधातुमिच्छन्तः प्रयोजित-

उदक्षिपन् पट्टदुकूलकेतू-
नवादयन् वेणुमृदङ्गकांस्यम्।
कम्बूंश्च तारानधमन् समन्तात्
तथानयन् कुङ्कुमचन्दनानि॥ ३४॥

वन्तः किन्तत् अध्वरपात्रजातं यज्ञोपयोगिपात्राणां स्रुवादीनां समूहम्॥ ३३॥ ज० म०

तमित्यादि। विप्रसहिताः सचिवाः अमात्यास्तं भरतं सुखयन्तः सुखं कुर्वन्तः नरेन्द्रं दशरथं समुदूहुः वहेरन्तर्भावितण्यर्थात्। शिबिकायामारोप्य उद्वाहितवन्त इत्यर्थः विप्राणां वहनानौचित्यात् वहेः अौप्रापखे ठी व्ययघहेति जिः ग्रहसपाद्योरिति प्रकृतेर्जिः सुखयन्त इति लेः तत्याख्याने र्जिरिति सुखशब्दात् जिः। आरात् समीपे दिधक्षन्तो दग्धुमिच्छां कारयन्तः दहेः सनन्तात् जिः शतः अन्त्याहुतिं हावयितुम् अग्नौ प्रक्षेपयितुम् अध्वरपात्रजातं यज्ञोपयोगिस्रुवादिसमूहं चिचीषयन्तः चेतुमिच्छां कारयन्तः अन्तकाले भवोऽन्त्यः ढघकादिति यात्रः सचिः सेवा विद्यतेऽस्य सचिवः गोत्रचेत्यादिना केशादित्वाद्वः सचन्ति कार्य्येषु समवयन्तीत्यर्थे सचिवा निपातनाद्वा॥३३॥ म०

उदेत्यादि। पट्टदुकूलविरचितान् केतून् ध्वजानुदक्षिपन् उच्छ्रितवन्तः ये निपुणाः क्षिपेस्तौदादिकस्य ग्रहणम् वेणुमृदङ्गकांस्यं वंशमुरजकांस्यतालमवादयन् वादितवन्तः वदेर्ण्यन्तस्यैव प्रयोगः जातिरप्राणिनामित्येकवद्भावः न पुनस्तूर्य्याङ्गत्वात् तत्र हि प्राणिनां तूर्य्याङ्गानां द्वन्द्वैकवद्भावः यथा मार्दङ्गिकपाणविकमिति छत्वदिहनिकमिकषिभ्यः सः इत्यौणादिकः कंसशब्दः तदर्थाय हितं कंसीयं त्रपुणा इदद्रव्यं प्रकृतिविकारभावे च्छः तस्य विकार इति कंसीयपरशव्ययोर्य्यञञौ लुक् चेति छस्य लुक् यञ् च प्रत्ययः कम्बून् शङ्खान् तारान् उच्चैस्तरध्वनीन् अधमन् शब्दितवन्तः पाघ्रेत्यादिना धमादेशः तथा कुङ्कुमचन्दनानि आनयन् आनीतवन्तः सर्वत्र लङि रूपं व्यन्त्येष्टिं दर्शयन्नाह॥ ३४॥ ज० म०

श्रोत्राचितनासावदनं सरुक्मं
कृत्वाजिने प्राक्शिरसं निधाय ।
सञ्चित्य पात्राणि यथाविधानम्
ऋत्विग्जुहाव ज्वलितं चिताग्निम् ॥ २५ ॥

कृतेषु पिण्डोदकसञ्चयेषु हित्वाभिषेकं प्रकृतं प्रजाभिः ।
प्रत्यानिनीषुर्विनयेन रामं प्रायादरण्यं भरतः सपौरः ॥२६॥

उदक्षिपश्चित्यादि । अर्थात् तत्र नियुक्तास्ते जनाः पट्टदुकूल॰ रचितान् केतून् ध्वजान् उदक्षिपन् उच्छ्रितवन्तः क्षिपस्तौदादिकः । कार्पासं वादरं प्रोक्तं दुकूलाद्यच्च वाल्कलम् । कौषेयं क्रिमिजञ्चापि राङ्कवं मृगरोमजमित्यमरमाला । वेणुमृदङ्गकांस्यम् अवादयन् वादित- वन्तः अप्राणिजातित्वात् समाहार इति काशिकाः तूर्य्याङ्गत्वाद् इति वासवताः । सर्वो द्वन्द्वः समाहार इति प्राञ्चः । समते इतरेतरयोगे च समाहारे च चो द्विधेति सामान्येन द्विविधो द्वन्द्व उक्तः तत्र कचि- दितरेतरः कचित् समाहारः अभिधानात् बोध्यव्यः यदुक्तं कृत्तद्धित॰ समासानामभिधानं नियामकमिति । कम्बून् शङ्खान् तारान् उच्चतर॰ ध्वनीन् अधमन् शब्दायितवन्तः ध्मादानपाञ्चेति ध्मोधम तथा कुङ्कुम- चन्दनानि व्यानयन् सर्वत्र घी ॥ २४ ॥ म०

श्रोत्रेत्यादि । अजिने कृष्णसारचर्म्मणि प्राक्पूर्वं शिरोमूर्द्धा यस्येति तं प्राक्शिरसं शवन्निधाय स्थापयित्वा पश्चात् श्रोत्राचितनासावदनं प्राण्यङ्गत्वादेकवद्भावः छतृदीत्यादिसूत्रस्यानन्तरं नयतेराचेति प्रकृते- राकारे नासिर्योष्पादिकं रूपम् । सरुक्मं ससुवर्णं कृत्वा सञ्चित्य विन्यस्य अङ्गप्रत्यङ्गेषु पात्राणि स्रुगादीनि यथाविधानं यादृशं विधानमुक्तं गृह्यशास्त्रे । ऋत्विग्याजकः ऋतौ यजतीति ऋत्विग्दधृगित्यादिना निपातितः । ज्वलितश्चिताग्निं चयनं चितं तदर्थमग्निं जुहाव जुहोति स्म ॥ २५ ॥ ज० म०

श्रोत्रेत्यादि । प्राक् पूर्वस्यां दिशि शिरो यस्य तादृशं शरीरम्

शीघ्रायमाणैः ककुभोऽम्बुवाहैर्जनैरपन्यानमुपेत्य स्तैः ।
शोकादभूतैरपि भूसकासाञ्चकार नागेन्द्ररथाश्वमिश्रैः ॥२७॥

अजिने कृष्णसारचर्मणि निधाय संस्थाप्य ओतावचिनावावदनं सरुकं सुवर्णयुक्तं कृत्वा यथाविधानं विधानमनतिक्रम्य पात्राणि स्रुवादीनि सन्निवेश्य अङ्गेषु निधाय ऋत्विक् याजकः ज्वलितं चिताग्निं जुहाव एतेनान्त्येष्टिरुक्ता ऋतौ यजतीति ऋत्विक् त्वाउसिति क्विप् चङिति कुङ् ओतेत्यादिप्राण्यङ्गत्वात् द्वन्द्वैकत्वं क्लीवत्वञ्च नित्यं भजते इति परः । समतेऽत्र वेणुच्छदङ्ककांस्यमितिवत् समाहारो द्वन्द्व इतरेतरोऽपि दुर्निवारः । यथा ग्रीवाकुचिललाटेषु नित्यं स्वेदः प्रशस्यते । गण्डे चुम्बं ललाटाचिकचोरुभगमूर्द्धसु इत्यादिदर्शनात् परमतं ज्ञेयम् ॥ २५ ॥ भ०

कृतेष्वित्यादि । पिण्डोदकदानास्थिसञ्चयेष्वनुष्ठितेषु प्रजाभिः प्रकृतं प्रस्तुतमभिषेकमादि कर्मणि क्तः । हित्वा त्यक्त्वा जहातेस्क्त्वीति हिरादेशः रामस्प्रत्यानिनीषुः प्रत्यानेतुमिच्छुः विनयेन प्रसादनया न भयादरण्यं वनं प्रायात् गतवान् भरतः सह पौरैः अयोध्याभवैर्जनैर्मयैवैन प्रसाद्यमानः कदाचिन्नागमिष्यतीति ॥ २६ ॥ ज० म०

कृतेष्वित्यादि । पिण्डोदकदानास्थिसञ्चयनेषु कृतेषु पश्चात् प्रजाभिः प्रकृतं प्रस्तुतमभिषेकं हित्वा विनयेन रामं प्रत्यानिनीषुः प्रत्यानेतुमिच्छुर्भरतः पौरैः सह अरण्यं प्रायात् जगाम यातेर्घ्यां रूपं प्रकृतमिति आरम्भे क्तः हित्वेति हाकोहिः । आत्मनोविनयज्ञापनार्थं मयैवैन प्रसाद्यमानः कदाचित् नागच्छेदित्याशङ्क्य पौरैः सह गमनं पिण्डोदकपदेन दाने लक्षणा सञ्चयोऽस्थिसञ्चयनं पिण्डोदकानां सञ्चया इति केचित् ॥ २६ ॥ भ०

शीघ्रेत्यादि । जनैर्हेतुभूतैर्भूसकासाञ्चकार शोभतेश्च कर्त्तुः क्रियाफलयोगेऽपि नात्मनेपदम् आम्प्रत्ययवदित्यत्र पूर्वग्रहणानुवृत्तेः चकासेश्च परस्मैपदित्वादिति विधिनियमौ स्थितौ शीघ्रायमाणैः अशीघ्रैः शीघ्रैर्भवद्भिर्झटिति गच्छद्भिरित्यर्थः भृशादित्वात् क्यङ्

उच्चिक्यिरे पुष्पफलं वनानि
सस्नुः पितॄन् पिप्रियुरापगासु ।
आरेमुरित्वा पुलिनान्यशङ्कं
छायां समाश्रित्य विशश्रमुश्च ॥ ३८ ॥

ङित्त्वात्तङ् ककुभोऽश्नुवानैः दिशो व्याप्नुवद्भिः अश्नोतेः सौवादिकस्य आत्मनेपदिनो रूपम् । अपन्थानमुपेत्य स्पृष्टैः बहुत्वादमार्गमपि गत्वा गतैः ऋक् पुरित्यादिना समासान्तः प्राप्तो नञस्तत्पुरुषादिति प्रतिषिद्धः सन् पथोविभाषेति विकल्पितः । शोकाद्धेतोरभूषैरनलङ्कारैरपि चकासाञ्चकार भूः भूमिः भूषेति गुरोश्च हल् इत्यकारप्रत्ययः चकास्तदीप्तावित्यस्मात् कास्यनेकाज् ग्रहणञ्चुलुम्पाद्यर्थमित्याम् नागेन्द्ररथाश्वमिति द्वन्द्वे एकवद्भावः अल्पाच्तरस्य न पूर्वनिपातः बहुष्वनियम इति वचनात् तेन सेनाङ्गत्वात् कृतकवद्भावेन मिश्रैर्युक्तैः पूर्वसदृशेत्यादिना तृतीयासमासः ॥ ३७ ॥ ज० म०

शीघ्रायमाणैरित्यादि । शोकाद्भूषारहितैरपि जनैर्भूश्चकासांचकार चकास्तदीप्तौर्विजादिदयेत्यादिनाम् भ्वस्कन्वामः भूषेति सम्पत्तात् गुरोरिति अः । किम्भूतैः शीघ्रायमाणैः अशीघ्रैः शीघ्रैर्भवद्भिः कार्य्यवशात् द्रुतं गच्छद्भिरित्यर्थः भृशादेश्चर्य्यर्थे इति क्यः घोऽज्यरे इति षः ङित्त्वान्मम् । ककुभो दिशः अश्नुवानैर्व्याप्नुवद्भिः अशूङ्व्याप्तिसंहत्योः बहुत्वात् अपन्थानमपि व्याप्य स्पृष्टैर्गतैः विकल्पितसप्रत्ययात्नं नागेन्द्रा हस्तिश्रेष्ठा रथा अश्वाश्चेति परमते सेनाङ्गत्वात् समाहारद्वन्द्व एव स्वमते इतरेतरद्वन्द्वोऽपि लभ्यते मिश्रैर्युक्तैः ॥ ३७ ॥ भ०

उच्चीत्यादि । ते जनाः गच्छन्तः पुष्पफलं पुष्पाणि फलानि चेति जातिरप्राणिनामित्येकवद्भावः । उच्चिक्यिरे उच्चितवन्तः ञित्वात्तङ् कर्त्तुः क्रियाफलयोगात् विभाषा चेरिति धातोः कुत्वमेरनेकाच इति यणादेशः उच्चिच्यिर इति पाठान्तरं युक्तम्, वनानीति हेतुत्वेनाकथितं कर्म । वनानि विघट्टयन्तः फलानि जगृहुरित्यर्थः ततः सस्नुः स्नातवन्तः स्नातेर्लिटि उस्यपदान्तादिपररूपम् । पितॄन् पिप्रियुः उदकाञ्ज-

संप्राप्य तीरं तमसापगाया गङ्गाम्बुसम्पर्कविशुद्धिभाजः ।
विगाहितुं यामुनमम्बु पुण्यं ययुर्निरुद्धश्रमवृत्तयस्ते ॥ ३९ ॥

वन्तः तर्पितवन्तः प्रीणातेर्लिटि इयङादेशः आपगासु नदीषु एतत्कृत्वा पुलिनानि सैकतानि इत्वा आरेटुः आरटिताः आरेतुरिति पाठान्तरं शोकापनोदनार्थं कियन्तमपि कालमारमन्ति स्म व्याङ्परिभ्यो रम इति परस्मैपदम् अशङ्कं विस्रब्धं छायां समाश्रित्य विशश्रमुः विश्रान्ताः ॥ ३८ ॥ ज० म०

उच्चिक्यिर इत्यादि । ते जना वनानि पुष्पाणि फलानि च उच्चिक्यिरे चिञ्चयने ठी याच्ञार्थदुहचिप्रच्छीति द्विकर्मकत्वं चेः किर्वेति किः अचि श्नुधातुभ्रुवां य्वोरिति यत्वं वनानि विघट्टयन्तः पुष्पफलं जगृहुरित्यर्थः परमते अप्राणिजातित्वात् समाहारद्वन्द्वः स्वमतं व्यवहृत्यकांस्यमित्यलोकम् आपगासु नदीषु सस्नुः स्नातवन्तः पितॄन् पिप्रियुः तर्पितवन्तः प्रीञ् तर्पणे अचि श्नुधातुभ्रुवां य्वोरितीयादेशः पुलिनानि सैकतानि इत्वा गत्वा आरेमुः शोकापनोदनार्थं क्रीडन्ति स्म घे पमित्यादिना पं आरेटुरिति पाठे शोकात् शब्दं चक्रुरित्यर्थः । रटपरिभाषणे तॄफलेति अत एत्वं खिलोपश्च अशङ्कं निःशङ्कं यथा स्यात्तथा छायां समाश्रित्य विशश्रमुः ॥ ३८ ॥ भ०

संप्राप्येत्यादि । तमसापगायाः तमसाख्यायाः आपगायाः नद्याः अत्यविचमितमिनमिरभितपिपतिजनिपणिमहिभ्योऽसच् यस्याः स्वरूपालापं तारयति सा तमसा तरसा इति पाठान्तरं तत्र तरसा वेगेन आपगाया अर्थात्तमसाया नद्या गङ्गाम्बुसम्पर्कात् विशुद्धिं पवित्रतां भजते या तस्यास्तीरं कूलं सम्प्राप्य गत्वा ते जना निरुद्धश्रमवृत्तयः ययुः गताः गङ्गेति गन्गम्यद्योरित्यौणादिको गन् विगाहितुं विगाहिष्यामहे इति हत्वा यामुनमम्बु यमुनाया इदं यमुनासम्बन्धि जलं पुण्यं पुण्यहेतुत्वात् पुण्ययुक्तत्वाद्वा ॥ ३९ ॥ ज० म०

संप्राप्येत्यादि । ते जनास्तमसापगायास्तमसानामनद्यास्तीरं कूलं संप्राप्य निरुद्धश्रमवृत्तयः सन्तः यामुनं यमुनासम्बन्धि पुण्यं पावनम्

ईयुर्भरद्वाजमुनेर्निकेतं
यस्मिन् विशश्राम समेत्य रामः।
च्युताशनायः फलवद्विभूत्या
व्यस्यन्नुदन्यां शिशिरैः पयोभिः॥ ४० ॥
वाचंयमान् स्थण्डिलशायिनश्च
युयुक्षमाणाननिशं मुमुक्षून्।

अम्बु जलं विगाह्य ययुः तरसेति पाठे वेगेनेत्यर्थः यमुनाशब्दात् विकारसंघेत्यादिना इदमर्थे ष्णः षित्तेर्निरिति ङिः। तमसापगायाः कीदृश्याः जङ्गाजलसम्पर्कात् अतिशयितशुद्धिं भजते या तस्याः ढाट्भजसहवहेति विण्॥ ३९ ॥ भ०

ईयुरित्यादि। भरद्वाजमुनेर्निकेतम् आश्रममीयुः गताः इणो यणिति यत्वम् अभ्यासस्य दीर्घ इणः कितीति दीर्घत्वं यस्मिन्निकेते रामो विशश्राम विश्रान्तः समेत्य मिलित्वा तमीयुर्जना इति योज्यम्। फलवद्विभूत्या फलवतां वृक्षाणां सम्पदा हेतुभूतया च्युताशनायोऽपगतबुभुक्षः अशनायेत्यादिना निपातितः व्यस्यन् उदन्यां वारयन् असेर्दैवादिकस्य रूपम् उदन्यां पिपासां शिशिरैः शीतलैः पयोभिः॥४०॥ज०म०

ईयुरित्यादि। ते भरद्वाजमुनेर्निकेतमीयुर्गता इत्यर्थः इण गतौ दीर्घणोऽन्यणाविति यादेशः खेः किति घेः दीर्घः यस्मिन् निकेते रामः समेत्य संगत्य विशश्राम विश्रान्तः कीदृशः स फलवतां वृक्षाणां विभूत्या सम्पदा च्युताशनायः व्यपगतबुभुक्षः अशनशब्दात् क्यच्प्रादिति क्यः धनोदकाशन इत्यादिना अन्नार्थे ङाः ततः संख्याद इत्यः स्त्रीत्वञ्च च्युता अशनाया यस्य स तथा शिशिरैः शीतलैः पयोभिर्जलैरुदन्यां पिपासां व्यस्यन् अपनयन् असु इत्क्षेपे शटः उदकस्य उनङ् पानार्थे पूर्ववत् पयोभिरिति पीङ्यपाने तान्त्विति अम्॥ ४० ॥ भ०

वाचमित्यादि। ते भरद्वाजमुनिं सशिष्यं शिष्यैः सह वर्त्तमानं प्रपेदुः प्रणमन्ति स्म विनयात् विनयेन अतएव पन्नाः पदातयः पादाभ्यां

अध्यापयन्तं विनयात् प्रणेमुः
पद्गा भरद्वाजमुनिं सशिष्यम् ॥ ४१ ॥
आतिथ्यमेभ्यः परिनिर्विवप्सोः
कल्पद्रुमा योगबलेन फेलुः ।

गच्छन्तीति अन्येष्वपि दृश्यत इति डः हिमकाषिहृतिषु चेति चकारस्य अनुक्तसमुच्चयार्थत्वात् गमोत्तरपदे पदादेशः पद्दिति योगविभागाद्वा कीदृशम् अध्यापयन्तं पाठयन्तम् कान् वाचंयमान् मौनव्रतान् वाचियमो व्रत इति खच् वाचंयमपुरन्दरौ चेति निपातनात् पूर्वपदस्य अमन्तता स्थण्डिलशायिनः भूशायिनः स्थण्डिलाच्छयितरिव्रत इति णिनिः युयुक्षमाणान् योक्तुमिच्छतः योगाभ्यासनिष्ठानित्यर्थः अविश्रमविच्छेदेन मुमुक्षून्मोक्षाभिलाषिण इत्यर्थः अतएव योगाभ्यासमिच्छून् ॥४१॥ज०म०

वाचंयमानित्यादि । ते जनाः सशिष्यं भरद्वाजमुनिं प्रणेमुः नमौ मद्नन्त्योः तृफलेति अत एत्वं खिलोपस्य प्राग्वज्ञोण इति णत्वं नादित्वात् विनयात् विनयं विधाय यबर्थे पञ्चमी हेतौ वा कीदृशाः पद्गाः एतेन यानस्था अपि ये तेऽपि विनयात् पद्गाः पद्भ्यां गच्छन्तीति छनजनादिति डः पादस्यानार्थोऽयं पच्छब्दः अध्यापयन्तं पाठयन्तं क्रीजीङोऽजेतीङ आह्णीवृरीत्यादिना पन् कानित्याह वाचंयमान् मौनव्रतिनः तृम्स्यदृजीत्यादिना आवन्तवाचाशब्दान् यमः खः खित्यव्याजेति मन् खश्च परे तु वाक्शब्दोपपदेन साधयन्ति स्थण्डिलशायिनः तृणाच्छादितभूमिशायिनः यहादित्वाणिन् व्रतेणिच्चिति परः युयुक्षमाणान् योक्तुमिच्छून् योगाभिलाषिण इत्यर्थः युज्यौङ्समाधौ सन् शानः शानेऽतोमन् अनिशं निरन्तरं मुमुक्षून् मोक्षाभिलाषिणः मुच्लृशपजौ मोक्षे सन् सनुभिक्षाशंस उः हस्तजुषस्त्विणिति शास्त्रे: क्यप् शासुङिति इत् किलादिति षः ॥ ४१ ॥ भ०

आतीत्यादि । अतिथ्यर्थमातिथ्यमन्नपानादि अतिथेर्य्यः एभ्यो भरतादिजनेभ्यः इति सम्प्रदाने चतुर्थी परिनिर्विवप्सोः निर्वप्तुमिच्छोः दातुमिच्छोरित्यर्थः । निपूर्वो वपिर्दाने वर्त्तते धामप्रयिन्नः धान्ना

धामप्रथिम्नो मृदिमान्वितानि
वासांसि च द्राघिमवन्त्युदूहुः ॥ ४२ ॥
आज्ञां प्रतीयुर्विनयादुपास्थुः
जगुः सरागं ननृतुः सहावम् ।

तेजसा प्रथिमा पृथुत्वं यस्य तेजसो वह्निनिर्गतत्वात् शरीरस्य पृथुत्वं जायते तस्य भरद्वाजमुनेर्योगबलेन समाधिबलेन युजसमाधावित्यस्य रूपम् । कल्पद्रुमाः फेलुः फलिताः अन्नाद्यन्नपानादिकमित्यर्थः तृफल-भजत्रपश्चेत्येत्वमभ्यासलोपश्च वासांसि च वस्त्राणि उदूहुः उद्वहन्ति स्म यजादित्वात् सम्प्रसारणं मृदिमान्वितानि मृदुत्वमुपगतानि द्राघिमवन्ति दैर्घ्ययुक्तानि पृथुमृदुदीर्घशब्देभ्यस्तस्य भाव इत्यर्थे पृथ्वादिभ्य इमनि पृथुमृदुशब्दयोर्ऋतो रलादेरिति रादेशः दीर्घशब्दस्य प्रियस्थिरेत्यादिना द्राघादेशः पश्चान्मतुप् ॥ ४२ ॥ ज० म०

आतिथ्यमित्यादि । आतिथ्यम् अतिथ्यर्थमन्नपानादिकम् एभ्यो भरतादिभ्यः परि सर्वतो निर्वप्तुं दातुमिच्छोर्मुनेर्योगबलेन समाधिबलेन कल्पवृक्षाः फेलुः अर्थात् अन्नपानादिकं तृफलेति अत एत्वं खिलोपश्च विकारसंघेत्यादिना तादर्थ्ये अतिथेः ण्यः निःपूर्वोवपिर्दाने वर्त्तते युज्योङ्समाधौ घञि चजो कगाविति जस्य गत्वं तस्य मुनेर्धामप्रथिम्नो हेतोर्त्तजोबाहुल्यात् ते कल्पद्रुमा वासांसि उदूहुः उद्वहन्ति स्म चकारः समुच्चये वहेञ्ञो प्रापणे व्यथ्यहेति ञिः कीदृशानि मृदिमान्वितानि मृदुत्वेन युक्तानि द्राघिमा दैर्घ्यं विद्यते येषां तानि गुणादिमन् भावे इति पृथुमृदुदीर्घशब्देभ्यः इमन् पृथुमृदुकशेति पृथुमृदुशब्दयोः ऋकारस्य रः वाद्यान्तिकेति दीर्घस्य द्राघादेशः ओसंघडिदिति डित्वे टेर्लोपः द्राघिमशब्दात् मोङ्मङ्पादित्वस्त्यर्थे वतः तेजसां प्रथिमा यस्य इति मुनिविशेषणं केचिदाहुः ॥ ४२ ॥ भ०

आज्ञामित्यादि । तस्मिंस्तपोवने तिलोत्तमाद्या वनिता दिव्यस्त्रियः आगता आज्ञामादेशं मुनेः प्रतीयुः प्रतीष्टवत्यः चेटीभवत्य इत्यर्थः प्रतिपूर्व इणिर्ज्ञाने वर्त्तते तस्य लिटि रूपम् । विनयादुपास्थुः उप-

सविभ्रमं नेमुरुदारमूचु:
तिलोत्तमाद्या वनिताश्च तस्मिन् ॥ ४३ ॥
वस्त्रान्नपानं शयनञ्च नाना
कृत्वावकाशे रुचिसंप्रक्लृप्तम् ।
तान् प्रीतिमानाह मुनिस्तत: स्म
निवद्धमाद्धं पिवतात्त शेध्वम् ॥ ४४ ॥

स्थिता: पादप्रक्षालनादिदानेन उपस्थानं कृतवत्य: उपपूर्वात्तिष्ठतेर्लुङि सिच् गातिस्थेति सिचोलुक् सिजभ्यस्तविदिभ्यश्चेति झेर्जुस् उस्यपदान्तादिति पररूपम् जगु: सरागं सरक्तं गीतवत्य: नन्ततु: सहावं सशृङ्गारचेष्टं नर्त्तितवत्य: सविभ्रमनेमु: सविलासं प्रणता: उदारमूचु: श्रव्याश्यमुक्तवत्य: ॥ ४३ ॥ ज० म०

श्राज्ञामित्यादि । धामप्रयिन्न: किमित्याह तस्मिन् वने तिलोत्तमाद्या वनिता अप्सरस आगत्य मुनेराज्ञां प्रतीयुर्ग्गृहीतवत्य: प्रतिपूर्व इणिर्ग्गृहणे यां रूपं विनयात् उपास्थु: भरतादीनाम् उपासनां चक्रु: उपपूर्वात्तिष्ठतेश्चां रूपं भूस्थापिवेति सेर्लुक् अनुभिन्नेरिति अन् उस् उस्सेत्याकोप: सरागं मालवादिरागयुक्तं यथा स्यात्तथा जगु: गीतवत्य: गैगाने ठी सहावं शृङ्गारचेष्टायुक्तं नन्ततु: नृत्यञ्चक्रु: हावा: क्रिया: शृङ्गारभावजा इत्यमर: । सविभ्रमं नेमु: प्रणामं चक्रु: । विभ्रमस्त्वरया काले भूषास्थानविपर्य्यय: । चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमोऽथवा । विलास इत्यन्ये उदारमश्राव्यमूचु: वनिता: । जनितात्यर्थानुरागायाश्च योषितीति कोष: चकार: पूर्वापेक्षया ॥४३॥ भ०

वस्त्रेत्यादि । ततो वनितोपस्थानानन्तरमवकाशे प्रदेशे यथाभिमते वस्त्रान्नपानं सर्वो द्वन्द्वो विभाषैकवद्भवतीत्येकवद्भाव: शयनमित्यधिकरणे ल्युट् नाना कृत्वा पृथक् कृत्वा रुचिसम्प्रक्लृप्तं यस्य यावदभिरुचितन्तथैव सम्पादितम् कृपोरोल: प्रीतिमान्मुनिस्तान् भरतादीनाह स्म उक्तवान् किमाह निवद्धं परिधत्त वस्त्राणि वस आच्छादन इत्यस्य

ते भुक्तवन्तः सुसुखं वसित्वा
वासांस्युषित्वा रजनीं प्रभाते।
द्रुतं समध्वा रथवाजिनागैः
मन्दाकिनीं रम्यवनां समीयुः॥ ४५॥

विधौ लोट् झलाञ्जशीति सकारस्य दकारः आद्ध्वम् उपविशत आसेः पूर्ववत् दादेशः अत्त खादत अन्नादिकम् अदभक्षणे इत्यस्मात् लोट् पानादिकम्पिबत पिबतेः पाघ्रादिसूत्रेण पिबादेशः शेध्वम् स्वपत शयने सर्वत्र विधौ लोट्॥ ४४॥ ज० म०

वस्त्रान्नपानमित्यादि। ततो वनितोपस्थानानन्तरं धामप्रथिम्नो हेतोर्वा अवकाशे यथायोग्यस्थाने वस्त्रम् अन्नं पानं शयनञ्च रुचिसम्प्रक्लृप्तं यस्य यथारुचितथैव सम्पादितम् अत एव नानाविधं कृत्वा प्रीतिमान् मुनिस्तान् भरतादीन् आह स उवाच किमित्याह निवद्ध्वं वस्त्राणि परिधत्त वसङ्वस्तृतौ स्तृतिराच्छादनं झयझयोरिति सस्य दत्वं निर्देकारपाठे भेसलोपो वेति पाक्षिकः सलोपः सर्वत्र विधौ णी आध्वम् उपविशत ञिलासङ् उपवेशे पूर्ववत् पिबत पयःप्रभृतिकमर्थात् पापाने स्थादानेति पिबादेशकरणान्न गुणः किंवा पिबादेशोऽयमदन्तः तेन गुर्घुङ इत्यस्य न विषयः लोपोऽतोदेचोरित्यकारलोपः अत्त भक्षयत अट्लौभक्षणे शेध्वं शयनं कुरुत शीङोरेणुः वस्त्रमिति वसेस्त्रासुषिति त्रः अन्नमिति शीक इति सूत्रे अन्नव्यस्त्रनेति ज्ञापकात् न जग्धादेशः अदोजग्धिरनोदने इति परसूत्रं पानमिति कर्मणि आधारे वा अनट् शयनमित्याधारेऽनट्॥ ४४॥ भ०

ते भुक्तेत्यादि। ते भरतादयः सुसुखमिति क्रियाविशेषणम् भुक्तवन्तः सन्तो वासांसि वसित्वा परिधाय रजनीमुषित्वा रजनीं रात्रीं वसतिक्षुधोरिट् कालाध्वनोरिति द्वितीया द्रुतं शीघ्रं प्रभाते मन्दाकिनीनदीं समीयुः सम्भूय गताः समध्वा अविच्छिन्नाध्वानः सङ्गता अध्वन इति प्रादिसमासः उपसर्गादध्वन इति समासान्तष्टच् रथवाजीति द्वन्द्वैकवद्भावः तेन सहिता नागा इति शाकपार्थिवादित्वात्

वैखानसेभ्यः श्रुतरामवार्त्ताः
ततो विशिश्रज्ञानपतत्त्रिसङ्घम् ।
अभ्रंलिहाग्रं रविमार्गभङ्गम्
आनंहिरेऽद्रिं प्रति चित्रकूटम् ॥ ४६ ॥

समासः अन्यथा सेनाङ्गत्वात् समुदायस्यैकवद्भावः स्यात् रम्यवनां रमणीयकाननां रमणीयजलां वा ॥ ४५ ॥ ज० म०

ते इत्यादि । सुसुखं यथा स्यात्तथा भुक्तवन्तः कृतभोजना भरतादयो वासांसि वस्त्राणि वसित्वा परिधाय रजनीम् उषित्वा स्थित्वा प्रभाते समध्वा अध्वानं सङ्गताः सन्तः रथवाजिनागैर्द्रुतं शीघ्रं रम्यवनां मन्दाकिनीं समीयुः सङ्गतवन्तः इयच्चां रूपं मन्दाकिनी चित्रकूटवर्त्मनि नदीविशेषो नर्मदेति प्रसिद्धा गङ्गामाते मन्दाकिनीति केचित् रम्याणि वनानि यत्र वनं काननतीरयोरिति विश्वः वसित्वेति वसङ्त्कृतावित्यस्य रूपम् उषित्वेति ऐवसौनिवासे चुधवसपूजायां चेति इस् यहस्वपाद्योरिति जिः रजनीमिति देशाध्वकालेति कर्मत्वं समध्वा इति गेरध्वन इत्यः न्वोर्लोपौतौते इति नस्य लोपः ययोर्लोप इत्यकारलोपः रथाश्च वाजिनोऽश्वाश्च नागा हस्तिनश्चेतीतरेतरद्वन्द्वः परे तु सेनाङ्गानां बहुत्वे समाहार इति रथस्य वाजी च नागाश्चेत्येकवचनेन विग्रहं वदन्ति समाहारविधेरनित्यत्वमित्यन्ये आदौ रथवाजिशब्दाभ्यां समाहारस्ततो रथवाजिना सहिता नागाः रथवाजिनागाः शाकपार्थिवादित्वादिति केचित् ॥ ४५ ॥ भ०

वैखेत्यादि । ततो मन्दाकिनीगमनानन्तरं वैखानसेभ्यस्तृतीयाश्रमिभ्यः चित्रकूटे रामोऽस्तीति श्रुतरामवार्त्ताः चित्रकूटनामानमद्रिं पर्वतं प्रति लक्षणेत्यम्भूताख्यानेत्यादिना कर्मप्रवचनीयसंज्ञा कर्मप्रवचनीययुक्त इति द्वितीया तं लक्षीकृत्य आनंहिरे जग्मुः अंहतेर्लिटि द्विर्वचनं हलादिः शेषः अत आदेरिति दीर्घः तस्मान्नुट् द्विहल इति नुट् विशिश्रज्ञानपतत्त्रिसङ्घं कूजत्पक्षिगणम् अभ्रंलिहाग्रम् अभ्रस्पृक्-

दृष्ट्वोर्णुवानान् ककुभो बलीयान्
वितत्य शार्ङ्गं कवचं पिनह्य ।
तस्थौ सिसंग्रामयिषुः शितेषुः
सौमित्रिरचिभ्रुवमुज्जिहानः ॥ ४७ ॥

शिखरम् वहाभ्रंलिह इति खश् अरुर्द्विषदित्यादिना मुम् रविमार्गभङ्गम् उच्चैस्तरत्वात् रवेर्मार्गभङ्गो यस्मिन्नद्राविति ॥ ४६ ॥ ज० म०

वैखानसेभ्य इत्यादि । ततो मन्दाकिनीगमनानन्तरं वैखानसेभ्यो वानप्रस्थेभ्यः श्रुता रामवार्त्ता यैस्तादृशा भरतादयश्चित्रकूटमद्रिं प्रति स्वीकृत्य आनंहिरे गतवन्तः अहिङ्गतौ ठी इदित्त्वान्नुम् द्वित्वं सान्तादाद्यदान्यश्नोरिति स्वेरान् श्नोर्नुरित्यनुस्वारः ह्रोर्फस इति हस्य भत्वात् धिक्समयेति प्रतियोगे द्वितीया । वैखानसो वनेवासो वानप्रस्थश्च तापस इति वैजयन्ती । अद्रिं किम्भूतं त्रिशिक्षानः पतत्रिणां पक्षिणां संघः समूहो यत्र एतादृशं शिजिकिङ्स्फुटध्वनौ अभ्रंलिहाग्रम् अभ्रस्पृक्शिखरं परन्तपवत् खः बाहुल्यान्नुमभावः उच्चैस्तरत्वाद्रवेर्मार्गभङ्गो वर्त्मविघातो यस्मिन् ॥ ४६ ॥ म०

दृष्ट्वेत्यादि । बलीयान् दृष्ट्वा सौमित्रिस्तस्थौ स्थितः अभ्यासस्य शर्वेर्वा खय इति खः शेषः कीदृशः ककुभो दिशः ऊर्णुवानान् आच्छादयतः ऊर्णोतेरादादिकस्योभयपदिनः शानचि उवङादेशे च रूपम् शार्ङ्गं शृङ्गस्य विकारं धनुर्वितत्य आरोपितगुणं कृत्वा वा ल्यपीत्यनुनासिकलोपः कवचं पिनह्य बद्ध्वा नहबन्धन इत्यस्य ल्यपि अपिशब्दाकारलोपस्तु । वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । धाञ्क्रञोस्तनिनह्योश्च बहुलत्वेन शौनकिरिति । सिसंग्रामयिषुः संग्रामयितुमिच्छुः संग्रामयुद्ध इति चौरादिको णिच् तदन्तस्य सनि प्रथमस्यैकाचो द्विर्वचनम् । शितेषुः तीक्ष्णशरः अक्षिणी च भ्रुवौ च अचिभ्रुवम् अचतुरेत्यत्र निपातितः उज्जिहानः ऊर्ध्वंनयन् ओहाङ्गताविस्य जुहोत्यादिकस्य रूपमिति तीत्वम् ॥ ४७ ॥ ज० म०

शुक्लोत्तरासङ्गभृतो विशस्त्रान्
पादैः शनैरापततः समन्यून् ।
औहिष्ट तान् वीतविरुद्धबुद्धीन्
विवन्दिषून् दाशरथिः स्ववर्ग्यान् ॥ ४८ ॥

इद्द्वेत्यादि । ककुभो दिशः ऊर्णुवानान् आच्छादयतो बलौघान् सैन्यसमूहान् दृष्ट्वा सौमित्रिर्वर्म्मणः कवचं पिनह्य बद्ध्वा शृङ्गविकारं शार्ङ्गं धनुर्वितत्य सज्यं कृत्वा आकर्षणेन विस्तार्य्य वा अक्षिभ्रुवमुज्जिहानः उत्क्षिपन् सिसंग्रामयिषुः युद्धेच्छुः सन् तस्थौ अवातोडौः किम्भूतः शितस्तीक्ष्णः इषुः शरो यस्य स तथा शोयनिशाने च्छाशोर्वेति ङिः ऊर्णुवानानिति ऊर्णुञ आच्छादने शानः श्नुध्योरित्युवः वितत्येति तनदुञ् विस्तृतौ वनतनाद्यनिमासिति नस्य लोपः स्वस्यतन् पिति पिनह्येति अपिपूर्वोणह्ब्बौबन्धे वातोऽवाप्योरित्यपेरलुक् सिसंग्रामयिषुरिति संग्रामङ्‌तकयुद्धे सन् उः अक्षिभ्रुवमिति अक्षिणी च भ्रुवौ च अक्षिभ्रुवमिति निपातनात् उज्जिहान इति ओहाङ्‌गतौ शानः ह्वादीरेद्विः पृश्चादेरिति लेङिः ॥ ४७ ॥ भ०

शुक्लेत्यादि । दाशरथिस्तान् स्ववर्ग्यान् स्ववर्गे भवान् अशब्दे यत् खाविति यत् आत्मीया अपि कदाचित् दुष्टबुद्धयो भवन्तीत्याह वीतविरुद्धबुद्धीन् औहिष्ट ऊहितवान् ऊहतेरात्मनेपदिनो लुङि आट् वृद्धिः तदेवाविरुद्धबुद्धित्वं दर्शयन्नाह शुक्लोत्तरासङ्गभृतः शुक्लो य उत्तरासङ्ग उत्तरीयं तं बिभ्रतीति क्विप् विशस्त्रान् निरायुधान् पादैरापततः आगच्छतो शुक्लवाहनत्वात् शनैर्न त्वरया समन्यून् प्रकृष्टशोकान् आगतशोकान् वा विवन्दिषून् वन्दितुमिच्छून् ॥ ४८ ॥ ज० म०

शुक्लेत्यादि । दाशरथिस्तान् स्ववर्ग्यान् वीतविरुद्धबुद्धीन् विगतदुष्टमतीन् औहिष्ट ज्ञातवान् ऊहङ्‌वितर्के वर्गात् भवार्थे यत्‌ः । कदाचिदात्मीया अपि दुष्टचेतसः स्युरत उक्तं वीतेति इणः क्तः वीतविरुद्धबुद्धित्वं कुतो ज्ञातमित्याह शुक्लेति शुक्लो य उत्तरासङ्ग उत्तरीयं तं बिभ्रति इति क्विप् युद्धे शुक्लोत्तरासङ्गो निषिद्धः विशस्त्रान् निरा-

समूलकाषं चकषूरुदन्तो
रामान्तिकं बृंहितमन्युवेगाः ।
आवेदयन्तः क्षितिपालमुच्चैः
कारं मृतं रामवियोगशोकात् ॥ ४९ ॥

क्षुधान् शनैर्मन्दं यथा स्यात्तथा पादैरापतत आगच्छतस्य क्रियाहनत्वात् समन्यून् सशोकान् विवन्दिषून् वन्दितुमिच्छून् ॥ ४८ ॥ भ०

समूलेत्यादि । ते रामान्तिकं रामसमीपं प्राप्ताश्चकषुः पिष्टवन्तः समूलकाषं समूलं कषित्वा भूमेरधोभागयुतस्तस्य निमूलसमूलयोः कष इति कषेर्णमुल् कषादिषु यथाविध्यनुप्रयोगः रुदन्तः रोदनं कुर्वन्तः बृंहितमन्युवेगा विवृद्धशोकवेगा बृहिवृद्धावित्यस्य रूपम् । रामवियोगशोकात् कारणात् क्षितिपालं दशरथमुच्चैःकारं कृत्वा मृतं निधनं गतम् आवेदयन्तः अव्यये यथाभिप्रेताख्यान इति कञो णमुल् एतद्यथाभिप्रेताख्यानमिति नीचैराख्यातुमभिप्रेतत्वात् उच्चैरावेदयन्ति ॥४९ज०म०

समूलकाषमित्यादि । ते रुदन्तो रामान्तिकं रामसमीपदेशं समूलकाषं यथा स्यात्तथा चकषुः पिष्टवन्तः भूमौ स्वशरीराघातात् समूलस्य साधोभागस्य रामसमीपदेशस्य काषः पेषणं यस्मादिति कषस्य क्रियाविशेषणं काषो घञन्तः समूलघातवत् णमुल् वा । केचित्तु समूलं भूमेरधोभागमपि कषित्वा पिष्ट्वा पुनः पिष्टवन्तः इति व्याख्याय णमुलन्तस्य पूर्वकालत्वमाहुः अन्ये तु णमन्तस्यात पृथगर्थाभावमाहुः तेन समूलकाषञ्चकषुः समूलं चकषुरित्यर्थः । कषवधे ण्यं रूपं, समूलमिति साकल्येऽव्ययीभावः मूलसहितमित्यर्थो वा किम्भूतास्ते बृंहितमन्युवेगा विवृद्धशोकवेगाः बृहिवृद्धौ रामवियोगहेतुकात् शोकान्मृतं क्षितिपालम् उच्चैःकृत्वा आवेदयन्तो ज्ञापयन्तः उच्चैःकारमिति अव्ययात् कञोऽनिष्टकथने णमुल् कारं विज्ञं किम् वा उच्चैर्यथा स्यात्तथा वेदयन्तः किम्भूतं क्षितिपालं कारं रामवियोगे प्राणवियोगकारित्वेनैव विज्ञत्वं अकङ्विज्ञाने कृत्यसात् कभावेऽमी इति वचनात् कर्त्तरि घञ् ॥ ४९ ॥ भ०

चिरं रुदित्वा करुणं सशब्दं
गोत्राभिधायं सरितं समेत्य ।
मध्ये जलाद्राघवलक्ष्मणाभ्यां
प्रत्तं जलं द्व्यञ्जलमन्तिकेऽपाम् ॥ ५० ॥

चिरमित्यादि । चिरं महान्तं कालं करुणं सकरुणं सशब्दं प्रतिकृत्य रुदित्वा रलो व्युपधाद्धलादेरिति क्त्वे विकल्पिते रुदविदेत्यादिना कित्त्वम् । सरितं समेत्य नदीं सम्भूय गत्वा मध्ये जलात् जलस्य मध्यात् तस्माद्वा उत्थाय अवतीर्य ल्यब्लोपे पञ्चमी पारे मध्ये षष्ठ्या वेत्यव्ययीभावः अपञ्चम्या इति प्रतिषेधात् अम् न भवति नाव्ययीभावादिति लुक्प्रतिषेधश्च राघवलक्ष्मणाभ्याम् अपामन्तिके समीपे जलं प्रत्तम् दत्तम् अच उपसर्गात्तः गोत्राभिधायं नामाभिधायं द्वितीयायाञ्चेति णमुल् द्व्यञ्जलमिति अञ्जलिपरिच्छिन्नं जलमञ्जली द्वौ विग्रह्य तद्धितार्थे समासः द्वित्रिभ्यामञ्जलेरिति टच् ताभ्याम् प्रत्येकमञ्जलिप्रदानात् द्वावञ्जली प्रमाणमस्येत्यस्मिन्वाक्ये प्रमाणप्रत्ययस्य प्रमाणे लुक् द्विगोर्नित्यमिति लुक् ततः समासान्तो न प्राप्नोति अतद्धितलुकीत्यधिकारात् ॥ ५० ॥ ज० म०

चिरमित्यादि । चिरकालं करुणं सशोकं सफूत्कारं रुदित्वा क्रन्दित्वा सरितं नदीं समेत्य सम्भूय गत्वा मध्ये अवतीर्य जलमध्यादागम्य वा रामलक्ष्मणाभ्याम् अपाम् अन्तिके जलसमीपे तटे द्व्यञ्जलम् अञ्जलिद्वयपरिच्छिन्नं जलं गोत्राभिधायं यथा स्यात्तथा प्रत्तं प्रदत्तं डुदाञ्दाने क्तः अच उपसर्गात्त इति पक्षे तादेशः मध्ये जलादिति मध्ये इत्यव्ययं हस्ते पाणौ प्राध्वमित्यादौ तत्परिग्रहणात् जलस्य मध्ये मध्येजलमित्यव्ययीभावः यवर्थे पञ्चमी अन्यारादित्यादिना सामान्यतो यवर्थे पञ्चम्युक्ता तेन सर्वस्मात् कारकाकारकात् यवर्थे पञ्चमी दुर्निवारा परैस्तु कर्माधाराभ्यां यवर्थे पञ्चमी भूरिप्रयोगार्थमुक्ता क्वचिदन्यत्रापीति तैरुक्तत्वात् वोपदेवेनापि सामान्यतो यवर्थे पञ्चमीमुक्ता चानन्दादीश्वरः शैलादासनादीक्षतेऽवरुह्यामित्यत्र शैलमारुह्य आसने उपविश्य

अरण्ययाने सुकरे पिता मां
प्रायुङ्क्त राज्ये बत दुष्करे त्वाम्।
मागाः शुचं वीर! भरं वहामुम्
आभाषि रामेण वचः कनीयान्॥ ५१॥

इत्यर्थ इति व्याख्यातं तेन कर्म्माधाराभ्यां यदर्थं पञ्चम्या भूरिप्रयोगो ज्ञापितः वावृक्तर्मोऽतोम्या इति पौवर्जनात् न मः मध्ये समेत्य जलादुत्थाय जलं प्रत्तमिति केचित् द्व्यञ्जलमिति द्वयोरञ्जल्योः समाहार इति द्वितिभ्यामञ्जलेर् इत्यप्रत्ययः यथोर्लोप इतीकारलोपः तत्परिच्छिन्नत्वादभेदोपचारात् जलमपि द्व्यञ्जलकं ताभ्यामेकैकाञ्जलिदानादञ्जलिद्वयं जलं दत्तमित्यर्थः केचित्तु अतद्धितार्थे द्विगौ द्वितिभ्यामञ्जलेर इत्युक्ता द्वावञ्जली प्रमाणमस्येति वाक्यं दूषयन्ति प्रमाणार्थस्य तद्धितवाच्यत्वात् गोत्राभिधायमिति गोत्रस्य नाम्नोऽभिधायोऽभिधानं यत्र दानक्रियाविशेषणम् अभिपूर्व्वात् धाञो घञि यन्ज्-र्णिदिति यत् किंवा गोत्रमभिधाय गोत्राभिधायं द्वितयान्तात् धातोर्णमभिधानात् केचित्तु आत्मीयैर्धृताभ्यां नीताभ्यां रामलक्ष्मणाभ्याम् अपामन्तिके चिरं रुदित्वा तदनु मध्ये मध्यभागसमीपे सरितं समेत्य नाभिपर्य्यन्तं जलं गत्वेत्यर्थः जलं प्रत्तं कीदृशं जलं जलात् अदेः कर्मणि क्विप् जलस्य जड़स्य अदनीयं भावे क्विपि जड़स्य अदनीयं भोजनं यस्मादिति वा लोकान्तरं प्राप्तस्यापि दशरथस्य जड़त्वं त्यक्तरामत्वात् प्रेतत्वाद्वा मनीषादित्वात् डस्य प्राच्चिकं लत्वं गोत्राभिधायमित्यस्य रुदित्वेत्यनेन वा सम्बन्ध इत्याहुः॥ ५०॥ भ०

अरण्ययान इत्यादि। अरण्याय यानम् अरण्ययानं तस्मिन् सुकरे सुखसाध्ये पिता मां प्रायुङ्क्त नियुक्तवान् युजेरौधादिकस्य लङि रूपम् कर्त्रभिप्राये प्रोपाभ्यां युजेरित्यात्मनेपदम्। राज्ये दुष्करे दुःखसाध्ये त्वां प्रायुङ्क्त एवञ्च सति, हे वीर! शुचं शोकम्मागाः माकार्षीरित्यर्थः इणो गा लुङि गातिस्थेति सिचो लुक्, बत इति खेदे किन्तु भरमसुं पितुर्नियोगं श्भरण इत्यस्मात् ऋदोरप् वह सम्पादय

क्षती श्रुती वृद्धमतेषु धीमां-

स्त्वं पैतृकं चेद् वचनं न कुर्य्याः।

विच्छिद्यमानेऽपि कुले परस्य

पुंसः कथं स्यादिह पुत्रकाम्या ॥ ५२ ॥

विधौ लोट् एवं वचः रामेण कनीयान् अनुजो भ्राता भरतः आभाषि भाषितः कर्मणि लुङ् ब्रुवीत्यर्थग्रहणात् द्विकर्मकता अल्पशब्दादीयः सुनि युवाल्पयोरित्यादिना कनादेशः ॥ ५१ ॥ ज० म०

अरण्ययान इत्यादि। रामेण कनीयान् भरतो वच आभाषि कथितः ब्रुवेरर्थग्रहणात् याच्ञार्थदुहचोत्यनेन द्विकर्मकत्वं गौणे याचादय इति गौणकर्मोक्तम् अल्पशब्दाद् गुणाहेऽयसु इति ईयसुः युवाल्पौ कन् वेति कनादेशः किं तदच इत्याह पिता सुकरे सुखसाध्ये अरण्ययाने वनगमने मां प्रायुङ्क्त दुष्करे दुःखसाध्ये राज्ये राजकर्मणि त्वां प्रायुङ्क्त नियुक्तवान् युजेर्घ्यां रुधादित्वात् श्नम् युजिर उद्ग्रच इति ई नणोर्नृणाविति नादेशः चङिति कुङ् अपेजल्नोः ईषद्दुःसोः खलिति क्षञः खल् विकारसंघेत्यादिना राज्ञः कर्मार्थे ङ्यः मन् वर्जा-नित्यादिना भावकर्मयवर्जनात् ब्योर्जोपौ ताविति राज्ञो नस्य लोपः व्व खेदे एवं सति, हे वीर! शुचं शोकं मागाः न लभस्व इणो गा लुङि भूस्थापिबेति सेर्लुक् अमुं भरं पितृनियोगरूपं त्वं वह सम्पादय विधौ गो भरोऽतिशयभारयोरिति कोषः ॥ ५१ ॥ भ०

क्षतीत्यादि। वृद्धानां पण्डितानां मतेषु श्रुतानि क्षतानि चानुष्ठितानि येनेति आश्रमनेनेत्यधिकृत्य इष्टादित्वादिनिः क्तस्येन्विषयस्येति कर्मणि सप्तमी स्वमते भावक्तान्तादस्त्यर्थे इन्। स त्वमेवंविधः धीमान् पैतृकं पितुरागतं पितुर्यच्चेति चकाराहतठञि ईदुत्कां तात्कः चेद्यदि वचनं न कुर्य्याः मध्यमपुरुषैकवचने लिङि रूपम्। तदा विच्छिद्यमाने कुले वंशे परस्यापि अन्यस्यापि पुंसः अपिशब्दो भिन्नक्रमः कथं स्यादिह लोके पुत्रकाम्या आत्मनः पुत्रेच्छा नैवेत्यर्थः पुत्रशब्दात् काम्यश्चेति काम्यच् तदन्तादप्रत्ययः टाप् ॥ ५२ ॥ ज० म०

अस्माकमुक्तं बहु मन्यसे चेद्
यदीशिषे त्वं न मयि स्थिते च।
जिह्रेष्यतिष्ठन् यदि तातवाक्ये
जहीहि शङ्कां व्रज शाधि पृथ्वीम्॥ ५२॥

कृतीत्यादि। कृती त्वं पैतृकं पितुरागतं चेद्यदि न कुर्याः न करिष्यसि तदा कुले वंशे विच्छिद्यमानेऽपि परस्य उत्तरकालीनस्य श्रेष्ठस्य अन्यस्य वा पुंसः कथम् इह लोके पुत्रकाम्या आत्मनः पुत्रेच्छा स्यात् भवन्तं दृष्ट्वा अपिमस्य लोकस्य वचनाकरणेन पुत्रेऽप्यश्रद्धाप्रसङ्गात् त्वं कथम्भूतः वृद्धमतेषु पण्डितमतेषु कृती श्रुती च वृद्धमतानि कृतानि येन स वृद्धमतेषु कृती वृद्धमतानि श्रुतानि येन स वृद्धमतेषु श्रुती क्तेनाढे इति कर्मणि सप्तमी क्तेनाढे इति ज्ञापकात् क्तान्तात् कर्त्तरीनुप्रत्ययो बोध्यः किंवा कृतं करणम् अनुष्ठानं श्रुतं श्रवणं लिङ्भ्यां भावे क्तः ततोऽस्त्यर्थे नेकाजादितीन् वृद्धमतेष्विति विषयसप्तमी, धीमान् प्रशस्तबुद्धियुक्तः पैतृकमिति पितृशब्दादागतार्थे ढघेकादिति कण् कुर्या इति भव्ये वा फलहेत्वोरिति खी कुरुव्लोपो इत्युपोलोपश्चत्रः पुत्रकाम्येति जेः काम्यक् स्वेच्छायामिति काम्यक् संख्याद:॥ ५२॥ भ०

अस्माकमित्यादि। अस्माकमुक्तम् अस्मत्सम्बन्धि वचनं चेद् यदि बहु मन्यसे आद्रियसे पितृतुल्यो भ्राता अस्मात्तमतः कथमेवं न कुर्यामिति यदि च मयि स्थिते नेशिषे न प्रभुत्वं करोषि प्रभुस्त्वमहं त्वदाज्ञाकर इति ईशेरदादिकस्य ईशः स ईतीडागमः गुरुवचनमनतिक्रमणीयं विशेषतस्तातवाक्यं तस्मिन्नतिष्ठन् वचनमकुर्वाणः यदि जिह्रेषि लज्जसे स्लौ द्विर्वचनम् एतन्निमित्याह जहीहि शङ्कां त्यज विकल्पम् व्रज गच्छ अयोध्यां शाधि पालय पृथ्वीं जहातेश्चेति इत्वे विकल्पिते ईहल्यघोरितीत्वम् शासेः शाहाविति शाभावः तस्याभीयत्वेनासिद्धत्वात् हुजल्भ्योर्हेर्द्धिः॥ ५२॥ ज० म०

अस्माकमित्यादि। अस्माकमुक्तं वचनं चेद्यदि बहु मन्यसे आद्रियसे यदि वा मयि स्थिते त्वं न ईशिषे प्रभुत्वं न करोषि तातस्य

ज्येष्ठौरसां राज्यधुरां प्रवोढुं
कथं कनीयानहमुत्सहेय ।
मा मां प्रयुङ्क्थाः कुलकीर्त्तिलोपे
प्राह स्म रामं भरतोऽपि धर्म्यम् ॥ ५४ ॥

वाक्यो अतिष्ठन् पितृवचनमकुर्वाणो यदि जिह्रेषि लज्जसे तदा पृथ्वीं शाधि पालय एवं सति मम पितुश्च वचनं कृतं स्यात् अतो व्रज गच्छ अयोध्यां शङ्कां स्वायशोभयं जहीति त्यज अस्माकमिति त्वभावक्तेति कर्त्तरि षष्ठी सम्बन्धे इत्यन्ये गौरवे बहुत्वमभिधानात् अहमपि तव पितृतुल्य इति बहुत्वेन बोध्यते उक्तमिति भावे क्तः मन्यौङ् बोधे देयलङ् ऐश्वर्ये सप्तोरसेमिति इम् ह्रीलिलज्जे ओहाक्लित्यागे विधौ गौ आद्योरित्यादिना डी शास्त्वनुशासने जह्योर्धिशाधीति शाधिः ॥ ५३ ॥ म०

ज्येष्ठौरसामित्यादि । भरतः प्राह धूर्वहनशीला धूर्नयनशीला इत्यर्थः अनेकार्थत्वाद्धातूनां भ्राजभासेति क्विप् राल्लोप इति वलोपः राज्यस्य सम्राङ्गस्य धूर्धावी प्रकृतिरिति विग्रहः ऋक्पूरित्यकारप्रत्ययः परवल्लिङ्गमिति धूरिति स्त्रीलिङ्गं ततष्टाप् कीदृशीं ज्येष्ठौरसां ज्येष्ठो ज्येष्ठः औरसः पुत्रो यस्याम् उरसा निर्मित इति छन्दसो निर्मित इत्यनुवृत्तौ उरसोऽण् चेत्यण् तां तिष्ठति रामे प्रवोढुं कथमुत्सहेय कनीयान् सन् नैवेत्यर्थः अकष्टेत्यादिना वहेः सहावुपपदे तुमुन् गर्हायां लडपिजात्वोरित्यनुवृत्तौ विभाषाकथमिलिङ् चेति लिङ् सहे- रुत्पूर्वस्य आत्मनेपदित्वात् सीयुट् इटोत् लिङः सलोपो ऽन्त्यस्य । अतो मां प्रयुङ्क्थाः मा नियोजय माङिलुङ् झलो झलीति सिचो लोपः कुलकीर्त्तिलोपे लोपयतीति लोपः पचाद्यच् रघुवंशस्य या कीर्त्तिः तस्या लोप इति समासः पूर्वैरनाचरितत्वात् एवञ्च धर्म्यं धर्मादनपेतं भरतोऽपि प्राह स्म उक्तवान् पुनश्चाह ॥ ५४ ॥ ज० म०

ज्येष्ठौरसामित्यादि । रामस्य धर्म्यवचनानन्तरं भरतोऽपि धर्म्यं धर्मादनपेतं वचो रामं प्राह स्म प्रोवाच विकारसंघेत्यादिना अन्ये-

ऊर्जस्वलं हस्तितुरङ्गमेतद्
अमूनि रत्नानि च राजभाञ्जि ।
राजन्यकं चैतदहं क्षितीन्द्र-
स्त्वयि स्थिते स्यामिति शान्तमेतत् ॥ ५५ ॥

तार्थे धर्मात् यः किं प्राह स इत्याह कनीयानहम् अनुजोऽहं राज्यधुरां प्रवोढुं कथम् उत्सहेय उत्साहं करिष्यामि कथमालोचयेति पक्षे स्वी राज्ञो धुः राजधुरा धुरोऽनक्षस्येति अः स्त्रियामत आप् । धूश्च स्याद् भारचिन्तयोरिति कोषः । कीदृशीं ज्येष्ठो ज्येष्ठ औरसः पुत्रो यस्यां ताम् उरसा निर्मित इति ढघेकादिति ष्णत्रः ज्येष्ठपुत्रसम्बन्धिनीं राज्यधुरामित्यर्थः वहेश्चतुमि स हवहोदोढीत्योत्वम् अतएव कुलकीर्त्तिलोपे धूर्वहे मां मा प्रयुङ्क्ष्या न नियोजय लोपयतीति लोपः पचादित्वादन् यद्वा लोपो नाशः युजेर्माटी वेति टी युजिर् उद्गयच इति सं अत्याज् भ्वमीति सेर्लुक् माङ्योगेऽमनिषेधः॥ ५४ ॥ भ०

ऊर्जेत्यादि । एतद्धस्तितुरङ्गं सेनाङ्गत्वादेकवद्भावः । ऊर्जस्वलं बलवत् ऊर्जनमूर्क् सम्पदादित्वात् क्विप् सा विद्यते यस्येति ज्योत्स्नातमिस्रेत्यादिना वलच् असुगागमश्च अमूनि च रत्नानि राजभाञ्जि राजग्राह्याणि एतच्च राजन्यकं क्षत्रियसमूहः क्षितीन्द्रो राजा अहं त्वयि स्थिते स्यामिति भवामीति शान्तमेतत् अलीकमेतत् स्यामिति निमन्त्रणे नियोगकरणे लिङ् ॥ ५५ ॥ ज० स०

ऊर्जस्वलमित्यादि । एतदूर्जस्वलं बलवद्धस्तितुरङ्गम् अमूनि राजयोग्यानि रत्नानि एतच्च राजन्यकं क्षत्रियसमूहः एवं सर्वं निवेद्यात्मानं निराकरोति त्वयि स्थिते अहं क्षितीन्द्रः स्यां भवेयम् इत्येतद् वचनं शान्तम् अलीकम् अनुचितमित्यर्थः अस्तेर्निमन्त्रणे नियोगकरणे प्रार्थने वा स्वी ऊर्जकृजीवने बले त्वात्सिति असऊर्जो विद्यतेऽस्य इति गोदत्वमेधेत्यादिना रज आदित्वाद्वलः हस्तिनश्च तुरङ्गाश्च इति समाहारद्वन्द्वः राजन्यशब्दात् विकारसङ्घेत्यादिना सङ्घार्थे कण् ॥ ५५ ॥ भ०

इति निगदितवन्तं राघवस्तं जगाद
व्रज भरत ! गृहीत्वा पादुके त्वं मदीये ।
च्युतनिखिलविशङ्कः पूज्यमानो जनौघैः
सकलभुवनराज्यं कारयास्मन्मतेन ॥ ५६ ॥

इति भट्टिकाव्ये प्रकीर्णकाण्डे श्रीरामप्रवासो
नाम तृतीयः सर्गः ।

---

इतीत्यादि । इति एवं निगदितवन्तम् उक्तवन्तं तं भरतं राघवो रामो जगाद उक्तवान् किमित्याह, हे भरत ! मदीये पादुके उपानहौ गृहीत्वा त्वं व्रज गच्छ विधौ लोट् अस्मदस्मदादित्वे त्यदादीनि चेति वृद्धिसंज्ञायां तस्येदमर्थे वृद्धाच्छः प्रत्ययोत्तरपदयोश्चेति मदादेशः ततश्च पूज्यमानो जनौघैर्जनसमूहैः च्युतनिखिलविशङ्कः अपगताशेषविकल्पः सकलभुवनराज्यं सर्वत्र भूमण्डले राज्यं कारय अनुष्ठापय पादुके इति योज्यम् अस्मन्मतेन अस्माकमभिप्रायेण अत्र मदादेशो न भवति अस्मदो बहुवचनान्तस्य विवक्षितत्वात् तत्र ह्येकवचन इति वर्त्तते ननु कथं मदीय इत्यत्र मदादेशः बहुवचनान्तत्वादिति विरोधः पादुके रामस्यैव तर्ह्यस्मन्मतेन इत्यत्रापि एकवचनम् आवयोरामलक्ष्मणयोर्मतेनेति षष्ठीसमासे न दोषः ॥ ५६ ॥ ज० म०

इति भट्टिकाव्यटीकायाञ्जयमङ्गलायां प्रकीर्णकाण्डे
रामप्रवासो नाम तृतीयः सर्गः ।

इतीत्यादि । इत्येवं निगदितवन्तं भरतं राघवो रामो जगाद किं जगादेत्याह, हे भरत ! मदीये पादुके गृहीत्वा त्वं व्रज गच्छ अयोध्यामित्यर्थात् विधौ लोट् विकारसंघेति इदमर्थे ईयः युष्मदस्मदोस्त्वाहाविस्याहिनास्मदो मदादेशः च्युतनिखिलविशङ्कः अपगताशेषविशङ्कः जनौघैर्जनसमूहैः पूज्यमानस्त्वं सकलभुवनराज्यम् अस्मन्मतेन कारय पादुके इत्यर्थात् किंवा अस्मन्मतेन प्रयोज्यकर्त्रा राज्यं कारय गोऽञ्जोश्चेरिति

# चतुर्थः सर्गः ।

निवृत्ते भरते धीमानत्रे रामस्तपोवनम् ।
प्रपेदे पूजितस्तस्मिन् दण्डकारण्यमीयिवान् ॥ १ ॥

प्रयोज्यकर्त्तुः पाक्षिककर्मत्वम् अत साधनहेतिति तृतीया अस्मन्मतमेव राज्यं करोतु तत्क्रियमाणरक्षणेनेति भावः किंवा रामो राज्यमकारयदितिवत् स्वार्थे ञिः च्युर्य्योञिरित्यत्र योगविभागात् किंवा हे अस्मन्मते ! अस्मत्सदृशबुद्धे ! राज्यं न कारय न घातय शत्रुभिरित्यर्थः शीघ्रं गत्वा राज्यं रक्षेति भावः कृञ्ग् हिंसे इत्यस्मात् ञिः प्रेरणे आवयोः रामलक्ष्मणयोरिव मतिर्यस्य तस्य सम्बोधनम् एतेन राज्यरक्षणे राममतितुल्यमतित्वं दर्शितं किंवा अस्मन्मतेन राज्यं कारय ज्ञापय लोकानित्यर्थात् स्वयम् अहं राज्यं न करोमि किन्तु रामाज्ञया करोमीति पादुकाग्रहणविनयेन लोकान् ज्ञापय इति भावः ककङ् विज्ञाने इत्यस्मात् प्रेरणे ञिः राज्ञो भावः कर्म वा राज्यं अस्माकं मतम् अस्मन्मतं तेन सीतालक्ष्मणसहितत्वेन बहुत्वविवक्षया न मदादेशः ॥ ५६ ॥ भ०

इति भरतसेनकृतायां मुग्धबोधिन्यां प्रकीर्णकाण्डे
रामप्रवासो नाम तृतीयः सर्गः ।

---

निवृत्त इत्यादि । धीमान् बुद्धिमान् अत्र स्थिते मयि कदाचित् भरतः पुनरेष्यतीत्येवंबुद्धिमान् रामः अत्रेर्महर्षेस्तपोवनं प्रपेदे गतः तस्मिंश्च तपोवने अर्घ्यपाद्यादिभिः पूजितः दण्डको नाम ऋषिभार्गवकन्यामहरत् तच्छापात् पांशुवर्षेणाक्रान्तः सबन्धुराष्ट्रविनाशो यस्मिन् स्थाने तत्तोपलक्षितं शरण्यमभूत् तदीयिवान् गतवान् उपेयिवानित्यत्र उपसर्गस्यातन्त्रत्वात् केवलादपीणः क्वसुः ॥ १ ॥ जं० म०

अटाट्यमानोऽरण्यानीं ससीतः सहलक्ष्मणः ।
बलाद् बुभुक्षुणोत्क्षिप्य जह्रे भीमेन रक्षसा ॥ २ ॥
अवाक्शिरसमुत्पादं कृतान्तेनापि दुर्दमम् ।
भङ्क्त्वा भुजौ विराधाख्यं तं तौ भुवि निचख्नतुः ॥ ३ ॥

निवृत्ते इत्यादि । भरते निवृत्ते सति रामोऽत्रेर्महर्षेस्तपोवनं प्रपेदे गतवान् तत्र वने मुनिभिः पूजितः सन् दण्डकारण्यमीयिवान् गतः इणः क्वसुः वस्वेकाजाद्घसामिति इट् इणो यणिति यः यिणोऽभ्यासस्य दीर्घः दण्डकनाम्नः कस्यचिद्राज्ञोऽपराधेन ब्रह्मशापात् तद्देशे अरण्योत्पत्त्या दण्डकारण्यमिति प्रसिद्धिः ॥ १ ॥ भ०

अटेत्यादि । महदरण्यमरण्यानी इन्द्रवरुणेत्यादिना हिमारण्ययोर्महत्त्वे ङीषानुकौ ताम् अटाट्यमानः अत्यर्थमटन् रामः सूचिसूत्रीत्यादिना यङ् ससीतः सहलक्ष्मणः वोपसर्जनस्येति विकल्पेन सभावः बलात् बलवत्तया जह्रे हृतः गृहीत इत्यर्थः कर्मणि लिट् उत्क्षिप्य उत्थाप्य हस्ताभ्यां केनापि रक्षसा वैश्रवणशापात् तुम्बुरुनाम्ना गन्धर्वेण राक्षसीभूतेन विराधाख्येन बुभुक्षुणा भोक्तुमिच्छुना भीमेन भयानकेन भियः षुक् इत्यौणादिकषुगभावपक्षे रूपम् ॥ २ ॥ ज० म०

अटाट्यमान इत्यादि । बुभुक्षुणा भोक्तुमिच्छुना भीमेन भयानकेन रक्षसा राक्षसेन उत्क्षिप्य हस्ताभ्यामुत्थाय रामो जह्रे गृहीत इत्यर्थः कर्मणि ठो किम्भूतः सीतया लक्ष्मणेन च सहितो रामः अरण्यानीं महारण्यम् अटाट्यमानः पुनःपुनरतिशयेन वा अटन् गच्छन् सूत्रसूत्रेति यङ् केचित्तु गत्यर्थाद् गृलुपेति नियमात् अत्रापि वक्रताविवक्षेत्याहुः तन्मते पद्योऽभावात् छन्दसंयोगेन वक्रं गच्छन्नित्यर्थः महदरण्यम् अरण्यानी नारीसखीत्यादिना निपातः सहः सो वेति सहशब्दस्य विकल्पेन सादेशः ॥ २ ॥ भ०

अवागित्यादि । तं विराधाख्यं राक्षसं कृतान्तेनापि यमेनापि दुर्दमं दुःखेन दम्यत इति खल् तौ रामलक्ष्मणौ भुवि निचख्नतुः

आंहिषातां रघुव्याघ्रौ शरभङ्गाश्रमं ततः।
अध्यासितं श्रिया ब्राह्म्या शरण्यं शरणैषिणाम्॥ ४॥
पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः।
शरभङ्गः प्रदिश्यारात् सुतीक्ष्णमुनिकेतनम्॥ ५॥

निखातवन्तौ कीदृशम् अवाक्शिरसम् अधोमस्तकम् अवाक् शिरो यस्येति ऊर्द्ध्वं पादौ यस्येति ऊर्द्ध्वपादम् भुजौ भङ्क्त्वा मोटयित्वा जान्तनशां विभाषेत्यनुनासिकलोपाभावपक्षे रूपम्॥ २॥ ज० म०

अवाक्शिरसमित्यादि। तौ रामलक्ष्मणौ तं विराधाख्यं राक्षसं भुजौ भङ्क्त्वा भुवि निचख्नतुः निखातवन्तौ खनगमित्युङ्लोपः किम्भूतम् अवाक्शिरसम् अधोमस्तकम् ऊर्द्ध्वपादम् ऊर्द्ध्वौ पादावस्येति बहुव्रीहिः कृतान्तेन यमेनापि दुर्दमं दुःखेन दमनीयम् ईषद्दुःसोरिति खल् भङ्क्त्वेति भञ्जोऽनिम् इति विभाषितकित्त्वात् पक्षे नलोपाभावः॥ ३॥ भ०

आंहीत्यादि। ततो विराधवधानन्तरं रघुव्याघ्रौ शरभङ्गनाम्नो मुनेराश्रमम् आंहिषातां गतवन्तौ अंहेर्लुङि रूपम् अध्यासितम् आश्रयीकृतं श्रिया लक्ष्म्या ब्राह्म्या ब्रह्मसम्बन्धिन्या ब्रह्मण इयमित्यण् ब्राह्मो जाताविति निपातनात् टिलोपः टिड्ढाणञित्यादिना ङीप् शरणे अवस्थाने साधु अनुकूलं शरण्यं तत्र साधुरिति यत् शरणैषिणां शरणं त्राणमेषितुं शीलं येषाम्॥ ४॥ ज० म०

आंहिषातामित्यादि। ततो विराधवधानन्तरं रघुव्याघ्रौ रघुवंशश्रेष्ठौ शरभङ्गनाम्नो मुनेराश्रमम् आंहिषाताम् अहिगतौ टी ब्राह्म्या ब्रह्मसम्बन्धिन्या श्रिया लक्ष्म्या अध्यासितम् आश्रयीकृतं ब्रह्मणो देवस्य विप्रस्य तपसो वा इयमिति षण्ः शरणं त्राणम् एषितुं शीलं येषां तेषां शरण्यं शरणेऽवस्थाने त्राणे वा साधु अनुकूलं विकारसंघेति साध्वर्थे यः शरणं बधरक्षित्रोः शरणं रक्षणे गृहे इति विश्वः॥४॥ भ०

पुर इत्यादि। शरभङ्गो रामस्य पुरः अग्रतः वपुः शरीरं ज्वलने अग्नौ जुहवाञ्चकार क्षिप्तवान् तस्य भीह्रीभृहुवामिति आम् आमितु-

यूयं समैष्यथेत्यस्मिन्नासिष्महि वयं वने ।
दृष्टाः स्थ स्वस्ति वो यामः स्वपुण्यविजितां गतिम् ॥ ६ ॥

भावे द्विर्वचनं किं कर्त्तव्येत्याह प्रदिश्य कथयित्वा किम् आरात् समीपे सुतीक्ष्णनाम्नो मुनेः केतनम् आश्रमं तत्र वासमुपकल्पयेति तव किमर्थमत्रावस्थानमिति चेदाह ॥ ५ ॥ ज० म०

पुर इत्यादि । शरभङ्ग आरात् समीपे सुतीक्ष्णनाम्नो मुनेः केतनम् आश्रमं प्रदिश्य तत्र वासं कल्पयेति कथयित्वा रामस्य पुरोऽग्रतः ज्वलनेऽग्नौ वपुः शरीरं जुहयाञ्चकार हुतवान् प्रशाम् वा भीह्रीति प्रशाम् शित्वादृत्वे ह्रादीरेद्विः श्वश्रुन्वामः प्रक्षेपमात्रस्य धात्वर्थस्य विवक्षितत्वात् ज्वलन इत्यस्य होमलभ्यत्वात् वैयर्थ्यं न वाच्यम् ॥५॥ भ०

यूयमित्यादि । तव किमर्थमत्रावस्थानमिति चेदाह अपि नाम यूयं समैष्यथ आगमिष्यथ आङ्पूर्वं इण् आगमने वर्त्तते एत्येधत्यूट्स्विति वृद्धिः इत्यस्मात् कारणात् अस्मिन् वने वयमासिष्महि स्थिताः । आसेर्लुङि रूपम् अस्मदो द्वयोश्चेति चकारस्यानुक्तसमुच्चयत्वादेकत्वे बहुवचनम् अस्मदागमने किं ते फलमिति चेदाह दृष्टाः स्थ अधुना दृष्टा भवथ । अस्तेर्मध्यमपुरुषबहुवचने असोरल्लोप इत्यकारलोपः । स्वस्ति कल्याणं वः युष्मभ्यं नमःस्वस्तीत्यादिना चतुर्थी बहुवचनस्य वस्नसौ । स्वपुण्येन विजितां लब्धां गतिं जन्म यामः व्रजामः रामरूपेण विष्णुरवतीर्णः तं दृष्ट्वा यास्याम इत्यत्र वयं स्थिता इति ॥ ६ ॥ ज० म०

यूयमित्यादि । न केवलं सुतीक्ष्णमुनिकेतनं प्रदिश्य एतदपि प्रदिश्येति योज्यं यूयं समैष्यथ समागमिष्यथ इति हेतोरस्मिन् वने वयमासिष्महि आङ्पूर्वं इण् आगमने वर्त्तते आसेर्ल्लुङि सिः । वयमिति एकत्वेऽपि बहुत्वविवक्षा । परे तु एकत्वे वा बहुत्वमस्मदोऽविशेषणस्येत्याहुः यूयं दृष्टाः स्थ लोपोऽस्त्यसोरित्यकारलोपः स्वस्ति वः कल्याणं युष्मभ्यम् । शक्तार्थवषड़ित्यादिना चतुर्थी द्वीचीषीत्यामित्यादिना वसादेशः वयं स्वपुण्येन विजितां लब्धां गतिं यामो गच्छामः

तस्मिन् कृशानुसाद्भूते सुतीक्ष्णमुनिसन्निधौ।
उवास पर्णशालायां भ्रमन्ननिशमाश्रमान्॥ ७॥
वनेषु वासतेयेषु निवसन् पर्णसंस्तरः।
शय्योत्थायं मृगान् विध्यन्नातिथेयो विचक्रमे॥ ८॥

विष्णुरूपे त्वयि दृष्टे शोभना गतिर्भविष्यतीत्याशया एतावन्तं कालं तिष्ठाम इति भावः॥ ६॥ भ०

तस्मिन्नित्यादि। तस्मिन् शरभङ्गे कृशानुसाद्भूते कार्त्स्न्ये-नाग्नीभूते विभाषा सातिः कार्त्स्न्ये इति सातिः रामः सुतीक्ष्णस्य मुनेः सन्निधौ समीपे पर्णशालायां पर्णकुट्यामुवास उषितवान् तत्र कृताभिवासस्य वृत्तिमाह भ्रमन्ननिशमाश्रमान् पर्यटन् सदा तपोवनानि मुनीन् उपासितुम्॥ ७॥ ज० म०

तस्मिन्नित्यादि। तस्मिन् शरभङ्गे कृशानुसाद्भूते कार्त्स्न्ये-नाग्नीभूते सति रामः सुतीक्ष्णमुनेः सन्निधौ समीपे पर्णशालायां पर्ण-कुट्याम् उवास वसेर्जोनिवासे ठो व्यवपद्देति जिः कार्त्स्न्यावस्थोरिति वसात् किजादित्यादौ साद्वर्जनात् न षत्वम् अनिशं निरन्तरम् आश्र-मान् भ्रमन् पर्यटन् अर्थान्मुनीनुपासितुम्॥ ७॥ भ०

वनेष्वित्यादि। वासतेयेषु वसतौ साधुषु पथ्यतिथीत्यादिना ढञ् निवसन् शयानः संस्तीर्यते इति संस्तरः ऋदोरप् पर्णानि संस्तरो यस्येति पर्णसंस्तरः शय्योत्थायं शय्याया उत्थाय उत्पूर्वात्तिष्ठतेरपादाने परीप्सायामिति णमुल् शय्यते अस्यामिति शय्या संज्ञायामित्यादिना क्यप्। त्वरया मुखधावनादीन्यपि न कृत्वा मृगान् विध्यन् ताड़यन् ग्रहिज्यादिना सम्प्रसारणं तत्रापि नात्मार्थं लुब्ध इत्याह आतिथेयः अतिथौ साधुः पूर्ववत् ढञ् विचक्रमे विहरति स्म वेः पादविहरण इति तङ्॥ ८॥ ज० म०

वनेष्वित्यादि। वासतेयेषु वसतौ निवासे रात्रौ वा साधुषु वनेषु निवसन् वासं कुर्वन् शयानो वा पर्णसंस्तरः पत्ररचितशय्यः सन् शय्यो-त्थायं शय्यायास्त्वरया उत्थाय मृगान् विध्यन् ताड़यन् विचक्रमे विह-

ऋग्यजुषमधीयानान् सामन्यांश्च समर्चयन् ।
बुभुजे देवसात्कृत्वा शूल्यमुख्यञ्च होमवान् ॥ ९ ॥

इति स्म तत्रापि नात्मार्थं बध इत्याह आतिथेयः अतिथौ साधुः ढथेकादिति वसत्यथितिभ्यां साध्वर्थे ण्ये ययोर्लोप इतीकारलोपः शय्योत्थायमित्यभिधानात् पश्चस्यन्तात् त्वरायां चणम् किंवा शय्याया उत्थानं यस्य इति मृगवेधनक्रियाविशेषणम् एतेन शयनोचितकालेऽपि मृगताड़ननिमित्तं शय्योत्थानं गम्यते तेन च सुतरां त्वरापि व्यजिन् पश्चे भावे घञ् यनुञ्चिदिति यन् उदः सःस्यास्तम्भोरिति सलोपः शेरतेऽस्यामिति शय्या शीव्रजयजेति क्यप् शीङोङ्क्येऽयो ध्यध्यौ ताडेः शत्वः प्रहृखपाद्योरिति ञिः वेषङ्गिरिति विपूर्वात् क्रमो मं ॥ ८ ॥ भ०

ऋग्यजुषमित्यादि । ऋक् च यजुश्च ऋग्यजुषम् अचतुरेत्यादिना निपातितं द्वन्द्वाच्चुदषहान्तात् समाहारे टच् ऋग्वेदं यजुर्वेदञ्च अधीयानान् पठतः इङोऽधिपूर्वस्य लटि शानचि रूपम् न लोकेति षष्ठीप्रतिषेधः सामान्यांश्च सामसु साधून् द्विजान् तत्र साधुरिति यत् ये चाभावकर्मणोरिति प्रकृतिभावः समर्चयन् पूजयन् शूल्यमुख्यञ्च मांसं बुभुजे भुक्तवान् शूले उखायाञ्च स्थाल्यां संस्कृतम् शूलोखाद्यत् भुजोऽशन इति तङ् किं कृत्वा देवसात् कृत्वा देवेभ्यो दत्त्वा तदधीनं कृत्वा देये त्राचेति चकारात्सातिश्च होमवान् होमो विद्यते यस्येति कृताग्निकार्यं इत्यर्थः ॥ ९ ॥ ज० म०

ऋग्यजुषमित्यादि । ऋग्यजुषम् ऋग्वेदं ययुर्वेदञ्च अधीयानान् पठतो मुनीन् सामन्यान् सामवेदकुशलांश्च समर्चयन् सम्यक् पूजयन् शूल्यं शूलपाचितम् उख्यं स्थालीसंस्कृतं च मांसं देवसात् कृत्वा देवाय देयं कृत्वा बुभुजे भुजोऽशने इति मं । होमवान् कृताग्निकार्यः नित्यं होमो विद्यतेऽस्येति मोङ्मक्षपादिति वतः ऋक्च यजुश्चेति चैक्याचुदसहोरिति अः अधीङ्ल अध्ययने शानः मुध्वोरितीयः सामशब्दात् ढथेकादिति साध्वर्थे ण्यः मनुवर्जेत्यादिना नलोपाभावः अर्चक् पूजे

वसानस्तन्त्रकनिभे सर्वाङ्गीने तरुत्वचौ ।
काण्डीरः खाङ्गिकः शार्ङ्गी रक्षन् विप्रांस्तनुत्रवान् ॥१०॥
हित्वाश्रितङ्गवीनानि फलैर्येष्वाश्रितम्भवम् ।
तेष्वसौ दन्दशूकारिर्वनेष्वानभ्र निर्भयः ॥ ११ ॥

चुरादिजन्तात् शब्दः देवशब्दात् देये त्राचेति चकारात् चसात् ढघेकादिति सूत्रोत्ताभ्यां तत्र संस्कृतेऽर्थे यः ॥ ९ ॥ भ०

वसान इत्यादि । असौ रामो वनेष्वानभ्र भ्रान्तवानिति वक्ष्यमाणेन श्लोकेन सम्बन्धः । वसानः परिदधानः वस आच्छादने इत्यस्मात् शानच् तरुत्वचौ वल्कले प्रत्यग्रे तन्त्रकः तन्त्रादचिरापहृत इति कन् तन्निभे तत्तुल्ये सर्वाङ्गीने सर्वाङ्गाणि व्याप्नुवत्यौ तत्सर्वेत्यादिना खः काण्डीरः काण्डोऽस्यास्तीति काण्डाण्डादीरन्नीरचौ खाड्गिकः खड्गोऽस्यास्तीति अत इनि ठनौ खाड्गिक इति पाठान्तरम् । तत्र खड्ग प्रहरणमिति ठक् शार्ङ्गी सधनुः तनुत्रवान् तनुं शरीरं त्रायत इति तनुत्रम् आतोऽनुपसर्गे कः संसर्गे मतुप् पिनद्धकवच इत्यर्थः स एवंविधो विप्रान् ब्राह्मणान् रक्षन् ॥ १० ॥ ज० म०

वसान इत्यादि । असौ रामो वनेष्वानभ्र इति वक्ष्यमाणश्लोकेनान्वयः कीदृशः तरुत्वचौ वसानः परिदधानः वसल्ङस्तृतौ शानः कीदृश्यौ तन्त्रकनिभे नूतनवस्त्रतुल्ये तन्त्रात् पटोपकरणात् अचिरोद्धृतं वस्त्रं तन्त्रकं ढघेकादिति विकारसंघेत्यादिना आदिशब्दात् अचिरोद्धृतार्थे तन्त्रशब्दात् कः तन्त्रकञ्च नवाम्बरे इत्यमरः सर्वाङ्गीने सर्वाङ्गं व्याप्नुवत्यौ ढघेकादिति तद्व्याप्नोतीत्यर्थे ईनः काण्डीरः प्रशस्तकाण्डयुक्तः गोष्ठणसेधेत्यादिना अस्त्यर्थे ईरः खाड्गिकः खड्गेन युध्यतेऽसाविति ढघेकादिति ष्णिकः शार्ङ्गी शृङ्गस्य विकारः शार्ङ्गं धनुः विकारसंघेति ष्णः शार्ङ्गं विद्यतेऽस्येति नैकाजादिति इन् तनुं शरीरं त्रायते इति तनुत्रं कवचं हनजनादिति डः तद्युक्तः एवम्भूतः सन् विप्रान् रक्षन् ॥ १० ॥ भ०

हित्वेत्यादि । आश्रितास्तृप्ता गावो येषु भवन्ति तृणप्रायत्वात्

व्रातीनव्यालदीप्रास्त्रैः सुत्वनः परिपूजयन् ।
परिषद्वलान्महाब्रह्मैराट नैकटिकाश्रमान् ॥ १२ ॥

अषडक्षादिसूत्रेण खः पूर्वपदस्य च मान्तत्वन्निपात्यते तान्यरण्यानि हित्वा येषु वनेषु फलैराशितम्भवनमाशितस्य भवनं तृप्तिर्वर्त्तते आशिते भुव इत्यादिना भावे खच् तेष्वानभ्र अभ्रवभ्रेति गत्यर्थो धातुः लिटि अत आदेरिति दीर्घे तस्मान्नुड्द्विहल इति नुट् दन्दशूकारिः व्यालानां हन्ता लुपसदेत्यादिना दंशेर्यङ् तदन्ताद्यजजपेत्यादिना ऊकः ॥ ११ ॥ ज० म०

हित्वेत्यादि । आशितङ्गवीनानि वनानि हित्वा त्यक्त्वा तेषु वनेषु यतो आनभ्र भ्रमति स्म अभ्रगत्यां ठो स्यान्तादिति खेरान् आशिता-स्तृप्ता गावो यत्र तदाशितगु आङ्पूर्वोऽश्नातिस्तृप्त्यर्थः परे तु तृप्त्यर्थे-ऽशितस्यादौ दीर्घ इत्याहुः ततः स्वार्थ ईनः मकारागमो निपातनात् गोतृप्त्या तृणबाहुल्यात्तत्त्यागः केचित्त्वाहु येषु च फलैराशितम्भवम् आशितेन तृप्तेन भूयते भावचेत्वाशिताद् भुव इति खः । दन्दशूकानां व्यालानामरिर्हन्ता निर्भयो भयरहितः ॥ ११ ॥ भ०

व्रातीनेत्यादि । तेषु वनेषु भ्रमन् नैकटिकाश्रमानाट गतवान् अटेरभ्यासस्यात आदेरिति दीर्घत्वं ग्रामस्यान्तिके क्रोशमात्रं त्यक्त्वा यतयो भिक्षवो ये निवसन्ति ते नैकटिकाः निकटे वसतीति ठक् । तेषाम् आश्रमांस्तपोवनानि कीदृशः व्रातीनव्यालदीप्रास्त्रः नाना-जातीयाः अनियतवृत्तयः शरीरमायास्य ये जीवन्ति ते व्रातास्तेषां यत् कर्म तदपि व्रातन्तेन जीवन्ति इति व्रातीनाः व्रातेन जीवतीति खञ् तेषां व्याला हिंस्राः उपघातकाः तेषु दीप्रास्त्रः ज्वलदायुधः सप्तमीति योगविभागात् सः सुत्वनः सुतवतः परिपूजयन् सोमपायिन इत्यर्थः सुयजोर्ङ्वनिप् तुक् नसंयोगादित्यल्लोपो न पर्षद्वलानिति पर्ष-जेहने अस्मात्पर्षते स्निह्यतीति पृष्णसो दिरित्यत्र पर्षवांशुलकादौषा-दिको दिः पर्षत् तत्र यदि रजःक्षयात्सुतिपर्षदो बलजिति तदा पर्षत् विद्यते येषां सुत्वनामिति वलच् । अत्र परिषीदतीति परिषत् क्विबन्तो

परेद्यव्यद्य पूर्वेद्युरन्येद्युश्चापि चिन्तयन्।
वृद्धिक्षयौ मुनीन्द्राणां प्रियम्भावुकतामगात्॥ १२॥

यदा परिषद्ध्येषा गुणग्राहिणी तदा परिषद्वलं सहायो येषामिति बहुव्रीहिः महाब्रह्मैर्महाब्राह्मणैः कुमहद्भ्यामन्यतरस्यामिति टच् तैः सहाट॥ १२॥ ज० म०

व्रातीनेत्यादि। रामो नैकटिकाश्रमान् आट। अटगतौ ठी निकटे वसन्ति नैकटिका ढघेकादिति ष्णिकः तेषां मुनीनामाश्रमान् तपोवनानि किम्भूतः नानाजातीया अनियतवृत्तयः शरीरक्लेशेन ये जीवन्ति ते व्रातास्तेषां यत् कर्म तदपि व्रातमिति ह्रड़ं तेन जीवन्तीति व्रातीनाः पूर्ववदीनः तेषां मध्ये ये व्यालाः उपघातकास्तेषु दीप्तानि अस्त्राणि यस्य स तथा। व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनीति विश्वः। सुत्वनः सोमपान् परिपूजयन् षुञ् अभिषवे सुयजोर्ङ्वनिबिति कनिप् ह्रस्वस्य तुक् तनपितीति तन्। आश्रमान् कीदृशान् महाब्रह्मैर्महद्भिः ब्रह्मभिर्ब्राह्मणैः परिषद्वलान् सभायुक्तान् देशाद्ब्रह्मणः कुमहद्भ्यां त्ववेति षः परिषीदन्त्यत्रेति क्विप् परिषत् सभा गोष्ठ्येत्यादिना रज आदित्वाद्वलः नवाचरपादस्यापीष्टत्वात् न चात्र श्लोके छन्दोभङ्गः पर्षद्वलानिति पाठो पर्युपसर्गस्य इकारलोपो निपातनात्। आस्थानं संसदास्थानो पर्षत्परिषदौ समे इति रभसः। केचित् ब्राह्मणवाचके महच्छब्दविशेषणस्य विरुद्धार्थत्वात् महाब्रह्मैर्महातपोभिरुपलक्षितान् सुत्वनः विशेषणे तृतीया। न च देशाद्ब्रह्मण इति सूत्रे ब्राह्मणवाचको ब्रह्मशब्द इति नियम इत्याहुः॥ १२॥ भ०

परेद्यवीत्यादि। परेद्यवि परस्मिन् आगामिनि दिवसे इत्यर्थः अद्यैतस्मिन्नहनि पूर्वेद्युः पूर्वस्मिन्नहनि अन्येद्युरन्यस्मिन्नहनि चिरातिक्रान्ते चिरगामिनि दिवसे परेद्यवीत्यादिषु दिवसेषु मुनीन्द्राणां वृद्धिक्षयौ उदयापचयौ चिन्तयन् प्रियम्भावुकतां पूर्वं प्रियाभावनियुक्तत्वाद्तथाभूतः सन् प्रियो भवतीति प्रियम्भावुकः आढ्यसुभगेत्यभिसत्य कर्त्तरि भुवः खिष्णुच्खुकञाविति खुकञ् तद्भावः तामगात् गतः अयांशु

आतिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवम् ।
प्रातस्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन् रविम् ॥ १४ ॥

युग्मकम् ।

नीन्द्रस्यणामेव परेद्यव्यादयः शब्दाः सद्यःपरुदित्यादिना निपातिताः ॥ १२ ॥ ज० म०

परेद्यवीत्यादि । परेद्यवि परस्मिन्नहनि पूर्वेद्युः पूर्वस्मिन्नहनि अन्येद्युः अन्यस्मिन्नहनि च मुनीन्द्राणां वृद्धिक्षयौ धनशरीरादिगतोपचयापचयौ चिन्तयन् स्मरन् रामः प्रियम्भावुकताम् अगात् प्राप्तवान् अप्रियोऽपि प्रियो भवतीति भुवो वे खिष्णुखुकञाविति च्व्यर्थे खुकञ् परेद्यवि अद्य चेति कुतःककुह इत्यादिना निपातनात् पूर्वान्यान्यतरेति पूर्वान्याभ्याम् एद्युस् ॥ १२ ॥ भ०

आतीत्यादि । जपन्मन्त्रमिति सामर्थ्यं लभ्यं सन्ध्याकालोऽधिकरणन्तेनात्यन्तसंयोगे द्वितीया सस्यगध्यायन्त्यस्यामिति आतश्चोपसर्ग इत्यङ् किमवधिं सन्ध्यामित्याह प्रक्रान्तामायतीगवम् आयत्यः आयान्त्यो भवन्ति यस्मिन् काले गावः अस्मिन्नायतीगवं तिष्ठद्गु प्रभृतीनि चेत्यव्ययीभावसमासत्वात्साधुः नाव्ययीभावादिति यस्मिन् काले सन्ध्या अभ्भावः आङ्पूर्वादिणः शतरि इणो यणिति यणि ङीपि च रूपम् आयतीति गावोऽपि गोचरात् गोष्ठमायान्ति दिवसस्यार्द्धनाडिकावशेषे सन्ध्यापि तदैव प्रवर्त्तते कियन्तमेवञ्जपन्नित्याह आतिष्ठद्गु इति तिष्ठन्ति गावो यस्मिन् काले दोहाय गावो हि रात्रिप्रथमयामस्य नाडिकायामतीतायाम् अतिक्रान्तायां विश्रान्ताः सत्यः उत्थाप्य दुह्यन्ते आतिष्ठदित्याङ् मर्यादाभिविध्योरित्यव्ययीभावः तिष्ठद्गु प्रभृतीनि चेति चकारस्यानुक्तसमुच्चयार्थत्वादव्ययीभाव एव पुनः समासान्तरन्न भवति प्रातस्तरामिति प्रातरित्यव्ययं प्रभातवाचि प्रकर्षविवक्षयान्तरप् तदन्तात् किमेत्तीत्यादिना आम् अतिप्रभाते पतत्रिभ्यः कुक्कुटादिभ्यः प्रथमं प्रबुद्ध उत्थितः पञ्चमी विभक्ते इति पञ्चमी रविमादित्यं प्रणमन् यदा वर्तते तदा प्रियम्भावुकतामगादिति पूर्वेण योज्यम् ॥ १४ ॥ ज० म०

ददृशे पर्णशालायां राक्षस्याभीकयाथ सः ।
भार्य्योढ़ं तमवज्ञाय तस्थे सौमित्रयेऽसकौ ॥ १५ ॥

आतिष्ठदित्यादि । प्रियम्भावुकताम् अगादिति पूर्वेणान्वयः तिष्ठन्ति स्थिरीभवन्ति गावो यस्मिन् स तिष्ठद्गुः कालः रात्रेः प्रथमनाडिका तत्र हि विश्रान्ता गावः पश्चादुत्थाप्य दुह्यन्ते आयन्ति गोष्ठं गावो यस्मिन् काले स आयतीगवः कालः अर्द्धास्तमितभास्करः प्रायशस्तत्रैव गवानयनात् आङ्पूर्वादिणः शतृ तिष्ठद्ग्वायतीगवशब्दौ कालेऽव्ययीभावे निपातितौ आयतीगवकाले प्रक्रान्ताम् आरब्धां सन्ध्यां व्याप्य तिष्ठद्गुकालं यावत् जपन् अर्थान्मन्त्रम् अन्यारभ्येत्यादिना आङ्योगे पञ्चमी लुक्परादित्यादिना पञ्चमीलुक् सन्ध्यामिति सदाध्वादीति द्वितीया आयतीगवमिति तीयोर्वेति सप्तम्यामः प्रातस्तरामिति प्रभाते पतत्रिभ्यः कुक्कुटादिभ्योऽपि प्रबुद्धोऽधिकप्रबोधवान् तेभ्योऽपि प्रागुत्थितः सन् रविं प्रणमन् अधिकभावविवक्षायां पञ्चमी अभिधानात् पक्षिशब्देभ्यः प्रबुद्ध इत्यन्ये किमेव्याञ्चेति चतराम् ॥ १४ ॥ भ०

ददृश इत्यादि । पर्णानां शालायां स्थितः स रामः राक्षस्या ददृशे दृष्टः कीदृश्या अभीकया कामुकया अनुकाभीकेत्यादिना निपातितः दृशेः कर्मणि लिट् अथ दर्शनानन्तरम्भार्य्योढत् ऊढभार्य्यमूढा भार्य्या यस्येति आहिताग्न्यादिषु दर्शनात् निष्ठान्तस्य परनिपातः । अवज्ञाय अनादृत्य सद्भार्य्यत्वात् असकौ राक्षसी पापासौ कुत्सायामव्ययसर्वनाम्नामकच् सौमित्रये लक्ष्मणाय श्लाघह्नुङित्यादिना सम्प्रदानसंज्ञा तस्थे स्वाभिप्रायं मैथुनायाविष्कृतवती प्रकाशनस्थेयाख्ययोश्चेति प्रकाशने तङ् ॥ १५ ॥ ज० म०

ददृश इत्यादि । अभीकया कामुकया राक्षस्या शूर्पणखया पर्णशालायां स रामो ददृशे कर्मणि ठी अथ दर्शनानन्तरं भार्य्योढं कृतविवाहं तं रामम् अवज्ञाय सभार्य्यत्वादनादृत्य असकौ राक्षसी सौमित्रये लक्ष्मणाय तस्थे स्वस्थित्या मैथुनाभिप्रायं प्रकाशयामास इत्यर्थः प्रतिज्ञानिर्णयप्रकाश इति मं यस्मैदित्सेत्यादिना चतुर्थी असकाविति

दधाना बलिभं मध्यं कर्णजाहविलोचना।
वाक्त्वचेनातिसर्वेण चन्द्रलेखेव पक्षती ॥ १६ ॥
सुपाद् द्विरदनासोरुर्मृदुपाणितलाङ्गुलिः।
प्रथिमानं दधानेन जघनेन घनेन सा ॥ १७ ॥

त्यादिव्यासेत्यादिनाऽदसष्टः पूर्वोऽक् परमते अविज्ञाता निन्दिता वा असौ असकौ तथाच। कपायां निन्दनेऽज्ञाने नीतौ दानेन मानिते। प्रायोऽगन्त्यखरात् पूर्वः सर्वनामतिङव्ययादिति। ऊढा भार्य्या येन स तथा अग्न्याहितादित्वात् पक्षे परनिपातः ॥ १५ ॥ भ०

दधानेत्यादि। सा तं प्रार्थयाञ्चक्रे इति वक्ष्यमाणेन सम्बन्धः कीदृशी मध्यं स्तनजघनयोरन्तरं बलिभं बलयोऽस्मिन् सन्तीति तुन्दिबलिवटेर्भः दधाना धारयन्ती कर्णजाहविलोचना कर्णजाहं कर्णमूलसमीपमित्यर्थः तस्य पाकमूल इत्यादिना जाहच् कर्णजाहयोर्विश्रान्ते विलोचने यस्या इति सप्तम्युपमानेत्यादिना उपपदलोपी बहुव्रीहिः वाक्त्वचेन वाक्च त्वक्चेति प्राण्यङ्गत्वादेकवद्भावः द्वन्द्वाच्चुदषहान्तादिति टच् अतिसर्वेण अतिक्रान्तेन सर्वम् अत्यादय इति सः एकविभक्तिचापूर्वे निपात इति सर्वशब्दस्योपसर्जनत्वेऽपि पूर्वनिपातो न भवति अपूर्वनिपात इति प्रतिषेधात् वाक्त्वचेन वाङ्मयेन माधुर्य्येण मार्दवेन चासाधारणेनोपलक्षितेनेत्यर्थः इत्थम्भूते तृतीया चन्द्रलेखेव पक्षती तनुत्वात् पक्षोऽस्त्वार्द्धसमासः तस्य मूले प्रतिपदि पक्षातिः ॥१६॥ज०म०

दधानेत्यादि। सा तं प्रार्थयाञ्चक्रे इति चतुर्थश्लोकेनान्वयः बलिभं बलियुक्तं मध्यं दधाना गोष्टणमित्यादिनेभः कर्णस्य मूलं कर्णजाहः तत्र विलोचनं यस्याः सा तथा कर्णान्तायतनेत्रेत्यर्थः अतिसर्वेण माधुर्य्यसौन्दर्य्याभ्यां सर्वमतिक्रान्तेन वाक्त्वचेन उपलक्षिता वाक्च त्वक्च इति द्वन्द्वे चैक्याच्चुदषहोऽद्रत्यः विशेषणे तृतीया पक्षती पक्षमूले प्रतिपदि चन्द्रलेखेव दृष्टं सुष्ठुत्वात् ॥ १६ ॥ भ०

सुपादित्यादि। शोभनौ पादौ यस्याः असौ सुपात् सङ्ख्यासु पूर्वस्येति पादान्तलोपः पादोऽन्यतरस्यामिति यदा ङीप् नास्ति तदेत्थं

उन्नसं दधती वक्त्रं शुद्धदल्लोलकुण्डलम् ।
कुर्वाणा पश्यतः शंयून् स्रग्विणी सुहसानना ॥ १८ ॥

कलापकम् ।

रूपम् । द्विरदनासोरुर्द्विरदनासे इव करिपोतकरा इव ऊरू यस्याः उपमानपूर्वो बहुव्रीहिः ऊरूत्तरपदादौपम्ये इति ऊङ् रद्यते अनेनेति रदः दन्तः पुंसि संज्ञायाङ्घः करणे द्वौ रदौ यस्येति द्विरदः मृदुपाणितलाङ्गुलिः तलञ्च अङ्गुलिश्चेति द्वन्द्वः तत्र घ्यन्तादल्पाच्तरयोः अल्पाच्तरस्य पूर्वनिपातः पाण्योस्तलाङ्गुलिः पाणितलाङ्गुलिः मृदुः पाणितलाङ्गुलिर्यस्या इति योज्यं प्रथिमानं पृथुतान्दधानेन धारयता घनेन उपचितेन जघनेनोपलक्षिता सा राक्षसी ॥ १७ ॥ ज० म०

सुपादित्यादि । शोभनौ पादौ यस्याः सा संख्यासुपूर्वस्येत्यादि... पादस्य पाद्भावः द्विरदनासेव हस्तिशुण्डेव ऊरू यस्याः सा तथा रामलक्षणेत्यादिना ऊप् मृदुः पाणितलाङ्गुलिश्च यस्याः सा तथा ये तु अल्पाचः पूर्वनिपातं तथा प्राण्यङ्गत्वे समाहारं वदन्ति तन्मते प्रथमं तलाङ्गुलिशब्दयोः समाहारद्वन्द्वः तदनु पाणिना सह षष्ठीसमासः तदनु मृदुना बहुव्रीहिः प्रथिमानं महत्त्वं दधानेन निविडेन जघनेनोपलक्षिता । पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुर इत्यमरः ॥ १७ ॥ म०

उन्नसमित्यादि । उच्यते अनेनेति वक्त्रम् सर्वधातुभ्य औणादिकः ष्ट्रन् तत्र वक्त्रशब्दो मुखैकदेशे वर्त्तमानोऽपि कविभिः समुदाये प्रयुज्यते वक्त्रं मुखमुन्नसन्दधती नाभ्यस्ताच्छतुरिति नुम् न भवति उन्नता नासिका यस्मिन्निति अज्नासिकायाः संज्ञायाञ्चनसञ्चेत्यधिकृत्य उपसर्गाच्चेत्यच् नासिका च नसादेशमापद्यते शुद्धदत् शुद्धाः शुक्ला दन्ता यस्मिंस्तच्छुद्धदत् अग्रान्तशुद्धेत्यादिना दत्रादेशः लोले चञ्चले कुण्डले यस्मिन् तत् लोलकुण्डलं पश्यतो जनात् शंयून् विद्यमानसुखान् कुर्वाणा शं सुखन्तदस्यास्तीति कंशम्भ्यांबभयुस्तितुतयस इति युस् सित्वात्पदसंज्ञा अनुस्वारः अपश्यतो वा शंयून् कुर्वाणा पश्यतान्तु पीड़ाकरी स्रग्विणी

प्राप्य चञ्चूर्य्यमाणासौ पतीयन्ती रघूत्तमम् ।
अनुका प्रार्थयाञ्चक्रे प्रियाकर्त्तुं प्रियंवदा ॥ १९ ॥

लालावती अश्वायेत्यादिना विनिः सुहसानना हसनं हसः सनहसो- वैत्यप् शोभनहसनमाननं यस्याः सा ॥ १८ ॥ ज० म०

उन्नसमित्यादि। ऊर्द्धनासिकं वक्त्रं मुखं दधती उपसर्गान्नासिकाया नसादेशो बहुव्रीहाविति परे स्मृते नसाशब्दस्य रूपं तथाच रभसः लपनं वदनं तुण्डमाननं नासिका नसा। नसा नासा च नासिकेति कोषान्तरम्। उच्यते अनेनेति वक्त्रं ताम्रसिति नः वक्त्रं कीदृशं शुद्धदत् शुद्धा दन्ता यस्येति दन्तस्य ददादेश इति परे स्मृते दत्शब्दोऽस्ति लोले चञ्चले कुण्डले यत्र मुखे तत्तथा सा किम्भूता पश्यतो जनान् शंयून् सुखिनः कुर्वाणा शंकंभ्यांययुतततिवभा इति अस्त्यर्थे युः लालावती लालावती लड्मेधाश्रमयादिन्नेति चास्त्यर्थे विन् शोभनो हसो यत्र तादृशमाननं यस्याः सा तथा ॥ १८ ॥ भ०

प्राप्येत्यादि। प्राप्य ढौकित्वा चञ्चूर्य्यमाणा गर्हितमाचरन्ती प्राणिनो हन्तव्या इति चरेर्लुपसदेत्यादिना भावगर्हायां यङ् चरफलोस्मेत्यभ्यासस्य लुक् उत्परस्यात इत्युत्वं हलिचेति दीर्घत्वं पतीयन्ती आत्मनः पतिमिच्छन्ती सुप आत्मनः क्यच् अनुका अभिलाषुका अनुकेत्यादिना निपातितः रघूत्तमं लक्ष्मणं प्रार्थयाञ्चक्रे प्रार्थितवती प्रियाकर्त्तुमनुलोमयितुं पतिर्मे स्या इति सुखप्रियादानुलोम्य इति डाच् ॥ १९ ॥ ज० म०

प्राप्येत्यादि। असौ राक्षसी रघूत्तमं लक्ष्मणं प्राप्य प्रियाकर्त्तुं प्रार्थयाञ्चक्रे प्रार्थितवती किं कुर्वती चञ्चूर्य्यमाणा गर्हितं पुनः पुनश्चरन्ती गत्यर्थात् गृलुपसदचरेति गर्हार्थे यङ् चरफलोरुच्चोऽङ्गेनन्तुदिति खेऽन् उङ उकारश्चर्व्यनचयतीति दीर्घः पतीयन्ती आत्मनः पतिमिच्छन्ती क्योऽव्याद्यस्येति क्यः घीञ्ज्यरे इति दीर्घः किम्भूता सा अनुका कामुकी प्रियंवदा प्रियं वदतीति प्रियवशाद्वदेत्यादिना खः

सौमित्रे ! मामुपायंस्थाः कन्यामिच्छुर्वशंवदाम्।
सुभोगीनां सहचरीमशङ्कः पुरुषायुषम् ॥ २० ॥
तामुवाच स गोष्ठीने वने स्त्रीपुंसभीषणे।

खियव्याजेति मन् प्रियाकर्तुमिति सपत्ननिष्पत्रेत्यादिना आनुकूल्यार्थं डाच् ॥ १९ ॥ भ०

प्रार्थनामाह सौमित्रे इत्यादि। हे सौमित्रे ! इच्छुरेषणशीलः विन्दुरिच्छुरिति निपातितः अशङ्कः निर्विकल्पः सन् किम्भावयिष्यतीति मामुपायंस्थाः परिणय आशंसायां भूतवच्चेति लुङ् उपाद्यमः स्वीकरण इति तङ् विभाषोपयमन इत्यकित्त्वपक्षे रूपम् कन्याम् नमिकम्पीत्यादिना रः वशंवदाम् अहं ते वश्येति वदन्तीं त्वद्भोगीनां त्वच्छरीराय हिताम् अवैधव्यादिलक्षणयोगात् आत्मविश्वजनेत्यादिना खः सहचरीं सहगामिनीं भिक्षासेनादायेषु चेति चकारस्यानुक्तसमुच्चयार्थत्वात् टप्रत्ययः कियन्तं कालं पुरुषायुषं पुरुषस्यायुर्यावत् अचतुरेत्यादौ निपातितः अत्यन्तसंयोगे द्वितीया चरणक्रियायाः कृत्स्नसंयोगात् यथा मासमुषित इति ॥ २० ॥ ज० म०

सौमित्रे इत्यादि। एतत् प्रार्थयाञ्चक्रे इति पूर्वेणान्वयः हे सौमित्रे ! त्वम् इच्छुः सन् मामुपायंस्थाः परिणय अभिधानात् आशंसायां टौ उपयमो विवाह इति मं यमः सूचने वाद्वाहे इति सेर्विभाषितकित्त्वात् पक्षे अमलोपाभावः कीदृशीं मां कन्यां कामयमानां रूपवतीमित्यन्ये हिंसदीपेत्यादिना रः वशंवदाम् अहं ते वश्येति वदन्तीं प्रियवशादित्यादिना खः सुभोगीनां सुभोगाय हितां विकारकंपेत्यादिना ईनः भुज्यतेऽनेनास्मिन् वेति भोगः शरीरं मैथुनाद्युपभोग इत्यन्ये पुरुषस्यायुर्जीवितकालः निपातनात् अत् स्वार्थे ष्णो वा पुरुषायुषं कालं व्याप्य सहचरीं सहचरेति हनचरगष्टक् कर्मप्रतिरूपकोऽयं सहशब्दः किंवा पचादित्वादन् नदादित्वादीप् सदाध्वादीति द्वितीया इच्छतीति इच्छुः विन्दिच्छू इति निपातः ॥ २० ॥ भ०

तामित्यादि। राक्षसीं लक्ष्मण उवाच उक्तवान् किमित्याह

असूर्य्यम्पश्यरूपा त्वं किमभीररराय्यसे ॥ २१ ॥

गौष्ठीने वने गोष्ठं भूतपूर्वं यस्मिन् वने इदानीन्नामापि न ज्ञायते गोष्ठात् खञ् भूतपूर्वं इति खञ् स्त्रीपुंसभीषणे स्त्री च पुमांश्चेति स्त्रीपुंसौ अचतुरेत्यादौ निपातितौ तयोर्भीषण इति षष्ठीसमासः बिभेतेर्णिचि हेतुभये षुक् तदन्तात् सत्यल्युटौ बहुलमिति कर्त्तरि ल्युट् तस्मिन्नभीरुः सती किमित्यरार्य्यसे अत्यर्थमटसि अर्त्तेः सूचिसूत्रीत्यादिना यङ् यङि चेति गुणः ननन्द्रा इति प्रतिषेधस्य प्रतिषेधो यकारपरस्य न द्वित्वनिषेध इति रेफो द्विरुच्यते भयशीला भीरुः भियः क्रुक्लुकनौ क्रियाशब्दत्वादूङुत इति ऊङ् न भवति अमनुष्यत्वाच्च तथाहि लक्ष्मणेनामानुषीयमिति ज्ञाता तथाच भङ्ग्या दर्शयन्नाह असूर्य्यम्पश्यरूपा अतिगोपनीयतया सूर्य्यमप्यनिषिद्धदर्शनञ्च पश्यतीति असूर्य्यललाटयोरित्यादिना खश् पाघ्रेत्यादिना पश्यादेशः असूर्य्यम्पश्यं रूपं यस्या इति समासः सा न पश्यतीति रूपमपि न पश्यतीत्युक्तम् ॥२१॥ज०म०

तामित्यादि । तां राक्षसीं लक्ष्मण उवाच किमित्याह त्वं वने किमर्थमभीरुः सती अरार्य्यसे अत्यर्थं भ्रमसि ऋगतौ सूत्रसूत्रेति यङ् स्याद्यर्त्त्यूर्णोतेरिति गुणः नाजन्तादेरादिर्द्विरिति निषेधात् स्याद्यचरस्य न द्विः स्यादौनवद्र्ये इति वर्जनात् रेफसहितस्य यस्य द्वित्वं खेराद्यच इति खेर्यलोपः घोऽनित इति खेर्दीर्घः वने किम्भूते गौष्ठीने भूतपूर्वं गोष्ठं यस्मिन् सम्प्रति गोसञ्चारोऽपि नास्ति अतएव स्त्रीपुंसयोर्भीषणे भयजनके गावस्तिष्ठन्ति अस्मिन्निति गोष्ठं निपातनात् विकारसंघेत्यादिना भूतपूर्वेऽर्थे गोष्ठात् नीनः स्त्रीच पुमांश्च स्त्रीपुंसौ निपातनात् अत्रन्तभीधातोर्नन्द्यादित्वादनः भीभीषयेति भीषादेशः भीषिचिन्तीति सूत्रनिर्देशात् भीषधातुरप्यस्तीति केचित् कीदृशी असूर्य्यम्पश्यरूपा सूर्य्यमपि न पश्यति असूर्य्यम्पश्यं घटीखारीत्यादिना खश् स्यादानेति इशः पश्यादेशः असूर्य्यम्पश्यं रूपं यस्याः सा तथा दृशिना सम्बद्धस्य नञः सूर्य्येण सह समासो गमकत्वात् न बिभेतीति अभीरुः क्रुक्लुकौ-भिय इति क्रुः क्रियावचनस्य भीरुशब्दस्य मनुष्यजातित्वाभावात् उतोऽयुङ रज्वादेरिति सूत्रेण ऊप्रत्ययः ॥ २१ ॥ भ०

मानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्मिणी ।
तमप्सरायमाणेह स्वतन्त्रा कथमञ्चसि ॥ २२ ॥
उग्रम्पश्याकुलेऽरण्ये शालीनत्वविवर्जिता ।
कामुकप्रार्थनापट्वी पतिवत्नी कथं न वा ॥ २३ ॥

मानुषानित्यादि । मनोरपत्यानि मानुषाः मनोर्जातावञ्यतौ षुक्च तानभिलष्यन्ती कामयन्ती रन्तुमिच्छन्ती वाभ्राशेत्यादिना श्यन् रोचिष्णुः रोचनस्वभावा अलङ्कृञित्यादिना इष्णुच् अतएव दिव्यधर्मिणी दिवि भवा दिव्याः देवाः राक्षसा अपि देवयोनित्वात् तेषां धर्मः स्वभावः सोऽस्या अस्तीति धर्मशीलेत्यादिनेतिः अप्सरायमाणा अप्सरा इवाचरन्ती राक्षसभावङ्गोपयितुमिति भावः उपमानादाचार इत्यधिकारे कर्त्तुः क्यङ् सलोपश्च ओजसोऽप्सरसो नित्यमिति वचनात् इह वने स्वतन्त्रा कथमञ्चसि भ्रमसि स्व आत्मा तन्त्रः प्रधानं यस्याः अपराधीनत्वात् अनयोक्त्या राक्षसीत्वं दर्शयति ॥ २२ ॥ ज० म०

मानुषानित्यादि । त्वं स्वतन्त्रा सती इह वने कथमञ्चसि भ्रमसि स्वं तन्त्रं प्रधानं यस्याः सा तथा तन्त्रः कुटुम्बे इज्ये स्यात् कारणेऽपि परिच्छदे । शास्त्रे प्रधाने सिद्धान्ते तन्तुवाये गदोत्तम इति विश्वः । मनोरपत्यानि मानुषाः मनोरिण्मषाविति परसूत्रे चापत्यार्थे षण् स्वमतेऽभिधानात् तानभिलष्यन्ती कामयमाना क्रमक्रमेति पचे श्यन् रोचिष्णुर्दीप्ता जिष्णाजभूसहेति इष्णुः दिवि भवानां गन्धर्वादीनां यो धर्मस्तद्युक्ता नैकाचाजादितीम् दिव्येति ढचेकादिति भवार्थे यः उहसुङिति सूत्रस्य पदान्तविषयत्वम् उवर्णे परे वस्य अपदान्तत्वासम्भवात् द्युभ्यामित्यादौ दान्तवत्सभीति दान्तत्वाद्दुत्वं नदन्तसाविति पदनिषेधात् अत न उत्वम् अप्सरस इव आचरन्ती धातुङ्य इति ङ्यः सलोपश्च घोऽज्यरे इति दीर्घः ॥ २२ ॥ भ०

उग्रमित्यादि । उग्रम्पश्यन्तीत्युग्रम्पश्याः पापाशयत्वात् शवरादयः उग्रम्पश्येत्यादिना खश् निपात्यते तैराकुले व्याप्ते अरण्ये पतिवत्नी

राघवं पर्णशालायामिच्छानुरहसं पतिम्।
यः स्वामी मम कान्तावानौपकर्णिकलोचनः॥ २४॥

जीवत्पतिः कथं केन प्रकारेण न वा नैवं भवसीत्यर्थः अन्तर्वत्पति-वतोर्नुगित्यत्र पतिर्विद्यते अस्या इति मतुप् सिद्धः जीवत्पत्यां मतुपो वत्वन्निपात्यते नुक्स्त्वत्रैव विधीयते ङीप्प्रत्ययस्तूगित्वादेव सिद्धः शालीनत्वविवर्जिता अधृष्टतया वर्जिता शालाप्रवेशमर्हतीति शालीन-कौपीने इति खञ् निपात्यते अधृष्टेऽभिधेये प्रवेशशब्दस्य लोपः तस्य भावः शालीनत्वं कामुकः कामशीलः लषपतेत्यादिना उकञ् तस्य प्रार्थनायां पत्नी चतुरा वोतोगुणवचनादिति ङीष्॥ २२॥ ज० म०

उग्रम्पश्याकुले इत्यादि। कथं वा त्वं पतिवत्नी सभर्तृका न भवसि पतिमत्वे ईदृक् स्वातन्त्र्यासम्भवात् नारीसखीत्यादिना पति-शब्दात् मतोर्वत्वादेशो निपातितः शालां प्रवेष्टुमर्हति शालीना अधृष्टा विकारसङ्घेत्यादिना ईनः शालीनाया भावः शालीनत्वं पुंवत् स्त्रग्क-पुंस्क इति पुंवत् शालीनत्वविवर्जिता धृष्टेति फलितार्थः अरण्ये कामुकस्य प्रार्थनायां पत्नी दक्षा षीस्याभूकमगमेति उकः अरण्ये किम्भूते उग्रम्पश्यन्ति उग्रम्पश्याः सिंहव्याघ्रादयः पापाशयत्वात् शबरादयो वा तैराकुले व्याप्ते घटीखारीत्यादिना उग्रशब्दादृ दृशः खश्॥ २३॥ म०

राघवमित्यादि। रामं पर्णशालायामवस्थितं पतिमिच्छ अनु-रहसं विवेकप्राप्तमनुगतो रह इति विग्रह्य अन्ववतप्ताद्रहस इत्यच् यो राघवो ममापि स्वामी प्रभुः स्वामिन्नैश्वर्य्ये इति निपातितं कान्तावान् सभार्य्यः प्रवृत्तसम्भोगोऽसौ नाहमिति दर्शयति तमेव रूप-शौर्य्याभ्यां वर्णयन्नाह औपकर्णिकलोचनः कर्णयोः समीपमुपकर्णं समीपार्थे अव्ययीभावः तत्र प्रायभव इति उपजानूपकर्णोपनीवेष्ठक् शेषमपि शब्दद्वयं प्रयोक्ष्यते औपकर्णिके लोचने यस्य कर्णान्तायत-लोचन इत्यर्थः॥ २४॥ ज० म०

राघवमित्यादि। पर्णशालायां स्थितं रामं पतिमिच्छ विधि-

वपुश्चान्दनिकं यस्य कार्णवेष्टनिकं मुखम् ।
संग्रामे सर्वकर्मीणौ पाणी यस्योपजानुकौ ॥ २५ ॥

बद्धो दुर्बलरक्षार्थमसिर्येनौपनीविकः ।
यश्चापमाश्मनप्रख्यं सेषुं धत्तेऽन्यदुर्वहम् ॥ २६ ॥

निमन्त्रणेति आमन्त्रणे गो अनुगतं रहो विजनस्थानं रतं वा यस्य तं तस्मान्ववाद्रहस इति अः यो ममापि स्वामी ईश्वरः तस्मिन् सति मद्धरणं न युक्तमिति कान्तावान् एतेन स्त्रीसुखाभिज्ञोऽपि अहन्तु तपस्वीति ध्वनिः कर्णयोः समीपम् उपकर्णं तत्र भव इति ढघेका-दित्यादिना ष्णिकः तादृशे लोचने यस्य स कर्णायतनेत्र इत्यर्थः एतेन रूपवत्त्वं दर्शितम् ॥ २४ ॥ भ०

वपुरित्यादि । यस्य राघवस्य वपुः शरीरं चान्दनिकं चन्दनेन सम्पद्यते प्राप्तशोभं भवति मुखञ्च कार्णवेष्टनिकं कर्णवेष्टनाभ्यां कर्णा-लङ्काराभ्यां कार्णवेष्टनिकं तत् उभयत्र सम्पादिनीति ठक् पाणी हस्तौ संग्रामे युद्धे सर्वकर्मीणौ धनुःखड्गादिव्यापारकर्माणि व्याप्नुतः तत्-सर्वादेरिति खः औपजानुकौ आजानुकौ आजानुलम्बावित्यर्थः अत्र ठक् इसुसुक्तान्तात् कः ॥ २५ ॥ ज० म०

वपुरित्यादि । यस्य रामस्य वपुश्चान्दनिकं चन्दनेन राजितम् इति ढघेकादिति ष्णिकः यस्य मुखं कर्णवेष्टनाभ्यां कुण्डलाभ्यां राजितम् इति पूर्ववत् ष्णिकः एतेन विलासित्वं दर्शितं यस्य पाणी हस्तौ संग्रामे युद्धे सर्वस्मिन् कर्मणि धनुःखड्गादिव्यापाररूपे कुशलौ विकारसंघेति ईनः सर्वादेः पथ्यङ्गकर्मपत्रपात्रात्तद्व्याप्नोतीत्यर्थे इनः इति परः तन्मते सर्वकर्माणि व्याप्नुतः इत्यर्थः व्यापनमत्र तत्करण-द्वारैव एतेन वीरत्वम् औपजानुकौ उपजानु जानुसमीपे भवौ तावत् प्रलम्बावित्यर्थः एतेन महापुरुषलक्षणं ढघेकादिति कण् तस्मिन्नेति योजना ॥ २५ ॥ भ०

बद्ध इत्यादि । येन असिः खड्गः औपनीविकः नीवीसमीपे प्रायेण भवतीति स हि नीवीमाश्रित्य वर्त्तमानः पार्श्वयोश्चोर्द्धं निबद्धः

जेता यज्ञद्रुहां संख्ये धर्मसन्तानसूर्वने ।
प्राप्य दारगवानां यं मुनीनामभयं सदा ॥ २७ ॥

र्दिकमर्थं दुर्बलरक्षार्थं दुर्बलरक्षायै इदमित्यस्मिन्नर्थे चतुर्थी तदर्थेत्यादिना स; तत्रार्थेन नित्यसमास: सर्वलिङ्गता च यश्चापं धनुधत्ते धारयति आश्मनप्रख्यम् अश्मनो विकार इत्यण् अश्मिति प्रकृतिभावे प्राप्ते आश्मनो विकार उपसङ्ख्यानमिति टिलोपः पाक्षिकः विभाषाङिश्योरित्यतो मण्डूकप्लुत्या विभाषाग्रहणानुवृत्तेः अन्यत्राश्मन एव भवति आश्मनेन प्रख्या साहश्यमस्य तदाश्मनप्रख्यमुपघटितमिव सेषु ं शरम् अन्यदुर्वहं दुःखेनोह्यत इति खल् रामादन्येन दुर्वहमित्यर्थः ॥ २६ ॥ ज० म०

बद्ध इत्यादि । येन रामेण आसिर्बद्ध औपनीविकः नीवीसमीपे भवः वामपार्श्वाधोभागस्थायीत्यर्थः । स्त्रीकटिवस्त्रबन्धेऽपि नीवी मूलधनेऽपि चेत्यत्र स्त्रीपदमुपलक्षणम् अत्र वा लक्षणा उपनीविशब्दात् ठञेकादिति ष्णिकः यश्चापं धत्ते अश्मै वाश्मनः प्रस्तरः विकारसंघेत्यादिना स्वार्थे ण्यः मन् वर्जेत्यादिना अविकारषणऽनन्तस्य नलोपनिषेधः तत्प्रख्यं तत्सदृशम् अश्मनि जातम् अश्ममयम् इति केचित् सेषु ं शरयुक्तम् अन्यदुर्वहं रामादन्येन दुःखेन उह्यते इति ईषद्दुःसोरिति खल् दुर्बलानां रक्षैव अर्थः प्रयोजनं यस्य खड्गबन्धनस्य चापधारणस्य च तत्तथा तमित्क्केति योजना ॥ २६ ॥ भ०

जेतेत्यादि । यज्ञाय द्रुह्यन्तीति यज्ञद्रुहो राक्षसाः सत्सूद्विषेत्यादिना क्विप् तेषां संग्रामे जेता तृजन्तोऽयम् ततश्च कृद्योगे कर्मणि षष्ठी धर्मसन्तानसूः पूर्ववत् क्विप् धर्मरत इत्यर्थः वने वर्त्तमानानां मुनीनां वानप्रस्थादीनामित्यर्थः तेषां भार्याग्निपरिग्रहात् यानि दारगवानि दाराश्च गावश्चेति दारगवानि अचतुरेत्यादिना निपातितानि दारयन्तीति दाराः दारजारौ कर्त्तरि णिलुक् चेति घञ् तेषाञ्च येनाभयं सदा दत्तमिति योज्यम् येषामेव प्राप्तिक्रिया तेषामेवाभयमिति समानकर्तृकत्वम् ॥ २७ ॥ ज० म०

ततो वावृत्यमानासौ रामशालां न्यविक्षत।
मामुपायंस्त रामेति वदन्ती सादरं वचः॥ २८॥
अश्लीकोऽसावहं श्रीमान् स पुष्यतितरां तव।

जेतेत्यादि। यज्ञाय द्रुह्यन्ति यज्ञद्रुहो राक्षसाः तान् सिति क्विप् तेषां जेता संख्ये युद्धे धर्मसन्तानं सूते इति क्विप् यं प्राप्य वने मुनीनां सम्बन्धिनां दारगवादीनां सदा अभयं भयाभावः दाराश्च गावश्च दारगवानि निपातनात् दारयन्तीति दाराः कभावेऽभी इति कर्त्तरि घञ् पूर्वकाले इति सूत्रे व्याख्यानात् विष्णुं नत्वा स्तौति इत्युदाहरता एककर्त्तृकयोर्धात्वोः प्राक्काले क्त्वाच् भवतीति लब्धम् अत च येषां प्राप्तिस्तेषामेव यद्भयं तदभाव उक्त इति समानकर्त्तृत्वमस्त्येव ग्रामाद्गागच्छतीतिवत् क्रियानिषेधेऽपि अन्तरङ्गस्य क्रियान्वितकार्य्यस्य निवृत्तेः केचित्तु स्थितानामित्यध्याहरन्ति तमिच्छेति योजना॥ २७॥ भ०

तत इत्यादि। ततो लक्ष्मणवचनानन्तरमसौ राक्षसी वावृत्यमाना रामं वृण्वाना वावृतुवरण इति दैवादिकः आत्मनेपदी रामशालां रामस्य पर्णकुटीरं न्यविक्षत प्रविष्टा विशेः शल इगुपधादनिटः क्स नेर्विश इति तङ् मामुपायंस्त रामेति, हे राम! अहं प्रार्थये भवान् मामुपायंस्त परिणयत्विति वाक्यं भेदेन योज्यम् आशंसायां भूतवच्चेति लुङ् उपाद्यमः स्वीकरण इति तङ् विभाषोपयमनम इत्यकित्त्वपक्षे रूपम् इत्येवं वचः सादरं वदन्ती॥ २८॥ ज० म०

तत इत्यादि। ततो लक्ष्मणवचनानन्तरम् असौ राक्षसी वावृत्यमाना रामं वृण्वती रामस्य शालां गृहं न्यविक्षत विशशोप्रवेशे विपराजीति मं तनु स्पृशषोऽनिमिजुङ इति सक् वावृत्यमानेति वावृत्युङ् आशंसायां सम्भक्तौ वरणे च वावृतधातुः यित्त्वाद्दैवादिकः ङित्वादात्मनेपदी, हे राम! भवान् माम् उपायंस्त परिणयतु इति वचः सादरं वदन्ती उपयमो विवाहे इति मं आशंसायां टी अभिधानात् मास्रेन् चीच्चाविति योगविभागात् अन्यत्रापि चीच्चाविति देवीदासचक्रवर्त्ती॥ २८॥ म०

पतिरित्यब्रवीद्रामस्तमेव व्रज मा शुचः ॥ २९ ॥
लक्ष्मणं सा वृषस्यन्ती महोक्षं गौरिवागमत् ।
मन्मथायुधसम्पातव्यथ्यमानमतिः पुनः ॥ ३० ॥

अस्त्रीत्यादि । असौ लक्ष्मणोऽस्त्रीकः न विद्यते अस्य स्त्रीति नद्यृतश्चेति कप् न कपीति ह्रस्वप्रतिषेधः । अहं पुनः स्त्रीमान् सभार्य्यः प्रशंसायां मतुप् स एव लक्ष्मणः पुष्यतितराम् अतीव पुष्यति लक्ष्मणस्तव पतिः तिङश्चेति तरप् किमेदित्याम् तस्मात्तमेव लक्ष्मणं व्रज गच्छ मा शुचः मा त्याक्षीः शुचेर्लुङ् लृदित्वादङ् इति एवमब्रवी-द्रामः उक्तवान् अदादिकस्य ब्रुओ लङि ब्रुव ईडिति ईटि रूपम् ॥ २९ ॥ ज० म०

अस्त्रीक इत्यादि । इति रामस्तामब्रवीत् किन्तदित्याह असौ लक्ष्मणः अस्त्रीकः न विद्यते स्त्री यस्य इति व्युतः कः अहं स्त्रीमान् प्रशस्तस्त्रीयुक्तः अत स एव तव पतिः पुष्यतितरां त्वामित्यर्थात् पुष्यौ लृपुष्टौ किमेत्याम्वेति उत्कर्षे चतरां भविष्यत्सामीप्ये की अभिधानात् किंवा यावत्पुराभ्यां भव्ये इत्यस्य योगविभागात् तत्र भव्ये इति सामीप्ये सप्तमी तुष्यतीति क्वचित् पाठः तस्मात्तमेव लक्ष्मणमेव व्रज मा शुचः मा त्याक्षीः शुच्लृशपजौ मोचणे लृदित्वात् शास्तुलिद्युदिति ङः ॥ २९ ॥ म०

लक्ष्मणमित्यादि । लक्ष्मणं पुनर्भूयोऽगमत् लक्ष्मणं प्रति गता यथा गौर्वृषस्यन्ती मैथुनेच्छावती महोक्षं महावृषं वृषस्यन्तीत्युपमान-विशेषणमेतत् तेन वृषं लब्धुमिच्छन्तीति क्यच् अश्वक्षीरेत्यादिना असुक् तद्यावृषयोर्मैथुनेच्छायामिति तद्वदागमनं महोक्षमिति अचतुरादि-सूत्रेण निपातितम् मन्मथस्यायुधानि शराः आयुध्यन्ते एभिरित्यायु-धानि घञर्थे कविधानमिति कः तेषां सम्पातः संश्लेषः तस्मात् व्यथ्य-माना पीड्यमाना मतिर्मनो यस्याः ॥ ३० ॥ ज० म०

लक्ष्मणमित्यादि । सा राक्षसी लक्ष्मणं पुनरगमत् यथा गौर्म-होक्षं महावृषभं गच्छति महांश्चासौ उक्षा चेति जातमहद्वृद्धादुक्ष्ण

तस्याः सासद्यमानाया लोलूयावान् रघूत्तमः ।
असिं कौक्षेयमुद्यम्य चकारापनसं मुखम् ॥ २१ ॥

इति षः कीदृशी वृषस्यन्ती वृषोऽत्र शुक्लवचनः मैथुनाय वृषं शुक्रलं पुरुषम् इच्छन्ती कामुकीत्यर्थः गोपत्ते वृषं वृषभम् इच्छन्ती क्योऽश्वत्रा-व्यश्वेति क्यः धनोदकाशनेत्यादिना सन् क्यविधानं स्वेच्छायां मनागसस्तु याभार्थे तेन मैथुनविषयस्वेच्छावगम्यते केचित्तु प्रकृत्यर्थत्यागेन मैथु-नेच्छामात्रे वृषस्य अश्वस्येति क्यवन्तरूपम् अतएव विरथहयानश्वस्य-न्तीति नैषधप्रयोगः तत्र हि हयान् मैथुनायेच्छन्तीत्यवगम्यते प्रकृत्यर्थ-पुरस्कारे हयशब्दानन्वयापत्तेरित्याहुः अन्ये तु वृषस्याश्वस्य इत्यव्युत्पन्न-मेव धातुद्वयं मैथुनेच्छायां वर्त्तत इत्याहुः कुसुमायुधस्य कामस्य तस्मा-तेन संश्लेषेण व्यथ्यमाना सतिमेनो यस्याः सन्ताप इति पाठे कामेन यः सन्ताप इति व्याख्येयं मन्मथायुधेति क्वचित् पाठः आयुध्यन्ते एभिरिति कुणश्चेति करणे कः कड्वोः कभाव इत्युक्तेः मन्यतेऽनयेति करणे क्तिः ॥ २० ॥ म०

तस्या इत्यादि । सासद्यमानायाः समीपे गर्हितं सीदन्त्याः प्रवि-शन्त्याः लुपसदेत्यादिना यङ् रघूत्तमो लक्ष्मणः मुखमपनसमपगतना-सिकञ्चकार उपसर्गाश्चेत्यच् नासिका च नसादेशमापद्यते तत्र संज्ञाया-मिति नानुवर्त्तते किं कृत्वा कौक्षेयमसिमुद्यम्य उत्क्षिप्य कुक्षौ भव इति दृतिकुक्षीत्यादिना ढञ् कौक्षेयः लोलूयावान् अत्यर्थं लवनक्रिया-युक्तः लुनाति लोलूया यङन्तादप्रत्ययादित्यकारः सा विद्यते यस्येति मतुप् ॥ २१ ॥ ज० म०

तस्या इत्यादि । रघूत्तमो लक्ष्मणः कौक्षेयं कुक्षौ कोषे भवं विद्यमानं तीक्ष्णलोहभवं वा असिं खड्गम् उद्यम्य उत्क्षिप्य राक्षस्याः सासद्यमानायाः समीपे गर्हितं सीदन्त्या उपविशन्त्याः मुखम् अप-नसम् अपनतनासिकं चकार लोलूयावान् अतिशयच्छेदनयुक्तः तत्-कर्तृत्वात् मूलसूत्रेत्यादिना लूञो यञ् द्वित्वं खेर्गुः संख्यादः सोङ्मभ-पाद्यतः गत्यर्थाद्दृगटलुपेति सदेर्गर्ह्यार्थो यङ् ढघेकादिति कुक्षेर्भवार्थे

अहं सूर्पणखा नाम्ना नूनं नाज्ञायिषि त्वया ।
दण्डोऽयं चेतियो येन मय्यपातीति साब्रवीत् ॥ ३२ ॥

व्याधेयः कुक्षेर्लौक्ष्णलोहार्थादिकारे टेयन्निति केचित् कुक्षिः खड्गपिधाने स्यात् तीक्ष्णलोहे तथोदरे इति कोषः अपनसम् उन्नसमितिवत् ॥ ३१ ॥ भ०

अहमित्यादि । सा राक्षसीत्यब्रवीत् अहं सूर्पणखेति नाम्ना नूनमवश्यन्त्वया नाज्ञायाषि न ज्ञातास्मि ज्ञा इत्यस्मात् कर्मणि लुङ् स्यसिजित्यादिना अजन्तत्वात् चिण्वदिट् आतो युगिति युक् स्वाङ्गाच्चेति ङीपि प्राप्ते नखमुखात् संज्ञायामिति प्रतिषेधः पूर्वपदात् संज्ञायामिति णत्वम् अज्ञाने कारणमाह येनायन्दण्डो नासाच्छेदनलक्षणो मय्यपाति पातितः पातेः कर्मणि लुङ् चिणादेशः अत उपधाया इति वृद्धिः चिणो लुक् चेतियः परचेत्ते चिकित्स्यः परचेत्ते जन्मान्तरशरीरे यदि शक्यश्चिकित्सितुं तदा नासिकायाः सम्भवात् चेतिये च परचेत्ते चिकित्स्य इति निपातनम् ॥ ३२ ॥ ज० म०

अहमित्यादि । सा राक्षसी इत्यब्रवीत् किं तदित्याह नाम्ना सूर्पणखाहं नूनं निश्चितं त्वया नाज्ञायिषि न ज्ञाता कर्मणि टी ज्ञांसिः हनग्रहदृश च इति सिण् यनञ्णिदिति यन् नाम्नेति भेदके तृतीया सूर्पणखेति नाम्ना उपलक्षितेति केचित् सूर्पवत् नखा यस्याः सा सूर्पणखा पूर्वपदस्यात् पृ संज्ञाया णत्वमिति परे स्मते पृ णोऽदान्ते इत्यादौ वाशब्दस्य व्यवस्थावाचित्वात् नखमुखान्तात् संज्ञायामीप्निषेध इति परे स्मते पात्र्योनादीत्यादिना स्वाङ्गादीप् प्रत्ययो विभाषित ईपोऽभावपक्षे चाप् पक्षे तादृशसंज्ञाया अभावात् न ईप् ईपि सति तु वा का चतिः तत्र वाशब्दो व्यवस्थावाची वा अज्ञाने हेतुमाह येनायं दण्डो नासाच्छेदनरूपो मयि त्वया अपाति निपातितः जग्नात् पतेः कर्मणि टी चेतियः जन्मान्तरशरीरे चिकित्स्यः एतज्जन्मनि नासाया अनुत्पत्त्या शरीरान्तर एव तत्सम्भवात् विकारसंचेत्यादिना चेतशब्दात जन्मान्तरशरीरे चिकित्स्येऽर्थे इयः

पर्य्यशापीद्दिविष्ठासौ संदर्श्य भयदं वपुः।
अपिस्फवच्च बन्धूनां निनङ्क्षुर्विक्रमं मुहुः॥ ३३॥
खरदूषणयोर्भ्रात्रोः पर्य्यदेविष्ट सा पुरः।
विजिग्राहयिषू रामं दण्डकारण्यवासिनोः॥ ३४॥

चेतादियः परचेते चिकित्स इति परसूत्रं तत्र परचेते जन्मान्तरशरीरे॥ ३२॥ भ०

पर्य्यशापीदित्यादि। असौ राक्षसी पर्य्यशापीत् आक्रुष्टवती शपेरनिटः सिचि हलन्तलक्षणा वृद्धिः शप उपालम्भन इति तङ् न भवति उपलम्भनं हि वाचा शरीरस्पर्शनम् दिविष्ठा नभसि वर्त्तमाना तत्पुरुषे कृतिबहुलमिति सप्तम्या अलुक् अम्बाम्बेति षत्वम् भयदं रौद्रं वपुः शरीरं सन्दर्श्य दर्शयित्वा बन्धूनां विक्रमं शौर्य्यं मुहुः पुनः पुनः अपिस्फवत् स्फीतीचकार अर्त्तिह्रीत्यादिना पाविल्यनुवृत्तौ स्फायोव इति वकारः स्फायतेश्चङि णिलोपः ह्रस्वद्विर्वचनादि अभ्यासस्य खयः शेषः चर्त्वमित्वञ्च सन्वद्भावे निनङ्क्षुः नष्टुमिच्छुरित्यर्थः नशेः सनि मस्जिनशोर्झलीति नुम्॥ ३३॥ ज० म०

पर्य्यशापीदित्यादि। असौ राक्षसी दिविष्ठा सती नभःस्था सती भयदं भयजनकं वपुः सन्दर्श्य पर्य्यशापीत् आक्रुष्टवती बन्धूनां खरादीनां विक्रमं मुहुर्वारं वारम् अपिस्फवच्च वर्द्धयामास च रामादीनां भयार्थं विवर्द्ध कथयामासेत्यर्थः निनङ्क्षुः अन्तर्द्धातुमिच्छुः नशेः सनि नुम्रधोश्चचामिति नुम् शच्छ्राजेति षङ् षढोः कः सि शपोऽत्र आक्रोशे च्लः सिः अनिट्त्वात् व्रजवदेति वृद्धिः दिवि तिष्ठतीति हनजनादिति डः सप्तम्या अलुक् षत्वञ्चाभिधानात् संपूर्वात् दृशेर्ज्ञन्तात् क्त्वो यप् अपिस्फवदिति स्फायीङ् वृद्धौ णिः प्रेरणे पातिस्फायोर्वनुवङौजाविति वङ् णिश्रीत्यङ् द्वित्वं खेः सन्वत् अङ्प्रङः स्वः अपिस्फुरदिति कचित् पाठः तत्र प्रकाशितवतीत्यर्थः अपुष्फुरदिति पाठेऽपि तथा स्फुरतिस्फूर्त्तौ चले क्रीजीङोऽजेति पक्षे उकारस्यात्वम्॥ ३३॥ भ०

खरेत्यादि। खरदूषणयोर्भ्रात्रोर्दण्डकारण्यवासिनोः पुरः अग्रतः

कृते सौभागिनेयस्य भरतस्य विवासितौ ।
पित्रा दौर्भागिनेयौ यौ पश्यतं चेष्टितं तयोः ॥ ३५ ॥

पर्य्यदेविष्ट परिदेवनं कृतवतीति देङ्देवन इत्यस्यात्मनेपदिनः सेटो लुङि रूपम् परिदेवने कारणमाह विजिग्राहयिषुः रामं विग्राहयितुं योधयितुमिच्छुः ग्रहेर्ण्यन्तस्य सनन्तस्य रूपम् रोरीति रेफलोपः ढ्रलोप इति दीर्घत्वम् ॥ ३४ ॥ ज० म०

खरदूषणयोरित्यादि । रामं विजिग्राहयिषुः विग्राहयितुं खरादिभिः सह योधयितुमिच्छुः सा राक्षसी खरदूषणयोर्भ्रात्रोः पुरोऽग्रतः पर्य्यदेविष्ट क्रन्दितवती देङ्देवने किम्भूतयोः दण्डकारण्यवासिनोः दण्डकानामारण्ये वसत इति ग्रहादित्वाणिन् वस्तुं शीलमनयोरित्यन्ये ग्रहेर्ण्यन्तत्वात् सन उः पुर इति पूर्वाधरावरा इति पूर्वशब्दस्य पुरादेशः अतएव अस् तद्योगे समार्थेनेत्यादिना षष्ठी ॥ ३४ ॥ भ०

कृते इत्यादि । किं पर्य्यदेविष्ट इत्याह भरतस्य कृते कार्य्यनिमित्तं राज्ये अभिषेक्तव्यमिति सुभगा कैकेयी तस्या अपत्यं सौभागिनेयः स्त्रीभ्यो ढक् कल्याण्यादीनामिनङ् तत्र सुभगा दुर्भगा चेति पठ्यते हृद्भगेत्युभयपदवृद्धिः पिता यौ विवासितौ निष्कासितौ दौर्भागिनेयौ कौशल्या सुमित्रा च दुर्भगे तयोरपत्ये रामलक्ष्मणौ तयोश्चेष्टितन्नासाच्छेदनम्पश्यतं विधौ प्रार्थनायां वा लोट् थसस्तम् ॥ ३५ ॥ ज० म०

कृते इत्यादि । इति पर्य्यदेविष्ट इति पूर्वेणान्वयः सौभागिनेयस्य सुभगापुत्रस्य भरतस्य कृते निमित्तं यौ दौर्भागिनेयौ दुर्भगापुत्रौ रामलक्ष्मणौ पित्रा दशरथेन विवासितौ राज्यान्निराकृतौ तयोश्चेष्टितं नासाच्छेदनरूपं युवां पश्यतं विधौ गौ कृते इत्यव्ययं निमित्तार्थे वर्त्तते किवन्तकृत्शब्दात् चतुर्थीत्येके कृत्शब्दात् सप्तमीत्येके बाहुल्यतोऽत्यादेरित्यादिना आवन्तत्वात् सुभगादुर्भगाशब्दाभ्याम् अपत्यार्थे ण्यः निर्त्ते त्रिरिति द्विपदे वृद्धिः कल्याण्यादिसुभगेत्यादिना ण्येयस्य इनेयादेशः द्वयोर्लोप इत्यालापः ॥ ३५ ॥ भ०

मम रावणनाथाया भगिन्या युवयोः पुनः ।
अयं तापसकाद्ध्वंसः क्षमध्वं यदि वः क्षमम् ॥ २६ ॥
असंस्कृत्रिमसंव्यानावनुप्त्रिमफलाशिनौ ।
अकृत्रिमपरीवारौ पर्य्यभूतां तथापि माम् ॥ २७ ॥

ममेत्यादि । रावणो नाथः प्रभुर्यस्याः मम विशेषणं युवयोर्भगिन्या अयन्तापसकात् कुतापसात् कुत्सायां कन् ध्वंसो नासिकाविनाशः यदि वः युष्माकं गुरूणां क्षमं युक्तं क्षन्तुमित्यर्थात् युष्मदि गुरावेकेषामिति बहुवचनन्तयोर्ज्येष्ठत्वात् तर्हि क्षमध्वम् उपेक्षध्वं रावण एव त्रास्यतीति भावः ॥ २६ ॥ ज० म०

ममेत्यादि । रावणो नाथो यस्यास्तादृश्या मम युवयोर्भगिन्या युवयोरेव पुरोऽग्रतः अयं तापसकात् क्षुद्रतपस्विनः सकाशात् ध्वंसो नासाच्छेदरूपो वृत्तः अत्र यदि वो युष्माकं क्षमं क्षन्तुं योग्यं तदा यूयं क्षमध्वं रावण एव त्रास्यतीति भावः विकारसंघेत्यादिनाल्पार्थे कुत्सार्थे वा कः युष्मदोर्द्वित्वे बहुत्वविवक्षा क्षममिति क्षमायोग्यं सामान्यतः प्रयुक्तम् । युक्ते योग्ये हिते क्षममिति कोषः क्षममव्ययमित्यन्ये पुनरिति पाठे मम पुनरिति ॥ २६ ॥ भ०

असमित्यादि । पुनरप्युत्तेजयितुमाह संस्कारेण वापेन भरणेन च निर्वृत्तं संस्कृत्रिमनुप्त्रिमाभृत्रिमञ्च ड्वितः क्त्रिः क्त्रेर्मम् नित्यम् संपर्य्युपेभ्य इति सुट् सम्पूर्वस्य क्वचिदभूषणेऽपीष्यते संस्कृत्रिमन्न विद्यते येषामिति नञ् समासः असंस्कृत्रिमाणि संव्यानानि परिधानानि उत्तरीयाणि ययोः वल्कलवाससावित्यर्थः अनुप्त्रिमाणि फलानि अशनमाहारो ययोः तौ वन्यफलाहारौ न शालिभोजनौ परिव्रियतेऽनेनेति घञ् उपसर्गस्य घञीति दीर्घः मृगाणाममनुष्यत्वात् अकृत्रिमः परीवारो अनुजीविलोको ययोस्तौ मृगपरिवारौ तथापि मां पर्य्यभूतां परिभूतवन्तौ लुङि रूपम् ॥ २७ ॥ ज० म०

असंस्कृत्रिमसंव्यानावित्यादि । तौ असंस्कृत्रिमसंव्यानौ तन्त्वादीनां संस्कारेण जातं संस्कृत्रिमं संपरेः सुमिति सुम् न विद्यते संस्कृत्रिमं

श्वःश्रेयसमवाप्नासि भ्रातृभ्यां प्रत्यभाणि सा ।
प्राणिवस्तव मानार्थं व्रजाश्वसिहि मा रुदः ॥ ३८ ॥

संव्यानमुत्तरीयं ययोर्वल्कलमात्रसत्त्वात् वपनेन जातम् उप्तिममनुप्तिमं वन्यं तादृशं फलमशनमाहारो ययोः अथवा नन्द्यादित्वात् कर्त्तरि अनः फलाशिनाविति क्वचित् पाठः भरणेन पोषणेन जातो भृत्रिमः परीवारोऽनुजीविजनो ययोः सर्वत्र ड्वितस्त्क्त्रे त्रिमक् यहखपाद्यो॰ रिति ञिः परिवृणोतीति कर्त्तरि घञ् व्यतिहारे ञिः पूर्व इत्यत्र व्यतीहार इति दीर्घनिर्देशात् क्वचित् घञन्ते उपसर्गस्य दीर्घत्वं सूचितं तेनात्र परेरिकारस्य दीर्घत्वं तौ यद्यपि ईदृशौ तथापि मां पर्य्यभूतां परिभूतवन्तौ भूस्येति सेर्लुक् ॥ २७ ॥ भ०

श्वःश्रेयसमित्यादि । श्वःशब्दः प्रशंसायामाह शोभनं श्रेय इति वाक्ये श्वसोवसीयःश्रेयस इत्यच् मयूरव्यंसकादित्वात् सः श्वःश्रेयसं कल्याणमवाप्नासि प्राप्स्यसि भविष्यदनद्यतने लुट् मारयावस्ताविःत्युक्तं भवति ताभ्यां भ्रातृभ्यां प्रत्यभाणि प्रतिभणिता सा कर्मणि लुङ् प्राणिवस्तव मानार्थं तव मानखण्डनं माभूदिति जीवावः श्वस् प्राणने अनच् रुदादिभ्यः सार्वधातुक इति इट् अनितेरिति णत्वं तस्मात् व्रज यथास्थानं गच्छ आश्वसिहि उद्वेगं त्यज विधौ प्रार्थनायां वा लोट् मा रुदः माङिलुङ् इरितो वेत्यङ् यदा नास्ति तदा मारोदीरिति ॥ २८ ॥ ज० म०

श्वःश्रेयसमित्यादि । भ्रातृभ्यां खरदूषणाभ्यां सा राक्षसी प्रत्युत्तरं प्रापिता किं तदित्याह श्वःश्रेयसं कल्याणम् अवाप्नासि प्राप्स्यसि शत्रुबधेनेत्यर्थात् श्वा रूपं श्वोभवं श्रेयः श्वःश्रेयसं श्वोऽवसीयसश्वःश्रेयसेति निपातितं तव मानार्थम् आवां प्राणिवः जीवावः अनघ्लुप्राणने रुदृभ्यो य इतीम् प्राग्वन्तो ण इति पक्षे णत्वं तस्मात् व्रज गच्छ स्वस्थानमित्यर्थात् आश्वसिहि आश्वासं लभस्व उद्वेगं त्यज इत्यर्थः प्रार्थनायां णी रुदादित्वात् पूर्ववदिम् । त्वं मा रुदः मारोदीः लघिरुदरोदे इरित्त्वात् शास्त्वलिद्युदिति पक्षे ङः ॥ २८ ॥ भ०

जच्चिमोऽनपराधेऽपि नरान्नक्तन्दिवं वयम्।
कुतस्त्यं भीरु! यत्तेभ्यो द्रुह्यद्भ्योऽपि क्षमामहे ॥३९॥
तौ चतुर्दशसाहस्रबलौ निर्ययतुस्ततः।
पारश्वधिकधानुष्कशाक्तिकप्रासिकान्वितौ ॥ ४० ॥

जच्चिम इत्यादि। वयम् अनपराधेऽपि नक्तञ्च दिवा च नक्तंदिवम् अचतुरेति निपातितं नरान् जच्चिमो भक्षयामः जक्षभक्षहसनयोरिति भक्षार्थस्य रुदादिभ्य इतीट् अक्षदोर्द्वयोश्चेति द्वित्वे वयमिति बहुवचनं यत एवं हे भीरु! सम्बुद्धौ गुणो न भवति संज्ञापूर्वको विधिरनित्य इति कुतस्त्यं कुत एतदागतम् अव्ययत्वात् त्यप् अमेहक्वतसित्रेभ्य इति त्यप् तेभ्यो नरेभ्यो द्रुह्यद्भ्योऽपि द्रोहं कुर्वाणेभ्योऽपि क्षमामहे नैवेत्यर्थः क्रुधद्रुहेति सम्प्रदानत्वम् क्षमेर्गम्यमानो नञर्थस्तस्यासूयार्थत्वात् क्षमध्वं यदि वः क्षममित्यस्य प्रतिवचनम् ॥ ३९ ॥ ज० म०

जच्चिम इत्यादि। अनपराधे अपराधाभावेऽपि वयं नरान् नक्तंदिवं रात्रौ च दिवा च जच्चिमः भक्षयामः जक्षज्लुषभक्षहासयोर्धिक्षात् रुदादिः अक्षदोद्वित्वबहुत्वविवक्षा अन्यराक्षसयोगाद्बहुत्वं नक्तंदिवमिति अचित्रभ्रु वादित्वान्निपातितं स्वार्थिकष्णान्तेन दिवाशब्देन समाहारो द्वन्द्वो वा, हे भीरु! द्रुह्यद्भ्योऽपि द्रोहं कुर्वद्भ्योऽपि तेभ्यो नरेभ्यो वयं क्षमामहे इति यत्तत् कुतस्त्यं कुत आगतं तत्राद्यक्षिरेत्यादिना त्यः यदभिप्रेत्य धात्वर्थस्तत्र चतुर्थीति परः खमते तादर्थ्यविवक्षयैव भीरु इति तन्वादेर्वेति पक्षे जप् सम्भ्रु दीति ह्रस्वः ह्रस्वकरणान्न गुणः ॥ ३९ ॥ भ०

तावित्यादि। ततो निगदनादुत्तरकालक्षिर्य्ययतः निर्गतवन्तौ चतुर्दशसहस्राणि परिमाणमस्य बलस्य प्रतिवचनमित्यस्मिन्विषये शतमानविंशतिकसहस्रवसनादण् प्राग्वतेः सङ्ख्यायाः संवत्सरेत्युत्तरपदवृद्धिः चतुर्दशसाहस्रं बलं ययोः तौ तथा पारश्वधिकधानुष्कयाष्टिकप्रासिकान्वितौ परश्वधः प्रहरणमेषामिति परश्वधात् ठञ् तथा धनुः प्रह-

अथ सम्पततो भीमान् विशिखैरामलक्ष्मणौ ।
बहुमूर्ध्नो द्विमूर्द्धांश्च त्रिमूर्द्धांश्चाहतां मृधे ॥ ४१ ॥
तैर्वृक्णरुग्णसंभुग्नक्षुणभिन्नविपन्नकैः ।
निमग्नोद्विग्नसंक्षीणैः पप्रे दीनैश्च मेदिनी ॥ ४२ ॥

रणमेषां यष्टिः प्रहरणमेषामिति शक्तियष्ट्योरीकक् प्रासः कुन्तः प्रहरणमित्यौत्सर्गिकष्ठक् तत्र धनुषष्ठक् इसुसुक्तान्तात् कः ततः सेनाङ्गत्वात् तत्रैकवद्भावः तेनान्वितावनुगतौ ॥ ४० ॥ ज० म०

तावित्यादि । ततो वचनानन्तरं तौ खरदूषणौ निर्ययतुः निर्गतौ चतुर्दशसहस्राणि परिमाणमस्य चतुर्दशसहस्रं विकारसंघेत्यादिना तदस्य परिमाणमित्यर्थे ण्णः सुपञ्चालादित्वात्परपदे वृद्धिः चतुर्दशसाहस्रं बलं ययोः तौ तथा परश्वधैः परशुभिर्युध्यन्ते पारश्वधिकाः धनुर्भिर्युध्यन्ते धानुष्काः शक्तिभिर्युध्यन्ते शाक्तिकाः प्रास्यन्ति तमिति प्रासो लगुडः कर्मणि घञ् प्रासैर्युध्यन्ते प्रासिकाः एभिरन्वितौ अनुगतौ ठचेकादिति ष्णिककण्णीकाः ॥ ४० ॥ भ०

अथेत्यादि । अथैतस्मिन् प्रस्तावे रामलक्ष्मणौ मृधे संग्रामे विशिखैः शरैरहतां हतवन्तौ हन्तिः परस्मैपदी तस्माल्लङि तसस्ताम् तस्य ङित्वे अनुदात्तेत्यादिना अनुनासिकलोपः कान् राक्षसान् विशेषणोपादानात् विशेष्यप्रतिपत्तिः प्रकृतत्वाद्वा सम्पततोऽभिपततः बहुमूर्ध्नो बहुशिरसः तथा द्विमूर्द्धांस्त्रिमूर्द्धांश्च द्वित्रिभ्यां षमूर्ध्न इति समासान्तः षः अतएव भीमान् भयानकान् त्रिमूर्द्धांश्चेत्यत्र नश्छव्यप्रशानिति रुः पूर्वस्य त्वनुनासिकः विसर्जनीयस्य सः चुत्वम् ॥ ४१ ॥ ज० म०

अथेत्यादि । निर्गमानन्तरं सम्पततः सङ्गच्छतः सम्मुखमागच्छतो राक्षसान् अर्थात् रामलक्ष्मणौ मृधे युद्धे विशिखैर्बाणैराहतां वनतनाद्यनिमामिति नस्य लोपः बहुमूर्ध्नो बहुमस्तकान् एवं द्विमूर्द्धान् त्रिमूर्द्धान् द्वित्रे मूर्ध्न इति षः न्लोर्लोपो तावति नस्य लोपः बहुशब्दो विपुलार्थस्तद्यादिसंख्यार्थको वा अतएव भीमान् भयङ्करान् ॥४१॥ भ०

तैरित्यादि । तैः राक्षसैर्मेदिनी पप्रे पूरिता प्रापूरय इत्यस्मात्

केचिद्वेपथुमासेदुरन्ये दवथुमुत्तमम् ।
सरक्तं वमथुं केचिद्भ्राजथुं न च केचन ॥ ४२ ॥

कर्मणि लिट् वृक्णैः छिन्नैः रुग्णैः भग्नहस्तपादैः सम्भुग्नैः वक्रीकृतदेहैः क्षुण्णैः सम्पिष्टशरीरैः भिन्नैः विदारितैः विपन्नकैः नष्टैः अनुकम्पायां कन् निमग्नैः परिभूतैः उद्विग्नैर्भीतैः संह्रीणैर्लज्जितैः वयमपीदृशीं दशां प्राप्ता इति दीनैः हा मातः हा भ्रातरित्येवं भाषमाणैः तत्र वृश्चिरजिभुजिमस्जिविजिभ्यो निष्ठायामोदितश्चेति नत्वम् चोः कुरिति कुः क्षुदिभिदिपदिभ्योरदाभ्यामिति दस्य च नः संह्रीण इति नुदविदेत्यादिना ह्रीङ्क्षये इत्यस्य खादय ओदित इत्योदितश्चेति नत्वम् ॥ ४२ ॥ ज० म०

तैरित्यादि । तैराचरुैर्मेदिनी पप्रे पूरिता पृ्लिपूर्त्तौ कर्मणि टो कीदृशैः वृक्णैः छिन्नैः वृश्चेः काङ् चेति क्तस्य नत्वं काङ्च चस्य कत्वे तन्निमित्तस्य शस्य सत्वे स्यादेः सोलोपः पहस्त्वपाद्योरिति जिः रुग्णैर्भग्नहस्तपादैः रुजोशौभङ्गे ओदित्वात् स्वल्वाद्योरिति क्तस्य नः जस्य गत्वविधानं मग्नस्य दोर्भिर्भुवनस्य भारमित्यत्र व्याख्यातं संभुग्नैर्वक्रीकृतैः भुजोशौवक्रणे पूर्ववत् क्षुण्णैः संपिष्टदेहैः क्षुदिरसंपेषणे दान्तत्वात् स्वल्वाद्योरिति क्तस्य दस्य च नः षूर्णोऽदान्त इत्यादिना पूर्वस्य णत्वे ष्टुभिरिति परस्य नस्य णत्वं भिन्नैर्विदारितैः विपन्नकैर्मृतैः विपूर्वपदिर्मरणे वर्त्तते स्वार्थे कुत्सायां वा कः निमग्नैर्भीत्या गुप्तैः रुधिरप्रवाहे मग्नैर्वा उद्विग्नैर्भीतैः ओविजीभयचलनयोः संह्रीणैः योद्धुमसामर्थ्यात् लज्जितैः ह्रीलिलज्जायां ह्रीघ्रातोन्देति क्तस्य नः दीनैः सुतादिदुःखान्वितैः ओदीङ्क्षये ॥ ४२ ॥ भ०

केचिदित्यादि । तेषां मध्ये केचित् वेपथुं कम्पम् टुवेपृकम्पने आसेदुः प्राप्ताः अन्ये दवथुमुपतापमुत्तमं महान्तं टुदु उपतापे केचिद्वमथुमुच्छर्दनं सरक्तं सशोणितं टुवमु उद्गिरणे भ्राजथुं शोभां नैव केचन न केचिदपि टुभ्राजृदीप्तौ सर्वत्र ट्वितोऽथुच् ॥ ४२ ॥ ज० म०

केचिदित्यादि । तेषां मध्ये केचिद्राक्षसा वेपथुं कम्पम् आसदुः

मृगयुमिव मृगोऽथ दक्षिणेर्मा
दिशमिव दाहवतीं मरावुदन्यन् ।
रघुतनयमुपाययौ त्रिमूर्द्धा
विषभृदिवोग्रमुखं पतत्रिराजम् ॥ ४४ ॥

श्रापुः वपद्ट्टङ् चलने अन्ये दवथुम् उपतापम् उत्तमं महान्तम् आसेदुः टुदु उपतापे केचित् वमथुं रक्तेन सह छर्दिमासेदुः टुवम उद्गिरणे केचन भ्राजथुं दीप्तिं नासेदुः टुभ्राजृङ् दीप्तौ सर्वत्र द्वितोऽथुर्भावे इति अथुः ॥ ४३ ॥ भ०

मृगयुमित्यादि । अथैतस्मिन् राक्षसविध्वंसनप्रस्तावे त्रिमूर्द्धः त्रिशिरा नाम राक्षसः रघुतनयमुपाययौ उपागतः मृगयुमिव लुब्धकमिव मृगान् यातीति मृगयुः मृगय्वादयश्चेत्यौणादिककुप्रत्ययान्तः दक्षिणेर्मा दक्षिणे ईर्मं व्रणं यस्येति दक्षिणेर्मा लुब्धयोग इत्यनिच् यथा मृगो लुब्धकव्रणितदक्षिणाङ्गः तमेव मरणायोपयाति दिशमिव दाहवतीं यथा दिशं दावाग्नियुतां मरौ निर्जले देशे मृग उदन्यन् उदकपानाभिलाष उपयाति उदकमिच्छति सुप आत्मन इति क्यच् उदकस्योदन्भावः अशनायेत्यादिना निपातितम् तदन्ताल्लट् शतृप्रत्ययः विषभृदिव यथा विषधरः सर्प उग्रमुखं भीषणमुखं पतत्रिराजं गरुडमुपयाति तद्वत्तमिति राजाहःसखिभ्यष्टच् ॥ ४४ ॥ ज० म०

मृगयुमित्यादि । अथ रक्षोवधानन्तरं त्रिमूर्द्धस्त्रिशिरा नाम राक्षसो रघुतनयं रामम् उपाययौ उपागतः यथा दक्षिणेर्मा व्याधेन व्रणितदक्षिणाङ्गो मृगस्तमेव मृगयुं व्याधं याति तद्वत् मृगं व्याधं यातीति मृगयुर्निपातनात् दक्षिणेऽङ्के ईर्मं व्याधघातव्रणं यस्य स दक्षिणेर्मा दक्षिणादीर्मादन् व्याधव्रणितदक्षिणाङ्गे मृगे इति परसूत्रं स्वमते ईर्मन् शब्दोऽप्यस्ति किंवा दक्षिणे ईर्मं व्रणं यस्येति धर्मादनिचस्य योगविभागादन् लुब्धकयोगस्त्वभिधानात् व्रणोऽस्त्रियामीर्ममरुरित्यमरः । यथा वा उदकपानाभिलाषी मृगो मरौ निर्जलदेशे दाहवतीं दिशम् उपयाति उदकं पातुमिच्छतीति धनोदकाशनेति क्ये उनङ्

शितविशिखनिकृत्तकृत्स्नवक्त्रः
क्षितिभृदिव क्षितिकम्पकीर्णशृङ्गः।
भयमुपनिदधे स राक्षसानाम्
अखिलकुलक्षयपूर्वलिङ्गतुल्यः॥ ४५॥

इति भट्टिकाव्ये चतुर्थः सर्गः।

---

गरुडः यथा वा विषभृत् सर्पं उग्रमुखं भीषणवदनं पतत्त्रिराजं गरुडम् उपयाति॥ ४४॥ भ०

शितेत्यादि। त्रिमूर्द्धा राक्षसानां भयमुपनिदधे उपनिहितवान् कीदृशः शितविशिखैस्तीक्ष्णविशिखैः निकृत्तानि छिन्नानि कृत्स्नानि सर्वाणि वक्त्राणि मुखानि यस्य सः क्षितिभृदिव भूधर इव कीदृशः क्षितिकम्पकीर्णशृङ्गः क्षितेर्भूमेः कम्पेन कीर्णानि विप्तानि शृङ्गानि यस्य क्षितिभृतः अखिलस्य सर्वस्य कुलस्य क्षये विनाशे यत् पूर्वं लिङ्गं तेन तुल्यः असावप्यखिलराक्षसक्षयस्य पूर्वलिङ्गतुल्यः॥ ४५॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे
रामप्रवासश्चतुर्थः सर्गः।

शितेत्यादि। शितविशिखैस्तीक्ष्णबाणैर्निकृत्तानि छिन्नानि कृत्स्नानि सर्वाणि वक्त्राणि मुखानि यस्य स त्रिमूर्द्धा राक्षसानां भयमुपनिदधे उपनिहितवान् क्षितिभृदिव पर्वत इव क्षितिकम्पात् कीर्णानि विक्षिप्तानि शृङ्गाणि यस्य स तथा त्रिमूर्द्धः किम्भूतः अखिलकुलक्षयपूर्वलिङ्गतुल्यः अखिलस्य कुलस्य क्षयः तस्य यत्पूर्वलिङ्गं पूर्वचिह्नं भाविक्षयसूचक उत्पातस्तत्तुल्यः केचित्तु अखिलकुलस्य क्षये पूर्वलिङ्गम् व्याधिचिह्नं त्रिमूर्द्धस्तादृशः पर्वत इत्याहुः॥ ४५॥ भ०

इति सद्वैद्यगौराङ्गमल्लिकात्मजश्रीभरतसेनकृतायां
भट्टिटीकायां मुग्धबोधिन्यां प्रकीर्णकाण्डे
त्रिमूर्द्धबधो नाम चतुर्थः सर्गः।

---

# पञ्चमः सर्गः ।

——००——

निराकरिष्णू वर्त्तिष्णू वर्द्धिष्णू परितो रणम् ।
उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥ १ ॥
तौ खड्गमुषलप्रासचक्रबाणगदाकरौ ।
अकार्ष्टामायुधच्छायं रजःसन्तमसे रणे ॥ २ ॥

निरेत्यादि । खरदूषणौ रणम्परितः समन्तात् अभित इत्यादिना द्वितीया चेरतुः भ्रान्तौ निराकरिष्णू शत्रुनिराकरणशीलौ वर्त्तिष्णू अभिमुखं वर्त्तनशीलौ न पलायनशीलौ वर्द्धिष्णू मायया महाप्राणो-द्भावनशीलौ उत्पतिष्णू नभ उत्पतनशीलौ सहिष्णू शस्त्रप्रहारसहन-शीलौ सर्वत्रालङ्कृञीत्यादिना इष्णुच् ॥ १ ॥ ज० म०

निराकरिष्णू इत्यादि । खरदूषणौ रणं परितः सर्वतश्चेरतुः चर-गत्यां ठी धिक् समयेति परितोयोगे द्वितीया निराकरिष्णू शत्रुनिरा-करणशीलौ वर्त्तिष्णू वर्त्तनशीलौ अर्थात् प्रतियोद्धृसंमुखे रणं परित इति वा अनुषञ्जनीयं वर्द्धिष्णू मायया वर्द्धनशीलौ उत्पतिष्णू आकाशा-दुत्पतनशीलौ सहिष्णू प्रतियोद्धृशस्त्रघातादिसहनशीलौ सर्वत्र णिभ्रा-जभूसहेत्यादिना कर्त्तरीष्णुः शीलार्थता तु ढघेकत्यच्येति सूत्रे शीलार्थे त्वन्नित्युक्तं किन्तु तन्नविधायक सूत्रे शीलार्थता नोक्ता अतएव त्वणा-दयः कतिचित् प्रत्ययाः शीलार्थेऽपि भवन्तीति सूचनात् किंवा अभि-धानाच्छीलार्थतानुक्तावपि न क्षतिः निराकुरुतः शत्रूनित्यादिवाक्यं विधेयम् ॥ १ ॥ भ०

तावित्यादि । रणे रणभूमौ रजःसन्तमसे सङ्गतं तमः सन्तमसम् अवसमन्धेभ्यस्तमस इत्यच् रजसा सन्तमसम् अस्मिन् इति रजःसन्तमसं तस्मिन् रजसा कृतान्धकारे तौ खरदूषणौ आयुधच्छायमायुधबाहुल्य-मकार्ष्टाम् कृतवन्तौ आयुधानां छायेति छायाबाहुल्य इति नपुंसकत्वे

अथ तीक्ष्णायसैर्बाणैरधिमर्म रघूत्तमौ।
व्याधं व्याधममूढौ तौ यमसाच्चक्रतुर्द्विषौ ॥ ३ ॥

द्वन्द्वत्वं खड्गादीनां बाणानां द्वन्द्वैकवद्भावं कृत्वा पश्चात्तेन सहिता गदेति शाकपार्थिवादित्वात् सः अन्यथा समुदायस्य जातिरप्राणिना-मित्येकवद्भावेन नपुंसकलिङ्गता स्यात् बाणगदमिति खड्गमुषलप्रासचक्र-बाणगदाः करे येषामिति समासे प्रहरणार्थेभ्य इत्यादिना करशब्दस्य परनिपातः ॥ २ ॥ ज० म०

ताविवत्यादि। खरदूषणौ रणे युद्धे आयुधानां बहूनां छायाम-कार्ष्टां कृतवन्तौ रणपदं रणभूमियाचकमित्यन्ते सम्यक्तमः सन्तमसं सम-वान्धात्तमस इति अः रजसा सन्तमसं यत्र रणे आयुधानां बाहुल्यात् छायाशब्दस्य नपुंसकत्वमभिधानात् कीदृशौ खड्गादयः करे ययोस्तौ अकार्ष्टामिति कृञ्भ्यां सिः ब्रजवदेति वृिः ॥ २ ॥ भ०

अथेत्यादि। अथैतस्मिन् संग्रामे रघूत्तमौ रामलक्ष्मणौ कर्त्तृभूतौ कर्मभूतौ द्विषाविति सत्सूद्विषेत्यादिना क्विप् यमसाच्चक्रतुः यमाधीनौ कृतवन्तौ तदधीनवचन इति सातिः तीक्ष्णायसैर्बाणैः तीक्ष्णमायसम्फलं येषामिति व्याधं व्याधं विद्ध्वा विद्ध्वा आभीक्ष्ण्ये णमुल् तत्र समान-कर्त्तृकयोः पूर्वकाल इति वर्त्तते अभीक्ष्ण्ये द्वे भवत इति द्विर्वचनम् अधिमर्मेति विभक्त्यार्थेऽव्ययीभावः अमूढौ सावधानौ रामलक्ष्मणौ मर्मवेधमेवाह ॥ ३ ॥ ज० म०

अथेत्यादि। तयोर्विक्रमानन्तरं रघूत्तमौ कर्त्तृभूतौ तीक्ष्णायसै-स्तीक्ष्णफलैर्बाणैरधिमर्म जीवितस्थाने व्याधं व्याधं विद्ध्वा विद्ध्वा तौ द्विषौ खरदूषणौ कर्मभूतौ यमसात् यमाधीनौ चक्रतुः रघूत्तमौ किम्भूतौ अमूढौ रणपण्डितौ किंवा खरदूषणौ अमूढौ अस्तयर्थेऽप्य-सम्भ्रान्तौ मर्मवेधे सावधानौ वा रणपण्डितावपि वा तीक्ष्णमायस-मयोविकारः फलं यत्र मर्म विध्यतीति कारकार्थेऽव्ययीभावः व्यधौ ताड़े इत्यस्मात् णम् वाभीक्ष्ण्ये इति णम् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धं कात्स्न्यार्थयोः सम्पद्यकादावित्यधीनत्वे चसात् किंवा

हतबन्धुर्जगामासौ ततः सूर्पणखा वनात् ।
पारेसमुद्रं लङ्कायां वसन्तं रावणं पतिम् ॥ ४ ॥
संप्राप्य राक्षससभं चक्रन्द क्रोधविह्वला ।
नामग्राहमरोदीत् सा भ्रातरौ रावणान्तिके ॥ ५ ॥

देयताश्चेति देयेऽर्थे चकारात् चसात् ताच्छील्यादिना द्विषः क्विप् ॥ ३ ॥ भ०

हतेत्यादि । असौ सूर्पणखा हतबन्धुः व्यापादितभ्रातृद्वया ततो वनाद्दण्डकारण्यात् रावणं पतिं प्रभुं शरणं जगाम गतवती पारे समुद्रं समुद्रस्य पार इति पारे मध्ये षष्ठ्या वेत्यव्ययीभावः तत्सन्नियोगेन पूर्वपदस्यैकारान्तत्वं पश्चात् सप्तमी नाव्ययीभावादित्यभावः समुद्रस्य पारे स्थितायां लङ्कायां वसन्तं रावणमिति ॥ ४ ॥ ज० म०

हतबन्धुरित्यादि । असौ सूर्पणखा हतबन्धुः सती परेण व्यापादितभ्रातृद्वया सती ततो वनात् दण्डकारण्यात् रावणं पतिं प्रभुं जगाम पारे समुद्रं समुद्रपारे स्थितायां वसन्तं पारे समुद्रमित्यव्ययीभावः एतच्च निपातनात् तीष्योर्वेति सप्तम्यासः प्रतीति पाठे रावणं प्रति लक्ष्यीकृत्य जगाम ॥ ४ ॥ भ०

संप्राप्येत्यादि । सा सूर्पणखा राक्षससभं संप्राप्य ढौकित्वा राक्षसानां सभेति सभाराजेत्यादिना नपुंसकता चक्रन्द क्रन्दनं कृतवती क्रोधविह्वला क्रोधविवशा भ्रातरौ खरदूषणावरोदीत् रुदितवती नामग्राहन्नाम गृहीत्वा भ्रातरौ खरदूषणाविति नाम्नि दिशि ग्रहोरिति णमुल् अत नामग्रहणविशिष्टाया रोदनक्रियाया व्याप्तुमिष्टत्वाद्रुदिः सकर्मकः रावणान्तिके रावणसमीपे सप्तम्यधिकरणे चेति चकाराद्दूरान्तिकार्थेभ्य इति सप्तमी तयोः किं जातमिति रावणेन पृष्टाह ॥ ५ ॥ ज० म०

संप्राप्येत्यादि । सा सूर्पणखा राक्षससभं संप्राप्य चक्रन्द राक्षसानां सभा राक्षससभं क्लीवत्वमभिधानात् क्रोधेन विह्वला व्याकुला सती भ्रातरौ खरदूषणौ नामग्राहं नाम गृहीत्वा रावणस्यान्तिके

दण्डकामध्यवात्तां यौ वीर ! रक्षःप्रकाण्डकौ ।
नृभ्यां संख्येऽक्रषातां तौ सभृत्यौ भूमिवर्द्धनौ ॥ ६ ॥

समीपे अरोदीत् रुदेर्घ्यां ञ्यां रुदाद्यस्तिसेरितीम् पूर्वं क्रन्दनमुक्तम् अत नामग्रहणमुक्तमिति भेदः अश्रुविमोचनमात्रे रुदिरकर्मकः शब्दयुक्ताक्रन्दने तु सकर्मकः इति प्राञ्चः भ्रातरौ चक्रन्द आजुहाव क्रदि आह्वाने नामग्राहमरोदीदित्यन्वय इति केचित् नामग्राहमिति नाम्नो ग्रहणमभिधानात् किंवा हा खरदूषणेति नाम्नो ग्राहो ग्रहणं यत्रेति वा रोदनक्रियाया विशेषणं ग्राहो घञन्तः ॥ ५ ॥ भ०

दण्डकामित्यादि । हे वीर ! दण्डकान् दण्डकारण्यसन्निवेशान् अध्यवात्ताम् अध्युषितवन्तौ वसनिवास इत्यस्माल्लुङ् हलन्तलक्षणा वृद्धिः सःस्येत्यादिता धातुसकारस्य तत्वम् झलो झलीति सिचो लोपः रक्षःप्रकाण्डकौ प्रशस्तौ राक्षसौ प्रशंसावचनैश्चेति सः ततः स्वार्थे कन् स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति नपुंसको न भवति अन्यथा रूढिशब्दाः प्रशंसावचना आविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादानादेव समानाधिकरणाः स्युः यथा गोप्रकाण्डमिति तौ नृभ्याम्मनुष्याभ्यां संख्ये युद्धे भूमिवर्द्धनावक्रषाताम् कृतौ कर्मणि लुङ् अचिण्वद्भावे रूपम् वर्द्धते इति वर्द्धनौ कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् भूमेर्वर्द्धनाविति सः भग्नोन्नतशरीरस्य भूमौ लीयमानत्वात् सभृत्यौ नैकाकिनौ ॥ ६ ॥ ज० म०

दण्डकामित्यादि । एवंप्रकारेणारोदीदित्यन्वयः वीरेति सोपालम्भसम्बोधनं यौ रक्षःप्रकाण्डकौ प्रशस्तराक्षसौ दण्डकामध्यवात्तां सभृत्यौ तौ नृभ्यां मनुष्याभ्यां संख्ये संग्रामे भूमिवर्द्धनौ अक्रषातां कृञः कर्मणि टौ इगुडुर्मढौति कित्वान्न गुणः शवस्तु चितिवर्द्धन इति त्रिकाण्डशेषः । अरण्ये दण्डकाशब्दः स्त्रीलिङ्गः कायोध्यायाः पुनरुपगतो दण्डकायां वने व इति भवभूतिः । दण्डकानिति पाठे दण्डकारण्यसन्निवेशानित्यर्थः केचित्तु दण्डकाशब्दः स्त्रीलिङ्गबहुवचनान्त एव इत्युक्ता दण्डका इति प्रसन्तं पठन्ति अध्यवात्तामिति

विग्रहस्तव शक्रेण बृहस्पतिपुरोधसा ।
सार्द्धं कुमारसेनान्या शून्यश्चासीति को नयः ॥ ७ ॥
यद्यहं नाथ ! नायास्यं विनसा हतबान्धवा ।
नाशास्यस्त्वमिदं सर्वं प्रमाद्यंश्चारदुर्बलः ॥ ८ ॥

अभिपूर्वाद्दसेष्टीतां श्यां सिः सत्स्वरे इति सस्य तः अनिसृत्वात् त्रिः रक्षसां मध्ये प्रकाण्डकौ प्रशस्तौ एकार्थत्वात् कर्मधारयो वा समासे विशेषणमपि परं स्यात् प्रशंसावचनैश्चेति परसूत्रं यद्यपि प्रकाण्ड-मुद्गतल्लजाविल्यमरेणोक्तं दृश्यते च गोप्रकाण्डमित्यादावजहल्लिङ्गता तथापि कप्रत्यये सति स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते-ऽपीति न्यायात् पुंस्त्वं वस्तुवस्तु पुंलिङ्गोऽपि प्रकाण्डशब्दोऽस्ति निग-डाक्रीड़नलप्रकाण्डकाण्डा इति पुंनपुंसकवर्गे हेमचन्द्रः । उद्बप्रकाण्डौ द्वौ प्रशंसायामिति हलायुधः । भूमिं वर्द्धयत इति नन्यादित्वादनः ॥ ६ ॥ भ०

विग्रेत्यादि । बृहस्पतिः पुरोधा मन्त्री यस्य शक्रस्य तेन कार्य्येषु पुरा धीयत इति पुरोधाः पुरःपूर्वाद्धाञः सर्वधातुभ्यः असुन् तथा कुमारः कार्त्तिकेयः सेनानीर्यस्य सेनां नयतीति सत्सूद्विषेत्यादिना क्विप् तेन शक्रेण सह सार्द्धं तव विग्रह आसीत् इदानीं कार्य्यनिपु-णाभावात्, शून्यश्चासि तासस्त्योर्लोप इति सकारलोपः तस्मात् को नयः नय एव न भवतीत्यर्थः तदेव दर्शयन्नाह ॥ ७ ॥ ज० म०

विग्रह इत्यादि । शक्रेण सार्द्धं तव विग्रहो विरोधस्तथापि त्वं शून्यः कार्य्याकार्य्यविचाररहित एवासि इति को नयः न कापि नीतिस्तवेत्यर्थः किम्भूतेन बृहस्पतिपुरोधसा बृहतां देवानां गुरुत्वात् पतिः बृहस्पतिर्मनोषादित्वान्निपातः स पुरोधाः पुरोहितो यस्य कुमारः कार्त्तिकेयः सेनानीः सेनापतिर्यस्य सेनां नयतीति क्विप् कथ्या-चनेकाच इति यत्वं लोपोऽस्त्यसोरिति अस्तेः सौ स लोपः ॥७॥ भ०

यद्येत्यादि । विनसा विगता नासा यस्याः नासैव नासिकेति कैण इति हस्वत्वे रूपम् । तस्या नसादेशस्य विधीयमानत्वात् अत

करिष्यमाणं विज्ञेयं कार्यं किन्तु कृतं परैः ।
अपकारे कृतेऽप्यज्ञो विजिगीषुर्न वा भवान् ॥ ९ ॥

सम्भव एव नास्ति। विनसेति पाठान्तरम् । तत्र विगता चासौ नासिका च विनासिका तत इत्थम्भूतलक्षणायां तृतीयायां पद्दन्नोमास इत्यादिना नसादेशः । विगतया नासिकयोपलक्षितेत्यर्थः । विगता नासिका यस्या इति बहुव्रीहिणा व्याख्याने यञ्नासिकेत्यादिना यञ् नसादेशश्च प्राप्नुतः तस्य संज्ञाविषयत्वात् उपसर्गाच्चेत्यसंज्ञायां विधीयमानो न भवति वेर्ग्रोवक्तव्य इति ग्रादेशो बाधकः, हे नाथ ! यद्यहं विनसा हतबान्धवा नायास्यञ्च याता भविष्यम् तदा तदिदं सर्वम्भ्रातोर्वधं नासाच्छेदश्च नाज्ञास्यः न ज्ञातोऽभविष्यः क्रियातिपत्तौ लिङ् । अज्ञाने कारणमाह प्रमाद्यन् विषयेषु प्रमादं गच्छन् चारदुर्बलः चारहीनः चारा हि चक्षूराज्ञां कार्याकार्यज्ञानाय लोके चरतीति चरः पचाद्यच् चर एव चारः प्रज्ञादित्वादण् ॥ ८ ॥ ज० म०

यदीत्यादि । हे नाथ ! विनसा हतबान्धवा च सती यद्यहं नायास्यं तदा त्वमिदं सर्वं पूर्वोक्तं नाज्ञास्यः यास्याम्यां ध्वर्यासम्भवे यी । अज्ञाने हेतुमाह प्रमाद्यन् विषयेषु अनवधानतां गच्छन् यन्यो प्रमादीति प्रमादित्वाद्दीर्घः प्रमादोऽनवधानता चारेण दुर्बलो हीनः राजा चरैर्जगत् कृत्स्नं प्राप्नुयाल्लोकसम्मतैरिति हि शास्त्रम् । विनसा इति विगता नासा नासिका यस्याः सा विनसा केचित्तु विगतया नासिकया उपलक्षिता विशेषणे तृतीया पादद्न्नेति नसादेश इत्याहुः बन्धुरेव बान्धवः चर एव चारः । स्वार्थे अणः ॥ ८ ॥ भ०

करिष्यमाणमित्यादि । परैः शत्रुभिरपचयचिकीर्षया करिष्यमाणं कार्यं विज्ञेयं, किन्तु कृतमेव यत्तदवश्यमेव विज्ञेयमित्यर्थः । त्वं पुनः परैरपकृतोऽपि अज्ञोऽविदितस्वरूपः, अतो विजिगीषुर्नवा भवान् तस्मो न राज्यं सम्भावयतीत्यर्थः ॥ ९ ॥ ज० म०

करिष्यमाणमित्यादि । परैः शत्रुभिः करिष्यमाणमपि कार्यं विज्ञेयम् अर्थाज्जिगीषुणा, किन्तु कृतं तदवश्यमेव विज्ञेयमित्यर्थः ।

हतस्त्वं पात्रे समितैः खट्वारूढः प्रमादवान्।
पानशौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः॥ १०॥
अध्वरेष्वग्निचित्वत्सु सोमसुत्वत आश्रमान्।

परैः कृतेऽपि अपकारे भवान् अज्ञः, अतो भवान् न वा विजिगीषुः। जेर्गिः सनृयोरिति गिः। जानातीति ज्ञः, कगज्ञाप्रीति कः उस्बे- चीत्यादिना आकारलोपः, आदन्तात् डेनेष्टसिद्धौ कगज्ञा इत्यत्र ज्ञाग्रहणेन हनजनादिवस्य उपपदस्यैव विषयः। कगज्ञा इत्यस्य तु उपपदेऽनुपपदे च विषय इति ज्ञापितम्। वाशब्दः आक्षेपे प्रश्ने वा ॥ ९॥ भ०

हत इत्यादि। अत्यन्तं गामिनीति अवारपारेत्यादिना खः तस्य भावोऽत्यन्तीनत्वं नैवात्यन्तीनामत्यन्तगामिनीं श्रियन्नेता न प्रापणशीलः तृन्निति ताच्छीलिकस्तृण् नलोकेति षष्ठीप्रतिषेधः यद्यपि महोदयं राज्यं प्राप्तवानसि तथापि न चिरकालमित्यर्थः यतस्त्वमुन्मनाः भ्रान्त- चित्तः यतः पानशौण्डः पाने प्रसक्तः सप्तमी शौण्डैरिति सः अतएव प्रमादवान् अतोऽपि खट्वारूढः उत्पथप्रस्थितः खट्वाक्षेप इति द्वितीया सः तत एव पात्रेसमितैः भोजन एव सन्निहितैः अनुजीविभिर्हतः पात्रेसमितादयश्चेति क्षेपे सः॥ १०॥ ज० म०

हत इत्यादि। त्वं श्रियम् आत्यन्तीनत्वम् अत्यन्तगामित्वं न नेता न प्रापयिष्यसि नीञो द्विकर्मकात् तृण् ढघेऽत्यव्येत्यादौ शीलार्थे तृण- वर्जनात् न षी अत्यन्तशब्दात् ढघेकादिति तद्गामिन्यर्थे खीनः तत्वे त्वजात्याख्य इति पुंवत् हेतुमाह पात्रेसमितैर्भोजनपात्र एव समितैः सन्निहितैः कार्य्यान्तराक्षमैरनुजीविभिर्हतो वेष्टितः अत्राक्षेपे समासो विभक्त्यलोपश्चाभिधानात् खट्वारूढः विषयप्रस्थितः क्तेन क्षेपे खट्वाया द्वितीया तत्पुरुष इति परे स्मरते समासे सति मण्डपादिवत् स्वभा- वादर्थान्तरे वृत्तिः प्रमादवान् अनवधानतायुक्तः यतः पानशौण्डः पाने प्रसक्तः अतएव उन्मना उद्भ्रान्तचित्तः॥ १०॥ भ०

अध्वरेष्वित्यादि। त्वय्येवम्भूतेऽधुना दुश्च्यवन इन्द्रः आश्रमानिति

अत्तुं महेन्द्रियं भागमैति दुश्च्यवनोऽधुना ॥ ११ ॥
आमिक्षीयं दधि चीरं पुरोडाश्यं तथौषधम्।
हविर्हैयङ्गवीनञ्च नाप्युपघ्नन्ति राक्षसाः ॥ १२ ॥

आगच्छति आङ्पूर्वस्येणः एत्येधत्यूठ्स्विति वृद्धिः सोमसुत्वतः सोमं सुनोतीति सोमेसुञ इति क्विप् सोमसुतः सन्ति येषामस्मिन्निति मतुप् तसौ मत्वर्थ इति भत्वे तकारस्य जश्त्वन्न भवति भय इति मतोर्वत्वं किमर्थमैतीत्याह अत्तुं भक्षयितुं महेन्द्रियं भागं महेन्द्रो देवता अस्येति महेन्द्राद्घाणौ चेति घः। क अध्वरेषु यज्ञेषु अग्निचित्वतस्तु अग्निचित-वन्तोऽग्निचितः आहिताग्नयः अग्नौ चेरिति क्विप् ते सन्ति येष्विति पूर्ववन्मतुप् ॥ ११ ॥ ज० म०

अध्वरेष्वित्यादि। तवैव प्रसादात् अधुना इदानीं दुश्च्यवन इन्द्रः अध्वरेषु यज्ञेषु महेन्द्रियं महेन्द्रदैवतं भागम् अत्तुं भक्षयितुम् आत्मनामैति आगच्छति स भागो राक्षसग्राह्य एवासीदिति भावः। कीदृशेषु अग्निचित्वत्सु अग्निं चितवान् अग्निचिन्मुनिः तास्वस्मिति चेः क्विप् स्वस्य तन् पिति ततोऽस्त्यर्थे मोङ्मभ्रपाद्वतः नदं तस्माविति मत्वनिषेधात् न चयोऽवे जश् कीदृशान् सोमसुत्वतः सोमं सुतवान् सोमसुत् यजमानः तद्युक्तान् पूर्ववत् क्विबादि सोमो लतासवनं सम्यानं महेन्द्रो देवता अस्येति विकारसंघेत्यादिना इयः ॥ ११ ॥ भ०

आमीत्यादि। दध्ना सहितं शृतं पय आमिक्षा तस्मै हितमामि-क्षीयं विभाषाहविरपूपादिभ्य इति छयतो दधि च क्षीरञ्चेति विभाषा वृक्षेत्यादिना व्यञ्जनत्वादेकवद्भावः पुरोडाशाय हितमौषधञ्चीवारतण्डु-लादि पुरोडाश्यमपूपादित्वाद्यत्। ओषधिरेवौषधम् औषधेरजातावि-त्यण् तण्डुलानामजातित्वात् स्वार्थिकास्र प्रकृतितो लिङ्गवचनान्यति-वर्त्तन्त इति नपुंसकलिङ्गता हविः हूयत इति हविः अर्चिशुची-त्यौणादिक इस्। हैयङ्गवीनं कृतं ह्योगोदोहस्य विकार इत्यर्थे हैयङ्ग-वीनं संज्ञायामिति निपातनात् खञ् हियङ्गादेशश्च तानि नाप्युपघ्नन्ति

युवजानिर्धनुष्पाणिर्भूमिष्ठः खविचारिणः ।
रामो यज्ञद्रुहो हन्ति कालकल्पग्रिलीमुखः ॥ १२ ॥

राक्षसाः त्वय्युदासीने सति इदानीं कार्य्यप्रदर्शनेन प्रोत्साहयितुमाह ॥ १२ ॥ ज० म०

आमिक्षीयमित्यादि । अधुना राक्षसा अपि एतानि वस्तूनि न उपघ्नन्ति अपिशब्दः पूर्वापेक्षया कानि आमिक्षायै हितं दधि दुग्धञ्च व्यञ्जनत्वे समाहार इति परः । समतेऽभिधानात् आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः । हितार्थे ईयः तथा पुरोडाशाय हितम् औषधं नीवारतण्डुलादि पुरो दृश्यते इति पुरोडाशोऽन्नविकारः पिष्टकादिः निपातनात् ततो हितार्थे यः औषधिशब्दात् स्वार्थे ष्णः औषधं क्वचित् स्वार्थिका प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति क्लीवत्वं हविर्हव्यञ्च इदाने तास्वपि वितीम् ह्योगोदोहस्य विकारो हैयङ्गवीनं निपातनात् तत्तु हैयङ्गवीनं यत् ह्योगोदोह्भवं घृतमित्यमरः ॥ १२ ॥ भ०

युवेत्यादि । युवतिः यौवनवती जाया यस्य युवजानिः जायाया निङ् वलिलोपः स्त्रियाः पुंवद्भावात् स्त्रीप्रत्ययो निवर्त्तते धनुष्पाणिः पाणौ धनुर्यस्य प्रहरणेत्यादिना परनिपातः भूमिष्ठः भूमौ तिष्ठतीति भूमिष्ठः नाकाशचरः सुपि स्थ इति कः अम्बाम्बेत्यादिना षत्वम् कालकल्पशिलीमुखः मृत्युतुल्यशरः रामो राक्षसान् हन्ति खविचारिणः आकाशचरणशीलान् सुप्यजाताविति णिनिः ॥ १२ ॥ ज० म०

युवजानिरित्यादि । भूमिष्ठोऽपि रामः खविचारिणोऽपि यज्ञद्रुहो राक्षसान् हन्ति भूमौ तिष्ठतीति हनजनादिति डः षत्वं मनीषादित्वात् खे आकाशे विचरितुं शीलं येषां ते तथा सुबन्तोपपदे ताच्छील्ये णिन्निति परः । समते खे विचरन्तीति ग्रहादित्वाणिन् यज्ञाय द्रुह्यन्तीति क्विप् कीदृशो रामो युवजानिः युवती जाया यस्य स तथा बहुव्रीहौ जायाया इङ्जानश्चेति परः । समते जायासमानार्थो जानिशब्दोऽस्ति जनी सीमन्तिनीवध्वोरित्यनुशासनात् जनी०

मांसान्योष्ठावलोप्यानि साधनीयानि देवताः ।
अश्नन्ति रामाद्रक्षांसि बिभ्यत्यश्नुवते दिशः ॥ १४ ॥
कुरु बुद्धिं कुशाग्रीयामनुकामीनतां त्यज ।
लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नय ॥ १५ ॥

शब्दस्य स्वार्थिकष्यञन्तस्य जातिरिति रूपं वा पुंवत् स्वुरकर्ष्यञ्क इति पुंवद्भावः । धनुः पाणौ यस्य स तथा षत्वविधानं गणावजावैरित्यत्र व्याख्यातम् । ईषदूनः काकः काककल्पो यस्तत्तुल्य इत्यर्थः तादृशः शिलीमुखो बाणो यस्य स तथा त्यादेर्मोने इति कल्पः ॥ १३ ॥ भ०

मांसेत्यादि । ओष्ठावलोप्यानि ओष्ठाभ्याञ्छेदार्हाणि शक्यानि वा अर्हार्थे शक्यार्थे वा क्त्यः क्त्यैरधिकार्थवचन इति षः । साधनीयानि यज्ञस्य साधनाय हितानि तस्मै हितमिति छः,सावनीयानीति पाठान्तरम् । तत्र सवनं स्नानं तद्योगात् स्नातकोऽपि तथोच्यते तत्र भवः सावनो यज्ञः तस्मै हितानीति छः तानि मांसानि देवता अश्नन्ति भुञ्जते न राक्षसा रक्षांसि किन्तु रामात् बिभ्यति वानपुंसकस्येति शतुर्नुमभावपक्षे रूपं दिशोऽश्नुवते व्याप्नुवन्ति ॥ १४ ॥ ज० म०

मांसानीत्यादि । इदानीं देवता मांसानि अश्नन्ति रक्षांसि तु रामात् बिभ्यति दिशोऽश्नुवते व्याप्नुवन्ति पलायन्त इत्यर्थः कीदृशानि मांसानि ओष्ठावलोप्यानि छेत्तुं शक्यानि लुप्लृ छेदने तेल्याःशक्यार्हे इति शक्यार्थे घ्यण् साधनीयानि स्वर्गादेः साधनाय यज्ञाय हितानि सुरसतायाः साधनं घृतादि तेन संस्कृतानि वा अश्नन्तीति अश भोजने श्नान्योरित्यालोपः बिभ्यतीति ञि भी भीत्यां शतः ह्लादीरेद्विः द्वेः शतुर्नुणावविति पक्षे नुणोऽभावः अत्यन्तमिति केचित् । तदा अन्तोऽद्वेरित्यत् अशूङ्व्याप्तिसंहत्योः श्नुध्वोरित्युव्,सान्तोऽदन्तः ॥१४॥ भ०

कुर्वित्यादि । कुशाग्रीयां कुशाग्रमिव सूक्ष्मां कुशाग्राच्छ इति इवार्थे छः स्थूलबुद्धिर्माभूदित्यर्थः अनुकामीनतान्त्यज यथेच्छगामितान्त्यज अवारपारेत्यादिना खः परम्परीणां परांश्चापरांश्च अनुभवतीत्यर्थे परापरशब्दात् परोवरेत्यादिना खः परादेशश्च । तां लक्ष्मीं क्रमायातां

सहायवन्त उद्युक्ता बहवो निपुणाश्च याम् ।
श्रियमाशासते लोलां तां हस्ते कृत्य मास्वसी: ॥ १६ ॥
लक्ष्मी: पुंयोगमाशंसुः कुलटेव कुतूहलात् ।
अन्तिकेऽपि स्थिता पत्यश्छलेनान्यं निरीक्षते ॥ १७ ॥

त्वं पुत्रपौत्रीणतां नय पुत्रांश्च पौत्रांश्चानुभवतीति खः तस्य भावः पुत्रपौत्रानुगामिनीं कुर्वित्यर्थः ॥ १५ ॥ ज० म०

कुर्वित्यादि । त्वं बुद्धिं कुशाग्रीयां कुशाग्रमिव सूक्ष्मां कुरु विकार॰ संघेति कुशाग्रादिवार्थे छेयः अनुकामीनतां कामस्य अभिलाषस्य अनु पश्चाद्गामितां यथेष्टाचरणं त्यज अनुकामान्तद्गामिन्यर्थे ढघेकादितीनः परम्परीणां क्रमादायातां लक्ष्मीं पुत्रपौत्रीणतां पुत्रपौत्राधीनतां नय प्रापय परश्च परतरश्च इति द्वन्द्वे परम्परादेशो निपातनात् ततस्तदनु॰ भवतीत्यर्थे पूर्वेण ईनः ॥ १५ ॥ भ०

सहेत्यादि । याञ्च श्रियन्त्वदीयां शौर्योपात्तां सहायवन्तः सस॰ हाया उद्युक्ता उत्साहवन्तो निपुणाः कुशला आशासते इच्छन्ति आङः शासु इच्छायामित्यदादिकस्यात्मनेपदिनो रूपम् । आत्मनेपदेष्व॰ नत इत्यदादेशः । तां हस्ते कृत्य स्वीकृत्य मास्वसीः आस्वासं माकार्षीः चञ्चलत्वात् यदाह लोलामिति ह्मनवत्तणश्वसजागृणीति हृद्धिप्रति॰ षेधः इट ईटीति सिचो लोपः नित्यं हस्ते पाणाविति गतिसंज्ञायां समासे ल्यबादेशः तां लोलतां दर्शयन्नाह ॥ १६ ॥ ज० म०

सहायवन्त इत्यादि । सहायवन्तः प्रशस्तसहाययुक्ता उद्युक्ता उद्योगिनो बहवो निपुणाः कर्मकुशला यां श्रियम् आशासते इच्छन्ति तां श्रियं हस्ते कृत्य स्वीकृत्य मास्वसीः आस्वासं माकार्षीः यतो लोलां चञ्चलाम् आङः शास इच्छायाम् अदादिरात्मनेपदी हस्ते शब्दः सप्तम्यन्तप्रतिरूपकोऽव्ययः स्वीकारे वर्त्तते हस्ते पाणौ प्राध्वमित्या॰ दिना समासः व्यादनञः क्तो यस्य आङः शासभ्यां सिः हसादेः सेम वर्जनाच त्रिः ॥ १६ ॥ भ०

॰त्यादि । त्वयैवं न मन्तव्यम् अन्यैः प्रार्थ्यमानापि न

योषिद्वृन्दारिका तस्य दयिता हंसनादिनी।
दूर्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला॥ १८॥

मां परित्यजतीति यतः छलेन व्याजेन अन्यं निरीक्षते किमर्थं पुंयोगमाशंसुः अभिलषन्ती सनाशंसभिक्ष उः। कुतूहलात् कोऽस्य विशेष इति स्त्री ह्लादन्तिके अदूरेऽपि स्थिता पत्युः दूरान्तिकार्थैरित्यादिना षष्ठी। कुलटेव बन्धकीव शकन्ध्वादिषु दर्शनात्पररूपम्। युवजानिरित्युक्तं तद्योषित्प्रलोभनायाह॥ १७॥ ज० म०

लक्ष्मीरित्यादि। लोलतां दर्शयति लक्ष्मीः पत्युरन्तिके स्थितापि सुतरां दूरस्था कुतूहलात् अन्यं पुरुषं छलेन व्याजेन निरीक्षते केनापि छिद्रेण गन्तुमित्यर्थः यतः पुंयोगमाशंसुः अभिलषन्ती एकेन पुंसां तृप्तिर्नास्तीत्यर्थः अतएव कुलटा इव असतीव कुलटान्यटति पचादित्वादन् मनीषादित्वादकारलोपः सनाशंसभिक्ष उरिति आङ्पूर्वशंसेरुः॥ १७॥ भ०

योषिदित्यादि। योषिच्चासौ वृन्दारिका चेति वृन्दारकेत्यादिना सः रूपेण प्रियेत्याह दयिता प्रिया प्रशस्तत्वे कारणमाह हंस इव गन्तुं शीलं यस्याः कर्त्तर्युपमाने इति णिनिः दूर्वाकाण्डमिव श्यामा दुर्वास्तम्बं तदिव श्यामा न्यग्रोधपरिमण्डला उपमानानीत्यादिना सः॥ १८॥ ज० म०

योषिद्वृन्दारिकेत्यादि। प्रलोभनार्थमिदमुच्यते तस्य रामस्य दयिता प्रिया योषिद्वृन्दारिका योषितां स्त्रीणां मध्ये वृन्दारिका रूपवती हंसवन्नदतीति हंसनादिनी कर्त्तर्युपपदात्णिनिरिति परः। स्वमते ग्रहादित्वात् हंसनादिनीशब्दः पारिभाषिकोऽप्यस्ति यथा "गत्या नितम्बिनी या तु हंसशीलानुगामिनी। मत्तकोकिलसंशब्दा सा ज्ञेया हंसनादिनी"। दूर्वाकाण्डमिव तत्तुल्या कृशाङ्गीत्यर्थः दूर्वाकाण्डवत् श्यामवर्णेति व्याख्यानं पुराणविरुद्धं तत्र गौरत्वकथनात् श्यामान्यग्रोधपरिमण्डलाशब्दौ रूढौ यथा शीते सुखोष्णसर्वाङ्गी ग्रीष्मे तु सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते। स्तनौ सुकठिनौ

नास्यं पश्यति यस्तस्या निंस्ते दन्तच्छदं न वा ।
संश्रृणोति न चोक्तानि मिथ्याऽसौ विहितेन्द्रियः ॥१८
सारोऽसाविन्द्रियार्थानां यस्यासौ तस्य नन्दथुः ।

यस्या नितम्बे च विशालता । मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डला । अग्निपुराणे स्त्रीपुरुषलक्षणाध्याये न्यग्रोधपरिमण्डललक्षणमुक्तं यथा प्रसारितभुजस्येह मध्यभागद्वयान्तरम् । उच्छ्रायेण समं यस्य न्यग्रोधपरिमण्डल इति । केचित्तु दूर्वाकाण्डमिव न्यग्रोधपरिमण्डला न्यग्रूपक्षीति न्यग्रोधम् अधः प्रसूतं परितो मण्डलं नितम्बमण्डलरूपं यस्याः दूर्वाकाण्डमपि अधः प्रसरति नोपरिष्टादित्याहुः अन्ये तु न्यग्रोधस्य वटस्य इव परिमण्डलं परिणाहो नितम्बभागे यस्याः एकदेशधर्मेणापि समुदायोपमानतादर्शनादित्याहुः श्यामा अप्रसूतेति केचित् अप्रसूताङ्गनायाञ्च श्यामा सोमलतौषधौ । त्रिवृताशारिवाशुन्द्रानिशाकृष्णाप्रियङ्गुष्विति विश्वः ॥ १८ ॥ भ०

नास्यमित्यादि । तस्या आस्यं मुखं यो न पश्यति दन्तच्छदम् ओष्ठ-च्छाद्यते अनेनेति घः छादेर्घेऽद्व्युपसर्गस्येति ह्रस्वः दन्तानाञ्छदं न वा निंस्ते न चुम्बति णिसिचुम्बन इत्यादादिक आत्मनेपदी इदितो नुम् धातोः । उक्तानि उदितानि न संशृणोति समोगमित्यादिना तङ् न भवति अकर्मकादित्यधिकारात् मिथ्यासौ विहितेन्द्रियः वृथैव तस्य वेधसा विहितानि इन्द्रियाणि चक्षुरादीनि ॥ १९ ॥ ज० म०

नास्यमित्यादि । यस्तस्या आस्यं मुखं न पश्यति न वा दन्तच्छदम् ओष्ठं निंस्ते चुम्बति निसिङ् चुम्बने न वा तस्या उक्तानि भाषितानि संशृणोति असौ पुरुषः विहितेन्द्रियो विधाता कृतेन्द्रियो मिथ्या प्रयोजनाभावात् तस्य चक्षुरादीनि मिथ्येति भावः वृथेति क्वचित् पाठः वृथाविहितानि इन्द्रियाणि यस्य स तथा दन्तास्छाद्यन्तेऽनेनेति छादेर्घेऽद्व्युपसर्गस्येति ह्रस्वः घेस्त इत्युक्तेर्नाम्नत्रन्ये तिक्चेति संज्ञायां घप्रत्ययो बोध्यः । ओष्ठाधरौ तु रदनच्छदावित्यमरः ॥ १९ ॥ भ०

सार इत्यादि । इन्द्रियार्थानां मध्ये सारोऽसौ दयिता इन्द्रि-

तल्पे कान्तान्तरैः सार्द्धं मन्येऽहं धिङ्निमज्जथुम् ॥२०॥
न तं पश्यामि यस्यासौ भवेन्नोद्वेजया मतेः।
त्रैलोक्येनापि विन्दस्त्वं तां क्रीत्वा सुकृती भव ॥२१॥

सार्थः रूपाद्यतिशययोगात् यस्यासौ संपद्यते तस्य नन्द्युः आनन्दश्चेतसः तल्पे शयनीये यस्य कान्तान्तरैरन्यस्त्रीभिः सार्द्धं निमज्जथुं शयनं सर्वत्र द्वितोऽथुच् तस्य धिक् कुत्सितमहं मन्ये उभयत्र सर्वतसोरित्यादिना धिग्योगे द्वितीया तया सार्द्धं शोभनमित्यर्थादुक्तं भवति ॥२०॥ ज० म०

सार इत्यादि। इन्द्रियस्य अर्था विषयाः स्रक्चन्दनवनितादयस्तेषां मध्ये असौ सीतैव सारः श्रेष्ठा। यस्य असौ सीता विद्यते तस्यैव नन्द्युरानन्दः। कान्तान्तरैः सार्द्धं तल्पे शय्यायां निमज्जथुं निमज्जनं शयनं धिक् तयैव सार्द्धं युज्यत इत्यहं मन्ये। उभयत्र द्वितोऽथुर्भावे धिक्समयेति द्वितीया ॥ २० ॥ भ०

न तमित्यादि। सर्वथा न तं पश्यामि जानामि जगति यस्य सम्बन्धिन्याः मतेश्चेतसः उद्वेजया उत्कम्पिकासौ न भवेत् चित्तक्षोभजनिकेत्यर्थः उद्वेजयतीति अनुपसर्गाल्लिम्पेति कर्त्तरि शः कृद्योगे कर्मणि षष्ठी। तस्मात् त्रैलोक्येनापि त्रयश्चैते लोकाश्चेति त्रिलोकाः त एव त्रैलोक्यञ्चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् स्वार्थिका अतिवर्त्तन्त इति नपुंसकत्वम्। तेनापि तां क्रीत्वा लब्ध्वा विन्दस्त्वं सुकृती भव पण्डितो भव आढ्यो वा भव पाण्डित्यमस्य त्रैलोक्यमात्रेणापि स्त्रीरत्नं क्रीत्वा लब्धमिति विन्दतीति तेनैव सूत्रेण शः। अन्या अपि स्त्रियः सन्तीति चेदाह ॥ २१ ॥ ज० म०

न तमित्यादि। असौ सीता यस्य मतेरुद्वेजया क्षोभजनिका न भवेत् तं पुरुषं नाहं पश्यामि त्रैलोक्येनापि तां क्रीत्वा त्वं विन्दो लाभवान् सुकृती च भव। सुकृती पुण्यवान् शोभनः कृती पण्डितो वा तत्क्रयणादेव तव लाभवत्त्वं पुण्यवत्त्वं पाण्डित्यञ्च सफलम् अन्यथा निष्फलमिति भावः। एजृकम्पे एजेरुद्वः श इति परः, समते साहिसाती-त्यादिना अगेरित्यस्य नञा निर्दिष्टस्य व्यभिचारात् शः; विदयपञ्चौ लाभे

नैवेन्द्राणी न रुद्राणी न मनावी न रोहिणी ।
वरुणानी न चाग्नायी तस्याः सीमन्तिनी समा ॥२२॥
प्रत्यूचे राक्षसेन्द्रस्तामाख्याहि बिभेषि किम् ।

पूर्वेण ष्णः सुचादित्वाच्चुण् त्रिलोकमेव त्रैलोक्यं स्वार्थे ष्यः स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति वाक्यात् क्लीवत्वम् ॥२१॥ भ०

नैवेत्यादि । तस्यास्तु सीतायाः तुल्यार्थैरतुलोपमाभ्यामिति षष्ठी । न काचित् सीमन्तिनी स्त्री तुल्या समा सीमन्तः केशेष्विति पररूपत्वम्, अन्यत्र सीमन्तः स विद्यते यस्य इति इनिः । इन्द्राणी इन्द्रभार्य्या न सम्यक् किं पुनरन्या तथा रुद्राणी रुद्रभार्य्या वरुणानी वरुणभार्य्या इन्द्रवरुणेत्यादिना आनुक् । मनावी मनुभार्य्या मनोरौवेत्यौकारः । अग्नायी अग्निभार्य्या, वृषाकप्यग्निकुसितकुसिदेत्यादिना ऐरिति सर्वत्र पुंयोगादाख्यायामिति ङीप् । रोहिणी चन्द्रभार्य्या रोहितशब्दात् वर्णादनुदात्तेत्यादिना ङीप् नकारश्च । वरुणानी न । अग्नायीत्यत्र प्रतिषेध एकः पूर्वेण योज्यः द्वितीयः परेणेति । न चाग्नायीति पाठान्तरम् ॥ २२ ॥ ज० म०

नैवेत्यादि । काऽपि सीमन्तिनी स्त्री तस्याः सीतायाः समा तुल्या न । सर्वत्र नञ्सम्बन्धादिह नञ्सम्बन्ध उपपद्यते । इन्द्राणी इन्द्रस्य पत्नी तस्याः समा न । एव निश्चये ब्रह्मरुद्रभवेत्यादिना पत्न्या ङीप् आनुङ्च । रुद्राणी रुद्रस्य पत्नी पार्वती समा न पूर्ववत् ङीप् आनुङ्च । मनावी मनोः पत्नी शतरूपा न समा । नारी सखीत्यादिना निपातः । रोहिणी चन्द्रस्य भार्य्या न समा । पूर्वेण निपातः । वरुणानी वरुणस्य पत्नी न समा । ब्रह्मरुद्रेतीप् आनङ्च अग्नायी अग्नेः पत्नी न समा । वृषाकप्यग्नीतीप् ऐङ्च । केचित्तु इन्द्राणी न समा । कीदृशी ? प्रशस्तसीमन्तयुक्ता एवं रुद्राण्यादावित्याहुः । सीमन्तः कथ्यते स्त्रीणां केशमध्ये च पद्धतिरिति हलायुधः । मनीषादित्वात् साधुः । तस्या इति समार्थेनेत्यादिना षष्ठी ॥ २२ ॥ भ०

प्रत्यूचे इत्यादि । राक्षसेन्द्रो रावणः राक्षसीं प्रत्यूचे प्रतिवचन०

त्यज नक्तञ्चरि क्षोभं वाचाटे ! रावणो ह्यहम् ॥२३॥
मामुपास्त दिदृक्षावान् याष्टीकव्याहतो हरिः ।
आज्ञालाभोन्मुखो दूरात् काचेणानादरेक्षितः ॥२४॥

मुक्तवान् । आवृणिहि खेदन्त्यज रुदादीत्यादिना इट् । बिभेषि किं किमर्थं तापसकात् हे नक्तञ्चरि ! मद्विषये क्षोभं रोषं त्यज । वाचाटे ! बहुभाषिणि आलजाटचौ बहुभाषिणि । यस्माद्रावणोऽहम् अनेनात्मोत्कर्षमावेदयति । तमेव स्फुटयन्नाह ॥ २२ ॥ ज० म०

प्रत्यूचे इत्यादि । स राक्षसेन्द्रो रावणः तां शूर्पणखां प्रत्यूचे प्रत्युत्तरमाह स्म । आवृणिहि खेदं त्यज । रुदादीय इति इट् । किं बिभेषि तापसकात् । हे नक्तञ्चरि ! क्षोभं दुःखं मयि रोषं वा त्यज । हे वाचाटे ! बहुनिन्द्यभाषणशीले हि यस्मात् अहं रावणः । प्रसिद्धनामानुवादात् उत्कर्षः सूचितः । आलचोऽस्यर्थे वाग्मिवाचाटवाचाला इति निपातः । वाचाटो बहुगर्ह्यवागित्यमरः । रवणस्य विश्रवसोऽपत्यं रावणः विश्रवसो विश्रवणरवणावपत्ये ण इति पदः । रमते सर्वभूतानि रावयति आक्रन्दयति रावणः नन्द्यादित्वाद्दनः । किंवा हिंसनधर्मत्वात् रावणः । हिंसार्थरुधातोरनटि रवणं ततः अस्य शीलम् इत्यर्थे विकारसंघेत्यादिना णः । अत्रापि वा नन्द्यादित्वाद्दनः ततः स्वार्थे णः । रुलध्वनौ रुङ्वधे गत्याम् ॥ २२ ॥ भ०

मामित्यादि । मामुपास्त सेवितवान् । हरिरिन्द्रः दिदृक्षावान् द्रष्टुमिच्छावान् आत्मदर्शनेच्छावानित्यर्थः । दूरादेव याष्टिकैः वेत्रपाणिभिर्व्याहतोऽपसारितः । कर्तृकरणे कृतेति सः । यष्टिः प्रहरणमेषामिति शक्तियष्ट्योरीकक्, आज्ञालाभे किमभिधास्यतीत्युत्सुकः उन्मुखः तत्परः । सप्तमीति योगविभागात् सः । अनादरेक्षितः अवज्ञाविलोकितः । काचेण कुदृष्ट्या कापथ्यक्षयोरिति कुशब्दस्य कादेशः । यदि तत्पुरुष इत्यनुवर्त्तते तदा कुत्सितमक्षमिति विग्रहः । अक्षशब्दस्येन्द्रियसामान्याभिधायित्वेऽपि ईक्षितशब्दोपपदत्वाच्चक्षुषि वर्त्तते । अथ तत्पुरुष इति नानुवर्त्तते सामान्येनादेशस्तदा कुत्सित-

विरुग्णोदग्रधाराग्रः कुलिशो मम वक्षसि ।
अभिन्नं शतधात्मानं मन्यते बलिनं बली ॥ २५ ॥
कृत्वा लङ्काद्रुमालानमहमैरावतं गजम् ।

अक्षि यस्येति बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् काक्षेण अयेत्यर्थः ॥ २४ ॥ ज० म०

मामित्यादि । हरिरिन्द्रो मामुपास्त सेवितवान् आसेर्ष्या रूपम् । यष्ट्या प्रहरतीति याष्टीकः द्वारि नियुक्तः यष्टिप्रहारकपुरुषः ठघेकादिति षीकः । तेन व्याहतस्ताड़ितोऽपि दिदृक्षावान् द्रष्टुम् इच्छावान् मदाज्ञाया लाभनिमित्तम् उन्मुखः अर्द्धमुखः दूरात् समीपगमनायोग्यत्वात् मया तु काक्षेण कुदृष्ट्या अनादरेणावज्ञाया ईक्षितः अवलोकितः कुत्सितमक्षं काक्षम् इन्द्रियसामान्यवाचिनोऽक्षशब्दस्यात्र प्रकरणाच्चक्षुरेवेत्यर्थः कुत्सितमक्षि यस्येति वा सक्थ्यक्ष्णः षः स्वाङ्गे इति षः । काक्षे इति कोः कादेशः तत्र अक्ष इति इन्द्रियवाचकस्यादन्तस्य कृतसमासान्तस्य अक्षिशब्दस्य च ग्रहणम् । ईषदक्षं काक्षम् इति वररुचिः । तदा कटाक्षे तात्पर्यं कोरीषदर्थे इति कादेशः ॥ २४ ॥ भ०

विरुग्णेत्यादि । विरुग्णानि अवसन्नानि कुण्ठितानि उदग्राणि महान्ति धाराग्राणि यस्य स कुलिशो वज्रः मम वक्षसि पतितः सन् बली आत्मानमभिन्नं शतधा शतप्रकारं सङ्ख्याया विधार्थे धा बलिनं मन्यते अहो ! बलवानहम् येन शतधा भग्न इति तस्य देवतारूपत्वात् बलमस्त्येव आत्मानं बलिनं मन्यत इवेत्युत्प्रेक्षा ॥ २५ ॥ ज०म०

विरुग्णेत्यादि । कुलिशो वज्रम् आत्मानं बलिनं मन्यते कुत इत्याह मम वक्षसि शतधा शतप्रकारेण अभिन्नं केवलं विरुग्णानि भग्नानि उदग्राणि महान्ति धाराग्राणि यस्य तादृशः बली वस्तुतो बलवानपि मद्वक्षसः भङ्गादेव बलं जानाति असुरसमूहविदारणादपीदमेव तस्याधिकमुत्कर्षस्थानमित्यर्थः तस्य देवतारूपत्वान्मननमस्त्येव उत्प्रेक्षामात्रं वा मन्यत इव इत्यर्थः संख्याया धाच् प्रकारे ॥ २५ ॥ भ०

कृत्वेत्यादि । एष्वानीयत इत्यानानम् अधिकरणे ल्युट् विभाषा

बन्धनेऽनुपयोगित्वान्नतं तृणवदत्यजम् ॥ २६ ॥
आहोपुरुषिकां पश्य मम सद्रत्नकान्तिभिः ।
ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा ॥२७॥

बीयत इत्यालस् लङ्काद्रुमा आलानानि यस्यैरावताख्यस्य गजस्य तं कृत्वा नतन्नम्रमुखं तृणमिव मत्वा सोऽहमत्यजं त्यक्तवान् बन्धनेऽनुपयोगित्वात् प्रयोजनाभावात् ॥ २६ ॥ ज० म०

कृत्वेत्यादि । लङ्काद्रुम एवालानं बन्धनस्तम्भो यस्य तथाभूतम् ऐरावतं गजं कृत्वा नतं नम्रं तम् अहं तृणवत् अत्यजम् अथवा तं गजं तृणवत् न अत्यजम् अपि तु अत्यजमेवेति शिरश्चालने नञ् । कुत इत्याह बन्धनेऽनुपयोगित्वात् स्वयमेव वशीभूतत्वात् अनुपादेयत्वाद्वा आलीयतेऽस्मिन्नित्यालानम् आधारेऽनट् लिस्यर्थवशौङाऽस्त्विलियस्तु वा इति पक्षे ङा । इरावान् समुद्रः तत्र जात इति ढघेकादिति ष्णः ॥ २६ ॥ भ०

आहो इत्यादि । अहो पुरुषस्य भावः मनोज्ञादित्वाद्वुञ् आहोपुरुषिका कार्य्यसिद्धावपि तत्प्राधने शक्तिः तां मम रूर्पमखे पश्य सद्रत्नकान्तिभिः ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः पूर्णचन्द्रस्य सन्निधिः सदा सन्निधानं न पुनस्तेन कृत्यं रत्नप्रभाभिरेव तत्कृत्यस्य कृतत्वात् ॥ २७ ॥ ज० म०

आहो इत्यादि । ममाहोपुरुषिकां पश्य सद्रत्नकान्तिभिः सद्रत्नानां प्रभाभिर्ध्वस्तान्धकारे नाशितध्वान्तेऽपि मत्पुरे सदा पूर्णेन्दोः सन्निधिः एतेन प्रयोजनाभावेऽपि भीत्या पूर्णीभूत्वा चन्द्रस्तिष्ठति देवैरपि भीत्या नासौ पीयते चन्द्रप्रभाणि च रत्नानि मम सन्तीति सूचितम् । अहमेव पुरुषो यत्रेति सम्भावनायामाहोपुरुषिका निपातनात् आहोपुरुषिका दर्पाद्या स्यात् सम्भावनात्मनीत्यमरः । अहोपुरुषस्य भाव आहोपुरुषिका इति केचित् तदा विकारसंघेति भावे कण् स्त्रीत्वमभिधानात् काप्यनाशीरक इति अत इत्वं सदेति कुतः ककुहेत्यादिना निपातितम् ॥ ॥ २७ ॥ भ०

हृतरत्नश्च्युतोद्योगो रक्षोभ्यः करदो दिवि ।
पूतक्रतायीमभ्येति सत्रपः किन्न गोत्रभित् ॥ २८ ॥
अतुल्यमहसा सार्द्धं रामेण मम विग्रहः ।
त्रपाकरस्तथाप्येष यतिष्ये तद्विनिग्रहे ॥ २९ ॥
उत्पत्य खं दशग्रीवो मनोयायी मितास्त्रभृत् ।

हृतेत्यादि । हृतोच्चैःश्रव आदिरत्नो गोत्रभिदिन्द्रः अतएव च्युतोद्योगः दिवि वर्त्तमानोऽपि रक्षोभ्यः करदः राजग्राह्यं वित्तं प्रयच्छन् पूतक्रतायीं शचीं पूतक्रतोरैचङीष् पुंयोगादाख्यायामिति सत्रपः सव्रीडः किन्नाभ्येति न ढौकते ॥ २८ ॥ ज० म०

हृतेत्यादि । गोत्रभित् इन्द्रो दिवि वर्त्तमानोऽपि सत्रपः सलज्जः सन् पूतक्रतायीं स्वभार्य्यामपि नाभ्येति नाभिमुख्येन गच्छति अपि तु तथैव सत्रपत्वे हेतुमाह मया हृतरत्नः हृतं रत्नं यस्य स तथा गलितोद्योगः राक्षसेभ्यः करदः करं राजग्राह्यभागं ददातीति कः पूतक्रतोरिन्द्रस्य पत्नी पूतक्रतायी वृषाकप्यग्नि इत्यादिना ङीप् ऐङ्च गोत्रान् पर्वतान् यो भिनत्ति सोऽतिबलीयान् इति साभिप्रायं पदम् ॥२८॥ भ०

अतुल्येत्यादि । तदेवंविधस्य मम अतुल्यमहसा अतुल्यतेजसा रामेण सह विग्रहस्त्रपाकरः कृञो हेत्वित्यादिना टः तथापि त्वत्प्रार्थनया एष च यतिष्ये तद्विनिग्रहे विविधनिग्रहविषये तस्य यतिष्ये यत्नं करिष्यामि वर्त्तमानसामीप्ये वर्त्तमानवद्वेति विकल्पेन लटो विधानात् लृडुदाहृतः ॥ २९ ॥ ज० म०

अतुल्येत्यादि । यद्यपि अतुल्यमहसा असदृशतेजसा रामेण सार्द्धं मम विग्रहस्त्रपाकरः तथापि तस्य विविधनिग्रहे एषोऽहं यतिष्ये यत्नं करिष्ये त्वत्प्रार्थनयेति शेषः त्रपां लज्जां करोतीति ष्टकुटः निग्रह इति विषयसप्तमी निमित्तमात्रेऽपि सप्तमी लोकोपचारादित्यन्ये ॥ २९ ॥ भ०

उत्पत्येत्यादि । उच्चैतं स्वमाकाशमुत्पत्य मारीचं प्रति चक्रमे यत्र

समुद्रसविधावासं मारीचं प्रति चक्रमे ॥ २० ॥

सम्पत्य तत्सनीडेऽसौ तं वृत्तान्तमशिश्रवत् ।

त्रस्नुनाथ श्रुतार्थेन तेनागादि दशाननः ॥ २१ ॥

अन्तर्द्धत्स्व रघुव्याघ्रात्तस्मात्त्वं राक्षसेश्वर ! ।

मारीचो राक्षसस्तत्र गत इत्यर्थः अनुपसर्गाद्वेति क्रमेस्तङ् मनोवद्वाशु यातं शीघ्रमस्येति कर्त्तर्य्युपमान इति णिनिः शितामन्वत् गृहीततीक्ष्णचन्द्रहासः समुद्रस्य सविधे समीपे आवासो यस्य मारीचस्य सह विधेन सविधमिति व्युत्पत्तिमात्रं शब्दस्तत्समीपवाची ॥ २० ॥ ज० म०

उत्पत्येत्यादि । एवमुक्त्वा दशग्रीवो रावणः खमाकाशम् उत्पत्य मारीचं प्रति लक्ष्यीकृत्य चक्रमे गतः वागेरिति मं द्वितीयानिमित्तकस्य प्रतिशब्दस्य गित्वाभावात् मन इव शीघ्रं यातीति मनोयायीति कर्त्तर्य्युपमाने उपपदे णिन्निति परः । खमते गीत्वादित्वान्शिन् व्याघ्रश्चासौ त्वा चेति वाक्यं कुर्वता क्वचिदुपमानव्यञ्जकशब्दाभावेऽप्युपमानं गम्यते इति सूचितं तेन मन इव यायीत्यर्थो गम्यते शितं तीक्ष्णमस्त्रं बिभर्त्तीति क्विप् । समुद्रस्य सविधे समीपे आवासो यस्य तं सदेशाऽभ्याससविधसमर्य्यादसवेशवदित्यमरः ॥ २० ॥ भ०

सम्पत्येत्यादि । असौ दशग्रीवः तस्य नीड़े मारीचस्य समीपे अत्रापि सह नीड़ेनेति व्युत्पत्तिमात्रं समेत्य यात्वा तं वृत्तान्तं शूर्पणखाकथितमशिश्रवत् श्रावितवान् शृणोतेर्ण्यन्तस्य लुङि रूपम् । तेन मारीचेन श्रुतार्थेन त्रस्नुना त्रसनशीलेन दशाननः अगादि उक्तः कर्मणि लुङ् ॥ २१ ॥ ज० म०

सम्पत्येत्यादि । असौ रावणः तस्य सनीड़े समीपे सम्पत्य सङ्गत्य तं मारीचं वृत्तान्तं शूर्पणखोक्तम् अशिश्रवत् श्रावितवान् । समीपे निकटासन्नसन्निकृष्टसनीड़वदित्यमरः । अथ अनन्तरं श्रुतार्थेन तेन मारीचेन त्रस्नुना भीतेन दशाननोऽगादि उक्तः कर्मणि टी ॥२१॥ भ०

अन्तरित्यादि । हे राक्षसेश्वर ! त्वन्तस्माद् रघुव्याघ्रादन्तर्द्धत्स्व अन्तर्हितो भव व्यवहितो भवेति यावत् दधातेर्लोटि श्नाभ्यस्तयोरित्याकार

यो रणे दुरुपस्थानो हस्तरोधं दधद्धनुः ॥ ३२ ॥
भवन्तं कार्त्तवीर्य्यो यो हीनसन्धिमचीकरत्।
जिगाय तस्य हन्तारं स रामः सार्व्वलौकिकम् ॥ ३३ ॥

लोपः अभ्यासस्य दधस्तथोश्चेति भष्भावः अन्तर्द्धौ येनेत्यपादानसंज्ञा। यस्मात् स रामः रणे दुरुपस्थानः दुःखेन उपस्थीयते उपगम्यत इति अतो युचेति युच् यतो हस्तरोधं दधद्धनुः हस्तेन रुद्ध्वा सदैव यो धनुर्धत्ते स कथं दुरुपस्थानो न भवति। हस्तशब्दे तृतीयान्त उपपदे सप्तम्याञ्चोपपीड़रुधकर्ष इति णमुल्। चकारेण तृतीयायाः समुच्चितत्वात् तृतीयाप्रभृतीन्यन्यतरस्यामिति सः तदेव दुरुपस्थानत्वं स्फुटयन्नाह ॥ ३२ ॥ ज० म०

अन्तरित्यादि। हे राक्षसेश्वर! तस्माद्रघुव्याघ्रात् त्वम् अन्तर्द्धत्स्व स यथा न पश्यति तथा व्यवहितो भव अन्तःपूर्व्वधाञो गीस्वः छादीरेद्विः भभवयेत्यादिना खेर्हुस्वः धस्य दस्य भभान्तस्येति दस्य धः श्राव्योरालोप्य इत्यालोपः भपभसोरिति धस्य तः यतोऽपायेत्यादिना अन्तर्द्धौ पञ्चमी हेतुमाह यो रामो दुरुपस्थानः दुःखेनोपस्थीयते उपगम्यते शत्रुभिः समीपगमनमेवाशक्यं किं पुनर्युद्धमिति भावः अतो नोऽदरिद्र इति अनः। यतो हस्तरोधं सदा धनुर्दधाति हस्तेन रुद्ध्वा हस्तरोधम् आसत्तौ तृतीयान्ताद्रुधोणम् इति परः। तेन सदा स्थिरतरं धनुर्दधातीत्यर्थः केचित्तु हस्तं रुद्ध्वेत्यर्थं स्वाङ्गात् रुधेर्णम्। तेनान्यकर्मनिवृत्तिर्हस्तस्य गम्यत इत्याहुः, रुणद्धि हस्तं रुणद्धि कार्य्यान्तराद्व्यावर्त्तयतीति ढात् णण् धनुर्विशेषणम् ॥ ३२ ॥ भ०

भवेत्यादि। यः कार्त्तवीर्य्यः कृतवीर्य्यस्यापत्यं सहस्रबाहुः भवन्तं हीनसन्धिमचीकरत् हीनेन दुर्बलेन यः सन्धिः तं भवन्तं कारितवान् तेन हीनत्वं बलान्निर्जित्य कारित इति दुरुपस्थानमुक्तम्। हृक्रोरन्यतरस्यामिति द्विकर्मकता तस्य कार्त्तवीर्य्यस्य यो हन्ता परशुरामः कृत्प्रयोगे कर्मणि षष्ठी। तेन हि तस्याग्निहोत्रधेनुमपहृत्य गच्छतः परशुना बाहुसहस्रं छिन्नम्। तस्य हन्तारं स रामो जिगाय

यमास्यदृश्वरी तस्य ताड़का वेत्ति विक्रमम् ।
शूरम्मन्यो रणाच्चाहं निरस्तः सिंहनर्दिना ॥ ३४ ॥

जितवान् जयतेर्लिटि धातुजकारस्य सन्लिटोर्जेरिति कुत्वम् । सार्व-लौकिकं सर्वलोके विदितं लोकसर्वलोकाभ्यां ठञ् अनुशतिकादित्वा-दुभयपदवृद्धिः सार्वलौकिक इति पाठान्तरम् । अत्र राम इति योज्यम् ॥ ३३ ॥ ज० म०

भवेत्यादि । इदपस्यानत्वं स्फुटीकुर्वन्नाह यः कार्त्तवीर्योऽर्जुनो भवन्तं हीनसन्धिं भग्नसन्धिम् अचीकरत् कृतवान् कृञः स्वार्थे णिः चुर्य्यौणिर्वा इत्यस्य योगविभागात् कचिच्चुरादेरन्यस्मादपि स्वार्थे णिर्वा भवतीति बोध्यं तेन रामो राज्यमकारयदित्यादिप्रयोगाः यद्वा हीन-जनेन सह सन्धिं सन्धानं मिलनं कारयामास यद्भयात् भवता हीन-जनोऽप्याश्रित इत्यर्थः घोऽभेओरिति प्रयोज्यकर्त्तुः कर्मता कृतवीरस्या-पत्यं कार्त्तवीर्य्यः गर्गादित्वात् ष्यञः । तस्य कार्त्तवीर्य्यस्य हन्तारं परशु-रामं स रामो जिगाय जेर्गिः सन्लिटोः सार्वलौकिकं सकलक्षत्रियनाशेन सर्वलोकविदितम् प्रथमान्तपाठे रामविशेषणं तत्र विदित इत्यर्थे ठगे-कादिति ष्णिकः ष्णित्ते वृद्धिरिति स्नुभगादित्वात् उभयपदे वृद्धिः ॥ ३३ ॥ भ०

यमेत्यादि । तस्य रामस्य विक्रमन्ताड़का वेत्ति ज्ञातवती वर्त्तमान-सामीप्य इति भूते लट् । कीदृशी यमास्यदृश्वरी तच्छरताड़िता यममुखं दृष्टवती मृतेत्यर्थः दृशेः क्वनिप् वनोरचेति ङीब्रेफौ अहमपि शूर-म्मन्यः शूरमात्मानं मन्यमानः आत्ममाने खश सिंहनर्दिना रामेण सिंह इव नर्दतीति कर्त्तर्युपमान इति णिनिः । रणान्निरस्तः बहि-ष्कृत इत्यर्थः ॥ ३४ ॥ ज० म०

यमास्येत्यादि । तस्य रामस्य विक्रमं ताड़का वेत्ति जानाति अहञ्च वेद्मि सा किम्भूता यमास्यदृश्वरी यममुखं दृष्टवती मृतेति यावत् तासु-षिति दृशेः क्वनिप् नचखसादन इति ईम् रङ्च । अहं किम्भूतः शूर-म्मन्यः आत्मानं शूरं मन्यमानः मन्यात् सार्थे इति खश् शित्त्वात् रत्वे

न त्वं तेनान्वभाविष्ठा नान्वभावि त्वयाप्यसौ ।
अनुभूतो मया चासौ तेन चान्वभविष्यहम् ॥ ३५ ॥
अध्यङ् शस्त्रभृतां रामो न्यञ्चस्तं प्राप्य मद्विधाः ।
स कन्याशुल्कमभनग्मिथिलायां मखे धनुः ॥ ३६ ॥

दिव्सुतदेत्यादिना यन् । तेन सिंहनर्दिना रणात् निरस्तः निराकृतः सिंह इव नर्दतीति मनोयायीतिवत् वेत्तीति लोकान्तरस्था ताड़का इदानीमपि जानातीत्यभिप्रायेण वर्त्तमाने क्तो वर्त्तमानसामीप्ये भूतेऽपि क्तोऽन्ये रणादिति हेतौ पञ्चमी रणभूमेः सकाशात् वहिष्कृत इति वा ॥ ३४ ॥ भ०

न त्वमित्यादि । तेन रामेण त्वन्नान्वभाविष्ठाः त्वमनेन नानुभूतः कर्मणि लुङ् यासि स्यसिजित्यादिना चिण्वदिट् एतुं नान्वभावि त्वया॰ऽप्यसौ नानुभूतः येनैवमुच्यते अत्र चिण्भावकर्मणोरिति चिण् अनुभूतो मया चासौ चशब्दः पुनरित्यर्थे मया पुनरसावनुभूतः न शक्तो जेतुमिति तेन रामेण चान्वभविष्यहमनुभूतोऽहम् तेन सह योद्धुमक्षम इति अत्र चिण्वद्भावो न कृतः किन्तु लुङि उत्तमपुरुषैकवचने वलादिलक्षण इट् तेन वृद्ध्यभावात् गुण एवेति ॥ ३५ ॥ ज० म०

न त्वमित्यादि । त्वद्वचने को ग्रहः मत्प्रसिद्धैव स दूरीभविष्यति इत्याशङ्कायामिदमुत्तरम् । तेन रामेण त्वं न अन्वभाविष्ठा न अनुभूतः कथं त्वत्तोऽस्य भयं स्यात् अनुपूर्वो भूधातुः सकर्मकः कर्मणि यास् हनग्रहदृशश्च इति पक्षे सिण् । त्वयापि असौ रामो न अन्वभावि न अनुभूतः तेन तत्रावज्ञा न युक्ता कर्मणि टौ तन् असौ मया अनुभूतः तत्रापि तत्त्वज्ञोऽहमिति मद्वचनं ग्रहाणेति भावः तेनाप्यहमन्वभविषि अनुभूतः ते । मद्गमनं व्यर्थं पराजितस्य मम दर्शनेन तस्यावज्ञाप्रसङ्गात् कर्मणि टौ इणमिणो रभावपक्षे इम् ॥ ३५ ॥ भ०

अध्यङ्ङित्यादि । शस्त्रभृतां मध्ये रामोऽध्यङ् अधिकः अध्यञ्चत्याधिकेऽत्र वर्त्तत इति ऋत्विगित्यादिना क्विन् तस्मिन् लुप्ते अनुनासिकलोपे उगिदचामिति नुम् तस्यानुस्वारपरसवर्णत्वे कृते च हल्ङ्यादि-

संविद्रः सह युध्वानो तच्छक्तिं खरदूषणौ।
यज्वानश्च ससुत्वानो यानगोपीन्मखेषु सः॥ २७॥

संयोगान्तलोपो नकारस्य क्विन्प्रत्ययस्य कुरिति कुत्वेन ङकारः। तं तादृशं प्राप्य मद्विधा न्यञ्चो हीनाः निशब्दोऽत्राधोभावे वर्त्तते। न्यञ्च इति पूर्ववत् क्विन् अनुनासिकलोपः नुम् हल्ङ्यादिलोपो नास्ति अहल्त्वात् कुत्वञ्च नास्ति अपदसंज्ञत्वात् यो मिथिलायां मह्द्धनुरभनक् भग्नवान् सोऽस्मादपि कारणात् शस्त्रभृतामध्यङ् भञ्जेर्लङि श्नान्नलोपः हल्-ङ्यादिलोपः कुत्वञ्च। कन्याशुल्कं कन्यामूल्यन्तद्धि यो रौद्रं धनुरारोपितगुणं करोति अस्मै कन्या दीयत इति मूल्यीकृत्य स्थापितम्॥ २६॥ ज० म०

अध्यङित्यादि। शस्त्रभृतां मध्ये रामो अध्यङ् आधिक्येन पूजितः कर्मणि क्विप् हल्ङ्लोपोऽर्थाविति प्राप्तनलोपस्य नेदित्पूजा-र्थाञ्चोरिति प्रतिषेधः विच्प्रत्ययो वा षङिति अञ्चोः पृथक् ग्रहणात् लुप् प्राक् कङ् स्नोर्नुः अपेक्ष्मनोः स्थान्तस्य लुप्। अध्यङ् अधिको वा अधिपूर्वोऽञ्चतिराधिक्ये वर्त्तते तं प्राप्य मद्विधा मत्प्रकारकाः पुरुषाः न्यञ्चः निशब्दोऽधोभागे न्यञ्चन्ति अधो गच्छन्तीति न्यञ्चो हीना इत्यर्थः। कुत इत्याह स रामो मिथिलायां मखे यज्ञे धनुरभनक् भग्नवान् भञ्जेर्घ्यां रुधादित्वात् नम् नशो नलोप्यः हसङ्ग्यां दिसेरिति दिलोपः षङिति कङ्। कन्याशुल्कं कन्यापणं धनुरारोपे सति कन्या देयेति मूल्येन स्थापितम्॥ २६॥ भ०

संविद्र इत्यादि। नाहमेव रामशक्तिमवैमि अपितु खरदूषणावपि संविद्रः ज्ञातवन्तौ वर्त्तमानसामीप्य इति भूते लट् सकर्मकत्वात् समो-गमीत्यादिना तङ् न भवति तत्राकर्मकादिति वर्त्तते। सह युध्वानौ सह तेन युद्धवन्तौ सहे चेति युधेः कनिप् यज्वानश्चाहिताग्नयः ससु-त्वानः सोमयाजिसहिताः सुयजोर्ङ्वनिप्। संविदन्तीति वचनविपरि-णामेन योज्यम्, यानगोपीत् अरक्षीत् मखेषु स रामः लुङि रूपं तथा मखद्रुहो राक्षसाः यतो रामस्य शक्तिं ज्ञातवन्तः॥ २७॥ ज० म०

सुखजातः सुरापीतो नृजग्धी माल्यधारयः ।
अधिलङ्कं स्त्रियो दीव्यमारब्धा बलिविग्रहम् ॥ ३८ ॥

संविद्र इत्यादि । न केवलमहमेव वेद्मि खरदूषणावपि तस्य शक्तिं संविद्रः ज्ञातवन्तौ ताड़का वेत्तीतिवत् क्ती । सह युध्वानौ तेन सह युद्धवन्तौ तावुभाविति क्वनिप् । यज्वानश्चाहिताग्नयश्च विदन्ति । पूर्वेण क्वनिप् बाहुल्याच्च जिः । सुत्वानः सुत्वभिः कृतसोमपानैः सहिताः पूर्वेण क्वनिप् स्वस्य तनु पिबतीति तत् तेषां ज्ञाने हेतुमाह मखेषु यज्ञेषु स यानगोपीत् अरक्षीत् तेषां यज्ञे राक्षसहननात् तेऽपि जानन्तीत्यर्थः गुपूरक्षणे वारे इति आयोऽभावः पक्षे ध्वां सिः वेभूदिति पक्षे इम् ॥ २७ ॥ भ०

सुखेत्यादि । यत एवं दुरुपस्थानः स तस्माद्बलिना रामेण विग्रहं मारब्धाः माकार्षीः रभेराङ्पूर्वात् माङि लुङ् थास् झलो झलीति सिज्लोपः झषस्तथोर्धोऽधः झलाञ्जश्झशि । किं कार्य्यमित्याह अधिलङ्कं लङ्कायामधि विभक्त्यर्थेऽव्ययीभावः । स्त्रियो दीव्य क्रीड़ लोटि रूपम् । दिवः कर्म चेति कर्मसंज्ञायां वाम् शसोरिति यङ् कीदृशः सुखजातः जातं सुखमस्येति बहुव्रीहिः कृतासवपानत्वात् यदाह सुरापीतः पीतमदिरः नृजग्धः भुक्तमानुषः निष्ठायामदोजग्धिः पूर्ववद्बत्वम् एषु वाहिताग्न्यादिदर्शनात् परनिपातः । माल्यं धारयतीति माल्यधारयः अनुपसर्गात् लिम्पेत्यादिना शः ॥ ३८ ॥ ज० म०

सुखेत्यादि । रामो दुरुपस्थान एव अतस्तेन बलिना सह विग्रहं युद्धं मारब्धाः माकार्षीः आङ्रभेष्टौ थास् झषस्वादिति सिलोपः ढभात्तथोरिति थस्य धः अधिलङ्कं लङ्कायामधिकृत्य स्त्रियो दिव्य स्त्रीभिः क्रीड़ कारकार्थेऽव्ययीभावः दिवसतुदेत्यादिना दिवः श्यन् व्यंनुच्-यीति र्घः हेर्लोपः दिवोधेवेति करणे द्वितीया । कीदृशः सुखं जातमस्य सुरा पीता येन ना मनुष्यो जग्धो भक्षितो येन स तथा एषु अन्याहिताद्दित्वात् क्तान्तस्य परनिपातः इति परः स्वमते पूर्वपरनिपातयोर्विवक्षाधीनत्वं टैक्य सोऽन्वय इत्युक्तेः । जग्धोदोयपि चेति

तं भीतङ्कारमाक्रुश्य रावणः प्रत्यभाषत।
यातयामं विजितवान् स रामं यदि किन्ततः॥ ३९॥
अघानि ताड़का तेन लज्जाभयविभूषणा।
स्त्रीजने यदि तच्छ्लाघ्यं धिग्लोकं क्षुद्रमानसम्॥ ४०॥

जग्धादेशः माल्यानि धारयतीति साङ्किरातीति शः॥ ३८॥ भ०

तमित्यादि। तं मारीचं पूर्वोक्तं निराकुर्वन् रावणः प्रत्यभाषत प्रत्युक्तवान् लङि रूपम्। भीतङ्कारमाक्रुश्य भीतं कृत्वा भीतोऽसीति कर्मण्याक्रोशे कृञः खमुञ्। यातयामकृतवयसं यदि विजितवान् रामो दाशरथिः किं ततः किं तापसः शूरः॥ ३९॥ ज० म०

तमित्यादि। भीतङ्कारं त्वं भीतोऽसीत्युक्त्वा आक्रुश्य तं मारीचं रावणः प्रत्यभाषत प्रत्यूचे भीतङ्कारमिति कर्मण आक्रोशे कृञो भाषणार्थे क्त्वा चणम् स्विदश्चेति परः समते तमाक्रुश्य प्रत्यभाषत तं किम्भूतं भीतं भययुक्तं पुनः किम्भूतं कारं यो रणे दुरुपस्थान इत्यादेर्विज्ञापयितारं कृकङ्विज्ञाने इत्यस्मात् अग्न्तात् कभावेऽसीति कर्त्तरि घञ् किंवा चणमुवेत्यस्य योगविभागात् आक्रोशे चणम् मनीषादित्वात् पूर्वपदस्य द्विकान्तत्वं किं प्रत्यभाषतेत्याह स राघवो यातयामं वृद्धं रामं जामदग्न्यं विजितवान् ततः किं न हि वृद्धजयेन शौर्य्यं ज्ञायते। यातयामस्तु जीर्णे स्यात् परित्यक्तोज्झितेऽपि चेति विश्वः॥३९॥ भ०

अघानीत्यादि। तेन रामेण ताड़का अघानि व्यापादिता हन्तेः कर्मणि लुङ्। लज्जा च भयं च विभूषणं यस्याः स्त्रीत्वाच्च शौर्य्यम् एवंविधाया अनेन रामेण यदि गर्हामपि हननं स्त्रीजने श्लाघ्यं श्लाघनीयम् कृत्यानां कर्त्तरि वेति तृतीया। तं धिक् तं लोकं क्षुद्रमानसं हीनमानसम्॥ ४०॥ ज० म०

अघानीत्यादि। लज्जा भयञ्च विभूषणं यस्याः सा ताड़का तेन रामेण अघानि मारिता हन्तेः कर्मणि टी रतनोर्यगिणो खेर्हौघो-ञ्णिति चेति घत्वं स्त्रीजने तत्कर्म यदि श्लाघनीयं तदा क्षुद्रमानसं हीनचित्तं लोकं धिक्। धिक् समयेति द्वी॥ ४०॥ भ०

यज्ञे हैनर्दिनमसौ शरैर्भीरुमभाययत् ।
कुब्रह्मयज्ञके रामो भवन्तं पौरुषं न तत् ॥ ४१ ॥
चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः ।
किं चित्रं यदि रामेण भग्नं क्षत्रियकान्तिके ॥ ४२ ॥

यज्ञ इत्यादि । असौ रामो यज्ञवन्तं भीरुं शरैरभाययत् भयितवान् णुगात्मनेपदे न भवतः भयहेतोरभावात् अत्र हि शरेभ्यो भयं न तु रामात् तत् किं पौरुषं पुरुषकारः किमसौ युवादित्वादण् गेहे नर्दिनं गेह एव नर्दिनं पात्रे समितादित्वात्समासः । कुब्रह्मयज्ञके कुत्सिता ब्राह्मणः कुब्रह्माः कुः पापार्थे इति सः कुमहद्भ्यामन्यतरस्यामिति समासान्तष्टच् तेषां कुत्सितो यज्ञः तस्मिन् सति कुत्सायां कन् । तेन शूरमन्योऽहं रणात्तेन निरस्तः इत्यपुक्तवत्सुक्तम् ॥ ४१ ॥ ज० म०

यज्ञ इत्यादि । असौ रामः कुब्रह्मयज्ञके यज्ञवन्तं शरैरभाययत् अत्रासयत् तदपि न पौरुषं कथमित्याह भीरुं भयशीलम् अतएव गेहे नर्दिनं खट्टह इव नर्दतीति ग्रहादित्वाणिनि पात्रे समितादित्वात् क्षेपे समासो विभक्त्यलोपश्चेति परः । अभाययदिति भियो अन्तात् षी स्मिभ्योर्षाह्वर्ये जौ सश्चेत्यस्य भीभींष् वेत्यस्य च नात्र विषयः यतः शरेभ्य एवात्र भयं विवक्षितं नतु प्रयोजकात् कर्त्तुः कुत्सितो ब्रह्मा ब्राह्मणः कुब्रह्मः देशाद्ब्रह्मणः कुमहद्भ्यान्तु वेति पक्षे षः तस्य कुत्सितो यज्ञ इति निन्दायां विकारस्थेत्यादिना कः अतएव प्रयोजनाभावात्तत्र समर्था राक्षसा न गच्छन्ति पुरुषस्य भावः कर्म्म वेति पूर्वे वा षः ॥ ४१ ॥ भ०

चिरेत्यादि । यदि रामेण क्षत्रियकान्तिके कुत्सितक्षत्रियसमीपे भग्नं धनुः किं तच्चित्रमाश्चर्य्यं क्षत्रिया जनकादयः तस्य कुत्सायाङ्कन् क्षत्रियकस्यान्तिके दूरान्तिकार्थयोगे षष्ठीसमासं विधाय पश्चात् सप्तम्यधिकरणे चेति चकाराद्दूरान्तिकार्थेभ्यश्चेति सप्तमी किमिति न चित्रमित्याह चिरकालमुषितमिति कालाध्वनोरिति द्वितीयां विधाय अत्यन्तसंयोगे चेति द्वितीयायाः समासः जीर्णं चिरकालोषितत्वात् जूष्-

वनतापसके वीरौ विपक्षे गलितादरौ।
किं चित्रं यदि सावज्ञौ मम्नतुः खरदूषणौ॥ ४३॥
त्वञ्च भीरुः सुदुर्बुद्धे! नित्यञ्च रणकाम्यसि।
गुणांश्चापजुषेऽस्माकं स्तौषि शत्रूंश्च नः सदा॥ ४४॥

अयोह्रानौ निष्ठा क्त ईङ्गातोः इकोह्रलि वेति दीर्घः रदाभ्यामिति निष्ठानत्वम्। कीटैर्घुणैर्निष्कुषितं खादितं निरः कुषः इत्यनुवर्त्तमाने इण् निष्ठायामितीट्॥ ४२॥ ज० म०

चिरेत्यादि। चत्रियकान्तिके कुत्सितानां चत्रियाणां जनकादीनां निकटे यदि रामेण धनुर्भग्नं तदपि किं चित्रं कथं न चित्रमित्याह चिरकालोषितं चिरकालं व्याप्य स्थितं सदाभ्यादिव्याप्ताविति द्वितीयासमासः तत एव जीर्णं जूजरायां ह्रानौ क्तः ऋदिरणाविती र् र्व्यनुच्तयीति दीर्घः खल्वाद्योदिति नकारः। कीटैर्घुणैर्निष्कुषितम् अन्तःखादितं नेमडीत्यादौ निष्कुषवर्जनात् इस् षत्वविधानम्। गवाक्षजालैरभिनिष्पनन्त्य इत्यत्र व्याख्यातम् ईदृग्धनुर्भङ्गस्ताघयैव चत्रियाणां कुत्सा॥ ४२॥ भ०

वनेत्यादि। वने तापसो वनतापसः कुत्सायां कन् तस्मिन् वनतापसके रामे सावज्ञत्वाद्गलितादरौ विपक्षे किमयं करिष्यतीत्यवज्ञयैव योषितवन्तौ खरदूषणौ वीरौ यदि मम्नतुः मृतौ को दोषः किं चित्रं म्रियतेर्लुङ्लिङोश्चेति नियमात् लिट्यात्मनेपदञ्च भवति॥४३॥ ज०म०

वनेत्यादि। खरदूषणौ यदि मम्नतुः तदापि किं चित्रं नैवाश्चर्य्यमित्यर्थः तपःशीलस्तापसः वने कुत्सितस्तापसो वनतापसको रामस्तस्मिन् विपक्षे किमयं करिष्यतीति मत्वा गलितादरौ वीरावपि सावज्ञौ विपक्षादराभावात् युद्धेऽपि सावहेलौ म्रङ्ष्टोर्वा मम्रिति नियमात् नवम्रः मने इति जितोऽन्यत्वात् शाः परस्मैपदम्॥ ४३॥ भ०

त्वञ्चेत्यादि। हे सुदुर्बुद्धे! त्वं पुनः भीरुश्च भवसि नित्यञ्च रणकाम्यसि आत्मनोऽनिशं रणमिच्छसि आत्मेच्छायां काम्यच् अस्माकञ्च

शीर्षच्छेद्यमतोऽहं त्वां करोमि चितिवर्द्धनम्।
कारयिष्यामि वा कृत्यं विजिघृक्षुर्वनौकसौ॥ ४५॥

स्तौ गुणानपह्नुषे अपनयसि ह्नुङ् अपनये आदादिकः ङित्त्वात्तङ् शत्रूंश्च नोऽस्माकं स्तौषि स्तौतेः उतो वृद्धिर्लुकि हलि ॥४४॥ ज०म०

त्वञ्चेत्यादि। हे सुदुर्बुद्धे! मारीच! त्वं भीरुश्च भवसि रक्षाकाम्यसि च आत्मनो रक्षामिच्छसि च लेः काम्यच् स्वेच्छायां भीरोर्युद्धेच्छाऽनुचितैव युद्धे पराजयोऽवश्यम् एवमस्माकं गुणांश्चापह्नुषे शौर्यादीन् अपनयसि ह्नुङ्लचौर्ये सदा नोऽस्माकं शत्रून् स्तौषि ष्टुञ्स्तुतौ रपिस्युतोऽद्वेर्भिः॥ ४४ ॥ भ०

शीर्षेत्यादि। यत एवंविधस्त्वं दुष्टः अतोऽहं त्वामौ द्वितीयाया इत्याष्टमिकलक्षणेन त्वादेशः। शीर्षच्छेद्यं शीर्षच्छेदार्हं शीर्षच्छेदाद्यत् चितिवर्द्धनं करोमि शिरश्छित्त्वा व्यापादयामीत्यर्थः। अथवा कृत्यं करणीयं विभाषा कृवृषोरिति क्यप्। कारयिष्यामि हृक्रोरिति द्विकर्मकता। विजिघृक्षुः विग्रहीतुमिच्छुः। सनिग्रहगुहोश्चेतीट् प्रतिषेधः, रुदविदेत्यादिना सनः कित्त्वे ग्रहिज्येत्यादिना संप्रसारणम्, होढः एकाचो बशोभष्, षढोः कः सि। वनौकसौ रामलक्ष्मणौ। वनमोको गृहं ययोः। नलोकेति कर्मणि षष्ठ्याः प्रतिषेधः॥ ४५॥ ज० म०

शीर्षेत्यादि। अतः कारणात् अस्मद्गुणापह्नवात् शत्रुस्तवनाच्च शीर्षच्छेद्यं शीर्षच्छेदार्हं त्वां चितिवर्द्धनं मृतं करोमि शिरश्छित्त्वा मारयामीत्यर्थः शीर्षच्छेदमर्हतीत्यर्थे दण्डादिभ्यो यः, किंवा छिदेर्ण्यत्, शीर्षे छेद्यः शीर्षं छेद्यं यस्येति वा विग्रहः अथवा कृत्यं कार्यं त्वां कारयिष्यामि यदि जीवनेच्छास्ति तदा मत्कृत्यं कुर्विति भावः कृवृष०मृजेति पक्षे क्यप् णोऽणौ जेरिति प्रयोज्यकर्तुः पक्षे कर्मत्वम् वनमेव ओको ययोस्तौ रामलक्ष्मणौ विग्रहीतुं योधयितुम् अभिभवितुं वा इच्छुरहम्। ग्रहेः सन् नेग्गुहग्रह इति इण्निषेधः ग्रहस्तषष्ठ्यां जिः॥ ४५॥ भ०

तमुद्यतनिशातासिं प्रत्युवाच जिजीविषुः।
मारीचोऽनुनयंस्त्रासादभ्यमित्रो भवामि ते ॥ ४६ ॥
हरामि रामसौमित्री मृगो भूत्वा मृगद्युवौ।
उद्योगमभ्यमित्रीणो यथेष्टं त्वञ्च सन्तनु ॥ ४७ ॥

तमित्यादि। तं रावणम् एवमुक्तवन्तं निशात इति शाच्छोरन्यतरस्यामितीत्वाभावपक्षे रूपम् उद्यतः उत्थापितः निशातस्तीक्ष्णोऽसिर्येन तं मारीचस्त्रासात् प्रत्युवाच वचनमुक्तवान् अभ्यमित्यो भवामि ते अमित्रस्याभिमुखमभ्यमित्यमाभिमुख्येऽव्ययीभावः अभ्यमित्रमलङ्गामीत्यस्मिन्नर्थे अभ्यमित्राच्छ चेति चकाराद्यत् खौ चेति यत् त्वदमित्राभिमुखं गच्छामीत्यर्थः अनुनयन् अनुकूलयन् किमर्थं जिजीविषुः जीवितुमिच्छुः ॥ ४६ ॥ ज० म०

तमित्यादि। मारीचो जिजीविषुर्जीवितुमिच्छुः सन् त्रासात् अनुनयन् तं रावणं प्रत्युवाच त्रासहेतुमाह उद्यत उत्थापितो निशातस्तीक्ष्णोऽसिर्येन तं निशातेति छाशोर्वेति श्यतेः पक्षे न ङिः। किं प्रत्युवाचेत्याह अहं ते तव अभ्यमित्यः शत्रुभिमुखगामी भवामि अमित्रस्य अभिमुखम् अभ्यमित्यम् आभिमुख्येऽव्ययीभावः अभ्यमित्रशब्दादिदं गच्छतीत्यर्थे विकारसंघेति यः ॥ ४६ ॥ भ०

हरेत्यादि। अहं मृगो भूत्वा रामसौमित्री हरामि देशान्तरं प्रापयामि आखेटकाभिरतत्वात् यदाह मृगद्युवौ मृगैर्दीव्यत इति क्विप् च्छ्वोः शूडनुनासिके चेति चकारात् क्वौ च ऊट् यणादेशः उवङ् मृगद्युताविति पाठान्तरम्। तत्र द्यु अभिगमने मृगान् द्यौति अभिगच्छतीति क्विप्। त्वञ्च यथेष्टं यथारुचितमुद्योगं सन्तनु विस्तारं कुर्वित्यर्थः तनोतेर्लोटि उतश्चेति हेर्लुक् अभ्यमित्रीणः अमित्राभिमुखमलङ्गामी अभ्यमित्राच्छ चेति चकाराद्यत्खौ चेति खः ॥ ४७ ॥ ज० म०

हरेत्यादि। उपायं दर्शयन्नाह अहं मृगो भूत्वा रामसौमित्री हरामि अन्यत्र नयामि यतस्तौ मृगद्युवौ मृगयारसिकौ मृगैर्दीव्यत इति क्विपि च्छ्वोः शूटाविति वस्योट् धोरियुवचि, मृगद्युताविति पाठे

ततश्चित्रीयमाणोऽसौ हेमरत्नमयो मृगः ।
यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन् ॥ ४८ ॥
तेनादुद्यूषयद्रामं मृगेण मृगलोचना ।
मैथिली विपुलोरस्कं प्रावुवूर्षुर्मृगाजिनम् ॥ ४९ ॥

द्युलभिसर्पणे इत्यस्मात् क्विपि स्वस्य तनुं पिबतीति तनूं मृगाभिगामि नावित्यर्थः ततस्त्वमपि अभ्यमित्रीणो ययेष्टमुद्योगं सन्तनु तनदुञ् विस्तारे हेलोपोऽस्योभोऽचेति हिलोपः । अभ्यमित्रीण इति अभ्य मित्यर्थत् ॥ ४७ ॥ भ०

तत इत्यादि । उक्तानन्तरमसौ मारीचो मायास्तृगीभूतः सन् हेमरत्नमयः रत्नञ्च हेम चेति विग्रहः मयड्वैतयोर्भाषायामिति विकारे मयट् निर्मलत्वात् सीताया अग्रतो यथामुखीनः प्रतिविम्बाश्रय इव भूत्वा पुप्लुवे भ्रमति स्म इवगन्द्लोपो द्रष्टव्यः यथामुखसम्मुखस्य दर्शनः खः । बहु लोभयन् सुष्ठु स्पृहां जनयन् यतश्चित्रीयमाणः आश्चर्यं भवन् हेमरत्नमयत्वात् नमोवरिव इत्यादिना क्यच् चित्रङ् आश्चर्ये ङकारस्यात्मनेपदार्थत्वात् शानच् अवयवकृतं लिङ्गं समुदायस्य भवतीति ॥ ४८ ॥ ज० म०

तत इत्यादि । ततो वचनानन्तरम् असौ मारीचो मायया हेम रत्नमयो मृगः सन् सीताया यथामुखीनोऽग्रतः मायी भूत्वा बहु लोभयन् चक्षुःस्पृहां जनयन् पुप्लुवे भ्रमति स्म प्लुङ्गतौ ठौ चित्रं करोतीति चित्रीयमाणः चित्रङ् आश्चर्ये कण्ड्वादित्वात् कः ङित्वा दात्मनेपदं हेम रत्नञ्च प्रस्तुतं यत्रेति प्रस्तुतार्थे मयट् बाहुल्यात् विकार इत्येके मुखस्य सदृशं यथामुखं दर्पणादिस्थप्रतिविम्बमुच्यते साहश्येऽव्ययीभावः मृगस्य रत्नमयत्वेन स्वच्छतया यथा मुखं दृश्यतेऽत्रेति विकार संघेत्यादिना तदत्र दृश्यते इत्यर्थे खिनः वस्तुतस्तु उपचारात् यथामुखीन शब्दोऽभिमुखमात्रेऽपि वर्त्तते सीताभिमुखो भूत्वेत्यर्थः ॥ ४८ ॥ भ०

तेनेत्यादि । तेन मृगेण मैथिली सीता राममदुद्यूषयत् क्रीडित मिच्छन्तं प्रयुक्तवती मृग्यतामयमिति इवन्तस्य दिवेः सनीवन्तेत्यादिना

योगक्षेमकरं कृत्वा सीताया लक्ष्मणं ततः ।
मृगस्यानुपदी रामो जगाम गजविक्रमः ॥ ५० ॥

यदा नेट् तदा चक्षोः ख्याञ् द्विर्वचनम् । तस्मात् सनन्तं पश्यन्ताव् लुङि रूपम् । मृगलोचना मृगस्य लोचने इव लोचने यस्याः मध्यपद-लोपी सः । विपुलोरस्कं विस्तीर्णवक्षःस्थलम् उरःप्रभृतिभ्यः कप् ॥ किमर्थमदुद्यूषयत् मृगाजिनं मृगचर्म प्रावुवूर्षुः प्रावरीतुमिच्छुः प्राङ्-पूर्वस्य वृङ इट्सनि वेत्यनिट्पक्षे अज्झनगमां सनीति दीर्घः उदोष्ठ्य-पूर्वस्येत्युत्वम् रपरत्वं वोरुपधाया दीर्घम् इकः द्विर्वचनम् इण्करोति षत्वम् रेफस्येण्ग्रहणेन ग्रहणाद्दन्त्योष्ठ्योऽपि वकार ओष्ठ्यग्रहणेन गृह्यते ॥ ४९ ॥ ज० म०

तेनेत्यादि । मैथिली मृगाजिनं मृगस्य चर्म प्रावुवूर्षुः प्रावरीतुं परिधातुमिच्छुः सती तेन मृगेण रामम् अदुद्यूषयत् क्रीडितुमिच्छा-मकारयत् दिवेः सन् भ्रस्जभ्रिस्वयूर्णुभरदरिद्रेत्यादिना पक्षेऽनिम् पूर्णानिमीति गुणाभावे च्छ्वोः शूठाविति वस्य ऊत्वं ततो द्वित्वं णिः-प्रेरणे दिवेरकर्मकत्वात् गतिबुद्धीति प्रयोज्यकर्तुः कर्मत्वं सा कीदृशी मृगस्येव लोचने यस्याः सा तया रामं कीदृशं विपुलं प्रकीर्णमुरो वक्षःस्थलं यस्य तं उरःप्रभृतितः को बहुव्रीहावविति परः स्वमते स्वार्थे कः प्रावुवूर्षुरिति वृञ् वरणे सन् ग्रोऽज्झनिङ्गमां स्याद्युदूद्वुरिति पक्षेऽनिम् । दन्त्योष्ठ्यस्योष्ठ्यकार्यत्वात् ऋदिरणावूत्वौष्ठ्याविति उर् र्यनच्तयोतिर्घः ॥ ४९ ॥ भ०

योगेत्यादि । ततो दुद्यूषानन्तरं रामो जगाम योगक्षेमौ शरीर-स्थितिपालने करोतीति कृञो हेत्वित्यादिना हेतौ टः ग्रहणवता तदन्तविधेरभावात् क्षेमप्रियमद्रेण् चेत्यण्खचौ न भवतः सीतायाः स्थितिपालनहेतुभूतं लक्ष्मणं कृत्वा रामः मृगस्यानुपदी अन्वेष्टा अनुपद्यन्वेष्टेति निपातनात् साधुः । गजविक्रमः गजगमनमिव गमनं यस्येत्यर्थः ॥ ५० ॥ ज० म०

योगेत्यादि । ततोऽनन्तरं लक्ष्मणं जानक्या योगक्षेमकरं कृत्वा

स्थायं स्थायं क्वचिद्यान्तं क्रान्त्वा क्रान्त्वा स्थितं क्वचित् ।
वीक्षमाणो मृगं रामश्चित्रवृत्तिं विसिस्मिये ॥ ५१ ॥
चिरं क्लिशित्वा मर्माविद्रामो विलुभितप्लवम् ।
प्रद्रायमानमव्यात्सीत् भयदं क्षणदाचरम् ॥ ५२ ॥

गजविक्रमो हस्तिपराक्रमो हस्तिगमनतुल्यगमनो वा रामो मृगस्यानुपदी सन् जगाम फलपुष्पादेरलब्धस्य साधनं योगः शरीरादेर्लब्धस्य पालनं क्षेमः तौ करोतीति क्षकृष्टः अनुपदं यातीति बाहुल्यात् इन् अनुपदमनुगमनं विद्यतेऽस्येति नैकाजादिति इन् अन्वेष्टर्य्यनुपदादिनिति परसूत्रम् ॥ ५० ॥ म०

स्थायमित्यादि । मृगं चित्रविचित्रमद्भुतशरीरचेष्टं वीक्षमाणो रामो विसिस्मिये विस्मितः स्मिङोऽङित्त्वादात्मनेपदं षोपदेशत्त्वाच्चाभ्यासे षः परस्य सस्य षः चित्रवृत्तितां दर्शयन्नाह स्थायं स्थायं स्थित्वा स्थित्वा क्वचित् प्रदेशे यान्तं क्रान्त्वा क्रान्त्वा क्वचित्प्रदेशे उत्प्लुत्योत्प्लुत्य स्थितम् आभीक्ष्ण्ये णमुलि क्त्वाच् णमुलौ द्विर्वचनञ्च ॥ ५१ ॥ ज० म०

स्थायमित्यादि । मृगं वीक्षमाणो रामो विसिस्मिये विस्मितः स्मिङश्चां रूपं षोपदेशत्वात् खेरिलात् षत्वं स्मुध्योरितीयः विस्मये हेतुमाह चित्रवृत्तिम् आश्चर्यचेष्टं चित्रवृत्तित्वं दर्शयति स्थित्वा स्थित्वा क्वचित् गच्छन्तं क्षणम्वाभीक्ष्ण्ये पूर्वकाले इति क्षणम् आभीक्ष्ण्ये द्वित्वं बोकतः सिद्धमिति स्मारं स्मारं नमसीत्युदाहरणेन ज्ञापितं क्वचित् क्रान्त्वा क्रान्त्वा उत्प्लुत्य उत्प्लुत्य स्थितं क्रमोर्घोर्वेति पक्षे दीर्घः ॥ ५१ ॥ भ०

चिरमित्यादि । रामः क्षणदाचरं मारीचमव्यात्सीत विद्धवान् व्यधेर्लुङि हलन्तलक्षणा वृद्धिः मर्माविद्रामः मर्माणि विध्यतीति क्विप् नहि वृतीत्यादिना पूर्वपदस्य दीर्घत्वं चिरं क्लिशित्वा महान्तं कालमायस्य अत्यन्तसंयोगे द्वितीया क्लिश क्त्वानिष्ठयोरिति विकल्पे नेट् तत्र रलोव्युपधादिति किन्त्वविकल्पे मृड्मृदेत्यादिना किन्त्वं विलुभितप्लवं व्याकुलितगमनं लुभोविमोहन इतीट् विमोहनं व्याकुलीकर-

श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी ।
मत्वा कष्टश्रितं रामं सौमित्रिं गन्तुमैजिहत् ॥ ५३ ॥
एष प्राव्हषिजाम्भोदनादी भ्राता विरौति ते ।

चम् । शब्दायमानं शब्दं कुर्वाणं शब्दवैरेति क्यङ् भयदमिति शाचरं शब्दविशेषणं वा ॥ ५२ ॥ ज० म०

चिरमित्यादि । रामश्चिरकालं क्लिशित्वा श्रान्तो भूत्वा भयदं भयदायकं चणदाचरं तं राचसम् अव्यात्सीत् व्यध्यौ ताडे टी पूक्लिशुदित इम् इति क्लिशेः पचे इम् शेमचुधेत्यादौ क्लिशवर्जनात् न गुणः । मर्माणि विध्यतीति क्किप् जिः वीरुद्धोधङ्काविति दीर्घनिर्देशात् क्कचित् क्किबन्ते पूर्वपददीर्घत्वं स्यादिति सूचितम् आङ्पूर्वस्य रूपं वा मर्मावित् मर्मज्ञो वा वेत्ते रूपं विलुभितश्चवं मर्मताड़नात् व्याकुलगतिं लुभशविमोहने विमोहनं व्याकुलीकरणं चुभवसपूजेत्यादिना इम् । शब्दायमानं शब्दं कुर्वाणं शब्दसुखकष्टादेरिति ङ्यः भयदमिति न्टगस्य शब्दक्रियाया वा विशेषणम् ॥ ५२ ॥ भ०

श्रुत्वेत्यादि । विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं टुओस्फूर्जा वज्रनिर्घोषे द्वितोऽथुच् । निनादं शब्दं नौगदनदेति विकल्पनात् पचे घञ् । श्रुत्वा मैथिली कष्टश्रितं कृच्छ्रं प्राप्तं रामं द्वितीयाश्रितेत्यादिना सः । मत्वा बुद्ध्वा कृच्छ्रप्राप्तेन रामेण हतमिति परिदेविनी परिदेवनशीला शङ्कमाना सम्पृचानुरुधेत्यादिना घिनुण् सौमित्रिं गन्तुमैजिहत् ईहाङ्कारितवती ईहेर्ण्यन्तात् लुङि द्विर्वचनेऽचीति स्थानिवद्भावादजादेर्द्वितीयस्येति हिशब्दस्य द्विर्वचनम् अभ्यासकार्य्यञ्च ॥ ५३ ॥ ज० म०

श्रुत्वेत्यादि । विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं निनादं श्रुत्वा कष्टश्रितं कष्टं प्राप्तं रामं मत्वा परिदेविनी परिदेवनशीला अर्थात् सीता सौमित्रिं गन्तुम् ऐजिहत् चेष्टामकारयत् ईहङ् चेष्टायां णिः प्रेरणे अङि हेर्द्वित्वं द्वो स्फूर्जावज्रनिर्घोषे दीर्घवानित्येके द्वितोऽथुर्भावे ॥ ५३ ॥ भ०

एष इत्यादि । एष ते भ्राता विरौति उतो वृद्धिरित्यौकारः प्राव्हषि

ज्ञातेयं कुरु सौमित्रे ! भयात्त्रायस्व राघवम् ॥ ५४ ॥
रामसंघुषितं नैतन्मृगस्येव विवञ्चिषोः ।
रामस्वनितसङ्काशः स्वान इत्यवदच्च ताम् ॥ ५५ ॥

जातः प्रावृषिजः सप्तम्याञ्जनेर्डः प्रावृड्ित्यादिना सप्तम्या अलुक् स चाम्भोदस्येति विशेषणमिति सः । तद्वन्नदतीति कर्त्तर्य्युपमाने णिनिः । तस्मात् सौमित्रे ! ज्ञातेयं ज्ञातिभावं तत्कर्म्म वा कुरु कपिज्ञात्योर्ढक् तेन भयात्त्रायस्व राघवम् ॥ ५४ ॥ ज० म०

एष इत्यादि । हे सौमित्रे ! एष ते तव भ्राता विरौति शब्दायते रुशब्दे रपिङ्कयुतोऽद्वेर्व्रि :, प्रावृषि वर्षाकाले जातः प्रावृषिजः सप्तम्यां जनेर्ड इति डः सरसिजमित्युदाहरता क्वचित् समासे विभक्तेरलुगिति सूचितम् । अम्भो ददातीति अम्भोदः पूर्ववत् डः प्रावृषिजश्चासौ अम्भोदो मेघश्चेति स इव नदतीति ग्रहादित्वाण्णिन् त्वं ज्ञातेयं ज्ञातिकर्म कुरु किं तदित्याह भयाद्राघवं त्रायस्व विकारसंघेत्यादिना कर्मण्यर्थे ज्ञातेः ण्यः ॥ ५४ ॥ म०

रामेत्यादि । रामसंघुषितं रामशब्दितमेतन्न भवति घुषिरविशब्दार्थः तस्य निष्ठायां रुष्यमत्वरेत्यादिना विकल्पेनेट् मृगस्य विवञ्चिषोः छलयितुमिच्छोः वञ्चु गतौ भौवादिकः तस्यानेकार्थत्वात् प्रलम्भन इति चौरादिकस्याण्यन्तस्य वा प्रयोगः । येषामनित्यण्यन्ताश्चुरादय इति दर्शनं तेषां मतेनात्रापि सिध्यति एष स्वानो ध्वानः स्वनहसोर्वेति पक्षे घञ् । कीदृशः रामस्वनितसङ्काशः रामशब्दानुकारीति तां सीतामृ एवमवदत् उक्तवान् स लक्ष्मणः ॥ ५५ ॥ ज० म०

रामेत्यादि । स लक्ष्मणस्तां सीताम् इत्यवदत् । किं तदित्याह एतन्न रामसंघुषितं घुषरवे । विवञ्चिषोर्वञ्चयितुं छलयितुमिच्छोर्मृगस्यैव एष स्वानः शब्दः रामस्वनिततुल्यः वञ्चकङ्वञ्चने कित्त्वात् चौरादिकः वञ्चनं प्रलम्भनं चुर्ण्यौजिर्वेति अप्रभावपक्षे रूपमिदं केचित्तु वञ्चगत्यां चौरादिकधातोरनेकार्थत्वात् प्रलम्भनेऽपि वर्त्तत इत्याहुः स्वनशब्दे भावे क्ते स्वनितं घञि स्वानः ॥ ५५ ॥ म०

आप्यानस्कन्धकण्ठांसं रुषितुं सहितुं रणे।
प्रोर्णुवन्तं दिशो बाणैः काकुत्स्थं भीरु! कः क्षमः॥५६॥
देहं विभ्रक्षुरस्त्राग्नौ मृगः प्राणैर्दिदेविषन्।
व्याघुष्टकठिनाङ्गुष्ठं राममायान्मुमूर्षया॥५७॥

आप्येत्यादि। प्यैङ् वृद्धौ अस्मादाङ्पूर्वात् संयोगादेरातोधातोर्यण्वत इति निष्ठातो नः। ओप्यायीङ्वृद्धावित्यस्य वा रूपम् ओदितश्चेति निष्ठानत्वं पीभावस्तु आङ्पूर्वस्य त्वन्धूधसोरिति वचनात् इह न भवति आप्यानस्कन्ध इति आप्यानं स्थूलं स्कन्धकण्ठांसं यस्य काकुत्स्थस्य बाहुशिरोंऽसः तस्य पश्चिमो भागः स्कन्धः तं रुषितं क्रुद्धं रणे संग्रामे सहितुं हे भीरु! कातरे! कः क्षमः शक्तः अपि तु न कोऽपीत्यर्थः क्षमेः शक्नोत्यर्थत्वात् तदुपपदे शकधृषेत्यादिना तुमुन् तीषसहेत्यादिना वेट् ककुत्स्थस्यापत्यं काकुत्स्थः शिवादिभ्योऽण् कस्मात् क्षम इत्याह प्रोर्णुवन्तं दिशो बाणैः यतः सर्वाः दिशः बाणैः छादयन्तम् ऊर्णोतेः शतरि उवङ्। क्षमत इति क्षमः पचाद्यच्॥५६॥
ज० म०

आप्यानेत्यादि। हे भीरु! कातरस्वभावे! रणे रुषितं क्रुध्यन्तं काकुत्स्थं रामं सहितुम् अभिभवितुं कः क्षमः शक्तः न कोऽपीत्यर्थः वेसषहलुभ इत्यादिना उभयत्र पक्षे इम् क्षमेः पचादित्वादण् ककुत्स्थस्यापत्यम् इति शिवादित्वात् अणः आप्यानं स्थूलं स्कन्धकण्ठांसं यस्य तम् ओप्यायीङ् वृद्धौ ओदित्वात् स्वादयोदिदिति क्तस्य नकारः य्वोर्लोपो हस्य ये इति यलोपः आङोऽन्धूधसोरिति नियमात् न प्यादेशः प्यैङ् वृद्धावित्यस्य रूपं वा अंसो भुजशिरः बाणैर्दिशः प्रोर्णुवन्तम् आच्छादयन्तम्॥५६॥ भ०

देहमित्यादि। एष मृगो राममायात् आगतवान् यातेर्लङि रूपम्। किमर्थं देहं शरीरम् अस्त्राग्नौ अस्त्रे अग्नाविव विभ्रक्षुः भ्रष्टुमिच्छुः भ्रस्जेः सनीवन्तर्धेत्यत इभावपक्षे स्कोः संयोगाद्योरित्यनेन सलोपे षत्वकुत्वयोश्च रूपम्। प्राणैर्दिदेविषन् क्रीडितुमिच्छन् दिवः

अतनून् भीषयमाणं तं रामं विस्मापयेत कः।
मास्म भैषीस्त्वयाद्यैव कृतार्थो दृक्ष्यते पतिः॥ ५८॥

कर्म चेति चकारात् करणसंज्ञा सनीवन्तेतीट् पक्षे रूपम्। ज्यया गुणेन घुष्टौ निघृष्टौ अतएव कठिनौ अङ्कुष्ठौ सव्यापसव्यकर्षणाद्यस्य घुषिरविशब्दन इति निष्ठायामनिट् मुमूर्षया मर्त्तुमिच्छया मृङः सनि उदोष्ठ्यपूर्वस्येत्युत्वम् अः प्रत्ययात्॥ ५७॥ ज० म०

देहमित्यादि। एष मृगो मुमूर्षया मर्त्तुमिच्छया रामपाद्यात् आगच्छत् याम्यापथे घो मृङः सनि घोऽज्झनिङ्गमामिति दीर्घे ऋदिरणाविति उर् रामस्य अस्त्रमग्निरिव तत्र स्वदेहं भ्रष्टुमिच्छुः भ्रस्जः सनि भ्रस्जम्भिस्त्वयूर्णुभर इति इसोऽभावपक्षे स्यादेः सोलोपः शच्छ्राजिति षङ् षढोः कः से। प्राणैर्दिदेविषन् क्रीड़ितुमिच्छन् इवन्तत्वात् पूर्वेण पक्षे इम् ज्याघुष्टो धनुर्गुणनिष्पिष्टः कठिनाङ्गुष्ठो यस्य तं रामं घुषशब्दे क्षुब्धवाढेत्यादिना निपातः निपातात् निष्पेषणार्थोऽपि गम्यते गुणनिष्पेषेऽङ्गुष्ठकाठिन्यं युक्तं निपातोऽपि शब्दार्थ एव इति चेत् ज्यया घुष्ट शब्दितः सुप्रसिद्धः कठिनाङ्गुष्ठो यस्येति॥ ५७॥ भ०

अतनूनित्यादि। तं रामं अतनून् भीषयमाणं भीतान् कुर्वाणं भियोहेतुभये षुक् भीस्म्योर्हेतुभय इति तङ्। विस्मापयेत कः क्षुभितचित्तङ्कुर्य्यात् नैवेत्यर्थः नित्यं स्मयतेरिति णावात्वम् अर्त्तीत्यादिना पुक् निमन्त्रणे नियोगे वा लिङ् पूर्ववदात्मनेपदं तस्मान्मास्म भैषीः माभूर्भीता स्मोत्तरे लङ् चेति चकारात् लुङ् सिचि वृद्धिः त्वया अद्यैव कृतार्थः पूर्णमनोरथः पतिर्द्रक्ष्यते दृशेः कर्मणि लृट्॥५८॥ ज० म०

अतनूनित्यादि। अतनून् भीषयमाणं भीतान् कुर्वाणं रामं को विस्मापयेत क्षुभितहृदयं कुर्य्यात् न कोऽपीत्यर्थः स्मिभ्योर्घाद्वर्थे मञ्चेति स्मिधातोरिकार आ मञ्च भीभीष्वेति भियः पक्षे भीषादेशः। तस्मात् त्वं मा भैषीः भयं न कुरु मास्मेन घीघ्याविति टी व्रजवदेति त्रिः मायोगे अमाङ्माभावः। त्वया अद्यैव कृतार्थः कृतकृत्यः पतिर्द्रक्ष्यते दृशः कर्मणि ती वर्द्धोऽक्रिज्भस इति रेफः॥ ५८॥ भ०

याचास्त्वमिति कामो मे गन्तुमुत्सहसे न च।
इच्छुः कामयितुं त्वं मामित्यसौ जगदे तया ॥ ५९ ॥
मृषोद्यं प्रवदन्तीं तां सत्यवद्यो रघूत्तमः।
निरगात् प्रनुहस्तं त्वं यास्यसीति शपन् वशी ॥ ६० ॥

याचा इत्यादि। तदन्वेषणाय याचास्त्वमिति कामोऽभिलाषः कामप्रवेदने कच्चिति इत्यकच्चित्युपपदे लिङ्। न च गन्तुमुत्सहसे शकधृषेति तुमुन् तस्मान्नूनं मां कामयितुमिच्छुः एषणशीलः समानकर्तृकेषु तुमुन् विन्दुरिच्छुरिति निपातनात् साधुः। इत्येवमसौ लक्ष्मणो जगदे गदितस्तया सीतया ॥ ५९ ॥ ज० म०

याचा इत्यादि। त्वं रामान्वेषणाय याचा इति मे मम कामोऽभिलाषः कामोऽस्तोऽकच्चितीति स्त्री। न तु गन्तुम् उत्सहसे तस्मात्त्वं मां कामयितुम् इच्छुः इच्छतीति इच्छुः विन्दिच्छू इति निपातः। कम इतो गुपूधूपेति कर्मणिङ् इत्यसौ लक्ष्मणस्तया सीतया जगदे कर्मणि डी ॥ ५९ ॥ भ०

मृषोद्यमित्यादि। मां कामयितुमिच्छुरित्येतन्मृषोद्यं मृषावादं राजसूयेत्यादिना भावे क्यप् यजादित्वात् सम्प्रसारणं प्रवदन्तीं तां सीतां रघूत्तमो लक्ष्मणः शपन् प्रनुहस्तं त्वं यास्यसीति शापं प्रयच्छन् औवादिकोऽत्र शपिर्न दैवादिकः। निरगात् निर्गतः तस्मादुटजादित्यर्थात् कथं मृषोद्यमित्याह वशी वशनं वशः इन्द्रियसंयमनं वशिरण्योरुपसंख्यानमित्यप् स यस्यास्ति स वशी जितेन्द्रियः अत एव सत्यवद्यः अवितथवादी प्रनुहस्तं यास्यसीति सत्यं वदतीति कृत्यल्युटो बहुलमिति कर्त्तरि यत् वदः सुपिः क्यप् चेति चकाराद्यत् भावे वा यतं विधायाच् अर्श आदित्वात् ॥ ६० ॥ ज० म०

मृषोद्यमित्यादि। त्वं प्रनुहस्तं यास्यसीति तां सीतां शपन् शापं प्रयच्छन् रघूत्तमो लक्ष्मणो निरगात् निर्गतः इणगतौ गाङ्भूस्येति। सैलुक् इच्छुः कामयितुं मामिति मृषोद्यं मिथ्यावादं प्रवदन्तीं मृषोपपदे वदेर्नित्यं क्यप् वेर्वदः क्यप्यावित्यनन्तरं मृषोद्यं

गते तस्मिन् जलशुचिः शुद्धदन् रावणः शिखी ।
जञ्जपूकोऽक्षमालावान् धारयो म्टदलाबुनः ॥ ६१ ॥

कुलकम् ।

नित्यमित्युक्तं यहुलपाद्योरिति जिः । सत्यं वदतीति कञोः कभाव इत्युक्तेः कर्त्तरि यः सत्यवद्यः लेवंदः कप्रप्याविति भावे ये सत्यं वद्यं विद्यते अस्येति अर्श आदित्वाद्वा सत्यं वद्यम् अस्येति बहुव्रीहिर्वा यद्वा वदनं वत् वदस्यैर्य्ये क्विप् विकारसंधेत्यादिना तत्र साधावर्थे यः सत्यस्य करणे साधुरित्यर्थः वशी जितेन्द्रियः वश इन्द्रियसंयमः सोऽस्यास्तीति नैकाजादिति इन् अतएव सत्यवद्यः ॥ ६० ॥ भ०

गत इत्यादि । तस्मिन् लक्ष्मणे गते सति रावणः सीतामूच इति वक्ष्यमाणेन सम्बन्धः । कीदृशः जलशुचिः स्नात इत्यर्थः शुद्धदन् निर्मलदशनः शुद्धा दन्ता यस्य अग्रान्तेत्यादिना दन्तस्य ददादेशः शिखा अस्यास्तीति शिखी परिव्राजकः वाह्वादित्वादिनिः जञ्जपूकः पापाशयत्वात् गर्हितं जपतीति लुपसदेति यङ् जपजभेत्यभ्यासस्य नुक् यजजपदशां यङ इत्यूकः अक्षमालावान् अक्षसूत्रयुक्तः संसर्गे मतुप् धारयतीति धारयः अनुपसर्गादिति शः । कस्य म्टदलाबुनः नञिलम्बे र्नलोपश्चेत्यौणादिक उकारे प्रत्यये अलाबूः तस्य विकारः फलमिति कोरञ् तस्य फले लुक् नपुंसकह्रस्वत्वम् । म्टत्पूर्णमलाबु इति मध्यपदलोपी सः कृत्प्रयोगे कर्मणि षष्ठी इकोऽचि विभक्ताविति नुम् ॥ ६१ ॥ ज०म०

गत इत्यादि । तस्मिन् लक्ष्मणे गते सति रावणः समागम्य सीतामूचे इति चतुर्थश्लोकेनान्वयः । कीदृशः जलशुचिः जलेन शुचिः स्नातत्वात् शुद्धा निर्मला दन्ता यस्येति शुद्धदन् निपातनात् शिखी शिखायुक्तः नैकाजादिति इन् पापाशयत्वात् गर्हितं जपतीति जञ्जपूकः गत्यर्थात् गृलुपेत्यादिना यङ् जमजपजभेति खेर्नुण् जाग्टयङन्तयजजपेति जकः यङो लुक् । अक्षमालावान् अक्षसूत्रयुक्तः म्टदलाबुनो धारयः धारयतीति वाहिसाति चेतीति शः ढे षो । म्टच्च अलाबुश्च इति समाहारद्वन्द्वे चरैक्यतं क्लीवं म्टत्पूर्णमलाबु म्टदलाबु वा भवेद्-

कमण्डलुकपालेन शिरसा च मृजावता।
संवस्य लाक्षिके वस्त्रे मात्राः संभाण्ड्य दण्डवान् ॥६२॥
अधीयन्नात्मविद्विद्यां धारयन् मस्करिव्रतम्।

लाबुरालाबुरलाबु स्यादलाबु चेति शब्दभेदः। अलाबुस्तुम्बीफलं
तद्वत् तीर्थकृत्तिका ॥ ६१ ॥ भ०

कमेत्यादि। कमण्डलुना कपालेन च जातिरप्राणिनामिति
द्वन्द्वैकवद्भावः। मृजावता निर्मलेन शिरसा च उपलक्षितः इत्थम्भूते
तृतीया। संवस्त्र परिधाय वस्त्रात् समाच्छादन इति मुण्डमिश्रेत्या-
दिना णिच्। लाक्षिके वस्त्रे लाक्षया रक्ते लाक्षारोचनेत्यादिना ठक्
मात्राः कमण्डल्वादिकान् सम्भाण्ड्य समाचित्य राशीकृत्येत्यर्थः भाण्डात्
समाचयन इति पुच्छभाण्डेत्यादिना णिङ्। दण्डवान् गृहीतत्रिदण्डः
संसर्गे मतुप् ॥ ६२ ॥ ज० म०

कमेत्यादि। कमण्डलुश्च कपालो भिक्षापात्रञ्चेति समाहारद्वन्द्वः
तेन उपलक्षितः केचित्तु कं जलं पालयतीति कपालः कमण्डलुश्चासौ
कपालश्चेति कर्मधारयः तेन उपलक्षितः परिव्राजको हि दक्षिणकरे
सजलं पात्रं धारयतीति भाव इत्याहुः मृजावता मार्जनायुक्तेन
शिरसा उपलक्षितः मृजलूषमुज्जौ षित्त्वात् भीषिचिन्तीत्यादिना ङः
स्त्रीलिङ्गत्वञ्च विशेषणे तृतीया लाक्षिके वस्त्रे संवस्त्र परिधाय णिः
कल्प्यादेरिति वस्त्रात् समाच्छादने परिधाने च णिः संपूर्वस्यैव तदभि-
धानशक्तिः प्रकृत्यर्थपरित्यागस्तु धातोः स्वभावात् यदुक्तं विशेषकर्म-
सम्बन्धात् प्रकृतेस्तु गतार्थतेति लाक्षया रक्ते लाक्षिके विकारसंघेत्या-
दिना तेन रक्तेऽर्थे ष्णिकः मात्रां परिच्छदं कमण्डलुप्रभृतिं संभाण्ड्य
समाचित्य युगपद्वहनार्थं राशीकृत्य भाण्डानि संचिनोतीत्यर्थे पूर्ववत्
णिः प्रकृत्यर्थत्यागः संपूर्वतानियमश्च मात्राकर्णविभूषणे। अक्षरावयवे
वृत्ते मानेऽल्पे च परिच्छदे इति विश्वः। दण्डवान् गृहीतदण्डः
॥ ६२ ॥ भ०

अधीत्यादि। मा कुरुत कर्माणि शान्तिवः श्रेयसीत्येवं घोष-

वदन् बह्वङ्गुलिस्फोटं भ्रूक्षेपञ्च विलोकयन् ॥ ६२ ॥
सन्दिदर्शयिषुः साम निजुक्षुषुः चपाटताम् ।
चंक्रमावान् समागत्य सीतामूचे सुखाभव ॥ ६४ ॥

सन्ति ये ते मस्करिणः परिव्राजकाः तेषां व्रतं मस्करिभ्रमसौ धारयन् मस्करमस्करिणाविति परिव्राजके सुट् । आत्मविदां योगिनां विद्या-सुपनिषदमधीयन् जपन् ईङ्धार्योरिति ईङो धारेश्च शत्रुच्छ्रवति कर्त्तरि शतृप्रत्ययः अन्तरा बहु प्रभूतं वदन् अङ्गुलिस्फोटं पुनः स्फो-टिकां दत्त्वा भ्रूक्षेपञ्च विलोकयन् भ्रुवावुत्क्षिप्योत्क्षिप्य विलोकयन् उभयत्रापि स्वाङ्गे ध्रुव इति णमुल् ॥ ६२ ॥ ज० म०

अधीत्यादि । आत्मविदां योगिनां विद्यासुपनिषदम् अधीयन् पठन् धारीङोरकृच्छ्रे शतृरिति परस्मैपदम् । स्वमते कश्चिदभिधानात् आत्मनेपदस्मैपदिनोः परस्मैपदात्मनेपदिता । मस्करिणः परिव्राजकस्य व्रतं धारयन् अङ्गुलिस्फोटम् अङ्गुलीं स्फोटयित्वा बहु वदन् मित-भाषितया बहु हस्तसंज्ञयैव वदतीति भावः भ्रूक्षेपं भ्रुवमुत्क्षिप्य विलोकयन् ऋजुतया कटाक्षाद्यभाव इत्याशयः । उभयत्र पीड्यमानात् स्वाङ्गाण्णमिति परः बहुः अङ्गुलेः स्फोटो यत्र वदनक्रियायां भ्रुवोः क्षेपो यत्र विलोकनक्रियायां स्फोटक्षेपौ घञन्तौ ॥ ६२ ॥ भ०

सन्दीत्यादि । इह भयं माभूदिति साम सान्त्वं सन्दिदर्शयिषुः सन्दर्शयितुमिच्छुः वदन् बह्वङ्गुलिस्फोटमिति योज्यं इषेर्णन्तात्सनन्तस्य रूपं चपाटतां राक्षसत्वन्निजुक्षुषुर्निह्नोतुमिच्छुः धारयन् मस्करिव्रत-मिति योज्यम् । ह्नोतेरभ्यासगमां सनीति दीर्घः कुटिलं क्रमणश्चङ्क्रमा क्रमेर्नित्यं कौटिल्ये गताविति यङ् लुगत इत्यभ्यासस्य नुक् अः प्रत्य-यादित्यकारः अतो लोपः यस्य हलः टाप् । सा यस्यास्ति चङ्क्रमावान् कुटिलगतिमानित्यर्थः समागत्य ढौकित्वा सीतामूचे किमित्याह सुखा-भवेति अनुकूला भवेत्यर्थः यदहं प्रार्थये तत्र प्रतिकूला न भवेति भावः सुखप्रियादानुलोम्य इति कृभ्वस्तियोगे डाच् ॥ ६४ ॥ ज० म०

सन्दीत्यादि । साम सान्त्वं सन्दिदर्शयितुमिच्छुः इषेर्ण्यन्तात्

सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीम् ।
कान्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता ॥६५॥

सन् चपाटतां राक्षसभावं निह्नोतुमिच्छुः कुञ्जचौर्यें सनि घोऽभ्या-निक्रमामिति घः । चङ्क्रमावान् कुटिलगतियुक्तः अमेध्यादिस्थलपरि-जिहीर्षया चित्तकल्यं वा कौटिल्यं गत्यर्थाट्टूलुपेति यङ् अमजपेति खेर्नुण् यङोलुक् घंस्यादः ततो वतुः ईदृशः सन् समागत्य सुखाभव यदहं याचे तत्रानुकूला भवेति सीतामूचे सपत्रनिष्पत्रेत्यादिना सुखा-दानुकूल्ये डाच् यद्यप्यत्र तोयसम्ववीजेत्यादिस्रुत्वात् कृञीत्यनुवर्त्तते तथापि मण्डूकप्लुताधिकारात् चिः कृभ्वस्त्वभूततद्भाव इति सूत्रात् कृभ्वस्वित्यस्यानुवर्त्तनं बोध्यं प्रयोगदर्शनात् वृत्तौ कृञीति लिपिकर-प्रमादात् बाहुल्यार्थं वा किंवा सुखं विद्यते यस्या इत्यर्थः अादित्वात् अः तत आप् ॥ ६४ ॥ भ०

सायमिति । का त्वमिति वक्ष्यमाणेन सम्बन्धः सायं दिनावसानं तत्र भवाङ्कान्तिम् यदा षोऽन्तकर्मणीत्येतस्मात् घञ्प्रत्ययान्तः तदा सायं चिरेति टुच्युलौ तुट् च मकारान्तत्वञ्च निपात्यते यदा सायं-शब्दो मकारान्तः तदाप्यव्ययत्वादेव प्रत्ययागमौ स्यातां कस्येत्यपेक्षायां तिथिप्रण्यः चन्द्रमसः पञ्चदशकलाः तासां वृद्धिह्रासाभ्यां पञ्चदशतिथीः प्रणयति प्रवर्त्तयति सत्सूद्विषेति क्विप् उपसर्गादसमासेति णत्वम् एरनेकाच इति यणादेशः पङ्कजानाञ्च कान्तिं कीदृशीं दिवाभवां कान्त्या त्वदीयया सदातन्या सदाभवया ह्रेपयन्ती लज्जयन्ती दिवा-तन्याः सायन्तन्याश्च सदाभवत्वात् जिह्रीतेरर्त्तीत्यादिना णौ पुक् शुचि-स्मिता शुभ्रहासा ॥ ६५ ॥ ज० म०

सायमित्यादि । का त्वमेकाकिनीति द्वितीयश्लोकेन सम्बन्धः । तिथिप्रण्यश्चन्द्रस्य सायन्तनीं दिनावसानभवां कान्तिं तथा पङ्कजानां पद्मानां दिवातनीं दिनभवां कान्तिं स्वकान्त्या ह्रेपयन्ती लज्जयन्ती किंदृश्या सदातन्या सर्वकालस्थितया चन्द्रपद्मयोस्तु प्रभा न सदा तिष्ठ-तीति लज्जाहेतुः पञ्चदशतिथीः प्रणयति प्रवर्त्तयतीति तिथिप्रणी-

का त्वमेकाकिनी भीरु ! निरन्वयजने वने ।
क्षुध्यन्तोऽप्यघसन् व्यालास्त्वामपालां कथं न वा ॥६६॥

चन्द्रः यस्य ह्रासवृद्धिभ्यामेव ज्योतिःशास्त्रे तिथिनिरूपणात् तामुषिति क्विप् प्राग्वन्नोण इति णत्वं कव्यध्वनेकाच इति यत्वं तिथिप्रणीर्दर्शविपञ्चिशामणिस्त्रिनेत्रचूड़ामणिरत्रिनेत्रभूरित्यमरः । अत्र येनार्पिता छाया सैव कान्तिरिति स्फुटेति परिभाषिता कान्तिः सीतायाः चन्द्रपद्मयोस्तु शोभामात्रं कान्तिरिति बोध्यं त्वत्राद्यचिरद्युतिर्यत्यादिना सायंदिवासदाशब्देभ्यस्तनट् भवार्थे । शुचिस्मिता शुभहासा स्मितन्त्वदृष्टदशने हासे इति वैजयन्ती ॥ ६५ ॥ भ०

का त्वमित्यादि । त्वं देवी मानुषी राक्षसी वेति एकाकिनी असहाया एकादाकिनिच्चासहाय इति आकिनिच् । भीरु ! इत्यामन्त्रणं भयप्रकृतित्वात् स्त्रीणाम् । निरन्वया निरनुगमा जना यस्मिन्वने यत्र न कथञ्चिन्मनुष्याणां सम्भवः क्षुध्यन्तोऽपि बुभुक्षमाणा अपि दिगादित्वात् यत् । व्याला हिंस्रा व्याघ्रादयः कथं वा त्वान्नाघसन् न भक्षितवन्तः अत्तेः लुङ्सनोर्घस्लृ लृदित्वाच्चेरङ् क्षुध्यन्तो नाघसन्निति पाठान्तरम् । तत्र कथं न वा अपरिचितानेवाघसन् इति योज्यम् । अपालां सतीम् अविद्यमानः पालो यस्या इति पालरक्षण इति चौरादिकः पालयतीति पालः पचाद्यच् । यदा प्रयोजकविवक्षा तदा पातेर्लुगागमो णौ वक्तव्य इति लुक् ततः पचाद्यच् ॥ ६६ ॥ ज० म०

का त्वमित्यादि । हे भीरु ! वने एकाकिनी का त्वं देवी मानुषी अन्या वा ? वने किम्भूते निरन्वयजने निरन्वया निःसम्बन्धा जना यत्र भीरु इति सम्बोधनं भयप्रकृतित्वान्नारीणां जातिभेदस्य प्रत्यक्षत्वाद्वा एकादाकिन्नसहायेऽभिधानात् । क्षुध्यन्तो बुभुक्षमाणा व्याला व्याघ्रादयो हिंस्राः अपालां पालकारहितां त्वां कथं नाघसन् न भक्षितवन्तः घस्लृदः सन्यच्लघजीति अदश्यां घस्लृ लृदनुबन्धात् शासिद्युदिति ङः क्षुधबुभुक्षायां दिवादिः पालरक्षणे चौरादिकः पचादित्वादन् व्यालो दुष्टगजे सर्पे श्वापदे नान्यवत्सव इति मेदिनी ॥ ६६ ॥ भ०

हृदयङ्गममूर्त्तिस्त्वं सुभगम्भावुकं वनम्।
कुर्वाणा भीममप्येतद्वदाभ्यैः केन हेतुना॥ ६७॥
सुकृतं प्रियकारी त्वं कं रहस्युपतिष्ठसे।
पुण्यकृच्चाटुकारस्ते किङ्करः सुरतेषु कः॥ ६८॥

हृदयमित्यादि। केन हेतुना इदं वनमभ्यैः अभिगतासि वद कथय अभिपूर्वादिणो लङ् मध्यमपुरुषैकवचनम् आडजादीनाम् आटश्चेति वृद्धिः हृदयङ्गच्छति या मूर्त्तिः शरीरमत्यन्तसौन्दर्यात् गमेश्चेति खच्। सा एवंविधा मूर्त्तिर्यस्याः सा त्वं भीममप्येतद्वनं सुभगम्भावुकं सर्वस्यैवाप्रियं प्रियं कुर्वाणा असुभगं भूत्वा सुभगं भवतीति कर्त्तरि भुव इति खुकञ्॥ ६७॥ ज० म०

हृदयेत्यादि। केन हेतुना त्वम् एतद्वनम् अभ्यैः अभिगता इति वद अभिपूर्वादिणो घ्याः क्विप् लुगङ्गलोपः घोटीयीभिति अम् आदिणेचोरिति णुः भूवोऽम् त्वादयोऽर्थायैककेरिति तृतीया। हृदयङ्गमा मूर्त्तिर्यस्याः सा तथा लावण्यातिशयात् हृदयं गच्छतीति तुम्बष्ट इत्यादिना खः नाम्नीत्यस्य व्यभिचारो बाहुल्यात् भीममप्येतद्वनं सुभगम्भावुकं कुर्वाणा प्रागप्रियं प्रियं भवतीति भुवोषेखिष्णुखुकञाविति खुकञ्॥ ६७॥ भ०

सुकृतमित्यादि। सुकृतं पुण्यकारिणं शोभनं कृतवानिति सुकर्मपापेत्यादिना क्विप्। कं रहसि विजने त्वमुपतिष्ठसे उपश्लिष्यसि सङ्गतकरणे तङ्। प्रियकारी अनुकूलवर्त्तिनी सती प्रियमनुकूलं करोतीति क्षेमप्रियमद्रेण चेति अण् टिड्ढाणञित्यादिना ङीप् पुण्यकृत् कृतपुण्यः तस्य पूर्ववत् क्विप्। चाटुकारः प्रियवाक्यकरः नशब्दश्लोकेत्यादिना टे प्रतिषिद्धेऽण्येव भवति ईदृशस्ते किङ्करः दासः दिवा बिभेति टः किं यत्तद्वहुषु कृञोऽच् विधानमिति तत् स्त्रीविषये द्रष्टव्यम्। सुरतेषु शोभनरतेषु नपुंसके भावे क्तः अनुदात्तेत्यादिनानुनासिकलोपः कनेनोभयरुचिराख्याता॥ ६८॥ ज० म०

सुकृतमित्यादि। त्वं प्रियकारी अनुकूलवर्त्तिनी सती कं सुकृतं

परिपय्युंदधेरूपमायुलोकाच्च दुर्लभम्।
भावत्कं दृष्टवत्स्वेतदस्मास्वधि सुजीवितम्॥ ६६॥

पुण्यकारिणं पुरुषं रहसि विजने उपतिष्ठसे सङ्गच्छसि मैत्राध्वसङ्गाराध इति सङ्गं सं शोभनं करोतीति तत्करोतीति क्विप् प्रियं करोतीति क्षेमप्रियमद्रात् कुर्वा इति खाभावपक्षे ढात् षण् कः पुण्यकृत् ते तव सुरतेषु शोभतरतेषु किङ्करो दासः सन् चाटुकारः प्रियवाक्यकारी पुण्यं करोतीति क्विप् रमेर्भावे क्तः वनतनाद्यनिमामिति मलोपः। चाटु करोतीति क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् सुकृष्ट इति टविषयेऽपि ढात् षण् किमित्यव्ययं तस्मात् कन्चः॥ ६८॥ भ०

परीत्यादि। एतद्रूपं भावत्कम्भवत्या इदमिति भवतष्ठक्छसावितिं ठक्। क्वसौ ठक्छसोश्चोपसंख्यानमिति पुंवद्भावः इदमुक्तान्तात् कः दुर्लभं परिपर्य्युदधेः अपपरीवर्जन इति कर्मप्रवचनीयसंज्ञा यां द्वितीयायां प्राप्तायां पञ्चम्यपाङ्परिभिरिति पञ्चमी अपपरिवहिरञ्चवः पञ्चम्या इति विभाषासमासश्च असमासपक्षे परेर्वर्जन इति द्विर्वचनम्। उदधिं वर्जयित्वा चतुरुदधिमेखलायां भुवि दुर्लभमायुलोकाच्च स्वर्गलोकान्तञ्च यावत् दुर्लभमत्रापि पूर्ववत् पञ्चमी। तादृशं दृष्टवत्स्वस्मासु अधि सुजीवितमस्मद्विषय आधिक्येन सुजीवितम् अहो वा सुजीवितमिति अहोशब्दार्थे अधिशब्दो वर्त्तते॥ ६६॥ ज० म०

परीत्यादि। एतत् भावत्कं भवदीयं रूपं दृष्टवत्सु अस्मासु अधि सुजीवितम् अधिकं, शोभनं जीवनं विषये सप्तमी यद्वा अधिकेशायौंपाभिश्यामिति स्वाम्यर्थेनाधिना च योगे सप्तमी तेनास्मत्स्वामिकं सुजीवितमित्यर्थः त्वामपश्यतस्तु जनस्य तन्नास्तीति भावः। भवत्या इदमित्यर्थे विकारसंघेति कण् पुंवत्स्युत्रक्तपुंस्काः स्त्रियामित्यादौ तत्वशसन्तरादावित्यस्य तद्धितसंज्ञके त्वपर्यन्तप्रत्यये शसन्तरादौ चेति देवीदासचक्रवर्त्ति व्याख्यानात् पुंवत् ये तु त्वतौ भाव इत्यनेन कृतयोस्तत्वशौरेवमित्याङ्कस्तन्मतेऽभिधानात् योगविभागात् किंवा पुंवत्त्वेरिति

प्रपीतमधुका भृङ्गैः सुदिवेवारविन्दिनी।
सत्परिमललक्ष्मीका नापुंस्कासीति मे मतिः॥ ७०॥

पुंवत् भवच्छब्दस्य स्त्रिसंज्ञायां पठितत्वात् पुंवत्त्वेरित्यत्र नोर्भुक्त्ये-चेत्यस्मात्त्येचेत्यनुवर्त्तते वृत्तौ त्येचेति यन्न दृश्यते तल्लिपिकरप्रमादात् ग्रन्थगौरवाद्वा न लिखितं तदनुवृत्तेर्दुर्निवारत्वेन स्पष्टत्वात्पुंवत्सर्व-नाम्नो वृत्तिमात्रे तसादौ चेति परसूत्रं कीदृशं रूपम् उदधेः परि परि उदधिं वर्जयित्वा दुर्लभं दुष्प्रापम् उदधिपरिच्छिन्नायां पृथिव्यां दुर्लभमित्यर्थः समुद्रे लक्ष्म्या उत्पत्तिः तत्रैव तत्सम्भवो नान्यत्रेति भावः आभुलोकाच्च स्वर्गलोकपर्य्यन्तञ्च दुर्लभम् उभयत्र अन्यारब्धे-त्यादिना पञ्चमी पर्य्याङौ त्यामसीमार्थौ आङ् व्याप्तिसीम्नोस्त्यागेऽन्या-वित्युक्तौ वर्जनार्थपरेर्विभाषया द्वित्वमभिधानात्॥ ६९॥ भ०

प्रपीत्यादि। परि सर्वतो मार्जनमिति परिमलः कलतपस्त्रेत्य-धिकृत्य मृजेष्टिलोपश्चेति कलप्रत्यय औणादिकः। इह सुरतोपभोग-विमर्दः परिमलोऽभिप्रेतः तस्य लक्ष्मीः तद्गततत्वात् सती विद्यमाना परिमलशोभा यस्याः उरःप्रभृतिभ्यः कप् सा त्वमपुंस्का अविद्यमान-भर्त्तृका नासीति मे मतिः पूर्ववत् कप् किमिव सुदिवेवारविन्दिनी पद्मिनी शोभनं दिवा नीहाराद्यभावाद्दिवा दिवसं यस्याः सुप्रातेत्या-दिना अच्। आपीतमधुका भृङ्गैः आपीतं मधु यस्याः शेषाद्विभाषेति कप्। यथेयं सत्परिमललक्ष्मीका तथा त्वमपीति॥ ७०॥ ज० म०

प्रपीत्यादि। त्वं न अपुंस्कासि किन्तु विद्यमानभर्तृकासीति मे मम मतिः यतः सती परिमलस्य लक्ष्मीर्यस्यास्तादृशी विमर्दोत्थे परि-मलो गन्धे जनमनोहर इत्यमरः। सुरते भोगविमर्द एव परिमल इति जयमङ्गलः पुंलक्ष्मीभ्यामेकवचनान्ताभ्यां को बहुव्रीहाविति परः स्मरते लक्ष्मीशब्दात् वृतः क इति कः। अपुंस्केति पुंवत्स्तुरक्तपुंस्क इति ज्ञापकात् वृतः कः इत्यस्य योगविभागेन क्वचिदन्यत्रापि क इति बोध्यं स्वार्थे को वा। यथा भृङ्गैः प्रपीतं मधु यस्यास्तादृशी सुदिवा अरविन्दिनी पद्मिनी तथा त्वमपि सत्परिमललक्ष्मीका शोभनं नीहा-

मिथ्यैव श्रीः श्रियम्मन्या श्रीमन्मन्यो नृपा हरिः ।
साक्षात्कृत्याभिमन्येऽहं त्वां हरन्तीं श्रियं श्रियः ॥७१॥
नोत्कण्ठयतात्यर्थं त्वामैक्षिष्यत चेत् स्मरः ।
खेलायन्ननिशं नापि सजूःकृत्य रतिं वसेत् ॥ ७२ ॥

रादिरहितं दिवा दिनं यस्याः सुपूर्वाद्दिवाशब्दाद्बहुव्रीहौ अदिति परः स्वमते दिवाशब्दात् स्वार्थे ष्यञः तस्यानित्त्वविवक्षया न ङीप् इति च । यद्वा शोभने दिवसे इति सप्तम्यन्तं रूपम् । दिवाशब्दोऽयमव्ययः ॥ ७० ॥ भ०

मिथ्यैवेत्यादि । श्रियः श्रियं रूपसम्पदं हरन्तीमभिभवन्तीं त्वां साक्षात्कृत्य प्रत्यक्षीकृत्य विभाषा कृञीत्यनुवर्त्तमाने साक्षात्प्रभृतीनि चेति गतिसंज्ञा गतिसमासे ल्यबादेशः । अहमभिमन्ये किं मिथ्या श्रीः श्रियम्मन्या अहमेव श्रीर्नान्येति मन्यमाना श्रीर्मिथ्या नैव श्रीः किन्तु त्वमेवेति आत्ममाने खश् दिवादित्वात् श्यन् इच एकाचोऽम्प्रत्ययवच्चेत्यम्भावः तस्यामः प्रत्ययत्वान्मलोपाभावः । न विभक्तौतुस्मा इति वचनात् अचीतीयङादेशः क्विबन्ता धातुत्वञ्च जहतीति क्विबचीत्यादिना श्रयतेरौणादिकः क्विप् । हरिरात्मानं श्रीमन्तम्मन्यमानो मृषा न श्रीमान् । यस्य त्वमेव श्रीमानित्यहमभिमन्ये ॥ ७१ ॥ ज० म०

मिथ्यैवेत्यादि । श्रिया लक्ष्म्याः श्रियं शोभां हरन्तीं जयन्तीं वा त्वां साक्षात्कृत्य अहमेवमभिमन्ये श्रीर्लक्ष्मीर्मिथ्यैवात्मानं श्रियं मन्यते हरिरपि मृषा आत्मानं श्रीमन्तं मन्यते त्वमेव श्रीस्तदीयशोभाहरणात् त्वत्पतिमेव त्वद्योगात् श्रीमानिति भावः मन्यात्मार्थे इति खश् खित्त्वात् दिवसुतदेति यन् खित्यव्याजस्य इति एकाजिजन्तत्वात् श्रीशब्दस्य ह्रीकान्तत्वं हस्ते पाणौ प्राध्वमित्यादिना समासपक्षे व्यादनञः क्त्वो यप् साक्षादादेरभूततद्भावे कृञः क्त्वो यप् वेति परः ॥७१॥भ०

नोदेत्यादि । स्मरभार्या रतिः सापि रूपेण निकृष्टेति दर्शयति चेत् यदि स्मरः त्वामैक्षिष्यत दृष्टवानभविष्यत् तदा अत्यर्थमुत्कण्ठ्यत रतिं प्रति भृशमुत्कण्ठितो नाभविष्यत् ईक्षदर्शने इति कण्ठशोक

वल्गूयन्तीं विलोक्य त्वां स्त्री न मन्तूयतीह का।
कान्तिं नाभिमनायेत को वा स्थाणुसमोऽपि ते ॥७३॥

इति भौवादिकात् क्रियातिपत्तौ लङ् नापि रतिं स्वभार्य्यां सजूःकृत्य सहायीकृत्य वसेत् अपितु परित्यजेत् अत्र क्रियातिपत्तिर्न विवक्षिता किन्तु हेतुहेतुमद्भावः। नापि रतिं सजूःकृत्य वसेत् यदि त्वामीक्षेतेति हेतुपदमभ्यूह्य हेतुमद्भावदर्शनात् ऊर्य्यादिषु सजूःसहार्थे इति वचनात् गतिसंज्ञा। खेलायन् अनिशं क्रीड़न् सर्वदा खेलाशब्दात् कण्ड्वादित्वात् यक् ॥ ७२ ॥ ज० म०

नोदेत्यादि। रतिरपि न ते तुल्येति दर्शयन्नाह, स्वयं कामश्चेत् यदि त्वाम् ऐक्षिष्यत तदा अत्यर्थं न उदकण्ठिष्यत रतिं प्रति स्मरोत्सुत-कण्ठितो नाभविष्यत् ईक्षङ्दर्शने कठिक् आध्याने उभयत्र ध्वर्थासम्भवे थौ। नापि रतिं स्वभार्य्यां सजूःकृत्य सहायीकृत्य अनिशं निरन्तरं खेलायन् क्रीड़यन् वसेत् तां परित्यजेदेव यदि त्वां पश्येत् इति हेतु-पदमत्र बोध्यं भव्ये वा फलहेत्वोरित्यस्य योगविभागाद्भूतेऽपि स्ती भव्येऽपि न क्षतिः। विलासार्थात् खेलाशब्दात् कण्ड्वादित्वात् करोत्यर्थे क्यः। सजूःशब्दोऽयमव्ययः। सहायार्थे वर्त्तते साक्षादादित्वात् कृञो प्राग्धौ प्राध्वम् इत्यादिना समासः ॥ ७२ ॥ म०

वल्ग्वित्यादि। त्वां वल्गूयन्तीं शोभमानां विलोक्य न मन्तूयति स्त्रीह का इह जगति का स्त्री न मन्तूयेत् न कुप्येत् सर्वदा कुप्यत्येव ईर्ष्यायुक्तत्वात् स्त्रीणामसम्भावने लिङ् वल्गु मन्तुशब्दाभ्यां कण्ड्वादित्वा-द्यक् को वा को नाम स्थाणुसमोऽपि काष्ठतुल्योऽपि गुणदोषानभिज्ञ-त्वात्ते तव कान्तिं विलोक्य नाभिमनायेत पूर्वमदृष्टत्वादनभिमनाः सन् अभिमनाः सचेता भवेत् पूर्ववल्लिङ्। अभिमनसो भृशादित्वात् क्यङ् सलोपश्च। महादेवतुल्यो वा आस्तामन्यः सोऽपि तावदभिमनायते ॥ ७३ ॥ ज० म०

वल्ग्वित्यादि। इह जगति का स्त्री वल्गूयन्तीं शोभमानां त्वां विलोक्य न मन्तूयति न ईर्ष्यति स्वपतिवैराग्यशङ्कया सर्वैव कुप्यती-

दुःखायते जनः सर्वः स एवैकः सुखायते ।
यस्योत्सुकायमाना त्वं न प्रतीपायसेऽन्तिके ॥ ७४ ॥

कः पण्डितायमानस्त्वामादायामिषसन्निभाम् ।
त्रस्यन् वैरायमाणेभ्यः शून्यमन्ववसद्वनम् ॥ ७५ ॥

त्यर्थः वलगुमन्तुभ्यां कण्ड्वादित्वात् कत्रः घोंज्य्यरे । को वा स्थाणुवमोऽपि महादेववज्जितेन्द्रियोऽपि काष्ठवन्नीरसोऽपि वा तव कान्तिं विलोकत्र न अभिमनायेत प्रीतमना न भवेत् अपि तु सर्व एवाभिमनायेत भृशादेश्चत्रर्थे वेति पाक्षिको ङत्रः सलोपश्च घोऽज्य्यरे प्रौढासम्भावने इति खो ॥ ७३ ॥ भ०

दुःखेत्यादि । स एवैको जनः सुखायते सुखं वेदयते यस्यान्तिके समीपे न त्वं प्रतीपायसे न प्रतिकूलवर्त्तिनी भवसि उत्सुकायमाना उत्कायमाना सती यस्य पुनरन्तिके उत्सुकायमाना प्रतीपायसे स सर्वो जनः दुःखायते दुःखं वेदयते सुखदुःखशब्दाभ्यां सुखादिभ्यः कर्त्तृवेदनायामिति कत्रङ् उत्सुकप्रतीपशब्दाभ्यां भृशादित्वात् ॥ ७४॥ज०म०

दुःखेत्यादि। यस्यान्तिके समीपे त्वम् उत्सुकायमाना उत्सुकीभवन्ती न प्रतीपायसे न प्रतिकूलीभवसि स एवैको जनो जगति सुखायतेसुखमनुभवति । अन्यः सर्वो जनो दुःखायते दुःखमनुभवति । सुखदुःखशब्दाभ्यां शब्दसुखकष्टादेरिति वेदे ङत्रः केचित्तु सुखदुःखयोस्तदाश्रयेऽपि वर्त्तमानत्वात् असुखः सुखो भवति अदुःखो दुःखो भवति इत्यर्थे डाच् लोहितादेः पञ्चेति ङत्रमाहुः, उत्सुकप्रतीपाभ्यां भृशादित्वात्चत्रर्थे ङत्रः । केचित्तु प्रतीपशब्दात् घानुङत्रकीत्यादिना आचारे ङत्रमाहुः ॥ ७४ ॥ भ०

कः पण्डीत्यादि । पण्डितायमानः अपण्डितः कथमपि पण्डितो भवन् भृशादित्वात् कत्रङ् । त्वामामिषसन्निभां सर्वजनप्रार्थनीयत्वात् आदाय गृहीत्वा कः शून्यं वनमन्ववसत् शून्ये वने व्यवसदित्यर्थः उपान्वध्याङ् वस इति कर्मसंज्ञा । कीदृशः त्रसन् बिभ्यत् वैरायमाणेभ्यः

ओजायमाना तस्यार्घ्यं प्रणीय जनकात्मजा।
उवाच दशमूर्द्धानं सादरा गद्गदं वचः॥ ७६॥
महाकुलीन ऐक्ष्वाके वंशे दाशरथिर्मम।

वैरं कुर्वाणेभ्यः शब्दवैरेत्यादिना क्यङ्। भीतार्थानामित्यपादानसंज्ञा॥ ७५॥ ज० म०

क इत्यादि। कः पण्डितायमानः अपण्डितः पण्डितो भवन् आमिषसन्निभां लोभ्यद्रव्यतुल्यां त्वाम् आदाय गृहीत्वा शून्यं वनम् अन्ववसत् वसतिरत्र कर्मक्रियेत्यादिना डेढं पण्डिताद्भृशादित्वात् ङ्यः वैरायमाणेभ्यः वैरं कुर्वाणेभ्यः तस्मात् शत्रुभयाभावे एवं कर्त्तुमनुचितमिति भावः। वैरात् शब्दादित्वात् शब्दसुखकष्टादेरिति क्यतो ङ्यः यतोऽपायभीति अपादानसंज्ञा आमिषं पललं लोभ्ये सम्भोगोत्कारयोरपि। आमिषं सुन्दराकारे रूपादिविषयेऽपि चेति विश्वः॥ ७५॥ भ०

ओजेत्यादि। एवमुक्तवति रावणे जनकसुता दशमूर्द्धानमुवाच दश मूर्द्धानः शिरांसि यस्य तस्यार्घ्यं प्रणीय दत्त्वा अतिथिरयमिति सम्प्रदानस्य शेषत्वेन विवक्षितत्वात् षष्ठी ओजायमाना ओज इवाचरन्ती कर्त्तुः क्यङ् सलोपश्च ओजसोऽप्सरसो नित्यमिति वचनात् किञ्चिल्लज्जापरित्यागात् तेजस्विनी भवन्तीत्यर्थः किमुवाच वचो वक्ष्यमाणं सादरा सती परिव्राजक इति गद्गदमनभिव्यक्तमसंस्कृतत्वात्॥ ७६॥ ज० म०

ओजेत्यादि। जनकात्मजा सादरा सती तस्य कपटपरिव्राजकस्य अर्घ्यं प्रणीय अतिथिबुद्ध्या दत्त्वा दशमूर्द्धानं दश मूर्द्धानो यस्य तं रावणं गद्गदं लज्जया अन्तर्भिया वा सम्यगनभिव्यक्तं वचो वक्ष्यमाणम् उवाच ओजायमाना किञ्चिल्लज्जापरित्यागात्. ओजस्विनीवाचरन्ती ओजःशब्दात् धर्मिप्रधानात् धातुङ्यकीति ङ्यः सलोपश्च भृशादित्वात् च्व्यर्थे वा ङ्यः तस्य इति सम्प्रदानस्य सम्बन्धविवक्षायां षष्ठी प्रणीयेत्यस्य समीपे स्थापयित्वा इति वार्थः मूल्ये पूजाविधावर्घः अर्घाय इदमित्यर्थे विकारसंघेति यः॥ ७६॥ भ०

महेत्यादि। यदुक्तं तेन कं रहस्युपतिष्ठस इति अस्य प्रतिवचनं

पितुः प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनाम् ॥ ७७ ॥
निहन्ता वैरकाराणां सतां बहुकरः सदा ।
पारश्वधिकरामस्य शक्तेरन्तकरो रणे ॥ ७८ ॥

मम भर्त्ता महाकुलीनः महाकुलस्यापत्यमिति महाकुलादञ्खञाविति खञ् किमादित्यवंशसम्भवः किं सोमवंशसम्भवो वा महाकुलस्यापत्यमित्याह ऐक्ष्वाके वंशे इक्ष्वाकूणामयमैक्ष्वाकः दाण्डिनायनेत्यादिना टिलोपनिपातनम् अन्ये तत्र सन्तीत्याह दाशरथिः दशरथस्यापत्यं यः स मम भर्त्ता महाकुलीनः कीदृशः पितुः प्रियङ्करः अनुकूलकारी तपस्विनाञ्च क्षेमकारः क्षेमप्रियमद्रे ऽणिति चकारात् खच् ॥ ७७ ॥ ज॰ म॰

महेत्यादि । कं रघुपतिष्टसे इति रावणप्रश्ने उत्तरमिदं मम भर्त्ता दाशरथिः प्राधान्यात् विशेषेण महिम्ना च ज्येष्ठ एव गम्यते दशरथस्यापत्यं बाह्वाद्यत इति अदन्तत्वात् ञिः ञित्ते त्रिः ऐक्ष्वाके वंशे महाकुलीनः इक्ष्वाकुनामा कश्चित् सूर्य्यवंशसम्भवः तस्यापत्यमिति तद्भवे वंशे इत्यर्थोऽभिधीयते शिवादित्वात् अणः ओर्बौपोऽकद्रुपाण्डोरेवे इत्यत एयस्य अस्येति समासात् उकारलोपः ये तु केवलमण्यप्रत्यय इति व्याचक्षते तन्मते योगविभागात् महाकुले विद्यमानः ढखेकादिति खीनः महाकुलीन इति पाठे अनित्त्वविवक्षया त्रिः महाकुलस्यापत्यमिति केचित् पितुः प्रियङ्करः प्रियं करोतीति क्षेमप्रियमद्रात् कुर्वेति खः तस्य विकल्पपक्षे तपस्विनां क्षेमकारः कुशलकर्त्ता ढात् पक्षे ॥ ७७ ॥ म॰

निहेत्यादि । वैरकाराणां शत्रूणां वैरपूर्वात् कञो नशब्दश्लोकेत्यादिना टे प्रतिषिद्धे अणेव भवति निहन्तेति तृजन्तस्य प्रयोगः तत्र कर्मणि षष्ठी सतां धर्मे स्थितानां बहुकरः बहुकार्य्यं करोतीति दिवा विभेति टः स्त्रीविवक्षायान्तु किं यत्तद् बहुष्विति करोतेरच् आङ्परयोः खनिश्टभ्यां डिच्चेत्यौणादिकः कुः परशुशब्दः तत्पर्य्याय एवाव्युत्पन्नः परश्वधशब्दः स प्रहरणं यस्य परश्वधाट्ठञ्च तस्य परशुरामस्य सम्बन्धिन्याः शक्तेः सामर्थ्यस्यान्तकरो विनाशयिता अन्त

अध्वरेष्विष्टिनां पाता पूर्त्ती कर्मसु सर्वदा ।
पितुर्नियोगाद्राजत्वं हित्वा योऽभ्यागमद्वनम् ॥ ७९ ॥

करोतीति पूर्ववट्टः रणे संग्रामे तत्र भवः ॥ ७८ ॥ ज० म०

निहेत्यादि । तथा वैरकाराणां निहन्ता ढात् षण् कर्मणि षष्ठी । साधूनां सदा सर्वदा बहूनि कार्य्याणि करोतीति स्वकृष्टः रणे पारश्वधिकरामस्य जामदग्न्यस्य शक्तेः सामर्थ्यस्य अन्तकरो नाशयिता परश्वधेन परशुना प्रहरतीति ष्णिकः परान् श्यति खण्डयतीति परशुः परश्वधश्चेति निपातनात् ॥ ७८ ॥ भ०

अध्वेत्यादि । इष्टमेभिरिति इष्टिनो यज्वानः इष्टादिभ्यश्चेतीनिः किमिष्टवन्तः अध्वरान् कर्माणि तत्र क्तस्येन् विषयस्येति कर्मणि सप्तमी अध्वरेष्विष्टिनामिति कर्मणि षष्ठी तद्योगे पाता रक्षिता पूर्त्ती कर्मसु सर्वदा पृणोतेर्निष्ठायामुदोष्ठ्यपूर्वस्येत्युत्वं न ध्याख्येत्यादिना निष्ठानत्व-प्रतिषेधः पूर्त्तमनेनेति पूर्वयदिनिः किम्पूर्त्तमिति सर्वदा श्राद्धादि-कर्मणि पूर्ववत् सप्तमी । स राजत्वं राज्यं हित्वा त्यक्त्वा वनमभ्यागमत् आभिमुख्येन आगतवान् लुङ् ऌदित्वादङ् रूपम् । पितुर्नियोगात् नायोग्यत्वात् स मे भर्त्तेति योज्यम् ॥ ७९ ॥ ज० म०

अध्वर इत्यादि । तथा अध्वरेषु इष्टिनां यज्वनां पाता रक्षिता पालरक्षणे इष्टं यजनं भावे क्तः ढषेक्ततीति कर्मणि षष्ठी । सर्वदा कर्मसु पूर्त्ती पूर्त्तं पूरणं भावे क्तः स्वल्वादयोदित्यादौ पूवर्जनाच्च क्तस्य नः वृदुश्विकूर्णोरिति इडुनिषेधः कर्मोपादानेऽपि भावे क्तः । अध्वरान् इष्टमेभिः कर्माणि पूर्त्तमनेन चेत्यर्थे इष्टादेरिष्टमनेनेत्यादावर्थे कर्त्तरि वाच्ये इनुप्रत्ययो भवेदिति परः । स्वमते क्तेनाढे इति ज्ञापकात् क्तान्तात् कर्त्तरि इन् तद्योगे कर्मणि सप्तमी किंवा इष्टपूर्त्ताभ्यां भाव-क्तान्ताभ्यां नैकाजादिति अस्त्यर्थे इन् । अध्वरकर्मभ्यां विषये सप्तमी केचित्तु अध्वरा इष्टा एभिः कर्माणि पूर्त्तान्यनेन चेति कर्मक्तादिन् कर्त्तरीत्याहुः यः । पितुराज्ञया राजत्वं हित्वा त्यक्त्वा वनमभ्यागमत् स मे भर्त्तेति योज्यम् ॥ ७९ ॥ भ०

पतत्त्रिक्रोष्टुजुष्टानि रक्षांसि भयदे वने।
यस्य बाणनिकृत्तानि श्रेणीभूतानि शेरते॥ ८०॥
दीव्यमानं शितान् बाणानस्यमानं महागदाः।
निघ्नानं शात्रवान् रामं कथं त्वं नावगच्छसि॥ ८१॥

पतेत्यादि। यस्य बाणैर्निकृत्तानि छिन्नानि रक्षांसि भयदे वने दीर्घनिद्रया शेरते स मम भर्त्तेति योज्यम्। शेरत इति शीङो रुट्। कीदृशानि अश्रेणयः श्रेणयो भूतानि ऊर्य्यादिच्विड़ाचश्चेति चप्रत्ययानां कुगतिप्रादय इति सः च्वौ चेति दीर्घः च्व्यर्थानान्तु श्रेण्यादयः कृतादिभिरित्ययं विषयः। पतत्त्रिभिः क्रोष्टुभिश्च जुष्टानि परिवृतानि॥ ८०॥ ज० म०

पतत्त्रीत्यादि। त्वमन् वैरायमाणेभ्य इति वाक्ये तस्य त्राणो नास्तीत्युत्तरमिदं यस्य बाणैः शरैर्निकृत्तानि खण्डितानि रक्षांसि भयदे वने शेरते पतितानि सन्तीत्यर्थः स मे भर्त्तेति सम्बन्धः शीङः कौ अन्तो शीङो रेणुः मान्तोरस् मान्तोऽदनतः अश्रेणयः श्रेणयो भूतानि श्रेणीभूतानि च्विः कभ्वस्त्वभूततद्भाव इति च्विः दीर्घश्च त्योवस्रातो लोप्य इति च्विलोपः पतत्त्रिभिः खगादिभिः क्रोष्टुभिः शृगालैश्च जुष्टानि परिवृतानि जुषसुदिसेवे॥ ८०॥ भ०

दीव्येत्यादि। शितांस्तीक्ष्णान् बाणान् दीव्यमानं क्षेप्तुं शक्तं तच्छीलं वा अनेकार्थत्वाद्धातूनां दिवेस्ताच्छील्यवयोवचनेत्यादिना शानच् दिवादिभ्यः श्यन्। महागदाः अस्यमानं क्षेप्तुं शक्तं तच्छीलं वा पूर्ववच्छानच् शात्रवान् शत्रून् प्रज्ञादित्वादण् निघ्नानं हन्तुं शक्तं तच्छीलं वा पूर्ववत्प्रत्ययः हन्तेर्गमनेत्युपधालोपः होहन्तेरिति कुत्वम्। एवंविधं रामं कथं नावगच्छसि तेन कर्मणा सर्वलोकविदितत्वादिति भावः॥ ८१॥ ज० म०

दीव्येत्यादि। कथं तं राममपि नावगच्छसि न जानासि सर्वलोकप्रसिद्धकर्मत्वात्। तथाहि शितान् बाणान् दीव्यमानं तीक्ष्णैः शरैः क्रीड़ाशीलं विजिगीषाशीलं वा दिव्, जिगीषेच्छापणद्यूतौ क्रीड़ा-

भ्रातरि न्यस्य यातो मां मृगाविन्मृगयामसौ ।
एषितुं प्रेषितो यातो मया तस्यानुजो वनम् ॥ ८२ ॥
अथायस्यन् कषायाक्षः स्यन्नस्वेदकणोल्बणः ।
सन्दर्शितान्तराकूतस्तामवादीद्दशाननः ॥ ८३ ॥

गत्योः दिवोषेवेति करणे द्वितीया मङ्कर्गदा अश्नमानं श्वेपुं शक्ताम् उत्क्षेपणयोग्ये वयसि वर्त्तमानं वा श्वेपुं शीलं यस्येति वा शातवान् निघ्नानं निहन्तुं शक्तं सर्वत्र शक्तिवयस्ताच्छील्ये शतुः शानः हन्तेर्हनुगमित्युङ्लोपे हनोघ्नोऽघ्नः शतुरेव शातवः स्वार्थे णः ॥ ८१॥भ०

भ्रातरीत्यादि । यद्येवं कासावित्याह असौ रामो मां भ्रातरि न्यस्य अर्पयित्वा मृगयामाखेटकं यातः मृगेः स्वार्थिको णिच् अदन्तत्वाच्च गुणो न भवति तदन्तात् कञः शचेति अधिकृत्य परिचर्या परिसर्या मृगयाटाद्यानामुपसंख्यानमिति भावे शप्रत्ययः यक् अल्लोपाभावश्च टाप् । मृगान् विध्यतीति मृगावित् क्वासौ भ्रातेति चेदाह तस्यानुजः कनिष्ठो मया प्रेषितः सन् यातो वनम् अनु पश्चाज्जायत इति अन्येभ्योऽपि दृश्यत इति डः । अनौ कर्मण्युपमकर्त्तर्यपि भवति किमर्थम् एषितुं तमेव ज्ञातुम् इषुगताविल्यस्य रूपं ज्ञानार्थत्वात् प्रेषित इति तस्यैव रूपम् ॥ ८२ ॥ ज० म०

भ्रातरीत्यादि । तथापि त्वामेकाकिनीं हित्वा त्यक्त्वा कुतो गत इत्याह । असौ रामो मां भ्रातरि न्यस्य समर्प्य मृगयां यातो गतः मृगान् विध्यतीति मृगावित् स कुतेत्याह तस्यानुजोऽपि मया प्रेषितः प्रस्थापितः सन् एषितुं ज्ञातुम् अर्थाद्रामं वनं गतः सर्वे गत्यर्था इति वचनात् इष्यसर्पण इत्यस्य ज्ञानार्थत्वम् अनुजातोऽनुजः हनजनादिति डः ॥ ८२ ॥ भ०

अथेत्यादि । अथैवमुक्तो जानक्या दशाननस्तामवादीत् उक्तवान् आयस्यन् क्रोधाविष्टत्वात् शरीरं खेदयन् यसुप्रयत्न इति दैवादिकः परस्मैपदी क्रोधादेव कषायाक्षः बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् स्यन्नैः स्रुतैः स्वेदकणैरुल्बणः उद्भटः व्याप्त इत्यर्थः स्यन्देर्निष्ठायां रूपम् ।

कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितम्।
को नग्नमुषितप्रख्यं बहु मन्येत राघवम्॥ ८४॥

सन्दर्शितमान्तरमन्तर्गतमाकूतमभिप्रायो येन स एवंविधः॥८३॥ज०म०

अथेत्यादि। अथ तवैवमुक्तो दशाननस्तां सीतामवादीत् अजल्पदिति त्रिः। कीदृशः आयस्यन् तद्वाक्यैः क्रोधवशात् शरीरं खेदयन् कषायाक्षः क्रोधेन कषाये अक्षिणी यस्य स तथा सक्थ्यक्ष्णः षः स्वाङ्गे खचैः क्षुतैः खेदकषैरुल्वणः उद्भटः व्याप्त इत्यर्थः स्यन्दूङ्व् लक्ष्तौ ऊदित्त्वादेमुत्वे नेमडोश्वीदित्यादिना इमृनिषेधः हुमुङ्नलोपोऽपावितिति नस्य लोपः ऋल्वादौदिति क्तस्य दस्य च नः। सन्दर्शितं प्रकटीकृतम् आन्तरम् अन्तर्गतम् आकूतमभिप्रायो येन स तथा॥ ८३॥ भ०

कृत इत्यादि। कनिष्ठाया अपत्यं ज्येष्ठाया अपत्यमिति स्त्रीभ्यो ढक् कल्याण्यादीनामिनङ् तयोः कल्याण्यादिषु पठितत्वात् कनिष्ठासुतस्य भरतस्य कृते निमित्ते ज्येष्ठायाः सुतः निरुपयोगितया विवासितः विसर्जितः विपूर्वस्य वसतेर्हेतुमण्ण्यन्तस्य निष्ठायां रूपम्। तन्नग्नमुषितप्रख्यं यथा कश्चिन्मुषितो नग्नो भवति तद्वद्भूतं पूर्वकालेति सः तस्याः पूर्वापरकालत्वात् राजदन्तादित्वात्परनिपातः। ईदृशं राघवं को बहु मन्येत श्लाघेत नैवेत्यर्थः॥ ८४॥ ज० म०

कृते इत्यादि। को जनो राघवं बहु मन्येत श्लाघेत न कोऽपीत्यर्थः किम्भूतं कानिष्ठिनेयस्य कनिष्ठाया अपत्यस्य भरतस्य कृते निमित्तं ज्यैष्ठिनेयं ज्येष्ठाया अपत्यमपि विवासितं पित्रा परित्यक्तं राज्याद्बहिष्कृतं वनेर्भिक्षान्तस्य रूपं तत एव नग्नमुषितप्रख्यं यः कश्चित् मुषितो निराकृतः पश्चान्नग्नो लज्जितो दिगम्बरीकृतो वा भवति तत्तुल्यं पूर्वकालस्यापरकालेनेति कर्मधारयार्थं परस्तत् समते पूर्वकालसम्बन्धात् य एव मुषितः परकालसम्बन्धात् स एव भग्न इत्येकार्थतास्येव अभिधानात् पूर्वकालीनस्य परनिपातः। राजदन्तादित्वादिति परः ज्येष्ठाकनिष्ठाभ्यामावन्तत्वात् वाह्वाद्यतोऽत्यावादेरितिकृतस्य ष्णेयस्य कल्याणीसुभगेत्यादिना इनेयः लग्नेति ओलजडीदिवि लोदि-

राक्षसान् वटुयज्ञेषु पिण्डीशूरान्निरस्तवान्।
यद्यसौ कूपमाण्डूकि! तवैतावति कः स्मयः॥ ८५॥
मत्पराक्रमसंक्षिप्तराज्यभोगपरिच्छदः।
युक्तं ममैव किं वक्तुं दरिद्राति यथा हरिः॥ ८६॥

स्वात् सूत्वाद्योदिति क्तस्य नकारः मग्नवज्जस्य गत्वं केचित्तु नमजेर्नस्य निपातनात् तवर्गपञ्चम इत्याहुः॥ ८४॥ भ०

राक्षसेत्यादि। अध्वरेष्विष्टिनामित्यस्योत्तरमाह यद्यसौ राक्षसान् पिण्डीमूरान् पिण्ड्यामेव शूरान् भोजने एव शूरान् पात्रे समिता-दयश्चेति सः। वटुयज्ञेषु कुब्राह्मणयज्ञेषु निरस्तवान् तिरस्कृतवान्। हे कूपमाण्डूकि! कूपे माण्डूकीव पूर्ववत् सः ढक्मण्डूकादिति चका-रादण् वापत्ये एतावति स्वल्पे वस्तुनि तव कः स्मयः नैव युज्यते मत्-पराक्रमे तु युक्तः तत्रापि मम न युक्तं वक्तुमित्याह॥ ८५॥ ज० म०

राक्षसानित्यादि। अध्वरेष्विष्टिनां पातेत्यस्योत्तरमिदं वटवो ब्राह्मणास्तेषां यज्ञेषु असौ रामः पिण्डीमूरान् पिण्ड्यां भोजन एव मूरान् कार्य्यान्तराक्षसान् राक्षसान् निरस्तवान् तदा एतावति अल्पे-ऽपि कार्य्ये हे कूपमाण्डूकि! तव कः स्मयो गर्वः विस्मयो वा मण्डू-कस्य भेकस्य स्त्र्यपत्यमिति शिवादित्वात् ण्णः। कूपे माण्डूकी इव एते-नाल्पदृश्वत्वादन्ये वीरास्त्वया न दृष्टा इति ते स्मय इति सूचितम्। कूपमण्डूकीति पाठे जातेरस्त्र इतीप् कूपमाण्डूकीत्यत्र पिण्डीमूरान् इत्यत्र च पात्रे समितादित्वात् क्षेपे तत्पुरुष इति परः समते अर्थ-वशात् क्षेपो गम्यते॥ ८५॥ भ०

मत्परेत्यादि। राज्यभोगादयः परिच्छदो हस्त्यश्वादिः स मत्परा-क्रमेण संक्षिप्तोऽपहृतो यस्य हरेरिन्द्रस्य स यथा दरिद्राति निरर्थको भवति तन्ममैव किं वक्तुं युक्तमात्मगुणवादस्य लज्जाकरत्वात् दरिद्राते-रादादिकत्वाच्छपो लुक्॥ ८६॥ ज० म०

मदित्यादि। मत्पराक्रमेण संक्षिप्तोऽपहृतो राज्यभोगपरिच्छदो हस्त्यश्वादिर्यस्य तादृशो हरिरिन्द्रो यथा यदि हरिद्राति दुर्गतो

निर्लङ्को विमदः स्वामी धनानां हृतपुष्पकः ।
अध्यास्तेऽन्तर्गिरं यस्मात् कस्तन्नावैति कारणम् ॥८७॥
भिन्ननौक इव ध्यायन् मत्तो विभ्यद्यमः स्वयम् ।
कार्ष्णिमानं दधानेन मुखेनास्ते निरुद्यतिः ॥ ८८ ॥

भवति तदा किं ममैव वक्तुं युक्तम् अपि तु नैवेत्यर्थः आत्मगुणानुवादस्य लज्जाकरत्वात् दरिद्राचक्षु दुर्गत्याम् ॥ ८६ ॥ भ०

निर्लङ्क इत्यादि । यस्मात् कारणात् धनानां स्वामी धनदः अन्तर्गिरमध्यास्ते अध्यासितवान् गिरेः कैलासस्यान्तर्मध्ये विभक्त्यर्थेऽव्ययीभावः । गिरेश्च सेनाकस्येति टच् अधिशीङ्स्थासामिति कर्मसंज्ञा तेन तृतीयासप्तम्योर्बहुलमित्यम्भावो न भवति नाव्ययीभावादित्यमेव भवति तत्कारणं मम पराक्रमं मां वा को नावैति न जानाति । कीदृशः निर्लङ्कः लङ्कातो निष्क्रान्तः निरादयः क्रान्ताद्यर्थे पञ्चम्येति सः एकविभक्ति चेत्युपसर्जनसंज्ञायां ह्रस्वत्वम् हृतपुष्पकः हृतम् आच्छिन्नं पुष्पकाख्यं विमानं यस्य अतएव विमदोऽपि तदर्थः लङ्का पुष्पकञ्च धनदस्यासीत् तच्छित्त्वा अनेन गृहीतमिति ॥ ८७ ॥ ज० म०

निर्लङ्क इत्यादि । धनानां स्वामी कुवेरः यस्मात् कारणात् अन्तर्गिरं गिरेः कैलासस्यार्मध्यमध्यास्तेऽधिवसति तत्कारणं मत्पराक्रमरूपं को जनो नावैति अपि तु सर्व एव जानाति । कीदृशः कुवेरः निर्लङ्कः लङ्काया निष्क्रान्तः पञ्चमीतत्पुरुषः व्यं पूर्वमिति निरः पूर्वनिपातः निर्गता लङ्का यस्येति वा विमदः विगतो मदो दर्पो यस्य हृतपुष्पकः हृतं पुष्पकं विमानं यस्य ईदृशोऽपि मत्पराक्रमादेवेति भावः अन्तर्गिरमिति सप्तम्यर्थेऽव्ययीभावः अप् नदीपौर्णमास्याग्रहायणीगिरेर्वेति पक्षे चः कर्मक्रियेत्यादिना आधारस्य कर्मत्वम् ॥ ८७ ॥ भ०

भिन्नेत्यादि । स्वयं साक्षान्मत्तो बिभ्यत् त्रसन् यमो वैलक्षण्यात् मुखेन कार्ष्णिमानं कृष्णवर्णत्वं वर्णदृढादिभ्यश्चेति चकारादिमनिच् दधानेन धारयता इत्थम्भूते तृतीया निरुद्यतिः निरुद्यमः आस्ते उत्पूर्वाद्यमेः स्त्रियां क्तिन् अनुनासिकलोपः । कीदृशः ध्यायन् चिन्तयन्

समुद्रोपत्यका हैमी पर्वताधित्यका पुरी ।
रत्नपारायणं नाम्ना लङ्केति मम मैथिलि ! ॥ ८९ ॥

किम्ममापद्यदहमनेन हृतसर्वस्व इति भिन्ननौक इव विपन्नपोतवणिगिव उरःप्रभृतिभ्यः कप् ॥ ८८ ॥ ज० म०

भिन्नेत्यादि । यमः मत्तो बिभ्यत् त्रसन् स्वयं ध्यायन् चिन्तयन् निरुद्यतिर्निरुद्यम आस्ते स्वयमिति स्वयमेवात्मनोऽसामर्थ्यं जानाति नत्वन्येन बोधित इत्यर्थः क्षिप्रिमाणं क्षणत्वं दधानेन मुखेन उपलक्षितः विशेषणे तृतीया गुणादिमन् भावे भिन्ना विदारिता नौर्यस्य तादृशो वणिक् यथा ध्यायति तथा ध्यायन् एकवचनान्तेन नौशब्देन बहुव्रीहौ क इति परः स्वमते स्वार्थे पुंवत्स्त्रुत्रतापुंस्क इति ज्ञापकात् तस्क्तेरिति कबादः पञ्चम्यास्तस् युष्मदस्मदोस्ताहावित्यादिना मदादेशः गणोक्तकार्य्यस्य बाहुल्यात् त्वदां टेरः क्ताविति क्वनिषेधः ञिभीतिभीत्यां शत्रु ह्वादीरेद्विः अद्देरित्युक्तेर्न नुण् निरुत्पूर्वात् यमः क्तौ वनतनाद्यनिमामिति मलोपः एतेन दिक्पतीनां जयादहमेव सुप्रसिद्ध न तु तथेत्युक्तम् ॥ ८८ ॥ भ०

एवं स्वपौरुषं प्रदर्श्य स्वीकर्त्तुमाह समुद्रेत्यादि । हे मैथिलि ! लङ्केति नाम्ना मम पुरी कीदृशी समुद्र एवोपत्यका आसन्नो यस्याः सा समुद्रोपत्यका समुद्रस्य पर्वतोपत्यकात्वात् समुद्रोपत्यकेति समासे साधुत्वन्न भवति यतः संज्ञाधिकारात् पर्वतस्यासन्ने अधिरूढ़े उपाधिभ्यां त्यकन्प्रत्ययान्तयोरुपत्यकाधित्यकाशब्दयोः साधुत्वमुक्तम् प्रतिषेधे त्यकन् उपसंख्यानमिति प्रत्ययस्थादितीकारो न भवति हैमी हेमविकारा प्राणिरजतादिभ्योऽञ् पर्वताधित्यका त्रिकूटपर्वतस्योपरि स्थिता रत्नपारायणं यत्र रत्नानां पारमवसानमयन्ते बुध्यन्ते तत्परीक्षकाः सर्वरत्नस्थानमित्यर्थः । दुर्गावस्थित्यानभिभवनीयतां रत्नोपचयात् समृद्धतां कथयन् प्रलोभयति ॥ ८९ ॥ ज० म०

समुद्रेत्यादि । सम्प्रति सीताप्रलोभनं क्रियते, हे मैथिलि ! लङ्केति नाम्ना ख्याता मम पुरी कीदृशी समुद्रोपत्यका समुद्रस्य उपत्यका

आवासे सिक्तसंसृष्टे गन्धैस्त्वं लिप्तवासिता ।
अर्पितोरुसुगन्धिस्रक् तस्यां वस मया सह ॥ ९० ॥

समीपे भूमिः पर्वतस्य त्रिकूटस्य अधित्यका उपरि स्थिता अध्युपाभ्यां त्यकनादित्वात् त्यकनाद्यचिरेत्यादिना भवादित्वात् ऊर्द्ध्वासन्नयोस्त्यः ततः स्वार्थे कः स्त्रियामाप् काप्यनाशीरक इत्यादिना चिपादित्वात् न इत्वम् उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका इत्यमरकोषे अद्रेरित्युपलक्षणं समुद्र उपत्यका पर्वतासन्नभूमिर्यस्या इति केचित् एतेन दुर्गमत्वं सूचितं हैमी हेम्नो विकारः विकारसंघेति ष्णः मम्वर्जेत्यादौ विकार-ष्णवर्जनात् नलोपनिषेधाभावात् न्वोर्लौपौताविति नस्य लोपः रत्नानां पारमवसानम् अयन्ते बुध्यन्ते तत्परीक्षका अत्रेति रत्नपारायणं घञलनटो वे इति आधारे अनट् स्वभावादजहल्लिङ्गता सर्वरत्नस्थान-मित्यर्थः यदाह हलायुधः साकल्यवचनं प्राज्ञैः पारायणमुदाहृत-मिति ॥ ८९ ॥ भ०

आवासे इत्यादि । तस्यां पुर्याम् आवासे गृहे आवसत्यस्मिन्निति अधिकरणे घञ्, मया सह त्वं वस प्रार्थनायां लोट् सिक्तसम्मृष्टे पूर्वं सिक्ते पश्चात्संमृष्टे गन्धैर्लिप्तवासिता सती पूर्वं लिप्ता चन्दनादिभिर्गन्धैः पश्चाद्वासिता धूपिता सम्मृष्टादिभिः पूर्वकालेत्यादिना सः । अर्पिता न्यस्ता उर्वी महती सुगन्धिस्रक् सुरभिमाला यस्यां सा त्वं किमिति त्वया सह वसामीति चेदाह ॥ ९० ॥ ज० म०

आवास इत्यादि । तस्यां पुर्याम् आवासे गृहे मया सह त्वं वस प्रार्थनायां णी । पूर्वं सिक्ते पश्चात् संमृष्टे शोधिते सिक्तसंमृष्टे गन्धैश्च-न्दनादिभिर्लिप्तवासिता पूर्वं लिप्ता पश्चाद्वासिता धूपैः उभयत्र पूर्व-परकालसम्बन्धादेकार्थत्वेन कर्मधारयः । गन्धयतीति गन्धश्चन्दनादिः । वासिता करिणीनार्य्योर्वासितं सुरभीकृते । ज्ञातमात्रे खगारावे वासितं वस्त्रवेष्टिते इति विश्वः । अर्पिता न्यस्ता उर्वी महती सुगन्धिः सुरभिः स्रक् माला यस्यां तादृशी च सती स्तूत्सुरभिपूतेरित्यादिना गन्धादि-त्वम्ः ॥ ९० ॥ भ०

सङ्गच्छ पौंस्नि! स्त्रैणं मां युवानं तरुणी शुभे!।
राघवः प्रोष्यपापीयान् जहीहि तमकिञ्चनम् ॥ ८१ ॥

सङ्गेत्यादि। हे पौंस्नि! पुमांसमर्हति तद्धिताय वा अर्हार्थे हितार्थे वा स्त्रीपुंसाभ्यान्नञ्स्नञौ स्त्रीप्रत्यये • अस्नञीकक्क्ख्यणतलुना-नामुपसंख्यानमिति मां युवानन्तरुणं सङ्गच्छ अङ्गीकुरु गमेः प्रार्थ-नायां लोट् इषुगमीत्यादिना छत्वं समगच्छेत्यादिना तङ् न भवति सकर्मकत्वात् विशेषतः स्त्रैणं स्त्रियै हितमर्हन्तं वा पूर्ववत्प्रत्ययः। तरुणी युवती सती शुभे! कल्याणि! शोभत इति इगुपधलक्षणः कः ममापि नादृशो भर्त्तास्तीति चेदाह राघवः प्रोष्यपापीयानिति पापशब्दाद्विन्मतोर्लुगिति ईयसुन् लुकः मतुपः प्रोष्यपापीयानिति मयूरव्यंसकादित्वात् सः देशान्तरं यात्वा पापवत्तरः अतएव तमकिञ्चनं दरिद्रं न विद्यते किञ्चन यस्येति सर्वनामाव्ययसंज्ञाया उपसर्जनप्रति-षेध इति वचनान्नाव्ययसंज्ञा तेन न विभक्तिलोपः। जहीहि त्यज ईत्वस्य जहातेश्चेति वा वचनाद्विकल्पः॥ ८१॥ ज० म०

सङ्गेत्यादि। हे पौंस्नि! हे पुरुषयोग्ये! पुरुषहिते! वा हे शुभे! कल्याणि! तरुणी त्वं स्त्रैणं स्त्रीयोग्यं स्त्रीहितं वा युवानं मां सङ्गच्छ अङ्गीकुरु विधिनिमन्त्रणेत्यादिना प्रार्थनायां गौ सदृशयो-रावयोर्योग उचित इति भावः स्त्रीपुंसाभ्यां विकारसंघेत्यादिना ष्णः ननुपुंस्त्रियोः तरुणशब्दान्नदादित्वादीप् शोभते इति शुभा इजुङ्त्वात् इगुपधज्ञाप्रीजुङ इति कः। ममापि ईदृशो भर्त्तेति चेत् आह राघवः प्रोष्यपापीयान् देशान्तरं गत्वा पापवत्तरः पापवत् शब्दात् गुणाद्वे-ष्ठेयसू इति ईयसुः लुङ् मद्विनामिति वतोर्लुक् जीसंश्च डिदिति डित्त्वात् टेर्लोपः मयूरव्यंसकादित्वादत्र समास इति परः समते गम-कत्वात् असमासत्वेऽपि न क्षतिः तमकिञ्चनं दरिद्रं जहीहि त्यज किञ्चनेत्यव्ययेनापि समासे मयूरव्यंसकादित्वेन निपातनात् वाच्य-लिङ्गतेति परः नञ् तत्पुरुषादर्श आदित्वादरदित्यन्ये न विद्यते किञ्च-नमस्येति बहुव्रीहौ नाव्ययकार्य्यमिति केचित् समते इविणे किञ्चनं

अश्नीतपिबतीयन्ती प्रसिता स्मरकर्मणि।
वशीकृत्य दशग्रीवं मोदस्व वरमन्दिरे ॥ ९२ ॥
मास्म भूर्ग्राहिणी भीरु! गन्तुमुत्साहिनी भव।

क्लीव इति कोषादनव्ययेन किञ्चनशब्देन समासः वस्तुतोऽप्येवमकिञ्चन-शब्दो निर्धनवाची वाच्यलिङ्गः तथाच कोषः निःस्वाकिञ्चनदुर्विधा इति श्राद्योरित्यादिना ह्राक इत्वम् ॥ ९१ ॥ भ०

अश्नीत्यादि। अश्नीत पिबतेति मयूरव्यंसकादित्वात् सः। तत्र ह्याख्यातमाख्यातेन क्रियासातत्य इति पठ्यते सततमश्नीत पिबतेत्येवं भ्रत्यजनानादेष्टुमिच्छतीति क्षुप् आत्मनः क्यच् आश्नीतपिबतीयन्ती प्रसिता स्मरकर्मणि आधिक्येन प्रवृत्ता कामव्यापारे प्रसितोत्सुकाभ्यां तृतीया चेति चकारात् सप्तमी। वशीकृत्यानुवर्त्तिनं दशग्रीवं कृत्वा साचात्प्रभृतित्वाद्गतिसंज्ञा मोदस्व हर्षं जनय वरमन्दिरे श्रेष्ठगृहे स्थिता ॥ ९२ ॥ ज० म०

अश्नीत्यादि। दशग्रीवं वशीकृत्य आयतीकृत्य वरमन्दिरे श्रेष्ठगृहे त्वं मोदस्व हर्षं जनय वशे इति सप्तम्यन्तप्रतिरूपकोऽव्ययः। हस्ते-पाणावित्यादिना साचादादित्वात् समासः कीदृशी अश्नीतपिबतेति भ्रत्यजनानादेष्टुमिच्छन्ती अश्नीतपिबतेति सततं नियोगो यस्यां क्रियायां सा अश्नीतपिबता दैक्यं सोऽन्वय इति समासः तत्र हि सामान्यत्वात् पदमात्रस्यैव ग्रहणं तेन कचित् स्याद्यन्तस्य कचित् त्याद्यन्तस्य कचिदुभयस्य चैक्यमिति तस्य त्याद्यन्तस्यान्यप्रत्ययान्तत्वा-भावेऽपि समासे अन्यपदार्थत्वाल्लिङ्गत्वं तेनात्र क्रियाया विशेषणा-र्थत्वात् स्त्रियामत आप् क्तोर्लुक्त्यो चेत्यत्र स्यादिक्तेरेव ग्रहणमभि-धानात् तेन त्यादिक्तेर्न लुक् निपाताद्रूपसिद्धिरिति परे अश्नीतपिब-तामिच्छतीति क्यः स्मरकर्मणि कामचेष्टायां प्रसिता तत्परा प्रसितोत्-सुकाभ्यां तात्पर्य्ये तृतीया सप्तम्याविति परः स्वमते विषयविवचा विजवस्वने क्तः ॥ ९२ ॥ भ०

मास्मेत्यादि। हे भीरु! मास्म भूर्ग्राहिणी प्रतिकूला माभून्

उद्भासिनी च भूत्वा मे वक्षःसम्मर्दिनी भव ॥ ९३ ॥
तां प्रातिकूलिकीं मत्वा जिहीर्षुर्भीमविग्रहः।
बाहूपपीड़माश्लिष्य जगाहे द्यां निशाचरः ॥ ९४ ॥

यास्यामीत्यनुमयें गच्छामीति कृत्वा ओत्तरे लङ् चेति चकारात् लुङ् गन्तुमुत्साहिनी उद्युक्ता भव शकधृषेत्यादिना तुमुन् उत्साहिनीति सहोपपदत्वात् ततश्चालङ्कृतशरीरत्वादुद्भासिनी शोभमाना भूत्वा नोऽस्माकं वक्षःसम्मर्दिनी स्तनाभ्यामुरःस्थलस्य पीड़िका भव ग्रहोत्साहोद्भाससम्मर्दानां ग्रहादिषु पठितत्वात् कर्त्तरि णिनिः ऋन्नेभ्यो ङीप् ॥ ९३ ॥ ज० म०

मास्मेत्यादि। हे भीरु! ग्राहिणी प्रतिकूलार्थग्राहिणी त्वं मास्म भूः न भव गन्तुमुत्साहिनी उद्युक्ता भव उद्भासिनी गत्वालङ्कारादिभिः शोभमाना भूत्वा नोऽस्माकं वक्षःसम्मर्दिनी स्तनाभ्यामुरःस्थलस्य पीड़िका भव सर्वत्र ग्रहादित्वाणिन् चकारः समुच्चये अस्मद एकत्वे बहुत्वमभिधानात् गौरवव्यञ्जकम् ॥ ९३ ॥ भ०

ताम्मेत्यादि। यदैवमभिधीयमाना न प्रतिपन्ना तदा तां प्रातिकूलिकीं प्रतिकूलवर्त्तिनीं मत्वा ज्ञात्वा ओजःसहोम्भसा वर्त्तत इत्यधिकृत्य प्रतिकूलं वर्त्तत इत्यस्मिन्नर्थे तत्प्रत्यनुपूर्वेत्यादिना ठक्। जिहीर्षुः हर्त्तुमिच्छुः भीमविग्रहः भीषणशरीरः दृष्टराक्षसशरीररूपः सुखेन ह्रियत इति बाहूपपीड़माश्लिष्य बाहुभिरुपपीड्य सप्तम्याञ्चोपपीड़ इति चकारात् तृतीयान्त उपपदे णमुल्। जगाहे दर्पेनोत्पत्य द्यामाकाशन्निशाचरो गाहते स्म दिवशब्दसमानार्थो द्योशब्द औणादिकः गमेर्डो इत्यत्र द्युतेश्चेति वचनात् औतोऽम्शसोरित्यात्वं काशपैस्तु दिवशब्दादेव व्युत्पादयितुं सूत्रमवधीयते वाम्येति दिवः अमि विकल्पेनाकारादेश इति ॥ ९४ ॥ ज० म०

तामित्यादि। उक्तवाक्यानङ्गीकारात् तां सीतां प्रातिकूलिकीं प्रतिकूलवर्त्तिनीं मत्वा जिहीर्षुर्हर्त्तुमिच्छुर्निशाचरो रावणो भीमविग्रहो भयङ्करमूर्त्तिः सन् बाहूपपीड़ं बाहुभिरुपपीड्य आश्लिष्य तां

त्रस्यन्तीं तां समादाय याती रात्रिञ्चरालयम्।
तूष्णीम्भूय भयादासाञ्चक्रिरे मृगपक्षिणः॥ ९५॥
उच्चैरारस्यमानां तां कृपणां रामलक्ष्मणौ।
जटायुः प्राप पक्षीन्द्रः परुषं रावणं वदन्॥ ९६॥
एते प्रकीर्णकाः।

गृहीत्वा व्योमाकाशं जगाहे गाढङ्‌विलोड़े गतवानित्यर्थः तृतीया-त्वादुपपीड़ोपमिति परः स्वमते बाहुभ्यामुपपीड़ः पीड़नं यतेत्या-क्षेपक्रियाविशेषणम् उपपीड़ो घञन्तः द्यामिति द्योशब्दस्य दिव्‌शब्दस्य वा श्रपि रूपं प्रतिकूलं यथा स्यात्तथा वर्त्तत इति क्रियाविशेषणस्य कर्मत्वात् ढघेकादिति णिाकः॥ ९४॥ भ०

त्रस्येत्यादि। त्रस्यन्तीं च तां तद्रूपदर्शनात् समादाय गृहीत्वा याती गच्छती रावणात् यातेः शतरि पञ्चम्यां रूपम्। किं याती रात्रिञ्चरालयं लङ्कां रात्रौ चरतीति चरेटः रात्रेः कृतिविभाषेति मुम् तस्माद्रावणाद्यत् भयत्ततो भयात् तूष्णीम्भूय तूष्णीमिति भुव इति क्त्वा चेति समासे ल्यबादेशः आसाञ्चक्रिरे आसिताः दयायास-श्चेत्याम्। मृगपक्षिणः मृगाश्च पक्षिणश्च समानजातीयानामिति वचनादेकवद्भावोऽत्र न भवति॥ ९५॥ ज० म०

त्रस्यन्तीमित्यादि। त्रस्यन्तीं बिभ्यन्तीं तां सीतां समादाय गृहीत्वा रात्रिञ्चरस्यालयं लङ्कां याती गच्छती रावणाद्भयात् मृगाश्च पक्षिणश्च तूष्णीम्भूय मौनिनो भूत्वा आसाञ्चक्रिरे स्थितवन्तः आसङ् उपवेशे विं जादीत्याम् भस्कृन्वासः यात इति शत्रन्तं रात्रौ चरतीति पचादि-त्वादन् रात्रेर्मनुवाक्रति तूष्णीमित्यव्ययं मौनार्थे वर्त्तते व्यक्षप्यनुकार इत्यादिना जर्यादित्वात् समासे क्त्वोयप्॥ ९५॥ भ०

उच्चैरित्यादि। तां सीतां जटायुः पक्षीन्द्रः रावणं परुषन्निष्ठुरं वदन् प्राप प्राप्तवान् कीदृशीम् उच्चैरारस्यमानां हा राम! हा लक्ष्म-णेति शब्दौ द्वौ उच्चैर्महता ध्वनिना पुनःपुनारसन्तीमित्यर्थः रवेः

अतःपरं टाधिकारः।

द्विषन् वनेचराग्र्याणां त्वमादायचरो वने।

अग्रेसरो जघन्यानां माभूः पूर्वसरो मम ॥ ९७ ॥

शब्दकर्मकत्वात् क्रियासमभिहारे यङ् लपणान्दीनाम् इति प्रकीर्ण-काण्डः प्रथमः समाप्तः ॥ ९६ ॥ ज० म०

उच्चैरित्यादि। उच्चैर्यथा स्यात्तथा रामलक्ष्मणौ रारस्यमानां हा राम! हा लक्ष्मण! इति पुनः पुनराह्वयमानां कृपणां दीनां सीतां जटायुः पक्षिराजः प्राप रावणं परुषं निष्ठुरं वदन् वदिर्द्विकर्मकः रसशब्दे लूलसूलेत्यादिना यङ्। इति गौराङ्गमल्लिकपुत्त्रो भरत-मल्लिकः। प्रकीर्णकाण्डव्याख्यानं मुग्धबोधमतेऽकरोत् ॥ ९६ ॥ भ०

इतः परमधिकारकाण्डमुच्यते यत्र प्राधान्येनैकैकमधिकृत्य लक्षणं प्रदर्शितम्। तदधिकारकाण्डम् शेषलक्षणेषु प्रकीर्णकमेव द्रष्टव्यम् एवञ्च कृत्वा अन्तरान्तरा तत्सूचनार्थं प्रकीर्णकश्लोकाभिधानमत्र च काण्डे निर्दिष्टसंज्ञकाश्चत्वारः परिच्छेदाः तत्र प्रथमे आद्यं टप्रत्ययमधि-कृत्योच्यते सर्गार्थस्य विवक्षितस्यापरिसमाप्तत्वात् तमेवाभिसन्धायाह। द्विषन्नित्यादि एवञ्च कृत्वा भिक्षुक उच्यते द्वयोरप्यत्र प्राधान्येन विव-क्षितत्वात् परुषं वदन् कीदृशं हे द्विषन्! माभूः पूर्वसरो ममेति समाप्ततो भूत्वा मागा इत्यर्थः पूर्वं सरतीति पूर्वे कर्त्तरीति टः यत-स्त्वमग्रेसरो जघन्यानामग्रे सरतीति पुरोऽग्रत इत्यादिना टः जघन्य इति शाखादिभ्यो य इति वार्थे यः पापानां प्रथमस्त्वम् कुतः आदाय-चरो वने आदाय चरतीति भिक्षासेनेत्यादिना वने चरन्तीति वनेचराः अधिकरणे चरेष्टः तेषामग्र्याः प्रधाना ऋषयः तानादाय चरसि भक्ष-यसि कर्मणि षष्ठी ॥ ९७ ॥ ज० म०

इतः प्रभृत्यधिकारकाण्डमुच्यते एकैकं विषयमाश्रित्य लक्षण-प्रदर्शनं यत्र तदधिकारकाण्डं तत्रापि लक्षणान्तरसम्बन्धात् प्रकीर्णता-स्तीति सूचनार्थं मध्ये मध्ये प्रकीर्णश्लोकाभिधानं विवक्षितस्य सर्गार्थ-स्यापरिसमाप्तत्वात् सर्गमध्ये काण्डान्तरारम्भो न दोषाय एवञ्चायं

यशस्करसमाचारं ख्यातं भुवि दयाकरम् ।
पितुर्वाक्यकरं रामं धिक् त्वां दुन्वन्तमत्रपम् ॥ ९८ ॥

सर्गौ भिन्नक उच्यते इयोरप्यत्र प्राधान्येन विवक्षितत्वात् । अथ टाधिकारः । द्विषन्नित्यादि । परुषं वदन्निति यदुक्तं तत् किमित्याह हे वनेचराग्रगाणां मुनीनां द्विषन् ! शत्रो ! त्वं मम पूर्वसरोऽग्रयायी माभूः यतस्त्वं जघन्यानां नीचानाम् अग्रेसरः प्रथमः वने आदाय गृहीत्वा अर्थात् सीतां चरसि गच्छसीति आदायचरः द्विषच्चिति द्विषः शतौ शत्रुरिति परः स्वमते द्विषच्छब्दः शत्रुवाचित्वे रूढ़ एव विद्वेषार्थे तु कीपसवदिति शत्रः उभयथा सम्बन्धे षष्ठी वने चरतीति पचादित्वादन् अभिधानात् सप्तम्यलुक् अग्रे भवोऽग्रत्रः अग्रे उच्यते रेफान्तपाठेऽग्र- शब्द एव अग्रेऽर्थः तथाच । अग्रमालम्बने व्राते परिमाणे पलस्य च । प्रान्ते समन्तादधिके प्रधाने प्रथमार्थयोरिति विश्वः । दामागैर्हागि- त्यादौ यव्वर्जनात् न टाज इत्वं चरेः पूर्ववदन् गमकत्वात् दत्तार्थाः सिद्धसंघैरितिवत् क्रियायाः कारकापेक्षायामपि यवन्तेन समासः अवि- वक्षितकर्मत्वात् सापेक्षत्वाभावेन वा समासः असमासेऽपि न क्षतिः मयूरव्यंसकादित्वात् सापेक्षत्वेऽपि समास इति परः । अग्रे इत्येक- वचनान्तमव्ययं स्वकृष्ट इति टः । जघनं पश्चाद्भागः तत्तुल्यो जघन्यः विकारसंघेत्यादिना तुल्यार्थे यत्रः ॥ ९७ ॥ भ०

यशेत्यादि । रामं दुन्वन्तमुपतापयन्तमत्रपन्निर्लज्जं धिक् त्वां गर्हां टुदु उपतापे इत्यस्य सौवादिकस्य शतरि हुश्नुवोः सार्वधातुक इति यणादेशे रूपम् । कीदृशं रामं यशस्करसमाचारं समाचरणं समाचारः चरितं भावे घञ् यशस्करोतीति यशस्करः कृञो हेत्वित्यादिना टः विसर्जनीयस्य सः । यशस्करणहेतुभूतः समाचारो यस्य ख्यातं भुवि प्रसिद्धं दयाकरं करुणाकरणशीलं ताच्छील्ये टः । पितुर्वाक्यकरं पितृ- वचनानुष्ठाने अनुकूलम् आनुलोम्ये टः ॥ ९८ ॥ ज० म०

यशस्केत्यादि । रामं दुन्वन्तम् उपतापयन्तम् अत्रपं परस्त्रीहरणेन निर्लज्जं त्वां धिक् धिक्समयेत्यादिना द्वी टुदु उपतापे स्वादित्वात्

अहमन्तकरो नूनं ध्वान्तस्येव दिवाकरः।
तव राक्षस ! रामस्य नेयः कर्मकरोपमः ॥ ९९ ॥
सतामरुष्करं पक्षी वैरकारं नराशिनम्।

शतरि तुः अध्वोरिति वः। रामं कीदृशं यशस्करः समाचारो यस्य तं यशः करोतीति स्वकुष्ट इति टः अत्र ढाव् परिणति सूत्रात् ढादित्यनुवर्त्तते सेतुकखेति वेः सः क्रुञो हेत्वादावर्थे ट इति परः स्वमते यशस्कारी विद्येति निर्दिशता विद्याया यशस्करणे हेतुत्वात् हेत्वाद्यर्थः सूचितः अन्यथा विद्येति ग्रहणस्य वैयर्थ्यं स्यात् हेत्वाद्यर्थानुक्तावपि न क्षतिः सम्यगाचरणं समाचारश्चेष्टा घञ्ऽलनटोऽघे इति घञ् भुवि ख्यातं दयाकरणशीलं पूर्ववट्टः परमते ताच्छील्यार्थेऽपि पितुर्वाक्यानुष्ठानेऽनुकूलं पूर्ववट्टः परमतेऽनुकूलार्थेऽपि वाक्यशब्देनात्र तदभिधेयमुच्यते ॥ ९८ ॥ भ०

अहमित्यादि। हे राक्षस ! अहं तव नूनमवश्यमन्तकरः विनाशयिता कीदृशः रामस्य नेयो वश्यः अचोयत् कर्मकरोपमः भृतकतुल्यः कर्मणि भृताविति टः। ध्वान्तस्येव दिवाकरः यथान्धकारस्यान्तकरो दिवाकरः सूर्यः तथा अन्तकरदिवाकरौ दिवाविभेति टप्रत्ययान्तौ एवमुक्त्वा खम्पपातेति सम्बन्धः ॥ ९९ ॥ ज० म०

अहमित्यादि। हे राक्षस ! नूनं निश्चितम् अहं तव अन्तकरः नाशयिता अन्तं करोतीति टः यथा दिवाकरः सूर्यो ध्वान्तस्य अन्धकारस्य अन्तकरः दिवाशब्दोऽयमाधाररूपदिनवचनोऽव्ययः तेन दिवा दिवसे प्राणिनश्चेष्टायुक्तान् करोतीति निशादित्वाट्ट इति परः स्वमते दिवाशब्दोऽयमव्ययः सप्तम्यन्तत्वं प्रायिकं तेन दिवा दिनं करोतीति पूर्ववट्टः बाहुल्याद्वा दिवा दिवसे करो रश्मिर्यस्य इति केचित् ध्वान्तमिति ध्वनेस्तमसि क्तो क्षुब्धवाढ़े इत्यादिना निपातः। अहं कीदृशः रामस्य नेयः वश्यःवश्यः प्रणयो निभृत इत्यमरः। कर्मकरोपमः भृतकतुल्यः कर्म करोतीति टः कर्मशब्दाद्भृतौ ट इति परः ॥ ९९ ॥ भ०

सतामित्यादि। एवमुक्त्वा असौ जटायुः पक्षी खमाकाशम्पपात

हन्तुं कलहकारोऽसौ शब्दकारः पपात खम् ॥१००॥

इति टाधिकारः।

अतः परं प्रकीर्णकाः।

धुन्वन् सर्वपथीनं खे वितानं पक्षयोरसौ।

मांसशोणितसन्दर्शं तुण्डघातमयुध्यत ॥ १०१ ॥

पतितः किमर्थं नराशिनं राक्षसं हन्तुं हनिष्यामीति कीदृशं राक्षसं सतामरुष्करं धर्मे स्थितानां पीड़ाकरम् अरुःशब्दः पीड़ोपलक्षणपरः दिवाविभेति टः वैरकारं वैरकरणशीलं कलहकारः पक्षी कलहयितु-मनुकूलः अनयोर्नशब्दश्लोकेति टे प्रतिषिद्धेऽणेव भवति कर्मण्यणः प्राप्तिरस्तीति टाधिकार उदाहृतः कियत् खम्पपात यावति दूरे शब्द-पातस्तावत् खमिति टाधिकारः समाप्तः ॥ १०० ॥ ज० म०

सतामित्यादि। एवमुक्त्वा असौ पक्षी जटायुर्नराशिनं राक्षसं हन्तुं खमाकाशं पपात जगाम कीदृशं राक्षसं सतां साधूनाम् अरुष्करं व्रणकरं पीड़ाकरमित्यर्थः पूर्ववट्टः निष्पतन्त्य इतिवत् षत्वं वैरं विरोधं करोतीति वैरकारस्तं ढात् षश्चित्यस्य कुम्भकार इत्युदाहरणेन कुम्भादेः कञः षण् अन्यस्मात् स्कुष्ट इत्यस्य विषय इति सूचितं तेनात्र कुम्भा-दित्वात् षण् पक्षी कीदृशः कलहकारः कलहं करोतीति पूर्ववत् षण् एवं शब्दकारः शब्दपातमिति पाठे शब्दस्य पातो यत्रेति खविशेषणं यावद्दूरं शब्दगमनं तावद्दूरमित्यर्थः शब्दस्येव पातो गतिर्यत्रेति पतनक्रियाविशेषणं वा एतेन यथा शब्दस्य शीघ्रगमनं तथास्येति ध्वनितमिति। टाधिकारः ॥ १०० ॥ भ०

इतः प्रकीर्णकश्लोकानाह। धुन्वन्नित्यादि। असौ पक्षी अयुध्यत युध्यते स्म युधेर्दैवादिकस्य लङि रूपम्। तुण्डघातमिति क्रियाविशेष-णम्। तुण्डेन चञ्च्वा घातो हननं यस्मिन् युद्ध इति करणे हन इति न चसुल् कषादिषु यथाविध्यनुप्रयोगात् अहिंसार्थत्वाच्च तदारम्भस्य यथा पादघातं भूमिं हन्तीति हिंसार्थानाञ्च समानकर्मकाणामित्यने-

न विभाय न जिह्राय न चक्लाम न विव्यथे ।
आघ्नानो विध्यमानोऽपि रणान्निववृते न च ॥ १०२ ॥

नापि न भवति समानकर्मकताभावात् अकर्मकत्वाद्युधेः तेन भावे घञ् धुन्वन् कम्पयन् खे आकाशे पक्षयोर्वितानं सर्वपथीनं सर्वः पन्था इति पूर्वकालेत्यादिना सः ऋक्पूरिति समासान्तोऽकारः सर्वपथान् व्याप्नोतीति तत्सर्वादेरित्यादिना खः । मांसशोणितसन्दर्शं कात्स्न्र्येन मांसं शोणितञ्च दृष्ट्वा कर्मणि दृशिविदोः साकल्य इति णमुल् अमैवा-व्ययेनेति सः ॥ १०१ ॥ ज० म०

अथ प्रकीर्णकाः । धुन्वन्नित्यादि । असौ जटायुः खे आकाशे पक्षयोर्वितानं विस्तारं धुन्वन् कम्पयन् मांसशोणितसन्दर्शं यथा स्यात् तथा तुण्डघातं यथा स्यात् तथा अयुध्यत युध्यौङ् युद्धे मांस-रक्तयोरर्थाद्रावणस्य सम्यगदर्शो दर्शनं यत्र तुण्डस्याघातो यत्र चेति युद्धक्रियाविशेषणं दर्शघातौ घञन्तौ परे तु साकल्येन मांसं शोणितञ्च दृष्ट्वा रावणस्येत्यर्थात् दृशो णम् साकल्ये एवं तुण्डेन हत्वा तुण्डघातं तृतीयान्तादासत्तौ णम् । तुण्डघातेन युद्धस्याशादासत्तिरत्र गम्यत इत्याहुः । वितानं कीदृशं सर्वस्यासौ पन्थाश्चेति सर्वपथः पथ्यधुरः से इति अः सर्वपथं व्याप्नोतीति ढषेकादिति ईनः ॥ १०१ ॥ भ०

न वीत्यादि । आघ्नानः पक्षी प्रहरन् आङो यमहन इति तङ् न विभाय न भीतः तस्मान्न जिह्राय न लज्जितः अप्यज्ञया न हत इति न चक्लाम न क्लान्तः न विव्यथे व्यथो लिटीति सम्प्रसारणम् । जितश्रमत्वात् विध्यमानो वा वाशब्दस्यार्थे परेण हन्यमानस्य न विव्यथे न पीड़ां भेजे सत्त्वाधिकत्वात् रणाच्च न निववृते न निवृत्तः अभग्नोत्-साहत्वात् ॥ १०२ ॥ ज० म०

न वीत्यादि । असौ पक्षी आघ्नानः प्रहरन् न विभाय न भीतः मया ताड़ितोऽपि न हत इति न जिह्राय न लज्जते स्म न चक्लाम नासमर्थो बभूव न विव्यथे न पीड़ितो भवति स्म विध्यमानः परेण ताड्यमानोऽपि रणात् न निववृते न निवृत्तः अभग्नोत्साहत्वात् सर्वत्र

पिशाचमुखधौरेयं सच्छत्रकवचं रथम् ।
युधि कद्रथवद्भीमं बभञ्ज ध्वजशालिनम् ॥ १०३ ॥

एते प्रकीर्णकाः ।

अतः परम् असधिकारः ।

संत्रासयाञ्चकारारिं सुरान् पिप्राय पश्यतः ।

ठी व्यथेत्तु व्यथक्ष्हेति जिः । आघ्नान इति आत्माङ्गढादढाच्चाहनयम इति सं । किंवा आघ्नानः शत्रुहिंसनशक्तः शक्तिवयस्ताच्छील्ये इति शानः ॥ १०२ ॥ भ०

पिशेत्यादि । युधि संग्रामे पक्षी रथं बभञ्ज भग्नवान् तस्य पुष्पकादन्यत्वात् तथाहि कद्रथवत् कुत्सितरथमिव रथवद्योश्चेति कदादेशः धुरं वहन्ति धौरेया अश्वाः धुरोयड्ञौ पिशाचस्येव मुखं येषान्ते धौरेया तत्र रथे तं पिशाचमुखधौरेयं सच्छोभनं छत्रं कवचञ्च यस्मिन् तं भीमं भयानकं तथा धुर्यत्वात् ध्वजशालिनं ध्वजवन्तं शालिंरूढ़ः किनृप्रत्ययान्तस्तद्वलमाह अन्यस्त्वाह ध्वजेन शालितुं स्लाघयितुं शीलमस्येति खिनिः अनेकार्थत्वाद्धातूनामिति । एते प्रकीर्णकाः ॥ १०२ ॥ ज० म०

पिशाचेत्यादि । जटायुः युधि संग्रामे रावणस्य रथं बभञ्ज कद्रथवत् कुत्सितरथमिव कत्कचत्रिरथवद इति कुशब्दस्य कदादेशः कीदृशः पिशाचस्येव मुखं येषां तेऽश्वा धौरेया यत्र धुरं वहतीत्यर्थे ढघेकादिति ण्यः सत् शोभनं विद्यमानं वा छत्रं कवचं वा यस्मिन् छत्रकवचाभ्यां सह रथं बभञ्जेत्यर्थो वा भीमं भयानकं ध्वजशालिनं ध्वजयुक्तं शब्लिङ्कद्स्तद्वत्तायाम् अस्त्यर्थे शालिनृप्रत्यय इति वृद्धाः । ध्वजेन शालते शोभते ग्रहादित्वास्मिन् धातूनामनेकार्थत्वात् शालिरत्र दीप्त्यर्थ इति केचित् ध्वजेन शालयितुं शीलं यस्येति डलयोरैक्यमिति स्मरणात् शाडृश्लाघायामित्यस्य रूपमित्यपरे शलञ्कश्लाघ इत्यस्मात् ङ्याक्षकथने इत्यस्माद्वा ञेर्णिन्निति केचित् । इति प्रकीर्णकाः ॥१०२॥ भ०

इतः प्रभृत्यामसधिकृत्याह सन्त्रेत्यादि । अथैतस्मिन् युद्धप्रस्तावे स

स त्याजयाञ्चकाराथ सीतां विंशतिबाहुना ॥ १०४ ॥

असीतो रावणः कासाञ्चक्रे शस्त्रैर्निराकुलः।

भूयस्तं बेभिदाञ्चक्रे नखतुण्डायुधः खगः ॥ १०५ ॥

पक्षी सीतां विंशतिबाहुना रावणेन त्याजयाञ्चकार त्याजितवान् गत्यादिषु त्यजेरसंग्रहात् तृतीयैव भवति। कस्मात्त्याजितवानित्याह सन्त्रासयाञ्चकारारिं यस्मादरिं रावणन्त्रासितवान् अकर्मकत्वात् त्रासेर्ण्यन्तावस्थायामरेः कर्मत्वम् आभ्यां हेतुमण्ण्यन्ताभ्याम् कास्प्रत्ययादित्यादिना आम् आमोऽमित्वमव्ययत्वात् आम इति लेर्लुक् अयामन्तेत्यादिना अयादेशः आमकारान्तस्य कृत्संज्ञायां प्रातिपदिकत्वे प्रथमैकवचनम् तस्यायादिति लुक् स्वरादिषु आम आमिति पठितत्वादव्ययत्वम् मन्तस्यानभिव्यक्तपदार्थत्वात् कृञ्चानुप्रयुज्यत इत्यादिना लिट्परस्य कृञोऽनुप्रयोगः कर्त्रभिप्रायाभावाभावेऽनुप्रयोगे तङ् न भवति॥ सुरांश्च पश्यतो युद्धं जटायुः पिप्राय प्रीणितवान् शत्रुत्रासनं सीतात्याजनञ्च देवानां प्रीतेः कारणम् ॥ १०४ ॥ ज० म०

अयामधिकारः। सन्त्रेत्यादि। स पक्षी अरिं रावणं सम्यक् त्रासयाञ्चकार अतएव पश्यतो युद्धमवलोकयतः सुरान् देवान् पिप्राय प्रीणितवान् अथ त्रासानन्तरं विंशतिबाहुना रावणेन सीतां त्याजयाञ्चकार त्यजेर्णौऽणौरित्यस्य विषयाभावात् प्रयोज्यकर्त्तरि तृतीया त्रसेरकर्मकत्वात् प्रयोज्यकर्त्तुः कर्मत्वम् उभयत्र प्रत्ययान्तत्वात् विजादीत्याम् भ्वस्त्रृन्वाम इति कृञोऽनुप्रयोगः म्नोर्नुरित्यनुस्वारः अपेञमनोरिति ञः अत्र विरामस्वीकारात् अनुस्वारस्य वर्गान्तो वा भवतीति कालापाः पिप्रायेति अनेकाचधातोराम् नत्वेकाच इत्युपन्यस्तं विंशतिबाहुना इति साभिप्रायपदेन रावणस्य त्रासाधिक्यं जटायोर्वीर्य्याधिक्यञ्च सूचितम् ॥ १०४ ॥ भ०

असीत इत्यादि। असीतः परित्यक्तसीतो रावणः आकाशस्थः कासाञ्चक्रे कुत्सितमभिहितवान् एह्येहीति विहगाधिपेति कासृशब्दकुत्सायामित्यनुदात्तेत्कासित्यादिना आम् शस्त्रैः इत्यम्भूते तृतीया।

हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परम् ।
न वा पलायाञ्चक्रे विर्दयाञ्चक्रे न राक्षसः ॥ १०६ ॥

निराकुलः पूर्वं बाहुभिः सीताग्रहणे व्याकुलत्वात् भूयः पुनरपि खगः पक्षी डप्रकरणे अन्येष्वपि दृश्यत इति वचनात् गमेर्डः । तन्निशाचरं बेभिदाञ्चक्रे अत्यर्थं भिन्नवान् बेभिद्यतेर्यङन्तादाम् । नखतुण्डान्येवायुधानि यस्य ॥ १०५ ॥ ज० म०

असीत इत्यादि । असीतस्त्यक्तसीतो रावणः आकुलः सन् शस्त्रैः काशाञ्चक्रे शुशुभे काशृ कृशब्दे धातूनामनेकार्थत्वात् अत दीप्त्यर्थः दीप्त्यर्थोऽपि दन्त्यान्तकाशृङ्धात्वरस्तीति केचित् यद्वा पक्षिणं प्रति एहि एहि खगाधम ! शास्त्रसीत्यादि कुत्सितशब्दं कृतवान् अस्मिन् पक्षे शस्त्रैरिति विशेषणे तृतीया दरिद्राकाशकासेति पक्षे आम् । पूर्वं सीताग्रहणे व्याकुलः सम्प्रत्यनाकुलः भूयः पुनरपि खगः पक्षी तं रावणं बेभिदाञ्चक्रे अत्यर्थं भिनत्ति स्म कीदृशः नखतुण्डप्रहरणः भिदेर्मूत्रस्तम्मूचाटेत्यादिना यङ्प्रत्ययान्तत्वात् विजादीत्यादिना आम् यङो लुक् यङ्लुक्यलोप अरे नणुन्वी इति निषेधात् न गुणः विजादीत्यादौ धात्विति विषये सप्तमी तेन यङ्लुकि परस्मैपदविषये तत्र उभयपदित्वात् अत्रात्मनेपदवदनुप्रयोगः । खे गच्छतीति हनजनादिति डः ॥ १०५ ॥ भ०

हन्तुमित्यादि । तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्परमन्योन्यं हन्तुमिहाञ्चक्राते चेष्टां कृतवन्तौ इजादेरित्यादिना आम् । विः पक्षी जनिघसिभ्यामित्यधिकृत्य वेञो डिच्चेत्यौणादिक इक् न वा नैव वाशब्द एवार्थे पलायाञ्चक्रे पलायितः उपसर्गस्यायताविति लत्वम् राक्षसश्च न दयाञ्चक्रे न दयते स्म पक्षिणं खल्वहं कथं व्यापादयामीति उभयत्रापि दयायासश्चेत्याम् ॥ १०६ ॥ ज० म०

हन्तुमित्यादि । तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्परमन्योन्यं हन्तुमीहाञ्चक्राते ईहङ्चेष्टे परस्परं व्यतिलुनन्तीत्युदाहरता व्यतीहारे परस्परशब्दो मनीषादित्वान्निपातित इति सूचितं

उपासाञ्चक्रिरे द्रष्टुं देवगन्धर्वकिन्नराः।
छलेन पक्षौ लोलूयाञ्चक्रे क्रव्यात् पतत्रिणः॥ १०७॥

प्रलुठितमवनौ विलोक्य कृत्तं
दशवदनः खचरोत्तमं प्रहृष्यत्।
रथवरमधिरुह्य भीमधुर्य्यं
स्वपुरमगात् परिगृह्य रामकान्ताम्॥ १०८॥

इति भट्टिकाव्ये पञ्चमः सर्गः।

---

विः पक्षी न पलायते स्म राक्षसोऽपि हन्तुं न दयां कृतवान् सर्वत्र र्विजादीत्वाम् पलायाञ्चक्र इति परापूर्वस्यायधातो रूपं रेफस्य लत्वं मनीषादीत्वात् माभाङ्नञ् नह्निनोनवा इत्येते प्रतिषेधार्थाः एवार्थे अत वाशब्द इत्यन्ये॥ १०६॥ भ०

उपेत्यादि। देवगन्धर्वकिन्नरा द्रष्टुं युद्धन्द्रष्टुम इति उपासाञ्चक्रिरे उपगताः पूर्ववदाम्। क्रव्यात् रावणः क्रव्यं मांसमत्तीति क्रव्यात् अदोनन्न इति विट्। पतत्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं लूनवान् यङ्प्रत्ययान्तत्वादाम्। छलेन मायया प्रसह्य जेतन्न शक्यत इति भङ्गेनेति पाठान्तरम्॥ १०७॥ ज० म०

उपेत्यादि। देवा गन्धर्वाः किन्नराश्च द्रष्टुम् अर्थात् युद्धम् उपासाञ्चक्रिरे उपगताः आसङ उपवेशे र्विजादीत्वाम् दीव्यतीति देवः पचादित्वादन् गानं धर्मोऽस्येति गन्धर्वो मनीषादिः नराकृतित्वात् कुत्सितो नरः किन्नरः ईषदर्थे किंशब्द इत्यन्ये। क्रव्याद्रावणः छलेन कपटेन पतत्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं चिच्छेद त्यान्तत्वादाम् क्रव्यं मांसमत्तीति क्विप्॥ १०७॥ भ०

प्रलुठितमित्यादि। खचराः पक्षिणः खे चरन्तीति अधिकरणे चरेष्टः तेषामुत्तमं जटायुं कृत्तं छिन्नं लूनपक्षत्वात् अवनौ भुवि प्रलुठितं विलोक्य प्रहृष्यन् हर्षं प्राप्नुवन् निवृत्तो विघ्नकारीति दशाननो

# षष्ठः सर्गः ।

—००—

ओषाञ्चकार कामाग्निर्दशवक्त्रमहर्निशम् ।
विदाञ्चकार वैदेहीं रामादन्यनिरुत्सुकाम् ॥ १ ॥

रथवरं खरयात् प्राप्तं पुष्पकाख्यमारुह्य भीमधुर्य्यं रामकान्तां सीतां तथैव परिगृह्य स्वपुरमगात् गतवान् ॥ १०८ ॥ ज० म०

इति जयमङ्गलाख्यायां पञ्चमः सर्गः ।

विलुठितमित्यादि । छत्तं छिन्नं लूनपक्षत्वात् अवनौ भूमौ विलुठितं पतितं खवरोत्तमं जटायुं विलोक्य प्रहृष्यन् हृष्टो भवन् रावणो रथवरम् अधिरुह्य रामकान्तां सीतां परिगृह्य स्वपुरं लङ्काम् अगात् गतः रथानां वरः श्रेष्ठः पुष्पकाख्यः खरयादुपागतः तं कीदृशं भीमा धूर्य्या अश्वा यत्र धुरं वहतीति दघेकादिति यः ॥ १०८ ॥ भ०

इति गौराङ्गमल्लिकात्मजश्रीभरतमल्लिकविरचितायां
मुग्धबोधिन्यां भट्टिटीकायां सीताहरणो-
नाम पञ्चमः सर्गः ।

———

अत्राधिकारस्यापरिसमाप्तत्वात्तमेव विदत्याह । ओषाञ्चकारेत्यादि । अथशब्दो वक्ष्यमाणतृतीयश्लोके यः सोऽत्र द्रष्टव्यः अथ तस्मिन् सीतापरिग्रहे जाते कामाग्निः कामोऽग्निरिव दशवक्त्रं दशाननमोषाञ्चकार ददाह उषदाहे उषविदेत्याम् अहर्निशम् अहश्च निशा च सर्वो द्वन्द्वो विभाषैकवद्भवतीत्येकवद्भावादत्यन्तसंयोगे द्वितीया अह्नो नकारस्य रोऽसुपीति रत्वम् । कस्माद्ददाह इत्याह रावणो वैदेहीमन्यनिरुत्सुकां रामादन्यस्मिन् सर्वत्र निरभिलाषां विदाञ्चकार अगुणत्वं विदेस्तयेति विदेरगुणत्वात् गुणाभावः ॥ १ ॥ ज० म०

प्रजागराञ्चकारारेरीहास्वनिशमादरात्।
प्रबिभयाञ्चकारासौ काकुत्स्थादभिशङ्कितः॥ २॥
न जिह्रयाञ्चकाराथ सीतामभ्यर्थ्य तर्जितः।
नाप्यूर्जां बिभरामास वैदेह्यां प्रसितो भृशम्॥ ३॥

ओषामित्यादि। अत्रापि स एवाधिकारः अपरिसमाप्तत्वात् कामोऽग्निरिव दशवक्त्रं रावणम् अहर्निशम् ओषाञ्चकार उपदाहे दरिद्राकासकाशेति पक्षे आम् अहश्च निशा च इति समाहारद्वन्द्वः अदाध्वादीति ङी। दशवक्त्रपदन्यासेन विंशत्या नेत्रैरेकदैव सीतासौन्दर्यातिशयविलोकनात् कामपीड़ानिर्भरत्वं द्योत्यते वैदेही रामादन्यस्मिन् सर्वत्र निरुत्सुकां निरभिलाषां विदाञ्चकार ज्ञातवान् ङाम्वद्यामिति वेत्तेर्ङाम् ङित्त्वान्न गुणः॥ १॥ भ०

प्रजागराञ्चकारेत्यादि। अरे रामस्य ईहासु चेष्टासु गुरोश्च इत्यकारः। आदरादादरेण प्रजागराञ्चकार जागरितवान् शत्रु चिकीर्षितस्यापरिभूत्वेत्यर्थः पूर्वपदाम् अनिशमिति निशाक्रियाविच्छेदो नास्ति यस्मिन् प्रजागरण इति निशेति क्रियाविच्छेदोपलक्षणं प्रायेण हि निशायामपि क्रियाणां प्रवर्त्तनं किमिति जागरितवानित्याह काकुत्स्थादसौ प्रबिभयाञ्चकार प्रभीतवान् भाह्रीत्यादिनाम् श्लुवत् कार्य्ये धातोर्गुणायादेशौ अभिशङ्कितः किमयं करिष्यतीति॥२॥ज०म०

प्रजेत्यादि। असौ रावणोऽरे रामस्य ईहासु चेष्टितेषु अनिशं निरन्तरं प्रजागराञ्चकार सावधानो बभूव आदरात् आदरं कृत्वा यवर्थे पञ्चमी हेतौ वा। काकुत्स्थात् प्रबिभयाञ्चकार अतिभीतः जि-भीत्रिभीत्यां पश्चाम्बाभीह्रीति पशाम् श्लित्त्वाद्द्वित्वे ह्वादिरेहिः पुर्घूङ इति गुणः भ्वश्लुन्वाम इति कञनुप्रयोगः। अतिशङ्कितः किमयं करिष्यतीति नानाविकल्पव्याकुलः॥ २॥ भ०

न जिह्रयाञ्चकारेत्यादि। सीतामभ्यर्थ्य याचित्वा न जिह्रयाञ्चकार न लज्जितः तर्जितः भर्त्सितोऽपि तयैवेत्यर्थात् नाप्यूर्जां बलं बिभरामास धारितवान् कञिति प्रत्याहारग्रहणादस्तेरप्यनुप्रयोगः

विदाङ्कुर्वन्तु रामस्य वृत्तमित्यवदत् स्वकान् ।
रक्षांसि रक्षितुं सीतामाशिषच्च प्रयत्नवान् ॥ ४ ॥

ह्रीधातोर्गुणायादेशौ डुभृञ्धारणपोषणयोः उभयत्रापि पूर्ववदाम् सुवच्च । कथं न धारितवान् इत्याह वैदेह्यां प्रसितः प्रसक्तः तत्परत्वयर्थम् ॥ ३ ॥ ज० म०

न जीत्यादि । अथ सीताया अन्यनिरतत्वकत्वज्ञानानन्तरं सीताभ्यर्थ्य बहुधा अनुनीय तया तर्जितो भर्त्सितोऽपि रावणो न जिहयाञ्चकार ह्रीलिलज्जे ऊर्जां बलमपि न बिभरामास भ्रलिभ्टति-पुष्णोः उभयत्र पूर्ववत्प्रथाम् भृञादेर्ङिः खेरे इति भ्रधातोः खेर्ङिः आमोऽनुप्रयोगः अस्तेर्भूर्न भवतीति परः स्मते भवञ्चाम इत्यत्र अनजघार्थे इत्यस्य ग्रहणं नत्वस्तेः यद्वा व्याकरणान्तरसंवादात् अस्तेरेवानुप्रयोगः कृतभ्यादेशस्यास्तेरनुप्रयोगस्य वैयर्थ्यं भुवोऽनुप्रयोगस्योक्तत्वात् तेनामोऽनुप्रयोगे भूररे इत्यस्य न विषय इति बोध्यम् ऊर्जः सेमृतात् सरोरिति अप्रत्ययः स्त्रीत्वञ्च ऊर्जमिति पाठे क्विप् कृत इत्याह वैदेह्यां प्रसित आसक्तः तच्चिन्तया बलक्षयात् ॥ ३ ॥ म०

विदाङ्कुर्वन्त्वित्यादि । स्वकानात्मीयान् शुकसारणादीन् अवददुक्तवान् । किमित्याह रामस्य वृत्तमनुष्ठितं किन्तस्येहा गन्तुमुद्यमोऽस्ति न वेति विदांकुर्वन्तु विदांकुर्वन्त्वित्यन्यतरस्यामिति निपातितं सीतां रक्षितुं रक्षांसि आशिषदादिष्टवान् शासेः सर्त्तीत्यङ् शास इदङ्हलोरिति शासेरुपधाया इत्वं शासिवसीति षत्वम् । प्रयत्नवान् प्रयत्नपरः । आमधिकारो गतः ॥ ४ ॥ ज० म०

विदामिति । रामस्य वृत्तं चेष्टितं भवन्तो विदाङ्कुर्वन्तु जानन्तु इति स्वकान् आत्मीयान् दूतान् रावणोऽवदत् ङाम्नायां व्यान्तुक्रन्विति वेत्तेर्ङाम् ण्यां कृञनुप्रयोग एव । प्रयत्नवान् सन् सीतां रक्षितुं रक्षांसि आशिषत् आदिष्टवान् चकारः समुच्चये शासु अनुशिष्टौ शासुलिद्युदिति ङः शासुङिङ्कसुङे इति इत्वं क्विात् कृत इति षत्वम् । इत्यामधिकारः ॥ ४ ॥ म०

अथ प्रकीर्णकाः ।

रामोऽपि हतमारीचो निवर्त्स्यन् खरनादिनः ।
क्रोष्टून् समशृणोत् क्रूरान् रसतोऽशुभशंसिनः ॥ ५ ॥
आशङ्कमानो वैदेहीं खादितां निहितां मृताम् ।
स शत्रुघ्नस्य सोदर्य्यं दूरादायान्तमैक्षत ॥ ६ ॥

अथ प्रकीर्णश्लोकानाह । राम इत्यादि । हतमारीचो रामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् वृतादिलक्षण इटि प्राप्ते न वृद्भ्य इतीण् निषेधः । क्रोष्टून् शृगालान् रसतः शब्दायमान् अशृणोत् संश्रुतवान् सकर्मकत्वात् समोगमीत्यात्मनेपदं न भवति लङिरूपम् क्रूरान् भीषणान् यतः खरनादिनः खरवन्नदन्ति कर्त्तरीति णिनिः । अशुभशंसिनः अनिष्टसूचनशीलान् ॥ ५ ॥ ज० म०

अथ प्रकीर्णकाः । राम इत्यादि । हतो मारीचो येन स रामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् रसतः शब्दं कुर्वतः क्रोष्टून् शृगालान् समशृणोत् क्रोष्टूनां शब्दं शृणोति स्मेत्यर्थः रसत इति तद्विशेषणात् तथाचोक्तं सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति यद्यपि शब्द एव श्रूयते न तु शृगालः तथापि शृगालस्यायं शब्द इति ज्ञाने शृगालोऽपि विषय इति तस्यापि ज्ञानकर्मत्वमविवादम् औपचारिकोऽयं प्रयोग इत्यन्ये अनेकार्थत्वात् शृणोतिरिह दर्शनार्थ इति केचित् वृद्भ्यो नेम्येस्सनोरिति वृतेरिम् निषेधः षे तत एव षं । खरनादिनो गर्दभवत् नदतः ग्रहादित्वात् णिन् कर्त्तर्य्युपमान उपपदे णिन्निति परः अतएवाशुभशंसिनः अशुभं शंसितुं सूचयितुं शीलं येषामिति ताच्छील्ये णिन्निति परः स्वमते ग्रहादित्वात् अतएव क्रूरान् भयदान् । अपि सम्भावनाप्रश्नशब्दगर्हासमुच्चये । तथा युक्तपदार्थेषु कामचारक्रियासु चेति विश्वः ॥ ५ ॥ भ०

आशङ्कमान इत्यादि । तथाविधा शुभश्रवणादाशङ्कमानो वितर्कयन् वैदेहीं किं खादितां निशाचरादिना ततः निहतां त्यक्तप्राणाम् अहो स्वयमेवायुःक्षयात् मृतां वा स रामः शत्रुघ्नस्य सोदर्य्यं भ्रातरं

सीतां सौमित्रिणा त्यक्तां सध्रीचीं वसुमैकिकाम् ।
विज्ञायामंस्त काकुत्स्थः क्षये क्षेमं सुदुर्लभम् ॥ ७ ॥

एते प्रकीर्णकाः ।

सोदराद्यः आयान्तमागच्छन्तमारादैक्षत दृष्टवान् ईक्षेर्लुङि ॥६॥ ज० म०

आशङ्क्येत्यादि । अमङ्गलश्रवणात् वैदेहीं राक्षसादिभिर्भक्षितां सृगालादिभिर्वा निहतां स्वयमेवायुःक्षयात् मृतां वा आशङ्कमानस्तर्कयन् रामः सनुजस्य सोदर्य्यं लक्ष्मणम् आयान्तम् आरात् दूरादैक्षत ईक्षेर्घीं समान उदरे स्थितः सोदर्य्यः ढक्केकादिति यः रूपनामगोत्रेत्यादिना पक्षे समानस्य सः कनिष्ठभ्रातृसम्बन्धोक्तत्वेन लक्षणस्यापकर्षः सूचितः स्त्रीवचनेन त्यक्तधैर्य्यत्वात् आरात् दूरसमीपयोः ॥ ६ ॥ भ०

सीतामित्यादि । सौमित्रेरेकाकिनो दृष्टत्वान्नियतमनेन त्यक्तेति तां विज्ञाय ज्ञात्वा काकुत्स्थो रामः क्षये गृहे क्षीयतेऽस्मिन्निति अधिकरणेऽच् । क्षेमं कल्याणं सुदुर्लभं सुदुःखेन लभ्यत इति ईषदित्यादिना खल् । अमंस्त ज्ञातवान् कथं क्षये क्षेमं सुदुर्लभमिति आह सध्रीचीं सहचारिणीं न कचिदेकाकिनीं तिष्ठन्तीं सहाञ्चतीति ऋत्विगादिना किन् सहस्य सध्रिरित्यञ्चतौ वप्रत्यये सहस्य सध्र्यादेशः अञ्चतेश्चोपसंख्यानमिति ङीप् । अच इत्यकारलोपः । चाविति दीर्घः । कुतः लसुं लसनशीलां क्रियाशब्दत्वादुङ् । न भवति एकिकां लक्ष्मणेन त्यक्तत्वात् एकादाकिनिच् चासहाये इति चकारात् कन् प्रत्ययस्यादितीत्वम् । एते प्रकीर्णकाः ॥ ७ ॥ ज० म०

सीतामित्यादि । सौमित्रिणा त्यक्ताम् अतएव एकिकां सीतां विज्ञाय काकुत्स्थः क्षये निवासे क्षेमं कुशलं सुदुर्लभम् अमंस्त । एकाकिनो लक्ष्मणस्यागमनात् तद्योगज्ञानेऽपि कुतः क्षेमं सुदुर्लभमित्याह लसुमिति तां कीदृशीं लसुं लासशीलां चिपलसेति क्रुः तथाच लासान्मृतेति सम्भाव्यते अतएव साध्रीचीं सदा सहचरीं न कचिदेकाकिनीं तिष्ठन्तीं सहाञ्चतीति क्विपि सहस्यस्त्रिः सध्रिसमितिरीति

अतः परं दुहादिः।

सोऽपृच्छल्लक्ष्मणं सीतां याचमानः शिवं सुरान्।
रामं यथास्थितं सर्वं भ्राता ब्रूते स्म विह्वलः॥ ८॥
संदृश्य शरणं शून्यं भिद्यमानो वनं प्रियाम्।

सहस्य सभिः अवाश्रुतेर्गत्यर्थत्वात् नेदित्पूजार्थाश्रोरित्यस्य विषया-भावात् इडुङ्लोपोऽयाविति नकारलोपः द्विप्रश्नाह इति ईण् अचो-ऽल्लोपोर्घश्चेति अकारलोपे निमित्ताभावात् यत्वनिवृत्तौ इकारस्य दीर्घः एकादाकिनृकावसहाये इति परः स्मृते विकारसंघेत्यादिना असहाये स्वार्थे वा कः स्त्रियामाप् काश्यनाशीरके इति इत्वं चोयते-ऽस्मिन्निति चन् चिनिवासगत्योः चयेऽपचयकाले इत्यर्थौ वा। चयो रोगान्तरे वेश्मकल्यान्नापचयेष्वपीति विश्वः। एते प्रकीर्णकाः॥७॥ भ०

अतो द्विकर्माधिकारः। सोऽपृच्छदित्यादि। अकथितं चेत्यत्र दुह्याचीत्यादिश्लोकस्थान् धातून् प्रयुङ्क्ते कविः तत्र रामोऽपृच्छत् सीतामिति प्रधानं कर्म लक्ष्मणमित्यकथितं कर्म याचमानः प्रार्थय-मानः शिवं कल्याणम् अर्थात् सीतायाः शिवं प्रधानं कर्म सुरान् देवान् इत्यकथितं कर्म भ्राता लक्ष्मणः सर्वं यथावत् स्थितं ब्रूते स्म उक्तवान् सर्वमिति प्रधानं कर्म राममित्यकथितम्॥ ८॥ ज० भ०

अथ द्विकर्मकप्रकरणम्। स इत्यादि। स रामः सीतां लक्ष्मणम् अपृच्छत् दुहादेः कर्म हेतुः कर्मेति पराः स्मृते याचनार्थेत्यादिना स्वभावाद्द्विकर्मकत्वमुक्तं कर्मद्वयन्तु तात्पर्यं तस्यैव सीतामिति प्रधानं कर्म लक्ष्मणस्य हेतुत्वमर्थाल्लभ्यत एव तेनात्र न लक्ष्मणमिति। कीदृशो रामः सुरान् शिवं याचमानः दातुं प्रेरयन् अर्थात् सीतायाः शिव-मिति प्रधानं कर्म भ्राता लक्ष्मणो विह्वलो विह्वलः सन् सर्वं यथा-स्थितं सीताप्रेरणादिकं रामम् उक्तवान् वचनेन बोधितवान् राममिति हेतुकर्म॥ ८॥ भ०

संदृश्येत्यादि। रामः शरणं गृहं शून्यं संदृश्य दृष्ट्वा शोकं

प्राणान् दुहन्निवात्मानं शोकं चित्तमवारुधत् ॥ ९ ॥
गता स्यादवचिन्वाना कुसुमान्याश्रमद्रुमान् ।
आ यत्र तापसान् धर्मं सुतीक्ष्णः शास्ति तत्र सा ॥१०॥

इति दुहादिद्विकर्मकः ।

चित्तमवारुधत् चित्तं शोकं प्रावेशयत् । कीदृशः प्रियां जानकीं वनं भिक्षमाणः प्राणान् दुहन्निव त्यजन्निव प्राणानिति प्रधानं कर्म आत्मानमित्यकथितम् आत्मनः प्राणान् त्यजन्निव ॥ ९ ॥ ज० म०

संदृश्येत्यादि । रामः शरण्यं रहं शून्यं संदृश्य शोकं चित्तमवारुधत् शोकमन्तः स्थापयित्वा चित्तमपावृणोत् शोकं प्रावेशयदिति वार्थः रुधिरौज् आवृतौ इरित्वात् शासुलिद्युदिति पच्चे ङः, कीदृशः प्रियां सीतां वनं भिक्षमाणः दातुं प्रेरयन् प्रियामिति प्रधानं कर्म आत्मानं प्राणान् दुहन्निव मोचयन्निव आत्मानमिति कर्म हेतुः ॥ ९ ॥ भ०

गतेत्यादि । यत्र यस्मिंस्तपोवने सुतीक्ष्णो नाम ऋषिः धर्मं शास्ति शिक्षयति धर्ममिति प्रधानं कर्म तापसानित्यकथितं तत्र तपोवने गता स्यात् सम्भावने लिङ् आकारो निपातः स्मरणे, किं कुर्वती कुसुमान्यवचिन्वाना कुसुमानीति प्रधानं कर्म आश्रमद्रुमानित्यकथितम् अवचिन्वानेति चिनोतेः कर्त्रभिप्राये तङ् । दुह्यादिखण्डको गतः ॥१०॥ ज० म०

गतेत्यादि । बह्वेवं विललाप स इति वक्ष्यमाणश्लोकेनान्वयः यत्र सुतीक्ष्णो मुनिस्तापसान् धर्मं शास्ति तत्र सा गता स्यात् सम्भावने लिङ् लोपोऽस्यमसोरिति अस्तेरकारलोपः । किं कुर्वती आश्रमद्रुमान् कुसुमानि अवचिन्वाना द्रुमान् विघट्टयन्ती पुष्पाण्यादाना आ इत्यव्ययशब्दः स्मरणार्थे प्रयुज्यते । यदुक्तं मर्य्यादायामभिविधौ क्रियायोगेषदर्थयोः । य आकारः स ङित् प्रोक्तो वाक्यस्मरणयोरङिदिति । आमिति क्वचित् पाठः सोऽपि स्मरणार्थ एव । इति द्विकर्मकाः ॥ १० ॥ भ०

अतः परं प्रकीर्णकाः।

आः कष्टं बत ही चित्रं हुं मातर्दैवतानि धिक्।
हा पितः! क्वासि हे सुभ्रु! बह्वेवं विललाप सः ॥११॥

प्रकीर्णकानाह। आः कष्टमित्यादि। शोकेनाक्रान्तमना विलपन्नाह आः पीड़ायां पितृवियोगपीड़ितः आः इत्याह अस्मद्वियोगेन पिता प्राणांस्त्यक्तवानित्यभिप्रायः कष्टमित्याह कष्टं कृच्छ्रं भर्तृमरणादस्मद्वियोगाच्च मातुः कावस्थेत्यभिप्रायेणाह बत इति बतशब्दः खेदे सौमित्रिरपि तया सीतया अन्यादृशः सम्भावित इति विस्मितो हीत्याह हीशब्दो विस्मये यदि नाम स्त्रिया मूर्खतया तथाभिहितं सौमित्रिणा विदुषा कथं तादृशः शापो दत्त इत्यभिप्रायेणाह चित्रमिति चित्रमाश्चर्य्यं यद्देवंविधोऽपि स्खलतीति सर्वमेव दुर्जातं कैकेयीप्रभवमिति क्रुध्यन् हुं मातरित्याह हुंशब्दः क्रोधे अथवा सर्वमेतत् दैवचेष्टितं न ममानुष्ठितमित्यभिप्रायेणाह धिग्दैवतानीति धिक् कुत्सायाम् अविज्ञाय चक्षुषा प्राणांस्त्यक्तवन्तं पितरं पुनरहं द्रष्टास्मीत्यभिप्रायेणाह हा पितः! अत्र द्रष्टव्योऽसीति हा शोके हा सीते! क्व गतासीति भ्रूशब्दादप्राणिजातेरित्यादिनोङ् उवर्णान्तमात्रस्य विधानाद् बहुव्रीहिः उपसर्जनत्वञ्च पुनः स्त्रियामूङ् अन्तादिवच्चेति पूर्वं प्रत्ययान्तवत्त्वात् प्रातिपदिकत्वम् अतः सम्बुद्धौ ह्रस्वत्वं विललाप स एवं कृत्वा बह्वनेकप्रकारं विलापं कृतवान् ॥ ११ ॥ ज० म०

अथ प्रकीर्णकाः। आ इत्यादि। सीतावियोगेन पूर्वदुःखस्मरणात् पितृवियोगपीड़ितः प्राह आ इति आस्तु स्यात् कोपपीड़योः। मद्वियोगेन पिता प्राणान् जहावित्यभिप्रायेणाह कष्टमिति कष्टं कृच्छ्रं पतिमरणान् मद्वियोगाच्च मातुः कावस्था इत्यत आह बतेति खेदद्योतकोऽयं बतशब्दः लक्ष्मणोऽपि सीतया अन्यथा सम्भावित इति विस्मितः प्राह हीति ही विस्मयविषादयोः यद्यपि स्त्रीत्वान्मौर्ख्येण तया तथाभिहितं तथापि लक्ष्मणेन तादृशः शापो दातुमनुचित

इहासिष्टाशयिष्टेह सा सखेलमितोऽगमत् ।
अग्लासीत् संस्मरन्नित्यं मैथिल्या भरताग्रजः ॥ १२ ॥

इत्यभिप्रावेशादाह चित्रमिति चित्रमाश्चर्यं सर्वमिदं कैकयीप्रभवमिति दोषादाह इं मातरिति इंशब्दः क्रोधे भर्त्सने वा तथाविधाया मातृ-रपीदृशोऽकस्मात् मतिविपर्य्ययो दैवकृत एवेत्यत आह दैवतानि धिगिति धिक्शब्दो निन्दाभर्त्सनयोः अविशेषज्ञत्वादिति भावः पितृ-र्वाक्यादीदृशं दुःखमनुभवन्नहं पित्रा न त्रायते न वा पितृदर्शनेन विना ममैतद्दुःखं व्यपगमिष्यतीत्याह हा पितरिति हा विषादशुगार्त्तिषु धिक्समनेत्यादिद्धितस्य षष्ठ्यपवादत्वान्नात तद्विषयः सामान्येन हाशब्दं प्रयुज्य पश्चात् पितृसम्बोधनमतो न द्वितीयेति दुर्गः वस्तुतस्तु हाशब्द-वाच्यं दुःखं स्वविषयमेव पितृशब्देन तस्य सम्बन्धाभावः कथं द्वितीयया भवितव्यम् एतत् सकलदुःखं यत् मत्कन्या विस्मर्त्तव्यं सापि नास्तीत्या-शयेनाह हे सुभ्रु ! क्वासीति कोपेऽपि भ्रूपारुष्यं नास्तीति सुभ्रुपद-स्याभिप्रायः । एवं स्मृत्वा स रामो बहुप्रकारं विलापं कृतवान् शोभने भ्रुवौ यस्याः तस्याः सम्बोधनं सुभ्रूदीर्घाजिति ह्रस्वः ॥ ११ ॥ भ०

इहेत्यादि । इह प्रदेशे आसिष्ट उपविष्टा इदमोहः इदम् इश् इह अशयिष्ट शयितवती आसेः शीङश्च लुङ् सखेलं सलीलम् इतः प्रदेशादगमत् गतवती इत्यमेवम्प्रकारं मैथिल्याः स्मरन् अधीगर्थेति कर्मणि षष्ठी भरताग्रजो रामोऽग्लासीत् ग्लानिं गतः ग्लायतेर्लुङ् यमरमेति सगिटौ ॥ १२ ॥ ज० म०

इहेत्यादि । अत्र प्रदेशे सा सीता आसिष्ट शिलासङ् उपवेशे अत्राशयिष्ट उभयत्र टीसं इतः सकाशात् सखेलं सलीलम् अगमत् लृदित्त्वात् ङः इत्यनेनम्प्रकारेण मैथिल्याः संस्मरन् भरताग्रजो रामो-ऽग्लासीत् यमरमेति इमुसनौ मैथिल्या इति ढेच षीति कर्मणि षष्ठी दयेकृतीत्यादिना शतुर्योगे षष्ठ्याः प्रतिषेधेऽपि नञा निर्दिष्टस्यानित्य-त्वाद्वा कर्मणि षष्ठी सम्बन्धविवक्षया स्मृत्यर्थयोगे कर्मणि वा षष्ठीति परः इह इत्यत्र कृतः क्व कुहेत्यादिना निपातितम् ॥ १२ ॥ भ०

इदं नक्तन्तनं दाम पौष्पमेतद्दिवातनम् ।
शुचेवोद्बध्य शाखायां प्रग्लायति तया विना ॥ १३ ॥
ऐक्षिष्महि मुहुः सुप्तां यां हृताशङ्कया वयम् ।
अकाले दुर्मरमहो यज्जीवामस्तया विना ॥ १४ ॥

इदमित्यादि । नक्तन्तनं निशाभवम् इदं दाम पुष्पमाला पुनर्दिवातनं दिवसभवं सायमित्यादिना ट्युट्युलौ तुट् च । पौष्पं पुष्पाणामिति तस्येदमित्यण् । शुचेव शोकेनेव सम्पदादिः शाखायामुद्बध्य आत्मानमित्यर्थात् प्रग्लायति ग्लानिं गच्छति ग्लायतेः शित्यायादेशः । शाखायां प्रलम्बमानं ग्लानिं गच्छन्तं वीक्ष्येदमुत्प्रेक्षितं कुतः शोकात्तया विना सीताविच्छेदेन ॥ १३ ॥ ज० म०

इदमित्यादि । इदं नक्तन्तनं रात्रिभवं पौष्पं पुष्पसम्बन्धि दाम माला इदञ्च दिवाभवं दाम तया विना शुचा शोकेन शाखायाम् उद्बध्य अर्थादात्मानं प्रग्लायति ग्लानिं प्रयाति शाखास्थितां ग्लानमालां वीक्ष्येदमुत्प्रेक्षितम् इत्येवं विललापेति व्यवहितश्लोकेनान्वयः अरण्ये वं मुमोह स इति वक्ष्यमाणनवमश्लोकेन वा एवमुत्तरेष्वपि बोध्यं त्यलाद्यचिरेत्यादिना नक्तंदिवाशब्दाभ्याम् अव्ययाभ्यां तनट् ॥ १३ ॥ भ०

ऐक्षिष्महीत्यादि । यां वयमैक्षिष्महि ईक्षितवन्तः ईक्षेः सेटो लुङ् मुहुः सुप्ताम् अविच्छिन्ननिद्रत्वात् हृताशङ्कयेति अनिष्टशंसित्वात् प्रियजनहृदयस्य इदानीं तया विना अहो वयं यज्जीवामस्तदकाले दुर्मरमिति विललाप जीवितस्यापूर्णकाले दुःखेन मरणमिति खल् ॥ १४ ॥ ज० म०

ऐक्षीत्यादि । वयं सुप्तां यां प्रियां हृतां न वेत्याशङ्कया मुहुर्वारंवारं ऐक्षिष्महि ईक्षेष्यामहि अनिष्टाशंसीनि बन्धुहृदयानीति हृताशङ्कितम् एतेनानुरागातिशयः सूचितः । अहो आश्चर्यं यत्तया विनापि वयं जीवामस्तदस्मादकाले जीवनस्यापूर्णकाले दुःखेन म्रियते इयद्दुःखोरिति भावे खल् ॥ १४ ॥ भ०

अक्षेमः परिहासोऽयं परीक्षां मा कृथा मम ।
मत्तो मान्तर्द्धिथाः सीते ! मा रंस्था जीवितेन नः ॥१५॥

एते प्रकीर्णकाः ।

अतः परं सिजधिकारः ।

अहं न्यवधिषं भीमं राक्षसं क्रूरविक्रमम् ।
मा घुक्षः पत्युरात्मानं मा न स्निक्षः प्रियं प्रिये ! ॥१६॥

अक्षेम इत्यादि । परिहसनं परिहासः क्रीड़ा अयमक्षेमो न कल्याणकरः मम परीक्षां किं मामपश्यन् दुःखमस्ति न वेति मा कृथाः उश्चेति किच्वाद्गुणाभावः ह्रस्वादिति सिचो लोपः तस्माद्धेतोः सीते ! मान्तर्द्धिथाः अन्तर्हिता मा भूः अन्तर्द्धावित्यपादानसंज्ञायां पञ्चम्यास्तसिः प्रत्ययोत्तरपदयोश्चेति मदादेशः लुङ्स्याच्वोरिच्चेति सिचः किच्वमित्वञ्च ह्रस्वादिति सिचो लोपः नोऽस्माकं जीवितेन मा रंस्थाः क्रीड़ां मा कार्षीः रमेरात्मनेपदित्वात्तङ् । एते प्रकीर्णकाः ॥१५॥ज०म०

अक्षेम इत्यादि । कदाचित् परिहासेनान्तर्हिता सा भवेदित्याशङ्कोत्तरमिदम् अयमन्तर्द्धानरूपः परिहासोऽक्षेमः अशुभः तवादर्शनेन मम दुःखमस्ति न वेत्येवं मत्परीक्षां त्वं मा कृथाः कञस्यामि इगुङ्मेढीखनिमिति से: किच्वान्न गुणः भूसखादिति सिलोपः मत्तः सकाशात् मा अन्तर्द्धिथाः मत्कर्त्तृकदर्शनाभावेच्छया व्यवहिता मा भूः धाजस्यामि स्थादोर्ङिरिति ङिरगुणत्वञ्च पूर्ववत् सिलोपः यतोऽपायेति यतोऽन्तर्द्धिस्तदपादानं सर्वत्र हेतुमाह हे सीते ! नोऽस्माकं जीवितेन मा रंस्थाः क्रीड़ां न कुरु तवादर्शनेन प्राणा यास्यन्तीति भावः । इति प्रकीर्णकाः ॥ १५ ॥ भ०

सिचं सापवादमधिकृत्याह । अहमित्यादि । यतोऽहं राक्षसं मारीचं क्रूरविक्रमं भीमं भयानकं न्यवधिषं निहतवानस्मि हन्तेर्लुङि चेति वधादेशः अदन्तत्वाद् वृद्ध्यभावः । तस्मान्मा घुक्षः न गोपय पत्युरात्मानम् अन्तर्द्धावित्यपादानत्वं ख्यत्यात्परस्येत्युत्वं गुहेः सल इगुपधा-

माऽस्म द्राघीर्मृषा दोषं भक्तं मां मातिचिक्लिशः ।
शैलं न्वशिश्रियद्वा मा नदीं नु प्रत्यदुद्रुवत् ॥ १७ ॥

इनिटः क्यः ह्रो ढः अम्भावकत्वषत्वानि श्लिषस्च विसर्जनीयः मा नै श्लिक्षः मा न परिरब्धाः अपितु श्लिष्य मां हे प्रिये ! श्लिष आलिङ्गने क्यः ॥ १६ ॥ ज० म०

अथ सापवादश्लिजधिकारः । स्मृते ह्यधिकारः । अहमित्यादि । भीमं भीषणमूर्त्तिं क्रूरविक्रममसह्यपराक्रमं राक्षसं मारीचम् अहं न्यबधिषं हतवान् हनलौगतौ बधे अमि ल्यां सिः हनबधष्टीति बधादेशः हसादेः सेम् इत्यादौ बधवर्जनात् सेमृत्वस्तुचनात् प्रकृत्यन्तरत्वाद्वा इम् पत्युर्मत्तः सकाशात् आत्मानं त्वं मा घुक्षः न गोपय गुहूञ संवृतौ उदित्त्वाद्वेमूदिति इसोऽभावपक्षे हसषोऽनिमिजुङ इति सक् ह्रोढः भभान्तस्येति घः षढोः कः क्लिशादिति षः। हे प्रिये ! प्रियं मां मा न श्लिक्षः अपितु अवश्यमेव प्रियमालिङ्गय द्वौ निषेधौ सातिशयं प्रकृत्यर्थं गमयत इति न्यायात् श्लिषौ श्लेषे आलिङ्गनेऽर्थे पूर्वेण सक् ॥ १६ ॥ भ०

माऽस्मेत्यादि । मृषा दोषं व्यलीकं दोषं मा द्राघीः मयीत्यर्थात् स्मोत्तरे लङ् चेति चकाराल्लुङ् सल इग्रुपधेति क्यस्य न दृश इति निषेधः इरितो वेत्यङ् भावे सिच् हृजिदृशोरित्यम् हलन्तलक्षणा वृद्धिः व्रश्चेत्यादिना षत्वम् । यतोऽहं भक्तस्ततो मां भक्तं मातिचिक्लिशः नातिक्लेशय क्लिशेर्ण्यन्तात् सिपि णिश्रीत्यादिना चङ् वा णिलोपः द्विर्वचनादिः पुनर्विकल्पयन्नाह मयि दोषदर्शनात् मत्प्रतिकूलवर्त्तिनी सती शैलं नु पर्वतं किमश्यशिश्रियदाश्रिता ततो नदीं प्रत्यदुद्रुवत् प्रतिगतेत्यर्थः नुशब्दो वितर्के चङ् ॥ १७ ॥ ज० म०

माऽस्म इत्यादि । मृषा दोषं माऽस्म द्राघीः अर्थान्मयि दोषदर्शनाद्वा अन्तर्हितेत्याशङ्क्य इदमुक्तम् दृश प्रेक्षे माऽस्मेन धीच्छाविति टौ सग्विधौ दृशेर्वर्जनात् इरित्वात् ङः विकल्पपक्षे ल्यां सिः वद्रोऽकिदिति रत्वम् अनिमृत्वात् व्रजवदेति व्रिः शच्छ्राजेति षङ् । भक्तम् अनुरक्तं

ऐ वाचं देहि धैर्य्यं नस्तव हेतोरसुस्रुवत् ।
त्वं नो मतिमिवाधासीर्नष्टा प्राणानिवादधः ॥ १८ ॥
रुदतोऽशिश्वियच्चक्षुरास्यं हेतोस्तवाश्वयीत् ।

मा त्वं सानिचिक्लिशः नातिपीडय क्लिशेर्णिः प्रेरणे णिश्रीत्यङ् द्वित्वं गुणः अग्लोपः खः णेर्लोपः । निकटे यदि तिष्ठेत्तदा मद्वचनादागच्छेदित्यतोऽन्यद्विकल्पयन्नाह वामेति मय्यपि दोषदर्शनात् प्रतिकूला सती शैलं किम् अशिश्रियत् आश्रिता उत नदीं प्रत्यदुद्रुवत् प्रतिगता श्रिजसेवने द्रु गतौ अनयोरङि सुष्वोरिति द्रयुवौ । नुशब्दो वितर्के ॥ १७ ॥ भ०

ऐ वाचमित्यादि । ऐशब्दो निपातोऽभिमुखीकरणे वर्त्तते । वाचं देहि प्रार्थनायां लोट् ध्वसोरेद्धावित्येत्वम् । किमिति चेदाह धैर्य्यं नोऽस्माकं धीरता तव हेतोरसुस्रुवत् गलितं नष्टा अदर्शनं गता सती त्वन्नोऽस्माकं मतिं बुद्धिमधासीरिव बुद्धेरपाटवात् विभाषा धेट्श्व्योरिति यदा न चङ् तदा यमरमेति सगिटौ प्राणानदधः पीतवती कायस्याचेष्टत्वात् चङि रूपसाम्लोपः ॥ १८ ॥ ज० म०

ऐ वाचमित्यादि । ऐ सीते ! वाचं देहि प्रार्थनायां गो घ्वोर्दाधोर्देधेहौ तव हेतोः नोऽस्माकं धैर्य्यम् असुस्रुवत् स्रुतं पूर्ववत् चङ् । त्वं नोऽस्माकं मतिं बुद्धिम् अधासीरिव पीतवतीव बुद्धेरपाटवात् कार्य्यान्तरासंक्रमाच्चोत्प्रेक्षेयम् । नष्टा अदर्शनं गता सती प्राणानपि त्वम् अदधः इव पीतवतीव देहस्य निश्चेष्टत्वात् धेट्पाने पूर्वेण विभाषितोऽङ् एचोऽगित्या उस्येत्याल्लोपः अङोऽभावपक्षे च्लेः सिः यमरमेति इमसनौ असस्याज्असीम इति सेर्लोपः भूस्थापिबदेन इति सेर्लुकि प्राप्ते घेशाच्छासाम्न इति पक्षे तदभावः नश अदर्शने क्तः नुम्रधो मुचां नश इति क्तस्य नस्य हसुङ् न लोपोऽस्यावित्यनेन लोपः शच्छ्राजेति षङ् ऐ शब्दोऽयमव्ययोऽभिमुखीकरणे आह्वाने वा । ए ऐ शब्दौ तु हेहैवत् स्मृत्यामन्त्रणाहूतिष्विति विश्वः ॥ १८ ॥ भ०

रुदत इत्यादि । तवार्थे त्वां पश्यामीति रुदतो मम चक्षुरशि-

म्रियेऽहं मां निरास्थश्चेत्मा न वोचश्चिकीर्षितम् ॥१९॥
लक्ष्मणाचक्ष्व यद्याख्यत्सा किञ्चित्कोपकारणम्।
दोषे प्रतिसमाधानमज्ञाते क्रियतां कथम् ॥ २० ॥

श्वियत् उच्छूनम् आस्यं मुखं चाश्वयीत् विभाषा धेट्श्व्योरिति चङ् सिचौ चङीयङ् ह्मन्तेति न वृद्धिः इट् इट इटीति सिचो लोपः गुणायादेशौ मां निरास्थश्चेद्यदि मम दर्शनं निरस्तवती त्वं तदा म्रियेऽहं म्रियतेर्लुङ् लिङोश्चेति चकाराच्छित्यात्मनेपदं रिङ्शयगिति रिङ्। अतो यत्त्वया चिकीर्षितं कर्त्तुमिष्टं तन्मा मावोचः मा मा भाषिष्ठाः अपितु ब्रूहि अस्यति वक्तीत्यङ् वच उम् ॥ १९ ॥ ज॰ म॰

रुदेत्यादि। तवादर्शनाद्रुदतो मम चक्षुरशिश्वियत् उच्छूनमति-रोदनात् आस्यमपि अश्वयीत् श्विश्रोत्यादिना श्वेर्विभाषितोऽङ् अङो-ऽभावपक्षे च्ल्यां सिः नेसेक्राजादित्यादौ श्विजागुरित्युक्तेर्गुणः, त्वं चेत् यदि मां निरास्थः अदर्शनेन निरस्तवती तदा अहं म्रिये भविष्यत्-सामीप्ये वर्त्तमानत्वविवक्षा मृङ्प्राणत्यागे तुदादित्वात् शः मृङन्ते-र्वा मम् ऋद्धिः शयग्लोपे शुध्योरितीयः अस्यचोपधे वक्तास्येति ङः। वच्यस्वपितामिति व्यस्थः चिकीर्षितं कर्त्तुमिष्टं त्वं मा न वोचः अवश्यं ब्रूहि वचेर्ब्रुओ वा वचोऽरे इति वचादेशः पूर्ववत् ङः वोचा-देशश्च ॥ १९ ॥ भ॰

लक्ष्मणेत्यादि। हे लक्ष्मण! यदि सा किञ्चित् कोपकारण-माख्यदुक्तवती इदं तेनाप्रियमाचरितं पूर्ववदङ् तदाचक्ष्व कथय अज्ञाते दोषे प्रतिसमाधानं कथं क्रियतां नैवेति भावकर्मणि लोट् रिङित्या-दिना रिङ् ॥ २० ॥ ज॰ म॰

लक्ष्मणेत्यादि। हे लक्ष्मण! यदि सा सीता किञ्चित्कोपकारणं आख्यत् कथितवती तदा त्वम् आचक्ष्व कथय चक्षिङः प्रार्थनायां लोट् अदादित्वात् शपो लुक् स्कोः संयोगाद्योरन्ते च इति ककारलोपः षढोः कः सि किलादिति षः ख्याप्रकथने चक्षिङः ख्याञ् वा वक्तास्येति ङः उङ्लोपेत्याल्लोपः। अज्ञाते दोषे प्रतिसमाधानं तदपमार्जनार्थं कर्म कथं

इह सा व्यलिपद्गन्धैः स्नान्तीहाभ्यषिचज्जलैः ।
इहाहं द्रष्टुमाह्व तां स्मरन्नेवं मुमोह सः ॥ २१ ॥
तस्यालिपत शोकाग्निः स्वान्तं काष्ठमिव ज्वलन् ।
अलिमिवानिलः शीतो वने तं न त्वजिह्लदत् ॥ २२ ॥

मया क्रियतां कर्त्तव्यं रतनोर्यगिणाविति यकि कृते घोऽज्यर इति सामान्यविधिं बाधित्वा ऋद्रिः शयग्ढीप इति विशेषविधिः रित्वेऽपि पूर्ववाधितत्वात् विकृतत्वाद्वा न तेन दीर्घः किंवा यङ्ङ्रक्ष्येचर्ष्ट्रीरित्यत्र दीर्घकरणेन ऋद्रिः शयग्ढीप इत्यनेन कृतरेर्दीर्घो न स्यादिति ज्ञापितं यङ्ङ्रक्ये घोऽज्यर इत्यनेन घौ अस्रावीर्घाविव्यनेन चेष्टसिद्धेः ॥ २० ॥ भ०

इहेत्यादि । इह प्रदेशे सा सीता गन्धैर्व्यलिपत् समालिप्तवती मामात्मानञ्चेत्यर्थात् इह स्नान्ती क्रीड़ापूर्वकमभ्यषिचत् हस्तयन्त्रमुक्तसलिलेन मामभिमुखं सिक्तवतीत्यर्थः षत्वम् इह द्रष्टुं तामाह्वम् आह्वतवान् लिपिसिचिह्वश्चेति ङ्लेरङ् एवं स्मरन् मुमोह मोहं गतवान् ॥ २१ ॥ ज० म०

इहेत्यादि । इह स्थाने सा सीता गन्धैर्व्यलिपत् मामात्मनश्चेत्यर्थात् गन्धयन्तीति गन्धाश्चन्दनादयः जिलिपौशलेपे इह स्नान्ती सती सा जलैः क्रीड़ापूर्वकम् अभ्यषिचत् अर्थान्मां षिच्प्रशोञ्चरणे शोकः सुस्तुभेत्यादिना अमुव्यवधानेऽपि षत्वम् । इह द्रष्टुं तामहम् आह्वम् आह्वतवान् ह्वेञ्स्पर्द्धे सर्वत्र वक्रास्त्वेत्यादिना ङः । स राम एवं स्मरन् मुमोह मोहं गतः स्नान्तीति आदीपोरिति विभाषितनुम् ॥ २१ ॥ भ०

तस्येत्यादि । तस्य रामस्य स्वान्तं मनः क्षुब्धस्वान्तेत्यादिना निपातितं शोकाग्निः शोकोऽग्निरिव अलिपत दीपितवान् परस्मैपदेषु लिपीत्यादिना नित्ये प्राप्ते आत्मनेपदेष्वन्यतरस्यामिति विकल्पे नाङ्ग्करितजित इति क्रियाफलविवक्षायामात्मनेपदम् । काष्ठमिव स्वान्तं

स्नानमभ्यषिचताम्भोऽसौ रुदन् दयितया विना।
तथाभ्यषिक्त वारीणि पितृभ्यः शोकमूर्च्छितः॥ २३॥

ज्वलन् अतिवर्त्तमानः अनिलो वायुः शीतोऽपि सन् वने तं राममलिप्तेव दीपितवानिव अडभावपक्षे भलो भलीति सिचो लोपः न तु नैवाजिह्लदत् ह्लादितवान् शोकाग्नेरुद्धतत्वात् ह्लदेर्ण्यन्तात्सिन्नीति चङ्॥ २२॥ ज० म०

तस्येत्यादि। शोक एवाग्निर्ज्वलन् वर्द्धमानः तस्य रामस्य स्वान्तं मनः काष्ठमिव चिन्तया नीरसत्वात् अलिपत ददाह यद्यपि लेपश्चन्दनादिनोपदेहस्तथाप्यग्निना लेपो दाह एव पर्य्यवस्यति धातूनामनेकार्थत्वाद्वा शीतोऽपि अनिलः वने तं रामम् अलिप्तेव स्पृष्टवानिव मान्द्येन सम्यगस्पर्शनात् किंवा वह्निना अलिप्त ददाह अतएव न अजिह्लदत् नानन्दयत् शोकाग्नेर्वर्द्धमानत्वात् वक्तारश्चेत्यादिना आत्मनेपदे लिपादेर्ङौ विभाषितः पक्षे च्लां सिः भलखादिति सिलोपः ह्लादीश्चोदने अग्त्युरङः स्वः स्वेः सन्वत्॥ २२॥ भ०

स्नानित्यादि। असौ रामो दयितया विना शोकमूर्च्छितः शोकेन मोहं नीतः स्नातुमारब्धः मूर्च्छे हैतुमण्यन्तस्य रूपं स्नाशौचे शतृप्रत्ययः रुदन्नम्भः सलिलम् अभ्यषिचत क्षिप्तवान् शिरस्यञ्जलिना अथ स्नातः पितृभ्यो वारीणि अभ्यषिक्त दत्तवान् सिचेः पूर्ववद्विभाषाऽङ् सिचिरत्रोत्सर्गे वर्त्तते ततश्चार्थान्तरवृत्तित्वाज्जलस्य कर्मत्वम्॥ २३॥ ज० म०

स्नानित्यादि। दयितया विना शोकेन मूर्च्छितोऽपि असौ रामो रुदन् स्नान् स्नानं कुर्वन् अम्भोऽभ्यषिचत मन्त्रैः संस्कृतवान् स्वशिरसि अञ्जलिना क्षिप्तवानित्यर्थो वा तथा स्नातः पितृभ्यो वारीणि अभ्यषिक्त दत्तवान् पित्रर्थं क्षिप्तवान् वा धातूनामनेकार्थत्वात् सिचेः संस्कारक्षेपदानवाचकत्वं तेन जलस्य कर्मत्वम् अभ्युच्चये करणत्वं यथा जलेन सिञ्चतीति पूर्ववत् ङः शीक इति षत्वं मूर्च्छा संमोहे उच्छ्रये अग्न्तात् क्तः केवलात्तु तत्तवक्तोरादित इम् न स्यात् मूर्च्छा जाताऽस्येति इतोऽस्य जात इति इतो वा॥ २३॥ भ०

तथार्त्तोऽपि क्रियां धर्म्यां स कालेनामुचत् क्वचित् ।
महतां हि क्रिया नित्या छिद्रे नैवावसीदति ॥ २४ ॥
आह्वास्त स मुहुः शूरान् मुहुराह्वत राक्षसान् ।
एत सीताद्रुहः संख्ये प्रत्यर्थयत राघवम् ॥ २५ ॥

तथेत्यादि । स रामस्तेन प्रकारेणार्त्तोऽपि क्वचिदपि धर्म्यां क्रियां काले नामुचत् न त्यक्तवान् अस्मादेव यतो महतां सत्यपि कृच्छ्रे व्यसने नित्या क्रिया नावसीदति आङ्पूर्वाद्दत्तेर्ऋ गतेर्वा निष्ठायाम् कृति-धातौ टद्भिः सुचेः ऌदनुबन्धत्वादङ् क्वजः शच रिङि यङो ॥२४॥ज० म०

तथेत्यादि । तथा तेन प्रकारेण आर्त्तोऽपि व्याकुलोऽपि स रामः क्वचिदपि काले धर्म्यां धर्मादनपेतां क्रियां नामुचत् न त्यक्तवान् मुच्-ऌदपकौसोक्ते ऌदित्वात् ङः आङ्पूर्वाद्दर्त्तेः क्तः गेधौरनेधिन इति ञिः । हि यस्मात् महतां छिद्रे व्यसने सत्यपि नित्या क्रिया नैवावसी-दति नापगच्छति क्रियेति कुः शस्येति शः स्लोत्वञ्च ऋद्रिः श्रुध्वोरि-तोयः यदकरणे प्रत्यवायः सा नित्या ॥ २४ ॥ भ०

आह्वास्तेत्यादि । पुनः पुनरभिभवितुं शूरानाह्वास्त आहूतवान् तथा राक्षसानाह्वत पूर्ववत् विकल्पः स्पर्द्धायामाङ इत्यात्मनेपदं कथमा-हूतवानित्याह हे सीताद्रुहः ! सीताहिंसकाः ! शूराः ! राक्षसाः ! वा एत आगच्छत आङ्पूर्वादिनो लोट् । संख्ये संग्रामे राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत प्रत्यर्थिन्शब्दात्तत्करोतीत्यर्थे णिच् तदन्ताल्लोटः परस्मै-पदम् अर्थयाजीयामित्यस्य तु स्वार्थिकण्यन्तस्य सर्वदात्मनेपदित्वात् प्रत्यर्थयध्वमिति वा स्यात् ॥ २५ ॥ ज० म०

आह्वेत्यादि । स रामो मुहुर्वारंवारं शूरान् आह्वास्त अर्थात् युद्धाय राक्षसानपि आह्वत स्पर्द्धायामाङ इति मं पूर्ववत् ङसौ । कथ-माह्वत इत्याह हे सीताद्रुहः ! सीताहिंसकाः ! यूयम् एत आग-च्छत आङ्पूर्वादिनो गौ । संख्ये युद्धे राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत प्रत्यर्थिशब्दात् ञेः तत्याख्यानेञिरिति कृतौ ञिः ञीमंस्येति ञिन्वे टेर्लोपः अर्थकङ् याचन इत्यस्य वा रूपं क्वचिदात्मनेपदिनोऽपि परस्मै-

स्वपोषमपुषद्युष्मान् या पक्षिमृगशावकाः !।
अद्युतच्चेन्दुना सार्द्धं तां प्रब्रूत गता यतः ॥ २६ ॥
गिरिमन्वक्षपद्रामो लिप्सुर्जनकसम्भवाम्।
तस्मिन्नायोधनं वृत्तं लक्ष्मणायाभिषन्महत् ॥ २७ ॥

पदितेति न्यायात् केचित्तु चुर्म्योर्जिर्वैति जेरभावपक्षे ङित्त्वान्न औतू-भयपदमेवेत्याहुः ॥ २५ ॥ भ०

स्वपोषमित्यादि। हे मृगपक्षिणां शावकाः पोताः ! या सीता युष्मान् स्वपोषमपुषत् पुष्टवती स्वे पुष इति णमुल् यथाविध्यनु-प्रयोगः। तां प्रब्रूत कथयत यतो यत्र आद्यादित्वात्तसिः गता सत्य-द्युतत् द्योतते स्म सार्द्धमिन्दुना चन्द्रमसा तुल्यत्वात् ॥ २६ ॥ ज० म०

स्वपोषमित्यादि। एवंप्रकारेण मृगादीनप्याह्वास्तेति सम्बन्धः हे पक्षिणां मृगाणाञ्च शावकाः ! शिशवः ! या सीता युष्मान् स्वपोषम् अपुषत् स्वेन आत्मना धनेन वा पुष्टवती अभिधानात् स्वपूर्वात् पुषेर्णम् तदनुप्रयोगश्च या इन्दुना सार्द्धम् अद्युतत् तस्याद्योतनेन इन्दोः स्वभा-वेन गुणीभूतत्वात् ततोऽस्युत्कर्षः सूच्यते सार्द्धंशब्देन समानत्वं वा लक्ष्यते उभयत्र शास्त्विद्युत्पुषादेरिति ङः पे ङ विधानादेव द्युतेः पं उक्तञ्च अतएव पं तां प्रब्रूत वदत तत्क्रियाख्यव्येव कथनं किमर्थम् इत्याशङ्कायामाह गतेति यस्माद्गता अन्यत्र मां त्यक्त्वेत्यर्थात् केचित्तु यतो यत्र गता तं देशञ्च ब्रूतेत्यध्याहरन्ति केचित्तु या यतो यत्नात् अपुषत् इन्दुना सार्द्धं साम्यं गता या अद्युतच्च यतीङ्यत्ने इत्यस्य क्विपीत्याहुः केचित्तु हे पक्षिमृगशावकाः ! गतायतः सन्तः तां प्रब्रूत गतं गमनं भावे क्तः न यतन्ते इति अयतः कर्त्तरि क्विप् गताय अयतोऽयत्नवन्तः स्थिराः सन्त इत्यर्थः इत्याहुः गताय नास्ति यत् यत्नो येषां तादृशाः सन्त इत्यन्ये ॥ २६ ॥ भ०

गिरिमित्यादि। गिरिं लक्ष्यीकृत्य गतः लृदित्वादङ् किमर्थं लब्धु-मिच्छुः सनिमीमेत्यादिना इस् अत्र लोप इत्यभ्यासलोपः खरि चेति चर्त्वं जनकसम्भवां सम्भवत्यस्मादिति सम्भवः ऋदोरप् जनकः सम्भवो

सीतां जिघांसू सौमित्रे! राक्षसावारतां ध्रुवम्।
इदं शोणितमभ्यग्रं संप्रहारेऽच्युतत्तयोः॥ २८॥

यस्मात्तां सीताम् अस्मिन् गिरौ आयोधनं युद्धं महदतिशयत्वात् वृत्तं लक्ष्मणायाशिषत् कथितवान् क्रियायोगे चतुर्थी सर्तीत्यादिनाऽङ् शास इदङ्हलोरितीत्वं शासिवसीति षत्वं कथवकथयदित्याह॥२७॥ ज०म०

गिरीत्यादि। जनकसम्भवां सीतां लब्धुमिच्छू रामो गिरिमनु लक्ष्यीकृत्य असृपत् सृप्लृ गतौ लृदित्त्वात् ङः लभेः सनिमिमीमादेत्यादिना अकारस्य इस् स्त्रिलोपश्च स्यादेः सोलोपश्च भप्भसैरिति षः। सम्भवत्यस्मात् सम्भवः जनकः सम्भवो यस्याः जनकात् सम्भवनं यस्या इति वा तस्मिन् गिरौ वृत्तं महदायोधनं युद्धं लक्ष्मणायाशिषत् उक्तवान् तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थस्तत्र चतुर्थीति परः शासु अनुशिष्टौ शासुलिद्युदिति ङः शासुङिद्वसङे इति इत्वं किवादिति षत्वम्॥ २७॥ म०

सीतामित्यादि। इत्येवं लक्ष्मणायाशिषदिति श्लोकचतुष्टयं यावत् सम्बध्यते। हे सौमित्रे! सीतां हन्तुमिच्छन्तौ राक्षसावारतामागताविति ध्रुवं निश्चितम् उत्प्रेक्षायामित्यन्ये आङ्पूर्वादृत्तेरादादिकादेवाङ् गुपादिस्तत्वे शाक्तिसाहचर्येण तस्यैव ग्रहणात् अदृशोङीति गुणः आङ्विनाप्यडागमे कृते रूपमिदं हन्तेः सनि अज्झनगमांसनीति दीर्घः अभ्यासाच्चेति घत्वं कुतो ज्ञातमित्याह इदमभ्यग्रं शोणितं तयोः संप्रहारे युद्धे अच्युतत् गलितं च्युतिरक्षरणे अकर्मकोऽत्र इरनुबन्धत्वादिरितो वेत्यङ् सीतां भक्षयितुं तयोरेव विवादो वृत्त इति भावः॥ २८॥ ज० म०

सीतामित्यादि। इत्येवं लक्ष्मणायाशिषदिति श्लोकचतुष्टयेषु सम्बध्यते हे सौमित्रे! ध्रुवं निश्चितम् उत्प्रेक्षे वा सीतां हन्तुमिच्छू राक्षसावारताम् आङ्पूर्वात् ऋ्गतिगत्याम् इत्यस्मात् ऋप्रापणे चेत्यस्माद्वा वक्तास्येत्यादिना पक्षे ङः ऋदृशोर्ङिगुणः आङा विनापि रूपमेतत् हन्तेः सनिघोऽझनिङ्गमासिति दीर्घः खेर्हो घः। कुतो ज्ञातमित्याह

इदं कवचमच्योतीत् साश्वोऽयं चूर्णितो रथः ।
एह्यमुं गिरिमन्वेष्टुमवगाहावहे द्रुतम् ॥ २९ ॥
मन्युर्मन्ये ममास्तम्भीद्विषादोऽस्तभदुद्यतिम् ।
अजारीदिव च प्रज्ञा बलं शोकात्तथाजरत् ॥ ३० ॥

तयोरेवं संप्रहारे युद्धे इदम् अभ्ययस् अभिनवं शोणितम् अच्युतत् गलितं च्युतिरचरणेऽकर्मकः इरित्त्वात् शासुलिद्युदित्यादिना पक्षे ङः सीतामत्तुं तयोरेव विरोधो जात इति भावः ॥ २८ ॥ म०

इदमित्यादि । इदं कवचमच्योतीत् भ्रष्टम् अङभावे सिज्जेव भवति अयं रथः साश्वचूर्णित आस्ते यतश्चैवं तस्मादेहि आगच्छ द्रुतं किं पश्चाद्विलम्बसे अमुं गिरिमवगाहावहे विलोड़याव: किमर्थम् अन्वेष्टुं सीतामित्यर्थात् एतत्सर्वं पर्वतसमीपे कथ्यते ॥ २९ ॥ ज० म०

इदमित्यादि । कवचमिदम् अच्योतीत् भ्रष्टम् इरित्त्वात् ङाभावपक्षे च्लां सिः अश्वेन सह चूर्णितोऽयं रथस्तास्ते यत एवं तस्मात् द्रुतं शीघ्रम् एहि आगच्छ आङ्पूर्वस्येतेर्लोटि रूपम् अन्वेष्टुमर्थात् सीताम् अमुं गिरिम् आवाम् अवगाहावहे सर्वतः पर्य्यटावः ॥ २९ ॥ भ०

मन्युरित्यादि । मन्युर्मम शोकः मन्ये इत्यहं सशोकः सहज्जनेऽस्तम्भीत् स्तब्धवान् विषाद उद्यतिमस्तभत् अत पक्षे अनुनासिकलोपः प्रज्ञा च तत्र विवेकिनी बुद्धिः अजारीत् विवेकवैकल्यात् जीर्णेव तथाशब्दः समुच्चये बलं शोकादजरत् जीर्णं स्वकार्य्याकरणात् ऋदृशोऽङीति गुणः जृस्तम्भित्यादिना सिजङौ ॥ ३० ॥ ज० म०

मन्युरित्यादि । हे सौमित्रे ! मन्युः शोको मम मन्ये स्कन्धमूर्त्तिशिराद्वयमस्तम्भीत् शोकजन्यवायुना मन्यास्तम्भो नाम व्याधिर्जात इत्यर्थः मन्युशोकौ तु शुक् स्त्रियां पश्चाद्ग्रीवाशिरा मन्येति चामरः। विषाद उत्साहविपर्य्यय उद्यतिम् उद्यममस्तभत् स्तन्भुधातुः सौत्रिकः शासविद्युदिति वाङ् हस्वङ् न लोपः ङाभावपक्षे च्लां सिः उत्पूर्वाद्यमेः तौ वनतनाद्यनिमामिति मलोपः मम प्रज्ञा बुद्धिश्चाजारीत् कर्त्तव्यमूढ़त्वाज्जीर्णेव तथा मम बलं शोकात् अजरत् कार्य्याक्षमता-

गृध्रस्येहाश्वतां पक्षौ क्षतौ वीक्षस्व लक्ष्मण ! ।
जिघांसोर्नूनमापादि ध्वंसोऽयं तां निशाचरात् ॥२१॥
क्रुद्धोऽदीपि रघुव्याघ्रो रक्तनेत्रोऽजनि क्षणात् ।
अबोधि दुःखं त्रैलोक्यं दीप्तैरापदि भानुवत् ॥ २२ ॥

ज्जीर्णमिव पूर्ववद्वाङः इग्नोर्गुरिति गुणः पक्षे सिः व्रजवदेति व्रिः तयेति सहुञ्चयाभ्युपगमसाहश्योश्चिति दृद्धाः ॥ २० ॥ भ०

गृध्रस्येत्यादि। हे लक्ष्मण ! इह प्रदेशे गृध्रस्य पक्षौ क्षतौ छिन्नौ अश्वतां भूनौ पूर्ववद्ङि श्वयतेरः इति वीक्षस्व नूनमवश्यं सीतां जिघत्सोरत्तुमिच्छोर्गृध्रस्य अदेर्लुङ्सनोर्घस्लृ। निशाचरादयं ध्वंसः पक्षच्छेद आपादि उत्पन्नः कर्त्तरि लुङ् चिण्तेपद इति च्लेश्चिणादेशः तशब्दस्य चिणो लुक् ॥ २१ ॥ ज० म०

गृध्रेत्यादि। हे लक्षण ! इह स्थाने गृध्रस्य क्षतौ छिन्नौ पक्षौ अश्वतां वायुना मांसादिपरिणामेन वा वृद्धिं गतौ इति वीक्षस्व पश्य टुओश्विगतिवृद्ध्योः पूर्वेण वा ङः वच्यश्विपतामिति श्वः नूनं निश्चितं तां सीतां जिघांसोर्गृध्रस्य अयं ध्वंसः पक्षच्छेदः निशाचरादापादि उत्पन्नः पदन्तनीण् घे इति कर्त्तरि इण् इनस्तनुलोपः जिघत्सोरिति पाठे अत्तुं भोक्तुमिच्छोः घस्लृदः सनिति अदेर्घस्लृ सत्स्वरे ॥२१॥ भ०

क्रुद्ध इत्यादि। तदेवं रघुव्याघ्रो रामः क्रुद्धोऽदीपि दीप्तवान् क्षणाच्च रक्तनेत्रोऽजनि जातः जनिबध्योश्चेति न वृद्धिः। त्रैलोक्यं निहन्मि यस्मिन् हन्यमानेऽपि सीताद्रुहोऽपि नश्यन्ति इत्यभिप्रायेण दुःखमबोधि बुध्यते स्म किंवा रामस्य दारा ह्रियन्ते तदान्येषु का कथा इति दुःख्यं त्रैलोक्यमबोधि दीप्तैस्तेजोभिर्हेतुभिरापूरि वर्द्धते स्म भानुवदादित्यवत् दीप्तैरिति भावे निष्ठा सर्वत्र कर्त्तरि लुङ् दीपजनेत्यादिना चिच् ॥ २२ ॥ ज० म०

क्रुद्ध इत्यादि। लक्ष्मणायैवमुक्त्वा रघुव्याघ्रो रामः क्रुद्धः सन् अदीपि जज्वाल क्षणाच्च रक्तनेत्रोऽजनि जातः त्रैलोक्यमेवं दुःखम् अबोधि ज्ञातवान् शत्रुमलब्ध्वा तन्नाशाय त्रैलोक्यमपि नाशयिष्या-

अताय्यस्योत्तमं सत्वमप्यायि कृतकृत्यवत्।
उपाचायिष्ट सामर्थ्यं तस्य संरम्भिणो महत्॥ २३॥
अदोहीव विषादोऽस्य समरुद्धेव विक्रमः।
समभावि च कोपेन न्यश्वसीचायतं मुहुः॥ २४॥

सीत्याशय: येनाहमपि दुःस्थः कृतस्तेन सुतरां जगद्दुःस्थमिति वा दीप्तैस्तेजोभिर्हेतुभिरापूरि वर्द्धते स भानुरिव दीप्तेर्भावे क्तः सर्वत्र पदस्तनीण् घे इत्यादिना कर्त्तरि पाक्षिक इण् इणस्तनृलोपः जनवधः सेन इत्यादिना जनेर्न्तृ खः॥ २२॥ भ०

अतायीत्यादि। अस्य रामस्य उत्तमं सत्वमभिप्रायः शोकव्यसनयोरविकारत्वात् अतायि सन्ततं नान्तरा विच्छिद्यते स्म अप्यायि दृंहितं कृतकृत्यवत् समाप्तक्रियवत् हस्ततलस्थं शत्रुवधं मन्यमानस्य उभयत्रापि पूर्ववच्चिण्। तस्य रामस्य संरम्भिणः शत्रुविषये क्षुभितचित्तस्य सामर्थ्यं बलमुपाचायिष्ट स्वयमेवोपचीयते स्म चिनोतेरचः कर्मकर्त्तरीति चिण् पक्षे चिण्वदिट् चेति॥ २३॥ ज० म०

अतेत्यादि। अस्य रामस्य सत्वं व्यवसायः स्वभावो वा अतायि सन्ततं बभूव नान्तरा विहन्यते स्म उत्तमं व्यसनेऽपि अविकृतं तायृङ्पातनसन्तत्योः अप्यायि वर्द्धते स्म कृतकृत्यवत् समाप्तक्रिय इव क्रोधोत्साहाधिक्यात् विहितो वैरिवध इत्यध्यवसायात् प्यायीङ् वृद्धौ उभयत्र पूर्ववद्वा इण् संरम्भिणः शत्रुविषये क्रुद्धस्य तस्य रामस्य सामर्थ्यं महदुपाचायिष्ट स्वयमेवोपचीयते स्म इनयहदृश च इति चिनोतेः सेमिण् कर्मकर्त्तरि चायृङ् निशानेऽर्थे इत्यस्यानेकार्थत्वात् कर्त्तर्येवेदं रूपमित्यन्ये। सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुष्विति विश्वः॥ २३॥ भ०

अदोहीत्यादि। अस्य रामस्य विषादः प्रागुत्पन्नोऽदोहीव स्वयं क्षरित इव अथवा अदोहीव प्रपूर्य्यते स्मेव विक्रमः पुरुषकारः समरुद्धेव संरुध्यते स्म इव कर्मवदित्यादिना कर्मवद्भावेन प्राप्तस्य चिणो नरुध इति निषेधः। तेन सिजेव भवति झलो झलीति सिचो लोपः

अम्प्रकरणं कथ्यते ।

अथालब्ध धनूरामो जगर्ज गजविक्रमः ।
रुणद्मि सवितुर्मार्गं भिनद्मि कुलपर्वतान् ॥ २५ ॥

अतस्तयोर्धीः अञ्चाञ्जग्भ्रणीति धत्वजश्त्वे कोपेन च समभावि सम्भूतं चिण् भावकर्मणोरिति भावे चिण् तेलोक्यदौःस्थ्यावबोधाज्ज्ञातखेदः सन् आयतं दीर्घं न्यश्वसीत् निश्वसितवान् ह्मन्तेति वृद्धिर्न भवति मुहुरिति सर्वत्र योज्यम् ॥ २४ ॥ ज० म०

अदोहीत्यादि । अस्य रामस्य प्रागुत्पन्नो विषादः स्वयमेवादोहि इव क्रोधातिशयात् स्वयं चरित इव प्रूर्यते स्वेत्यन्ये वेणजदुह इति कर्मकर्त्तरि वा इण् । विक्रमोऽपि समरुद्धेव स्वयमेवान्तः प्रविष्ट इव नतपुरुषसढेति कर्मकर्त्तरि इण् निषेधः अत्स्वादिति सिलोपः । अस्य कोपेन समभावि सम्भूतं रतनोर्यगिणाविति भावे इण् कोपात् मुहुर्वारंवारम् आयतं दीर्घं यथा स्यात्तथा रामो न्यश्वसीत् हमादेः सेम इत्यादौ श्वसवर्जनात् न वृद्धिः । इति सिजधिकारः ॥ २४ ॥ भ०

इतःप्रभृति अम्प्रकरणमधिकृत्याह । अथेत्यादि । अथानन्तरं रामो धनुरालब्ध गृहीत्वा जगर्ज विस्फुर्जितवान् धनूराम इति ढ्रलोप इति दीर्घः । गजगतिः सवितुः सूर्य्यस्य मार्गं पन्थानं रुणद्मि आवृणोमि शरैरित्यर्थात् तथा भिनद्मि विदारयामि कुलपर्वतान् ॥ २५ ॥ ज० म०

अथ नशब्दाधिकारः । स च समते अण् । अथेत्यादि । अनन्तरं गजपराक्रमो रामो धनुरालब्ध गृहीत्वा जगर्ज सिंहनादं चकार किं कृत्वा जगर्जेत्याह अहं सवितुः सूर्य्यस्य मार्गं पन्थानं रुणद्मि आवृणोमि अर्थात् शरैः मृदुत्वादेव ममेदृशं कर्म संवृत्तम् इदानीं महतां काण्डभयादन्योऽपि सीतां दास्यति न च पुनरेवं कोऽपि करिष्यतीति भावः अतएव न तृणेद्मीति लोकोऽयमिति वक्ष्यति कुलपर्वतान् पृथिव्या अवस्तम्भकान् पर्वतानपि अहं भिनद्मि विदारयामि रुधिरौज आवृतौ भेदीमिदिर्भिदि द्विवसुतदरुधेति अणेव ध्यनादिवत् प्रकृतिप्रत्यययोः

रिणच्मि जलधेस्तोयं विविनच्मि दिवः सुरान् ।
चुणद्मि सर्पान् पाताले छिनद्मि क्षणदाचरान् ॥२६॥

साहाय्यकारित्वाच्च घ् दिवसुतुदरुधक्रादेरिति षष्ठ्येकवचनान्तं पदं तेन दिवादिप्रभृतीनां सम्बन्धे श्यनादयोरपरे निर्दिष्टा इत्यर्थः ते कुत्र भवन्तीत्याशङ्क्य वृत्तावुक्तम् एभ्य इति तेन सूत्रे षष्ठीनिर्देशात् रुधादेः श्नम् मित्त्वादन्त्याच्च उत्तरः एभ्य इति वृत्तौ पञ्चमीनिर्देशादन्ये प्रकृतेरुत्तर इति बोध्यं न च सूत्रे पञ्चमीनिर्देशेऽपि मित्त्वात् श्नम् रुधादेरन्त्यादचः परे भवितुमर्हति शमित इत्यस्य षष्ठ्यन्त एव विषयत्वात् शासुलिङ्ग्रुपुषादेरिति पञ्चम्यन्तत्वात् प्रकृतेः परो ङः न तु ङित्वादन्त्यस्य स्थाने इत्यादिदर्शनात् षष्ठीनिर्देशेऽपि पञ्चम्यर्थो गम्यते तथाहि अनडुत्पुंप्रयोगच्छीनावामेकत्ववाचिनाम् । नित्यं कः साहुव्रीहौ वा स्याद्वित्वबहुत्वयोरिति । अन्यत्रापि नित्यात्वतां स्वरान्तानां सृजिदृश्योश्च वेट्थलि । तृचि नित्यानिटः सुसेदृव्येऽदां नित्यमिट् थलीति ॥ २५ ॥ भ०

रिणच्मीत्यादि । जलधेस्तोयं रिणच्मि रिक्तीकरोमि रिचिर-विरेचने दिवः स्वर्गात् सुरान् विविनच्मि पृथक्करोमि विचिर पृथग्भावे चुणद्मि चूर्णयामि सर्पान् पाताले क्षुदिरम्पेषणे श्नम् क्षुभ्नादिष्विति णत्वं छिनद्मि क्षणदाचरान् राक्षसान् द्विधा करोमि छिदिरद्वैधीकरणे ॥ २६ ॥ ज० म०

रिणच्मीत्यादि । जलधेः समुद्रस्य तोयं रिणच्मि रिक्तीकरोमि रिचिर्ॲधोविरेके रेफात् श्नमो णत्वम् सुरान् दिवः स्वर्गात् विविनच्मि पृथक्करोमि विचिर्लिंधौञ् पृथक्त्वे विपूर्वः सुरायोगात् सुराः अर्श आदित्वादः तदुक्तं सुरापरिग्रहाद्देवाः सुरा इत्यभिविश्रुता इति । किं वा सुरन्ति भान्ति ईशते वा इति सुरा सुरश्च ऐश्वर्ययोरित्यस्मात् इगुपधज्ञाप्रीकिरः क इति कः पाताले सर्पान् चुणद्मि चूर्णयामि ञधीक्षुदिः क्षुदिः क्षुभ्नादिषु णत्वं पकारात्सत्वं पतन्ति लोका अस्मिन्निति पातालं निपातनात् क्षणदाचरान् छिनद्मि द्वैधीकरोमि छिदिधौञ्च्छेदे ॥ २६ ॥ भ०

यमं युनज्मि कालेन समिन्धानोऽस्त्रकौशलम् ।
शुष्कपेषं पिनष्म्युर्वीमखिन्दानः स्वतेजसा ॥ २७ ॥
भूतिं तृणह्मि यक्षाणां हिनस्मीन्द्रस्य विक्रमम् ।
भनज्मि सर्वमर्य्यादास्तनच्मि व्योमविस्तृतम् ॥ २८ ॥

यममित्यादि । यममपि कालेन तदधीनेन मृत्युना युनज्मि सम्बध्नामि अस्त्रकौशलं समिन्धानः संवर्द्धयन् ञि इन्धीदीप्तौ आत्मनेपदिनो लटः शानच् श्नान्नलोपः श्नसोरल्लोपः उर्वीं शुष्कां कृत्वा चूर्णयामि पिष्लृसंचूर्णने शुष्कचूर्णरुक्षेषु पिष इति णमुल् अखिन्दानः स्वतेजसा दैन्यमभजन् अपरिश्राम्यन् खिददैन्ये पूर्ववल्लोपः ॥ २७ ॥ ज० म०

यममित्यादि । यममपि कालेन मृत्युना अहं युनज्मि हन्मीत्यर्थः युजिर्योगे युतौ अस्त्रकौशलं समिन्धानः वर्द्धयन् इन्धीञ् भञ्जिद्युतौ शानः श्नान्नलोपश्च इत्युङ्लोपः नशोन्नेऽपाविति नस्य अकाररहितत्वम् । उर्वीं शुष्कपेषं पिनष्मि चूर्णयामि धौपिष्लृ चूर्णने शुष्कचूर्णरुक्षात् पिषो णमुल् गतार्थत्वे तदनुप्रयोगस्येति परः स्वमते चरणश्वेत्यस्य योगविभागात् चं शुष्यचो मकव इति शुषेः क्तस्य कः स्वतेजसा अखिन्दानः दैन्यमभजन् अपरिश्राम्यन् वा खिदङधौदैन्यके नशोन्नेऽपौ ॥ २७ ॥ भ०

भूतिमित्यादि । यक्षाणां भूतिं सम्पदं तृणेह्मि उत्सादयामि उतृदिर हिंसानादरयोः इन्द्रस्य विक्रमं हिनस्मि अपनयामि हिंसि हिंसायाम् इदितो नुम् तस्य श्नान्नलोपः सर्वमर्य्यादाश्च व्यवस्थाः सर्वेषां भनज्मि मर्दयामि भञ्ज आमर्दने श्नान्नलोपः तनच्मि व्योमविस्तृतं सङ्कोचयामि तृच व्याच्छादने क्वान्तेन चौरादिकस्य रूपं तञ्चूसङ्कोचे श्नान्नलोपः कस्मादेवं प्रवृत्तस्त्वमिति वेदाह ॥ २८ ॥ ज० म०

भूतिमित्यादि । यक्षाणां भूतिं सम्पदं तृणेह्मि नाशयामि तृहञ् धिर्नादरेच चकाराद्धिंसायाम्, इन्द्रस्य विक्रमं हिनस्मि अपनयामि हिस्धिर्हिंसे नशोनल्लोपश्च इति इदित्त्वात् क्वतनुणो लोपः सर्वेषां मर्य्यादा व्यवस्था भनज्मि निवर्त्तयामि भञ्जोधौ मोटने व्योम्न आकाशस्य

न तृणेह्मीति लोकोऽयं मां विन्ते निष्पराक्रमम्।
एवं वदन् दाशरथिरपृणग्धनुषा शरम्॥ ३९॥

अथ प्रकीर्णकाः।

न्यवर्त्तयत् सुमित्राभूस्तं चिकीर्षुं जगत्त्रयम्।
ऐचेतामाश्रमादाराद्गिरिकल्पं पतत्त्रिणम्॥ ४०॥

विस्तृतं विस्तारं तनच्मि सङ्कोचयामि तञ्चुधसंकुचि तनज्मीति पाठे तनृजुधसङ्कोचे स्तृनज्स्तृतावित्यस्माद्भावे क्तः व्योमविशेषणे विस्तृतमिति निरर्थकं स्यात्॥ ३८॥ भ०

न तृणेह्मीत्यादि। न तृणेह्मि न मारयामि इति मत्वा तृहि-हिसि हिंसायां श्नम् तृणह इम्। अयं लोको मां निष्पराक्रमं निर्वीर्य्यं विन्ते विचारयति विदविचारणे इत्यस्मादात्मनेपदिनः श्नम्। श्नलोपः। एवमुक्तेन प्रकारेण वदन् दाशरथिः धनुषा शरम् अपृणक् पृणक्ति स्म पृचीसंपर्के लङि श्नम् हल्ङ्यादिलोपः कुत्वम् इति श्नम् विकरण-निदर्शनम्॥ ३९॥ ज० म०

न तृणेह्मीत्यादि। कथमेवं प्रवृत्तिरित्याह अहं न तृणेह्मि न हन्मि इति मत्वा मनसीत्यर्थात् अयं लोकः मां निष्पराक्रमं विन्ते विचारयति तेन मे पत्यपहारो वृत्त इति भावः धौविदङ् सोमांशे नणोन्ऽणौ तृहभ हिंसे तृह इण् पिडसे इति नण इण् ककारात् णत्वम्। दाशरथीराम एवं वदन् धनुषा शरम् अपृणक् युनक्ति स्म पृच् धीच् सम्पर्के हलङ्यादिसेरिति दिलोपः चिङिति कुङ् कृतो णत्वं पृणाति हिनस्तीति शरोऽनन्तः तालव्यादिः दन्त्यादिरप्यस्ति चित्तपुङ्खः शरः सर इति त्रिकाण्डशेषः। इति नश्नव्यादिकारः॥ ३९॥ भ०

इतः प्रकीर्णकश्लोकानाह। न्यवर्त्तयदित्यादि। तं रामं जगत्-त्रयं चिकीर्षुं कर्त्तुमिच्छुं सुमित्राभूर्लक्ष्मणो न्यवर्त्तयत् निवर्त्तितवान् भ्रातः! अलं कोपेन त्वया सार्द्धं कः संग्रामे युद्धं दातुं समर्थः यदत्र युक्तं तत्प्रतिविधीयतामिति भवनं भूः सम्पदादित्वात् क्विप् सुमित्राया

तं सीताघातिनं मत्वा हन्तुं रामोऽभ्यधावत ।
मा वधिष्ठा जटायुं मां सीतां रामाहमैक्षिषि ॥४१॥

भूर्यस्य ऐक्षेतां रामलक्ष्मणौ दृष्टवन्तौ लङि रूपं पक्षिणं गिरिकल्पं महाप्राणित्वात् आरात् समीपे दूरान्तिकार्थैरिति पञ्चमी ॥ ४० ॥ ज० म०

अथ प्रकीर्णकाः। न्यवेत्यादि। इत्थं जगतः क्षयं कर्त्तुमिच्छन्तं तं रामं सुमित्राभूर्लक्ष्मणो न्यवर्त्तयत् निवारयामास अन्यापराधेनान्यदण्डानौचित्यात् सुमित्रा भूरुत्पत्तिस्थानं यस्य सुमित्रायां भूर्भवनं यस्येति वा सुमित्राया भवतीति वा क्विबन्तमिदं रूपम् । अथ रामलक्ष्मणौ आरात् समीपे गिरिकल्पं पर्वततुल्यं पतत्रिणं पक्षिणम् ऐक्षेतां दृष्टवन्तौ अन्यारादितरर्त्ते इति पञ्चमी ॥ ४० ॥ भ०

तमित्यादि। तं सीताघातिनं सीता हतानेनेति मत्वा रामो हनिष्यामीत्यभ्यधावत धावुगतिशुद्ध्योरित्यस्माल्लङि स्वरितत्वादात्मनेपदं तं हन्तुमुद्यतं रामं जटायुराह मा वधिष्ठा इति हे राम ! मां जटायुं मा वधिष्ठाः मा वधीः वधबन्धने इत्यस्मादनेकार्थत्वादात्मनेपदिनः सेटो लुङि रूपं न हन्तेः सत्याङि आङो यमहन इत्यात्मनेपदं नास्ति अकर्मकादित्यनुवृत्तेः स्वनामपरिकीर्त्तनं तव पितुरहं सखेति ख्यापनार्थं सीतामैक्षिषि दृष्टवानहं लुङुत्तमैकवचने अतो मां मा वधिष्ठाः ॥ ४१ ॥ ज० म०

तमित्यादि। तं पक्षिणं सीताघातिनं सीतामयं हतवान् इति मत्वा हन्तुं रामोऽभ्यधावत वेगेन अभिमुखं गतवान् धावुञ्जवे स्वजि उपास्थितेवस्तक्तौ तमिति वक्ष्यमाणश्लोकेनान्वयाद् मा वधिष्ठा इत्यादिपद्यार्द्धं हन्तुमुद्यतं रामं प्रति जटायुवाक्यमिति गम्यते हे राम ! जटायुं मां त्वं मा वधिष्ठा न मारय हन्तेः स्यास ञ्चां सिः हनवधष्टोचलीति वधादेशः धात्वन्तरत्वात् वसोरस्येतीम् आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचिदिति परवाक्यात् स्वमते बाहुल्यात् आत्मनेपदं किंवा आङ्पूर्वहन्तेः आत्माङ्गादाङ्दाञ्चाहनयम इति मं आत्माङ्गा-

उपास्थितैवमुक्ते तं सखायं राघवः पितुः ।
पप्रच्छ जानकीवार्त्तां संग्रामञ्च पतत्त्रिणम् ।
ततो रावणमाख्याय द्विषन्तम् पततां वरः ॥ ४२ ॥

दित्यस्य क्वचिद् व्यभिचारात् तथाच गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्ष इति किंवा जटायुमिति नामकीर्त्तनेन तव पितुः सखा अहमिति ज्ञापितं तेन च तव पितुः सख्यदार्ढ्येनाहं तव स्वाङ्गमिव मम हिंसया तव स्वाङ्ग हिंसाव्यथेति आरोपितात्माङ्गत्वादात्माङ्गढादित्यात्मनेपदं किंवा आत्माङ्गढादित्यत्र आत्मशब्देनात्मीयोऽपि उच्यते किंवा धातूनामनेकार्थत्वादुबधङ्निन्दे च इत्यस्य रूपं किन्तिजगुप इत्यादौ निन्दा वधेः सनुविधानादत्र न सनु जटा आयुर्यस्येति व्युत्पत्त्या तस्य च प्रवयसो जटायुषः स्वर्गिणः किमत्र शोच्यतेऽधुनेति दर्शनाच्च जटायुमिति चिन्त्यमिति भ्रान्ता वदन्ति यतो बाहुल्यादिनधातोरुण् प्रत्यये आयुशब्दोऽयमुदन्तोऽपि दृश्यते यथा वायुना जगदायुनेति जटायुश्च जटायुरिति शब्दभेदः पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथः पश्यैते पुरतः पिशाचवदनाः कङ्कालशेषाः क्षताः । खड्गच्छिन्नजटायुपक्षतिरितः सीतां रुदन्तीं वहन्नन्तर्व्याकुलविद्युदम्बुद इव द्यामभ्युदस्थादरिरित्येतत्पद्यमुनादिष्टत्वावुज्ज्वलदत्तेन जटायुशब्दस्य सन्तोदन्तत्वेन दैरूप्यज्ञापनायोदाहृतम् अहं सीतामैक्षिषि दृष्टवान् त्वां सि दम् अतोऽपि सा वधिष्ठा इति भावः ॥ ४१ ॥ भ०

उपास्थित इत्यादि । पक्षिण्येवमुक्ते सति राघवस्तं रथभङ्गानुज्ञानेन उपास्थित परिचितवान् सङ्गतकरण आत्मनेपदं स्थाघ्वोरिच्चेतीत्वं ह्रस्वादङ्गादिति सिचो लोपः पितुः सखायं मम पितुः सखायमिति कृत्वा सखिशब्दाद्द्वितीयैकवचने रूपं सख्युरसम्बुद्धाविति णित्वाद्वृद्धिरादेशः । पप्रच्छ पृष्टवान् तं पक्षिणं जटायुं किं जानकीवार्त्तां संग्रामञ्च तत उपस्थानानन्तरं रावणं द्विषन्तं शत्रुम् आख्याय

व्रणवेदनया ग्लायन्ममार गिरिकन्दरे ।
तस्याग्न्यम्बुक्रियां कृत्वा प्रतस्थाते पुनर्वनम् ॥ ४३ ॥

कथयित्वा रावणेन हृता सीतेति पततां पक्षिणां वरो जटायुर्ममारेति परेणान्वयः ॥ ४२ ॥ ज० म०

उपेत्यादि । पक्षिणा एवमुक्ते सति राघवस्तं पितुः सखायम् उपास्थित आराधितवान् मैत्राध्वसङ्ग इति मं स्यादेङ्गिष्टीमे इति ङिर्गुणाभावस्य कत्खादिति विलोपः तत उपस्थानानन्तरं द्विषन्तं शत्रुं रावणमाख्याय सीता तेन हृतेति कथयित्वा पततां पक्षिणां वरः श्रेष्ठो जटायुर्ममारेति वच्यमाणश्लोकेन सम्बन्धः ॥ ४२ ॥ भ०

व्रणेत्यादि । व्रणकृता वेदना पीड़ा मध्यपदलोपी समासः । तया ग्लायन् ग्लानिं गच्छन् शतर्य्यायादेशः । ममार मृतः क गिरिकन्दरे यं गिरिमन्वरूपत् तस्य निम्नप्रदेशे कन्दं रातीति व्युत्पत्तिमात्रं तस्य जटायोरग्न्यम्बुक्रियां दाहमुदकदानञ्च कृत्वा पुनर्भूयो वनमरण्यं प्रतस्थाते प्रस्थितौ समवप्रविभ्य इत्यात्मनेपदम् ॥ ४३ ॥ ज० म०

व्रणेत्यादि । व्रणेन या वेदना तया ग्लायन् ग्लानिं गच्छन् ममार । अथ गिरिकन्दरे यं गिरिमन्वरूपद्रामस्तस्य निम्नप्रदेशे गुहायां वा अग्निक्रियां दाहम् अम्बुक्रियां तर्पणं च कृत्वा पुनर्वनं प्रतस्थाते अर्थात् रामलक्ष्मणौ प्रतिष्ठानिर्घयेत्यादिना प्रस्थो मं मृङष्टीचोम-मिति नियमात् ठीपम् । अथाम्बत्र धनूराम इत्यादिपद्यार्द्धादनन्तरं सीताविरहदुःखार्त्तः कोपसंरक्तलोचन इति यमं युनज्मि काले-नेत्यादिपद्यार्द्धादनन्तरं विनज्मि धाम सर्वेषां त्वेषोऽस्मि सकलं जगदिति एवं वदन् दाशरथिरित्यादि पद्यार्द्धादनन्तरं जगन्नाशाय सन्नद्धस्तथावत् स्वेन तेजसेति न्यवर्त्तयत् सुमित्राभूरित्यादिपद्यार्द्धादनन्तरं तेजः क्षात्रं विष्वाणं दिधक्षन्तमिवानलमिति तं सीताघातिनं मत्वेत्यादिपद्यार्द्धा-दनन्तरं प्रोवाच स तदा पक्षी भयाद्रामेण तर्जित इति उपास्थितैव-मुक्तो तमित्यादि पद्यार्द्धादनन्तरं पप्रच्छ जानकीवार्त्तां संग्रामञ्च तत्क्षिणमिति तस्याग्न्यम्बुक्रियां कृत्वेत्यादि पद्यार्द्धादनन्तरं विराध-

सत्वानजस्रं घोरेण बलापकर्षमश्नता।
क्षुध्यता जगृहाते तौ रक्षसा दीर्घबाहुना॥ ४४॥
भुजौ चकततुस्तस्य निस्त्रिंशाभ्यां रघूत्तमौ।
स च्छिन्नबाहुरपतद्विह्वलो ह्वलयन् भुवम्॥ ४५॥
इति प्रकीर्णकाः।

सीयिवांसौ तां विचिन्वानावितस्तत इति पद्यार्द्धं केनचित् क्वचित् पुस्तके प्रक्षिप्तं सर्वमिदं प्राचीनैरुपेक्षितत्वादमूलमेव तत्राप्ययालक्ष्मणानूराम इत्यादि पद्यार्द्धादनन्तरं सीताविरहदुःखार्त्तः कोपसंरक्तलोचन इति पद्यार्द्धमतीवायुक्तं नशब्दाधिकारे नशब्दाभावात्॥४२॥भ०

सत्वानित्यादि। तौ रामलक्ष्मणौ रक्षसा राक्षसेन जगृहाते गृहीतौ कर्मणि लिट्। किं नाम्ना दीर्घबाहुना अन्वर्था चेयं संज्ञा एक एकेन बाहुना द्वितीयो द्वितीयेन क्षुध्यता बुभुक्षमाणेन घोरेण भीमेन सत्वान् अजस्रं सदा नञ्पूर्वाज्जसो नाम कम्पीति रः। अश्नता भुञ्जानेन किं कृत्वा बलापकर्षं बलादाकृष्यैव पाकादिकमनपेक्ष्य अपादाने परीप्सायामिति णमुल्॥ ४४॥ ज० म०

सत्वानित्यादि। तौ रामलक्ष्मणौ दीर्घबाहुनाम्ना रक्षसा जगृहाते गृहीतौ कर्मणि ठौ क्षुध्यता बुभुक्षुणा दिवादित्वात् श्यन्। बलापकर्षं सत्वान् प्राणिनोऽजस्रं निरन्तरम् अश्नता भक्षयता बलादपकृष्य त्वरया परिष्कारादिकमकृत्वैव पञ्चम्यन्तात्त्वरायां णमिति परः स्मृते बलेनापकर्षोऽपकर्षणं यत्रेति सत्वभक्षणक्रियाविशेषणम् एतेन त्वरया परिष्कारादिकं तदपि प्राप्तं परिष्कृतत्वादौ बलहेतुत्वस्य वैयर्थ्यात् चर्ष्वेत्यस्य योगविभागाद्वा चणम्। घोरेण भयदेन नञ्पूर्वाज्जसेर्हिंसदीपकम्पाजसेति रः॥ ४४॥ भ०

भुजावित्यादि। रघूत्तमौ रामलक्ष्मणौ तस्य योजनबाहोः बाहू यथास्थानमागतौ चकततुः छिन्नवन्तौ कृतीच्छेदने इत्यस्य रूपं काभ्यां निस्त्रिंशाभ्यां खड्गाभ्यां निर्गतस्त्रिंशतोऽङ्गुलिभ्य इति वाक्ये डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानमिति त्रिंशच्छब्दाड्डच्विधिः

## अथ कृत्याधिकारः ।

प्रष्टव्यं पृच्छतस्तस्य कथनीयमवीवचत् ।
आत्मानं वनवासञ्च जेयञ्चारिं रघूत्तमः ॥ ४६ ॥

निराद्य इति समासः टिलोपः स छिन्नबाहुः कृत्तभुजः सन् अपतत् पतितः पतेर्लुङि रूपं लृदित्वादङ् विह्वलो व्याकुलः भुवं भूमिं ह्वलयन् ह्वलचलने घटादित्वे ह्रस्वत्वम् । इति प्रकीर्णकाः ॥४५॥ ज० म०

भुजावित्यादि । रघूत्तमौ निस्त्रिंशाभ्यां तस्य रक्षसो भुजौ खस्वग्रहणोद्यतौ चकर्तुः कृतीछेदने त्रिंशतोऽङ्गुलीभ्यो निर्गतः निस्त्रिंशः निशः शतो ड इति सूत्रे निश इति निर्देशात् निष्पतन्त्य इत्यादिवत् ज्ञापकप्राप्तस्य षत्वस्याभावः त्रिंशतोऽङ्गुलीभ्योऽधिकं परिमाणं खड्गस्योक्तं निस्त्रिंशः करखड्गयोरिति कोषः । स छिन्नबाहुः सन् भुवं ह्वलयन् कम्पयन् न्यपतत् ह्वलह्मलचाले ज्वलह्वलेत्यादिना अगेर्वा ह्रस्वः विह्वलो व्याकुलः । इति प्रकीर्णकाः ॥ ४५ ॥ भ०

इतः परं कृत्याधिकारः । प्रष्टव्यमित्यादि । स योजनबाहुः निहतो रामं पप्रच्छ को भवान् कस्य पुत्रः कथं तव वनवासः कस्मात्त्वोद्विग्नः सन् भ्रमसीति प्रष्टव्यं प्रश्नार्हं पृच्छतस्तस्य तव्यत्तव्यानीयर इति तव्यत् व्रश्चेति षत्वं टत्वञ्च । रघूत्तमः इदानीं कथनीयं कथनार्हं तत्प्रश्नानुरूपं पूर्वेणानीयरः । अवीवचद्वक्ति स्म वचभाषणे चौरादिकः स्वार्थिको णिच् लुङ् चङ् णिलोपह्रस्वः द्विर्वचनसन्वद्भावे त्वदीर्घत्वेषु रूपम् । किन्तदित्याह आत्मानं रामो दाशरथिरिति वनवासं पितुरादेशात् वनवासं जेयं चारिं यः कनकमृगच्छलेन रावणः सीतामपहृतवान् ॥ ४६ ॥ ज० म०

अथ कृत्याधिकारः । स्यमते त्यात्तव्यानीयण्यण्क्यप्केलिमाः । प्रष्टव्यमित्यादि । कस्त्वं कथमिहागत इत्यादि प्रश्नार्हं पृच्छतस्तस्य राक्षसस्य सम्बन्धे रघूत्तमः कथनार्हं प्रश्नानुरूपम् अवीवचत् कथितवान् वच्कच्सन्देशे कित्त्वाच्चुरादिः जिश्रीत्यङ् जग्ङुग्रङः स्वः स्वे सन्वत् केर्लोपः । किन्तदित्याह आत्मानं पितादिसम्बन्धेन वनवासं

लभ्या कथन्नु वैदेही शक्यो द्रष्टुं कथं रिपुः।
सह्यः कथं वियोगश्च गद्यमेतत्त्वया मम॥ ४७॥

अहं राम! श्रियः पुत्त्रो मद्यपीत इव भ्रमन्।
पापचर्य्यो मुनेः शापाज्जात इत्यवदत् स तम्॥ ४८॥

वनवासकारणमर्थात् जेयं जेतव्यमरिं शत्रुं रावणं शत्रु तावीजसहित-मित्यर्थात् प्रच्छौगन्नीप्से तव्ये शच्छ्राजिति षड्‌ शतरि तु यहस्व-पाद्योरिति जिः यथत्कवाक्यप्रबन्धे ह्रसान्तोपोऽधित्ययोरित्यकार-लोपेऽपि स्थानिवद्भावान्नभ्निन्तन्ते जुङ्तोरिति त्रिः जेर्बौपः ते त्याः शक्यार्हेति अर्हे इत्यर्थे सर्वत्र त्यः॥ ४६॥ भ०

लभ्येत्यादि। कथं केन प्रकारेण उपायेन लभ्या वैदेही प्राप्या पोरदुपधादिति यत् शत्रुः केन प्रकारेण द्रष्टुं शक्यः शकधृषेत्यादिना तुमुन् वियोगश्चायं सीतायाः कथं केन प्रकारेण सह्यः सोढव्यः शकि-सहोश्चेति यत् गद्यमेतत् कथनीयमेतत् गद्यमदेत्यादिना यत् ममेति शेषविवक्षायां षष्ठी त्वं पुनः कः इति पृष्ट आह॥ ४७॥ ज० म०

लभ्येत्यादि। इत्यपि अवीवचदिति सम्बन्धः नु प्रश्ने कथं वैदेही लभ्या रिपूरावणः कथं द्रष्टुं शक्यः अज्ञातदेशत्वात् कथं वियोगः सीताया इत्यर्थात् सह्यः एतत्सर्वं त्वया मम सम्बन्धे गद्यं वाच्यं लभ-श्चोङ्यप्राप्तौ शकयञ् शकि हनयत्तौ सहङ्मर्षे एभ्यः पूशकसहेत्या-दिना यः गदभाषे इत्यस्मात् गदमदयमेति यः त्वयेति त्यभावक्तेति कर्त्तुः षष्ठी निष्टत्तिपक्षे तृतीया॥ ४७॥ भ०

अहमित्यादि। हे राम! अहं श्रियः पुत्त्रः मद्यपीत इव वाहिताग्न्यादित्वान्निष्टान्तस्य परनिपातः कार्य्याकार्य्यविवेकाभावात् पापचर्य्यो राक्षसः मुनेः स्थूलशिरसः शापाज्जात उत्पन्नः माद्यजने-नेति मद्यं चरितव्यं चर्य्यमितौ पूर्ववद्यत्प्रत्ययान्तौ पापं चर्य्यं यस्येत्य-वदत् स योजनबाहुस्तं रामं वाक्यार्थोऽत्र कर्म॥ ४८॥ ज० म०

अहमित्यादि। इति स योजनबाहुस्तं रामम् अवदत् किन्त-दित्याह हे राम! अहं श्रियोऽप्सरसः पुत्त्रः मद्यपीतः पीतमदिर इव

प्रयातस्तव वध्यत्वं शस्त्रपूतो ब्रवीमि ते।
रावणेन हृता सीता लङ्कां नीता सुरारिणा ॥ ४९ ॥
ऋष्यमूकेऽनवद्योऽस्ति पण्यभ्रातृवधः कपिः।
सुग्रीवो नाम वर्य्योऽसौ भवता चारुविक्रमः ॥ ५० ॥

भगवन् कार्य्याकार्य्यविवेकशून्यत्वात् कृतापराधो मुनेः स्थूलशिरसः शापात् पापचर्य्यः पापहेतुकर्म्मा राक्षसो जातः एतत् कथनं तद्वाक्यं रामप्रीत्यर्थं मदीभिर्यजिहर्षे मद्यतेऽनेनेति मद्यम् अभिधानात् गद-मदयमेत्यादिना ढभावे विहितोऽपि यः करणे पीतं मद्यं येनेति अग्न्याहितादित्वात् क्तान्तस्य वा परनिपात इति रः स्वमते गमकत्वात् प्रापं चर्य्यं चरणीयं यस्य गदमदयमचरेति यः ॥ ४८ ॥ भ०

प्रयात इत्यादि। इदानीं तव वध्यत्वं बध्यत्वं प्रयातः वधेः पूर्व-वत् यत् शस्त्रपूतस्तव शस्त्रेण पावितः सन् देवीभूतो ब्रवीमि ते तुभ्यं कथयामि युष्मदस्तुर्थ्येकवचनस्य ते मयावेकवचन इति ते आदेशः क्रियायोगे चतुर्थी। कथनीयमाह रावणेन सुरारिणा हृता सीता लङ्कां नीता ॥ ४९ ॥ ज० म०

प्रयात इत्यादि। इदानीं तव वध्यत्वं बध्यत्वं प्रयातः प्राप्तः सन् तव शस्त्रेण पूतः पापान्निर्मुक्तः पूर्वदशां लब्धा ते तुभ्यमहं ब्रवीमीति तादर्थ्ये ची वधेः पूर्वेण यः पूङ्क्षिगुदित इत्यनेन वेमृत्वात् नेमृडीश्वीदि-द्वेम इति पूङः क्तक्तवत्वोरनिमृत्वम्। वचनीयमाह रावणेन सुरारिणा सीता हृता लङ्कां नीता प्रापिता च एतेन लङ्कायां रिपुर्द्रष्टव्य इति शक्यो द्रष्टुं रिपुः कथमित्यत्रोत्तरमुक्तम् ॥ ४९ ॥ भ०

वैदेही प्राप्या कथमिति यसुपेत्य पृष्टवान् तं कथयन्नाह ऋष्यमूक इत्यादि। ऋष्यमूकपर्वते सुग्रीवो नाम कपिः चारुविक्रमो महापरा-क्रमोऽपि असौ भवता वर्य्यो वरणीयः प्रार्थनीयः वर ईप्सायामिति चौरादिकाद्यत् यद्वा अवद्यपण्येत्यत्र दृत्रो वर्य्येति स्त्रियामनिरोधे अनिरोध्या सततप्रवर्त्तनी वर्य्या प्रीतिर्यस्येत्यर्श आद्यच् भवता सह वर्य्यः प्रीतिमान् समानव्यसनत्वात् यतः पण्यभ्रातृवधः सः पण्यो

तेन वध्येन हन्तासि त्वमर्य्यं पुरुषाशिनाम् ।
राक्षसं क्रूरकर्म्माणं शक्रारिं दूरवासिनम् ॥ ५१ ॥

विक्रेतव्यो भ्रातुर्बालिनो बधो येन यद्येवं तदा कथं मया पापीयान् वर्य्य इत्यत आह अनवद्यः अगर्हणीयः दारापहारित्वेन आततायिनो भ्रातुर्वधेन निर्दोषत्वादिति भावः ॥ ५० ॥ ज० म०

ऋष्येत्यादि । लब्धा कथं नु वैदेहीत्यत्रोत्तरमिदं सुग्रीवो नाम कपिः ऋष्यमूकनामपर्वते अस्ति असौ सुग्रीवो भवता वर्य्यः वरणीयः यतस्तत्र विक्रमः अनुपकारकेण मया हतोऽसौ मत्कार्य्यं कथं साधयिष्यतीत्याह पण्यभ्रातृबधः पण्यो विक्रेतव्यो भ्रातुर्बालिनो बधो येन भवता बालिबधं कारयित्वा सीतोद्धारं करिष्यतीति भावः पण्यतुल्यत्वात् पण्यव्यपदेशः तर्हि पापात्मनस्तस्य वरणमनुचितं नच तद्वचनेऽपि विश्वास इत्यत आह अनवद्यः अनिन्द्यः दारापहारित्वेनाततायिनो भ्रातुर्बधे निर्दोषत्वात् नञ्पूर्वोवदिः पणङ्व्यवहृतौ स्तुतौ हजगसम्भक्तौ एषां यान्तानां पण्यवद्यवर्य्येत्यादिना निपातनात् तथा रूपम् । केचित्तु वरतुकेषु इत्यस्मात्तव्यानीयया इति ये वर्य्य इति रूपमित्याहुः ऋषयोऽमूका अध्ययनशीला यत्र स ऋष्यमूकः मूर्द्धण्यषकारवानयम् ऋष्यो मृगविशेषो मूको यत्रेति वा बलटप्याटश्यास्यवीति यमकात् तालव्यशकारवानिति केचित् केचित्तु ऋचोऽद्रिभेदे भल्लूके इति विश्वप्रकाशे एकदेशेनापि संज्ञा गम्यत इति न्यायात् ऋच्चमूक इत्येव संज्ञामाहुः नामेति प्रकाश्यसम्भावनाक्रोधाभ्युपगमेष्वव्ययम् अन्यथा भेदके तृतीया स्यात् ॥ ५० ॥ भ०

तेनेत्यादि । तेन सुग्रीवेण त्वं राक्षसं हन्तासि निहनिष्यसि वध्येन वहत्यभिप्रेतमनेनेति वद्यं करणमिनि यत् कीदृशमर्य्यं स्वामिनं पुरुषाशिनां राक्षसानाम् अर्य्यः स्वामिवैश्ययोरिति यन्निपात्यते क्रूरकर्म्माणं पापाचारं शक्रारिं रावणं यद्यवमहमेव हन्तुं समर्थं इत्यभिप्रायेणाह दूरवासिनं समुद्रान्तरितवासित्वात् एकाकिना हन्तुं न शक्यत इति भावः ॥ ५१ ॥ ज० म०

आस्ते स्मरन् स कान्ताया हृताया बालिना कपिः।
वृषो यथोपसर्य्याया गोष्ठे गोर्दण्डताड़ितः॥ ५२॥
तेन सङ्गतमार्य्येण रामाजर्य्यं कुरु द्रुतम्।
लङ्कां प्राप्य ततः पापं दशग्रीवं हनिष्यसि॥ ५३॥

तेनेत्यादि। तेन सुग्रीवेण त्वं राक्षसं रावणं हन्तासि वाह्यं वह्येन उह्यतेऽर्थोऽनेनेति वह्यस्तेन कीदृशं पुरुषाशिनां राक्षसानाम् अर्य्यं स्वामिनं क्रूरकर्माणं पापाचारं शक्रस्यापि अरिम् एतेन दुर्जयत्वं दर्शितं दूरे वसन्तम् एतेन समुद्रान्तरितत्वात् सहायं विना न हन्तुं शक्यत इति भावः वहेर्औप्रापणे करणे(?) लिङ्गत्याम् अनयोः पूर्वेण निपातः॥ ५१॥ भ०

यद्यनवद्यस्तदा कथमस्य पत्न्यो भ्रातृवध इत्याह आस्ते इत्यादि। बालिना हृतायाः कान्तायाः स्मरन्नास्ते कोऽन्यः सम्भवेत् यस्तं हत्वा त्वया मां योक्ष्यते अधीगिति कर्मणि षष्ठी। कस्येव वृषो यथा उपसर्य्याया आसन्नप्रसवाया गोः स्मरन् गोष्ठे आस्ते उपसर्य्याकाल्याप्रजन इति निपातितं दण्डताड़ितः सन् दण्डस्थानीयोऽत्र बाली॥ ५२॥ ज० म०

आस्त इत्यादि। तयोः सख्यनैविद्यासूचनाय पत्न्यभ्रातृवधपत्वादोषदर्शनाय वा इदमाह। स कपिः सुग्रीवो बालिना हृतायाः कान्तायाः स्मरन् आस्ते कुतो मया सा लब्धव्येति कर्मणि षष्ठी यथा उपसर्य्याया आसन्नगर्भग्रहणाया गोः स्मरन् वृषो गोष्ठे गोस्थाने दण्डेन ताड़ितः सन् तिष्ठति तद्वत् दण्डतुल्योऽत्र बाली उपस्थियते वृषभेण गम्यते उपसर्य्या ऋतुमत्यां पण्यावद्येत्यादिना निपात्यते॥ ५२॥ भ०

तेनेत्यादि। हे राम! तेन वानरेण संगतं सख्यम् अजर्य्यम् अनपायं न जीर्य्यत इत्यस्मिन् वाक्ये अजर्य्यं संगतमिति निपातितम् आदौ विशेष्यत्वेनोपात्तं संगतं तद्विशेषणमजर्य्यं कुरु द्रुतं यावत्तस्यानेन सुषदिषेन संगतं न भवति आर्य्येण सदाचारेण ऋजुत्वोर्य्यं वृ-

अनृतोद्यं न तत्रास्ति सत्यवद्यं ब्रवीम्यहम्।
मित्रभूयं गतस्तस्य रिपुहत्यां करिष्यसि ॥ ५४ ॥

ततः सङ्गतात् लङ्कां प्राप्य गत्वा पापं पापीयांसं रावणं हनिष्यति ॥ ५३ ॥ ज० म०

तेनेत्यादि। हे राम! तेन सुग्रीवेण सह द्रुतं शीघ्रम् अजर्य्यं मैत्रीं कुरु कीदृशं सङ्गतं समयक्रमेण उचितं सङ्गतपदस्य सख्यवाचित्वेऽजर्य्यस्य तयार्थत्वाद्वैयर्थ्यं स्यात् केचित्तु सुग्रीवेण सह सङ्गतं सख्यं कुरु कीदृशम् अजर्य्यम् अनपायं सङ्गतार्थस्यापि अजर्य्य शब्दस्योपचारादन्यत्र प्रवृत्तिरित्याहुः न जीर्य्यतीत्यजर्य्यं सङ्गतं पूर्ववन्निपातितं स्नेहो मैत्री-प्रीतिरजर्य्यं सभाजनसङ्गतं प्रोक्तमिति हलायुधः। आर्य्येण सदाचारेण ऋधातोर्ण्यत्ऋच्छायसोरिति ण्यति रूपम् आरात् पापेभ्यो दूरे यातीति आर्य्य इति केचित् तदा मनीषादिः द्रुतशब्देन यावद्भूर्वद्विधेनान्येन सह तस्य सख्यं न जातमिति व्यज्यते ततः सङ्गतानन्तरं लङ्कां प्राप्य दशग्रीवं पापं त्वं हनिष्यसि सङ्गतेन इतीम् ॥ ५३ ॥ भ०

ननु यावत्कार्य्यं न सिध्यति तावन्मां सङ्गच्छति कृतकृत्यस्तु नैवेत्यत आह अनृतोद्यमित्यादि। सत्यमुद्यत इति कर्मणि यत् अहं सत्यं वचो ब्रवीमीत्यर्थः अनृतोद्यं तत्र सुग्रीवे नास्ति अनृतमसत्यम् उद्यं वचनम् अनृतोद्यं भावे क्यप् यजादित्वात्सम्प्रसारणम् उभयत्रापि वदः सुपि क्यप् चेति चकाराद्यच्च यस्मादेवं तस्मान्मित्रभूयं मित्रभावं गतः भुवो भावे क्यप् रिपुहत्यां शत्रुहत्यां करिष्यसि हनस्तचेति क्यप् तकारस्यान्तादेशः ॥ ५४ ॥ ज० म०

अनृतोद्यमित्यादि। स्वकार्य्यं साधयित्वा यदि मामुपेक्षते तदा किं स्यादित्याह अहं सत्यवद्यं सत्यवचनं ब्रवीमि तत्र सुग्रीवेऽनृतोद्यं मिथ्यावचनं नास्ति वदेर्वाचि लेर्वदः क्यप्यावितिक्यप् ग्रहस्वपाद्योरिति जिः तस्मात्तस्य सुग्रीवस्य मित्रभूयं मित्रभावं गतः सन् रिपुहत्यां शत्रुवधं करिष्यसि भूहनः क्यप्भावे नतस्येति क्यप् नस्य तस्य लिङ्गभेदोऽभिधानात् ॥ ५४ ॥ भ०

आदृत्यस्तेन वृत्येन स्तुत्यो जुष्येण सङ्गतः।
इत्यः शिष्येण गुरुवद्दृध्यमर्थमवाप्स्यसि ॥ ५५ ॥
नाखेयः सागरोऽप्यन्यस्तस्य सद्भृत्यशालिनः।
मन्युस्तस्य त्वया मार्ग्यो मृज्यः शोकश्च तेन ते ॥ ५६ ॥

आदृत्य इत्यादि। तेन सङ्गतः सन् दृध्यमभिलषणीयमर्थमवाप्स्यसि ऋदुपधादिति क्यप् कीदृशः कीदृशेनेत्याह आदृत्यः आदरणीयः वृत्येन वरणीयेन स्तुत्यः स्तवार्हः जुष्येण सेव्येन हनूमत्प्रभृतीनां क इव शिष्येण गुरुरिव यथोपाध्यायः शिष्येणैकार्थः अनुगम्यस्तद्वदिति एतिस्तुशास्वित्यादिना क्यप् ह्रस्वान्तात्तुक् ॥ ५५ ॥ ज० म०

आदृत्य इत्यादि। न केवलं रिपुहननमन्यदप्यस्तीत्याह तेन शिष्येणेव गुरुरिव त्वं सङ्गतः सन् दृध्यमाकाङ्क्षणीयमर्थमवाप्स्यसि त्वं कीदृशस्तेन वा कीदृशेन आदृत्य आदरणीयः वृत्येन वरणीयेन स्तुत्यः स्तवार्हः जुष्येण सेवार्हेण जनानामर्थात् तेन तुल्ययोरुभयोः सङ्गतं योग्यम् इत्यः अनुगन्तव्यः अर्थात्तेन भवतो गुरुत्वेन तस्य शिष्यत्वेन कैवीकरणेऽपि न ते मानहानिरिति सूचितम्। दृङ्‌आदरे वृञ्वृतौ ष्टुञ्स्तुतौ शङीजिजुषसुदिवेवे इणगतौ शासुञ्त्वशासने दृधिर्युञ्जिप्सा एभ्यो दृभजुषेत्यादिना क्यप् स्वस्य तनुपिति ॥ ५५ ॥ भ०

नाखेय इत्यादि। तस्य सुग्रीवस्य सद्भृत्यशालिनः हनूमदादिभृत्ययुक्तस्य भृञोऽसंज्ञायामिति क्यप् अन्यो द्वितीयः सागरोऽपि नाखेयो न खननीयः अपितु खननीय एव अपिशब्दः सम्भावनायां तस्य कारणं सद्भृत्यशालित्वम् ईचखन इति क्यबीकारौ तस्य शरीरस्य मन्युस्त्वया मार्ग्योऽपनेयः ते तव तेन च शोको मृज्यः मृजेर्विभाषेति यद्विकल्पे ण्यत् ॥ ५६ ॥ ज० म०

नाखेय इत्यादि। हनूमदादिसद्भृत्यशालिनस्तस्य सुग्रीवस्य अन्योऽपि सागरो न अखेयः अपितु शक्यखनन एव एतेन तन्मैत्रं बहुसहायत्वं समुद्रलङ्घनमपि सुकरमिति सूचितं खनुङ्‌विदारे खनार्थेये इति ईदेत्वं तस्मात् प्रथमं त्वया तस्य मन्युर्दैन्यं मार्ग्यो मार्ज-

स राजसूययाजीव तेजसा सूर्य्यसन्निभः ।
अमृषोद्यं वदन् रुच्यो जगाहे द्यां निशाचरः ॥ ५७ ॥
अकृष्टपच्याः पश्यन्तौ ततो दाशरथी लताः ।
रत्नान्नपानकुप्यानामाटतुर्नष्टसंस्मृती ॥ ५८ ॥

नीयः पश्चात्तव शोकस्तेन मृज्यः अपनेयः एतेन सह्यः कथं वियोग-स्येत्यतोत्तरं दत्तं सुग्रीवेणाचिरादेव वियोगापनयात् अपिशब्दः सम्भा-वनायां मृजलूषयुद्धौ भृष्टमृजेति वा क्यप् पक्षे ऋहलोर्ण्यदिति ण्यत् चजोः कुघिण्ण्यतोरिति कुत्वं मृजेरजादाविति वृद्धिः ॥ ५६ ॥ भ०

स इत्यादि । स निशाचरो द्यामाकाशं जगाहे गतः राजसूय-याजीव राज्ञा सूयते राजा वा अनेन सूत इति राजसूयः क्रतुः तेनेष्टवान् स राजसूययाजी करणे यज इति णिनिः तद्वदित्यर्थः रुच्यः प्रियो जातो रामस्येत्यर्थात् राजसूय इत्यादिना क्यबन्ता राज-सूयादयः ॥ ५७ ॥ ज० म०

स राजेत्यादि । इत्येवममृषोद्यं सत्यवचनं वदन् स निशाचरो योजनबाहुर्द्यां स्वर्गम् आकाशं वा जगाहे गतः राजसूयनामयज्ञकर्त्तेव तेजसा सूर्य्यतुल्यः रुच्यः रामस्य रुचिविषयः प्रिय इति यावत् सुजनसम्बाक्लेदपीड़ामन्ये राज्ञा सूयते सोमोऽत्रेति राजसूयः पाय्य-भाय्येत्यादिना निपातितः राजसूयेन यजते राजसूययाजी ग्रहादि-त्वात् णिन् सरतीति सूर्य्योऽर्कः रोचते रुच्यः एतौ राजसूयेत्या-दिना निपातितौ सूर एव सूर्य्यः स्वार्थे य इति गोयीचन्द्रः नञ्-पूर्वमृषाशब्दाद्वदेर्नित्यं क्यप् मृषोद्यं नित्यमित्युक्तेः ॥ ५७ ॥ भ०

अकृष्टपच्या इत्यादि । ततो निशाचरगमनानन्तरं दाशरथी रामलक्ष्मणावाटतुर्गतवन्तौ कीदृशौ नष्टा संस्मृतिः ययोः केषां संस्मृतिः रत्नान्नपानकुप्यानां रत्नान्नपानानि प्रसिद्धानि कुप्यं स्वर्णरजताभ्या-मन्यत् वस्तु तत् क्यप् गकारस्य ककारः कर्मणि षष्ठी लताः पश्यन्तौ कृष्टे पच्यन्ते इति कृष्टपच्याः पूर्ववत् क्यप् पश्चान्नञ्समासः स्वयमेव पच्यन्ते यास्ता इत्यर्थः ॥ ५८ ॥ ज० म०

समुत्तरन्तावव्यथ्यौ नदान् भिद्योद्ध्यसन्निभान्।
सिध्यतारामिव ख्यातां शबरीमापतुर्वने ॥ ५९ ॥
वसानां वल्कले शुद्धे विपूयैः कृतमेखलाम्।
श्यामामञ्जनपिण्डाभां दण्डिनीमजिनास्तराम् ॥ ६० ॥

अकृष्टेत्यादि। ततस्तद्गमनानन्तरं लताः पश्यन्तौ दाशरथी रामलक्ष्मणौ आटतुः अटगतौ लताः कीदृश्यः अकृष्टपच्याः कृष्टे क्षेत्रे स्वयमेव पच्यन्त इति कृष्टपच्याः पूर्वेण निपातः पश्चान्नञ्समासः कीदृशौ रत्नानाम् अन्नस्य पानस्य कुप्यानां ताम्रादीनाञ्च नष्टा सम्यक् स्मृतिर्ययोः गुणभूतापि क्रिया साधनसम्बन्धमनुभवतीति कर्मणि षष्ठी सम्बन्धविवक्षयेत्यन्ये कुप्यत इति कुप्यं स्वर्णरूप्याभ्यामन्यत्रेन पूर्ववन्निपातः ॥ ५८ ॥ भ०

समुत्तरन्तावित्यादि। तौ तस्मिन् वने शबरीमापतुः प्राप्नवन्तौ अव्यथ्यौ न व्यथेते इति पूर्ववत् क्यप् परिश्रमवर्जितावित्यर्थः नदान् समुत्तरन्तौ कीदृशान् भिद्योद्ध्यसन्निभान् भिद्योद्ध्यौ नदविशेषौ भिद्योद्ध्याविति पूर्ववत् निपातितं भिनत्ति कूलमिति भिद्यः उज्झत्युदकमिति उद्ध्यः उज्झ उत्सर्गे झकारात्परस्य धकारो निपात्यते तत्सदृशान् नदान् सिध्यतारामिव ख्यातां सिध्यन्त्यस्मिन्निति सिध्यः पुष्यसिध्यौ नक्षत्रे इति निपातनात् पुष्याख्यां तारामिव ख्यातां शबरीम् ॥५९॥ ज० म०

समुत्तरन्तावित्यादि। तौ वने शबरीमापतुः प्राप्नवन्तौ न व्यथेते अव्यथ्यौ नदान् समुत्तरन्तौ कीदृशान् भिद्योद्ध्यसन्निभान् कूलं भिनत्तीति भिद्यो नदः वार्य्युज्झतीति उद्ध्यो नदः तयोस्तुल्यान् शबरीं कीदृशीं सिध्यतारामिव कार्य्यसाधकत्वात् ख्यातां प्रसिद्धानुभवां कार्य्यं साधयतीति सिध्या सर्वत्र गृह्यविनीयेत्यादिना निपातः ॥ ५९ ॥ भ०

वसानामित्यादि। वसानां परिदधानां वल्कले विपूयैर्मुञ्जैः कृतमेखलां कृतकटिसूत्रां यद्यपि विपूर्वस्य पवतेर्विपूय इत्यादिना मुञ्जे निपातितं तथापि शुद्धानामनुपहतत्वं ज्ञापयितुं विपूयैरिति विशेषणं

प्रगृह्य पदवत् साध्वीं स्पष्टरूपामविक्रियाम् ।
अगृह्यां वीतकामत्वाद्देवगृह्यामनिन्दिताम् ॥ ६१ ॥

पवित्रैरित्यर्थः मुञ्जशब्दस्तदानीं सामान्यमाह विपूयैरित्युक्ते मुञ्जैरित्युपादानमनर्थकम् एवं कृत्वा पाठान्तरमुच्यते वसानां वल्कले शुद्धे विपूयैरिति । चाक्षां कृशां चायोम इति निष्ठान्तम् अञ्जनपिण्डस्येवाभा यस्या अस्तीति तां कृष्णां दण्डिनीं गृहीतदण्डाम् आस्तीर्यत इति आस्तरः ऋदोरप् अजिनमास्तर उत्तरासङ्गो यस्यास्तामजिनास्तराम् ॥ ६० ॥ ज० म०

वसानामित्यादि । ददृश तामनुचद्राम इति तृतीयश्लोकेनान्वयः । शुद्धं वल्कलद्वयं वसानां वसलङ्कृतौ स्तृतिराच्छादनं विपूयैर्मुञ्जैः कृतमेखलां कृतकटीसूत्रां पूज्यशोभे पूर्वनिपातः शुद्धे इत्यत्र मुञ्जैरिति पाठे विपूयैरित्यस्य पवित्रैरित्यर्थः यद्यपि विपूयशब्दो मुञ्जे रूढ़स्तथाप्यन्वयवशात् पवित्रार्थः चाक्षां व्रतेन चीर्णां चैशुष्पचोमकव इति क्तस्य मः अञ्जनपिण्डवदाभा यस्यास्तां तद्वदाभातीति वा दण्डिनीं पालाशदण्डवतीम् अजिनमास्तरः शयनीयं यस्याः आस्तर उत्तरासङ्ग इति केचित् ॥ ६० ॥ भ०

प्रगृह्येत्यादि । अविक्रियामजातविकाराम् अतएव स्पष्टरूपाम् एवञ्च साध्वीं साधुचरितां कामिव प्रगृह्यपदवत् यस्य पदस्य प्रगृह्यसंज्ञा तत्पदं प्रगृह्यं प्रत्यपिभ्यां ग्रहेरित्यनुवृत्तौ पदास्वैरित्यादिना प्रपूर्वाद्ग्रहेः पदेऽभिधेये क्यप् यथा तत्पदमविकाररूपत्वात् स्पष्टं साधु च प्लुतप्रगृह्या अचीति प्रकृतिभावेन स्वरसन्ध्यभावादित्यर्थः कथमजातविक्रियेति चेदाह अगृह्यां ग्रहेः स्वैरविषये क्यप् अगृह्यामस्वैरिणीमस्वतन्त्रा न भवतीत्यर्थः कस्मात् वीतरागत्वात् वीतरागाप्यस्वतन्त्रा भवति देवगृह्याममरपक्षां पक्षविषये क्यप् एवं चानिन्दितामगर्हिताम् ॥ ६१ ॥ ज० म०

प्रगृह्येत्यादि । नास्ति विक्रिया रागादिविकारो यस्यास्तामविक्रियां स्पष्टम् अकौटिल्यं व्यक्तं रूपं स्वभावो यस्यास्तां स्पष्टरूपां

धर्मकृत्यरतां नित्यमवृष्यफलभोजनाम् ।
दृष्ट्वा तामसुचद्रामो युग्यायात इव श्रमम् ॥ ६२ ॥
स तामूचेऽथ कच्चित्त्वममावास्यासमुन्नये ।

साध्वीं साधुचरिताम् अतएव प्रगृह्यपदतुल्यां यत्र नाजन्तोऽनाङि-सुश्चेत्यादिना सन्धिनिषेधः क्रियते तत्र पाणिनिना प्रगृह्यसंज्ञा कृता गृह्यविनीयेत्यादिना पदादौ गृह्यं निपातितं पदादिविषयस्तूदाहरणेऽभिहितः तथाहि प्रगृह्यं पदमित्यादि तदपि पदं विकाररहितम् अतएव स्पष्टरूपं दीर्घादिविकारे सत्येव रूपस्यान्यथाभावात् साधु च भवति अर्थप्रतिपादकत्वं धर्मजनकत्वं व्याकरणव्युत्पाद्यत्वं वा पदस्य साधुत्वम् अविक्रियत्वे हेतुमाह अगृह्यां स्वतन्त्रां विगतकामत्वात् सरागा हि भोगार्थं परतन्त्रा भवति गृह्या परतन्त्रा पश्चान्नञ्समासः । देव-गृह्यां देववर्ग्यां देवपक्षपातिनीम् अतएवानिन्दितां वीतकामत्वादित्यत्र पूर्वं स्त्रीत्वाविवक्षया त्वप्रत्ययः स्त्रीत्वविवक्षा चेत् पुंवत्स्युरक्ता इति पुंवद्भावः ॥ ६१ ॥ भ०

धर्मकृत्यरतामित्यादि । पुण्यकर्मरतां नित्यम् अवृष्यफलभोजनां वृष्याणीन्द्रियविकारनिमित्तानि फलानि भोजनं यस्याः पश्चान्नञ्-समासः विभाषाकृवृषोरिति क्यप् । दृष्ट्वा तां तथाविधां श्रममसुचत् उक्तवान् तद्दर्शनाह्लादितत्वात् युग्यायात इव वाहनं प्राप्त इव क्यप् यत्र युग्यञ्च इति निपातितम् ॥ ६२ ॥ ज० म०

धर्मेत्यादि । नित्यमविरतं धर्मस्य कृत्ये करणे रतां वृष्यं वैद्य-शास्त्रोक्तवीर्यकरं विकारोत्पादकं तद्भिन्नं फलमेव भोजनं यस्याः भुज्यतेऽनेनेति वेति करणाधिकरणयोश्चेति ल्युट् तेन भोजनं यस्या इति वा कृञ्जुद्रुतौ वृषुसेचने कृवृषस्तजेत्यादिना वा क्यप् एवम्भूतां तां शवरीं दृष्ट्वा चित्तप्रसन्नतया रामः श्रममसुचत् त्यक्तवान् सुलृमुञ्ञो मोक्षे लृदित्वात् ङः युग्येन वाहनेनाश्वादिना आगत इव गृह्यविनी-येत्यादिना युजः क्यपि युग्यं निपातितम् ॥ ६२ ॥ भ०

स इत्यादि । अथानन्तरं त्यक्तश्रमः स रामस्तां शवरीमूचे उक्तवान्

पितॄणां कुरुषे कार्य्यमवाच्यैः स्वादुभिः फलैः ॥ ६३ ॥
अवश्यपाव्यं पवसे कच्चित्त्वं देवभाग्घविः ।
असाव्यमध्वरे सोमं द्विजैः कच्चिन्नमस्यसि ॥ ६४ ॥

कच्चित् किं त्वम् अमावास्यायाः सम्प्राप्तौ पितॄणां कार्य्यं तत्प्रीत्यर्थं ब्राह्मणभोजनं स्वादुभिर्मिष्टैः फलैः अवाच्यैरवचनीयैः कुरुषे अमा सह वसतोऽस्यां चन्द्रार्काविति अमापूर्वकवसधातोः ण्यत् ॥ ६३ ॥ ज० म०

स तामित्यादि । अथ स्वस्त्यागानन्तरं स रामस्तां शबरीम् ऊचे कथितवान् ब्रुवज उक्तौ वचोऽरे कच्चिदिति कामप्रवेदनेऽव्ययं त्वं फलै-रमावास्यायास्तिथेः समुच्चये सम्प्राप्तौ पितॄणां सम्बन्धि कार्य्यं कुरुषे-कीदृशैः फलैः अवाच्यैः अनिन्द्यैः स्वादुभिर्मिष्टैः अमा सहार्थेऽव्ययं सहवसतोऽस्यां चन्द्रार्काविस्यमावास्या यद्वा अमा नाम रवेरश्मिः सूर्य्य-लोके प्रतिष्ठिता । तस्यां सोमो वसत्यस्याममावास्या प्रकीर्त्तिता । पाय्य-भाय्येत्यादिना ण्यपि निपातः ऋदुपधत्वेत्यस्याप्रवृत्तिपक्षे ऋजो हल-न्तासोरिति ण्यत् । वाच्यं वचनीयं निन्द्यमेव रूढं भुजवचेति ण्यति कत्वनिषेधः ॥ ६३ ॥ भ०

अवश्यपाव्यमित्यादि । देवभाक् देवान् भजत इति भजो ण्विः तद्धविः कच्चित् किं पवसे पवित्रीकरोषि मन्त्रादिना झयो होऽन्यतर-स्यामिति हकारस्य पूर्वसवर्णः पूञ्पवन इति भौवादिकः । कीदृशमवश्य-पाव्यमवश्यम्भावेन पावयितव्यमित्यर्थः ओरावश्यके ण्यत् मयूरव्यंस-कादित्वात् समासः लुम्पेदवश्यमः कृत्ये तुं काममनसोरपीति मकारलोपः सोममौषधिविशेषम् आसाव्यमभिषवार्हम् अध्वरे यज्ञे द्विजैः सह कच्चित्त्वं नमस्यसि आसुयुवपीति यत् ॥ ६४ ॥ ज० म०

अवेत्यादि । कच्चित्त्वं देवभागघविर्हव्यं पवसे अग्निसंस्कारादिना पवित्रीकरोषि देवाय दातुमित्यर्थात् देवान् भजत इति ढाङ्गजवहस-हो विण् झहोस्पादेति हस्य घत्वम् । हविः कीदृशम् अवश्यपाव्यम् अवश्यम्भावेन पवित्रं पवित्रीकर्त्तुं योग्यं पूङ्शोभ्य ण्योरावश्यक इति ण्यण् विजयन्ते जुङ्तोरिति त्रिः ओदौतोऽन्यतरस्यक्यङ्गा इति

आचाम्यं सन्ध्ययोः कच्चित् सम्यक्तेन प्रहीयते ।
कच्चिदग्निमिवानाय्यं काले सम्मन्यसेऽतिथिम् ॥ ६५ ॥
न प्रणाय्यो जनः कच्चिन्निकाय्यं तेऽधितिष्ठति ।
देवकार्य्यविघाताय धर्म्मद्रोही महोदये ॥ ६६ ॥

भञ्जन्नावात् नत्रायवायाव इति आवादेशः क्रियाविशेषणस्य द्वितीयान्तत्वात् तत्पुरुषः समासः द्यादित्वाग्रन्तपूर्व्वदानां पसंज्ञा इति कामान्योक्तेः मयूरव्यंसकादित्वात् समास इति न्यासः समतमूनमनःकामेऽवश्यमित्यादिना मलोपः । कच्चित् त्वं द्विजैः सार्द्धं सोमं लताविशेषं नमस्यसि नमःकरोषीति नमस्तपोवरिय इति क्यः सोमं किम्भूतम् अध्वरे यागे आसाव्यम् अभिषवणीयं सन्धानार्हं हस्त्व्यालोरिति ण्यत् द्विजैराशाव्यमिति वान्वयः ॥ ६४ ॥ भ०

आचाम्यमित्यादि । प्रभातेऽपराह्णे च सन्ध्ययोर्यदाचाम्यमुपस्पर्शनं पूर्ववत् ण्यत् । कच्चित् सम्यक् यथावत्तव तत्र न प्रहीयते काले आतिथ्योक्तकाले कच्चित् संमन्यसे पूजयसि यथा अग्निम् आनाय्यम् मन्यसे तद्वत् आनाय्यो नित्य इति नयतेराङ्पूर्व्वस्य ण्यदायादेशौ निपात्येते ॥ ६५ ॥ ज० म०

आचाम्यमित्यादि । कच्चित्ते तव सायं प्रातः सन्ध्ययोः सम्यगाचाम्यम् स्वयमेव न प्रहीयते न भ्रश्यते कर्मकर्त्तरि प्रत्ययः पूगकसहेत्यादौ चमादिवर्ज्जात् हसन्तत्वात् ण्यण् जनवधः शेम इत्यादौ आचमवर्ज्जनान्न ह्रस्वः । कच्चित् त्वं काले आतिथ्योचिते अतिथिं सम्मन्यसे पूजयसि यथा आनाय्यमग्निं दक्षिणाग्निं सम्मन्यसे तद्वत् आङ्पूर्व्वस्य णीञो ण्यणि पाय्यधाय्येत्यादिना निपातः ॥ ६५ ॥ भ०

न प्रणाय्य इत्यादि । महानुदयः स्वर्गापवर्गाख्यो यस्याः सा तथा हे महोदये ! देवकार्य्यविघाताय देवानहं हनिष्यामीति भाववचनाच्चेति भविष्यति घञ् तुमर्थाच्च भाववचनादिति चतुर्थी प्रणाय्योऽसम्मतो जनः प्रणाय्योऽसम्मताविति निपातितम् । कच्चित् निकाय्यं गृहं ते तव नाधितिष्ठति नाधिवसति पाय्येत्यादिना निवासे चिनोतेः

कुण्डपाय्यवतां कच्चिदग्निचित्यावतां तथा ।
कथाभीरमसे नित्यमुपचाय्यवतां शुभे ! ॥ ६७ ॥

इति कृत्याः ।

निपूर्वात् स्यदायादेशौ स्यादेः कुत्वञ्च अधिशीङ्स्थासां कर्मेति कर्म धर्मद्रोही धर्मद्रोहशीलः ॥ ६६ ॥ ज० म०

नेत्यादि । हे महोदये ! कच्चित् मायाय्योऽसम्मतो जनचौरादिस्ते तव निकाय्यं निवासं देवकार्य्यविघाताय नाधितिष्ठति धर्मद्रोही धर्मद्रोहशीलः धर्माय द्रुह्यतीति ग्रहादित्वाणिन् धर्मद्रोहोऽस्यास्तीति वा मपूर्वमीजो घ्यणि मायाय्यः निपूर्वचिनोतेर्घ्यणि निकाय्यः द्वौ पूर्वेण निपात्येते कर्मक्रियेत्यादिना निकाय्यस्याधारत्वे कर्मत्वं महानुदयः स्वर्गापवर्गफललक्षणस्तत्त्वज्ञानमेव वा यस्यास्तस्याः सम्बोधनं महोदयः कान्यकुब्जेऽप्याधिपत्यापवर्गयोरिति विश्वदर्शनात् ततोऽऽर्शआदित्वात् इत्यन्ये विघातायेति हनो घञि स्थेहीघोत्त्विति चेति घः हनस्तङ् ॥ ६६ ॥ भ०

कुण्डपाय्यवतामित्यादि । कुण्डेन पीयतेऽत्र क्रतौ कुण्डपाय्यः क्रतुः क्रतौ कुण्डपाय्यसञ्चाय्याविति निपातितम् । कच्चित् कथाभीरमसे ढ्रलोप इति दीर्घः । तथाग्निचित्यावताम् आहिताग्निकानां कथाभीरमसे चित्याग्निचित्ये चेति निपात्यते अग्निचयनमग्निचित्या भावे क्यप् तुक् तद्वतां तथोपचाय्यवताम् उपचीयते इत्युपचाय्योऽग्निः अग्नौ परिचाय्येति निपातितः उपपूर्वाच्चिनोतेर्ण्यदायादेशौ तद्वतां कथाभीरमसे शुभे ! कल्याणि ! इति कृत्याधिकारः ॥ ६७ ॥ ज०म०

कुण्डेत्यादि । हे शुभे ! कल्याणि ! कच्चित् त्वं कुण्डपाय्यवतां तथा अग्निचित्यावतां तथा उपचाय्यवतां कथाभिर्नित्यं रमसे क्रीडसि कुण्डैः पीयतेऽत्र सोम इति कुण्डपाय्यः क्रतुविशेषः पाय्यधाय्येत्यादिना निपातः स विद्यते येषाम् इति मोऽभ्भपादतः । अग्नेश्चयनं राशीभाव इत्यग्निचित्या पूर्ववन्निपातः । उपचीयत इत्युपचाय्योऽग्निः पूर्ववन्निपातः । अग्निविशेषो यज्ञविशेषाङ्गम् । इति कृत्याः ॥६७॥ भ०

अथ प्रकीर्णकाः ।

वर्द्धते ते तपो भीरु! व्यजेष्ठा विघ्ननायकान् ।
अजैषीः कामसंमोहौ संप्राप्था विनयेन वा ॥ ६८ ॥

नायस्यसि तपस्यन्ती गुरून् सम्यगतूतुषः ।
यमान्नोद्विविजिष्ठास्त्वं निजाय तपसेऽतुषः ॥ ६९ ॥

अतः परं प्रकीर्णकाः । वर्द्धत इत्यादि । हे भीरु ! कातरचित्ते ! तपो वर्द्धते तस्य च ये विघ्नास्तेषां ये नायकाः प्रणेतारस्तान् व्यजेष्ठाः जितवत्यसि लुङि विपराभ्यां जेरित्यात्मनेपदं कामसम्मोहौ कच्चिदजैषीः जितवत्यसि सिचि वृद्धिः विनयेन वा सम्प्राप्थाः सम्प्राप्तासि कर्मणि लुङ् भावोभवीति सिचो लोपः अत्रानुक्तमिति कच्चिदिति ग्राह्यम् ॥ ६८ ॥ ज० म०

अथ प्रकीर्णकाः ।

वर्द्धत इत्यादि । कच्चिदित्यत्रानुषज्जनीयम् । हे भीरु ! कच्चित्ते तव तपोवर्द्धते कच्चित् त्वं तपसो विघ्नानां नायकान् प्रणेतॄन् व्यजेष्ठा अभिभूतवत्यसि विपराजीति सं कच्चित् त्वं काममनङ्गविकारं सम्मोहमविद्याञ्च अजैषीः व्रजवदेति वृः कच्चिद्विनयेनापि त्वं संप्राप्थाः सम्प्राप्तासि कर्माणि ढो । सम्बोधनमहिम्नार्थावगमात् कच्चिदित्यस्यानुषङ्गं केचिन्नेच्छन्ति ॥ ६८ ॥ भ०

नायस्यसीत्यादि । तपस्यन्ती तपश्चरन्ती कच्चिन्नायस्यसि न खिद्यसे तपश्चरणशालीभूतेत्यर्थः कर्मणो रोमन्थेति क्यङ् तपसः परस्मैपदञ्च । गुरून् आचार्य्यादीन् सम्यक् यथावदतुष्टत्याऽतूतुषः तोषितवत्यसि तुषेर्ण्यन्तस्य लुङि रूपं चङि णिलोपादि यमान्नृत्योनोद्विविजिष्ठाः नाभैषीः पुण्यकृतां नो मृत्युभयमित्यर्थः ओविजेरात्मनेपदं लुङि सिच इट् विज इति सिचो ङित्त्वे न गुणः निजायात्मीयाय । अतुषः तुष्टवत्यसि ॥ ६९ ॥ ज० म०

नायेत्यादि । अत्रापि कच्चिदनुषज्यते तपस्यती तपः कुर्वती त्वं कच्चिन्नायस्यसि न खिद्यसे अत्यन्ताभ्यासात् नमस्तपोवरिव इति क्यः

अथार्घ्यं मधुपर्काद्यमुपनीयादरादसौ ।
अर्चयित्वा फलैरर्चौ सर्वत्राख्यदनामयम् ॥ ७० ॥

अतः परं कृदधिकारः ।

सख्यस्य तव सुग्रीवः कारकः कपिनन्दनः ।

इर्यस्युयतने कच्चित्त्वं गुरूनाचार्यादीन् सम्यगतृतुषः तुषितवत्यसि तुषि॰ त्वयोजितुष्टौ अत्रन्तादङ् अङ्गुङः स्वः खेः सन्वदिति खेर्घः। कच्चित्त्वं यमाच्च उद्विजिष्ठाः नाभैषीः पुण्यवतां त्वयोर्भयं नास्तीति भावः यम इन्द्रियनिग्रहे वा कियत्कालं यमः कार्य्य इति भयं दूरीभूत-मित्यर्थः विजङ्गीयोभीकम्पे विजेर्नुनेंमीत्ययुक्तत्वम् । कच्चित्त्वं निजाय स्वकीयाय तपसे अतुषः तुष्टासि अवती अविघ्नित्वशङ्काम्भूत्या वासी-त्यर्थः पुषादित्वात् ङः ॥ ६९ ॥ भ०

अथेत्यादि । अथानन्तरमसौ शवरी अर्घ्यमर्घार्थं पादार्घाभ्या-ञ्चेति यत् । मधुपर्काद्यं मधुपर्कमिश्रमुदकं मधुपर्कः तदाद्यम् आदौ भवमाद्यं तदुपनीयादरात् फलैरर्चयित्वा अर्च्यौ अर्चनार्हौ अयत् । रामलक्ष्मणौ सर्वत्रोक्तेषु अनामयं कल्याणम् आख्यत् कथितवती । अख्यतीत्यङ् । इति प्रकीर्णकाः ॥ ७० ॥ ज॰ म॰

अथेत्यादि । एवं प्रश्नानन्तरम् असौ शवरी मधुपर्केणाद्यं सहि-तम् अर्घ्यमुपनीय अर्च्यौ अर्चार्हौ रामलक्ष्मणौ फलैरादरात् अर्च-यित्वा । सर्वत्र पूर्वपृष्टेष्वर्थेषु अनामयं कुशलम् आख्यत् उक्तवती । वक्त्रस्यस्येति ङः । मूल्ये पूजाविधावर्घः । अर्घशब्दात्तदर्थे विकार-संघेति यः । मधुपर्काद्यमिति पाठे आदौ भव आद्यः मधुपर्क आद्यो यस्येत्यर्घ्यविशेषणम् । यद्वा आदिरेवाद्यः । अर्घ्यं मधुपर्कादिपूजोप-हारञ्चोपनीयेत्यर्थः । आमयशब्दो लक्षणया अनिष्टमात्रे प्रयुज्यते । इति प्रकीर्णकाः ॥ ७० ॥ भ०

अथ कृदधिकारमाह । कृत्यानां तदन्तर्भावेऽपि भावकर्मणोः कृत्या इति विशेषप्रतिपादनार्थः पृथगधिकारः । तत्रोपपदं सप्तमीस्थ-मित्यादिना एतदप्यधिक्रियते । तान् इतो दर्शयन्नाह । सख्यमि-

द्रुतं द्रष्टासि मैथिल्याः सैवमुक्त्वा तिरोऽभवत् ॥ ७१ ॥
नन्दनानि मुनीन्द्राणां रमणानि वनौकसाम् ।
वनानि भेजतुर्वीरौ ततः पाम्पानि राघवौ ॥ ७२ ॥

त्यादि । सा शबरी तिरोऽभवदन्तर्भूता एवमुक्त्वा । किं तदित्याह । तव सख्यस्य सखित्वस्य सख्युर्यः । कर्मषष्ठीकारकः । सुग्रीवः । ण्वुल्तृचाविति ण्वुल् । त्वया सह मैत्रीं करिष्यति कपिनन्दनः कपीनां नन्दयिता नन्द्यादिभ्यो ल्युः, तद्योगे षष्ठी, असीति वर्त्तमाने लट् ॥ ७१ ॥ ज० म०

अथ कृदधिकारः । यद्यपि कृत्यानां कृत्वमस्ति तथापि भावकर्मणोस्तद्विधानमिति सूचनाय पृथक् प्रदर्श्य कर्त्तरि शेषानाह । तत्र निरुपपदसोपपदयोर्निरुपपदं प्रयोगबाहुल्यादादौ दर्शयति सख्यस्येत्यादि । सा शबरी एवमुक्त्वा तिरोऽभवत् अन्तर्हिता । किं तदित्याह । सुग्रीवस्तव सख्यस्य कारकः सख्यं करिष्यति । सख्युर्भावः कर्म वा, सख्यं विकारसंघेति यः ढर्थकतीत्यादिना कर्मणि षष्ठी । कपीनां नन्दयिता कपेः पुत्रो वा । ग्रहनन्दिपचादेरिति ल्यनः । ततो द्रुतं मैथिल्या द्रष्टाऽसि प्रेक्षको भविष्यसि । अस्तेर्भविष्यत्सामीप्ये कौ । अभिधानात् असीति युष्मदर्थे अव्ययमिति वा । तृणकौषे इत्यादिषु कालस्यानिर्देशात् त्रिष्वपि कालेषु तृणादयो भवन्तीति बोध्यम् । हशेर्वृद्धोऽकिदिति रः ॥ ७१ ॥ भ०

नन्दनानीत्यादि । तत उक्तादनन्तरं वीरौ रामलक्ष्मणौ वनानि भेजतुः सेवितवन्तौ एत्वाभ्यासलोपौ तृफलेत्यादिना पाम्पानीति पम्पाया अदूरम् अदूरभवस्येत्यण् । मुनीन्द्राणां नन्दनानि प्रमोदकारीणि वनौकसां वनेचराणाम् उच्समवाये असादौणादिकोऽसुम् पृषोदरादित्वाद्वर्णविपर्य्ययः, तेषां रमणानि रतिजनकानि नन्द्यादित्वात् ल्युः कर्मणि षष्ठी ॥ ७२ ॥ ज० म०

नन्दनानीत्यादि । ततोऽनन्तरं राघवौ पाम्पानि वनानि भेजतुः सेवितवन्तौ जग्मतुरित्यर्थः भजजोभागसेवयोः तृफलभजत्रपेति अतएत्वं

भृङ्गालीकोकिलक्रुङ्भिर्वाशनैः पश्य लक्ष्मण ! ।
रोचनैर्भूषितां पम्पामस्माकं हृदयाविधम् ॥ ७२ ॥
परिभावीणि ताराणां पश्य मन्थीनि चेतसाम् ।
उद्भासिनी जलेजानि दुन्वन्त्यदयितं जनम् ॥ ७४ ॥

खिलोपश्च पम्पानामसरःसम्बन्धिनी पम्पाया अदूरभवानीत्यर्थे वा विकारसंघेत्यादिना ण्यः । मुनीन्द्राणां नन्दनानि प्रमोदकानि वनौकसां वनवासिनां रमणानि क्रीड़ाजनकानि उभयत्र ग्रहनन्दिपचादेरिति अनः कर्मणि षष्ठी ॥ ७२ ॥ भ०

भृङ्गालीत्यादि । हे लक्ष्मण ! पम्पां पश्य अस्माकं हृदयाविधं हृदयं विध्यतीति ग्रहिज्यादिना सम्प्रसारणं नहि वृतीति दीर्घः भूषितां कैर्भृङ्गालीभिः भ्रमरपङ्क्तिभिः कोकिलैः क्रुङ्भिश्च वाशनैः कूजद्भी-रोचनैः शोभनैः क्रुङिति ऋत्विगादिना किन् निपातनसामर्थ्यादनु-नासिकलोपाभावः संयोगान्त लोपः किन्प्रत्ययस्येति कुत्वम् ॥ ७२ ॥ ज० म०

भृङ्गेत्यादि । राम इत्युवाचेत्यर्थाद्गम्यते हे लक्ष्मण ! पम्पां पश्य कीदृशीं भृङ्गालीभिर्भ्रमरपङ्क्तिभिः कोकिलैः क्रुङ्भिः क्रौञ्चैश्च भूषितां क्रुञ्चगत्यां त्वास्वित्यादिना विच् चकारेत्त्वं किप् संशयनिवारणार्थं नतु अव्ययार्थमिति बोध्यं विवितिपाठ इत्येके चडित्यादौ क्रुञ्चः पृथक्-पाठात् प्राक्कुङ् स्नोर्नुः अप्रेजमनोरिति ङस्यान्तस्य लुप् । कीदृशैः वाशनैः कूजद्भिः वाश्टङशब्दे रोचनैः शोभमानैः उभयत्र नन्द्यादित्वा-दनः पुनः । किम्भूताम् अस्माकं हृदयाविधं चेतः पीड़यन्तीं हृदयं विध्य-तीति किप् ग्रहस्वपाद्योरिति जिः वीरुह्णोषङ्काविति दीर्घनिर्देशात् कचित् किबन्ते पूर्वपदस्य दीर्घत्वमिति दीर्घः आङ्पूर्वस्य रूपं वा ॥ ७२ ॥ भ०

परिभावीणीत्यादि । जलेजानि पद्मानि पश्य तत्पुरुषे कृती-त्यादिनाऽलुक् सप्तम्याः उद्भासीनि भासमानानि अतएव ताराणां परि-भावीणि तिरस्कारीणि ततश्चेतसां मन्थीनि पीड़ाकारीणि अतो जन-

सर्वत्र दयिताधीनं सुव्यक्तं रामणीयकम् ।
येन जातं प्रियापाये कद्वदं हंसकोकिलम् ॥ ७५ ॥

मदयितं प्रियारहितं दुन्वन्ति टुदु उपतापे सौवादिकः मन्योद्भासपरिभूष्यो यहादित्वाखिनिः ॥ ७४ ॥ ज० म०

परीत्यादि । हे लक्ष्मण ! जलेजानि पद्मानि पश्य हनजनादिति डः सरसिजमित्युदाहरणेन क्वचित् समासे सप्तम्या अलुगिति क्वचित् तत्पुरुषे कृति बहुलं सप्तम्या अलुगिति परः । कीदृशानि उद्भासीनि शोभमानानि अतएव ताराणां परिभावीणि तीरस्कारकारीणि समानीत्यर्थो वा ढवेक्तत्यर्थे ति कर्मणि षष्ठी नोऽचोऽन्तरदुर्गेरित्यादौ भुवर्जनात् न णत्वं किन्तु प्रर्णोऽदान्त इत्यादिना समासाद्विहितेन खादिना सहितत्वात् विकल्पेन णत्वं नोऽचोऽन्तरित्यादिना उपसर्गमात्राश्रयस्यैव णत्वनिषेधात् अतएव चेतसां मन्थीनि पीड़कानि सर्वत्र ग्रहादित्वात्खिन् अतएव अदयितं प्रियारहितं मादृशं जनं दुन्वन्ति पीड़यन्ति टुदु उपतापे शतरि स्वादित्वात् नुः ॥ ७४ ॥ भ०

सर्वत्रेत्यादि । हे लक्ष्मण ! सर्वत्र यत् किञ्चिद्रामणीयकं रमणीयस्य भावः योपधाद्गुरूपोत्तमाद्वुञ् तत्सर्वं दयिताधीनं दयितायत्तम् अखण्डचेत्यादिना खः सुव्यक्तं स्पष्टं कुतः येन प्रियाया अभावे सति हंसकोकिलं हंसाश्च कोकिलाश्चेति शकुनित्वात् द्वन्द्वैकत्वं कद्वदं कुत्सितप्रलपितं वदतीति पचाद्यच् कुत्सितं वद इति रथवदयोश्चेति कोः कत् दयितायां सत्यां मधुरप्रलपितमिति ॥ ७५ ॥ ज० म०

सर्वत्रेत्यादि । हे लक्ष्मण ! रामणीयकं यत् किञ्चित् रमणीयत्वं तत् सर्वत्र दयिताधीनं प्रियानिमित्तकमिति सुव्यक्तं स्पष्टमेव । कथमित्याह येन हेतुना प्रियाया अपाये विरहे सति हंसकोकिलमपि कद्वदं कुत्सितवादि जातं यदा सीतासीत्तदा मधुरालापीदमासीदिति भावः कुत्सितं वदतीति कत्कचत्रिरथवद इति कदादेशः रमणीयस्य भाव इति विकारसंघेति कण् हंसाश्च कोकिलाश्चेति समाहारद्वन्द्वः ॥ ७५ ॥ भ०

पक्षिभिर्विंलटदैर्यूनां शाखिभिः कुसुमोत्किरैः ।
अज्ञो यो यस्य वा नास्ति प्रियो प्रग्लो भवेन्न सः ॥७६॥
ध्वनीनामुद्धमैरेभिर्मधूनामुद्धयैर्भृशम् ।
आजिघ्रैः पुष्पगन्धानां पतङ्गैर्ग्लपिता वयम् ॥ ७७ ॥

पक्षिभिरित्यादि । उलटदिहिंसानादरयोरित्यस्मादिगुपधः कः यूनां विलटदैः हिंसकैः पक्षिभिः शाखिभिर्वृक्षैश्च ग्रीह्यादित्वादिनिः कुसुमोत्किरैः उत्किरन्तीत्युत्किराः पूर्ववत् कः कुसुमानामुत्किराः तद्योगलक्षणां षष्ठीं विधाय समासः तैर्हेतुभूतैः करणभूतैर्वा स प्रग्लो न भवेत् प्रकर्षेण ग्लायते प्रग्लः आतश्चोपसर्गे कः योऽज्ञः गुणदोषानभिज्ञः पूर्ववत् कः यस्य प्रियो नास्ति तस्य प्रयोजनाभावः सर्वत्र विवेकित्वात् प्रीणातीति प्रियः इगुपधेति कः ॥ ७६ ॥ ज० म०

पक्षिभिरित्यादि । पक्षिभिः शाखिभिश्च स एव जनः प्रग्लो ग्लानिमान्न भवति यो जनोऽज्ञो गुणदोषानभिज्ञो भवति यस्य वा जानतोऽपि प्रियो जनो नास्ति सर्वत्र विरक्तत्वात् नत्वस्मद्विधोऽभिज्ञः प्रियानुरक्तश्चेति भावः पक्षिभिः शाखिभिश्च कीदृशैः यूनामर्थाद्विरहिणां विलटदैर्हिंसकैः शाखिभिः कीदृशैः कुसुमोत्किरैः पुष्पविक्षेपकैः लटदुअधिनादरे च चकाराद्धिंसायां क्षणविक्षेपे ज्ञागबोधने प्रीञ्प्रीतौ एभ्यः कृगृज्ञाप्रीजुङ इति कः ढघेक्तीति कर्मणि षष्ठी प्रग्लायतीति प्रग्लः एचोऽशित्या इत्यत्र अशितीति विषये सप्तमी ह्नजनादिति डः ॥ ७६ ॥ भ०

ध्वनीनामित्यादि । पतङ्गैर्भ्रमरैर्ग्लपिताः पीडिता वयं ग्लास्नावनुवमांचेति मित्त्वात् ह्रस्वः पतेरङ्गच्पक्षिणीत्यौणादिकः ध्वनीनामुद्धमैः ध्वनीन् कुर्वद्भिः ध्माधातोः पाघ्रेति शः पाघ्राध्मेति धमादेशः । मधूनामुद्धयैः मधूनि पुनः पुनः पिबद्भिः धेट् पान इत्यस्मायादेशः आजिघ्रैः पुष्पगन्धानां पुष्पगन्धान् दृह्लद्भिः पाघ्राध्मेति शः तद्योगलक्षणा षष्ठी ॥ ७७ ॥ ज० म०

धारयैः कुसुमोर्मीणां पारयैर्बाधितुं जनान् ।
शाखिभिर्हा हता भूयो हृदयानामुदेजयैः ॥ ७८ ॥

ध्वनीनामित्यादि । एभिः पतङ्गैर्वयं ग्लपिताः पीड़िताः विशेषेण महिम्ना भ्रमरैरिति गम्यते एभिरित्यङ्गुलीनिर्दिष्टत्वेन वा । कीदृशैः ध्वनीनां गुञ्जितानाम् उद्धमैः कारकैः मधूनाम् उद्धयैः पानकारिभिः पुष्पगन्धानाम् आजिघ्रैः ग्रहणकारिभिः भृशमत्यर्थमिति सर्वत्र क्रियाविशेषणं ध्माशब्दाग्निसंयुतौ ध्वनौ अनेकार्थत्वादत्र करोत्यर्थः धेट्पाने घ्रागन्धग्रहणे एभ्यो धेट्दृशपाघ्राध्माः श इति शित्वात् ख्यादानपाघ्रेत्यादिना ध्मा धम घ्राजिघ्र पतङ्गः पक्षिसूर्य्ययोः पतो गच्छतीति गडंजहोरङ्गम इत्यादिना खे निपातः ग्लायतेर्णिजन्तस्य ज्वलह्वलह्मलग्लेति वा ह्रस्वः ॥ ७७ ॥ भ०

धारयैरित्यादि । हा कष्टं शाखिभिर्द्रुमैर्भूयोऽत्यर्थं वयं हताः कामशराणां धारणात् तदेवाह कुसुमानां ये ऊर्मयः भङ्गाः प्रकाशा वा तान् धारयद्भिः ऊर्मिस्तरङ्गे पीडायां वेगे सङ्गप्रकाशयोः । उत्कण्ठावस्त्रसंकोचबोधेषु च प्रकीर्त्तित इति विश्वः । समूहेऽपीति अतएव जनान् मद्विधान् बाधितुं पारयद्भिः यतो हृदयानामुदेजयैरुत्कण्ठाजनकैरिति भावः धृञ्धारणे पृपालनपूरणयोः एजृकम्पने च एभ्यो णिजन्तेभ्यः अनुपसर्गाल्लिम्पविन्देत्यादिना शः उदेजीति सूत्रे निर्देशात् अनुपसर्गादिति न निषेधः ॥ ७८ ॥ ज० म०

धारयैरित्यादि । हा कष्टं शाखिभिर्वृक्षैर्वयं भूयोऽत्यर्थं हताः कीदृशैः कुसुमानामूर्मयः प्रकाशाः सङ्गा वा तेषां धारयैः धारकैः अतएव जनान् बाधितुं पीड़यितुं पारयैः पारयद्भिः यतो हृदयानामुदेजयैः उत्कम्पकैः धृञ्धारणे धृङ्स्थितौ पृविपालनपूरणयोर्ह्रस्वान्तो जुहोत्यादिः दीर्घान्तः क्र्यादिकश्च एजृकम्पे उत्पूर्वः एभ्यः प्रेरणजन्तेभ्यः साहिसातीत्यादिना शः पारतृकतीरवत् इत्यस्य न ग्रहणं प्रेरणजन्तैः साहचर्य्यात् अणेरिति प्रतिषेधेऽपि उदेजेः शः कल्लिङ्गसमासानामभिधानं नियामकमित्युक्तेः ऊर्मिस्तरङ्गे पीड़ायां वेगे सङ्गप्रकाशयोः ।

दद्दैर्दुःखस्य मातृगन्धो धायैरामोदमुत्तमम् ।
लिम्पैरिव तनोर्वातैश्चेतयः स्याज्ज्वलो न कः ॥ ७९ ॥

उत्कण्ठावक्लसङ्कोचकोषयोरपि कीर्त्तितेति विश्वः । समूहेति जयमङ्गला ॥ ३८ ॥ भ०

दद्दैरित्यादि । वातैर्दद्दैः दुःखस्य दुःखं ददद्भिः केभ्यो मातृभ्यः अस्मादृशेभ्यो विरहिभ्यः इत्यादिषु दृश इति क्विन् दृग्दृशवतुष्वित्याकारः धायैरामोदमुत्तमम् आमोदं प्रियासङ्गमेन हर्षं यावत् विरहिभ्यो दत्तस्य दुःखस्य धायैः पोषकैरित्यर्थः उत्तममिति क्रियाविशेषणम् उत्तममामोदं धायैः कुसुमानां परिमलं धारयद्भिरिति व्याख्याने अनित्यत्वात् कृद्योगे कर्मषष्ठ्यभावः । लिम्पैरिव वातैर्हेतुभिः को नाम विरहाग्निना यश्चेतयमानः ज्वालाज्वलनाग्निरिव न स्यात् किन्तु भवेदेवेति भावः दद्दैर्धायैरिति श्याद्व्यधेति आकारान्तलक्षणे शे प्राप्ते ददातिदधात्योरिति शाशाणौ भवतः शे आतो लोपः चेतु युक् लिम्पश्चेतय इति अनुपसर्गादिति शः ज्वल इति ज्वलिति कसन्तेभ्यो ण इति णस्य विकल्पपचाद्यच् ॥ ७९ ॥ ज० म०

दद्दैरित्यादि । कश्चेतनश्चेतनावान् जनोऽर्थाद्विरही वातैर्हेतुभिर्ज्वलो न स्यात् अग्निरिव न भवति वायुभिश्चेतः सन्तोषात् सर्व एव ज्वलो दीप्तिमान् स्यादिति वा केवलं मद्विधानां विरहिणां कष्टमित्याह मातृगन्धो दुःखस्य दद्दैर्दातृभिः यतः उत्तममामोदं पुष्पसम्बन्धिनं धायैर्धारयद्भिः क्वचिद्विशेषेऽपि सामान्यप्रवृत्तिरिति न्यायात् उपेक्षतीति कर्मणि षष्ठीं बाधित्वा कर्मक्रियेत्यादिना द्वितीया । तनोर्देहस्य लिम्पैर्लेपकारिभिरिव दददाने पचादित्वादन् अहमिव दृश्यते इति तदादिभवत् समानेत्यादिना कर्मणि क्विप् श्रेकोङ्धाज्लधारणे पुष्णो दासंज्ञकत्वात् श्वसव्यधेन तनदावहस इति नः यन्ज्ञ्वितृकदिश्यातः जिविपोशपञ्चेपे साहिसातीत्यादिना शः सुचादित्वात् नुण् चितकङ्वाने इत्यस्मात् अभिधानात् शः घेटहशेत्यत्र योगविभाग इत्यन्ये साहिसातीत्यादौ चेतीति लिपिकरप्रमादात् पतितमित्यन्ये

अवश्यायकणास्रावाश्चारुमुक्ताफलत्विषः ।
कुर्वन्ति चित्तसंस्रावं चलत्पर्णाग्रसम्भृताः ॥ ८० ॥
अवसायो भविष्यामि दुःखस्यास्य कदा न्वहम् ।
न जीवस्यावहारो मां करोति सुखिनं यमः ॥ ८१ ॥

जज्वलज्ज्वलनत्विषोः दुनीभूज्ज्वलेत्यस्याप्रवृत्तिपक्षे पचादित्वादच् ॥७९॥भ०

अवश्यायेत्यादि । अवश्यायत इत्यवश्यायः तस्य कणा विन्दवः आस्रवन्तीत्यास्रावाः चरन्तः श्याद् व्यधेति णः कर्त्तरि तयोर्विशेषण-समासे राजदन्तादिति परनिपातः ते कुर्वन्ति। चित्तसंस्रावं संस्रवतीति संस्रावः पूर्वतसुः चित्तं संस्रावं चलत्कुर्वन्ति इत्यर्थः पूर्ववत् समास-परनिपातौ कीदृशाश्चलत्पर्णाग्रसंस्थिताः अतएव चारुमुक्ताफलत्विषः दर्शनीयमुक्ताफलानुकारिणः सीताहारस्यमुक्ताफलानि स्मारयन्तीत्यर्थः ॥ ८० ॥ ज० म०

अवेत्यादि । अवश्यायकणास्रावाश्चित्तसंस्रावं कुर्वन्ति अवश्यायस्य नीहारस्य कणा विन्दवः आस्रवन्तीति आस्रावाः कर्मधारये गमकत्वात् विशेषणस्यापि परनिपातः सुगतौ दुनीभूज्ज्वलेत्यादिना पक्षे णः । चित्तञ्च तत् संस्रावं चलच्चेति पूर्ववत् । कीदृशाः चलतां पत्राणाम् अ-ग्रेषु संभृताः चलन्तश्च ते पत्राग्रसंभृताश्चेति वा स्थूलीभूता गलिता इत्यर्थः अतएव चारवः शोभनस्य मुक्ताफलस्य त्विट् दीप्तिर्येषु ते तथा सीताहारस्थितानि मुक्ताफलानि स्मारयन्त इत्यर्थः श्यैङ्गतौ घङि यन्ङिङ्त्कदिस्यात इति यन् ॥ ८० ॥ भ०

अवसाय इत्यादि । कदा नु काले अहं दुःखस्यानुभूयमानस्य अवसायोऽन्तकरो भविष्यामि येन जीवस्यावहारोऽवहर्त्ता यमो मां सुखिनं न करोति मारयतीत्यर्थः अवस्यति इति अवसायः सोऽन्त-कर्मणि अवहरतीत्यवहारः श्याद्व्यधेति सर्वत्र णः युक् ॥८१॥ ज०म०

अवेत्यादि । नु प्रश्ने वितर्के वा कदा अहम् अस्य दुःखस्य अव-सायोऽन्तकरो भविष्यामि येन जीवस्यावहारोऽपकारको भूत्वा अद्यापि यमो मां दुःखिनं न करोति विना मरणं न दुःखमपगमिष्यतीत्यर्थः

दह्योऽहं मधुनो लेहैर्दावैरुग्रैर्यथा गिरिः।
नायः कोऽत्र स येन स्यां वताहं विगतज्वरः ॥ ८२ ॥
समाविष्टं ग्रहेणेव ग्राहेणेवात्तमार्णवे।
दृष्ट्वा गृहान् स्मरस्येव वनान्तान् मम मानसम् ॥८३॥

शोयनाशे हृञ् हृत्याम् आभ्यामेव पूर्वाभ्यां यसव्यपेन तनदावहृस इति शः ॥ ८१ ॥ भ०

दह्योऽहमित्यादि। मधुनो लेहैर्भृङ्गैः अहं दह्ये स्याद्व्यधेति णः दावैर्वनाग्निभिरुग्रैः प्रचण्डैर्यथा गिरिर्दह्यते तद्वत् अत्र को नायः नयतीति नायः उपायः ईप्सितप्रापकः उभयत्र दुन्योरिति णः येन नायेन विगतज्वरः विगतपीड़ः स्यामिति आशंसायां लिङ् वत खेदे ॥ ८२ ॥ ज० म०

दह्य इत्यादि। मधुनो लेहैर्मधु लिहद्भिर्भ्रमरैरहं दह्ये कर्मणि की। यथा उग्रैः प्रचण्डैर्दावैर्वनाग्निभिर्गिरिर्दह्यते तद्वत् अत्र स को नायोऽभिमतप्रापक उपायः येनाहं विगतज्वरो विगतसन्तापः स्यां नु प्रश्ने वितर्के वा वत खेदे अस्तेः स्यां लोपोऽस्त्यसोरिति अकारलोपः लिहौज्स्वादे पचादित्वादन् टुदु उपतापे दुगतौ वा णीञ् प्रापणे दुनीभूज्वलेति वैकल्पिको णः। दवदावौ वनानले इत्यमरः ॥८२॥ भ०

समाविष्टमित्यादि। वनान्तान् वनपर्य्यन्तान् स्मरस्य कामस्य गृह-मिव उन्मादकत्वात् गेहे क इति ग्रहेः कः अर्द्धर्चादिपाठात् पुंलिङ्गता स्थितस्येत्यर्थात् योज्यम् अन्यथा कथं समानकर्त्तृकत्वं मानसञ्चेतः ज्योतिषि ग्रहः ग्राहेणेवात्तमार्णवे अर्णः पानीयं यत्रास्तीति केशाद्वोऽन्यतरस्यामिति तत्रार्णसो लोपश्चेति भूमनिन्दाप्रशंसास्वित्यादौ वः सलोपश्चेति अर्णवे समुद्रे वर्त्तमानेन ग्राहेण कुम्भीरादिना आत्तं गृहीतम् आङ्पूर्व्वस्य दाञोऽच उपसर्गात्तः ॥ ८३ ॥ ज० म०

समेत्यादि। वनान्तान् वनस्वरूपान् तत्समीपदेशान् वा दृष्ट्वा स्थितस्य मम मानसं ग्रहेण सूर्य्यादिना समाविष्टमिव आस्पदीकृतमिव इत्यर्थः उपहतत्वात् समुद्रे ग्राहेण कुम्भीरादिना आत्तं गृहीतमिव

वाताहतिचलच्छाखा नर्त्तका इव शाखिनः ।
दुःसहा ह्री परिच्छिन्नाः क्वणद्भिरलिगाथकैः ॥ ८४ ॥
एकहायनशारङ्गगतो रघुकुलोत्तमौ ।
लवकौ शत्रुशक्तीनामृष्यमूकमगच्छताम् ॥ ८५ ॥

अतिगभीरशोकमग्नत्वेऽपि कामपीड़ितत्वात् स्थितस्येत्यध्याहारेणैककर्त्तृकत्वे पूर्वकाले क्त्वाच् । वनान्तान् कीदृशान् खरस्य गृहानिव षट्पदैः स्थ्यादौ ध्यन् जलजन्तौ घञ् निलयेऽलिजिह्वाभिधानात् गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालया इत्यमरः । आङ्पूर्वदाञः क्तेग्यचस्तवेति पक्षे तादेशः अर्णो जलं विद्यते अस्येति केशादित्वात् सलोपः मन एव मानसं स्वार्थे ष्णः केचित्तु मन एव जानातीति व्यवहारात् मनस एव दर्शनकर्त्तृकत्वं विवक्षितमित्युक्त्वा स्थितस्येति नाध्याहरन्ति अन्तःप्रान्तेऽन्तिके नाशे स्वरूपेऽपि मनोहर इति विश्वः ॥ ८२ ॥ भ०

वातेत्यादि । हा कष्टम् एते शाखिनः नर्त्तका इव शिल्पिनि ष्वुन् दुःसहा दुःखेन सह्यन्त इति ईषदित्यादिना खल् नर्त्तकैः साधर्म्यमाह वाताहतिचलच्छाखा वाताहतिभिः चलन्त्यः शाखा बाहुलता इव येषां ते अलयो भ्रमरा गाथका इव गस्थकन् तैश्च परिच्छिन्नाः परिवेष्टिता इति ॥ ८४ ॥ ज० म०

वातेत्यादि । एते शाखिनो दुःसहा दुःखेन सह्यन्ते ईषद्दुःसोरिति खल् ह्री विषादे नर्त्तका इव नृत्यन्तीति नृत्खनरञ्ज इति षकः नृतादेः शिल्पिनि कष इति परः स्वमते शिल्पिविशेषोऽर्थोऽभिव्यज्यते । नर्त्तकसाधर्म्यमाह वाताहतिचलच्छाखाः वातस्याहतिभिश्चलन्ती शाखा बाहुतुल्या येषाम् अलयो भ्रमरा एव गायका गायनास्तैः परिच्छिन्नाः परिवेष्टिताः गायन्तीति गोस्वनट्थकाविति थकः गायतेरेतौ लोषे इति वृत्तावुक्तत्वात् गैगाने इत्यस्यैव ग्रहणं न तु गाङः क्वणद्भिः शब्दायमानैः ॥ ८४ ॥ भ०

एकहायनेत्यादि । रघुकुलोत्तमौ रामलक्ष्मणौ ऋष्यमूकमगच्छतां गतवन्तौ लङि रूपं हायनः संवत्सरः स एको यस्य शारङ्गस्य मृगस्य

**तौ वालिप्रणिधी मत्वा सुग्रीवोऽचिन्तयत् कपिः।**
**बन्धुना विगृहीतोऽहं भूयासं जीवकः कथम्॥ ८६॥**
**स प्रतुलावो मन्वानो राघवो मलयं गिरिम्।**

तस्येव गतिर्ययोः शीघ्रगामित्वात् हनश्च व्रीहिकालयोरिति हायनातो- ण्युट् आतो युक् तौ शत्रुशक्तीनां लवकौ अपनेतारौ पुरुल्वः समभि- हार इति वुन् तत्समभिहारग्रहणं साधुकारित्वोपलक्षणार्थम् ॥ ८५॥ ज० म०

एकेत्यादि। एतद्वचनानन्तरं रघुकुलस्य उत्तमौ श्रेष्ठौ रामलक्ष्मणौ ऋष्यमूकं पर्वतम् अगच्छतां कीदृशौ एकहायनशारङ्गगती एको हायनो वत्सरो वयो यस्य तादृशस्य शारङ्गस्य हरिण इव मृगस्येव वा गति- र्गमनं ययोः शीघ्रगामित्वात् जहातेर्ण्यनटि हायनो निपातितः हाङो रूपमित्यन्ये। शत्रुशक्तीनां लवकौ छेदकौ लुनातेः पुरुल्वः स्वुर- ल्वोऽकः इत्यकः प्रादेः साधुकारित्यर्थेऽक इति परः। शारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे॥ ८५॥ म०

तावित्यादि। तौ रामलक्ष्मणौ वालिनः प्रणिधी चरौ मत्वा सुग्रीवः कपिरचिन्तयत् चिन्तितवान् प्रणिधीयते नियुज्यते कार्येषु प्रणिधिः उपसर्गेघोः किः। बन्धुना भ्राता विगृहीतो विरोधितः सन् कथं जीवको भूयासमिति आशंसायां लिङ् जीवेराशिषि वुन्। इति निरुपपदकृदधिकारः॥ ८६॥ ज० म०

तावित्यादि। रामलक्ष्मणौ वालिनः प्रणिधी चरौ मत्वा सुग्रीवः कपिरचिन्तयत् बन्धुना वालिना विगृहीतो विरोधितोऽहं कथं जीवको भूयासं प्रणिधीयते कर्मणि प्रयुज्यतेऽसाविति दासंज्ञकत्वात् किर्दो- ऽन्तर्गेरित्यनेन भावविहितोऽपि किः कञ्चोः कभाव इत्युक्तेरत्र कर्मणि बोध्यः केचित्तु कभावेऽमी इत्यस्मात् सकृदुक्तमुताधिकारादत्र कभाव इत्यनुवर्त्तते वृत्तौ तु कारकानुपदेशो लिपिकरप्रमादात् इत्याहुः आशि- षीति जीवतेरकः। इति निरुपपदाधिकारः॥ ८६॥ म०

इतः प्रभृति तत्रोपपदं सप्तमीस्थमिति यस्योपपदस्थानेन कृतो

जगाम सपरीवारो व्योममायमिवोत्थितम् ॥ ८७ ॥
शर्मदं मारुतिं दूतं विषमस्थः कपिद्विपम् ।
शोकापनुदमव्यग्रं प्रायुङ्क्त कपिकुञ्जरः ॥ ८८ ॥

दर्शयन्नाह स इत्यादि । स सुग्रीवः सपरीवारः सपरिकरः उपसर्गस्येति दीर्घः । कपीनाममनुष्यत्वात् मलयं गिरिं जगाम राघवौ शत्रुलावौ शत्रून् लुनातीति कर्मण्यण् शत्रूणामुन्मूलकाविति मन्वानोऽवगच्छन् मनुबोधन इत्यस्मादात्मनेपदिनस्तनादिभ्य उः । व्योममायमिवोत्थितं व्योम आकाशं मिमीत इति ह्वावामश्चेत्यण् नभः परिच्छेत्तुमिवोत्थितं कियत्प्रमाणमस्येति ॥ ८७ ॥ ज० म०

अथ सोपपदाधिकारः । यस्मात् पराद्धातोः प्रत्ययास्तदुपपदं स इत्यादि । स सुग्रीवो राघवौ शत्रुलावौ शत्रूणां छेदकौ मन्वानः परीवारैः परिजनैः सह मलयं गिरिं जगाम व्योममायम् आकाशस्य परिमाणं कुर्वाणमिव उत्थितम् अतिदैर्घ्यादियमुत्प्रेक्षा । शत्रून् लुनातीति व्योम मातीति च ढात्पण्यनञ्ञित् क्रदिति आतोयन् मनदङ्बोधे ङित्त्वान्न दित्वात्तनादिः परिपूर्वाद्वृञोघञ् परेरिकारस्य दीर्घत्वमभिधानात् ॥ ८७ ॥ भ०

शर्मदमित्यादि । कपिकुञ्जरः सुग्रीवः हनूमन्तं दूतं प्रायुङ्क्त प्रस्थापितवान् वृन्दारकनागकुञ्जरैरित्यादिना कर्मधारयः सः वृत्तान्तं ज्ञातुमित्यर्थात् प्रायुङ्क्त इति प्रोपाभ्यां युजेरित्यात्मनेपदं रुधादित्वात् श्नम् । कपिकुञ्जरः किम्भूतः विषमे दुर्गपर्वते तिष्ठतीति विषमस्थः सुपिस्थ इति कः । मारुतिं कीदृशं शर्म कल्याणं ददातीति शर्मदः आतोऽनुपसर्गे क इति कः श्रेष्ठत्वमाह कपिद्विपं कपिश्रेष्ठं द्वाभ्यां पिबतीति द्विपः कपिरयं द्विप इव उपमितं व्याघ्रेत्यादिना कर्मधारयः पुनः कीदृशं शोकापनुदं शोकमपनुदति तुन्दशोकयोरिति कः अव्यग्रं सुचित्तमित्यर्थः ॥ ८८ ॥ ज० म०

शर्मदमित्यादि । कपिकुञ्जरः सुग्रीवो मारुतिं हनूमन्तं दूतं प्रायुङ्क्त प्रस्थापितवान् वृत्तान्तं ज्ञातुमित्यर्थात् कीदृशः विषमस्थः विषमे

विश्वासप्रदवेशोऽसौ पथिप्रज्ञः समाहितः।
चित्तसंख्यो जिगीषूणामुत्पपात नभस्तलम् ॥ ८९ ॥

छच्छे तिष्ठतीति हनजनादिति डः। एवंभूतोऽपि महासत्वत्वादव्यग्रोऽव्याकुलः यद्वा विषमे दुर्गे स्थितः अतएव अव्ययः अक्षोभितमनाः कीदृशं मारुतिं शर्म ददातीति शर्मदं सुखदायकं पूर्ववत् डः। शर्मशातसुखानि चेत्यमरः। कपिद्विपं कपिश्रेष्ठं शोकमपनुदति शोकापनुदं कृगृज्ञाप्रीजुड इति कः। कपिर्द्विप इव कपिः कुञ्जर इव गमकत्वात् विशेषणस्यापि परनिपातः। द्वाभ्यां पिबतीति द्विपः पूर्ववत् डः कुञ्जो दन्तो विद्यतेऽस्येति मध्वादित्वात् रः। कुञ्जः कुञ्जे निकुञ्जेऽपि हनौ दन्तेऽपि दन्तिनामिति विश्वः। मरुतस्यापत्यमिति बाह्वाद्यत इति ञिः। आञ्जनेयो हनूमान् स्यादञ्जुसानपि मारुतिरिति कोषः। अव्यग्रमिति क्वचित् पाठः। तादृशस्य दूतस्य योग्यत्वात् युजेर्ष्यां क्षुभादित्वात् अण् नणोऽनेणाविति नादेशः ॥ ८८ ॥ म०

विश्वासेत्यादि। असौ मारुतिर्नभस्तलमुत्पपात विश्वासं प्रददातीति विश्वासप्रदः प्रेदाज्ञ इति कः। विश्वासप्रदो वेशो यस्य भिक्षुवेष इत्यर्थः वेष्यते आत्मानेनेति अकर्त्तरि च कारके घञ् विषॢव्याप्ताविव्यस्य रूपं पन्थानं प्रजानातीति पथिप्रज्ञः समाहितः अभ्रान्तचित्तः इदम् मया तत्र वक्तव्यमिति जिगीषूणां जेतुमिच्छतां चित्तसंख्यः चित्तं संख्याति परिच्छिनत्तीति समिख्य इति कः॥ ८९ ॥ ज० म०

विश्वासेत्यादि। असौ मारुतिर्नभस्तलमुत्पपात कीदृशः विश्वासप्रदो वेशो यस्य स तथा भिक्षुवेशत्वात् शौविशप्रवेशे घञि वेशः विषिविजोङ्व्याप्ताविव्यस मूर्द्धन्यान्तस्य रूपमित्यन्ये पन्थानं प्रजानाति इति कृगृज्ञाप्रीति कः। समाहितः अभ्रान्तचित्तः जिगीषूणां जेतुमिच्छूनां स्वपक्षाणां परपक्षाणाञ्च चित्तं संख्याति परिच्छिनत्तीति हनजनादिति डः। संपूर्वस्य ख्याप्रख्याताविव्यस्य प्रयोगो नास्तीति ये वदन्ति तन्मते चक्षिङाद्रूपं तदा चक्षिङः ख्याञख्यादेरे इत्यत्र आर इति विषयसप्तमी ॥ ८९ ॥ म०

सुरापैरिव घूर्णद्भिः शाखिभिः पवनाहतैः ।
ऋष्यमूकमगाद् भृङ्गैः प्रगीतं सामगैरिव ॥ ९० ॥
तं मनोहरमागत्य गिरिं वर्महरौ कपिः ।
वीरौ सुखाहरोऽवोचद् भिक्षुर्भिक्षार्हविग्रहः ॥ ९१ ॥

सुरापैरित्यादि । मारुतिर्ऋष्यमूकमगात् शाखिभिरुपलक्षितं घूर्णद्भिः कम्पमानैः पवनाहतत्वात् अतएव सुरापैरिव मत्तैरिव गापोष्टगित्यत्र सुरासीध्वोरिति टक् प्रगीतं प्रगीयतेऽत्रेति अधिकरणे क्तः कैर्भृङ्गैः सामगैरिव सामवेदपाठकैरिव गायन्तीति टक् ॥९०॥ ज० म०

सुरापैरित्यादि । स मारुतिर्ऋष्यमूकमगात् कीदृशं शाखिभिरुपलक्षितं कीदृशैः पवनेनाहतैः अतएव घूर्णद्भिः कम्पमानैः घूर्णभ्रमणे शतुः अतएव सुरापैर्मद्यपैरिव सुरां पिबन्तीति हनजनादिति डः । भृङ्गैः प्रगीतं नादितं गीयते यत्रेति ध्रौव्यगत्येति आधारे क्तः क्तो कभाव इत्युक्तेः अपवादेऽप्युत्सर्गप्रवृत्तिः क्वचिदिति न्यायात् क्ताधिक-रणार्थक्तेन इत्यनेन षष्ठीप्राप्तौ साधनहेत्वित्यादिना कर्त्तरि तृतीया भावक्तान्तादयं आदित्वादति भृङ्गकर्तृकसङ्गीतयुक्तमिति वार्थः प्रकृष्टं गीतं यत्रेति वा सामगैरिव सामवेदं गायन्तीति हनचरगष्टक् ॥९०॥ भ०

तमित्यादि । ऋष्यमूकं गिरिमागत्य कपिर्वीरौ रामलक्ष्मणौ अवोचत् उक्तवान् कीदृशं मनोहरं रम्यत्वात् मनो हरतीति हरतेरनु-द्यमनेऽच्, वर्महरौ कवचं हर्तुं क्षमौ सम्प्राप्तनवयसावित्यर्थः वयसि चेत्यच् । सुखाहरः सुखाहरणशीलः आङि ताच्छील्य इत्यच् । भिक्षुः परिव्राड्वेशः न कपिरूपः यतो विश्वासप्रदवेश इत्युक्तं भिक्षार्हविग्रहः भिक्षायोग्यशरीरः शान्तत्वादित्यर्थः भिक्षामर्हतीत्यच् ॥ ९१ ॥ ज० म०

तमित्यादि । तम् ऋष्यमूकं गिरिम् आगत्य आगम्य कपिर्हनूमान् वीरौ रामलक्ष्मणौ अवोचत् कथितवान् गिरिं कीदृशं रम्यत्वात् मनोहरं हरतीति हरः पचादित्वादच् मनसो हरः मनोहरः कीदृशौ तौ वर्महरौ कवचधरौ पूर्ववदच् कपिः कीदृशः सुखाहरः सुखाकारी वयात् तथाः पूर्ववदच् परे तु आहरने कर्म्मणः परात् हृञोऽच्

बलिनावसुमद्रीन्द्रं युवां स्कन्धेरमाविव ।
आचक्षाथामितः कस्माच्छङ्करेणापि दुर्गमम् ॥ ९२ ॥
व्याप्तं गुहाशयैः क्रूरैः क्रव्याद्भिः सनिशाचरैः ।

वयोबोधकवहने च आङ्पूर्वात्तु ताच्छील्य एवेत्याहुः मन्यते मनो हरतीति मनोहरस्तं वहने तु भारहार इत्यादि बोध्यं वर्म हर्तुं शमौ वर्महरौ कवच रक्षाव्यमानं वयो गच्छते तरुणावित्यर्थः कवचमाहर्तुं शीलमस्य कवचहरः भिक्षुर्यतिरूपः भिक्षणशीलो वा सम्भिक्षाशंसवः । भिक्षार्हविग्रहः भिक्षायोग्यशरीरः भिक्षुकवेशपरिग्रहात् नववानरमूर्त्तिः विश्वासप्रदवेश इत्युक्तं भिक्षामर्हतीति भिक्षार्हः पचादित्वादच् ॥ ९१ ॥ भ०

किमवोचदित्याह बलिनेत्यादि । युवाम् अद्रीन्द्रं कस्मात् कारणादितः प्राप्तौ इण् गतावित्यस्माद्वर्त्तमानसामीप्ये भूते लट् थस् । एतदाचक्षाथां कथयतं लोटि रूपं बलवन्तौ बलिनौ दव् शङ्करेणापि महादेवेनापि दुर्गमं दुःखेन गम्यते कमिव स्कन्धेरमाविव यथा मत्तद्विपौ प्राप्नुतस्तद्वत् स्कन्धकरणयोरित्यच् कर्त्तरि हस्तिन्यभिधेये हस्तिसूचकयोरिति वचनात् शङ्कर इति शकिधातोरित्यच् ॥९२॥ ज० म०

बलीत्यादि । किमवोचदित्याह युवाम् अद्रीन्द्रम् कथ्यमूकं कस्मात् कारणात् इतः प्राप्नुथः इण् गतौ भूतसामीप्ये की अभिधानात् एतत् युवामाचक्षाथां कथयतं प्रार्थनायां गो । अद्रीन्द्रं कीदृशं शङ्करेण महादेवेनापि दुर्गमं दुःखेन गम्यत इति ईषद्दुःसुष्विति खल् कृतएवात्र गमनात् युवां बलिनौ बलमस्ति ययोरिति नैकाजादिति इन् अत्रातिशयेन अस्त्यर्थो बोध्यः । तथा च भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादय इति स्कन्धेरमाविव हस्तिनौ यथा प्राप्नुतस्तद्वत् स्कन्धेरमत इति पचादित्वादच् अभिधानात् सप्तम्यलुक् हस्तिन्येव रूढः शं कल्याणं करोतीति शङ्करः खन्डृष इति टः अभिधानात् संज्ञा गम्यते ॥ ९२ ॥ भ०

व्याप्तमित्यादि । दुर्गमत्वदर्शनाय इदमुच्यते कीदृशमद्रीन्द्रं क्रव्या-

तुङ्गशैलतरुच्छन्नं मानुषाणामगोचरम् ॥ ८३ ॥

उक्तादाधिकारः ।

स्तम्बेरमजयसिंहाव्यान् स्तनन्धयसमत्विषौ ।

कथं नाडिन्धमान्मार्गानागतौ विषमोपलान् ॥ ८४ ॥

अपक्वमांसं भक्षयद्भिः सिंहादिभिः सनिशाचरैः राक्षससहितैर्व्याप्तं क्रव्ये चेति विट् । गुहाशयैः गुहायां शेरते इति शीङोऽधिकरणेऽच् । तुङ्गाः उच्चाः शैलाः शिलायां भवा ये तरवस्तैश्छन्नं व्याप्तम् अतएव मानुषाणामगोचरम् अगम्यं गोचरसञ्चरेत्यादिना निपातितः ॥ ८३ ॥ ज० म०

व्याप्तमित्यादि । दुर्गमत्वं दर्शयन्नाह अद्रीन्द्रं कीदृशं क्रव्याद्भिः किरातादिभिः सिंहादिभिर्व्याप्तं क्रव्यं मांसमदन्तीति क्विप् क्रव्यशब्दाद-दोऽपक्वे क्विप् अपक्वेऽण्क्विपाविति परः समते पक्वापक्वविशेषानुक्तौ न क्षतिरर्थानतिशयत्वात् कीदृशः गुहाशयैः गुहायां शेरत इति पचादित्वादच् शीङोऽधिकरणादनेति परस्तत् क्रूरैर्निर्दयैः कठिनैर्वा सनिशाचरैः राक्षससहितैः पुनः कीदृशं तुङ्गशैलतरुच्छन्नं तुङ्गैः शैलैस्तरुभिश्च छन्नं सर्वतो व्याप्तम् अतएव मानुषाणामगोचरम् अगम्यम् । ष्विषन् वनेचराणामित्यारभ्य चरादेट इत्यादिप्रकरणस्य प्रागुक्तत्वात् अत तत्त्याग इत्यत आह उक्तादाधिकार इति ॥ ८३ ॥ भ०

स्तम्बमित्यादि । युवामिमान् मार्गानागतौ स्तम्बेरमजयसिंहाव्यान् स्तम्बेरमजयन्ति ये सिंहाः एजेः खश् अरुर्द्विषेति मुम् तैराढ्यान् व्याप्तान् सिंहग्रहणं तद्वद्धिंस्रोपलक्षणार्थं हिनस्तीति सिंहः पृषोदरादित्वाद्वर्णविपर्ययः नाडिन्धमानिति उच्चनीचाधिरोहणान्मुहुर्मुहुर्निश्वासैर्नाडिन्धमन्तीति नाडीमुष्ट्योश्चेति खश् खित्यनव्ययस्येति ह्रस्वः विषमोपलान् उन्नतपाषाणयुक्तान् स्तनन्धयसमत्विषौ बालवत्सुकुमारौ सामर्थ्यं पुनर्युवयोरचिन्त्यं स्तनं धयतः पिबतः नासिकास्तनयोरिति खश् अरुर्द्विषदिति मुम् ॥ ८४ ॥ ज० म०

अथ खशाद्यधिकारः स्तम्बमित्यादि । युवां कथम् इमान् मार्गान्

उत्तीर्णौ वा कथं भीमाः सरितः कूलमुद्वहाः।
नासादितौ कथं ब्रूतं न गजैः कूलमुद्रुजैः ॥ ८५ ॥
रामोऽब्रवीद्धनूमन्तमावामभ्रंलिहं गिरिम्।

आगतौ एतद् ब्रूतमिति वक्ष्यमाणश्लोकेनान्वयः। कीदृशान् सत्त्वमेजय-सिंहादीन् सत्वान् प्राणिन एजयन्ति कम्पयन्ति भीषयन्तीति यावत् खशेजेरिति खश् खित्यनव्ययाजितेति मन्। तादृशा ये सिंहास्तैरायान् व्याघ्रान् हिनस्तीति सिंहः पचादित्वादन् निपातनात् वर्णविपर्ययः। नाड़िन्धमान् मुहुर्मुहुर्नाड़ीं निःश्वासैर्धमन्ति उपतापयन्तीति नाड़ी-मुष्टीस्तनेत्यादिना खश् घ्मादानधेत्यादिना ध्मोधमादेशः पूर्ववन्मन् ह्रस्वश्च विदमोपलान् उन्नतानतप्रस्तरयुक्तान् युवां कीदृशौ स्तनन्धय-सदृशत्विषौ स्तनं नयति पिबतीति स्तनन्धयो बालकः पूर्ववत् खश् मन् च तेन समा त्विट् दीप्तिर्ययोः एतेन सौकुमार्य्यं दर्शितं स्तनन्धयशब्दे-नार्थात् तद्दीप्तिरुपलक्ष्यते दीप्तौ तत्सम्बन्धमुचितं परम्परया धर्म्मिसाम्यं धर्म्मसाम्यं वा गम्यते ॥ ८४ ॥ भ०

उत्तीर्णावित्यादि। कथं वा केनोपायेन युवां सरितो नदीरुत्तीर्णौ भीमास्त्रासकरीः यतः कूलमुद्वहाः कूलमापूर्य्य वहन्त्यः उदिकूले इति खश्। गजैः कूलमुद्रुजैः कूलं भिन्दद्भिः कथं नासादितौ न व्यापादितौ इति ब्रूतं कथयतम् ॥ ८५ ॥ ज० म०

उत्तीर्णावित्यादि। कथं वा युवां सरितो नदीरुत्तीर्णौ तरणमधि-गतौ तेन गत्यर्थाढेत्यादिना कर्त्तरि क्तः कीदृशीः कूलमुद्वहाः कूला-न्यापूर्य्य वहन्ति कूलं तीरमपि जलानि प्रापयन्ति वा अतएव भीमा-स्त्रासकरीः गजैर्हस्तिभिः कथं वा युवां नासादितौ न प्राप्तौ न मारि-ताविति भावः कर्म्मणि क्तः। कीदृशैः कूलमुद्रुजैः मत्ततया कूलं भिन्दद्भिः एतद्युवां ब्रूतं कथयतम् उभयत्र कूलादुद्रुजुवह इति खश् खित्यनव्ययाजितेति मन् ॥ ८५ ॥ भ०

राम इत्यादि। हनुर्वदनैकदेशः सोऽस्यास्तीति निन्दायां मतुप् अन्येषामपि दृश्यत इति दीर्घः हनूमान् हनुमानपीति विश्वदर्शनात्।

एव विद्वन्! पितुः कामात् पान्तावल्पम्पचान् मुनीन् ॥ ९६ ॥

अमितम्पचमीशानं सर्वभोगीणमुत्तमम्।
आवयोः पितरं विद्धि ख्यातं दशरथं भुवि ॥ ९७ ॥

हैहय्यं तस्य किल जातमात्रस्य आदित्यरथं गच्छतो हनुद्वयं भग्नमिति श्रूयते। तं रामोऽवोचत् उक्तवान् तत् किमित्याह, हे विद्वन्! यदमुं गिरिमावामेव आगतौ तत् पितुः कामादभिप्रायात् आङ्पूर्वादिणो लिङि रूपम् अभ्रंलिहमुच्चैस्तरम् अभ्रं लेढीति वहाभ्रे लिह इति खश् किं कुर्वाणौ पान्तौ रक्षन्तौ मुनीन् अल्पम्पचान् अल्पसन्तुष्टान् अल्पं पचन्तीति मितनखे चेति मितेत्यर्थग्रहणात् खश् चकारस्यानुक्तसमुच्चयार्थत्वाद्वा ॥ ९६ ॥ ज० म०

राम इत्यादि। रामो हनूमन्तम् अवोचत् पर्वताघातभग्नत्वात् कुत्सिता हनूरस्यास्तीति निन्दायां मतुः हनुशब्दात् तन्वादेर्वा इति वार्त्तिक ऊङ् उतोऽयुञ्रज्वादेरित्यस्य प्रत्युदाहरणे रज्वादौ तु हनुरिति क्वचित् पुस्तके दृश्यते तत्तु लिपिकरप्रमादादिति केचित् नान्नरस्यर्थेऽचोर्ध इति केचित् हनूमान् हनुमानपीति विश्वदर्शनाद्द्वैरूप्यमेव किमुक्तवानित्याह, हे विद्वन्! आवां पितुः कामादभिलाषादमुं गिरिम् एव आगतौ इणोघीव अदादित्वात् शपोलुक् अभ्रंलिहमाकाशं लेढि प्राप्नोतीति तृम्रष्टद्वजीत्यादिना अभिधानादनान्नरपि खः खितीति मनु अभिधानात् गुणाभावः। आवां कीदृशौ मुनीनां पान्तौ रक्षन्तौ पा लरक्षणे शतुः कीदृशान् अल्पम्पचान् स्वल्पसन्तुष्टान् दरिद्रान् वा घटीखारीत्यादौ मितनखमानादित्यत्रार्थस्यैव ग्रहणं तेनाल्पशब्दात् पचः खश् अल्पं यथा स्यात्तथा पचानिति केचित् मुनिरक्षणेन दुष्टहिंसाप्रवृत्तयोरावयोः कुतः सिंहादिभयं तादृशोस्य सरिदुत्तरणमपि नाशक्यमिति पूर्वप्रश्नेषु सर्वत्रोत्तरं सूचितम् ॥ ९६ ॥ भ०

कः पुनः पिता यदादेशादागतावित्यत आह। अमितम्पचमित्यादि। आवयोः पितरं दशरथनामानं भुवि विख्यातं विद्धि जानीहि इभलक्ष्यो होधिः अमितम्पचं महामन्त्रिणं पूर्ववत् खश् मुम् च ततो

छलेन दयितारण्याद्रक्षसारुन्तुदेन नः।
असूर्य्यम्पश्यया मूर्त्त्या हृता तां मृगयावहे ॥ ९८ ॥

नञ्समासः। ईशानमीशनशीलं स्वामिनमित्यर्थः ताच्छील्येत्यादिना चालण्। सर्वभोगीणं सर्वस्वभोगाय हितम् आत्मन्विश्वजनेति खः भोगशब्दोऽत्र शरीरवाची अट्कुप्वादिना णत्वम् ॥ ९७ ॥ ज० म०

अमितमित्यादि। कः पिता यदादेशादत्रागतावित्याह। आवयोः पितरं दशरथं विद्धि जानीहि कुभ्मसौ हेर्षिः। कीदृशम् अमितस्पचं प्रचुरान्नप्रदं घटीखारीत्यादिना खश् पश्चान्नञ्समासः। ईशानम् ऐश्वर्य्ययुक्तम् ईशलङ् ऐश्वर्य्ये शानः सर्वभोगाय सर्वशरीराय हितं भुज्यतेऽनेनेति भोगः शरीरं ततो विकारसङ्घेत्यादिना हितार्थे ईनः पूर्वपदात्संज्ञायामगः इत्यादावतद्धादित्यस्य योगविभागात् णत्वम्। उत्तमं श्रेष्ठं भुवि ख्यातं पृथिव्यां प्रसिद्धं सर्वज्ञातत्वात् ॥ ९७ ॥ भ०

यदि पितुरादेशादागतौ किमत्र गमनेनान्वेषयथ इत्याह। छले- नेत्यादि। नोऽस्माकं दयिता अरण्याद्राक्षसेन हृता कीदृशेन अरुन्तुदेन मर्मस्पृशा विध्वरुषोस्तुद इति खश् मुम् असूर्य्यम्पश्यया आदित्यगोप्यया मूर्त्त्या शरीरेणोपलक्षिता असूर्य्यललाटयोरिति खश् तां हृतां मृगया- वहे गवेषयावः मृग अन्वेषणे स्वार्थिकण्यन्तः युवयोः पौरुषान्वितत्वात् कथं हृतेत्याह छलेन छद्मना ॥ ९८ ॥ ज० म०

छलेनेत्यादि। पितुराज्ञया दण्डकागमनेऽपि कथम् अत्रागमन- मित्याह। अस्माकं दयिता अरण्याद्रक्षसा हृता कथं युवयोरग्ये हृते- त्याह छलेन छद्मना नतु बलात् कीदृशेन रक्षसा अरुन्तुदेन मर्मस्पृशा घटीखारीत्यादिना खश् खित्यनव्ययस्येति मुम् स्याद्देः सो लोपः अस्मद एकत्वे बहुत्वविवक्षा तां हृतां मृगयावहे अन्वेषयावः मृगतुकङ्मार्गणे मार्गणमन्वेषणं मूर्त्त्या शरीरेणोपलक्षिता विशेषणे तृतीया कीदृश्या असूर्य्यम्पश्यया सूर्य्यमपि न पश्यन्त्या अतिगोप्ययेत्यर्थः पूर्ववत् खश् स्याद्दानेत्यादिना द्वयोः पश्यादेशः सूर्य्येण सह समासो गमकत्वात् ॥ ९८ ॥ भ०

प्रत्यूचे मारुती राममस्ति वालीति वानरः ।
शमयेदपि संग्रामे यो ललाटन्तपं रविम् ॥ ९९ ॥
उग्रम्पश्येन सुग्रीवस्तेन भ्राता निराकृतः ।
तस्य मित्रयतो दूतः संप्राप्तोऽस्मि वशंवदः ॥ १०० ॥

त्वं पुनः कस्य वेत्यत आह । प्रत्यूचे इत्यादि । रामं मारुतिः प्रत्यूचे प्रत्युक्तवान् अस्ति वालीति नाम्ना कपीश्वरः यः संग्रामे युद्धे ललाटन्तपं सर्वेषामुपरि वर्त्तमानं रविं पूर्ववत् खश् शमयेत् पराजयेदिति सम्भावने लिङ् वालिशब्दो नान्तः इदन्तश्च तथाच वाली वालिश्च कथ्यते इति शब्दभेदः ॥ ९९ ॥ ज० म०

प्रत्यूच इत्यादि । मारुतिर्हनूमान् रामं प्रत्यूचे किं प्रत्यूचे इत्याह वालीति नाम्ना वानरोऽस्ति यः संग्रामे प्रवृत्ते रविं सूर्य्यमपि शमयेत् पराजयेत् प्रौढ्यासम्भावनेति लिङ् । कीदृशं रविं ललाटन्तपं सर्वेषामुपरिवर्त्तिनं मध्याह्नकालीनमपि प्रचण्डमपीत्यर्थः यद्वा सूर्य्योऽपि चेत्तस्य ललाटं तपति तदा तमपि शमयेत् सुतरामेवान्यायकारिणमित्यर्थः असूर्य्यललाटयोरित्यादिना खश् ॥ ९९ ॥ भ०

उग्रम्पश्येनेत्यादि । तेन भ्राता उग्रं पश्यता पापं विजानता उग्रं पश्येत्यादिना निपातितं यस्य सुग्रीवो निराकृतोऽभिभूतस्तस्य हि दूतः प्राप्तोऽस्मि वशंवदः वशमनुकूलं वदतीति वशंवदः प्रियवशे वदः खच् । कीदृशस्य मित्रीयतो मित्रमिच्छतः सुप आत्मनः क्यच् ॥ १०० ॥ ज० म०

उग्रमित्यादि । तेन भ्राता वालिना सुग्रीवो निराकृतः देशान्निःसारितः कीदृशेन उग्रं पश्येन पापं पश्यता उग्रदृष्टिना वा घटीखारीत्यादिना खश् । तस्य सुग्रीवस्य दूतोऽहं सम्प्राप्तोऽस्मि आगतोऽस्मि कीदृशस्य मित्रीयतः आत्मनो मित्रमिच्छतः तथा भवन्तमेव क्योऽम्बत्राव्ययेति क्यः अवर्णस्य ईश्च ततः शतः । वशमनुकूलं वदतीति वशंवदः प्रियवशादित्यादिना खः । अस्मीति क्रियापदम् अस्मदर्थेऽव्ययं वा ॥ १०० ॥ भ०

प्रियंवदोऽपि नैवाहं ब्रुवे मिथ्या परन्तप !।
सख्या तेन दशग्रीवं निहन्तासि द्विषन्तपम् ॥ १०१ ॥
वाचंयमोऽहमनृते सत्यमेतद् ब्रवीमि ते।
एहि सर्वंसहं मित्रं सुग्रीवं कुरु वानरम् ॥ १०२ ॥

किन्तेन सख्येनेति चेदाह प्रियंवद इत्यादि। प्रियंवदतया लोको-मिथ्या वदति अहं प्रियंवदोऽपि पूर्ववत् खच् परन्तप ! शत्रूणामुप-तापद ! द्विषदिति खच् वाचंयमपुरन्दरौ चेत्यमागमौ निपात्येते। नैवाहं मिथ्या ब्रुवे वदामि तेन सुग्रीवेण सख्या मित्रेण दशग्रीवं निहन्तासि हनिष्यसि हन्तेर्लुटि रूपम् कीदृशं द्विषन्तपं शत्रूणामुपता-पयितारं पूर्ववत् खच् ॥ १०१ ॥ ज० म०

प्रियमित्यादि। किन्तेन मित्रेणेत्याह तेन सुग्रीवेण सख्या त्वं दशग्रीवं हन्तासि निहनिष्यसि हन्तेर्लुटि कीदृशं द्विषन्तपं शत्रूणामुप-तापकं तृन्नन्त इत्यादिना द्विषच्छब्दात्तपोऽभिधानादसंज्ञायामपि खः मनीषादित्वात्तलोपे खित्यव्याजिति मन् किंवा द्वेष्टीति द्विषः कण्टका-मीजुङ इति कः तस्मात्तपः खः प्रियंवदत्वान्मृषा ब्रवीषि चेदाह, हे परन्तप ! शत्रूणामुपतापक ! प्रियंवदोऽपि सन् नैव मिथ्या ब्रुवे वदामि परन्तपेति रामसम्बोधनात् द्विषन्तपमिति रावणविशेषणात् द्वयोः साम्यमुक्तं तेन तज्जयाय रामस्य मित्रान्तरापेक्षा युक्तेति भावः प्रियंवद इति प्रियवशादिति खः परन्तपेत्यत्र द्विषन्तपवत् खः ॥१०१॥भ०

वाचंयम इत्यादि। वाचंयमपुरन्दरौ चेत्यमागमौ निपात्येते तस्मात् सत्यमेतत् पूर्वोक्तं ब्रवीमि ते तुभ्यं तादर्थ्ये चतुर्थी यत एवं तस्मादेहि आगच्छ सुग्रीवं वानरं मित्रं कुरु कीदृशं सर्वंसहं सर्वं सहत इति पूःसर्वयोरिति खच् ॥ १०२ ॥ ज० म०

वाचमित्यादि। न मिथ्या ब्रुव इति प्रागुक्तं द्रढयन्नाह अहम् अनृते असत्ये वाचंयमो मौनी तस्माद्दशग्रीवं निहन्तासि इति यदुक्तम् एतत्तुभ्यं सत्यमेव ब्रवीमि तादर्थ्ये चतुर्थी तस्मात् एहि आगच्छ सुग्रीवं वानरं मित्रं कुरु। कीदृशं सर्वंसहं सर्वकार्य्यक्षमं तृन्नन्त इत्यादिना

सर्वङ्कषयशःशाखं रामकल्पतरुं कपिः ।
आदायाभ्रङ्कषं प्रायान्मलयं फलशालिनम् ॥ १०३ ॥
मेघङ्करमिवायान्तमृतुं रामं क्षमान्वितः ।
दृष्ट्वा मेने न सुग्रीवो बालिभानुं भयङ्करम् ॥ १०४ ॥

अभिधानादरुंन्तायामपि खः वाचंयम इति वाचाशब्दं तु यमः पूर्ववत् खः खित्यव्याजिति कनु हृस्वस्य परे तु वाक्शब्दोपपदेन साधयन्ति ॥ १०२ ॥ भ०

सर्वङ्कषेत्यादि । रामः कल्पतरुरिव तमादाय गृहीत्वा कपिः प्रायात् गतः । कीदृशं रामं सर्वङ्कषयशःशाखं सर्वं कषन्ति वाप्नुवन्ति यानि यशांसि सर्वकूलेत्यादिना खश् । तान्येव शाखा यस्य फलशालिनमभिमतफलसम्पादनात् अभ्रङ्कषमुच्चैस्तरं मलयं पूर्ववत् खच् ॥१०३॥ज०म०

सर्वमित्यादि । राम एव कल्पतरुः तमादाय कपिर्हनूमान् मलयं प्रायात् प्रगतः रामं कीदृशं सर्वङ्कषयशःशाखं सर्वं कषयन्ति व्याप्नुवन्ति सर्वं पापं नाशयन्ति वा यानि यशांसि तान्येव शाखा यस्य तं फलशालिनम् अभिमतफलसम्पादनात् मलयं कीदृशम् अभ्रङ्कषम् आकाशव्यापकम् अत्युच्छ्रितत्वात् फलशालिनमिति मलयस्य विशेषणात् श्रमापहारकत्वं सूचितमिति केचित् प्रियवशाङ्कयन्तीत्यादिना खः ॥१०३॥ भ०

मेघङ्करमित्यादि । राममायान्तं दृष्ट्वा सुग्रीवो बालिनं भानुमिव भयङ्करं भीतिजनकं न मेने न बुद्धवान् मेघर्त्तीत्यादिना खच् क्षमान्वितो ग्लानो बालिभानुना पीड़ितत्वात् कीदृशं रामं मेघङ्करम् ऋतुमिव प्रावृट्कालमिव पूर्ववत् खच् ॥ १०४ ॥ ज० म०

मेघमित्यादि । राममागतं दृष्ट्वा सुग्रीवो भानुमिव बालिनं भयङ्करं भीतिजनकं न मेने न मन्यते स्म । कीदृशः क्षमेनान्वितः ग्लानः रामं कीदृशं मेघङ्करं मेघोत्पादकम् ऋतुमिव वर्षाकालमिव वर्षाकालस्य सूर्याच्छादकत्वेन क्लान्तस्य भयापहारित्वात् साम्यं प्रियवशाङ्कयर्त्तिमेघादिति खः ॥ १०४ ॥ भ०

उपाग्न्यकुरुतां सख्यमन्योन्यस्य प्रियङ्करौ ।
क्षेमङ्कराणि कार्य्याणि पर्य्यालोचयतां ततः ॥ १०५ ॥
आशितम्भवमुत्क्रुष्टं वल्गितं शयितं स्थितम् ।
बह्वमन्यत काकुत्स्थः कपीनां स्वेच्छया कृतम् ॥१०६॥

उपाग्नीत्यादि। उपाग्नि अग्निसमीपे रामसुग्रीवौ सख्यमकुरुताम् ऊनः सख्युरावयोः सख्यमिति अन्योन्यस्य प्रियङ्करौ क्षेमप्रियमद्रेष्वण् चेति चकारात् खच् ततः सख्यकरणानन्तरं क्षेमङ्कराणि हितजनकानि यथा कार्य्याणि प्रत्यालोचयतां निरूपितवन्तावित्यर्थः। पडपुटेत्यत्र चुरादिकाण्डे धातौ लोचृ पठ्यते तस्य लङि रूपम् ॥ १०५ ॥ ज० म०

उपाग्नीत्यादि। रामसुग्रीवौ उपाग्नि अग्निसमीपे सख्यं मैत्रीम् अकुरुताम् यो तास् अग्निसाक्षिकं सख्यमिति भावः अन्योन्यस्य प्रियङ्करौ प्रियं कुरुत इति क्षेमप्रियमद्रात् कृञेति खः विकारसङ्घेति सखिशब्दात् भावे यः ततः सख्यानन्तरं परस्परस्य क्षेमङ्कराणि कुशलजनकानि कार्य्याणि पर्य्यालोचयतां निरूपितवन्तौ लोचृक् भासीत्यस्य ण्यां रूपं पूर्ववत् खः ॥ १०५ ॥ भ०

आशीत्यादि। आशितम्भवमशनम् आशिते भुवः करणभावयोरिति खच् उत्क्रुष्टं किलकिलायितं वल्गितं धावनं तथा शयितं स्थितञ्च कपीनां स्वेच्छया कृतम् एतत् काकुत्स्थो बह्वमन्यत श्लाघितवान् पुण्यभाज इमे यदेषां स्वेच्छाविहारिणां चेष्टितम् अस्माकन्तु शोकसन्तप्तानां न किञ्चिदस्तीति सर्वत्र भावे निष्ठा ॥ १०६ ॥ ज०म०

आशितमित्यादि। आङ् पूर्वादश्नातेः क्तः आशितस्य तृप्तस्य भोजनस्य भवनम् आशितम्भवं भावघेत्वाशिताद्भुव इति खः उत्क्रुष्टं शब्दकरणं वल्गितं गमनं शयितं शयनं पूङीङ्श्वेत्यादिना गुणः स्थितम् अवस्थानं दोषो नास्यामिति ङिः सर्वत्र भावे क्तः कपीनामेतत्सर्वं स्वेच्छया कृतं काकुत्स्थो बहु अमन्यत स्तुतवान् पुण्या एते स्वेच्छयैवं व्यवहरन्ति अस्माकन्तु शोकसन्तप्तानां न किञ्चिदस्तीति भावः स्वभावसिद्धत्वादाहार्य्यशोभारहितत्वात् प्रशंसा वा ॥ १०६ ॥ भ०

ततो बलिन्दमप्रख्यं कपिर्विश्वम्भराधिपम् ।
सुग्रीवः प्राब्रवीद्रामं बालिनो युधि विक्रमम् ॥ १०७ ॥
वसुन्धरायां कृत्स्नायां नास्ति वालिसमो बली ।
हृदयङ्गममेतत्त्वां ब्रवीमि न पराभवम् ॥ १०८ ॥

इति खजधिकारः ।

तत इत्यादि । ततः कार्य्यालोचनानन्तरं सुग्रीवोऽब्रवीत् लङ्‌ब्रुव ईट् किमुक्तवान् वालिनो युधि विक्रमं शौर्य्यमिति प्रधानं कर्म राममित्यकथितं कीदृशं रामं बलिन्दमप्रख्यं विष्णुतुल्यं बलिं दमयतीति संज्ञायां तृभृवृजीत्यादिना खच् अरुर्द्विषदजन्तस्य मुमिति मुम् खच्त्वे तथा विश्वं बिभर्त्तीति विश्वम्भरा तस्या अधिपस्तम् अधिपातीत्यधिपः आतश्चोपसर्ग इति कः ॥ १०७ ॥ ज० म०

तत इत्यादि । ततः कार्य्यालोचनानन्तरं सुग्रीवः कपिर्युधि संग्रामे वालिनो विक्रमं रामं प्राब्रवीत् । रामं कीदृशं बलिन्दमप्रख्यं बलिं दमयतीति बलिन्दमस्त्रिविक्रमस्तेन तुल्यं तृभृवृ इत्यादौ अरन्तदमो ग्रहणम् अरिन्दम । इत्युदाहरणे कर्मोपपदेन सूचितं केवलस्य दमेरन्तर्भूतण्यर्थत्वात् सकर्मकत्वमिति केचित् सकर्मकोऽपि दमिर्दृश्यत इति गोयीचन्द्रेणोक्ता दमित्वा परिसङ्क्षातानिति निदर्शितं विश्वं बिभर्त्तीति विश्वम्भरा पृथ्वी पूर्ववत् खः तस्या अधिपं स्वामिनम् अधिपातीत्यधिपः ह्वनजनादिति डः ॥ १०७ ॥ म०

वसित्यादि । वसुन्धरायां पूर्ववत् खच् वालिना समोऽन्यो बली बलयुक्तो नास्तीति हृदयङ्गमं मम स्वानुभवं ब्रवीमि मम स्वानुभवं हि वस्तु हृदयङ्गममित्युच्यते तेन संज्ञायामित्यधिकृत्य गमश्चेति खच् न पुनस्त्वां पराभवमभिभवं ब्रवीमि ॥ १०८ ॥ ज० म०

वसित्यादि । कृत्स्नायां समस्तायां वसुन्धरायां पृथिव्यां वालितुल्यो बलवान् नास्ति वसु धरतीति तृभृवृ इत्यादिना खः एतत्, हृदयङ्गमम् आत्मानुभूतमेव त्वां ब्रवीमि हृदयं गच्छतीति पूर्ववत् खः अनुभूतस्येयं संज्ञा न पुनस्त्वां पराभवं ब्रवीमि तस्मात् भवतः पराभवं न

दूरगैरन्तगैर्बाणैर्भवानत्यन्तगः श्रियः।
अपि संक्रन्दनस्य स्यात् क्रुद्धः किमुत बालिनः ॥१०९॥
वरेण तु मुनेर्बाली सञ्जातो दस्युहो रणे।
अवार्य्यप्रसरः प्रातरुद्यन्निव तमोऽपहः ॥ ११० ॥

त्वां वदामि तेन नास्ति बालिसमो बलीति प्रागनुभूतं कथितं न तु त्वत्तोऽधिकोऽयमिति सम्प्रति ज्ञापितम्। इति खशधिकारः ॥१०८॥ भ०

एवंपराक्रमोऽसौ तत्र किं त्वं करिष्यसीत्याह दूरगैरित्यादि। यतो भवान् क्रुद्धः सन् संक्रन्दनस्यापि शक्रस्यापि नन्द्यादिभ्यो ल्युः। बाणैः करणभूतैः दूरगैः दूरं गच्छन्तीति अन्तगैः कार्य्यसमापकैः अन्तात्यन्तेत्यादिना डः। श्रियो लक्ष्म्याः अत्यन्तगः विनाशयिता स्यात् अत्यन्तं पर्य्यवसानं गच्छतीति किं पुनर्बालिनो लक्ष्म्या अत्यन्तगो भवान् विनाशयितेति ॥ १०९ ॥ ज० म०

दूरगैरित्यादि। रामं प्रोत्साहयन्नाह भवान् क्रुद्धः सन् संक्रन्दनस्य इन्द्रस्यापि श्रियो लक्ष्म्या बाणैरन्तगो भवेत् किं पुनर्बालिनः श्रियः सुतरामेतल्लक्ष्म्या नाशयिता स्यात्। बाणैः कीदृशैर्दूरगैः दूरपातिभिः अन्तगैः कार्य्यसमापकैः दूरमन्तञ्च गच्छन्तीति हनजनाहसमाडेः। दितिगर्भं संक्रन्दितवान् इति नन्द्यादित्वादनः ॥ १०९ ॥ भ०

वरेणेत्यादि। मुनेस्तु वरेण दस्युहः दस्यून् शत्रून् वध्यादिति आशिषि हन इति डः। अतो रणे अवार्य्यप्रसरोऽनभिभवनीयगतिः सञ्जातः क इव तमोऽपह इव तमोऽपहः आदित्यः तमोऽपहन्तीति अपेक्षेशतमसोरिति डः। प्रातः प्रभाते उद्यन् उद्गच्छन् उत्पूर्वादिनः शतरि इणो यण्। अनार्य्यप्रसरस्तद्वदसावपि सर्वं वाक्यं सावधारणं भवतीति प्रातरप्युद्यन्नवार्य्यप्रसर एवेति तेन सर्वकाले अस्यावार्य्यप्रसरत्वं सिद्धं न तु प्रातरेवोद्यन्नवार्य्यप्रसर इति ॥ ११० ॥ ज० म०

वरेणेत्यादि। रामस्याध्यवसायं जिज्ञासुः पुनरपि बालिविक्रममाह मुनेर्वरेण तु दस्युहः स बाली रणेऽवार्य्यप्रसरः सञ्जातः काले उद्यन् तमोऽपहः सूर्य्य इव दस्यून् शत्रून् हन्तीति हनजनादिति

अतिप्रियत्वान्न हि मे कातरं प्रतिपद्यते ।
चेतो बालिवधं राम ! क्लेशापहमुपस्थितम् ॥ १११ ॥

इति डाधिकारः ।

शीर्षघातिनमायातमरीणां त्वां विलोकयन् ।
पतिघ्नीलक्षणोपेतां मन्येऽहं बालिनः श्रियम् ॥११२॥

डः । हन्तेराशिषि ड इति परे तन्नते बालो दस्यून् वध्यादिति सुने-र्वरेण अवार्यप्रसरो जातः खमते आशीरर्थानुक्तौ न चतिः । वरेण दस्युहन्तृत्वे आशीर्गम्यत एव अवार्योऽखण्डनीयः प्रसरो गतिर्यस्य स तथा ह्यगतौ अनिष्टपम् उत्पूर्वस्य यः प्रतरि उद्यन् तमोऽपहन्तीति पूर्ववत् डः । तमःक्लेशार्येभ्योऽपपूर्वहन्तेर्ड इति परः ॥ ११० ॥ भ०

अतीत्यादि । हे राम ! मदीयं चेतो बालिवधं कर्मीभूतमुपस्थितं प्राप्तं न हि प्रतिपद्यते नैव प्रत्येति यस्मात् कातरं व्याकुलं बालिनोऽतिबलयुक्तत्वात् कीदृशं बधं क्लेशापहं दुःखस्योन्मूलकं पूर्ववड्डः । अतिप्रियत्वाद्बालिवधस्य यस्य हि यत् प्रियं तत्सिद्धमपि असौ न प्रत्येति ॥ १११ ॥ ज० म०

अतीत्यादि । हे राम ! बालिवधस्यातिप्रियत्वात् मे मम चेतो बालिवधमुपस्थितमुपपन्नमपि न प्रतिपद्यते न प्रत्येति यतः कातरं बालिभयाद्व्याकुलम् उपस्थितेऽपि प्रिये कातरस्य प्रतीतिर्नास्तीति भावः । बालिवधं कीदृशं क्लेशापहं दुःखस्योन्मूलकम् अतएवास्याति-प्रियत्वं क्लेशमपहन्तीति पूर्ववत् डः ॥ १११ ॥ भ०

उपस्थितोऽस्य वध इति कथं ज्ञायत इत्याह शीर्षेत्यादि । अरीणां शीर्षघातिनं कुमारशीर्षयोर्णिनिः निपातनात् शिरसः शीर्षभावः । आयातं विलोकयन् बालिनः श्रियं पतिघ्नीलक्षणोपेतामहं मन्ये पतिं हन्ति यल्लक्षणं तेनोपेतामिवेतीवार्थोऽत्र द्रष्टव्यः अमनुष्यकर्तृके चेति टक् गमहनेत्युपधालोपः होहन्तेरिति कुत्वम् ॥ ११२ ॥ ज० म०

शीर्षेत्यादि । बालिवधस्योपस्थितत्वं दर्शयन्नाह आगतं त्वां विलोकयन्नहं बालिनः श्रियं पतिघ्नीलक्षणोपेतां मन्ये श्रियो बालिपत्नी-

शत्रुघ्नान् युधि हस्तिघ्नो गिरीन् क्षिपन्नकृत्रिमान्।
शिल्पिभिः पाणिघैः क्रुद्धस्त्वया जय्योऽभ्युपायवान्॥११२॥

त्वेन निरूपणात् पतिहन्तृचिह्नयुक्तत्वात् बालिवधो गम्यते। पतिं हन्तीति हनचरगट्टक् हनगमित्युड्लोपः हनोह्नोघ्नः अमनुष्यकर्तृ का-र्थे इति टगिति परः। त्वां किम्भूतम् अरीणां शीर्षघातिनं शिरश्छेदिनं बहादित्वाणिन् कुमारशीर्षाभ्यां हन्तेर्णिनिति परः उत्प्रेक्षाव्यञ्जको-ऽत्र मन्ये शब्दः अन्यथास्थितस्यान्यथाकथनात् ॥ ११२ ॥ भ०

शत्रुघ्नानित्यादि। किञ्च युधि संग्रामे बाली त्वया जय्यः शक्यो जेतुं यदि युष्मदस्त्राणां शक्तिर्दृष्टा ताञ्च द्रष्टुमिच्छामीति वक्ष्यमाणा-भिप्रायः क्षय्यजय्यौ शक्यार्थे इत्ययादेशनिपातनम्। कीदृशः अभ्युपाय-वान् युद्धोपाययुक्तः किं कुर्वन् क्रुद्धः क्षिपन् गिरीन् दिवादित्वाच्छ्यन् अकृत्रिमान् देवनिर्मितान् शत्रुघ्नान् शत्रून् हन्तीति अमनुष्येति टक् हस्तिघ्न इव हन्तिघ्नः हस्तिनं हन्तुं शक्तः शक्तौ हस्तिकपाटयोरिति कर्तृकार्यारम्भकत्वात् बाली चामनुष्यः शिल्पिभिर्युद्धकुशलैः वानरैः सह स्तवस्य मनुष्यक्षिपन् सहार्थस्य गम्यमानत्वात् सहयोगे तृतीया। पाणिघैः पाणिवादकैः ते हि हस्तियुद्धेऽन्यस्य वाद्यस्यासम्भवात् हस्तिमुखमेव वादयित्वा गिरीन् प्रहरणान् क्षिपन्ति पाणिघताड-घौ शिल्पिनीति कर्तरि निपातनम् ॥ ११२ ॥ ज० म०

शत्रुघ्नानित्यादि। प्रत्ययजनककर्मद्वारा रामविक्रमं ज्ञातुमिच्छत् महतामपतः साक्षात् स्वाभिप्रायकथनायुक्तत्वात् छलेन रामं स्तुवन्ने-वाह ईदृशोऽपि बाली त्वया जय्यः जेतुं शक्यः पक्ष्यावद्येत्यादिना निपातः। कीदृशः अभ्युपायवान् युद्धोपाययुक्तः क्रुध्यन् सन् गिरीन् क्षिपन् क्षिप्यौणु सृदि कीदृशान् अकृत्रिमान् देवनिर्मितान् एतेन स्वभावसिद्धमुच्छ्रितत्वं सूचितम्। शत्रुघ्नान् क्षिप्यमाणा गिरयः शत्रुं घ्नन्ति शत्रुं हन्तुं गिरीन् क्षिपतीति भावः पतिघ्नवत् टक्। पुनः कीदृशः हस्तिघ्नः हस्तिनं हन्तीति पूर्ववत् टक् हस्तिकपाटाभ्यां हन्तेः शक्तौ टगिति परः। तेन हस्तिनं हन्तुं शक्त इत्यर्थः लभते पर्यादेव

आद्यङ्करणविक्रान्तो महिषस्य सुरद्विषः ।
प्रियङ्करणमिन्द्रस्य दुष्करं कृतवान् वधम् ॥ ११४ ॥
प्रियम्भावुकतां यातस्तं क्षिपन् योजनं मृतम् ।
स्वर्गे प्रियम्भविष्णुश्च कृत्स्नं शक्तोऽप्यबाधयन् ॥ ११५

शक्तिर्गम्यते शिल्पिभिर्युद्धकुशलैर्वानरैरुपलक्षितः पाणिघैः पाणिवादकैः युद्धे तेषां वाद्यान्तराभावात् हर्षेण हस्तयुगमेव वादयन्ति विशेषणे तृतीया शिल्पिभिः सह गिरीन् क्षिपन् इति वा सम्बन्धः । एतेन तत्सदृशास्तच्छाया अपि सन्तीति सूचितं पाणिभ्यां पाणी हन्तीति पाणिघो निपातनात् ॥ ११३ ॥ भ०

आद्यमित्यादि । अनाद्यमाद्यं करोत्यनेनेति आद्यसुभगेत्यादिना करणे ख्युन् आद्यंकरणं विक्रान्तं यस्य वालिनः अनाद्यः सन् विक्रान्तेनाद्यो भूत इत्यर्थः । महिषस्य सुरद्विषो दुन्दुभेर्वधं मरणं यः कृतवान् दुष्करं कृच्छ्रसाध्यं प्रियङ्करणमिन्द्रस्य तुष्टिकरम् अप्रियं प्रियङ्करोत्यनेनेति पूर्ववत् ख्युन् ॥ ११४ ॥ ज० म०

आद्यमित्यादि । किञ्च वाली युधि महिषस्य देवशत्रोर्वधं कृतवान् कीदृशः अनाद्य आद्यः क्रियते येन तादृशं विक्रान्तं विक्रमो यस्य स तथा अनाद्यः सन्नपि विक्रमेणाद्यो भूत इत्यर्थः नग्नपलितेत्यादिना खनट् । वधं कीदृशम् इन्द्रस्य प्रियङ्करणं प्रीङ् प्रीतौ कृगृज्ञाप्रीति कप्रत्यये प्रियः प्रीतिमान् महिषभयेन प्रागप्रियः प्रियः क्रियते अनेनेति पूर्ववत् खनट् प्रीतिजनकमित्यर्थः यद्वा इन्द्रो लोकानामप्रिय आसीत् शत्रुवधाक्षमत्वात् पुत्रकृतशत्रुवधेन तु प्रियः क्रियत इत्यर्थः यतो दुष्करं कृच्छ्रसाध्यम् एतेन इन्द्रादप्यधिकोऽयं बलीति सूचितम् ॥११४॥भ०

प्रियमित्यादि । तमेवं सुरद्विषं मृतं पादाङ्गुष्ठेन योजनमध्वानं क्षिपन् प्रेरयन् क्षिपेस्तौदादिकस्योभयपदिनो रूपम् । प्रियम्भावुकतां यातस्तथा स्वर्गे प्रियम्भविष्णुश्चासीत् कर्त्तरि भुव इत्यनेनाद्यादिषूपपदेषु खिष्णुच्खुकञौ । शक्तोऽपि समर्थोऽपि कृत्स्नं लोकमित्यर्थात् अबाधयन् अपीडयन् बधसंयम इति चौरादिकः तस्य शतरि रूपम् ।

जिज्ञासोः शक्तिमस्त्राणां रामो न्यूनधियः कपेः ।
अभिनत् प्रतिपत्त्यर्थं सप्त व्योमस्पृशस्तरून् ॥ ११६ ॥
ततो बालिपथो बध्ये रामलिंगजितसाध्वसः ।
अभ्यभून्निलयं भ्रातुः सुग्रीवो निनदन् दृष्टक् ॥ ११७ ॥

स ईदृशस्त्वया शक्यो जेतुं यदि त्वदस्त्राणां सामर्थ्यं दृष्टमित्यभिप्रायेणा-ब्रवीत् सुग्रीवः ॥ ११५ ॥ ज० म०

प्रियमित्यादि । तं मृतं महिषं पदाङ्गुष्ठेन योजनम् अध्वानं क्षिपन् प्रेरयन् प्रियम्भावुकतां प्राप्तः प्राक् यस्याप्रिय आसीत् दुष्ट-वधात् तस्यापि प्रियभावं प्राप्तः बाधितुं शक्तः समर्थोऽपि तत्त्वं लोकम् अबाधयन् अपीड़यन् स्वर्गस्य प्रिय आसीत् तस्यापि प्रियो-भूतः भुवो घे खिष्णु खुकञाविति चत्रर्थे खिष्णुखुकञो बधक् बर्भे क्त्वाक्षुरादिः योजनशब्देनात्र योजनान्तरितदेशो लक्ष्यते शदाध्वादि-व्याप्ताविति योजनात् द्वितीया । एवं सुग्रीवः प्राब्रवीद्राममिति प्राशु-क्तेन सम्बन्धः ॥ ११५ ॥ भ०

रामोऽपि तदभिप्रायं विदन् यत् कृतवान् तदाह । जिज्ञासो-रित्यादि । अस्त्राणां शराणां शक्तिं जिज्ञासोः ज्ञातुमिच्छोः कपेः सुग्रीवस्य न्यूनधियः स्वल्पबुद्धेः यतः प्रमाणान्तरेणापरिज्ञानात् प्रत्य-क्षेण ज्ञातुमिच्छतीति प्रतिपत्त्यर्थं संप्रत्ययार्थं रामः सप्त तरून् तालान् पङ्क्त्या स्थितान् एकेन शरेणाभिनत् व्योमस्पृशः स्पृशोऽनुदके क्विन् ॥ ११६ ॥ ज० म०

जिज्ञासोरित्यादि । यदि तवास्त्राणां भेदकत्वं दृष्टं स्यात्तदा त्वया तादृशो बाली जेतुं शक्यत इति सम्भवत इति सुग्रीवाभिप्रायं रामो-ऽपि ज्ञातवान् यतो न्यूनबुद्धेरतएवास्त्राणां शक्तिं ज्ञातुमिच्छोः कपेः सुग्रीवस्य प्रतिपत्त्यर्थं सम्प्रत्ययार्थं रामः सप्त तालान् अभिनत् भिदेर्णौ बधादित्वात् अन् व्योमस्पृशः अत्युच्छ्रितानित्यर्थः व्योम स्पृशन्तीति स्पृशोऽनुदक इति क्विन् उदकवर्जसुपपदात् स्पृशः क्विनिति परः ॥ ११६ ॥ भ०

तत इत्यादि । ततस्तद्भेदादनन्तरं सुग्रीवो भ्रातुर्निलयमभ्यभूत्

गुहाया निरगाद्वाली सिंहो मृगमिव द्रुवन् ।
भ्रातरं युङ्भियः संख्ये घोषेणापूरयन् दिशः ॥११८॥

अभिभूतवान् । कीदृशः दधृक् धृष्टः ऋत्विगित्यादिना निपातितं धृषेः क्विन् द्विर्वचनं क्विन्प्रत्ययस्य कुरिति कुत्वं खकारः चर्त्वं ककारः । यस्माद्वालिनि पशाविव बध्ये बधार्हे रामेण ऋत्विजा याजकेन जितसाध्वसः अपनीतसाध्वसः तस्माद्दधृक् ऋतौ यजति ऋतुं वा यजति ऋतुप्रयुक्तो वा यजतीति ऋतुपूर्वाद्यजेः क्विन् यजादित्वात् सम्प्रसारणम् इदमृत्विक्शब्दनिर्वचनं रूढितस्तु याजयितृषु ब्राह्मणेषु क्विन्प्रत्ययस्य कुः निनदन् किलकिलाशब्दं कुर्वन् ॥ ११७ ॥ ज० म०

तत इत्यादि । प्रत्ययानन्तरं सुग्रीवो निनदन् शब्दं कुर्वन् भ्रातुर्वालिनो निलयं निवासम् अभ्यभूत् अभिभूतवान् भूसुपिबेति सेर्लुक् । वालिनि पशाविव बध्ये सति रामेणैव ऋत्विजा याजकेन जितमपनीतं साध्वसं भयं यस्य येन वा स तथा अतएव दधृक् धृष्टः ऋतौ यजतीति त्वाद्युसिति क्विप् ग्रहस्वपाद्योरिति जिः चङिति कङ् धृषप्रागल्भ्ये क्विपि दधृक् दृष्ट्युष्णग्गित्यादिना निपातः ऋत्विजा पशुरपि हन्यत इति भावः ॥ ११७ ॥ भ०

गुहाया इत्यादि । तस्य शब्दमाकर्ण्य गुहाया निरगाद्वाली निर्गतः इणो गा लुङि गातिस्थेति सिचो लुक् भ्रातरं द्रुवन् अभिगच्छन् द्रु अभिगमने अस्यादादिकस्य वर्त्तमानसामीप्ये लटः शतरि उवङादेशे रूपम् संख्ये युद्धे भियो युङ् भीतेर्योक्ता कर्मणि ष्ठत् भीतिं युक्षिचित्यर्थः युजेः पूर्ववत् क्विन् युजेरसमास इति नुम् संयोगान्तलोपः क्विन्प्रत्ययस्य कुः ङकारः कः कमिव सिंहो मृगमिव द्रुवन् घोषेण दिशः आपूरयन् दिशन्ति ता इति दिशः पूर्ववत् क्विन् ॥११८॥ ज०म०

गुहेत्यादि । सुग्रीवस्य शब्दं श्रुत्वा वाली गुहायाः सकाशात् निरगात् निर्गतः इणो गा ल्युं भूस्थापिबदेण इति सेर्लुक् सिंहो यथा मृगं द्रौति तद्वत् भ्रातरं द्रुवन् आभिमुख्येन गच्छन् द्रु त्वभिसर्पणे भविष्यत्सामीप्ये की अभिधानात् संख्ये युद्धे भियो युङ् भयस्य प्रयोक्ता

व्यायच्छमानयोर्मूढ़ो भेदे सदृशयोस्तयोः ।
बाणमुद्यतमायंसीदिक्ष्वाकुकुलनन्दनः ॥ ११९ ॥
ऋष्यमूकमगात् क्लान्तः कपिर्मृगसदृग् द्रुतम् ।
किष्किन्धाद्रिसदात्यर्थं निष्पिष्टः कोणमुच्छ्वसन् ॥१२०॥

भयप्रद इत्यर्थः युजे क्विप् युजिरोऽसे नुम् धाविति नुम् ङित्यादौ युजेः पृथक् ग्रहणात् प्राकृङ् क्नोर्नुः ङ्येऽजम् नोरिति ङः स्यान्तस्य लुप् घोषेण शब्देन दिश आपूरयन् दिशतीति दिक् त्वाद्युषिति क्विप् ॥ ११८ ॥ भ०

व्यायच्छेत्यादि । तयोर्वालिसुग्रीवयोर्व्यायच्छमानयोः कलहायमानयोः सदृशयोः समानयोः भेदे पृथक्त्वे मूढ़ो भ्रान्तः सन् इक्ष्वाकुकुलनन्दनो रामो बाणमुद्यतं सज्जीकृतमायंसीत् उपसंहृतवान् समुदाङ्भ्यो यमो ग्रन्थ इति तङ् न भवति अकर्त्रभिप्रायत्वात् तत्र कर्त्रभिप्राय इति वर्त्तते आङो यमहन इत्यनेनापि न स्यात् सकर्मकत्वात् तत्राकर्मकादिति वर्त्तते समानपूर्वस्य दृशेः समानान्ययोश्चेत्युपसंख्यानात् त्यदादिष्वित्यादिना कञ् दृगदृशवतुष्विति समानस्य सभावः ॥ ११९ ॥ ज० म०

व्यायेत्यादि । इक्ष्वाकुकुलनन्दनो रामस्तयोर्वालिसुग्रीवयोर्भेदे विवेचने मूढ़ः भ्रान्तः सन् वालिवधायोद्यतं कृतसन्धानमपि बाणं सुग्रीववधशङ्कया आयंसीत् संहृतवान् यमरमनमात इति इमूसनौ । कीदृशयोस्तयोः व्यायच्छमानयोः कलहायमानयोः युध्यमानयोर्वा आत्माङ्गाददाञ्चाहनयम इति न मं सदृशयोराकृत्या अन्यन्यं तुल्ययोः मूढ़त्वे हेतुरयं समानो दृश्यत इति त्यदादिना टक् समानेदं किमद इति समानस्य सादेशः ॥ ११९ ॥ भ०

ऋष्यमूकमित्यादि । कपिः सुग्रीवः किष्किन्धाद्रिसदा वालिना किं किं दधातीति किष्किन्धा गुहा आतोऽनुपसर्गे कः पारस्करादिदर्शनात् पूर्वस्य सुडागमो मलोपः षत्वञ्च निपात्यते तदुपलक्षितोऽद्रिः किष्किन्धाद्रिः तत्र सीदतीति सत्सूद्विषेत्यादिना क्विप् तेनात्यर्थं निष्पिष्टः

कृत्वा वालिद्रुहं रामो मालया सविशेषणम् ।
अङ्गदस्वं पुनर्हन्तुं कपिनाह्वाययद्रणे ॥ १२१ ॥
तयोर्वानरसेनान्योः संप्रहारे तनुच्छिदम् ।

पीड़ितः निष्पिष्टत्वात् क्लान्तः सन् ऋष्यमूकं स्तगसट्टक् द्रुतमगात् समानोपपदात् इति पूर्ववत् क्विन् कोष्णमीषदुष्णमुच्छ्वसन् कवञ्चोष्ण इति चकारात् कोः कादेशः ॥ १२० ॥ ज० म०

ऋष्येत्यादि । कपिः सुग्रीवः किष्किन्धाद्रिषदा वालिना अत्यर्थं निष्पिष्टः पीड़ितः अतएव क्लान्तः सन् कोष्णम् ईषदुष्णम् उच्छ्वसन् द्रुतं शीघ्रम् ऋष्यमूकम् अगात् गतवान् स्तगसट्टक् पलायने द्रुतगमनात् स्तगतुल्यः किपि सट्टक् सट्टगवत् किखिभिर्वानरीभिरिष्यत इति इन्धेर्भ्रत्वात् पञ्जलनट इति अल् निपातनात् किखेः किष्कादेशः किं किं दधातीति किष्किन्धेत्यन्ये किष्किन्धा मूर्द्धन्यषकारोवती यकारोपान्तापि किष्किन्ध्येति श्रीपतिः किष्किन्धागुहा तदुपलक्षितोऽद्रिस्तत्र सीदतीति त्वाद्युसिति क्विप् ॥ १२० ॥ म०

कृत्वेत्यादि । वालिद्रुहं सुग्रीवं वालिनं द्रुह्यतीति सत्स्वित्यादिना क्विप् । मालया सविशेषणं सचिह्नं कृत्वा भेदपरिज्ञानार्थं रामः अङ्गदस्वं वालिनम् अङ्गदं सूत इति पूर्ववत् क्विन् ओःसुपीति यणादेशः । तं रणे हन्तुं कपिना सुग्रीवेणाह्वाययत् अभिभवं कारितवान् ह्वयतेर्हेतुमण्णिचि शाच्छेत्यादिना युक् ॥ १२१ ॥ ज० म०

कृत्वेत्यादि । वालिद्रुहं सुग्रीवं वालिभेदज्ञानाय मालया सविशेषणं सचिह्नं कृत्वा रामोऽङ्गदस्वं वालिनं रणे हन्तुं कपिना सुग्रीवेण पुनराह्वाययत् आह्वानमकारयत् णौजौजेरित्यादौ अखादनीक्रन्दायशब्दायह्वादेति वर्जनात् जयन्तस्य कर्त्तुः कर्मत्वं शाच्छासाह्वेत्यादिना यत् अङ्गदं सूते जनयतीति त्वाद्युसित्यादिना क्विप् कव्याद्यनेकाच इति वत्वं वालिने द्रुह्यतीति पूर्ववत् क्विप् ॥ १२१ ॥ म०

तयोरित्यादि । वानरसेनान्योः वानरस्वामिनोः एरनेकाच इति

बालिनो दूरभाग्रामो बाणं प्राणादमत्यजत् ॥ १२२ ॥
बालिनं पतितं दृष्ट्वा वानरा रिपुघातिनम्।
बान्धवाक्रोशिनो भेजुरनाथाः ककुभो दश ॥ १२३ ॥
धिग्दाशरथिमित्यूचुर्मुनयो वनवर्त्तिनः।
उपेयुर्मधुपायिन्यः क्रोशन्तस्तं कपिस्त्रियः ॥ १२४ ॥

यण्। संप्रहारे युद्धे प्रवृत्ते रामो बाणमत्यजत् बालिनस्तनुच्छिदं तनुं शरीरं छिनत्तीति पूर्ववत् क्विप् छेचेतितुक् प्राणादं प्राणापहारिणं प्राणानत्तीति प्राणादम् अदोनन्न इति विट्। दूरभाक् दूरमवस्थितो रामो दूरं भजत इति भजो ण्विः ॥ १२२ ॥ ज० म०

तयोरित्यादि। तयोर्वानरसेनानामीश्वरयोः संप्रहारे युद्धे प्रवृत्ते सति दूरभाक् दूरदेशस्थितो रामो बालिनस्तनुच्छिदम् अतएव प्राणादं प्राणभक्षकं बाणम् अत्यजत् क्षिप्तवान् सेनां नयति तनुं शरीरं छिनत्ति प्राणानत्तीति च त्यादुसिति क्विप् अत्तेरनन्तत्वात् क्विबिति शरः दूरं भजत इति ढाङ्गजसहवहो विण् ॥ १२२ ॥ भ०

बालिनमित्यादि। रिपुघातिनं रिपून् हन्तुं शीलमस्येति सुप्यजातौ णिनिः। तं बालिनं पतितं दृष्ट्वा वानरा दश ककुभो दश दिशो भेजुः। अनाथाः सन्तः स्वामिनो हतत्वात् बान्धवक्रोशिनो बान्धवा इव क्रोशन्तीति कर्त्तर्य्युपमान इति णिनिः ॥ १२३ ॥ ज० म०

बालिनमित्यादि। बालिनं पतितं दृष्ट्वा वानरा दश ककुभो दिशो भेजुः पलायिता इत्यर्थः। रिपुघातिनं रिपुं हन्तीति ग्रहादित्वाण्णिन् बान्धवाक्रोशिनः बान्धववत् आक्रोशन्तः क्रन्दन्तः कर्त्तर्युपमाने णिन्निति परः स्मरते ग्रहादित्वाण्णिन् इवार्थस्य गम्यमानत्वम्। अनाथाः बालिनाशेन स्वामिरहिताः ॥ १२३ ॥ भ०

धिग्दाशरथिमित्यादि। येषां सत्यन्यस्थाने वृत्तौ च वन एव वर्त्तितुं शास्त्रतो नियमः ते वनवर्त्तिनो मुनयः व्रत इति णिनिः धिगिमं दाशरथिमित्यूचुः उक्तवन्तः येनानपराधेऽपि बालिनीदृश

रामसुच्चैरुपालब्ध शूरमानी कपिप्रभुः।
व्रणवेदनया ग्लायन् साधुम्मन्यमसाधुवत्॥ १२५॥

हतमिति कपिस्त्रियश्च वालिनमुपेयुः मधुपायिन्यः आभीक्ष्ण्येन मधु पिबन्त्यः बहुलमाभीक्ष्ण्ये इति णिनिः। क्रोशन्त्यो हा नाथेति रुदन्त्यः॥ १२४॥ ज० म०

धिगित्यादि। दाशरथिं रामं धिगिति वनवर्त्तिनो मुनय ऊचुः महतामन्यासक्तघातित्वानौचित्यात् धिक्समयेत्यादिना दाशरथेर्द्वितीया। वने वर्त्तन्त इति ग्रहादित्वात् णिन्, कपिस्त्रियः क्रोशन्त्यो हा नाथेति क्रन्दन्त्यस्तं वालिनम् उपेयुरुपेताः उपपूर्वस्येणश्च उसि रूपं मधुपायिन्यः मधूनि पीतवत्यः ग्रहादित्वात् णिन् यन्न्णित्कदिति यन् परमते तु आभीक्ष्ण्ये तु णिन् पुनः पुनर्मधु पिबन्ति स्मेत्यर्थः आभी० क्ष्ण्यार्थस्य णिनोक्तत्वात् न द्वित्वं स्वमतेऽप्यभिधानादेव॥ १२४॥ भ०

राममित्यादि। कपिप्रभुर्वाली राममुच्चैर्महता शब्देनोपालब्ध उपालब्धवान् लभिरात्मनेपद्यनिट् तस्य लुङि झलो झलीति सिचो लोपः झषस्तथोर्धोऽधः झलाञ्जश्झशि शूरमानी शूरमात्मानं मन्यमानः आत्ममाने खश्चेति चकाराण्णिनिः व्रणवेदनया ग्लायन् ग्लानिमुपगच्छन् साधुं मन्यं साधुमात्मानं मन्यमानं रामं तेनैव खश् तस्मिन् सार्वधातुके परतो दिवादित्वाच्छ्यन् पूर्वपदस्य मुम् असाधुवदसाधुमिव असाधुना तुल्यो वर्त्तते इति वतिः॥ १२५॥ ज० म०

राममित्यादि। व्रणवेदनया ग्लायन् कपिप्रभुर्वाली उच्चैःशब्देन राममुपालब्ध निन्दितवान् लभेस्तनि झषस्ताज्झसीति सिलोपः ढभा-त्ययोरिति तस्य धः झप्झसोरिति भस्य वः। शूरमानी आत्मानं शूरं मन्यमानः अभिधानात् मन्यतेरात्मनो मनने णिन् यद्वा शूरसम्बन्धि-मानो विद्यतेऽस्येति नैकाजादिति इन् वीराभिमानवानित्यर्थः शूर-श्चासौ मानी चेति वा रामं कीदृशं साधुं मन्यं साधुमात्मानं भ्रातृ-वधूहरणेनोचितस्य दण्डस्यैव करणात् मन्यात् स्वार्थे इति खश् भिन्ना-द्रूत्वे दिवादित्वात् श्यन् खित्यव्याजिति मन् असाधुवत् असाधुना तुल्यं

मृषासि त्वं हविर्याजी राघव ! छद्मतापसः ।
अन्यव्यासक्तघातित्वाद् ब्रह्मघ्नां पापसम्मितः ॥ १२६ ॥
पापकृत् सुकृतां मध्ये राज्ञः पुण्यकृतः सुतः ।
मामपापं दुराचार ! किं निहत्याभिधास्यसि ॥१२७॥

असाधात् हननात् चत्साध्य इति चत् असाधुं यथा निन्दति तयोःपालब्धेति वा ॥ १२५ ॥ भ०

मृषासीत्यादि । हे राघव ! त्वं छद्मना तापसः स त्वं मृषैव मिथ्यैव हविर्याजी हविषा करणेनेष्टवानसि न लोकप्राप्तभय इत्यभिप्रायः । करणे यज इति भूते णिनिः इतः प्रभृति भूत इत्यधिक्रियते अतो ब्रह्मघ्नां पापसंमितः ब्रह्म हतवन्त इति ब्रह्मत्वादिना क्विप् तेषां पापेन तुल्यः कुतः अन्यव्यासक्तघातित्वात् अन्यस्मिन् सुग्रीवे व्यासक्तं मां हतवान् कर्मणि हन इति णिनिः तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तं यदि सुग्रीवेण विरोधः किं तवायातमिति कुत्सितहननम् ॥ १२६ ॥ ज० म०

मृषेत्यादि । हे राघव ! त्वं हविर्याजी मृषा स्वर्गादिफलावाप्तये हविषा करणेन इष्टवानिति मिथ्या ग्रहादित्वात् णिन् करणाद्यजो-भूते णिन्निति परः स्मृते करणादिर्भूतकालस्य विशेषानुक्तेरर्थाद्गम्यते अतश्छद्मना तापसः तपस्वी न तु वस्तुतः अन्यव्यासक्तघातित्वाच्च ब्रह्मघ्नां ब्रह्माणं हतवतां पापसम्मितः पापेन सम्मितस्तुल्यः तुल्यपापाश्रयत्वात् पुरुषोऽपि तुल्य इत्युच्यते पापेन करणभूतेन ब्रह्मघ्नां तुल्य इत्यन्वयः अन्यस्मिन् सुग्रीवे व्यासक्तं हतवानिति ग्रहादित्वाण्णिन् कर्मणोहनः कुत्सायामिति परः हनस्तङ् खेर्हौघोज्णिति चेति घः ततस्ततो भाव इति त्वं ब्रह्माणं हतवानिति त्वासुविति क्विप् ब्रह्मभ्रूणवृत्रात्क्विपो भूत इति परः स्मृते अविशेषात् कालत्रयं प्राप्तमतातीतविवक्षा यदा नोऽल्लोप इत्यकारलोपे हनोघ्नो घ्नः ॥ १२६ ॥ भ०

तदेव दर्शयन्नाह पापेत्यादि । हे दुराचार ! मामपापं निहत्य पापकृत् कृतकिल्बिषः राज्ञो दशरथस्य पुण्यकृतः सुतः सुकृतां मध्ये

अग्निचित् सोमसुद्राजा रथचक्रचिदादिषु ।
अनलेष्विष्टवान् कस्मान्न त्वयापेचित: पिता ॥१२८॥
मांसविक्रयिण: कर्म व्याधस्यापि विगर्हितम् ।
मां घ्नता भवताकारि नि:शङ्कं पापदृश्वना ॥ १२९ ॥

किमभिधास्यसि वक्ष्यसि किं चोपे न किञ्चिदभिधातव्यमस्तीति भाव: सर्वत्र सुकर्मपापेत्यादिना क्विप् ॥ १२७ ॥ ज० म०

पापेत्यादि । हे दुराचार ! अपापं मां निहत्य सुकृतां शोभनक्रियावतां मध्ये किमभिधास्यसि किं वक्ष्यसि यतस्त्वं पुण्यकृतो दशरथस्य सुत: पुत्रोऽपि भूत्वा पापकृत् पापं सुष्ठु पुण्यञ्च कृतवानसि सुकर्मेत्यादिना क्विप् पुण्यादे: कर्मण: सोपपदात् कृञ: कर्त्तरि भूत इति पर: स्मृतेऽविशेषात् सर्वं विवक्षितम् ॥ १२७ ॥ भ०

अग्निचिदित्यादि । कस्मात्त्वया पिता नापेचित: नानुष्टत्त: येनैवं कृतवानसीति । कीदृश: अग्निचित् आहिताग्नि: अग्निं चितवानिति अग्नौ चेरिति क्विप् सोमसुत् सोमं सुनवान् सोमयाजी सोमे सुञ इति क्विप् अनलेषु अग्निषु इष्टवान् रथचक्रचिदादिषु रथचक्रवच्चीयत इति कर्मण्यग्न्याख्यायामिति क्विप् आदिशब्दाच्छ्येनचिदादिग्रहणम् अग्न्यर्थौ हि तदाकार इष्टकाचय इत्युच्यते तद्द्वारेणाग्निरपि ॥१२८॥ ज०म०

अग्नीत्यादि । कथं त्वया पिता दशरथो राजा नापेचित: न चिन्तित: नानुवृत्तो वा येनैवं कृतमिति भाव: अग्निचित् आहिताग्नि: सोमसुत् सोमयाजी रथचक्रचिदादिषु अग्निविशेषेषु इष्टवान् कृतयज्ञ: अग्निं चितवान् सोमं सुतवान् रथचक्रवच्चीयते इति च सुञ इत्यादिना क्विप् रथचक्रचिदादिष्वित्यादिशब्दात् श्येनचिदादिष्वपि अग्न्यर्थौ रथचक्राद्याकार इष्टकारचनाविशेष: क्रियते तद्द्वारेणाग्निरपि रथचक्रचिदादितया व्यपदिश्यते इष्टवानिति यजे: क्तवतु: ग्रहज्यपाद्योरिति जि: ॥ १२८ ॥ भ०

मांसेत्यादि । मांसविक्रयिण: कुत्सितकर्मकारिणो व्याधस्यापि विगर्हितं निन्दितं कर्मणीनिर्विक्रिय इति इनि: तत्र कुत्सितग्रहणं

बुद्धिपूर्वं ध्रुवन्न त्वा राजकत्वा पिता खलम्।
सह युध्वानमन्येन योऽहिनो मामनागसम्॥ १३०॥

कर्त्तव्यमित्युक्तं निकृष्टकर्मकरणेनेति यज्वता पापदृश्वना पापं दृष्टवता दृशेः क्वनिप् न संयोगाद्वमन्तादिति अल्लोपप्रतिषेधः। कर्म अकारि कृतं कर्मणि लुङ्। निःशङ्कं शङ्कां त्यक्त्वा किं कुर्वता मां घ्नता मारयता हन्तेः शतरि गमहनेत्युपधालोपः होहन्तेरिति कुत्वम्॥१२९॥ज० म०

मांसेत्यादि। मांसविक्रयिणो व्याधस्यापि यद्विगर्हितं कर्म तत्त्वया-मां घ्नता निःशङ्कं शङ्कां त्यक्त्वा कृतं पापदृश्वना पापं दृष्टवतापि पापा-नभिज्ञेन मांसोपजीविना व्याधेनापि अन्यासक्तस्य निष्प्रयोजनत्वा-द्वानरस्य च हननं निन्द्यते भवता तु पापं जानतापि तत् कृतमिति भावः व्याधस्येति कर्त्तरि सम्बन्धविवक्षा यद्वा व्याधस्यापीदृशं कर्म लोकैर्विशेषेण निन्दितमित्यर्थः मांसविक्रयोऽस्यास्तीति नैकाजादिति इन् विक्रीणातेर्भूते कुत्सायामिति परः तन्न साधु अत्र व्याधस्य मांसविक्रयणे कुत्साया अभावात् इगेस्वाभुसित्यादिना क्वनिप्॥१२९॥भ०

बुद्धिपूर्वमित्यादि। त्वत्पिता त्वां खलम् असाधुचरितं ध्रुवन् गच्छन् ध्रु गतिस्थैर्ययोरिति कुटादौ पठ्यते तस्य गतौ ज्ञानार्थे वर्त्त-मानस्य शतरि विकरणलोपे उवङादेशे रूपं यज्न राजकृत्वा कस्य तवे-त्यर्थात् राजनियुध्भिकृञ इति क्वनिप् ततस्य बुद्धिपूर्वं ध्रुवमवश्यं तस्येति व्याख्याने कृत्प्रयोगे कर्मणि षष्ठ्या भवितव्यं य त्वं मामना गसमपापमन्येन सह युध्वानम् अन्येन सुग्रीवेण सह योद्धुं प्रवृत्तं सहे चेति क्वनिप् अहिनः हिंसितवान् हिंसेर्लङि मध्यमपुरुषैकवचने श्नमि आन्नलोपे हल्ङ्यादिलोपे रुत्वे च रूपम्॥ १३० ॥ ज० म०

बुद्धीत्यादि। खलं दुष्टचरितं त्वां पिता दशरथो यत्र राजकृत्वा राजानं न कृतवान् तद्बुद्धिपूर्वं खलत्वविज्ञानपूर्वकमेव ध्रुवं निश्चितं राजसित्यादिना कृञः क्वनिप् तस्य तन् पिति ह्रीचीषीनामित्यादिना त्वादेशः क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति न्यायात् द्वये-कृतीत्यस्य विषयेऽपि कर्मविक्रयेत्यादिना द्वितीया केचित्तु ध्रुस्थिस्थैर्य

पञ्च पञ्चनखा भक्ष्या ये प्रोक्ताः कृतजैर्द्विजैः ।
कौशल्याज ! शशादीनां तेषां नैकोऽप्यहं कपिः ॥१२१॥
कथं दुष्टुः स्वयं धर्मे प्रजास्त्वं पालयिष्यसि ।

इत्यस्य भर्तरि ध्रुवन् धातूनामनेकार्थत्वात् ज्ञानार्थः पिता त्वां खलं ध्रुवन् यन्न राजकृता अर्थात्तव तद्बुद्धिपूर्वमित्याहुः अन्ये तु इति निषेधे आशब्दः स्मरणे पीड़ायां वा राजकृतेत्यत तवे-त्यर्थाद्गम्यते नञः प्रक्षेपात् अखलमिति मामित्यस्य वक्ष्यमाणस्य विशे-षणमित्याहुः खलत्वमाह यस्त्वं माम् अहिनो हतवान् कीदृशम् अन्येन सुग्रीवेण सह युध्यानं योद्धुं प्रवृत्तं युधेः पूर्ववत् कानिप् अना-गसम् अनपराधम् अहिन इति हिंसिहिंसायां ध्याः सिप् रुधादि-त्वात् श्नम् ननोनलोप्य इति इदनुबन्धजन्यनकारस्य लोपः हसङ्क्रां दिसेरिति सेर्लोपः ॥ १२० ॥ भ०

मांसार्थं हत इति चेदाह पञ्चपञ्चेत्यादि । हे कौशल्याज ! कौशल्याजात ! सप्तम्यां जनेर्डः । ये पञ्च पञ्चनखाः शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चम इति कृतजैः कृतयुगजातैः सप्तम्यां जनेर्डः । द्विजैर्द्विजातैः अन्येष्वपि दृश्यत इति डः । सप्तम्यामित्युपलक्षणम् असप्तम्यामपि दृश्यते भक्ष्याः भक्षणीयाः प्रोक्ताः तेषामहमेकोऽपि न भविता अहं कपिः तत् किमिति हतोऽहं त्वयेति ॥ १२१ ॥ ज० म०

पञ्चेत्यादि । राजभिर्मांसाय मृगा हन्यन्त इति समानं निरा-कुर्वन्नाह हे कौशल्याज ! ये पञ्चनखाः पञ्च शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चम इत्यादिवाक्येन कृतजैः सत्ययुगजातैर्द्विजैर्महर्षि-भिर्भक्षणयोग्याः प्रोक्ताः कथिताः तेषां शशादीनां मध्ये अहं नैकोऽपि यतः कपिरहम् अतोऽभक्ष्यत्वान्मम वधो व्यर्थ एव कौशल्यायाः सका-शाज्जातः कृते जातः द्विजात इति च हनजनादिति डः । पैतृकधर्म-याहितया क्रतुमार्थं मातृहृत्कीर्त्तनम् ॥ १२१ ॥ भ०

कथमित्यादि । स्वयमात्मना धर्मे दुष्टुः दुःस्थः सन् अपदुःसुषुस्थ इत्यौणादिकः कुप्रत्ययः कथं प्रजाः पालयिष्यसि नैवेति भावः उपसर्गे

आत्मानुजस्य जिह्रेषि सौमित्रेस्त्वं कथं न वा ॥१३२॥
मन्ये किञ्जमहं घ्नन्तं त्वामक्षत्रियजे रणे।
लक्ष्मणाधिज! दुर्वृत्त! प्रयुक्तमनुजेन नः ॥ १३३ ॥

च संज्ञायामिति जनेर्डः। कथं वा सौमित्रेर्भ्रातुरात्मानुजस्य कनीयसः आत्मानमनुजात इत्यनौ कर्मणि इति डः। न जिह्रेषि न लज्जसे ॥ १३२ ॥ ज० म०

कथमित्यादि। त्वं कथं प्रजाः पालयिष्यसि अपि तु नैवेति भावः यतः स्वयमात्मनो धर्मे दुःस्थः दुःखेन तिष्ठतीति हनजनादिति डः। दुष्ठु रिति पाठे औणादिकः कुप्रत्ययः सत्वञ्चाभिधानात् प्रजायन्त इति प्रजा लोकाः पूर्वेण डः स्त्रीत्वं संज्ञा चाभिधानात् आत्मानुजस्य सौमित्रेः कथं न वा जिह्रेषि न लज्जसे आत्मानमनुजात इति पूर्ववत् डः ॥ १३२ ॥ म०

मन्य इत्यादि। किञ्जं त्वामहं कुतोऽपि जातं न राजजातं मन्ये पञ्चम्यामजाताविति डः। घ्नन्तं मारयन्तम् अक्षत्रियजे रणे क्षत्रियादजाते हे लक्ष्मणाधिज! लक्ष्मणाग्रज! हे दुर्वृत्त! नोऽस्माकमनुजेन भ्रात्रा प्रयुक्तं जातावपि दृश्यते अक्षत्रियज इति उपसर्गे च संज्ञायामित्युक्तम् असंज्ञायामिति दृश्यते लक्ष्मणाधिज इति अनौ कर्मणीत्युक्तं कर्मण्यपि दृश्यते अनुज इति सर्वत्रान्येष्वपि दृश्यत इति डः। इत्युपपदाधिकारः ॥ १३३ ॥ ज० म०

मन्ये इत्यादि। हे लक्ष्मणाधिज! हे दुर्वृत्त! दुश्चरित! अहं त्वां किञ्जं कुतोऽपि जातं कुत्सिताद्वा जातं मन्ये न तु राज्ञो जातं यतः अक्षत्रियजे क्षत्रियादजाते रणे मां घ्नन्तं मारयन्तम् अस्माकमनुजेन कनिष्ठेन सुग्रीवेण प्रयुक्तं सर्वत्र हनजनादिति जनेर्डः। परे तु विशेषसूत्राण्युक्त्वा अन्यत्रापि दृश्यत इत्यनेन तेषां प्रायिकत्वं बोधयन्ति तथाहि पञ्चम्यन्तादजातेर्डः। इत्यस्य किञ्ज इत्युदाहरणं जातेरपि अक्षत्रियज इत्युदाहृतम् उपसर्गात् संज्ञायामित्यस्य प्रजास्त्वं पालयिष्यसीत्युदाहृतम् असंज्ञायामपि अधिज इति कर्मणो-

प्रत्यूचे वालिनं रामो नाकृतं कृतवानहम्।
यज्वभिः सुत्वभिः पूर्वैर्जरद्भिश्च कपीश्वर!॥ १२४॥
ते हि जालैर्गले पाशैस्तिरश्चामुपसेदुषाम्।
ऊषुषां परदारैश्च सार्द्धं निधनमैषिषुः॥ १२५॥

ऽनोरित्यस्य आत्मानुजस्य जिह्मपीत्युदाहरणम् अकर्म्मणोऽपि अनुज इति अतएव महाधिया वोपदेवेन विशेषेणोक्तः॥ १२२॥ भ०

प्रत्यूच इत्यादि। रामोऽपि वालिनं प्रत्यूचे प्रत्युक्तवान् किमित्याह हे कपीश्वर! पूर्वैर्जरद्भिर्वृद्धैः जीर्य्यतेरतृन् यज्वभिः याज्ञिकैः सुत्वभिः सोमयाजिभिः सुयजोर्ङ्वनिप् नाकृतं कृतवानहम् अपितु कृतमेव कृतवानहं निष्ठेति भूते क्तक्तवतू॥ १२४॥ ज० म०

प्रत्यूच इत्यादि। रामो वालिनं प्रत्यूचे किं प्रत्युक्तवानित्याह हे कपीश्वर! यज्वभिर्याज्ञिकैः सुत्वभिः सोमपीतिभिः पूर्वैर्जरद्भिर्वृद्धैर्मान्धातृप्रभृतिभिर्यच्च कृतं तदहं न कृतवान् दृष्टवानिति त्वामुषिति क्वनिप् सुत्वानिति क्वनिप् स्वस्य तन् पिति जीर्य्यतीति शतृः जीर्णो जीर्णो जरन्नपीत्यमरः॥ १२४॥ भ०

ते हीत्यादि। हि यस्मात्ते पूर्वदृष्टाः जालैर्गले पाशैश्च तिरश्चां मृगपक्षिसरीसृपाणां तिरोऽञ्चतीति ऋत्विगित्यादिना क्विन् अनि अच इत्यल्लोपः। तेषां निधनं विनाशमैषिषुः दृष्टवन्तः इषेर्लुङि रूपं कीदृशम् उपसेदुषां समीपमुपगतवतां तेषां समीपवर्त्तिनामुपद्रवकारित्वात् भाषायामिति क्वसुः परदारैश्च सार्द्धमूषुषाम् उषितवतां पूर्ववत् क्वसुः वचियजादित्वात् संप्रसारणम्॥ १२५॥ ज० म०

ते हीत्यादि। पूर्वोक्ते हेत्वरयं हि यस्मात् तेऽपि पूर्वेदृष्टास्तिरश्चां पक्षिमृगादीनां जालैर्गले पाशैश्च निधनम् ऐषिषुः इच्छन्ति स्म न केवलं तिरश्चां परदारैः परस्त्रीभिः सार्द्धम् ऊषुषां कृतनिवासानाञ्च परदारैः सह वासमपिमश्लोके वक्ष्यति अतएव बध्यत्वप्रतिपादकं रूपद्वयमेव त्वय्यस्ति उभयविशेषणमाह उपसेदुषां समीपमुपगतानां स्वबाह्यस्थितानामपीत्यर्थः क्वचित्तु परदारैः सार्द्धमूषुषामिति तिरश्चामित्यस्य विशेषणं

अहन्तु शुश्रुवान् भ्राता स्त्रियं भुक्तां कनीयसा।
उपेयिवाननूचानैर्निन्दितस्त्वं लतामृग!॥ १२६॥
अन्वनैषीत्ततो बाली त्रपावानिव राघवम्।
न्यक्षिपच्चाङ्गदं यत्नात् काकुत्स्थे तनयं प्रियम्॥१२७॥

बध्यत्वदर्शनायेत्याह्वः तिरोऽञ्चतीति क्विप् सहसन्तिर इति तिर्य्यादेशः तिर्य्यगसुमूयगिति तिरश्चादेशः उपपूर्वसदष्णीपसवदिति क्वसुः वसोर्ध्वसेकाजिति इम् धुर्द्विर्ध्वङीति द्वित्वं तृफखेति अत एत्वं खिलोपस्य वसोर्वः सेमपीति उः वसेः पूर्ववत् क्वसुः इम् च व्यघग्हेति खेर्जिः ग्रहस्वपार्योरिति प्रकृतेर्जिः क्विवादिति षः इषु इच्छायाम् अनुष्यां सिः अनुखिद्दः भूयोऽस्तु॥ १२५॥ भ०

अहमित्यादि। हे लतामृग! हे शाखामृग! अहं पुनः शुश्रुवान् श्रुतवान् पूर्ववत् क्वसुः यदुत भ्राता कनीयसा भुक्तां स्त्रियं त्वमुपेयिवान् सन् अनूचानैर्वेदविद्भिर्निन्दितस्ततो मे नैव दोषः उपेयिवाननूचान इति उपेयिवानित्यादिना निपातितौ॥ १२६॥ ज० म०

अहमित्यादि। हे लतामृग! शाखामृग! अहं शुश्रुवान् किं शुश्रुवानित्याह कनीयसा कनिष्ठेन भ्राता सुग्रीवेण भुक्तां स्त्रियं त्वमुपेयिवान् उपगतोऽसि अतएव अनूचानैर्वेदविद्भिस्त्वं निन्दितः तेन तव बधे मम दोषो नास्तीति भावः श्रृणोतेरिणश्च पूर्ववत् क्वसुः द्वित्वं वसोर्धसेकाज्जिणात इमित्यत्र खिसहितस्यैकाचोर्ग्रहणं तेन न श्रोरिम् इणस्तु इमि यिणोऽच्यणाविति यादेशः खेः कितिर्ग्यः अनुपूर्वन्नूजः कानः वचोऽरे पूर्ववत् जिः अनूचानः प्रवचने साङ्गेऽधीती गुरोश्च य इत्यमरः। लता ज्योतिष्मती दूक्का शाखा वल्ली प्रियङ्गुष्विति विश्वः॥ १२६॥ भ०

अन्वित्यादि। ततो रामवचनादनन्तरं बाली राघवमन्वनैषीत् अनुनीतवान् देव! क्षम्यतां यदजानता मयोक्तमिति नयतेर्लुङित्यनेन भूतसामान्ये लुङ् त्रपावानिव यथा लज्जावान् कश्चिदनुनयति तद्वत् अङ्गदञ्च प्रियं तनयं काकुत्स्थे रामे न्यक्षिपत् न्यस्तवान् यत्नादादरात्

म्रियमाणः स सुग्रीवं प्रोचे सद्भावमागतः ।
सम्भविष्याव एकस्यामभिजानासि मातरि ॥ १३८ ॥

अवसाव नगेन्द्रेषु यत्पास्यावो मधूनि च ।
अभिजानीहि तत्सर्वं बन्धूनां समयो ह्ययम् ॥ १३९ ॥

क्षिपेरनद्यतने लङ् लकारप्रत्ययस्यातिङीति प्रतिषेधान्न लत्वसंज्ञा ॥ १३७ ॥ ज० म०

अन्वेत्यादि । ततो रामवाक्यानन्तरं वाली राघवमत्वनैषीत् अनुनीतवान् णीञ्प्राप्यां सिः नेटीत्याजिति इण्निषेधः व्रजवदेति वृद्धिः लपावानिव वस्तुतो मृगस्य भ्रातृवधूहरणेऽपि लपा नास्ति किन्तु यथा लज्जावान् कश्चिदनुनयति तद्वत् अङ्गदनामानं प्रियं पुत्रं काकुत्स्थे रामे यत्नात् न्यक्षिपत् समर्पितवान् ॥ १३७ ॥ भ०

म्रियेत्यादि । स वाली म्रियमाणः सन् सद्भावं शोभनभावमागतः सन् सुग्रीवं प्रोचे किमित्याह अभिजानासि स्मरसि एकस्यां मातरि सम्भविष्यावः समभवाव इत्यभिज्ञावचने लृडित्यनद्यतने लृट् अभिजानासीत्यभिज्ञावचनस्योपपदत्वात् ॥ १३८ ॥ ज० म०

म्रियेत्यादि । म्रियमाणः सन् सद्भावं प्राप्तो वाली सुग्रीवं प्रोचे ब्रूङ्ञो वचोऽरे ब्रूङ्ञीद्वेमिति शानः तौदादिकः शः रुद्रिः रिङ्ख्योरितीयः किमित्याह एकस्यां मातरि आवां यत्सम्भविष्यावः सम्भूतौ तदभिजानासि स्मृत्यैर्स्य यदित्यतीत इति भूते ती ॥१३८॥ भ०

अवेत्यादि । अभिजानीहि स्मर यन्नगेन्द्रेषु अवसाव उषितवन्तौ अत्राभिज्ञावचनस्य यच्छब्दसहितत्वात् न यदीत्यनेन लृटि प्रतिषिद्धे लङेव भवति अत्र वासमात्रं स्मर्यते मधूनि च यत्पास्यावः तत्र पीतवन्तौ तत्सर्वमभिजानीहि अत्र विभाषाकाङ्क्ष इति पक्षे लृट् साकाङ्क्षता च प्रयोक्तुर्लक्ष्यलक्षणयोः सम्बन्धे तत्र वासोलक्षणं पानञ्च लक्ष्यमिति यस्माद्बन्धूनामयमेव समयः कालः ॥ १३९ ॥ ज० म०

अवेत्यादि । नगेन्द्रेषु पर्वतश्रेष्ठेषु आवाम् अवसाव यच्च तत्र मधूनि पास्यावः पीतवन्तौ तत्सर्वम् अभिजानीहि स्मर यस्मात् अयं

दैवं न विदधे नूनं युगपत् सुखमावयोः ।
शश्वद् बभूव तद् दुःस्थं यतो न इति हाकरोत् ॥१४०॥
ददौ स दयितां भ्रात्रे मालाञ्चाग्र्यां हिरण्मयीम् ।
राज्यं सन्दिश्य भोगांश्च ममार व्रणपीड़ितः ॥१४१॥

बन्धूनां समयः नेदानीं वैरचिन्ता युक्तेति भावः वानेकस्मार्थं इति भूते विभाषया तौ वसो निवासे घी ॥ १३९ ॥ भ०

दैवमित्यादि । नूनमवश्यं दैवमावयोः सुखं युगपदेककालं न विदधे न हि विहितवत् परोक्षे लिट् जित्वात्तङ् आतोलोपः यतो यस्मात् दैवं शश्वत् नित्यं दुःस्थमननुकूलं नोऽस्माकं बभूव तस्मादितिह एवमकरोत् हइत्येवं कृतवान् यद्युगपदावयोः सुखविधानं तद्दुःस्थं शश्वद्बभूव हाकरोदिति भूतानद्यतनपरोक्षे लिटि प्राप्ते हशश्वतोर्लङ् चेति लङ् चकारात् लिट् तत्र शश्वच्छब्दे उपपदे लिडेवोदाहृतः न लङ् हशब्दे लङेव न लिङपीति ॥ १४० ॥ ज० म०

दैवमित्यादि । नूनं निश्चितं दैवं कर्तृ युगपदेकदा नावयोः सुखं विदधे चकार धाञ्धातुम् ङसेचीत्यादिना स्वालोपः यतस्तद्दैवं नोऽस्माकं शश्वन्नित्यं दुःस्थं प्रतिकूलं बभूव तस्मादिति प्रागुक्तं युगपत् सुखाभावम् अकरोत् हा विषादे ह पादपूरणे वा परम्पर्य्यप्रसिद्धौ स्यादैतिह्यमिति हाव्ययमिति दर्शनात् पारम्पर्य्यसिद्धिमकरोदिति केचित् इति लोकापवादागमयोरिति वर्द्धमानवचनात् लोकापवादं भ्रातृवधूगमनरूपमकरोदिति केचित् यत्तदोः परस्पराकाङ्क्षया तत्र इति गम्यते ॥ १४० ॥ भ०

ददावित्यादि । स बाली दयितां ताराख्यां भ्रात्रे सुग्रीवाय ददौ मालां चाग्र्यां श्रेष्ठां हिरण्मयीं सुवर्णघटितां राज्यं सामात्यादिद्रव्यप्रकृतिं सन्दिश्य दत्त्वा भोगांश्च राज्याङ्गानि ममार व्रणपीड़ितः तत्रापि परोक्षे लिट् ॥ १४१ ॥ ज० म०

ददावित्यादि । स बाली भ्रात्रे सुग्रीवाय दयितां स्वप्रियां हिरण्मयीं स्वर्णमयीं स्वर्णघटितां मालाञ्च ददौ । अग्र्यां श्रेष्ठामित्युभय-

तस्य निर्वर्त्त्य कर्त्तव्यं सुग्रीवो राघवाज्ञया ।
किष्किन्ध्याद्रिगुहां गन्तुं मनः प्रणिदधे द्रुतम् ॥१४२॥
नामग्राहं कपिभिरयनैः स्तूयमानः समन्तात्
अन्वग्भावं रघुवृषभयोर्वानरेन्द्रो विराजन् ।

विशेषणं हिरण्यस्य विकारो हिरण्मय इति निपातनात् मयट् यत्नो-पस्य ततो राज्यं भोगांश्च सान्दश्य दत्त्वा व्रणपीड़ितः सन् ममार मृतः ॥ १४१ ॥ भ०

तस्येत्यादि । तस्य मृतस्य कर्त्तव्यं पिण्डोदकादिकरणीयं कृत्वा सुग्रीवो राघवाज्ञया गच्छ वर्षासमयमतीत्य शरद्यागमिष्यसीति आज्ञया किष्किन्ध्याद्रिगुहां गन्तुं मनः प्रणिदधे कृतवान् अत्रापि परोक्षे लिट् ॥ १४२ ॥ ज० म०

तस्येत्यादि । तस्य मृतस्य बालिनः कर्त्तव्यं कर्त्तुमुचितं पिण्डो-दकदानादि निर्वर्त्त्य अङ्गदद्वारा स्वयञ्च यथायोग्यं निष्पाद्य राघव-स्याज्ञया किष्किन्ध्यानाम्नीमद्रिगुहां द्रुतं शीघ्रं गन्तुं मनः प्रणिदधे चकार भाजली प्राग्वज्ञेण इति णत्वं किष्किन्ध्याद्रिगुहेति सुमेरुपर्व-तादिवत् एकार्थत्वे कर्मधारयः ॥ १४२ ॥ भ०

नामेत्यादि । वानरेन्द्रः सुग्रीवः किष्किन्ध्याद्रिं न्यविशत निविष्ट-वान् नेर्विश इति तङ् अयनैः सुष्ठु कपिभिस्तूयमानः वर्त्तमाने लट् तस्य कर्मणि विहितत्वात् लक्षणहेत्वोः क्रियाया इति शानच् नाम-ग्राहं नाम गृहीत्वा नाम्नि दिशिग्रहोरिति णमुल् समन्तात्सर्वतः विराजन् शोभमानः अत्र परस्मैपदसंज्ञकः शतृः किं कृत्वा रघुवृष-भयोरन्वग्भावम् अनुकूलो भूत्वा अन्वक्पूर्वाद्भवतेरन्वग्यानुलोम्य इति णमुल् तदनुकूलवर्त्तित्वाद्विराजन् कदा न्यविशत अभ्यर्णे निकटे अम्भः-पतनसमये प्रावृषीत्यर्थः पर्णलीभूतसानु पर्णानि सन्ति येषामिति सिध्मादिपाठाल्लच् तदन्तादभूततद्भावे च्विः पर्णलीभूताः सानव एक-देशा यस्याद्रेः मधुलीहा मधुमत्ता गुञ्जन्तो द्विरेफा यत्र लीव इत्य-ताउपरगात् फुल्लक्षीवकृशोल्लाघा इति निपातितः क्षीवमद इत्यस्मात्

अभ्यर्णेऽम्भःपतनसमये पर्णलीभूतसानुं
किष्किन्ध्याद्रिं न्यविशत मधुक्षीवगुञ्जद्द्विरेफम् ॥१४२॥

इति भट्टिकाव्ये बालिवधो नामाधिकारकाण्डे षष्ठः सर्गः ।

क्तप्रत्ययस्य लोपः इड्भावश्च निपात्यते गुञ्जेर्लट् क्वचित् प्रथमासमानाधिकरणेऽपि शतृप्रत्ययः । इति सोपपदक्तः ॥ १४२ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे प्रथमः परिच्छेदः । रामस्य सुग्रीवाभिषेको नाम षष्ठः सर्गः ।

नामेत्यादि । वानरेन्द्रः सुग्रीवः किष्किन्ध्यया गुहाविशेषेणोपलक्षितमद्रिं न्यविशत प्रविष्टवान् नौविशप्रवेशे विपराजीति मं कीदृशः अथनैरुच्चैः समन्तात् सर्वतो नामग्राहं नाम गृहीत्वा कपिभिः स्तूयमानः कर्मणि शानः रतनोरिति यकिर्योऽज्यऽरे रघुवृषभयो रामलक्ष्मणयोः अन्वग्भावम् अनुकूलो भूत्वा विराजमानः उत्तरपदे वृषभादिशब्दः श्रेष्ठवाचकः स्वभावात् रामकार्यं त्यक्त्वा कुतो गृहं गत इत्याह अम्भःपतनसमये वर्षाकाले अभ्यर्णे समीपवर्त्तिनि सति तदा यात्रानौचित्यात् तयोराज्ञया गृहं गत इत्यर्थः अभ्यर्णं इति अर्द्देः क्तान्तस्य समीपार्थे क्षुब्धस्वान्तेत्यादिना निपातः कीदृशमद्रिं पर्णलीभूताः सानव एकदेशा यस्य यादृशं वेशन्तः पल्वलञ्चाल्पसर इत्यमरः । च्विः अभूततद्भावे च्विः अकारस्य ईत्वञ्च मधुना क्षीवा मत्ता गुञ्जन्तो द्विरेफा भ्रमरा यत्र क्षीवृङ् दर्पे इत्यस्य क्तान्तस्य क्षीवः पूर्वेण निपातितः नामग्राहमिति कर्मरूपं नाम्न्यादिशिग्रहिभ्यां णमिति परः स्मतेऽभिधानात् किंवा नाम्नो ग्राहो ग्रहणं यत्रेति स्तुतिक्रियाविशेषणम् अन्वग्भावमिति आनुकूल्येऽन्वचोभुवस्यणमिति परः स्मतेऽत्राप्यभिधानात् यद्वा रघुवृषभविषये अनुगतो भावो यत्रेति दीप्तिक्रियाविशेषणम् एतेन विनयित्वं दर्शितम् । इति सोपपदक्तदधिकारः ॥१४२॥ भ०

इति वद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायामधिकारकाण्डे प्रथमपरिच्छेदः । काव्यस्य षष्ठः सर्गः ।

# सप्तमः सर्गः ।

—००—

ततः कर्त्ता वनाकम्पं ववौ वर्षाप्रभञ्जनः ।
नभः पूरयितारश्च समुन्नेमुः पयोधराः ॥ १ ॥

इतस्ताच्छीलिकं कृतमधिकृत्योच्यते ताच्छीलिकमित्युपलक्षणं तद्धर्मतत्साधुकारिष्वपि द्रष्टव्यं यत आक्वेस्तच्छीलतद्धर्मतत्साधुकारिष्विति तत्राधिक्रियते । तत इत्यादि । ततः प्रवेशानन्तरं वर्षाप्रभञ्जनः प्रावृड्वातो ववौ वाति स्म वागतिगन्धनयोरिति कर्त्ता वनाकम्पं साधु कुर्वन् तृन्निति तृन् न लोकेति षष्ठीप्रतिषेधः पयोधरा मेघाश्च समुन्नेमुः समुन्नताः कीदृशा नभः पूरयितारः तृन् ॥ १ ॥ ज० म०

अथ ताच्छीलिकाः कृत उच्यन्ते । ताच्छीलिका इत्युपलक्षणं परमते तच्छीलतद्धर्मतत्साधुकारिष्वर्थेषु तृनादिदर्शनात् स्वमते यद्यपि तृनादीष्णुजादिविधायकसूत्रेषु तच्छीलाद्यर्थो नोक्तस्तथापि द्विषेऽमतीत्यादौ शीलार्थतृनुभव्यगार्हणिनीति ज्ञापकात् तृनिष्णुजादयः कतिचित्प्रत्यया अभिधानात् शीलाद्यर्थेष्वपि भवन्तीति बोध्यम् उक्तं हि कृत्तद्धितसमासानामभिधानं नियामकमिति शीलाद्यर्थाकथनेऽपि नाधिका क्षतिः प्रकृतार्थस्य तद्बोधकत्वात् तथाहि ततः कर्त्ता वनाकम्पमित्यादौ वनस्य ईषत्कम्पकारित्वेनैव वायोः साधुत्वं गम्यते एवमन्यत्रापि । तत इत्यादि । ततोऽनन्तरं वर्षाकालसम्बन्धी प्रभञ्जनो वायुर्ववौ वहति स्म वा गतिगन्धनहिंसयोः षवातोऽडौ कीदृशः वनानामीषत्कम्पनं कर्त्ता साधु कुर्वन् एतेन मान्द्यं सौगन्ध्यञ्च परमते साधुकारिणि तृन् स्वमते ईषत्कम्पकारित्वेनैव साधुत्वं गम्यते तृन्नौ इति तृन् द्विषेऽमतीत्यादौ शीलार्थतृन्निति शीलार्थ इत्युपलक्षणं तेन तत्साधुकार्य्यस्यापि ग्रहणं शीलार्थतृन्नित्यत्र शीलाद्यर्थे तृन्निति पाठं केचिद्वदन्ति किंवा शीलार्थे तृन् वनानामीषत्कम्पकरणशील इत्यर्थः

तर्पणं प्रजनिष्णूनां शस्यानाममलं पयः ।
रोचिष्णवः सविस्फूर्जा मुमुचुर्भिन्नवद्‌ घनाः ॥ २ ॥
निराकरिष्णवो भानुं दिवं वर्त्तिष्णवोऽभितः ।
अलङ्करिष्णवो भान्तस्तडित्वन्तश्चरिष्णवः ॥ ३ ॥

अतएव कर्मणि न षष्ठी वर्षासु वायोरतिशयत्वं वर्णनीयमिति सम्प्रदायानुरोधात् वनानामाकम्पं कर्त्तेति केचित् पयोधरा मेघाः समुन्नेमुः सम्युन्नताः परिष्टद्धा बभूवुः दिशो व्याप्नवन्त इत्यर्थः नमेरुरिति फलेत्यादिना अत एत्वं खिलोपश्च पयो धरतीति पचादित्वादन् पयोधरतीति वाक्ये ढात् षष्ठित्यस्य विषयाशङ्का चेत् तदा धरतीति धरः पयसो धरः पयोधर इति वाक्यं कीदृशाः नभ आकाशं पूरयितारः पूरणशीलाः पूरक् पूर्त्तौ पूर्ववत् ॥ १ ॥ म०

तर्पेत्यादि । घनाः अमलं पयो मुमुचुः भिन्नवत् भिन्ना इव कीदृशं पयः तर्पणं शस्यानां तर्पणं तर्पयतीति कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् प्रजनिष्णूनां साधु प्रादुर्भवतां रोचिष्णवः साधु दीप्यमानाः सविस्फूर्जाः सवज्रनिस्वनाः अलंकृञित्यादिना इष्णुच् ॥ २ ॥ ज० म०

तर्पेत्यादि । घना अमलं पयो मुमुचुः त्यक्तवन्तः भिन्नवत् भग्ना इव यथा घटादयो भग्नाः सन्तो बहुजलं त्यजन्ति तद्वत् कीदृशं पयः प्रजनिष्णूनां प्रकृष्टजननशीलानां साधु प्रादुर्भवतां वा शस्यानां तर्पणं तृप्तिकारकं तर्पयतीति नन्द्यादित्वादनः परमतेऽत्रापि शीलार्थः कुकविकाव्यमिव नीरसस्य रमणीयमिति देशवर्णनायां श्लेषात् सस्यशब्दो दन्त्यद्वयवानित्येके तालव्या अपि दन्त्याः स्युः शस्यस्पूकरशालय इत्यन्ये घनाः कीदृशाः रोचिष्णवो दीप्तिशीलाः साधु दीप्यमाना वा सविस्फूर्जा वज्रनिर्घोषसहिताः जिभ्राजभूसहेत्यादिना अपूर्वजनेश्चस्य इष्णुः इस्फूर्जावज्रनिर्घोषे सेमक्रात् सरोरिति घः ॥ २ ॥ म०

निरेत्यादि । भानुं निराकरिष्णवो निराकरणशीला घनाः पयो मुमुचुरिति योज्यं दिवमभितो वर्त्तिष्णव आकाशमभितो वर्त्तनस्वभावाः पूर्वपश्चिमयोर्वर्त्तनहेतुत्वात् पर्य्यभिभ्यां सर्वोभयार्थे तसिः

तान् विलोक्यासहिष्णुः सन् विललापोन्मदिष्णुवत् ।
वसन् माल्यवति ग्लास्नूरामो जिष्णुरधृष्णुवत् ॥ ४ ॥

अभितः परित इति द्वितीया । तड़ित्वन्तः सविद्युतः अतएव भान्तो दीप्यमानाः एवञ्च सत्वा अलङ्करिष्णवोऽलङ्करणशीला इव दिशश्चरिष्णवः इतस्ततो गमनशीलाः पूर्ववदिष्णुच् ॥ २ ॥ ज० म०

निरेत्यादि । कीदृशा घनाः भानुं निराकरिष्णव आच्छादका इत्यर्थः दिवसभित आकाशस्योभयभागे पूर्वे पश्चिमे च वर्त्तनशीलाः धिक्समयेत्यादिना अभियोगे द्वितीया तड़ित्वन्तो विद्युद्युक्ताः अतएव भान्तो दीप्यमानाः एवञ्चालङ्करिष्णवो दिवसमिति सम्बध्यते साधु भूषन्तः चरिष्णवः इतस्ततो गमनशीलाः पूर्वेण इष्णुः इषेसतीत्यादौ उदन्तवर्जनात् न कर्मणि षष्ठी तड़िच्छब्दात् मोऽसमभापाद्वतः नदन्तसाविति पदनिषेधात् न चपोऽवेजव् इत्यनेन तकारस्य दत्वं यद्यपि तड़ित्वान् वारिदोऽम्बुभृदित्यमरेणोक्तं तथाप्यत्र विद्यमानतड़िद्योगप्रतिपत्त्यर्थमुक्तम् अत्र तु गोशब्दादिवद्रूढ़िरेव यद्वा तड़ित्वन्तो मेघाः पयो मुमुचुः कीदृशाः घना निविड़ाः ॥ ३ ॥ भ०

तानित्यादि । तान् घनान्विलोक्य असहिष्णुरसहनशीलो रामः माल्यवति पर्वते वसन्विललाप उन्मदिष्णुवत् उन्मदनशीलः उन्मत्तस्तद्वत् पूर्ववदिष्णुच् ग्लास्नुः ग्लानशीलः जिष्णुर्जयशीलः अधृष्णुवदप्रगल्भ इव शोकाभिभूतत्वात् ग्लाजिस्थश्चग्स्नुः धृष्णुरिति त्रसिगृधीत्यादिना क्नुः ॥ ४ ॥ ज० म०

तानित्यादि । तान् घनान् विलोक्य असहिष्णुः सन् अक्षमाशीलो भवन् रामो माल्यवति पर्वते वसन् उन्मदिष्णुवदुन्मत्तवत् विललाप विलापं कृतवान् सन् पण्डितोऽपि उन्मदिष्णुरिव विललापेति वा योजना जिष्णुर्जयशीलोऽपि अधृष्णुवत् अप्रगल्भ इव ग्लास्नुः ग्लानिशीलः सहोन्मदिष्यां पूर्वेण इष्णुः ग्लाजिस्थश्चेत्यादिना ग्लायतेः स्नुः ग्स्नुः भूजेरिति जयतेः ग्नुक् त्रसिगृधित्यादिना धृषः क्नुः ॥ ४ ॥ भ०

भ्रमी कदम्बसम्भिन्नः पवनः शमिनामपि ।
क्लमित्वं कुरुतेऽत्यर्थं मेघशीकरशीतलः ॥ ५ ॥
संज्वारिणेव मनसा ध्वान्तमायासिना मया ।
द्रोहि खद्योतसम्पर्कि नयनामोषि दुःसहम् ॥ ६ ॥

किं तद्विलपनमित्याह भ्रमीत्यादि । भ्रमी भ्रमणशीलः कदम्बसम्भिन्नः कदम्बगन्धसंश्लिष्टः शमिनामपि शमनशीलानामपि क्लमित्वं कुरुते अत्यर्थं ग्लानिं कुरुते शमित्यष्टाभ्यो घिनुण् नोदात्तोपदेशेत्यादिना उपधावृद्धिप्रतिषेधः ॥ ५ ॥ ज० म०

भ्रमीत्यादि । इतःप्रभृति एवं विललापेति पूर्वेण सम्बन्धः पवनः शमिनां शान्तिशीलानामपि क्लमित्वं मनसो ग्लानिशीलत्वं कामहेतुकमित्यर्थात् अत्यर्थम् अतिशयितं कुरुते कीदृशः भ्रमी भ्रमणशीलः मन्दत्वात् कदम्बपुष्पेण सम्भिन्नः सुरभीकृत इत्यर्थः मेघस्य शीकरैः शीतलः शीकरोऽम्बुकणाः स्मृता इत्यमरः । भ्रमुचाले शमुश्च इर्षमे क्लमुग्लानौ एभ्यो ग्रहादित्वात् घिनुण् जनवधः सेम इति सूत्रः ॥ ५ ॥ भ०

संज्वेत्यादि । मयैतत् ध्वान्तं तमो दुःसहं दुःखेन सह्यत इति मनसा करणभूतेन कीदृशेन संज्वारिणेव रोगशीलेनेव आयासिना आयासशीलेन मयेति द्रोहि अपकारशीलं ध्वान्तं खद्योतसम्पर्कि ज्योतिरिङ्गणसंसर्गशीलं नयनामोषि चक्षुर्मोषणशीलं संपृचानुरुधेत्यादिना सर्वे घिनुणन्ताः ॥ ६ ॥ ज० म०

संज्वेत्यादि । मया मनसा करणेन ध्वान्तं तमो दुःसहं दुःखेन सह्यते संज्वारिणेव रोगशीलेनेव आयासशीलेन ध्वान्तं कुतो दुःसहम् इत्याह द्रोहि अपकारशीलं खद्योतसम्पर्कि ज्योतिरिङ्गणसंसर्गशीलं नयनामोषि नेत्रापहारकं ज्वरंरोगे इर्षस्य यतने स्वद्ह्लजिघांसे पृच् ष्वीचसम्पर्के मुषलुटने एभ्यो ग्रहादित्वात् घिन् पृचः कङ् निपातात् एभ्यो घञन्तेभ्योऽस्त्यर्थे इन् वा ॥ ६ ॥ भ०

कुर्वन्ति परिसारिण्यो विद्युतः परिदेविनम् ।
अभ्याघातिभिरामिश्राश्चातकैः परिराटिभिः ॥ ७ ॥
संसर्गी परिदाहीव शीतोऽप्याभाति शीकरः ।
सोढुमाक्रीड़िनोऽशक्ताः शिखिनः परिवादिनः ॥ ८ ॥
एता देशानुरोधिन्यो द्वेषिण्य इव रागिणम् ।
पीड़यन्ति जनं धाराः पतन्त्योऽनपकारिणम् ॥ ९ ॥

कुर्वन्तीत्यादि । एता विद्युतः परिदेविनं परिदेवनशीलं कुर्वन्ति मामित्यर्थात् कीदृश्यः परिसारिण्यः परिसरणशीलाः चातकैः पक्षि-विशेषैः परिराटिभिः परिरटनशीलैः एवञ्चाभ्याघातिभिः अभिहनन-शीलैः दुःखोत्पादनात् आमिश्रा युक्ताः विद्युतः पूर्ववद् घिनुण् ॥ ७ ॥ ज० म०

कुर्वत्यादि । विद्युतोऽर्थान्मां परिदेविनं विलापशीलं कुर्वन्ति परि-सारिण्यः परिसरणशीलाः दुःखोत्पादकतया अभिहननशीलैः परितो रटनशीलैश्चातकैः पक्षिविशेषैर्युक्ताः स्फुरतौ देहडःदेवने वधे रटवाचि एभ्यो ग्रहादित्वाणिन् विपूर्वात् द्योततेः क्विप् विद्युत् ॥ ७ ॥ भ०

संसर्गीत्यादि । संसर्गी संसर्जनशीलः शीतोऽपि शीकरो विन्दुः परिदाहीव परिदहनशील इवाभाति शिखिनश्च मयूराः सोढुमशक्ताः आक्रीड़िनो नर्त्तनशीलाः परिवादिनः परिवदनशीला इव इवशब्दस्यात्र लुप्तो द्रष्टव्यः पूर्ववद् घिनुण् ॥ ८ ॥ ज०

संसेत्यादि । शीकरः शीतोऽपि संसर्गसाधुकारी अपि सन् परि-दहनशील इव आभाति शिखिनो मयूराः सोढुमशक्ताः कीदृशाः आक्रीड़नशीलाः परि सर्वतो वदनशीलाः साधुभाषिणो वा रञ्जोऽपञ्च-कानासन्निनाविति ज्ञापकात् क्षति न्निनुप्रत्ययोऽस्तीति प्राप्तं तेन स्रजो-न्निनि चजोः कगाविति गत्वं घञन्तादस्त्यर्थे इनु वा दहिक्रीड़वदिभ्यो ग्रहादित्वात् णिन् ॥ ८ ॥ भ०

एता इत्यादि । एता धाराः पतन्त्यो द्वेषिण्य इव द्वेषणशीला

कुर्य्याद्योगिनमप्येष स्फूर्जावान् परिमोहिनम् ।
त्यागिनं सुखदुःखस्य परिक्षेप्यभ्रसामृतुः ॥ १० ॥
विकत्थी याचते प्रत्तमविश्रम्भी मुहुर्जलम् ।
पर्जन्यश्चातकः पक्षी निकृन्तन्निव मानसम् ॥ ११ ॥

इव जनं रागिणं रागशीलम् अनपकारिणमनपराधशीलं पीड़यन्ति दैवानुरोधिन्यः भाग्यानुरोधात् प्रवर्त्तनशीलाः पूर्ववत् घिनुण् घिनुणि च रञ्जेरुपसंख्यानमित्यनुनासिकलोपः कृतानुनासिकनिर्देशाद्वा लोप-निपातनम् ॥ ९ ॥ ज० म०

एता इत्यादि । एताः पतन्त्यो धाराः द्वेषशीला इव अनपकार-शीलमपि जनं पीड़यन्ति दैवानुरोधात् प्रवर्त्तनशीलाः रुधद्विषकस्यो ग्रहादित्वात् णिन् रञ्जेः संसर्गिवत् घिनि रञ्जोऽपसकेति नलोपः घञन्तनिष्पादितरागशब्दात् इन् वा ॥ ९ ॥ भ०

कुर्य्यादित्यादि । एष ऋतुरभ्रसां जलानां परिक्षेपी परित्यजन-शीलः कर्मणि षष्ठी । योगिनमपि योगशीलमपि सुखदुःखस्य त्यागिनं त्यागशीलं कर्मणि षष्ठी । परिमोहिनं परिमोहनशीलं कुर्य्यात् कीदृशः स्फूर्जावान् वज्रनिर्घोषयुक्तः पूर्ववद् घिनुण् ॥ १० ॥ ज० म०

कुर्य्यादित्यादि । एषोऽभ्रसां परिक्षेपी परित्यागशील ऋतुर्योगिनं शास्त्रविधिना योगे साधुकारिणमपि सुखदुःखस्य त्यागशीलमपि परि सर्वतो मोहशीलं कुर्य्यात् यतः स्फूर्जावान् वज्रनिर्घोषयुक्तः तेन कामस्य भयस्य चोत्पादात् केचित्तु योगिनं कान्तायुक्तं वज्रनिर्घोषेण सुखत्यागिनं कान्ताविरहेण च दुःखत्यागिनमित्याहुः । युजेः संसर्गिवत् घिनुण् घञन्तादिन् वा मुहिक्षिपिभ्यां ग्रहादित्वाण्णिन् ॥ १० ॥ भ०

विकेत्यादि । चातको मानसं निकृन्तन्निव खण्डयन्निव प्रत्तं प्रदत्तम् अच उपसर्गात् तः । जलं याचत इति प्रधानं कर्म पर्ज्जन्यमित्यकथितं विकत्थी विकत्थनशील इव पर्ज्जन्योऽपि मह्यं जलं ददाति इवशब्दो लुप्तोऽत्र द्रष्टव्यः अविश्रम्भी अविश्वासशीलः मानसखण्डनात् शोकजन-कीति घिनुण् ॥ ११ ॥ ज० म०

प्रलापिनो भविष्यन्ति कदा न्वेतेऽपलापिनः ।
प्रमाथिनो वियुक्तानां हिंसकाः पापदर्दुराः ॥ १२ ॥
निन्दको रजनिम्मन्यं दिवसं क्लेशको निशाम् ।
प्रीहृष्यनैषीत् काकुत्स्थः कथञ्चित्परिदेवकः ॥ १३ ॥

निवेत्यादि । चातकः पक्षिविशेषो मम मानसं निकृन्तन्निव खण्डयन्निव व्योम्नि मुहुः पुनः पुनः प्रदत्तमपि जलं पर्य्यन्यं मेघं याचते याचिर्द्विकर्मकः यतोऽविश्रम्भी अविश्वासशीलः तृषाव्याकुलत्वात् प्राप्तेऽपि जले जलं याचत इत्यर्थः विकत्थी श्लाघाशीलः कत्थङ् श्लाघे स्रम्भुङ् विश्वासे इत्यादिः आभ्यां ग्रहादित्वात् णिन् प्रपूर्वस्य दाञोऽण्यचस्तवेति तादेशः ष्टुपुसेके इत्यस्मान्यप्रत्यये चवर्गतृतीयो निपात औणादिक इत्यर्जुनदत्तः कृतोऽशपच्छिदि सुचादित्वात् नुचरधोसुचामिति नुण् ॥११॥ भ०

प्रलापीत्यादि । एते पापदर्दुराः पापाश्च ते दर्दुराश्चेत्याक्रोशाभिधानं कदा नु अपलापिनो भविष्यन्ति अपलपनशीलाः व्यपगतकामा इत्यर्थः लपकान्तौ अपेचलप इति घिनुण् । प्रलापिनः प्रलपनशीलाः प्रमाथिनः प्रमथनशीलाः चेतसामित्यर्थात् प्रेलपेत्यादिना घिनुण् अतएव वियुक्तानां मादृशां हिंसकाः हिंसनशीलाः इत्येवं विलपाप निन्दहिंसेत्यादिना वुञ् ॥ १२ ॥ ज० म०

प्रलेत्यादि । एते पापदर्दुराः पापिनो भेकाः कदा अपलपनशीलाः व्यपेतकामा भविष्यन्ति तदैव तत्प्रलापनिवृत्त्या दुःखानुत्पत्तिः पापशब्द आक्रोशपूर्वककुत्साद्योतनाय प्रयुक्तः । प्रलापकरणशीलाः प्रलापोऽनर्थकं वचः वियुक्तानां भार्य्याविरहिणां प्रमाथिनः साधु प्रमथनकारिणः यतो हिंसकाः हिंसाशीलाः लपलप्रमथिभ्यो ग्रहादित्वात् णिन् हिंसेः टुस्कोषे इति षकः एवं विलखापेति सम्बन्धनीयमेतत्पर्य्यन्तम् ॥ १२ ॥ भ०

निन्देत्यादि । काकुत्स्थो दिवसं रजनिम्मन्यं रजनीमात्मानं मन्यमानं घनान्धकारित्वात् आत्ममाने खश् खित्यनव्ययस्येति ह्रस्वत्वं निशाञ्च प्राटषि कथमप्यनैषीत् नीतवान् निन्दकः निन्दनशीलः नक्त

अथोपशरदेऽपश्यत् क्रौञ्चानाञ्चेष्टनैः कुलैः।
उत्कण्ठावर्द्धनैः शुभ्रं स्वनैरम्बरं ततम्॥ १४॥
विलोक्य द्योतनं चन्द्रं लक्ष्मणं शोचनोऽवदत्।

न्दिनस्येत्यर्थात् क्रोशकः क्रोशनशीलः परिदेवकः परिदेवनशीलः आत्मन इत्यर्थात्॥ १२॥ ज० म०

निन्देत्यादि। काकुत्स्थः प्रावृषि वर्षाकाले कथञ्चित् कथमपि दिवसं निशाञ्च अनैषीत् गमयामास कीदृशः निन्दकः निन्दाशीलः अर्थादात्मनः दिनरात्र्योर्वा दिवसं निशाञ्च निन्दक इति ये वदन्ति तन्मते ठषेकतीत्यादौ शीलार्थदृष्टिनित्यत्व दृष्टिरित्युपलक्षणं शीलार्थे चक-स्यापि ग्रहणं तेन न षष्ठी क्रोशकः क्रोशशीलः परिदेवकः साधुदेवन-कारी सन् दिवसं कीदृशं रजनिम्मन्यम् आत्मानं रजनिं रात्रिं मन्य-मानं तत्तुल्यमिति यावत् घनान्धकारात् खिदिक्लिशिदेविभ्यः दस्य-कौषे इति चकः॥ १२॥ भ०

अथेत्यादि। अथानन्तरमुपशरदे शरत्समीप इत्यव्ययीभावे शरत्प्र-भृतिभ्य इति समासान्तष्टच् तृतीयासप्तम्योर्बहुलमित्यभावः क्रौञ्चानां कुलैस्ततं व्याप्तमम्बरं शुभ्रं शुक्लमपश्यत् दृष्टवान् चेष्टनैः व्यापारशीलैः स्वनैः शब्दनशीलैः अनयोश्चलनशब्दार्थत्वात् चलनशब्देत्यादिना युच्। उत्कण्ठावर्द्धनैः उत्कण्ठावर्द्धनशीलैः अनुदात्तेतश्चेति युच् क्रौञ्च इति क्विन्प्रत्ययान्तत्वात् प्रज्ञादित्वादण्॥ १४॥ ज० म०

अथेत्यादि। अथानन्तरम् उपशरदे शरत्कालस्य समीपे काकुत्स्थो-ऽम्बरमाकाशमपश्यत् कीदृशं क्रौञ्चानां पक्षिविशेषाणां कुलैः समूहैः ततं व्याप्तम् अतएव शुभ्रं धवलं कीदृशैश्चेष्टनैः साधुचेष्टां कुर्वद्भिः उत्-कण्ठाया भार्य्याविषयिकाया वर्द्धनैः दृद्धिशीलैः साधूत्कण्ठादृद्धिकारि-भिर्वा स्वनैः साधुशब्दं कुर्वद्भिः चेष्टदृधिस्वभ्यो नन्द्यादित्वादनः दृधिरत्र ज्यन्तः शरदोऽव्ययीभावे शरद्धिपाठच इति चः तीयार्थेति पक्षे सप्तमीः क्रुञ्चेव क्रौञ्चः स्वार्थे ष्यः॥ १४॥ भ०

विलोक्येत्यादि। चन्द्रं विलोक्य द्योतनं साधुद्योतमानम् अनु-

पश्य दन्द्रमणान् हंसानरविन्दसमुत्सुकान् ॥ १५ ॥
कपिश्चङ्क्रमणोऽद्यापि नासौ भवति गर्द्धनः।
कुर्वन्ति कोपनं तारा मण्डनं गगणस्य माम् ॥ १६ ॥
नावैत्याप्यायितारं किं कमलानि रविं कपिः।

दात्तत्स्येति युच्। शोचनः शोचनशीलः जुचङ्क्रम्येत्यादिना युच् रामो लक्ष्मणमवदत् पश्य हंसान् दन्द्रमणान् शनैर्गमनशीलान् द्रमेर्नित्यं कौटिल्य एव भवति नतु क्रियासमभिहार इत्युक्तं वदन्ताद्युच् अतो लोपः यस्य हलः अरविन्दसमुत्सुकान् प्रसितेति सप्तमीं विधाय सप्तमीति योगविभागात् सः ॥ १५ ॥ ज० म०

विलोक्येत्यादि। चन्द्रं विलोक्य रामो लक्ष्मणमब्रवीत् चन्द्रं कीदृशं द्योतनं द्योतमानं शोचनः शोकशीलो रामः किमुक्तवानित्याह हंसान् त्वं पश्य कीदृशान् दन्द्रमणान् कुटिलगमनशीलान् अरविन्देषु पद्मेषु समुत्सुकान् द्युतशुचयङ्लुगन्तद्रमिभ्यो नन्द्यादित्वादनः विपरीतदिशां देशानां गमनमिह वक्रम् ॥ १५ ॥ भ०

कपिरित्यादि। नासौ कपिः सुग्रीवोऽद्यापि चङ्क्रमणः शनैर्गमनशीलो न भवति यतो गर्द्धनोऽभिलाषशीलः स्त्रीष्वित्यर्थात् पूर्ववद्युच्। ताराश्च मां कोपनं कोपनशीलं तद्विषय एव कुर्वन्ति कीदृश्यः गगणस्य मण्डना भूषणाः क्रुधमण्डार्थेभ्यश्चेति युच् ॥ १६ ॥ ज० म०

कपिरित्यादि। असौ कपिः सुग्रीवोऽद्यापि कुटिलगतिशीलो न भवति नाना दिक्षु गमनं न करोतीत्यर्थः यतो गर्द्धनः अभिलाषशीलः अर्थाद्भोगेषु तारा मां कोपनं कोपशीलं कुर्वन्ति तद्विषय इत्यर्थात् कीदृश्यः गगणस्य मण्डनं साधुभूषाकारिण्यः यङ्लुगन्तमेर्गृधुकुपमण्डिभ्यश्च नन्द्यादित्वादनः, वेदाः प्रमाणमित्यादिवत् सामान्योपक्रमान्मण्डनस्य क्लीवत्वमेकत्वञ्च किंवा मामित्यस्य विशेषणम् आकाशवासित्वाद्गगणभूषणं मामित्यर्थः अहमाकाशवासी सोऽद्यापि गृहे तिष्ठतीति कोपहेतुः ॥ १६ ॥ भ०

नावैत्येत्यादि। किमसौ कपिः रविं नावैति नावगच्छति कमला-

दीपितारं दिनारम्भे निरस्तध्वान्तसञ्चयम् ॥ १७ ॥
अतीते वर्षुके काले प्रमत्तः स्थायुको गृहे।
गामुको ध्रुवमध्वानं सुग्रीवो वालिना गतम् ॥ १८ ॥
जल्पाकीभिः सहासीनः स्त्रीभिः प्रजविना त्वया।

न्याप्यायितारं साधु वर्द्धयन्तम् अनुदात्तेतश्चेति प्राप्ते नय इति प्रति-षिद्धे तृन्नेव भवति ततश्च नलोकेति षष्ठीप्रतिषेधः। दिनारम्भे दीपि-तारं साधु दीप्यमानं पूर्ववद्युचि प्राप्ते सूददीपदीक्षश्चेति प्रतिषेधः। निरस्तध्वान्तसञ्चयम् अपनीतान्धकारसंहतिकं किमसौ शरत्समयं नावै-तीत्यर्थः ॥ १७ ॥ ज० म०

नावैत्येत्यादि। किमसौ कपिरीदृशं सूर्य्यं नावैति शरत्कालमागतं किं न जानातीत्यर्थः कीदृशं रविं कमलानि आप्यायितारं पद्मवृद्धिं साधु कुर्वन्तं दिनारम्भे दीपितारं साधु दीप्यमानम् अपनीतान्धकार-समूहं प्यायिदीपिभ्यां तृणकौघे इति तृन् दघेकतीत्यादौ शीलार्थस्योप-लक्षणत्वान्न कर्मणि षष्ठी क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति वा द्वितीया ॥ १७ ॥ म०

अतीत्यादि। वर्षुके वर्षणशीले काले अतीतेऽपि गृहे स्थायुकः स्थितिशीलः शरदि नागतत्वात् प्रमत्तः सन् सुग्रीवो वालिना गतम् अध्वानं प्राप्तमार्गं ध्रुवमवश्यं गामुकः साधु गन्ता लषपतेत्युकन् नलो-केति षष्ठीप्रतिषेधः ॥ १८ ॥ ज० म०

अतीत्यादि। असौ सुग्रीवो वालिना गतमध्वानं यममार्गं ध्रुवं निश्चितं गामुकः साधु गमिष्यति यतः वर्षुके वृष्टिशीले काले अतीते-ऽपि गृहे स्थायुकः स्थितिशीलः अतएव प्रमत्तः अनवहितः दृष्टस्या-गमिष्यः गृह्याभूकमेति उकः दघेकतीत्यादौ उकवर्जनान्न कर्मणि षष्ठी ॥ १८ ॥ म०

जल्पेत्यादि। हे लक्ष्मण! त्वया प्रजविना प्रकृष्टगमनशीलेन प्रजोरिनिः, जयिना अभिभवनशीलेन जिदृक्षीत्यादिना इनिः, सुग्रीवो निष्ठुरं वचोऽभिधातव्यः जल्पाकीभिः जल्पनशीलाभिः स्त्रीभिः सहा-

गत्वा लक्ष्मण ! वक्तव्यो जयिना निष्ठुरं वचः ॥ १९ ॥
शैले विश्रयिणं क्षिप्रमनादरिणमभ्यमी ।
न्याय्यं परिभवी ब्रूहि पापमव्यथिनं कपिम् ॥ २० ॥

क्षीनः जल्पभिक्षेति षाकन् षित्त्वात् ङीष् तन्मध्ये हि परुषमभिधीयमानः परिभवं मन्यत इति भावः ॥ १९ ॥ ज० म०

जल्पेत्यादि । हे लक्ष्मण ! त्वया गत्वा सुग्रीवो निष्ठुरं वचो वक्तव्यः कथनीयः सुग्रीवस्य गौणकर्मत्वात् गौणे याचादय इति तत्रैव प्रत्ययः । सुग्रीवः कीदृशः जल्पाकीभिर्जल्पनशीलाभिः साधुजल्पन्तीभिर्वा स्त्रीभिः सह आसीनः उपविष्टः भिक्षजल्पकुट्टेति षाकः षित्त्वात् ङीष् यासोऽस्येत्यनेन आसः शानस्य आ ईत्वं त्वया कीदृशेन प्रजविना प्रकृष्टवेगवता जयिना जययुक्तेन जुजिभ्यामनन्ताभ्यामस्त्यर्थे इन् किंवा कृत्तद्धितसमासानामभिधानं नियामकमित्युक्तेस्तद्धितषाण्मात्रादिवत् कृत्प्रत्यया अपि कचित् शीलेऽनितस्य भवन्ति तेन ग्रहादित्वात् णिनीषकारेत्त्वाविवक्षया वृद्ध्यभावे पुगन्तलघूपधस्य च इति गुणः परे तु शीलाचारसाधुषु जुजिप्रभृतिभ्य इन् वर्त्तमान इत्याहुः ॥ १९ ॥ भ०

शैल इत्यादि । कपिं क्षिप्रं गत्वा ब्रूहि इत्यकथितं कर्म न्याय्यं वच इति प्रधानं कर्म अस्य चातिस्पष्टार्थत्वादिदं तदिति न सन्दिष्टं अनादरिणमनादरशीलं कपिं कालातिक्रमणात् आङ्पूर्वाद्दृङ् अत एव पापं दुराचारम् अव्यथिनं निर्भयशीलं नञ्पूर्वो व्यथिः शैले विश्रयिणं तत्र स्थितिशीलं विपूर्वः श्रयतिः त्वं चाभ्यमी अभिमुखगमनशीलः अभिपूर्वोऽमगत्यादिषु परिभवी साधु परिभवं जनयन् परिपूर्वो भवतिः अत्र सर्वत्र जिदृक्षीत्यादिना इनिः ॥ २० ॥ ज० म०

शैल इत्यादि । त्वं क्षिप्रमभ्यमी शीघ्रमाभिमुख्येन साधु गतः सन् परिभवी साधु परिभवं कुर्वन् न्याय्यं न्यायादनपेतं वचस्तं कपिं ब्रूहि कीदृशं कपिं शैले विश्रयिणं स्थितिशीलम् अनादरिणं मयि अनादरशीलं पापं दुराचारं यतोऽव्यथिनं निर्दयशीलं श्लिष्टश्रमभूव्यथानां प्रजविवत् तथा रूपाणि ॥ २० ॥ भ०

स्पृहयालुं कपिं स्त्रीभ्यो निद्रालुमदयालुवत्।
श्रद्धालुं भ्रामरं धारुं सद्रुमद्रौ वद द्रुतम्॥ २१॥
स्मरोऽभङ्गुरप्रज्ञो गृहीत्वा भासुरं धनुः।
विदुरो जित्वरः प्राप लक्ष्मणो गत्वरान् कपीन्॥२२॥

स्पृहेत्यादि। स्त्रीभ्यः स्पृहयालुं कपिं साधु स्पृहयन्तं स्पृहिः स्वार्थिकण्यन्तोऽदन्तश्च अयामन्तेत्ययादेशः स्पृहेरीप्सित इति सम्प्रदानसंज्ञा द्रुतं वद ब्रूहि अदयालुवत् अदयनशील इव निद्रालुं निद्राशीलम् अस्मत्कार्य्येष्वनवधानत्वात् शयनीय एव सर्वदा स्थितत्वात् स्त्रीभिः सह श्रद्धालुं साध्वभिलषन्तं भ्रामरं भ्रमरैः कृतं क्षुद्राभ्रमरेत्यादिना अञ् मध्वित्यर्थात् नलोकेति षष्ठीप्रतिषेधः स्पृहिगृहीत्यादिना आलुच् श्रद्धालुत्वादेव धारुं साधु पिबन्तं भ्रामरमेव सद्रुं साधु सीदन्तं दाधेट्सिशदसदो रुः॥ २१॥ ज० म०

स्पृहेत्यादि। द्रुतं शीघ्रं त्वं कपिं वद विषादे पौनरुक्त्यं न दोषाय अतिदाक्षार्यत्वात् कीदृशं स्त्रीभ्यः स्पृहयालुं स्पृहशीलं साधु स्पृहयन्तं वा यस्मै दित्सेत्यादिना संप्रदानत्वम् अदयावन्तमिव निद्रावन्तं भ्रमरैः कृतं भ्रामरं मधु ढघेकादिति ष्णः। तत् धारुं साधु पिबन्तं तथापि तत्र श्रद्धालुम् अभिलाषवन्तम् एतेन पानासक्ततया प्रमत्तत्वं दर्शितम्। अद्रौ किष्किन्ध्यापर्वते सद्रुं साधु सीदन्तं तिष्ठन्तमित्यर्थः एवं रामो लक्ष्मणमब्रवीदिति पूर्वेणान्वयः स्पृहत्वेशो पतिगृहिस्पृहीति आलुः निद्रादयश्रद्धाशब्देभ्यो गौतमसेघेत्यादिना निद्रादित्वादस्त्यर्थे आलुः निपूर्वद्रादयमत्पूर्वधाञ् इत्येतेभ्यः स्पृहयालुवदालुरिति परे धेट्सदिभ्यां शतसत्सिधेदोरुरिति रुः॥ २१॥ भ०

स्मेत्यादि। लक्ष्मणः कपीन् प्राप कीदृशः स्मरः साधु गन्ता सृघस्यदः क्मरच्। भङ्गुरा ये स्वयमेव भज्यन्ते भञ्जभासेति घुरच् तान् प्रजानातीति भङ्गुरप्रज्ञ इति कः विदुरः साधु वेदो विदिभिदिच्छिदेः कुरच्। जित्वरः साधु जयशीलः इणनशजीत्यादिना क्वरप्। गृहीत्वा धनुर्भासुरं भासनशीलं गत्वरान् गमनशीलान् कपीन् अस्थिरप्रकृतीन्-

तं जागरूकः कार्य्येषु दन्दशूकरिपुं कपिः ।
अकम्प्रं मारुतीदीप्रं नम्रः प्रावेशयद् गुहाम् ॥ २३ ॥

त्यर्थः गत्वरश्चेति निपातितं गमेः करप्यनुनासिकलोपः ॥२२॥ ज० म०

सृमेत्यादि । लक्ष्मणो भासुरं दीप्तिशीलं धनुर्गृहीत्वा गत्वरान् अस्थिरप्रकृतीन् तद्भयात् पलायमानान् वा कपीन् प्राप कीदृशः सृमरः साधु सरति गच्छतीति घसस्रदः क्मरः । भङ्गुरान् स्वयमेव भञ्जनशीलान् अर्थात् कपीन् प्रजानातीति कृगृह्याप्रीति कः यद्वा नञः प्रश्लेषात् अभङ्गुरा स्थिरा प्रज्ञा बुद्धिर्यस्य स तथा साधु वेत्तीति विदुरः जित्वरो जयशीलः भञ्जिभासिभ्यां मिद्धासभञ्ज इति घुरः कत्रोःकभाव इत्युक्तेः कर्त्तरि विहितोऽपि घुरो भञ्जेः कर्मकर्त्तरि बोध्यः भज्यते स्वयमेवेति भङ्गुरः चजोःकगाविति गत्वं वेत्तेश्छिद्भिदि इति कुरः जिगमिभ्यां क्वरप् स्जीनित्यादिना क्वरप् मस्य तश्च स्वस्य तन् पिति ॥ २२ ॥ भ०

तञ्चेत्यादि । तं लक्ष्मणं कपिर्मारुतिः गुहां प्रावेशयत् विशेर्हेतुमण्ण्यन्तात् लङि रूपं कार्य्येषु कृत्येषु जागरूकः सावधानः जागरूक इति जागर्त्तेरूकः दन्दशूकरिपुं हिंसारिं यजजपेत्यादिना दंशेर्यङन्तादूकः लुपसदेत्यादिना यङ् दीप्रं साधु दीप्यमानम् अकम्प्रम् अकम्पनशीलम् अभीरुमित्यर्थः नम्रः साधु प्रह्वीभूतः सर्वत्र नमिकम्पीत्यादिना रः ॥ २३ ॥ ज० म०

तञ्चेत्यादि । कपिर्मारुतिर्हनूमान् तं लक्ष्मणं गुहां किष्किन्धां प्रवेशयामास प्रवेशोऽपि गतिभेदः तेन घोञोजेः मत्त्रासनगतीत्यादिना प्रयोज्यकर्त्तुः कर्मत्वं गुहेति भिदादित्वात् भीषिचिन्तीत्यादिना ङः स्त्रीत्वञ्च । कीदृशो मारुतिः कार्य्येषु जागरूकः साधु सावधानः नम्रः साधु प्रह्वीभूतः तं कीदृशं दन्दशूकानां हिंस्राणां रिपुम् अकम्प्रम् अकम्पनशीलं निर्भयमित्यर्थः दीप्रं दीप्तिशीलं जागृयङन्तदन्शिभ्यां जागृयङन्त यजेत्यादिना ऊकः दन्शो नलोपो वेति यङ् लुकि नस्य लोपः नमजपेत्यादिना लेतुण् कम्पिदीपिभ्यामिभ्यो हिंसदीपेत्यादिना रः ॥ २३ ॥ भ०

क्रम्राभिरावृतः स्त्रीभिराशंसुः क्षेममात्मनः।
इच्छुः प्रसादं प्रणमन् सुग्रीवः प्रावदन्नृपम् ॥ २४ ॥
अहं स्वप्नक् प्रसादेन तव वन्दारुभिः सह।
अभीरुरवसं स्त्रीभिर्भासुराभिरिहेश्वरः ॥ २५ ॥

कम्रेत्यादि। सुग्रीवः प्रावदत् नृपं लक्ष्मणं स्त्रीभिरावृतः परि-वृतः सन् प्रणमन् ताभिः सहेत्यर्थः कम्राभिः कमनशीलाभिः पूर्ववद्रः। आत्मनः क्षेमं कल्याणमाशंसुः प्रार्थयमानः सनाशंसभिक्ष उः नलोकेति षष्ठीप्रतिषेधः इच्छुः प्रसादं प्रसादमिच्छणशीलः श्रपि मे स्वामी प्रसन्नः स्यादिति विन्दुरिच्छुरिति निपातनम् ॥ २४ ॥ ज० म०

कम्रेत्यादि। सुग्रीवो नृपं लक्ष्मणं प्रावदत् कम्राभिः कामुकीभिः स्त्रीभिः परिवृतः सन् प्रणमन् अर्थात् ताभिः सह पूर्ववत् रः आत्मनः क्षेमं कुशलम् आशंसुः इच्छुः सन् भिक्षाशंस उः अतएव तस्य प्रसादम् इच्छुः साधु इच्छन् विन्दिच्छू इति निपातः ढक्षेलतीत्यादौ उदन्तवर्ज-नात् न षष्ठी ॥ २४ ॥ भ०

अहमित्यादि। अहं तव प्रसादेन इह गुहायामवसम् उषित-वान् स्वप्नक् निद्रालुः चिन्ताभावात् स्वपितृषोर्नजिङ् वन्दारुभिर्वन्दन-शीलाभिः सह शृवन्द्योरारुः अभीरुः, अभयशीलः भियः क्रुक्लुकनौ। भास्वराभिः भासनशीलाभिः ईश्वरः ईशनशीलः स्थेशभासेति वरच् ॥ २५ ॥ ज० म०

अहमित्यादि। किमुक्तवानित्याह हे ईश्वर! तव प्रसादेनाहं स्त्रीभिः सह इह गुहायाम् अवसम् उषितवानस्मि। अहं कीदृशः स्वप्नक् साधु स्वपन् स्वपतृषन्धृषप्नोऽन्नज् इति न्नज् अभीरुर्भयहीनः क्रुक्लुकौ भिय इति क्रुः कीदृशीभिः स्त्रीभिः वन्दारुभिः प्रणामशीलाभिः साधु स्तुतिं कुर्वाणाभिर्वा शृवन्द आरुः भासुराभिः दीप्तिशीलाभिः साधु दीप्यमानाभिर्वा भासीमिथ्यां यायावभास्वरेत्यादिना वरः ॥ २५ ॥ भ०

विद्युद्राम्णं रवेर्भासं विभ्राजं शशलाञ्छनम् ।
रामप्रत्तेषु भोगेषु नाहमज्ञासिषं रतः ॥ २६ ॥
एष शोकच्छिदो वीरान् प्रभो ! सम्प्रति वानरान् ।
धरासमुद्रशैलानामन्तगान् प्रहिणोम्यहम् ॥ २७ ॥

इति ताच्छीलिकाः समाप्ताः ।

विद्युदित्यादि । रामप्रत्तेषु रामदत्तेषु भोगेषु रतः सक्तः नाहमज्ञासिषं नाहं ज्ञातवान् लुङि यमरमेत्यादिना सगिटौ विद्युद्राम्णं द्योतनशीला विद्युतः तासां दाम्ना रवेर्भासः भासनशीला दीप्तीर्विभ्राजं साधु दीप्यमानं शशलाञ्छनं चन्द्रं प्रावृडतिक्रान्ता शरदायातेति नाज्ञासिषमित्यर्थः सर्वत्र भ्राजभासेति क्विप् ॥ २६ ॥ ज० म०

विद्युदित्यादि । अहं रामेण प्रत्तेषु भोगेषु रतः आसक्तः सन् विद्युतां दाम्नं सूर्य्यस्य दीप्तिं साधु दीप्यमानं चन्द्रञ्च नाज्ञासिषं न ज्ञातवानस्मि शरदागमनं न ज्ञातवान् गृहे तिष्ठामीति भावः यमरमेति इडागमो विभ्राजत इति क्विप् ॥ २६ ॥ भ०

एष इत्यादि । हे प्रभो ! एषोऽहं सम्प्रति वानरान् प्रहिणोमि प्रस्थापयामि कीदृशान् शोकच्छिदः शोकापनोदनशीलान् अन्येभ्योऽपि दृश्यत इति क्विप् । वीरान् शूरान् धराशैलसमुद्राणाम् अन्तं गच्छन्ति ये तानन्तगान् अन्तात्यन्तेति डः धरा पृथ्वी धरासमुद्रशैलानामिति पाठान्तरम् अत बह्वच्‌नियम इति पूर्वनिपातः यथा वीणाशङ्खदुन्दुभयः । इति ताच्छीलिकक्रतः ॥ २७ ॥ ज० म०

एष इत्यादि । हे प्रभो ! एषोऽहं सम्प्रति वानरान् प्रहिणोमि प्रेरयामि सैन्यानयनायेत्यर्थात् कीदृशान् शोकच्छिदः शोकापनोदनशीलान् तालुसिति क्विप् वीरान् समर्थान् अतएव पृथिवीसमुद्रपर्वतानामप्यन्तगान् अन्तं गच्छन्तीति हनजनादिति डः प्रभवतीति प्रभुः स्वयं भुविसम्भादिति डुः प्राग्वन्नोणोन्तरडुगैरित्यादिना णुविरकणस्य णत्वम् इत्येवं सुग्रीवः प्रावदन्नृपमिति पूर्वेण सम्बन्धः । इति ताच्छीलिका उक्ताः ॥ २७ ॥ भ०

अथ निरधिकारकृत्।

राघवस्य ततः कार्य्यं कारुर्वानरपुङ्गवः।
सर्वंवानरसेनानामाश्वागमनमादिशत् ॥ २८ ॥
वयमद्यैव गच्छामो रामं द्रष्टुं त्वरान्विताः।
कारकामितकार्य्याणि सीतालाभाय सोऽब्रवीत् ॥२९॥

इतो विशेषाधिकाराभावात् निर्विशेषकृतो दर्शयन्नाह। राघवेत्यादि। ततोऽभिधानानन्तरं वानरपुङ्गवः सुग्रीवः सर्वंवानरसेनानामाशु शीघ्रमागमनमादिशत् आदिष्टवान् पुमांश्चासौ गौश्चेति गोरतद्धितलुकीति समासान्तष्टच् व्युत्पत्तिमात्रमेतत् पुङ्गवशब्दस्तु प्रधानमाचष्टे कारुः करोतीति उणादयो बहुलमिति औणादिकः कृपावाजीत्यादिना उण एवमाशु कस्य कर्त्तेत्याह राघवस्य कार्य्यम् ॥२८॥ ज०म०

सम्प्रति निर्विशेषाः कृत उच्यन्ते राघवेत्यादि। तत्कथानन्तरं वानरश्रेष्ठः सुग्रीवः सर्वासां वानरसेनानाम् आशु शीघ्रम् आगमनम् आदिशत् आज्ञापयामास नाम्नग्रन्थेतिकृत्चेति गमेर्डोः पुमांश्चासौ गौश्चेति गोरतार्थे इति-अः व्युत्पत्तिमात्रमिदं पुङ्गवशब्दस्तूत्तरपदे प्रधानार्थः कीदृशः राघवस्य कार्य्यं कारुः कर्त्ता अभिधानात् नाम्नग्रन्थेतिकृत्चेत्यस्य क्वचिदसंज्ञायामपि प्रवृत्तिरिति तेन उण् रषिगतावित्यस्मात् पूर्वेण उक् नञा निर्दिष्टस्यानित्यत्वात् नेदित्पूजार्थाञ्चोरित्यस्याप्रवृत्तेर्हलुङ् नलोपः तस्यापत्यमिति ण्यः अम्बूङव्याप्नौ उण् आशु ॥ २८ ॥ भ०

वयमित्यादि। आगमनमादिश्य सुग्रीवोऽब्रवीत् उक्तवान् वयमद्यैव गच्छाम इति रामं द्रष्टुं रामं द्रक्ष्याम इति, त्वरान्विताः त्वरिता इत्यर्थः कीदृशा वयं सीतालाभाय सीतां प्राप्स्याम इति कारकामितकार्य्याणि रावणवधादेः कार्य्यस्य कर्त्तारो भविष्याम इति गच्छाम इति क्रियायां क्रियार्थायामुपपदे तुमुनृब्वुलौ भविष्यति काले स्यातां मितकार्य्याणीति अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रतिषेधे द्वितीयैव

ततः कपीनां सङ्घाता हर्षाद्राघवभूतये ।
पूरयन्तः समाजग्मुर्भयदाता दिशो दश ॥ ३० ॥
सुग्रीवान्तिकमासेदुः साधयिष्याम इत्यरिम् ।
करिष्यन्त इवाकस्माद् भुवनं निर्दशाननम् ॥ ३१ ॥

स्यात् सीतालाभायेति भाववचनाच्चेति क्रियायां क्रियार्थायामुपपदे भविष्यति घञ्तुमर्थाच्च भाववचनादिति चतुर्थी ॥ २९ ॥ ज० म०

वयमित्यादि । आगमनमादिश्य स सुग्रीव इदमब्रवीत् आदिष्टवान् कपीनित्यर्थात् किमुक्तवानित्याह वयमद्यैव रामं द्रष्टुं गच्छामः अद्यैवेत्यनेन वानरानयनमद्यैव कार्य्यमिति त्वरा सूचिता बहुत्वं सेनासाहित्यात् सीतालाभाय त्वरायुक्ताः तादर्थ्ये चतुर्थी मित्रस्य रामस्य कार्य्याणि रावणबधादीनि कारकाः कर्त्तारः कचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति षष्ठीविषये द्वितीया ॥ २९ ॥ भ०

तत इत्यादि । आदेशानन्तरं कपीनां संघाताः समाजग्मुः हर्षात् हर्षेण आदेशादानमेव हर्षहेतुः राघवभूतये अपि नाम राघवस्य सम्पत्स्यादिति समाजग्मुरित्यस्यां क्रियायां क्रियार्थायामुपपदे भाववचनाच्चेति भविष्यति क्तिन् चतुर्थी इच पूर्ववत् पूरयन्तो व्याप्नुवन्तः दश दिशः भयदायाः भयं दास्याम इत्यस्यां क्रियायामुपपदे अण् कर्मणि चेत्यण् आतो युक् ॥ ३० ॥ ज० म०

तत इत्यादि । तत आदेशात् कपीनां सङ्घाताः समूहा दश दिशः पूरयन्तो व्याप्नुवन्तो राघवस्य भूतये सम्पत्त्यर्थं हर्षादाजग्मुः किष्किन्ध्यायामित्यर्थात् भयदायाः शत्रुभ्यो भयं ददातीति मित्राणां भयं द्यन्ति खण्डयन्तीति वा व्यवस्थयेन तनदेति णः जनज्वषिदिति यत् ॥ ३० ॥ भ०

सुग्रीवेत्यादि । अरिं शत्रुं सादयिष्यामो व्यापादयिष्याम इति सुग्रीवान्तिकमासेदुः आगताः लृट् शेषे चेति चकारात् क्रियार्थायामुपपदे भविष्यति लृट् आसेदुरिति क्रियाक्रियार्था अकस्मादतर्कितं भुवनत्रयं निर्दशाननं रावणरहितं करिष्यन्त इव तथाविधमहासंरम्भा-

कर्त्तास्मि कार्य्यमायातैरेभिरित्यवगम्य सः।
काकुत्स्थपादपच्छायां शीतस्पर्शामुपागमत्॥ २२॥
कार्य्यसारनिभं दृष्ट्वा वानराणां समागमम्।
अत्रैवार्थं दशास्यस्य निर्वृत्तमिव राघवः॥ २३॥

इति निरधिकारकृत्।

दर्शनादुत्प्रेक्ष्यते लृट् शेषे चेति लृट् अत्र क्रियायाः क्रियार्थाया अन्यः शुद्धो भविष्यत्कालः शेषः॥ २१॥ ज० म०

सुग्रीवेत्यादि। वयमरिं साधयिष्यामः व्यापादयिष्याम इति एतदर्थं सुग्रीवस्यान्तिकं समीपमासेदुरागताः कपीनां संघाता इत्यनु-प्रेक्ष्यते अकस्मादतर्कितं यथा स्यात्तथा भुवनं रावणशून्यं करिष्यन्त इव महापराक्रमदर्शनादुत्प्रेक्षेयम्॥ २१॥ भ०

कर्त्तेत्यादि। एभिरायातैर्वानरैः कार्य्यं सीतान्वेषणादि कर्त्तास्मि करिष्यामीति अवगम्य अनद्यतने भविष्यति लुट् सुग्रीव काकुत्स्थपाद-पच्छायामुपागमत् पद्यन्त इति पादाः पदरुजेति कर्त्तरि घञ् तत्र भविष्यतीति निवृत्तं पादैः पिबतीति पादपो वृक्षः आतोऽनुपसर्गे कः काकुत्स्थः पादप इव समाश्रयणीयत्वात् तस्य छायां शीतस्पर्शाम् अनु-द्वेजनकरीं स्पृश्यत इति स्पर्शस्तन्मात्र उच्यते अकर्त्तरि चेति घञ् ननु ननु पदरुजेत्यादिना तत्र हि स्पृश उपताप इति वक्तव्यमित्युक्तं स्पृशतीति स्पर्श उपतापः॥ २२॥ ज० म०

कर्त्तेत्यादि। आगतैरेभिर्वानरैरहं कार्य्यं सीतान्वेषणादिरूपं कर्त्तास्मि करिष्यामि ध्रुवं रूपम् इत्यवगम्य निश्चित्य सुग्रीवः काकुत्स्थ-पादपच्छायामुपागमत् रामान्तिकं गतवानित्यर्थः शीतस्पर्शां दुःख-हन्त्रीमित्यर्थः पद्यत इति कर्त्तरि घञ् पादो मूलं तेन पिबति सेक-जलमिति पादपो वृक्षः छाया स्यादातपाभावे शोभायामपि दृश्यते। अत्र लक्षणया समीपदेशवृत्तिः॥ २२॥ भ०

कार्य्येत्यादि। राघवो वानराणां समागमं दृष्ट्वा कार्य्यसारनिभं

अतः परं घञधिकारः ।

ततः कपिसमाहारमेकं निश्रायमागतम् ।
उपाध्याय इवायामं सुग्रीवोऽध्यापिपद्दिशाम् ॥ २४ ॥

सीतालाभतुल्यं सरति कालान्तरे तिष्ठतीति कर्त्तरि कारके त्वचिशर इति घञ् दशास्यस्य रावणस्य नाशं विनाशं निर्वृत्तमिव निष्पन्नमिव अवैत् ज्ञातवान् अवपूर्वादिणो लङि रूपम् । इति निरधिकाराः कृताः ॥ २३ ॥ ज० म०

कार्य्येत्यादि । वानराणां समागमं दृष्ट्वा राघवो दशास्यस्य नाशं निर्वृत्तं निष्पन्नमिव अवैत् ज्ञातवान् अवपूर्वादिनो ण्यादिप् कीदृशं समागमं कार्य्यसारस्य सीतालाभस्य तुल्यं सरति कालान्तरमिति सारः कर्त्तरि घञ् नवोर्भावे घञ् । इति निरधिकाराः कृत उक्ताः ॥२३॥भ०

अतः परं भावे कर्त्तरि च कारक इत्यधिकृत्य कृदुच्यते । तत इत्यादि । कपिसमागमनानन्तरं सुग्रीवः कपिसमाहारं कपिसमूहं दिशामायाममध्यापिपत् बोधितवान् असुका असुका दिक् ईदृशीति गतिबुद्ध्यादिना समाहारस्य कर्मसंज्ञा आयामपरिज्ञानञ्चास्य बालिभयाद् दूरपरिभ्रमणात् एकनिश्रायमागतम् एकराशितां प्राप्तम् आयाममित्यर्थः निश्रायमिति परिमाणाख्यायामिति घञ् पश्चादेकशब्देन पूर्वकालैकेति सः क इव उपाध्याय इति उपेत्याधीयते अस्मादिति इङश्चेति घञ् ॥ २४ ॥ ज० म०

अथाकर्त्तरि कारके कृत उच्यन्ते । तत इत्यादि । कपिसमागमानन्तरं सुग्रीवः कपीनां समाहारं समूहं दिशामायामं दैर्घ्यम् अध्यापिपत् अध्यापितवान् अस्यां दिशि एतत्पर्य्यन्तं गन्तव्यमिति ज्ञापितवान् आयामज्ञानञ्चास्य बालिभयेन दूरभ्रमणात् योऽजौञ्जेः शब्दाशनगतिज्ञेत्यादिना समाहारस्य प्रयोज्यस्य कर्मत्वं क्रीजीङोऽजेति इङ आत्वं ह्रीव्लीत्यादिना पण् उपाध्याय इव यथा गुरुरध्यापयति तथेत्यर्थः उपेत्याधीयतेऽस्मादिति घञर्थकटोऽपि इति घञ् कीदृशमायामम् एकं निश्रायं स्थानम् आगतं प्राप्तम् अत्यभ्यासात् सर्वासां दिशां दैर्घ्यं

सजलाम्भोदसंरावं हनूमन्तं सहाङ्गदम् ।
जाम्बवन्नीलसहितं चारुसन्द्रावमब्रवीत् ॥ २५ ॥
यात यूयं यमश्रायं दिशं नायेन दक्षिणाम् ।
विद्रावैस्तोयविस्रावं तर्जयन्तो महोदधेः ॥ २६ ॥

सुग्रीवस्य ज्ञानादृढमित्यर्थः पूर्वेण घञ् एको निश्रायो यस्येति कपि-समाहारस्य विशेषणं वा एतेनैकवाक्यता दर्शिता एवमागतं यमेर्व जि जनवध इत्यादिना पक्षे वृद्ध्यभावः ॥ २४ ॥ भ०

सजेत्यादि । सुग्रीवो हनूमन्तमब्रवीत् सजलाम्भोदसंरावं सजल-मेघस्येव संरावो यस्य हनूमतः उपसर्गेरुव इति घञ् सहाङ्गदम् अङ्गदसहितं तथा जाम्बवम् ऋक्षाधिपतिं नीलसहितमब्रवीत् जाम्बव-शब्दोऽकारान्तो द्रष्टव्यः चारुसन्द्रावं चारुगतिं समियुद्रुद्रुव इति घञ् ॥ २५ ॥ ज० म०

सजेत्यादि । सुग्रीवो हनूमन्तमब्रवीत् सजलस्य मेघस्येव संरावः शब्दो यस्य तम् अतिगम्भीरस्वनमित्यर्थः पूर्वेण घञ् उपसर्गाद्रुव इति परः अङ्गदेन सह विद्यमानं जाम्बवता नीलेन च सहितं नीलसहितं जाम्बवश्चाब्रवीदिति वा जाम्बवान् जाम्बवोऽपि चेति विश्वः चारुसंद्रावं मनोहरगतिं पूर्वेण घञ् समतुमेभ्यो द्रुव इति परः ॥ २५ ॥ भ०

यातेत्यादि । यूयं यात गच्छत यमश्रायं यमस्थानं अयत्नेनमिति श्रिणीभुवोऽनुपसर्गे इति घञ् कर्मणि कां दक्षिणां दिशं सामान्याभि-धानाद्विशेषाभिधानं नायेन नीत्या सामादिना नीयतेऽनेनेति पूर्ववत् करणे घञ् महोदधेस्तोयविस्रावं तोयध्वनिं तर्जयन्तो न्यक्कुर्वाणाः कैः विद्रावैः स्वैः शब्दैः उभयत्रापि वौक्षुस्रुव इति कर्मणि घञ् ॥ २६ ॥ ज० म०

यातेत्यादि । यूयं दक्षिणां दिशं यात गच्छत यमश्रायं यमस्थानं अयत्नेनमिति घञ् सामान्यविशेषभावात् पौनरुक्त्यभावः यमस्थानं न गन्तव्यमित्याशयो वा नायेन नीत्या सामदानादिना उपलक्षिता यूय-मित्यर्थः करणत्वविवक्षा वा णीञः करणे घञ् महोदधेस्तोयस्य विद्रावं

उन्नायानधिगच्छन्तः प्रद्रावैर्वसुधाभृताम् ।
वनाभिलावान् कुर्वन्तः स्वेच्छया चारुविक्रमाः ॥३७॥
सदोद्गारसुगन्धीनां फलानामलमाशिताः ।
उत्कारेषु च धान्यानामनभीष्टपरिग्रहाः ॥ ३८ ॥

शब्दं विरावैः स्वीयशब्दैस्तर्जन्तः न्यक्कुर्वन्तः णुसुस्थां घञ् ॥३६॥ भ०

उन्नेत्यादि । वसुधाभृतां पर्वतानाम् उन्नायानुन्नयानुच्चत्वान्यधिगच्छन्तः जानन्तः अवोदोर्नियः इति भावे घञ् कैः प्रद्रावैः प्रकृष्टगतिभिः प्रेद्रुस्तुसुवः इति घञ् वनाभिलावान् वनविध्वंसान् निरभ्योः पूल्वोरिति भावे घञ् स्वेच्छया कुर्वन्तः चारुविक्रमाः असाधारणपराक्रमाः यात यूयमिति सम्बन्धः ॥ ३७ ॥ ज० म०

उन्नेत्यादि । प्रद्रावैः प्रकृष्टगमनैर्वसुधाभृतां पर्वतानाम् उन्नायान् उच्छ्रितत्वानि अधिगच्छन्तो जानन्तः यूयं यातेति पूर्वेणान्वयः वनाभिलावान् अरण्यविध्वंसान् स्वेच्छया कुर्वन्तः चारुविक्रमाः असाधारणशौर्याः उत्पूर्वणीञः प्रपूर्वद्रोरभिपूर्वलूञश्च भावे घञ् ॥३७॥ भ०

सदेत्यादि । सदा सर्वदा उद्गारे भक्षणानन्तरं श्वसनपूर्वके शब्दोच्चारणे यानि सुगन्धीनि फलानि तेषामलं पर्य्याप्तमाशिताः तृप्ताः गृशब्दे इत्यस्मादुत्पूर्वादुन्योर्ग्रः इति घञ् आङ्पूर्वादश्न तेरादिकर्मणि क्तः कर्त्तरि चेति कर्त्तरि क्तः क्तप्रयोगे कर्मणि षष्ठी नलोकेति निषिद्धातः शेषे षष्ठी उत्कारेसु च राशिषु धान्यानां कृविक्षेप इत्यस्मादुत्पूर्वात् कृधान्य इति कर्मणि घञ् अनभीष्टपरिग्रहाः अनभिलाषुका इत्यर्थः ॥ ३८ ॥ ज० म०

सदेत्यादि । सर्वदा उद्गारे सुगन्धिभिः फलैरलमत्यर्थम् आशिताः तृप्ताः यूयं यातेति सम्बन्धः अशभोजन इत्यस्य आङ्पूर्वस्य तृप्त्यर्थेनाकर्मकत्वात् गत्यर्थाकर्मेत्यादिना कर्त्तरि क्तः भीतादित्वात् वर्त्तमाने क्त इत्यन्ये तृप्त्यर्थानां वेति अधिकरणे षष्ठी उत्पूर्वात् गॄधनिगरणे इत्यस्मात् गॄणिशब्दे इत्यस्माद्वा घञ् यद्भुक्तं सदुद्गारेऽपि सुगन्धिं प्रकाशयति तदुद्गारसुगन्धि उद्गारः परिणाम इत्यन्ये धान्यानामुत्कारेषु

संस्तावमिव शृण्वन्तश्छन्दोगानां महाध्वरे।
शिञ्जितं मधुलेहानां पुष्पप्रस्तारशायिनाम्॥ ३९॥
आलोचयन्तो विस्तारमम्भसां दक्षिणोदधेः।
स्वादयन्तः फलरसं मुष्टिसंग्राहपीडितम्॥ ४०॥
न्याय्यं यद्यत्र तत्कार्य्यं पर्य्यायेणाविरोधिभिः।

राशिषु अनभीष्टः परिग्रहो येषां ते धान्यानभिलाषुका इत्यर्थः किर आधारे घञ् किरोधान्ये इति परसूत्रम्॥ ३८॥ भ०

संस्तेत्यादि। मधुलेहानां भ्रमराणां पुष्पप्रस्तारशायिनां प्रस्तोऽयत्र इति घञ् शिञ्जितं शब्दं शृण्वन्तः यूयं यात छन्दोगानां महाध्वरे संस्तावमिव सम्भूय स्तवनमिव पाठध्वनिविशेषमिव वा यज्ञे समिस्तुव इति घञ्॥ ३९॥ ज० म०

संस्तेत्यादि। मधुलेहानां भ्रमराणां शिञ्जितं शब्दं शृण्वन्तो यूयं यातेति सम्बन्धः यद्यपि भूषणानाञ्च शिञ्जितमित्यमरेणोक्तं तथापि शिजि अव्यक्ते शब्दे इति धात्वर्थमात्रे तात्पर्य्यं छन्दोगानां वेदविदां महायज्ञे संस्तायमिव सम्यक् स्तवनमिव भावे घञ् पुष्पाणां प्रस्तारे समूहे शायिनां स्थितानां प्रपूर्वस्तृञो घञ्॥ ३९॥ भ०

आलोचेत्यादि। दक्षिणोदधेरम्भसां विस्तारं विस्तीर्णतां विपूर्वात् स्तृणातेः प्रथने वावशब्दे इति घञ् आलोचयन्तो निरूपयन्तः इयान्नस्य विस्तार इति फलरसमास्वादयन्तः मुष्टिसंग्राहपीडितं मुष्टेः संग्राहेण हस्तेन पीडितं ग्रहेः शमिमुष्टाविति घञ् भावे मुष्टिविषये व्युत्पादितत्वात् मुष्टिग्रहणमभिव्यक्त्यर्थं ज्ञातव्यम्॥ ४०॥ ज० म०

आलोचेत्यादि। दक्षिणोदधेरम्भसां विस्तारं विस्तीर्णताम् आलोचयन्तो निरूपयन्तो यूयं यातेति सम्बन्धः स्तृञो भावे घञ् मुष्टिसंग्राहेण मुष्टिबन्धेन पीडितं फलरसम् आस्वादयन्तः यद्यपि संग्राहो मुष्टिबन्ध इत्यमरमाला तथापि मुष्टिग्रहणमत्राभिव्यक्त्यर्थं संग्राहो मुष्टिरिष्यत इति हलायुधवाक्यादन्यत्रापि प्रवृत्तिदर्शनाद्वा॥४०॥ भ०

न्याय्यमित्यादि। यदत्र न्यायादनपेतं तत्कार्य्यं मविरोधिभिर्यु-

निशोपशायः कर्त्तव्यः फलोच्चायश्च संहतैः ॥ ४१ ॥
सीता रक्षोनिकायेषु स्तोककायैश्छलेन च ।
मृग्या शत्रुनिकायानां व्यावहासीमनाश्रितैः ॥ ४२ ॥

ष्माभिः परिन्योर्नीणोरिति घञ् पदार्थानामनपचारेणेत्यर्थः व्युपयोः शेतेः पर्य्याय इति घञ् पर्य्यायेण परिपाट्या परावनुपात्यय इण इति भावे घञ् अनुपात्ययः पर्य्यायः निशोपशायः कर्त्तव्यः युष्माभिर्निशायाम् उपशयः पर्य्यायशयनं कर्त्तव्यं व्युपयोः शेतेः पर्य्याय इति घञ् फलोच्चायश्च संहतैः युष्माभिः कर्त्तव्यः हस्तादान इति घञ् हस्तादानं चादेयस्य प्रत्यासत्तिः ॥ ४१ ॥ ज० म०

न्याय्यमित्यादि । यत्र यत् न्याय्यं न्यायादनपेतं तत्र तत् कार्य्यम् अविरोधिभिर्युष्माभिः पर्य्यायेण परिपाट्या क्रमेणेति यावत् निशोपशायः निशायां शयनक्रिया कर्त्तव्या संहतैर्मिलितैः सद्भिः फलोच्चायः फलादानं कर्त्तव्यः वने हिंसादिभयान्मिलितैरेव गन्तव्यमिति भावः । निपूर्वात् परिपूर्वाच्चेण उपपूर्वात् शीङ उत्पूर्वाच्चेञ्श्च घञ् न्यायशब्दात् ढघेकादिति ष्यत्रः ॥ ४१ ॥ भ०

सीतेत्यादि । छलेन युष्माभिः सीता मृग्या रक्षोनिकायेषु निवासेषु निवसन्त्यस्मिन्निति अधिकरणे निवासचितीत्यादिना घञ् आदेश्च ककारः स्तोककायैर्युष्माभिः चिन्वन्त्यस्माच्छुभमिति कायः शरीरे घञ् शत्रुनिकायानाम् अरिसमूहानां निचीयत इति निकायः संघेचानौत्तराधर्य्ये इति कर्म्मणि घञ् आदेश्च ककारः तेषां सम्बन्धिनीं व्यावहासीं परस्परहसनम् अनाश्रितैः व्यवपूर्वाद्धसेः कर्म्मव्यतीहारे णच् स्त्रियामिति स्त्रीलिङ्गे भावे णचं विधाय णचः स्त्रियामञ् न कर्म्मव्यतीहार इति वृद्धिप्रतिषेधः ॥ ४२ ॥ ज० म०

सीतेत्यादि । युष्माभिः स्तोककायैः स्वल्पदेहैः सद्भिः रक्षोनिकायेषु राक्षसनिवासेषु सीता मृग्या अन्वेषणीया छलेन न तु प्रकटेन मृगत् कङ् मार्गणे शत्रुनिकायानां शत्रुसमूहानां व्यावहासीं परस्परहसनम् अनाश्रितैः उपहसतोऽपि शत्रोरुपहासं कार्य्यसिद्ध्यर्थम-

सांराविणं न कर्त्तव्यं यावन्नायाति दर्शनम्।
संदृष्टायान्तु वैदेह्यां निर्ग्राहो वोऽर्थवानरैः॥ ४२॥
प्रग्राहैरिव पात्राणामन्वेष्या मैथिली कृतैः।
ज्ञातव्या चेङ्गितैर्धैर्य्यैर्ध्यायन्ती राघवागमम्॥ ४४॥

कुर्वद्भिरित्यर्थः व्यावहासी परस्परविचारेणेति केचित्। निचीयतेऽस्मिन्निति निकायो निवासः समूहश्च चीयते सुखदुःखार्थमिति कायो देहः स्यदैधावोदेत्यादिना घञि कायनिकायौ निपातितौ व्यवपूर्वहसो व्यतीहारे णन् मूर्द्धन्यणकार इदृड्यर्थः दन्त्यनकारस्तु व्योर्युमुदान्ते इत्यादौ स्वध्वरणन इति चिह्नार्थः णनन्तात् स्वार्थे ष्णः पित्वात् स्त्रियामीप्॥ ४२॥ भ०

सांराविणमित्यादि। संरावणमभिव्याप्त्या भाषणं न कर्त्तव्यं युष्माभिः यावन्नायाति दर्शनं सीताया इत्यर्थात् संपूर्वाद्रौतेरभिविधौ भाव इत्युन् तदन्तादणि लुण् इत्यण् तस्मिन्निनणयनपत्य इति प्रकृतिभावः यस्मात्संदृष्टायां चैतस्यां वैदेह्याम् अरेर्निग्राहः आक्रोशोऽभिभवलक्षणः वो युष्माकमर्थवान् आक्रोशेऽवन्योर्ग्रह इति भावे घञ्॥ ४२॥ ज० म०

सामित्यादि। यावद्वो दर्शनं नायाति न प्राप्नोति अर्थात् सीता कर्त्री तावद्युष्माभिः सांराविणम् अभिव्याप्य भाषणं कोलाहलरूपं न कर्त्तव्यं संपूर्वरुलध्वनौ व्याप्तौ भावे णिन् णिनन्तात् स्वार्थे ष्णः मन्वर्जान्वर्मोऽपस्येन इत्यादिना संयोगात् परस्य इनन्तस्यापत्यष्णे नकारलोपाभाव उक्तस्तेन असंयोगात् परस्य इनन्तस्यापत्यष्णे नकारलोपः स्यादनपत्यष्णे इति प्राप्तं तेनात्र नलोपाभावः देवीदासचक्रवर्त्ती तु णिनप्रत्ययोऽकारान्तः णिनन्तादित्यत्र णिनान्तादिति पाठ इत्याह हि यस्मात् सम्यग्दृष्टायामेव वैदेह्याम् अरेर्निग्राह आक्रोशोऽभि[illegible] वा युष्माकं स्वार्थको भवति ग्रहेर्भावे घञ्॥ ४२॥ भ०

प्रपेत्यादि। पात्राणां भिक्षाभाजनानां प्रग्राहैरिव कृतैरन्वेष्या मैथिली भिक्षुकवेषैरिव युष्माभिरित्यर्थः ग्रहेः प्रलिप्सायामिति भावे

वेदिवत् सपरिग्राह्या यज्ञियैः संस्कृता द्विजैः।
दृश्या मासतमादह्नः प्रागनिन्दितवेशभृत्॥ ४५॥

घञ् कर्मणि षष्ठी इङ्गितैर्धर्म्यैः चेष्टितैः कुलाङ्गनोचितैः ज्ञातव्या सा ध्यायन्ती रामागमं कुलाङ्गना हि प्रोषितभर्तृका सर्वदा भर्तुरागमनं ध्यायति॥ ४४॥ ज० म०

प्रग्रहेत्यादि। पात्राणां भिक्षाभाजनानां प्रग्राहैरिव प्रग्रहणैरिव कृतैर्भवद्भिः सीताऽन्वेष्या भिक्षुवेशैरपीत्यर्थः इवार्थोऽत्र सम्भावना प्रादृग्रहेर्भावे घञ् कथं सा ज्ञेयेत्याह धर्म्यैर्धर्मादनपेतैरिङ्गितैश्चेष्टितैर्ज्ञातव्या राक्षसगृहेऽन्यस्यास्तादृशधर्मासम्भवात् कीदृशी राघवागमनं चिन्तयन्ती असाधारणं चिह्नमेतत् कुलस्त्री सदा स्वामिनः समागमं ध्यायति स्वधर्मञ्च न त्यजतीति भावः॥ ४४। भ०

वेदीत्यादि। यथा यज्ञियैर्यज्ञकर्मार्हैर्द्विजैः ब्राह्मणैः वेदिः यज्ञस्थली सपरिग्राह्या परिगृहीता संस्कृता तथा साऽपि अतिपवित्रत्वात् ग्रहेः परौ यज्ञ इति यज्ञविषये घञ् मासतमादह्नः प्राग्दृश्या दर्शनार्हा मासस्य पूरणं यदहः नित्यं शतादिमासेत्यादिना तमडागमः अस्मादेव निपातनात् मासस्यासंख्यावाचित्वे डट् मासतमेऽह्नीति हेतौ दर्शयन्नाह तस्याः पूतत्वात्तद्वदनिन्दितवेशभृत् मैथिली मङ्गलमालाभरणा दर्शनार्हा तां द्रष्टुं भवतां न चिरकालो भवतीति मासावधिना प्रेषिताः॥ ४५॥ ज० म०

वेदीत्यादि। मासतमात् मासपूरणादह्नः प्राक् सीता युष्माभिर्दृश्या मासावधिनैव भवन्तः प्रेष्यन्ते चिरकालो न कर्त्तव्य इति दृशेः ऋदुपधत्वात् ऋदुपधाच्चाक्लृपिचृतेरित्यादिना क्यप् मासशब्दात् शतादिमाससंवत्सरादिति पूरणे तमट् कीदृशी अनिन्दितवेशभृत् मङ्गलमालाभरणसत्त्वात् यथा यज्ञियैर्यज्ञकर्मार्हैर्द्विजैः सपरिग्राह्या परिगृहीता वेदिस्तैः संस्कृता तथा सापि अतिपवित्रत्वात् पुरोहितैः संस्कृतत्वाच्च परेर्ग्रहो घञ् यज्ञविषये परेर्ग्रहो घञिति परः छघेकादिति यज्ञशब्दात् अर्हतीत्यर्थे इयः॥ ४५॥ भ०

नीवारफलमूलाशानृषीनप्यतिशेरते ।
यस्या गुणा निरुद्रावास्तां द्रुतं यात पश्यत ॥ ४६ ॥
उच्छ्रायवान् घनारावो वानरं जलदारवम् ।
दूराप्लावं हनूमन्तं रामः प्रोचे गजाप्लवः ॥ ४७ ॥

नीवेत्यादि । यस्या गुणा ब्रह्मचर्यादयः ऋषीनप्यतिशेरते न्यक्कुर्वते तां द्रुतं यात पश्यत तत्र नीवारः अकृष्टपच्यधान्यं नीवृधान्यम् इति घञ् उपसर्गस्य घञीति दीर्घत्वं फलं मोचादि मूलं शालूकादि एतान्यश्नन्ति ये ऋषयः कीदृशाः गुणाः निरुद्द्रावाः स्थिराः उदिश्रयतीति घञ् ॥ ४६ ॥ ज० म०

नीवारेत्यादि । यस्याः सीतायाः गुणाः शमदमादयो मुनीनपि अतिशेरते न्यक्कुर्वन्ति शीङ् अतिपूर्वः अतिक्रमे सकर्मकः स्वभावात् कीदृशाः निरुद्द्रावाः स्थिराः उत्पूर्वाद्द्रवतेर्घञ् । कीदृशान् नीवारं तृणधान्यं फलमामलक्यादि मूलं शालूकादि अश्नतः तां यूयं द्रुतं पश्यत यात च निपूर्वात् वृञो घञ् अभिधानात् क्वचिदुपसर्गस्य घञन्ते दीर्घ इति व्यतीहार इति दीर्घनिर्देशेन ज्ञापितं तेनैव दीर्घत्वम् अतएवेदितो नुम् अतएव पं इत्यादिवचनात् ज्ञापकेन कार्य्यसिद्धिः स्वयमेवोक्ता तृणधान्यानि नीवारा इत्यमरः इति सुग्रीवोऽब्रवीदित्यन्वयः ॥४६॥ भ०

उच्छ्रेत्यादि । रामो हनूमन्तं प्रोचे कीदृशः उच्छ्रायवानुन्नतियुक्तः पूर्ववद्घञ् घनस्येवारावो यस्य विभाषाङिरुत्प्लुवोरिति भावे घञ् गजाप्लवः गजगमनः पक्षे पूर्ववदप् । कीदृशं दूराप्लावं दूरमाप्लाव उद्गमनं यस्य पूर्ववत् घञ् ॥ ४७ ॥ ज० म०

उच्छ्रेत्यादि । रामो हनूमन्तं वानरं प्रोचे कीदृशः उच्छ्रायवान् उन्नतिमान् महापुरुषलक्षणमेतत् उत्पूर्वात् श्रिञो घञ् घनस्येवारावो ध्वनिर्यस्य स तथा गजाप्लवो गजगमनः वानरं कीदृशं जलदारवं मेघशब्दं दूराप्लावं दूरदेश उत्प्लुतिकारिणम् आङ्पूर्वाभ्यां रुप्लुभ्यां घञौ ॥ ४७ ॥ भ०

अवग्राहे यथा वृष्टिं प्रार्थयन्ते कृषीवलाः ।
प्रार्थयध्वं तथा सीतां यात सुग्रीवशासनात् ॥ ४८ ॥
वणिक् प्रग्राहवान् यद्वत् काले चरति सिद्धये ।
देशापेक्षास्तथा यूयं यातादायाङ्गुरीयकम् ॥ ४९ ॥

अवेत्यादि । अवग्रहो वर्षप्रतिबन्धः अवेग्रह इति पक्षे अप् यथा अवग्रहे कृषीवला वृष्टिं प्रार्थयन्ते तथा सीतां यूयं प्रार्थयध्वं तस्या दुर्लभत्वादत्यन्तादरणीयत्वाच्च यात सुग्रीवशासनात् ॥४८॥ज० म०

अवेत्यादि । कृषीवलाः कृषका यथा अवग्राहे वृष्टिप्रतिबन्धे वृष्टिं प्रार्थयन्ते तथा यूयं सीतां प्रार्थयध्वम् अतिदुर्लभत्वात् यात सुग्रीवशासनात् न तु मयाज्ञा क्रियत इति भावः गौरवख्यापनायैकत्वेऽपि बहुत्वं लोकात् अन्यसहितत्वाद्वा अर्थात्कङ्याचने अवाद्वृष्टिप्रतिबन्धे ग्रहो घञ्वाविति परः स्नमते घञलनटोऽघे इत्यस्य सर्वविषयत्वात् कृषिशब्दात् गोत्पणमेषेति वलः नाम्नरस्त्यर्थेऽचोर्घः ॥४८॥भ०

वणिगित्यादि । तुला प्रगृह्यते येन सूत्रेण स प्रग्राहः प्रे वणिजामिति करणे घञ् स तुलासम्बन्धी विद्यते यस्य वणिजः संसर्गे मतुप् यथा तुलाप्रग्राहवान् तदुपलक्षितो वणिक्काले उचिते क्रयसिद्धये चरति तथा यूयं अङ्गुलीयं तुलासूत्रस्थानीयं चिह्नमादाय देशापेक्षाः तत्तद्देशस्थितास्तत्र हि चिह्नेन रामदूता इति लक्ष्यन्ते ॥ ४९ ॥ ज० म०

वणिगित्यादि । यथा प्रग्राहवान् तुलासूत्रवान् वणिक् योग्ये काले क्रयविक्रयादिस्वक्रियासिद्ध्यर्थं चरति योग्यदेशमपेक्षते च तथा यूयमपि ममाङ्गुरीयकं तुलासूत्रतुल्यमादाय गृहीत्वा योग्ये काले देशापेक्षाः सीतानिवासदेशमपेक्षमाणा यात गच्छत इति रामः प्रोचे इति सम्बन्धः अनेनैवाङ्गुलीयकेन चिह्नेन सीतया मद्दूता भवन्तो ज्ञास्यन्त इति भावः तुला प्रगृह्यते येन सूत्रेण तत्प्रग्राह उच्यते प्रपूर्वाद्ग्रहो वणिक् सम्बन्धे रज्जौ च घञ्वाविति परः स्नमते घञलनटोऽघे इत्यस्यापि विषयो दुर्निवारः ॥ ४९ ॥ भ०

अभिज्ञानं गृहीत्वा ते समुत्पेतुर्नभस्तलम्।
वाजिनः स्यन्दने भानोर्विमुक्तप्रग्रहा इव॥ ५०॥
उदक् शतबलिं कोट्या सुषेणं पश्चिमां तथा।
दिशं प्रास्थापयद्राजा वानराणां कृतत्वरः॥ ५१॥

अभीत्यादि। ते वानरा नभस्तलमुत्पेतुः वाजिन इव विमुक्तप्रग्रहाः विमुक्तः प्रग्रहो नियमरज्जुर्येषामिति रश्मौ चेति विभाषा ग्रहणमनुवर्त्तते घञभावपक्षे ग्रहवृदृनिश्चिगमश्चेत्यप् स्यन्दने रथे भानोरादित्यस्य किं कृत्वा अभिज्ञानं गृहीत्वा चिह्नमङ्गुलीयकमादाय॥ ५०॥ ज० म०

अभीत्यादि। ते हनूमदादयोऽभिज्ञानं चिह्नमङ्गुरीयकं गृहीत्वा नभस्तलम् आकाशं समुत्पेतुः यथा भानोः स्यन्दने रथे विमुक्तप्रग्रहाः शिथिलीकृतबन्धरज्जवो वाजिनोऽश्वा नभो गच्छन्ति तथा एतेनातिशीघ्रत्वं दर्शितं तत्रशब्दोऽत्र स्वरूपार्थः तत्त्वं स्वरूपाधरयोः खड्गमुष्टिचपेटयोरिति विश्वः। प्रग्रहोऽनन्तो रज्जुवाचकः॥ ५०॥ भ०

उदगित्यादि। वानराणां राजा सुग्रीवः शतबलिं नाम वानरं वानराणां कोट्या सह उदगुदीचीं दिशं प्रास्थापयत् तिष्ठतेर्ण्यन्तस्य लङि रूपम् उदीचीशब्दात् प्रथमान्ताद्दिशि वर्त्तमानादस्तातिः तस्याञ्चेर्लुक् लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक् तद्धितश्चासर्वविभक्तिरिति सर्वनामसंज्ञाभावादीत्वमपि निवर्त्तते तसिलादिस्तद्धित एधाच् पर्य्यन्त इत्यव्ययत्वे द्वितीयालुक् तथैव सुषेणं वानरं पश्चिमां दिशं प्रास्थापयत् कृतत्वरः त्वरितः॥ ५१॥ ज० म०

उदगित्यादि। वानराणां राजा सुग्रीवः कृतत्वरस्त्वरान्वितः सन् शतबलिनामानं कपिम् उदक् उत्तरस्यां दिशि प्रस्थापयामास तथा सुषेणनामानं पश्चिमां दिशं प्रास्थापयत् वानराणां कोट्या सहेत्युभयत्र योज्यं घोऽञ्जेः शब्दाशनगतीत्यादिना प्रयोज्यस्य कर्मत्वं प्रपूर्वस्य तिष्ठतेर्गत्यर्थत्वात् उदगिति उदक्शब्दाद्दिग्देशकाले इति सप्तम्याः स्तात् तस्य लुक् चात्परत्वात् तदन्तस्याव्ययत्वं लोकोपचारात्॥ ५१॥ भ०

प्राचीं तावद्भिरव्यग्रः कपिभिर्विनतो ययौ ।
अप्रग्राहैरिवादित्यो वाजिभिर्दूरपातिभिः ॥ ५२ ॥
ययुर्विन्ध्यं शरन्मेघैः प्रावारैः प्रवरैरिव ।
प्रच्छन्नं मारुतिप्रष्ठाः सीतां द्रष्टुं प्लवङ्गमाः ॥ ५३ ॥
परिभावं मृगेन्द्राणां कुर्वन्तो नगमूर्द्धसु ।
विन्ध्ये तिग्मांशुमार्गस्य चेरुः परिभवोपमे ॥ ५४ ॥

प्राचीमित्यादि । कपिभिस्तावद्भिरित्येककोटिसंघातैः सह विनतः प्रणतः सुग्रीव इत्यर्थात् अव्यग्रः अनाकुलः प्राचीं पूर्वां दिशं ययौ यथा आदित्यो वाजिभिरप्रग्राहैः मुक्तबन्धनैः करणभूतैः रश्मौ चेति घञ् दूरयायिभिः ॥ ५२ ॥ ज० म०

प्राचीमित्यादि । विनतनामा वानरोऽव्यग्रोऽनाकुलः स तावद्भिः कोटिसंख्यातैः कपिभिः सह प्राचीं पूर्वां दिशं ययौ सुग्रीवाज्ञयेत्यर्थात् यथा आदित्यः सूर्योऽप्रग्राहैर्मुक्तरज्जुभिर्दूरपातिभिर्वाजिभिरश्वैः सह प्राचीं याति तथा प्रग्राहो घजन्तो रज्जुवाचकः । अदितेरपत्यमिति गर्गादित्वात् ण्यः केचित्तु विनतो नम्रः सुग्रीवः प्राचीं ययावित्याहुस्तत्तु रामायणविरुद्धम् ॥ ५२ ॥ भ०

ययुरित्यादि । मारुतिप्रष्ठाः हनूमदग्रेसराः सीतां द्रष्टुं विन्ध्यपर्वतं ययुः शरन्मेघैः प्रावारैरिव प्रावरणैरिव प्रच्छन्नं वृणोतेराच्छादन इति घञ् प्रवरैः श्रेष्ठैः अनाच्छादने अहेत्यादिना अप् ॥५३॥ ज०म०

ययुरित्यादि । प्लवङ्गमा वानराः सीतां द्रष्टुं विन्ध्यपर्वतं ययुः प्लवेन गच्छन्तीति नृम्ब्हद्जीत्यादिना खः कीदृशाः मारुतिर्हनूमान् प्रष्ठोऽग्रसरो येषां ते तथा प्राद्यप्रेस्थस्य पत्वमभिधानात् मनीषादित्वाद्वा कीदृशं शरन्मेघैः प्रच्छन्नं प्रवरैः श्रेष्ठैः प्रावारैः प्रच्छदपटैरिव अभिधानात् प्राङ्पूर्वात् वृञ आच्छादने घञ् अन्यत्वात् ॥ ५३ ॥ भ०

परीत्यादि । मृगेन्द्राणां सिंहानां परिभावमभिभवं कुर्वन्तः विन्ध्ये चेरुः भ्रान्ताः परौ भुवोऽवज्ञान इति घञ् । कीदृशे परिभवोपमे

भ्रेमुः शिलोच्चयांस्तुङ्गानुत्तेरुरतरान् नदान् ।
आशंसवो लवं शत्रोः सीतायाश्च विनिश्चयम् ॥ ५५ ॥
आदरेण गमञ्चक्रुर्विषमेष्वप्यसङ्घसाः ।
व्याप्नुवन्तो दिशोऽन्यादान् कुर्वन्तः सव्यधान् हरीन् ॥ ५६ ॥

आदित्यमार्गस्य परिभवनम् अत्युच्चत्वात् शब्भावपचे अप् ।५४॥ ज० म०

परीत्यादि । ते नगमूर्द्धनि गिरिशिखरे मृगेन्द्राणां सिंहानां परिभावं तिरस्कारं कुर्वन्तो विन्ध्ये चेरुः चरन्ति कीदृशे सूर्य्यवर्त्मनः परिभव इव तस्यात्युच्चत्वात् परिभवशब्देनात्र तत्कर्त्ता लच्यते आदित्यमार्गस्य परिभवेणोपगता मा लक्ष्मीः शोभा यस्येति वा यद्वा तत्परिभवक्रियथैव त्व लोकभयदत्वेन साम्यं विवक्षितं परिपूर्वाङ्गुवो शब्लौ स्वभावादवज्ञानार्थता न गच्छतीति नगः द्वनजनादिति डः ॥५४॥ भ०

भ्रेमुरित्यादि । उत्पूर्वाच्चिनोतेः एरजित्यच् शिलाभिरुच्चयो येषां तान् शिलोच्चयान् भ्रेमुः भ्रमणक्रियाया व्याप्यत्वात् सकर्मकता नदान् अतरान् तरितुमशक्यान् उत्तेरुः उत्तीर्णवन्तः शत्रोर्लवमुच्छेदनं सीतायाश्च विनिश्चयं विनिर्णयम् आशंसवः आशंसनशीलाः आशंसभिच्च उः तरलवौ ऋदोरबिति अप्प्रत्ययान्तौ विनिश्चय इति पचेरित्यप् ॥ ५५ ॥ ज० भ०

भ्रेमुरित्यादि । ते भीमान् भयदान् शिलोच्चयान् पर्वतान् भ्रेमुः तृफलेत्यादिना अतएत्वं खिलोपश्च भ्रमणस्य गतिविशेषत्वात् सकर्मकता शिलाभिरुच्चयो वृद्धिर्येषाम् उच्चीयत इति वा उच्चयस्तु पः शिलाभिरुच्चयः अतरान् अन्यैस्तरितुमशक्यान् नदान् उत्तेरुः तृतरेऽभिभवमुत्याम् कृतोणुः किट्थां शत्रोर्लवं छेदम् आशंसव इच्छवः सीताया विशेष्य निश्चयञ्च आशंसवः सन् भिच्चाशंस उः चितृलूभ्योऽल् ।५५॥ भ०

आदेत्यादि । विषमेष्वपि प्रदेशेषु गमं गमनं चक्रुः आदरेणानवमया महेरित्यप् । असंघसाः त्यक्ताहाराः उपसर्गेद इति अपि घञ्पोश्चेति अदेर्घस्लादेशः । हरीन् सिंहान् सव्यधान् सप्रहारान् व्यधजपोरित्यप् सप्रहारत्वादन्यादान् परित्यक्ताहारान् कुर्वन्तः जौघ चेति

सञ्चेरुः सहसाः केचिदस्वनाः केचिदाटिषुः ।
संयामवन्तो यतिवन्निगदानपरेऽमुचन् ॥ ५७ ॥
अथ क्रमादनिःक्वाणा नराः चीणपणा इव ।
प्रमदाः सेदुरेकस्मिन् नितम्बे निखिला गिरेः ॥ ५८ ॥

निपूर्वाद्दद्देरण्प्रत्ययः तस्मिन्नदेर्न घस्लादेशः चकारादपि तत्र निघसः दिशो व्याप्नुवन्तः सर्वव्यापिनः ॥ ५६ ॥ ज० म०

आदेत्यादि । ते विषमेष्वपि देशेषु गमं चक्रुः रामस्य कार्य्यमित्यादरेण न तु परस्य कार्य्यमित्यवज्ञया कीदृशाः असंघसाः सम्यगाहाररहिताः निरन्तरभ्रमणात् दिशो व्याप्नुवन्तः हरीन् सिंहान् सव्यधान् सप्रहारान् अतएवान्यादान् आहाररहितान् कुर्वन्तः गम अदव्यधिष्वोऽल् घसदः सनृव्यल्घञीति अदेर्घस्लादेशः निपूर्वाददो नाम्नयन्येतिक् चेति णप्रत्ययः घञि तु घस्लादेशाप्रसङ्गात् नेरदोणात्ताविति परः जेमनं लेप आहारो निघसोऽन्याद इत्यपीत्यमरः ॥ ५६ ॥ भ०

सञ्चे इत्यादि । सहसाः सस्मिताः अस्वनास्तूष्णीकाः स्वनहसोर्वेत्यप् यतिवत् संयामवन्तः नियमवन्तः यमः समुपनिविषु चेति घञ् । आटिषुः अटितवन्तः अटेर्लुङि रूपम् अपरे निगदान् वचनान्यमुचन् नौगदेत्यादिना विकल्पेनापो विधानात् घञ् ॥ ५७ ॥ ज० म०

सञ्चेरुरित्यादि । केचिद्वानराः सहसाः सन्तश्चेरुः तृफलेति अतएत्वं खिलोपश्च । केचिदस्वना मौनिनः यतिवत् संयामवन्तः संयमिनः सन्त आटिषुर्गतवन्तः अटगतौ च्लौ सिः अनुस्विद्वेरिति अन उस् । अपरे निगदान् अमुचन् अन्तःस्थितस्य शब्दस्य वहिर्निःसारणं मोचः तं कृतवन्त इत्यर्थः हसस्वननिगदा अलन्ताः संयामो घजन्तः ॥ ५७ ॥ भ०

अथेत्यादि । अथ परिभ्रमणादनन्तरं क्रमेण परिश्रमेण अमदाः गतहर्षाः मदोऽनुपसर्ग इत्यप् अतएव निःक्वाणाः निःशब्दाः क्वणो वीणायाञ्चेत्यपो विकल्पेन घञ् वीणादिविषयमेतत् क्वणेर्निःपूर्वादनुपसर्गाद्वीणादिविषयाच्च विकल्पेनाप्प्रत्यय इत्युक्तम् एकस्मिन् गिरेर्नितम्बे सेदुः विषण्णाः निखिलाः समस्ता वानराः चीणपणा इव अर्थरहिता

ततः ससम्भ्रमास्तत्र निरैक्षन्त पतत्त्रिणः ।
गुहाद्वारेण निर्यातः समजेन पशूनिव ॥ ५९ ॥
वीनामुपसरं दृष्ट्वा तेऽन्योन्योपह्वरा गुहाम् ।
प्राविशन्नाह्वयप्रज्ञा आह्वावमुपलिप्सवः ॥ ६० ॥

नरा इव पण्यन्त इति पणाः व्यवहाराय क्रते पणे व्यवस्थाप्यन्ते नित्यं पणः परिमाणे इत्यप् ॥ ५८ ॥ ज० म०

अथेत्यादि । भ्रमणानन्तरं ते निखिलाः सर्वे वानराः कस्यचिद्गिरेर्नितम्बे श्रेदुर्निषण्णाः कीदृशाः क्रमेण श्रमेण निःकाणा निःशब्दाः असदा हर्षरहिताः चीणपणा नष्टधना इव निःकाणो भजन्तः काणः शब्दमात्रे भजन्तौ समादेरपि वीणाध्वनौ च समादेरेवेति परः समते अभिधानं नियामकमित्युक्तः स एव नियमः क्रमपणमदा अजन्ताः पणयते व्यवह्रियते अनेनेति पणः पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्रहे । क्रयशाकटिकाद्यूतव्यवहारे भृतौ पण इति विश्वः ॥५८॥ भ०

तत इत्यादि । ततो विश्रामानन्तरं ते तत्र तस्मिन् पर्वते पतत्त्रिणः पक्षिणो निरैक्षन्त ईक्षितवन्तः ईक्षेर्लङि रूपं कीदृशान् गुहाद्वारेण निर्यातः निर्गच्छतः निस्पूर्वाद्यातेः शतन्तस्य शसि रूपं ससम्भ्रमाः सहर्षाः प्रमदसम्मदाविति निपातितं समजेन द्वन्द्वेन पशूनिव निर्यातः सङ्घोरजमपशुष्वित्यप् ॥ ५९ ॥ ज० म०

तत इत्यादि । उपवेशानन्तरं ते ससम्भ्रमाः सहर्षाः सन्तस्तत्र पर्वते गुहाद्वारेण निर्यातो निर्गच्छतः पतत्त्रिणः पक्षिणो निरैक्षन्त दृष्टवन्तः समजेन समूहेन निर्गच्छतः पशूनिव तद्वदतिस्थूलानित्यर्थः समदसमजावजन्तौ व्यजोऽरे इत्यादौ अजन्तवर्जनाज्जाज्वेर्व्यादेशः संप्राभ्यां सहोहर्षे समुदग्रामजः पशुसंहप्रेरणयोरजिति परेषां विशेषकृत निःपूर्वाद्दीर्घे यातेः शतः ॥ ५९ ॥ भ०

वीनामित्यादि । वीनां पक्षिणामुपसरं नैरन्तर्येण निर्गमनं दृष्ट्वा उपसर इव उपसरनैरन्तर्यमात्रेणोपलक्षितत्वात् उपसरो हि स्त्रीगवीषु पुङ्गवानामभिगमनमुच्यते स च नैरन्तर्येण भवति प्रजनेसर्त्तेर-

कुर्वन्तो ह्वयमात्मानं पिपासावधकाङ्क्षिणः ।
द्वारं तमोघनप्रख्यं गुहायाः प्राविशन् द्रुतम् ॥ ६१ ॥

त्यप् वानरा अन्योन्योपह्वाः परस्परमाह्वानं येषाम् आगच्छतागच्छत प्रविशाम इति ह्वः संप्रसारणमित्यप् संप्रसारणञ्च गुहां प्राविशन् प्रविष्टवन्त आह्वप्रज्ञाः युद्धप्रज्ञाः आह्वयते युद्धाय स्पर्द्धतेऽनेत्याङि युद्ध इत्यप् संप्रसारणञ्च आहावस्तुपलिम्पन्तः उदकाधारस्तुपलब्धुमिच्छवः निपानमाहाव इति घञि संप्रसारणं निपात्यते वृद्धिरस्यैव अप्-प्रत्यये स्वरवृद्धिः ॥६०॥ ज० म०

वीनामित्यादि । वीनां पक्षिणामुपसरम् उपर्य्यधो गमनं दृष्ट्वा ते वानरा गुहां प्राविशन् कीदृशा अन्योन्यस्य उपह्व आह्वानं येषां ते तथा आहवे युद्धे प्रज्ञाः पण्डिताः अतएव गुहाप्रवेशे निर्भयत्वम् आहावमुदकाधारमुपलब्धुमिच्छवः उपसरोऽस्त्वन्तः अभिधानात् उप-र्य्यधोगमनार्थः उपसरो हि स्त्रीगवीषु पुङ्गवानामभिगमनमुच्यते स चोपर्य्यधोभावेन भवतीत्युपमानादिह उपसरशब्देन उपर्य्यधोगामि-त्वमुच्यते इति केचित् । गर्भग्रहणार्थोपसरणे सर्वैरपीति परमूलं तन्मते उपसरो गर्भार्थं पाश्वधर्माचरणं तच्च बहिर्निःसरतां पक्षिणां सम्भवत्येव ङ्कविहोमेऽदने इत्यस्मादल्घञौ उपसर्गेष्वान्यार्थता परेषां मते ह्वो रूपम् अभ्युपनिविभ्यो ह्वोऽन् ङ्श्चेति तथा आङो युद्धे ह्वोऽल् ङ्श्चेति आङो निपाने ङ्श्चेति तेषां सूत्रत्रयम् ॥ ६० ॥ म०

कुर्वन्नित्यादि । गुहां प्रविश्य तस्याः द्वारमपरं प्राविशन् आत्मानां स्निग्धानां ह्वयमाह्वानं कुर्वन्तः भावेऽनुपसर्गस्येत्यप् संप्रसारणं च पिपासा पातुमिच्छा तस्या वधोऽपनयनं हनश्च वध इत्यप् वधादेशश्च तं काङ्क्षितुं शीलं येषामिति काङ्क्षिमाङ्क्षिकांक्षाया इत्यस्मात् सुप्यजातौ णिनिः इदितो नुम् साधुकारिणि वा कीदृशं द्वारं तमो घनप्रख्यं तमसो घनः मूर्त्तिः काठिन्यं तेन सदृशं मूर्त्तौ घन इति हन्तेरप्-प्रत्ययो घनादेशश्च निपात्यते मूर्त्तिमत्तम इव द्वारमित्यर्थः ॥६१॥ ज०म०

तस्मिन्नन्तर्घणे पश्यन् प्रघाणे सौधसद्मनः ।
लोहोद्घनघनस्कन्धा ललितापघनां स्त्रियम् ॥ ६२ ॥

कुर्वन्त्यादि । ते आप्तानां स्निग्धानां हवमाह्वानं कुर्वन्तो गुहाया द्वारं द्रुतं प्राविशन् कीदृशाः पिपासायास्तृष्णाया वधं हननं काङ्क्षन्तीति ग्रहादित्वात् णिनिः ताच्छील्ये आभीक्ष्ण्ये वा णिनिरिति परः स्वमतेऽपि तदर्थता प्राप्यते यतो णिनिविधायकसूत्रे अर्थविशेषो नोक्तः किन्तु ढचेत्तीत्यादौ अव्ययार्थे णिनिरित्युक्तं तेनाभिधानादर्थविशेषेऽपि णिनिः स्यादिति ज्ञापितं द्वारं कीदृशं तमोघनप्रख्यं तमसो घनेन काठिन्येन प्रख्यं सदृशं मूर्त्तिः काठिन्यमुच्यते तदुपचारात् मूर्त्तिमत्तया इवेत्यर्थः मेघप्रख्यं तमश्च प्राविशन्निति केचित् हवमिति ह्वलिहोमे इत्यस्यालन्तस्य रूपं धातूनामनेकार्थत्वात् आह्वानार्थता ह्वेञोऽल् ह्वश्च भावे नतूपसर्गादिपरः हन्तेरलि हनवधश्चेत्यनेनेति वधादेशः काठिन्यादौ हन्तेरल् घनादेशश्चेति परः स्वमते निपातः ॥ ६१ ॥ म०

तस्मिन्नित्यादि । द्वारमतिक्रम्य यः सावकाशप्रदेशः सोऽन्तर्घण इत्युच्यते तथाह्यन्तर्हन्यते क्रोडीभवत्यस्मिन्निति अनुगतार्थत्वम् अन्तर्घणो देश इत्यन्तः पूर्वाद्धन्तेरप् घनादेशः घणादेशो वा ये णकारं पठन्ति यत्तु संज्ञीभूतो वाह्लीकेषु देशविशेष इत्युक्तं तत्संज्ञाशब्दमाश्रित्य तस्मिन्नन्तरे यत् सौधसद्म धवलगृहं तस्य प्रघाणे एकदेशे प्रघणः प्रघाणश्चेति निपातितं स्त्रियं ललितापघनां ललिताङ्गीमपश्यन् अपघनोऽङ्गमिति निपातनं लोहोद्घनघनस्कन्धाः यस्मिन् स्थापयित्वा काष्ठादीनि संस्क्रियन्ते स उद्घनः आधानं तद्वत् घनः स्कन्धो येषामिति उद्घनोऽत्याधानमिति निपातनम् ॥ ६२ ॥ ज० म०

तस्मिन्नित्यादि । तस्मिन् गुहाभ्यन्तरे अन्तर्घणे द्वारसमीपे सावकाशप्रदेशे यत् सौधसद्म धवलगृहं तस्य प्रघाणे द्वारप्रकोष्ठाभ्यां वहिःप्रदेशे ललितापघनां मनोहरशरीरां स्त्रियं तेऽपश्यन् कीदृशाः लोहोद्घनघनस्कन्धाः यस्मिन् स्थापयित्वा काष्ठादिकं हन्यते स उद्घनः

सा स्तम्बघ्नपदन्यासान् विघनेन्दुसमद्युतिः ।
परिघोरुभुजानाह हसन्ती स्वागतं कपीन् ॥ ६२ ॥

दोहस्य य उद्घनस्तद्वद्घनो निविड़ः स्कन्धो येषां ते तथा दोहवदुद्घनः काष्ठविशेष इत्यन्ये । परमते चान्तर्हन्यते यस्मिन्नित्यन्तर्घणोऽभ्यन्तरदेश उच्यते अन्तरोहन्तेरपि देशे घनादेशः विभाषया णत्वं स्वमते मूर्द्धन्यान्तत्वे घणोऽपि रूपं दन्त्यान्तत्वे तु हन्तेर्निपातः । परमते प्रकृष्टं हन्यते गम्यतेऽस्मिन्निति प्रघाणः प्रादुरन्तर्हद्वारवाह्यपिण्डके हन्तेर्घञलौ घनादेशश्च पूर्वपदस्थान्निमित्तात् संज्ञायां णत्वं स्वमते घणो घञि रूपं प्रघाणप्रघणालिन्दावहिर्द्वारप्रकोष्ठके इत्यमरः । परमते ऊर्द्ध्वं हन्यते यस्मिन् स उद्घनः उदः प्रतिकाष्ठके हन्तेरल् घणादेशश्च स्वमते निपातः निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घन इत्यमरकोषे काष्ठ इत्युपलक्षणं घनः पूर्ववत् परमतेऽपहन्यतेऽनेनेत्यपघनो देहः अपाङ्गे हन्तेरल् घनादेशश्च स्वमते निपातः वस्तुतः अन्तर्घणादयो रूढ़ाः व्युत्पत्तिस्तु यथाकथञ्चिदेव ॥ ६२ ॥ भ०

सा स्तम्बेत्यादि । सा स्त्री हसन्ती कपीन् स्वागतं वच आह कीदृशी विघनेन्दुसमद्युतिः विहन्यते अभिभूयते अन्या द्युतिर्येन स विघनः करणेऽयोविद्रुष्विति अप् घनादेशश्च स चेन्दुश्चेति सः तत्समा द्युतिर्यस्याः स्तम्बो हन्यते येन पादन्यासेन स स्तम्बघ्नः तृणकाष्ठादिः स्तम्बेकच इति करणे कः गमहनेत्युपधालोपः तादृशः पादन्यासो येषां कपीनामिति परिहन्यते येन परौघ इत्यप् घादेशश्च परिघोऽर्गलः तदनुकारिणो विपुला बाहवो येषामिति ॥ ६२ ॥ ज० म०

सेत्यादि । सा हसन्ती स्वागतमिति कपीनाह कीदृशान् स्तम्बघ्नपदन्यासान् स्तम्बो हन्यते तृणकाष्ठादिकमुपमर्द्यते येन तादृशः पदन्यासो येषां तान् हनचरगष्टणिति कर्त्तरि विहितष्टक् तयोः कभाव इति अन्यत्र दृश्यते घेऽपि न चेति हनगमित्युङ्लोपे हनोक्तोघ्नः स्तम्बघ्नस्य स्तम्बघनः स्तम्बो येन निहन्यते । स्तम्बो गुच्छस्तृणादिन इत्यमरः । परिघवदुरवो विपुला भुजा येषां परिघोऽस्त्रविशेषः परमते

पिप्रायाद्रिगुहोपघ्नानुद्घान् सङ्घसमागतान् ।
फलैर्नानारसैश्चित्रैः स्वादुशीतैश्च वारिभिः ॥ ६४ ॥
निघानिघतरुच्छन्ने तस्मिंस्ते लब्धिमैः फलैः ।
तृप्तास्तां भ्राजथुमतीं पप्रच्छुः कस्य पूरियम् ॥ ६५ ॥

परिहन्यतेऽनेनेति हन्तेर्डान्तस्य रूपं हुड्शब्दोऽयं सा कीदृशी विघनेन्दु-समद्युतिः विगतो घनो मेघो यस्मात् तादृशस्य शरत्कालीनस्य चन्द्र-स्येव दीप्तिर्यस्याः परमते हन्तेरल् मेघे घनादेशश्च स्वमते निपातः ॥ ६३ ॥ भ०

पिप्रेत्यादि । तान् विविधैः फलैर्वारिभिश्च पिप्राय तर्पितवती अद्रिगुहोपघ्नान् अद्रिगुहैव उपघ्न आश्रयो येषां कपीनाम् उपघ्न आश्रय इत्यप् उपधालोपश्च निपात्यते सङ्घसमागतान् समूहेनागतान् उद्घान् प्रशस्तान् संघोद्घौ गणप्रशंसयोरिति समुदोरुपपदयोः हन्तेरपि टिलोपश्च निपात्यते ॥ ६४ ॥ ज० म०

पिप्रेत्यादि । सा फलैर्वारिभिश्च तान् पिप्राय तर्पितवती कीदृशान् अद्रिगुहा उपघ्न आश्रयो येषां तान् उपादाश्रये हन्तेरल् घ्नश्चेति परः स्वमते हनचरगष्टगित्यस्य डड्डोः कभाव इत्यन्यत्र प्रवृत्तिः अभि-धानादाश्रयार्थता स्यादुपघ्नोऽन्तिकाश्रय इत्यमरः । उद्घान् प्रशस्तान् परमते ऊर्द्ध्वं हन्यते ज्ञायत इति उद्घः प्रशस्ते हन्तेरल् घादेशश्च स्वमते हनजनादित्यस्य डड्डोः कभाव इत्यन्यत्र प्रवृत्तेर्गमादित्वात् घत्वोऽः सङ्घेन समूहेनागतान् संहननं संहन्यते वाऽस्मिन्निति समो हन्तेरल् समूहे घादेशश्चेति परः स्वमते उद्घवत्फलैः कीदृशैः नानारसैः नानाविधरसयुक्तैः चित्रैरद्भुतैः वारिभिः कीदृशैः स्वादुशीतैः मधु-रशीतलैः ॥ ६४ ॥ भ०

निघेत्यादि । तस्मिन् प्रघणे निघानिघैर्निमित्तानिमित्तैस्तरुभिः छन्ने निघो निमित्तमिति निपूर्वाद्धन्तेरपि टिलोपे निपात्यते समा-रोहपरिणाहाभ्यां निमित्तमित्युच्यते ते कपयः लब्धिमैर्लाभनिर्वृत्तैः द्वितः क्त्रिः, फलैस्तृप्ताः सन्तस्तां स्त्रियं भ्राजथुमतीं शोभावतीं पप्रच्छुः

रत्नं करोषि कस्मात्त्वं यत्नेनाख्यायतां शुभे !।
स्वप्ने निधिवदाभाति तव सन्दर्शनं हि नः॥ ६६ ॥
ततो जलधिगम्भीरान् वानरान् प्रत्युवाच सा।
इयं दानवराजस्य पूः सृष्टिर्विश्वकर्मणः॥ ६७॥

पृष्टवन्तः कस्येयं पूरिति क्वितोऽप्युच् तदन्तान्मतुप्॥ ६५॥ ज० म०

निघेत्यादि। तस्मिन् सौधसद्मनः प्रघाणे ते वानरास्तां पप्रच्छुः तस्मिन् कीदृशे निघानिघैर्दैर्घ्यविस्ताराभ्यां तुल्यातुल्यैस्तरुभिर्वृक्षैस्वस्मै व्याप्तते परमते निःशेषेण छन्यन्ते मायन्ते इति नेस्तुल्यारोहपरिणाहे हन्तेर्डौ घादेशश्च समते घणो रूपं विष्वक्समेनिघ इत्यमरः। ते कीदृशाः खड्गिमैर्लाभेन निर्वृत्तैः फलैस्तृप्ताः लभजोङ्ग्पप्राप्तौ क्वितस्तज्ञे त्रिमक् ढभान्तयोर्धः तां कीदृशीं भ्राजयुमतीं शोभावतीं टुभ्राजृन्दीप्तौ क्वितोऽप्युभांवे किं पप्रच्छुरित्याह कस्येयं पूरिति अग्रिमश्लोकेनाप्यन्वयः॥ ६५॥ म०

रत्नमित्यादि। हे शुभे ! कस्माद्वा रत्नं रचां करोषि एतद्यत्नेनादरेण नोऽस्माकमाख्यायताम् उभयत्रापि यजयाचेति नङ् यस्मात् स्वप्ने निधिवत् निधिरिव तव सन्दर्शनमाभाति नोऽस्माकमतिदुर्लभत्वात् स्वप्न इति स्वपो नन् निधिरिति उपसर्गे घोः किः॥६६॥ज०म०

रत्नमित्यादि। हे शुभे! कस्माद्वा तं रत्नं रचां करोषि अर्थात् पूर्याः एतत् यत्नेनादरेणाख्यायतां कथ्यतां हि यस्मात् स्वप्ने निधिरिव तव सन्दर्शनम् अतिदुर्लभत्वान्नोऽस्माकमाभाति अतः पूर्वमननुभूतत्वात् एवं पृच्छाम इति भावः। स्वपरचयतेत्यादिना सर्वत्र नङ्रचेर्णत्वं निधिरिति किर्दोऽन्तर्गैरिति किः उस्येचोत्यालोपः॥ ६६॥ म०

तत इत्यादि। ततस्तस्मादनन्तरं सा प्रत्युवाच जलं धीयते अस्मिन्निति अधिकरणे चेति किः जलधिः समुद्रः तद्वद्गम्भीरानक्षोभ्यत्वात् इयं पूः दानवराजस्य विश्वकर्मणः सृष्टिः सृज्यत इति सृष्टिः कर्मणि स्त्रियां क्तिन्। इतः स्त्रीलिङ्गमधिकृत्योच्यते॥ ६७॥ ज० म०

निहतस्य स्थितिं भिन्दन् दानवोऽसौ बलद्विषा ।
दुहिता मेरुसावर्णेरहं नाम्ना स्वयम्प्रभा ॥ ६८ ॥
जूतिमिच्छथ चेत्तूर्णं कीर्त्तिं वा पातुमात्मनः ।
करोमि वो बहिर्यूतीन् पिधध्वं पाणिभिर्दृशः ॥ ६९ ॥

तत इत्यादि । तदनन्तरं सा वानरान् प्रत्युवाच कीदृशान् जलधिवत् गम्भीरान् अक्षोभ्यान् जलानि धीयन्तेऽत्रेति डाञ् इति किः किं प्रत्युवाचेत्याह दानवराजस्य इयं पूः विश्वकर्मणः सृष्टिः पूर्वं कस्य पूरिति स्वामिनः कर्त्तुश्च प्रश्न इत्युभयमुक्तं सृज्यत इति क्तिः क्तिच्यूषे इति कर्मणि स्त्रियां क्तिः । इतः स्त्रीमदधिकारः ॥ ६७ ॥ भ०

निहेत्यादि । असौ दानवराजः स्थितिं मर्य्यादां भिन्दन् स्थागापापचोभाव इति क्तिन् बलद्विषा इन्द्रेण निहतः यस्य चाहं दुहिता स पिता नाम्ना मेरुसावर्णिः अहञ्च नाम्ना स्वयंप्रभेति ॥६८॥ज०स०

निहेत्यादि । बलद्विषा इन्द्रेण असौ दानवराजो निहतः यतः स्थितिं मर्य्यादां भिन्दन् त्यजन् अहं मेरुसावर्णिनाम्नो दुहिता कन्या च स्वयंप्रभा पितुरात्मनश्च प्रसिद्धनामोत्कीर्त्तनेन दानववधानन्तरमिन्द्रेणाहमिह नियुक्तेति किंवदन्ती सूचिता तिष्ठतेः क्तिः दोषोमास्यामिति इः मर्य्यादा धारणा स्थितिरित्यमरः । स्वयंप्रभेति स्वयं प्रभाति शोभत इति अतोऽन्तः अकेरिति ङः स्वयमात्मना प्रभा यस्या इति वा ॥ ६८ ॥ भ०

जूतिमित्यादि । यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ कीर्त्तिं वा आत्मनः पातुं रक्षितुं वः युष्मान् बहिर्यूतीन् बहिर्भूतान् ऊतियूतीत्यादिना निपातितः तत्र यौतेर्जवतेश्च क्तिन् दीर्घत्वञ्च निपात्यते कीर्त्तिरपि कृतसंशब्दने स्वार्थिको णिच् उपधायाश्चेतीत्वं तस्मात् क्तिन् अतः पाणिभिः दृशो दृष्टीः पिधध्वं छादयध्वम् अपिपूर्वाद्धाञो लोटि द्विवचने दधस्तथोश्चेति अभ्यासस्य भष्भावे श्नाभ्यस्तयोरित्याकारलोपे झलां जश्झशीति धातोर्दकारे वष्टि भागुरिरित्यपसर्गाकारलोपे च रूपम् ॥ ६९ ॥ ज० म०

व्रज्यावती निरुद्धाचान् विद्येवानुष्ठितक्रियान् ।
निरचिक्रमदिच्छातो वानरांश्चङ्क्रमावतः ॥ ७० ॥

जूतिमित्यादि । यूयं चेत् यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ प्रभुकार्यं कृत्वा आत्मनश्च कीर्त्तिं मातुं रचितुमिच्छथ तदा पाणिभिर्हस्तैर्दृशश्चक्षूंषि पिधध्वम् आच्छादयत ततोऽहं वो युष्मान् बहिर्यूतीन् बहिर्देशे यूतिर्मिश्रणं येषां तादृशान् बहिर्गतानित्यर्थः जुगत्यां युञ्मिश्रणे सातिहेतीति जूतियूती भावक्त्यन्ते निपात्येते कृत्कुसंशब्दे क्वित्त्वाच्चुरादिः कीर्त्यते येति कर्मणि क्तिः कीर्त्तलत इति कीर्त्तादेशः ञेर्लोपः अपिपूर्वात् धाञो गीर्ध्व भ्वादीरेद्धिः खेर्दत्वं स्नाद्व्योरित्यालोपः भ्भाल्खेति खेर्दस्य धत्वं भ्रूपुभसोरिति मूलधातोर्दत्वं वातोर्दत्वं वातोऽवाप्योरिति पक्षे अपेरतो लुक् ॥ ६९ ॥ भ०

व्रज्येत्यादि । सा व्रज्यावती प्रशस्तगमनवती व्रजजयोर्भावे क्यप् प्रशंसायां मतुप् वानरान्निरुद्धाचान् निरचिक्रमत् निष्कासितवती क्रमेर्ण्यन्तस्य लुङि सन्वल्लघुनीति सन्वद्भावात् सन्यत इतीत्वं दीर्घो लघोरिति न दीर्घत्वं संयोगपरस्य गुरुत्वात् अनुष्ठितक्रियानाचरिततदुपदिष्टव्यापारान् क्रमः शचेति शः सार्वधातुके यक् रिङादेशस्य चङ्क्रमावतः कुटिलगतिमतः अः प्रत्ययादित्यकारः इच्छात इति वानराणामिच्छायाः इच्छेति निपातितम् इषेः शप्प्रत्ययः छभावश्च निपात्यते विद्यासंज्ञायामिति क्यप् यथा विद्या अनुष्ठितक्रियान् कृतपुरश्चरणान् पुरुषानिच्छातोऽभीष्टं सम्पादयति तद्वत् सेति ॥ ७० ॥ ज० म०

व्रज्येत्यादि । सा व्रज्यावती प्रशस्तगतिमती वानरानिच्छातो निरचिक्रमत् निष्कामयामास यथा विद्या तत्त्वज्ञानम् इच्छातः अनुष्ठितक्रियान् विहितध्यानधारणादीन् संसारान्निष्क्रामयति तद्वत् वानरानपि अनुष्ठितक्रियान् आचरिततदुपदिष्टव्यापारान् यतो निरुद्धाचान् आच्छादितदृशः सकृष्यक्षणः षः साङ्ग इति षः पक्षे जितेन्द्रियान् अक्षशब्द इन्द्रियवचनः चंक्रमावतः अस्वकारे कुटिलगतियुक्तान् पक्षे तीर्थादिचंक्रमणकारिणः व्रज गतौ भीव्रजयजविदेत्या-

निष्क्रम्य शिक्षया तस्यास्त्रपावन्तो रसातलात्।
ज्ञात्वा मासमतिक्रान्तं व्यथामवललम्बिरे ॥ ७१ ॥
चिन्तावन्तः कथाञ्चक्रुरुपधाभेदभीरवः।
अज्ञात्वा नृपतेः कार्य्यं पूजां लप्स्यामहे कथम् ॥ ७२ ॥

दिना क्यप् ततोऽस्त्यर्थे प्रशंसायां वतुः विदन्ताने पूर्ववत् क्यप् क्रियत इति क्रिया कुः शक्नेति शः कृद्भिः ग्रुध्योरितीयः क्रमेर्ज्ञन्तात् जिघ्निद्रुस्नु इत्यङ् खेःसन्वत् स्वस्येत् खः स्वेरुरिति गुरुत्वान्न दीर्घः इषु इच्छायां तवेच्छेत्यादिना निपातः क्रमेर्यङन्तात् शंस्यादः यङो लुक् ततो वतुः ॥ ७० ॥ भ०

निष्क्रेत्यादि। तस्याः शिक्षया उपदेशेन गुरोश्च इव इत्यकारः तस्माद्रसातलान्निष्क्रम्य निर्गत्य त्रपावन्तः स्त्रिया उपदेशेन निष्क्रान्ता वयमिति त्रपेति षिद्भिदादिभ्योऽङ् मासमतिक्रान्तं ज्ञात्वा वहिर्निर्गताः सन्तः व्यथां भयं भिदादित्वादङ् अवललम्बिरे वयं मासावधिना प्रेषिताः स च मासो विनैव कार्य्येणातिक्रान्त इति स्वामिनो भयम् ॥ ७१ ॥ ज० भ०

निष्क्रेत्यादि। तस्याः स्वयम्प्रभायाः शिक्षया उपदेशेन रसातलात् निष्क्रम्य स्वयं निर्गमाशक्तत्वात् त्रपावन्तो लज्जायुक्ताः सन्तः राज्ञा अवधित्वेन निश्चितं मासम् अतिक्रान्तं ज्ञात्वा ते व्यथां राज्ञः सकाशाद्भयम् अवललम्बिरे प्रापुः शिक्षेः शेषक्तात् सरोरिति अप्रत्ययः त्रपूषङ् लज्जायां षित्त्वात् भीषिचिन्तिपूजीत्यादिना ङः व्यथषङ्दुःखे चाले भये घटादित्वात् पूर्वेण ङः यद्यपि कविकल्पद्रुमे घटादेः सानुबन्धत्वं दृश्यते तथापि पूर्वाचार्य्यक्रमदर्शनात् मुग्धबोधस्य कविकल्पद्रुमात् प्राक्कृतत्वेन भीषिचिन्तीत्यादौ आत्वर्घटादेरित्यस्य न वैयर्थ्यं रुजामिति पाठे तेनैव भिदादित्वात् ङः ॥ ७१ ॥ भ०

चिन्तेत्यादि। उपधानमुपधा परीक्षा आतश्चोपसर्गे इत्यङ् तत्परिशुद्धो हि भृत्यः कार्य्येषु नियुज्यते तदकरणादुपधाया भेदोऽभावः तस्माद्भीरवः चिन्तावन्त इति कर्त्तव्यतामूढाः कथां चक्रुः कृतवन्तः

प्रायोपासनया शान्तिं मन्वानो वालिसम्भवः ।
युक्त्वा योगं स्थितः शैले विवृखंश्चित्तवेदनाम् ॥ ७३ ॥
प्रस्कन्दिकामिव प्राप्तो ध्यात्वा ब्रूते स्म जाम्बवान् ।
धिक् शालभञ्जिकाप्रख्यान् विषयान् कल्पनारुचीन् ॥ ७४ ॥

कीदृशीमित्याह अकृत्वा नृपतेः कार्य्यं पूजां लप्स्यामहे कथमिति नैवेत्यर्थः चिन्तादयः चिन्तिपूजीत्यादिना अङन्ताः ॥ ७२ ॥ ज० म०

चिन्तेत्यादि । नृपतेः कार्य्यम् अकृत्वा कथं वयं पूजां लप्स्यामहे अपि तु अवज्ञाता एव भविष्याम इति कथां ते चक्रुः कीदृशाः उपधाभेदभीरवः राज्ञा धर्मादिभिर्भृत्यानां या परीक्षा क्रियते सोपधा तस्याभेदः कार्य्यासामर्थ्येन भङ्गः तद्भीरवः अतएव चिन्तावन्तः चिन्ति-कथिपूजिभ्यो भीषिचिन्तीत्यादिना ङः उपपूर्वात् धाञ आतोऽन्तः अङ्गेरिति ङः उपधाधर्माद्यैर्यत्परीक्षणमित्यमरः ॥ ७२ ॥ भ०

प्राय इत्यादि । उपासनेति ण्यासश्रन्थो युच् प्रायेण उपवासेनो-पासना अनशनेनासनमित्यर्थः तया शान्तिं कल्याणं मन्वानोऽवगच्छन् उपायान्तराभावात् वालिसम्भवोऽङ्गदः योगश्चित्तवृत्तिनिरोधः तं युक्त्वा संबध्य शैले स्थितः चित्तवेदनां चित्तपीड़ां विवृखन् घट्टिविदि-वन्दिभ्यो युच्वक्तव्य इति युच् ॥ ७३ ॥ ज० म०

प्राय इत्यादि । वालिसम्भवोऽङ्गदो योगं चित्तवृत्तिनिरोधं युक्त्वा आत्मना सह संबध्य शैले स्थितः किं कुर्वन् प्रायेण उपवासेन उपासनया स्थित्या तस्य सेवया वा तदाचरणरूपया शान्तिं कल्याणं मरणं वा मन्वानः मन्यमानः प्रायस्यानशने मृत्यौ तुल्यबाहुल्ययो-रपि । शान्तिः शमेऽपि कल्याणे इति च विश्वः । जिलासङ् उपवेशे उपपूर्वोऽयं सेवायामपि शीघिश्रन्थिघन्वीत्यादिना अनः चित्तवेदनां मनःपीड़ां विवृण्वन् प्रकाशयन् विदेः पूर्वेण अनः ॥ ७३ ॥ भ०

प्रस्केत्यादि । त्वया का क्रिया कर्त्तव्येत्यन्यैः पृष्टः सन् जाम्बवान् ध्यात्वा विचिन्त्य ब्रूते स्म प्रस्कन्दिकामिव रोगविशेषमिव प्राप्तो यातः उत्साहाभावात् रोगाख्यायां ण्वुल् बहुलं शालभञ्जिका क्रीड़ाविशेषः

यां कारिं राजपुत्रोऽयमनुतिष्ठति तां क्रियाम् ।
अहमप्यनुतिष्ठामि सोऽप्युक्त्वैवमुपाविशत् ॥ ७५ ॥
उवाच मारुतिर्वृद्धे सम्यासिन्यथ वानरान् ।
अहं पर्य्यायसंप्राप्तां कुर्वे प्रायोपवेशिकाम् ॥ ७६ ॥

संज्ञायामिति ण्वुल् नित्यं क्रीड़ेत्यादिना सः तत्प्रख्या विषया रूपादयः अतितुच्छत्वात् अतस्तान् धिक् किन्तु कल्पनारचीन् कल्पनीयान् ॥ ७४ ॥ ज० म०

प्रच्छेत्यादि । त्वया किं कार्य्यमित्यन्यैः पृष्टो जाम्बवान् ऋच्चपतिर्ध्यात्वा ब्रूते स्म उक्तवान् प्रच्छन्दिका वमथरोगं प्राप्त इव उत्साहाभावात् च्छन्दिरग्रोषणे गत्यां नाम्नत्रन्ये तिक् चेति रोगार्थे चकः स्त्रीत्वमभिधानात् काप्यतायोरिति अत इत्वं किं ब्रूते स्म इत्याह विषयान् रूपादीन् धिक् यतः शालभञ्जिका नागरक्रीड़ाविशेषस्तत्तुल्यान् भनृजोधौमोटने प्रच्छन्दिकावत् संज्ञायां चकः तुल्यत्वमाह कल्पनया विकल्पवशेन पचे स्वयं रचनया रुचिरभिलाषो यत्र तान् एतेन सर्वेषां काल्पनिकत्वमिति वेदान्तमतं दर्शितं लमेर्जंत्रन्तात् जीविपन्योति अनः लपः लृपः ॥ ७४ ॥ भ०

यामित्यादि । अयं राजपुत्रोऽङ्गदो यां कारिं क्रियामनुतिष्ठति तां क्रियाम् अहमप्यनुतिष्ठामि विभाषाख्यानपरिप्रश्नयोरिञ्चेति करोतेरिञ् पचे कञः श चेति शः सोऽप्येवमुक्त्वा उपाविशत् अनशनेन स्थितः । ७५ ॥ ज० म०

याङ्गेत्यादि । विषयाणां काल्पनिकत्वेन जीवनं विफलमिति यां कारिं क्रियाम् अयं राजपुत्रोऽङ्गदोऽनुतिष्ठति करोति अहमपि तां क्रियां प्रायोपासनाम् अनुतिष्ठामि इत्युक्त्वा सोऽपि जाम्बवान् उपाविशत् अनशने स्थितः कञः प्रश्नाख्याने निरिति निः ॥ ७५ ॥ भ०

उवाचेत्यादि । मारुतिर्वानरानुवाच वृद्धे जाम्बवति सम्यासिनि अनशनवति अहमपत्र शैले पर्य्यायेण परिपाट्या समाप्तां प्रायोपवेशिकाम् अनशनं कुर्वे पर्य्यायार्हैत्यादिना ण्वुल् ॥ ७६ ॥ ज० म०

अभावे भवतां योऽस्मिन् जीवेत्तस्यास्त्वजीवनिः ।
इत्युक्त्वा सर्वं एवास्थुर्बद्ध्वा योगासनानि ते ॥ ७७ ॥
अक्लेश्यमसिनारन्यत्नं कबन्धवधमभ्यधुः ।
धिङ्नः प्रपतनं घोरं क्लेदान्तत्वमनाथवत् ॥ ७८ ॥

उवाचेत्यादि। मारुतिर्हनूमान् वानरान् उवाच किमुवाचेत्याह अत्र जाम्बवति इह सन्यासिनि लङ्काद्वारे सति अहमपि पर्य्यायेण क्रमेण प्राप्तां प्रायेण उपवासेन उपवेशिकां स्थितिं कुर्वे प्रायः स्याद् भोजनत्यागः सन्यासोऽनशनं स्मृतमिति हलायुधः । उपपूर्वाद्विशेः पर्य्यायेण क इति परः स्मरते त्वभावेत्यादौ स्त्र्यणक इत्यनेन स्त्रियां भावे यकः स्यादिति ज्ञापितम् ॥ ७६ ॥ भ०

अभाव इत्यादि । अभावे विनाशे भवतां योऽस्मिन् लोके जीवेत् तस्यास्त्वजीवनिः धिग्जीवितम् आक्रोशे नञ्यनिः एवमुक्त्वा सर्व एव अस्थुः स्थिताः तिष्ठतेर्गातिस्थेति सिचो लुक् बद्ध्वा योगासनानि विरचय्य पद्मासनादीनि ॥ ७७ ॥ ज० म०

अभाव इत्यादि। भवतामभावे विनाशेऽस्मिन् लोके यो जीवेत् तस्याजीवनिर्मरणं धिग्जीवनं वास्तु नञोऽन्याक्रोशे स्त्रीति अनिः । इत्युक्त्वा सर्वं एव ते वानरा योगासनानि पद्मासनानि बद्ध्वा तस्थुः तिष्ठतेर्गा भूस्थेति सेर्लुक् अन उस् उस्येचीत्यालोपः ॥ ७७ ॥ भ०

अक्ल इत्यादि। इतः स्त्रीलिङ्गभावं निवर्त्य कद्दराह्रियते। कबन्धवधं योजनबाहोर्वधमभ्यधुः अभिहितवन्तः अभिपूर्वो धाञभिधाने वर्त्तते । कीदृशम् अक्लेश्यं प्रयासरहितं कस्मात् खसिना सुखमरणात् तस्मान्न्यत्नम् अन्ते तस्माच्चिरभूत् अस्माकं धिक् प्रपतनं विनाशं दुःखेन घोरत्वात् क्लेदान्तत्वम् अन्ते पूतीभावत्वयतास्ति अर्श आदित्वादच् अनाथवत् अनाथानामिव अक्लेश्यप्रपतनशब्दौ भावसाधनौ कृत्यल्युटो बहुलमिति ॥ ७८ ॥ ज० म०

स्त्रीलिङ्गकृदधिकारं निवर्त्त्य कदुच्यते। अक्लेश्यमित्यादि । ते कबन्धस्य योजनबाहोर्वधं मरणम् अभ्यधुः उक्तवन्तः अभिपूर्वधाञ्जद्ध्यां

ततो मन्दगतः पक्षी तेषां प्रायोपवेशनम्।
अशनीयमिवाशंसुर्महानायादशोभनः॥ ७९॥

रूपम् अस्तुरितिवत् कीदृशम्। असिना खड्गेन क्लेशजनकं खड्गेन शीघ्रहननात् नातिदुःखदमित्यर्थः अत्यन्तं दाहेन अग्नेरन्तोऽवसानं यत्र अतएव परकालेऽपि न दुःखदमिति भावः। अनाथवत् नाथरहितानामिव नोऽस्माकं प्रपतनं मरणं धिक् इत्यन्वयधुरिति सम्बन्धः यतो घोरम् उदवासदुःखबाहुल्यात् क्लेदान्तत्वं दाहाभावात् क्लेद एवान्तो यस्य तस्य भावः क्लेदान्तत्वं तद्विद्यतेऽस्येति अर्श आदित्वादः क्लेदसान्तत्कं यत्रेति वा क्लेदमन्तभूतं त्वचति संछणोतीति ममादित्वाडुः इति वा अस्माकं प्रपतनं क्लेदान्तवच्चेत्यु भयं धिक् घोरत्वादिह परत्र चेति केचित् न क्लिश्नातीत्यक्लेश्यः हलश्चासोरिति दभावविहितो घ्यञ् लक्लोः कभाव इत्युक्तेरत्र कर्त्तरि स्यात् यद्वा क्लेश्यं क्लेशः भावे घ्यण् न विद्यते क्लेश्यं यत्रेति विग्रहः प्रपतनमिति भावे सञ्जवनटोऽघे इत्यनट्॥ ७८॥ म०

तत इत्यादि। ततोऽभिहितानन्तरं महान् पक्षी सम्पातिनामा जटायुभ्राता आयात् आगतः मन्दगतो मन्दगमनः नपुंसके भावे क्तः आहिताग्नित्वात् परनिपातः। तेषां यत् प्रायोपवेशनं तदशनीयमिव भोजनीयमिव कृत्यल्युटो बहुलमिति कृत्यः। आशंसुः आशंसनशीलः अशोभनः शोभारहितः दावाग्निना मुष्टशरीरत्वात् ल्युडेति भावे ल्युट् कर्मणि च येनेत्येतत्परिहृत्योदाहृतत्वात्॥ ७९॥ ज० म०

तत इत्यादि। तदनन्तरं महान् पक्षी सम्पातिनामा तत्रायात् आगतः यातेर्ष्या रूपम्। कीदृशः मन्दगतः मन्दं गतं गमनं यस्य गमेर्भावे क्तः। तेषां वानराणां यत् प्रायोपवेशनं तत् अशनीयमिव खाद्यमिव तृप्तिजनकत्वात् आशंसुः आशंसनशीलः भावेऽनट् अनीयस्य कलोः कभाव इत्युक्तेः करणे वानीयः। तदा अशनीयं भोजनसाधनम् अशोभनः शोभारहितः सूर्यतेजसा दग्धपक्षत्वात् नन्द्यादित्वात् कर्त्तरि अनः। न विद्यते शोभनं यस्येति वा भावेऽनट्॥ ७९॥ म०

देहव्रश्चनतुण्डाग्रं तं विलोक्याशुभाकरम् ।
पापगोचरमात्मानमशोचन् वानरा मुहुः ॥ ८० ॥
जटायुः पुण्यकृत् पक्षी दण्डकारण्यसञ्चरः ।
कृत्वा राघवकार्य्यं यः स्वरारूढोऽग्निसंस्कृतः ॥ ८१ ॥

देहेत्यादि । वृश्च्यते येन तुण्डाग्रेण करणाधिकरणयोश्चेति करणे ल्युट् देहस्य व्रश्चनमिति तद्योगात् षष्ठी देहव्रश्चनं तुण्डाग्रं यस्य तं विलोक्य वानरा अशुभाकरं पापस्योत्पत्तिस्थानम् आकर इवा-करः पुंसि संज्ञायां घः तत्र हि करणाधिकरणयोरिति वर्त्तते एवम् उत्तरत्रापि चात्मानं पापगोचरं पापविषयं पापविषये पतिता वय-मिति मुहुरशोचन् शोचितवन्तः गोचरसञ्चरेत्यधिकरणे निपातितः ॥ ८० ॥ ज० म०

देहेत्यादि । तं पक्षिणं विलोक्य वानराः पापगोचरं पापविषय-मात्मानं मुहुर्वारंवारम् अशोचन् पापविषयो मदात्मेति सर्वे ऊचु-रित्यर्थः कीदृशं पक्षिणं देहव्रश्चनतुण्डाग्रं वृश्चति अनेनेति व्रश्चनं करणेऽनट् देहस्य व्रश्चनं तुण्डाग्रं यस्य तं यद्वा देहं वृश्चति छिनत्तीति देहव्रश्चनं कभावेऽमी इति वचनात् कर्त्तरि अनट् नन्द्यादित्वाद्वा अनः । अशुभाकरम् अशुभस्य पापस्य आकरमुत्पत्तिस्थानम् आकुर्वन्त्यस्मिन्निति संज्ञायामल् गावश्चरन्त्यस्मिन्निति गोचरोऽनन्तः स्वाभावात् प्रत्यासत्ति-वाची ॥ ८० ॥ भ०

जटेत्यादि । कृत्वा राघवकार्य्यम् अग्निसंस्कृतः अग्निना कृतसंस्कारः सः स्वर्गमारूढः जटायुः पुण्यकृत् सञ्चरत्यस्मिन्निति सञ्चरः पूर्ववत् निपातितः । दण्डकारण्यं सञ्चरोऽवस्थानं यस्येति ॥ ८१ ॥ ज० म०

जटेत्यादि । जटायुः पक्षी पुण्यकृत् पुण्यं कृतवान् सुकर्मेति किप् तस्य तन् । कीदृशः दण्डकारण्यं सञ्चरः स्थानं यस्य स तथा सञ्चरत्यस्मिन्नित्याधारेऽल् । यो राघवकार्य्यं सीताहरणविज्ञापनादिकं कृत्वा अग्निना संस्कृतः कृतसंस्कारः सन् स्वः स्वर्गमारूढः गत्यर्थाद्-

नरकस्यावतारोऽयं प्रत्यक्षोऽस्माकमागतः।
अचेष्टा यदिहान्यायादनेनात्स्यामहे वयम् ॥ ८२ ॥

हृदयोदङ्कसंस्थानं कृतान्तानायसन्निभम्।
शरीराखनतुण्डाग्रं प्राप्यामुं शर्म दुर्लभम् ॥ ८३ ॥

त्यादिना रुहेः कर्त्तरि क्तः हो ढः ढमादिति धः ष्टुभिरिति ढः ढ्रोढ्रीति ढलुक् दीर्घश्च ॥ ८१ ॥ भ०

नरेत्यादि। अवतीर्य्यते येन कर्मणेति अवेस्तृस्त्रोर्घञ् स एवायं नरकस्यावतारः प्रत्यक्षोऽस्माकमागतः यद्यस्मादयमचेष्टाः निश्चलाः अनेन पक्षिणा अन्यायादयुक्त्या नीयते अनेनेति निपूर्वादिणः अध्याय-न्यायेति निपातनात् घञ् अत्स्यामहे भक्षयिष्यामहे कर्मणि लृट् ॥ ८२ ॥ ज० म०

नरेत्यादि। नरकमवतरति येनाधर्मेण स एव प्रत्यक्ष इन्द्रिय-ग्राह्योऽयं पक्षिरूपोऽस्माकमागतः रूपकालङ्कारो वा पक्षिविशेषणं वा अवपूर्वात्तरतेः करणे घञ् नरकस्येति कर्मणि षष्ठी यद्यस्मात् इह प्रदेशे अनेन पक्षिणा अन्यायादनौचित्यादयुक्त्या वा वयमत्स्यामहे भक्षणीयाः यतोऽचेष्टारहिताः नीयतेऽनेनेति न्यायः निपूर्वादिणः करणे घञ् अदः कर्मणि लृट् ॥ ८२ ॥ भ०

हृदेत्यादि। अमुं पक्षिणं प्राप्य कीदृशं हृदयोदङ्कसंस्थानम् उदङ्च्यते आकृष्यते अनेनेति उत्पूर्वादञ्चतेरुदङ्कोदक इति घञ् निपात्यते हृदयस्योदङ्कः संदंशः तत्संस्थानं तत्सदृशं कृतान्तानायसन्निभं यमजालतुल्यं तत्प्रविष्टस्य दुःखेन निर्गमत्वात् आनयमानाय इति नयतेराङ्पूर्वात् करणे घञ् निपात्यते आखन्यते येन तुण्डाग्रेण खनो घच् शरीरस्याखनं तादृक् तुण्डाग्रं यस्येति प्राप्य शर्म सुखं दुर्लभं कृच्छ्रलभ्यम् ईषदित्यादिना खल् अत्र करणाधिकरणयोश्चेति निवृत्तं तयोरेव कृत्यक्तखलर्था इति योज्यम् उपसर्गात् खलघञोरिति प्राप्तस्य नुमः नसुदुर्भ्यामिति प्रतिषेधः ॥ ८३ ॥ ज० म०

हृदेत्यादि। अमुं पक्षिणं प्राप्य अस्माकं शर्म सुखं दुर्लभं दुःखेन

ईषदाव्यङ्करोऽप्येष न परत्राशुभक्रियः ।
यस्मानत्तुमितोऽभ्येति परिम्लानो बुभुक्षया ॥ ८४ ॥

लभ्यत इति ईषद्दुःसोरिति खल् । खनु कीदृशं हृदयोदङ्कसंस्थानं हृदयमुदच्यते उद्धमाकृष्यते येन तादृशं संस्थानमाकृतिर्यस्य तम् उद्ध-हृदयाकृतिमित्यर्थः हृदयोद्वेजकाकृतिमिति वा उत्पूर्वादञ्चतेः करणे घञ् चजोः कगाविति कत्वं गत्यर्थस्याञ्चतेः सेमकत्वाभावात् अङ्क-घातो रूपमित्यन्ये हतान्नानायसन्निभं यमजालसदृशं जाले प्रविष्टस्य दुःखेन निर्गम इति भावः आनीयतेऽनेनेति आनायो जालं करणे घञ् । आनायः पुंसि जालं स्यादित्यमरः । शरीराखनदण्डायम् आख-न्यते समन्तात् विदार्य्यते येन तदाखनं करणेऽल् शरीरस्याखनं दण्डायं यस्य तम् आखरेति पाठे खनोडहरेति डरः ॥ ८३ ॥ भ०

ईषदित्यादि । य एष अस्मानत्तुमितः प्रदेशादभ्येति आगच्छति स परत्र परलोके ईषदाव्यङ्करोऽपि अनाढ्यैरीषदाढ्योऽपि न कृतः अशुभेन कर्मणेत्यर्थात् कर्त्तृकर्मणोश्च भूकृञोरिति च्व्यर्थे कर्मोपपदात् करोतेः खल् यतः परिम्लानो बुभुक्षया यो हि कर्मणा शुभेन ईष-दाव्यङ्करोऽपि न कृतः स कथं न बुभुक्षया पीड्यते परिग्लायतीति कर्त्तरि बहुलवचनात् ल्युट् निष्ठान्तो वा संयोगादेरित्यादिना निष्ठा-नत्वम् अशुभक्रियः सत्वद्रोहाभिरतत्वात् ॥ ८४ ॥ ज० म०

ईषदित्यादि । एष पक्षी बुभुक्षया परिग्लानः सन् अत्तुं भक्ष-यितुम् इह प्रदेशे अभ्येति आभिमुख्येनागच्छति इत इति पाठे अस्मात्स्थानादित्यर्थः न एष परत्र परलोके ईषदाव्यङ्करोऽपि भविष्यति अनाढ्योऽयमीषदाढ्योऽपि न करिष्यते केनचित् कर्मणेत्यर्थः किंवा यस्मात् परलोके ईषदाढ्योऽपि न कृतः शुभकर्मणायाग्रात् तेनायं बुभुक्षया ग्लानः परलोके शुभकर्मणा यद्याढ्यः कृतः स्यात् तदा बुभुक्षया न पीड़ितः स्यादित्यर्थः ईषद्दुःसोरिति खल् खित्करणेन कर्त्तृकर्मणो-र्व्यवधानमपि प्राप्तं तच्च ईषदाढ्यम्भवमित्युदाहरणेन स्पष्टीकृतं करोते-रिहाभूतप्रादुर्भावार्थत्वात् च्व्यर्थो लभ्यते परे तु उदरीषङ्करः कर्त्तृकर्म-

सम्प्राप्य वानरान् पक्षी जगाद मधुरं वचः।
के यूयं दुरुपस्थाने मनसाप्यद्रिमूर्द्धनि ॥ ८५ ॥

इति कृदधिकारः।

अथ प्रकीर्णकाः।

आत्मनः परिदेवध्वे कुर्वन्तो रामसङ्कथाम्।
समानोदर्य्यमस्माकं जटायुश्च सुधादरात् ॥ ८६ ॥

श्यामभूततद्भावे भूक्तः खल्भावकर्मणोरित्याङ्कः अशुभक्रियः अशुभ-कर्मा परद्रोहित्वात् परिग्लान इति कभावेऽस्मीति कर्त्तर्य्यनट्। किंवा गत्यर्थाढेत्यादिना कर्त्तरि क्तः सुल्वाद्योदित्यादिना नत्वम्। इत्येवमशो-चन् वानरा ऊचुरित्यन्वयः ॥ ८४ ॥ भ०

संप्रेत्यादि। वानरान् संप्राप्य पक्षी जगाद गदितवान् के यूयम् अद्रिमूर्द्धनि पर्वतशिरसि दुरुपस्थाने दुःखेनोपस्थातुं शक्ये मनसापि किं पुनः शरीरेण आतो युच् तत्रापि ईषद्दादयोऽनुवर्त्तन्ते कर्त्तृकर्म-णोरिति न अर्थ्यते। इति कृदधिकारः ॥ ८५ ॥ ज० म०

संप्राप्येत्यादि। वानरान् संप्राप्य पक्षी मधुरं वचो जगाद किं तदित्याह के यूयमद्रिमूर्द्धनि पर्वतशिखरे स्थिताः मनसापि दुरुपस्थाने दुःखेनैवोपस्थातुं शक्ये किं पुनः शरीरेण आतोऽनोऽदरिद्र इति अनः। इति कृदधिकारः ॥ ८५ ॥ भ०

इतः प्रकीर्णकश्लोकानाह

आत्मेत्यादि। आत्मनः परिदेवध्वे शोचथ देङ् देवन इति भौवा-दिकः शपि न संयोगाद्वमन्तादित्यल्लोपो न भवति जटायुश्च समानो-दर्य्यं भ्रातरमस्माकं समानोदरे शयित इति यत् आदरात् मस्तुथ मस्तुतिं कुरुथ जटायुः पुण्यकृदित्यादिना रामसत्कथाश्च कुर्वन्तः अतः के यूयमिति ॥ ८६ ॥ ज० म०

अथ प्रकीर्णकाः।

आत्मेत्यादि। यूयम् आत्मनः परिदेवध्वे विलपथ देङ् देवने

शङ्काधवित्रवचनं प्रत्यूचुर्वानराः खगम् ।
वयं शत्रुलवित्रेषोर्दूता रामस्य भूपतेः ॥ ८७ ॥
केनापि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियाम् ।
हृतां माहाकुलीनस्य तस्य लिप्सामहे वयम् ॥ ८८ ॥

रामस्य सङ्कथां कुर्वन्तोऽस्माकं समानोदर्य्यं सहोदरं जटायुश्च आदरेण
स्तुथ जटायुः पुण्यकृदित्यादिना तत्स्तुतिं कुरुथ अतः के यूयमिति
पूर्व्वेणान्वयः सम्बन्धः समानोदरे शयित इत्यर्थे ढघेकादिति यः उप-
नामेति विकल्पविधानात् न समानस्य सादेशः ॥ ८६ ॥ भ०

शङ्केत्यादि । धुनोत्यपनयत्यनेनेति धवित्रम् अर्त्तिलूधू इत्यादिना
करणे इत्रः किमयं करिष्यतीति शङ्कया धवित्रं वचनं यस्य तं खगं
वानराः प्रत्यूचुः शत्रुलवित्रा इषवो बाणा यस्य रामस्य भूपतेस्तस्य
वयं दूताः पूर्व्ववदित्रं लवित्रा सः ॥ ८७ ॥ ज० म०

शङ्केत्यादि । वानराः खगं प्रत्यूचुः कीदृशं किमयं खगः करि-
ष्यति इत्येवंरूपायाः शङ्कायाः धवित्रम् अपनयनकारकं वचनं यस्य
तादृशं किमित्याह वयं रामस्य भूपतेर्दूताः कीदृशस्य शत्रूणां लवित्रा-
च्छेदकरणानि इषवो यस्य धूञ् कम्पे लूञ् छेदने आभ्यां लूधू-
सूनेति करणे इत्रः ॥ ८७ ॥ भ०

केनेत्यादि । तस्य रामस्य प्रियां केनापि दौष्कुलेयेन हृतां दुष्-
कुलस्यापत्यमिति दुष्कुलाड्ढक् कुल्यां कुले साध्वीं तत्र साधुरिति
यत् माहाकुलीं माहाकुलीनस्येति महाकुलस्यापत्यमिति महाकुला-
दञ् खञाविति अञ्खञौ लिप्सामहे वयं लब्धुमिच्छामहे ॥ ८८ ॥ ज० म०

केनेत्यादि । तस्य रामस्य प्रियां वयं लिप्सामहे लब्धुमिच्छामः
लभेः सनिमिमीत्यादिना इस् स्विलोपश्च स्यादेरिति सोलोपः अप्भसो-
रिति पत्वं प्रियां कीदृशीं केनापि दौष्कुलेयेन दुष्कुलोत्पन्नेन हृतां
दुष्कुलशब्दात् ध्वत्यादित्वात् ण्येयः निष्पतन्त्य इतिवत् मूर्द्धन्यः कुल्यां
कुले साध्वीं ढघेकादिति यः माहाकुलीं महाकुलात् जनकात् जातां
माहादयत इति यिवादित्वात् ष्णः तस्य कीदृशस्य महाकुलीनस्य महा-

त्रिंशत्तममहर्यातं मत्वा प्रत्यागमावधिम्।
अकृतार्था विषीदन्तः परलोकमुपास्महे॥ ८९॥
म्रियामहे न गच्छामः कौशल्यायनिवल्लभाम्।
उपलभ्यामपश्यन्तः कौमारीं पततां वर!॥ ९०॥
एते प्रकीर्णकाः।

कुलोत्पन्नस्य परमते महाकुलादपत्यार्थे खीनः ततः शिवादित्वात् अणः किंवा महाकुलाद्दुरयाज्जात इत्यर्थे ढषेकादिति खीनः॥ ८८॥ भ०

त्रिंशदित्यादि। त्रिंशतः पूरणं विंशत्यादिभ्य इति तमट् त्रिंश॰ त्तमं यदहः तत्प्रत्यागमावधिं प्रत्यागमनस्यावधिं यातम् अतीतं मत्वा अकृतार्था अनिष्पादितप्रयोजना विषीदन्तो विषादं गच्छन्तो वयं परलोकमुपास्महे प्रायोपवेशनेन म्रियामहे॥ ८९॥ ज॰ भ॰

त्रिंशदित्यादि। राज्ञा अस्माकं प्रत्यागमनस्यावधित्वेन निश्चितं त्रिंशतः पूरणं दिनं यातं गतं मत्वा वयम् अकृतार्था अनिष्पादित॰ स्वप्रयोजनाः सन्तः विषीदन्तो विषादं कुर्वन्तः प्रायोपवेशनया परलोकम् उपास्महे गन्तुमिच्छामः त्रिंशच्छब्दात् विंशत्यादेर्वेति तमट्॥ ८९॥ भ०

म्रियेत्यादि। हे पततां वर! म्रियामहे न गच्छामः कौमारीं अक्षतपूर्वदारपतिं लब्धवतीं कौमारादपूर्ववचन इति साधुः कौशल्याय-निवल्लभां कौशल्याया अपत्यं कौशल्यायनी रामः कौशल्यकार्म्मार्य्याभ्यां चेति फिञ् फस्यायनादेशः तस्य वल्लभाम् इष्टाम् उपलभ्यां प्रशस्तां पोरदुपधादिति यत् उपात्प्रशंसायामिति यत्प्रत्यये नुम् अपश्यन्तोऽनुप॰ लभमानाः। एते प्रकीर्णकाः॥ ९०॥ ज॰ भ॰

म्रियेत्यादि। हे पततां वर! पक्षिणां श्रेष्ठ! वयं म्रियामहे न गच्छामः अर्थात् प्रभुपार्श्वं यतः कौशल्यायनिवल्लभां रामप्रियाम् अपश्यन्तः कौशल्याया अपत्यमिति मड़ादित्वात् ष्णायनः ततः स्वार्थे ष्यिः। कीदृशीम् उपलभ्यां स्तुत्यां पूगकसञ्चेति यः उपात्स्तुताविति नुण् कौमारीं जितकान्तिकेयभार्य्याम् अतिरूपवतीमित्यर्थः कुमारस्य

जगाद वानरान् पक्षी नाध्यगीढ्वं ध्रुवं स्मृतीः ।
यूयं संकुटितुं यस्मात् कालेऽस्मिन्नध्यवस्यथ ॥ ९१ ॥

कार्त्तिकेयस्य पत्नी कुमारी पत्यामपालककान्तादिति ईप् स्कन्दो मन्दमतिर्विवाहविमुखो धत्ते कुमारव्रतमिति काल्पनिकं न तु प्रकृतं देवसेना नामेन्द्रकन्या कार्त्तिकेयस्य पत्नी प्रसिद्धा तथाहि शतक्रतो रूपवती देवसेनेति वै सुता । सा महेन्द्रेण रत्यर्थं भार्यार्थेनोपपादितेति स्कन्दपुराणीयं वचनममरकोषटीकायां मधुमाधवेन धृतम् । अथोपयम्त्वा सदृशेन युक्तां स्कन्देन साक्षादिव देवसेनामिति कालिदासः । कुमारीं जयतीति ढषेकादिति ण्यः णित्ते विः ययोर्लोपः णित्त्वादीप् किंवा कौ पृथिव्यां मारी माया लक्ष्मग्रा रीर्गतिर्यस्याः लक्ष्मीरूपामित्यर्थः एतेनादरातिशय उक्तः मा लक्ष्मीश्च प्रकीर्त्तिता । धने रा रीर्गतिः ख्याता रोदने च प्रकीर्त्तिता इति चैकाक्षरकोषः । बहुप्रेयसी इत्युदाहरता वृतः क इत्यस्य व्यभिचारो दर्शितः तेनात्र काभावः किंवा कुमार एव कौमारः स्वार्थे ण्यः कौमारस्य भार्यां रामस्य प्रथमपत्नीमित्यर्थः एतेनाप्यादरातिशय उक्तः अन्ये तु कुमारात् प्रथमपत्न्यां ण्य इत्याहुः स्वमतेऽपि प्रथमपत्नीत्वमर्थाद्गम्यते तथाहि कुमारशब्देन अकृतदारमपिह उच्यते तद्रूढ़त्वेन प्रथमपत्नीत्वम् । एते प्रकीर्णकाः ॥ ९० ॥ भ०

इतः किदतिदेशमधिकृत्याह जगेत्यादि । ध्रुवम् अवश्यं स्मृतिं स्मृतिशास्त्रं नाध्यगीढ्वं नाधीतवन्त इति पक्षी वानरान् जगाद विभाषालुङ्लृङोरिति विभाषागाङादेशः गाङ्कुटादिभ्य इति सिचो ङित्त्वं घुमास्थेतीत्वं धिचेति सिचो लोपः इणः षीढ्वमिति मूर्द्धन्यः यस्माद्यूयमस्मिन् काले संकुटितुम् अवसातुमध्यवस्यथ अभिप्रायं कुरुथ कुटादित्वात् ङित्त्वम् ॥ ९१ ॥ ज० म०

अथ किदतिदेशाधिकारः । पाणिनिमते कुटादिसूत्रसमूहैः कात्त्वन्यत्वातिदेशात् स्वमते त्वगुणाधिकारः । जगेत्यादि । स पक्षी वानरान् जगाद किमित्याह ध्रुवं निश्चितम् उत्प्रेक्षे वा यूयं स्मृतीर्धर्म-

नायमुद्विजितुं कालः स्वामिकार्य्याद्भवादृशाम्।
हृतभार्य्ये च्युते राज्याद्रामे पर्य्युत्सुके भृशम्॥ ९२॥
यत्नं प्रोर्णुवितुं तूर्णं दिशं कुरुत दक्षिणाम्।
प्रोर्णुविवीं दिवस्तत्र पुरीं द्रक्ष्यथ काञ्चनीम्॥ ९३॥

संहिता नाध्यगीढ्वं नाधीतवन्तः इङश्चा ध्वं सीङ्ष्टीध्योर्वेति गोरादेशः षत्वाच्च णुः धेसलोपोवेति सेर्लुक् टीठीढीधोढीति धस्य ढः यस्मादस्मिन् काले सङ्कुटितुं मर्त्तुं यूयम् अध्यवस्यथ इच्छथ कुटस्मिकौटिल्ये प्रभुकार्य्यं त्यक्त्वा मरणमेवात्र कौटिल्यं धातोरनेकार्थत्वाद्वा कुटां गुणोऽप्यितीति नियमादगुणत्वम् अध्ययपूर्वस्य षोयनाशे इत्यस्य यन्योत्शमादीति ओकारलोपः॥ ९१॥ भ०

स्वयमेवावसितुं काल इति चेदाह नायमित्यादि। भवादृशां युष्मद्विधानां स्वामिकार्य्यादुद्विजितुं नायं कालः विज इडिति ङित्त्वं किमिति न भवतीति चेदाह राज्याच्च्युते भ्रष्टे रामे निर्वासितत्वात् तत्रापि हृतभार्य्ये भृशमत्यर्थं पर्य्युत्सुके सीतायाम्॥ ९२॥ ज०म०

नायमित्यादि। भवादृशां युष्मद्विधानां सत्पुरुषाणां स्वामिकार्य्यात् उद्विजितुं चलितुं नायं कालः समयः कुत इत्याह राज्याच्च्युते भ्रष्टे रामे तत्रापि हृतभार्य्ये भृशमत्यर्थं पर्य्युत्सुके च सति तु भार्य्यां युष्मद्वचनेन ज्ञातुमित्यर्थात् विज्ञेर्णुर्निमीत्यगुणत्वम्॥ ९२॥ भ०

यत्नमित्यादि। दक्षिणां दिशं प्रोर्णुवितुम् आच्छादयितुं तुमुन् तूर्णं शीघ्रं यत्नं कुरुत तस्यां दिशि पुरीं द्रक्ष्यथ काञ्चनीं मणिरजतादिभ्योऽञ् प्रोर्णुवितीम् अभिव्यापिनीं ट्चि रूपं दिव आकाशस्य कर्मणि षष्ठी विभाषोर्णोरिति ङित्त्वपक्षे उवङ् अङित्त्वपक्षे च गुणः कुरुतेति सार्वधातुकमपिदिति ङित्त्वे विकरणस्य गुणो न भवति तस्य चार्द्धधातुकत्वात् अङित्त्वे धातोर्गुणः अत उत् सार्वधातुकमपिदिति ङित्त्वे विकरणस्य गुणो न भवति॥ ९३॥ ज० म०

यत्नमित्यादि। दक्षिणां दिशं प्रोर्णुवितुम् आच्छादयितुं तूर्णं शीघ्रमेव यूयं यत्नं कुरुत तत्र दिशि काञ्चनीं स्वर्णनिर्मितां पुरीं द्रक्ष्यथ

लङ्कां नाम्ना गिरेर्मूर्ध्नि राक्षसेन्द्रेण पालिताम् ।
निर्जित्य शक्रमानीता ददृशुर्यां सुरस्त्रियः ॥ ९४ ॥
बभूव याधिशैलेन्द्रं मर्दित्वेवेन्द्रगोचरम् ।
कुषित्वा जगतां सारं सैका शङ्के कृता भुवि ॥ ९५ ॥

कीदृशीं दिव आकाशस्य प्रोर्णुवितीम् अभिव्यापिकां कर्मणि षष्ठी ङिद्विभोऽर्णोरिति ङित्त्वादगुणत्वे अचि श्नुधातुभ्रुवां य्वोरियुवङावित्युव् पक्षे गुणः काञ्चनस्य विकार इत्यर्थे विकारसंघेति णः वद्धोऽकिज् भष इति हशे चकारस्य रः ॥ ९३ ॥ भ०

लङ्कामित्यादि । यां पुरीं नाम्ना लङ्कां सुरस्त्रियो ददृशुः दृष्टवत्यः असंयोगाल्लिट् किदिति कित्त्वं तां यातेति वक्ष्यमाणेन सम्बन्धः गिरेः सुवेलस्य मूर्ध्नि स्थितां राक्षसेन्द्रेण पालितामिति दुर्गमत्वमाख्यातं शक्रं निर्जित्य सुरस्त्रिय आनीता इति च रावणस्य माहात्म्यम् ॥ ९४ ॥ ज० म०

लङ्कामित्यादि । यां पुरीं नाम्ना लङ्कां सुरस्त्रियो ददृशुः तां द्रक्ष्यथेति पूर्वेण सम्बन्धः कितृठीढोपमिति कित्त्वादगुणत्वं गिरेः सुवेलस्य मूर्ध्नि स्थिताम् आश्लेषाधारसम्बन्धात् स्थितामिति लभ्यते राक्षसेन्द्रेण रावणेन पालितां रक्षितां सुरस्त्रियः कीदृश्यः शक्रमिन्द्रं निर्जित्यानीताः राक्षसेन्द्रेण इत्यनुषञ्जनीयम् एतेन तस्य वीर्यमपि ज्ञापितम् ॥ ९४ ॥ भ०

बभूवेत्यादि । अधिशैलेन्द्रं शैलेन्द्रस्य सुमेरोरुपरि सप्तम्यर्थेऽव्ययीभावः इन्द्रगोचरमिन्द्रनिलयममरावत्याख्यं मर्दित्वेव तिरस्कृत्येव बभूव इन्धिभवतिभ्यां चेति कित्त्वं जगतां सारं कुषित्वा निष्कृष्य सैका भुवि कृता निर्मितेत्यहं शङ्के तां यात मर्दित्वा कुषित्वेति न क्त्वा सेडिति कित्त्वप्रतिषेधे प्राप्ते मृडमृदेत्यादिना कित्त्वम् ॥ ९५ ॥ ज० म०

बभूवेत्यादि । या पुरी शैलेन्द्रस्य सुमेरोरुपरि इन्द्रस्य गोचरं विषयम् अमरावत्याख्यं मर्दित्वा अभिभूय बभूव अधिशैलेन्द्रं सुराचयं वा सप्तम्यर्थेऽव्ययीभावः अहमेवं शङ्के तर्कयामि जगतां सारमुत्कृष्ट-

अस्तृड़ित्वा सहस्राक्षं क्लिशित्वा कौशले निजे ।
उदित्वालमिदं यत्नात् सैका धात्रा विनिर्मिता ॥ ९६ ॥
मुषित्वा धनदं पापो यां गृहीत्वावसद् द्विषन् ।
तां रुदित्वेव शक्रेण यात लङ्कामुपेक्षिताम् ॥ ९७ ॥

भागं कुषित्वा आकृष्य सैवैका भुवि लता निर्मिता विश्वकर्मणेत्यर्थात् सेमच्युधकुषेत्यादौ क्षुधादिवर्जनात् कित्त्वम् ॥ ९५ ॥ भ०

अस्तृडीत्यादि । सहस्राक्षमिन्द्रमस्तृडित्वा असुखिनं कृत्वा निजैः आत्मीयैः कौशलैः चिरं क्लिशित्वा प्रयत्नं कृत्वा उदित्वा अभिधाया-लम्पर्य्याप्तमेतं करिष्यामीति यत्नात् महता प्रयासेन सैका धात्रा विनि-र्मिता पूर्ववत् कित्त्वम् ॥ ९६ ॥ ज० म०

अस्तृडीत्यादि । सहस्राक्षम् इन्द्रम् अस्तृडित्वा असुखिनं कृत्वा निजे आत्मीये कौशले नैपुण्ये चिरं क्लिशित्वा कुशमनुभूय अलं पर्याप्तमेवमेवं करिष्यामीत्युदित्वा कथयित्वा चिरकालेन यत्नात् सैका धात्रा विनिर्मिता इत्यपि अहं शङ्के इत्यनेनान्वयः स्तृहगग्लौदे वसोरस्येतीम् क्लिश्युञ् चोपतापे पूक्लिशुदित इति वेम् क्लिशूग ओविरोधे इत्यस्य तु वेमूदित्यादिना वदैवाचि सर्वत्र सेमच्युधेत्यादिवर्जनात् कित्त्वं वद्देयजादित्वाज्ञिः कुशलस्य भावः कर्म वेति विकारसंघेति ष्णः ॥ ९६ ॥ भ०

मुषित्वेत्यादि । मुषित्वा धनदं वैश्रवणं तस्मात् पुरं पुष्पकञ्च विमान-मपहृतं पापः पापाचरणात् यां गृहीत्वा अवसत् उषितः द्विषन् शत्रुः शक्रेण रुदित्वेवोपेक्षितामवधीरितां रुदविदेति कित्त्वं तत्र चका-रेण क्त्वेत्यनुवर्त्तते ॥ ९७ ॥ ज० म०

मुषीत्यादि । धनदं कुवेरं मुषित्वा वञ्चित्वा तत एव यां लङ्कां गृहीत्वा पापः कुत्सिताचारो द्विषन् शत्रू रावणोऽवसत् तां यूयं यात गच्छत कीदृशीं शक्रेण इन्द्रेण रुदित्वा क्रन्दित्वेव उपेक्षितां त्यक्तां न तु पारयित्वेति भावः । मुषगलुठने रुधिरस्वरोदे व्युडोवोक्षसादेरि-त्यादिना कित्त्वादगुणत्वं ग्रहेः सेमच्युधेत्यादिना कित्त्वात् ग्रहस्वपा-द्योरिति जिः ग्रहेरिमोर्घ इति दीर्घत्वम् ॥ ९७ ॥ भ०

विदित्वा शक्तिमात्मीयां रावणं विजिघृक्षवः ।
उक्तं पिपृच्छिषूणां वो मा स्म भूत सुषुप्सवः ॥ ९८ ॥
नाविविदिषुमभ्येति सम्पद्रुरुदिषुं नरम् ।
किं मुमुषिषुवद्यात द्विषो नापचिकीर्षया ॥ ९९ ॥

विदीत्यादि । आत्मीयां शक्तिं सामर्थ्यं विदित्वा पूर्ववत् किन्त्वं रावणं विजिघृक्षवः विग्रहीतुमिच्छवः सुषुप्सवः शयितुमिच्छवो मा स्म भूत न प्रमत्ता भवतेत्यर्थः रावणस्य बलीयस्त्वादिदमुक्तं मया वो युष्माकम्पिपृच्छिषूणां प्रष्टुमिच्छूनाम् अत रुदविदेति सनः कित्त्वे सम्प्रसारणं प्रच्छेः किरश्च पञ्चभ्य इतीड़ागमः ॥ ९८ ॥ ज० म०

विदित्वेत्यादि । आत्मीयां शक्तिं सामर्थ्यं विदित्वा ज्ञात्वा रावणं विजिघृक्षवो विरोधयितुमिच्छवः सन्तो यूयं सुषुप्सवः शयितुमिच्छवो मा स्म भूत मा स्म असावधानाश्च न भवतेत्यर्थः रावणस्य मायाविस्त्वाद्बलवत्त्वाच्च एतत् सर्वं पिपृच्छिषूणां प्रष्टुमिच्छूनां वो युष्माकं कृते मया उक्तम् एतेनापृष्टभाषणेऽनौचित्यं परिहृतं सम्बन्धविवक्षया षष्ठी विदज्ञाने ब्रुञोऽव इति कित्त्वं ग्रह उपादाने सन् नेड्गुहग्रह इति अनिम् ग्रहस्वपप्रच्छां जिरिति जिः युनोनिमीत्यगुणत्वं ह्रोढः झभान्तस्येति षत्वं षढोः कः इति कः किलादिति षः सन्भिच्चेति ङः प्रच्छेः सनि स्मिङ्पूङित्यादिना इम् ॥ ९८ ॥ भ०

नावीत्यादि । वेदितुं ज्ञातुमिच्छुर्यो न भवति तं नरमविविदिषुं रुरुदिषुं रोदितुमेषणस्वभावं सम्पद्विभूतिर्नाभ्येति नागच्छतीति वो मयोक्तमिति योज्यं किन्न यात न गच्छत मुमुषिषुवत् चौरवदित्यर्थः पूर्ववत् किन्त्वं द्विषः शत्रोरपचिकीर्षया अपकर्त्तुमिच्छया इको झलीति कित्त्वे गुणो न भवतीति अज्झनगमां सनीति दीर्घः ऋत इद्धातोः ॥ ९९ ॥ ज० म०

नावीत्यादि । सम्पत् सम्पत्तिरविविदिषुं वेदितुं ज्ञातुमनिच्छुं रुरुदिषुम् अनध्यवसायात् रोदनेच्छुं नरं पुरुषं न अभ्येति न अभिगच्छति तेन ज्ञापनार्थं प्रब्रवीमि व इति वक्ष्यमाणेन सम्बन्धः द्विषः

बुभुत्सवो द्रुतं सीतां भुत्सीध्वं प्रब्रवीमि वः ।
मा च भुद्धं मृषोक्तं नः क्षोद्धं स्वामिने हितम् ॥१००॥
समगध्वं पुरः शत्रोर्मोदयध्वं रघूत्तमम् ।
नोपायध्वं भयं सीतां नोपायंस्त दशाननः ॥ १०१ ॥

शत्रोरपचिकीर्षया अपकारेच्छया सुदुषिषुवत् चौरवत् यूयं किं न यात तदैव सीतादर्शनसम्भ्रमात् व्युङोऽव इत्यादिना विदरुदसुषः सनः किच्चादगुणत्वं क्रमः सनि चीऽज्झनिङ्गमामिति दीर्घः युर्नानिमीत्य-गुणत्वे ऋदिरचाविति इर् व्यंनचतयीति दीर्घः संस्कार इति षः ॥ ९९ ॥ भ०

बुभुत्सेत्यादि । बुभुत्सवो ज्ञातुमिच्छवः यदि सीतां बुधेः सनन्ता-सनन्ताच्चेति किच्चम् एकाच इति भष्भावः तदा द्रुतं तां भुत्सीध्वं जानीतेति वो युष्मान् ब्रवीमि लिङ् सिचाविति किच्चं मृषोक्तं मिथ्योक्तं नोऽस्माकं मा च भुद्धं न जानीत अपितु सत्यं क्षोदृ-क्षोदीति सिचो लोपः झलां जश्झशि किच्चं पूर्ववत् अतो यूयं स्वामिने रामाय हितं क्षोद्धं कुरुत उच्चेति किच्चम् इणः षीध्व-मिति मूर्द्धन्यः ॥ १०० ॥ ज० भ०

बुभुदित्यादि । सीतां बुभुत्सवो बोद्धुमिच्छवो यूयं द्रुतं शीघ्र-मेव भुत्सीध्वं जानीत इति वो युष्मान् अहं प्रकृष्टं ब्रवीमि अस्माक-मुक्तं वचनं मृषा मिथ्या मास्म भुद्धं न जानीत अपितु सत्यमेव अस्मद् एकत्वे वा बहुत्वमभिधानात् स्वामिनो रामस्य हितं क्षोद्धं कुरुत सभार्थेनेत्यादिना षष्ठी स्वामिने इति पाठे क्रियार्थवच्चतुर्थीति चतुर्थी बुध्यौङ्ग्वेदने सनि युर्नानिमीत्यगुणत्वं झभान्तस्येति भत्वम् अन्यत्र धाः सीध्वम् इणुङ्भ्यो धीति किच्चादगुणत्वम् अमरत्व मायोगेऽत्रोऽभावः झस्वादिति सेलोपः झलक्ष्याः सीध्वं पूर्ववत् किच्चं टीढीढीधो-ढीति धस्य ढत्वम् ॥ १०० ॥ भ०

समेत्यादि । इदमक्षमार्थंसे यदुत शत्रोः रावणस्य पुरः अग्रतः समगध्वं सङ्गता भवत आशंसायां भूतवच्चेति लुङ् समो गम्यृच्छतीति

ततः प्राखिषताद्रीन्द्रं महेन्द्रं वानरा द्रुतम्।
सर्वें किलकिलायन्तो धैर्य्यञ्चाधिषताधिकम्॥ १०२॥

तङ्वागम इति सिचः कित्त्वे अनुदात्तेत्यनुनासिकलोपः ह्रस्वादङ्गादिति सिचो लोपः मोदयध्वं रघूत्तमं हर्षयत तत्कार्य्यकरणात् मा च भयमुपायध्वं सूचयत भयं माकार्ष्टेत्यर्थः आङो यमहन इति तङ् यमोगन्धन इति तङ् यमोगन्धन इति सिचः कित्त्वे अनुनासिकलोपः गन्धनं सूचनम् अन्यथा युष्मासु गच्छितमयेषु नियतमसौ दशाननः सीतामुपायंस्त स्वीकृतवान् स्यात् तस्य दुष्टत्वात् आशंसायां भूतवच्चेति अनिष्टाशंसायां लुङ् उपाद्यमः स्वीकरण इति तङ् स्वीकरणञ्चात्र विवाहनमुक्तं विभाषोपयम इति अकित्त्वपक्षे रूपम्॥१०१॥ज०म०

समेत्यादि। इदमहमाशंसे यत् शत्रो रावणस्य पुरोऽग्रतो यूयं समगध्वं सङ्गता भवत अभिधानादाशंसायां टी आशंसायां भूतसामान्यविहिताश्चेति परः समोगमृच्छेति मं इगुङ्र्मटीत्यादिना सेः कित्त्वात् वनतनाद्यनिनामिति मलोपः भस्त्वादिति सिलोपः रघूत्तमं रामं यूयं मोदयध्वं हर्षयत तत्कार्य्यकरणात् भयं न उपायध्वं न सूचयत न कुरुतेत्यर्थः यमः सूचन इति सेः कित्त्वात् मलोपः आत्मनेपदाधिकारमध्ये यमः सूचन इत्यस्य करणादेव सूचनार्थे यम आत्मनेपदं किंवा उपयमो विवाह इत्यनेन मं तत्र विवाहः स्वीकारः उपाद्यमः स्वीकरण इति परसूत्रं यमः सूचने वातूद्वाहे इत्यत्रापि उद्वाहः स्वीकारः स्वीकरणे वेति परसूत्रं स्वीकारार्थेन परिणयोऽपि गम्यते तदा भयं न उपायध्वं न स्वीकुरुत दशाननः सीतां न उपायंस्त विवाहेन न स्वीकृतवान् न स्वीकरोतु वा अत्राप्याशंसायां टी वातूद्वाह इति कित्त्वाभावपक्षे मलोपाभावः इत्येवं जगाद वानरान् पक्षीत्यन्वयः ॥ १०१ ॥ भ०

तत इत्यादि। ततः सम्पातिवचनानन्तरं सर्वें वानरा महेन्द्रं पर्वतं प्राखिषत प्रस्थितवन्तः धैर्य्यञ्चाधिकमाधिषत आहितवन्त आत्मनि तिङतेर्दधातेश्च स्थाघ्वोरिच्चेति कित्त्वमित्वञ्च लिङ्तेः समवप्रविभ्यः स्थः

निकुञ्जे तस्य वर्त्तित्वा रम्ये प्रक्ष्वेदिताः परम्।
मणिरत्नाधिशयितं प्रत्युदैक्षन्त तोयधिम्॥ १०३॥

इति तङ् किलकिलायन्तः किलकिलाध्वनिं कुर्वाणाः अव्यक्तानुकरणेत्यादिना डाच् तदन्तात् लोहितादिडाज्भ्यः क्यष् वा क्यष इति परस्मै पदम्॥ १०२॥ ज० म०

तत इत्यादि। सम्पातिवचनानन्तरं सर्वे वानरा महेन्द्रं पर्वतं प्रास्थिषत प्रस्थितवन्तः द्रुतं शीघ्रं मुहुरिति पाठे किलकिलायन्त इत्यनेन सम्बन्धः प्रपूर्वात्तिष्ठतेः प्रतिष्ठानिर्णयेत्यादिना मं स्थादोर्ङिरिति ङिरगुणत्वञ्च मान्तोऽदनत इत्यत् अधिकं धैर्यञ्च आत्मनि आधिषत आहितवन्तः धाञोजिनृजग्रन्तेत्यादिना मं अन्यत् पूर्ववत् कीदृशाः किलकिलायन्तः किलकिलाशब्दं कुर्वन्तः नैकाचोऽव्यक्तानुकरणादिति डाच् द्वित्वञ्च डाज्लोहितादेरिति ष्यः पश्च॥ १०२॥ भ०

निकुञ्ज इत्यादि। तस्य पर्वतस्य निकुञ्जे लतादिपिहितस्थाने वर्त्तित्वा स्थित्वा न क्त्वा सेडिति कित्त्वप्रतिषेधः परं प्रक्ष्वेदिता उच्चैरव्यक्तशब्दं कुर्वाणाः निष्ठाशीङिति कित्त्वप्रतिषेधः तोयधिंप्रत्युदैक्षन्त दृष्टवन्तः लङि रूपं कीदृशं मणिरत्नाधिशयितं क्तोऽधिकरणे चेति क्तः पूर्ववत् कित्त्वप्रतिषेधः कीदृशं मणिरत्नाधिशयितं मणिर्यद्रत्नमिति क्षीरत्नादावपि रत्नशब्दस्य दृष्टत्वात् एकपदव्यभिचारे विशेषणविशेष्यभावः तस्याधिशयितमवस्थानमित्यर्थः॥ १०३॥ ज० म०

निकुञ्ज इत्यादि। तस्य पर्वतस्य निकुञ्जे लतादिपिहितस्थाने रम्यत्वात् वर्त्तित्वा स्थित्वा परमतिशयेन प्रक्ष्वेदिता अव्यक्तशब्दं कर्त्तुमारब्धा वानरास्तोयधिं समुद्रं प्रत्युदैक्षन्त दृष्टवन्तः कीदृशं मणिरत्नाधिशयितं मणिरत्नैर्मणिश्रेष्ठैरधिशयितमधिष्ठितं कर्मक्रियेत्यादिना अधिपूर्वशीङ आधारस्य कर्मत्वात् कर्मणि क्तः आधारे क्त इति केचित् ञिक्ष्विदकूजने षेचादिढे क्त इति कर्त्तरि क्तः भावादिढे वेति पक्षे इम् उभयत्र पूगोष्टषेत्यादिना गुणः इति वर्त्तित्वेत्यत्र शेमत्तुषेत्यादिना कित्त्वनिषेधात् गुणः॥ १०३॥ भ०

अमर्षितमिव घ्नन्तं तटाद्रीन् सलिलोर्मिभिः ।
श्रिया समग्रं द्युतितं मदेनेव प्रलोठितम् ॥ १०४ ॥
पूतं शीतैर्नभस्वद्भिर्ग्रन्थित्वेव स्थितं रुचः ।
गुम्फित्वेव निरस्यन्तं तरङ्गान् सर्वतो मुहुः ॥ १०५ ॥

अमेत्यादि । सलिलोर्मिभिः कल्लोलैः तटाद्रीन् तटस्थान् पर्वतान् घ्नन्तं प्रत्युदैत्तन्न अमर्षितमिव रुषेरिति तिथायामिति किर्त्त्वप्रतिषेधः पश्चात् नञ्समः श्रिया हेतुभूतया समग्रं सम्पूर्णं द्युतितमिति कर्त्तरि निष्ठा यदि वा श्रिया कर्त्तृभूतया द्युतितं शोभितम् अत्र त्यध्याहृत्य तमैत्तन्नेति योज्यम् एकञ्च कृत्वा उदुपधादित्यादिना भावे निष्ठायां विकल्पेन क्त्वप्रतिषेधात् क्त्वमुदाहृतं मदेनेव मत्ततयेव श्रिया हेतुभूतया प्रलोठितं घूर्णितुमारब्धम् आदिकर्मणि निष्ठायामकित्त्व-मुदाहृतम् ॥ १०४ ॥ ज० म०

अमेत्यादि । तोयधिं प्रत्युदैत्तन्नेत्यत्रान्वयः सलिलोर्मिभिर्जल-वेगैस्तटाद्रीन् तटसम्बन्धिनः पर्वतान् घ्नन्तम् अमर्षितमिव क्रुद्धमिव मृषीष्टेत्यादिना कर्मार्थक्तो गुणः पश्चान्नञ्समासः ऊर्मिः स्त्रीपुं-सयोर्वीच्यां प्रकाशे वेगभङ्गयोरिति मेदिनी । वीचिवाचित्वेऽत्र सलिलपदं स्वरूपकथनार्थं श्रिया हेतुभूतया समग्रं सम्पूर्णं यथा स्यात्तथा द्युतितं शोभमानं गत्यर्था द्वेति कर्त्तरि क्तः दीपितुमारब्धं वा तदा भावादिकर्मणोर्वेति पक्षे गुणाभावः मदेन मत्ततयेव प्रलोठितं घूर्णितुमारब्धं सदा चञ्चलत्वात् आदिकर्मणि क्तः पूर्वेण पक्षे गुणः ॥ १०४ ॥ भ०

पूतमित्यादि । नभस्वद्भिर्वायुभिः शीतैः पूतं पवित्रीकृतं पूङश्चेति विकल्पे नेट् अतएव वक्ष्ये पूङः क्त्वानिष्ठयोः क्त्वप्रतिषेधोऽत्र न भवति तत्र सेडित्यनुवर्त्तते रुचो दीप्तीर्ग्रथित्वेव संदर्भ्येव स्थितं नोप-धात्थफान्ताद्वेति क्त्वप्रतिषेधपक्षे रूपं सर्वतस्तरङ्गान् गुम्फित्वेव निरस्यन्तं क्षिपन्तं नोपधादिति विकल्पेन क्त्वप्रतिषेधः अत्र त्यध्या-हृत्य तमैत्तन्नेति योज्यम् ॥ १०५ ॥ ज० म०

वञ्चित्वाप्यम्बरं दूरं स्वस्मिंस्तिष्ठन्तमात्मनि।
तृषित्वेवानिशं स्वादु पिबन्तं सरितां पयः॥ १०६॥
द्युतित्वा शशिना नक्तं रश्मिभिः परिवर्द्धितम्।
मेरोर्जेतुमिवाभोगमुच्चैर्दिद्योतिषुं मुहुः॥ १०७॥

पूनमित्यादि। शीतैः शीतलैर्नभस्वद्भिर्वायुभिः पूतं पवित्रीकृतं तोयधिं प्रत्युदैक्षन्तेत्यनेन सम्बन्धः पूङ्क्लिशवमेति इमोऽभावपक्षे पूङ्॰ श्रयेत्यादौ सेमग्रहणाच्च गुणः नभःशब्दान्मोऽश्वभावादतुरिति वतुः नदन्तसाविति पदत्वनिषेधात् ससजुषो रुः ख्योर्विःफ इत्यस्य पदान्तविषयत्वात् विसर्गाभावः रुचो दीप्तीर्यथित्वेव स्थितं सर्वत्र दीप्तिमत्त्वात् उत्प्रेक्षेयं ग्रन्थिकगसन्दर्भे श्रभाच्चुङ इति विकल्पेनाकित्त्वात् नलोपाभावः। सर्वत्र तरङ्गान् गुम्फित्वेव मुहुः पुनः पुनर्निरस्यन्तं क्षिपन्तं गुम्फशब्दस्य पूर्वेण पक्षे किन्त्वात् हलन्ताल्लोपः इति न लोपः॥ १०५॥ भ॰

वञ्चीत्यादि। स्थित्यनतिक्रमादम्बरं दूरं वञ्चित्वातिक्रम्य वञ्चिलुञ्चीति किन्त्वप्रतिषेधः स्वस्मिन्नात्मनि स्वरूपे तिष्ठन्तम् अत्र नश्छव्यप्रशानिति नकारस्य रुत्वं पूर्वस्य त्वनुनासिकादेशः तृषित्वेव तृषित इव भूत्वा तृषिमृषीत्यादिना प्रतिषेधः तत्रविलवस्य स्वादुत्वात् सरितामयः स्वादु पिबन्तम् अनिशमजस्रम्॥ १०६॥ ज॰ भ॰

वञ्चित्वेत्यादि। पुनः कीदृशं तोयधिम् अम्बरमाकाशं वञ्चित्वापि अतिक्रम्यापि स्वस्मिन् स्वकीये आत्मनि स्वरूपे तिष्ठन्तं मर्यादानतिक्रमात् पृथ्व्या उच्चोऽपि भूत्वा तां नातिक्रामतीति भावः। वञ्चुगल्भ्यां तृषमृषकृषेत्यादिना विकल्पेनाकित्त्वात् नलोपाभावः। तृषित्वेव अनिशं सततं स्वादु मधुरं सरितां पयो नदीनां जलं पिबन्तं स्वजलस्य क्षारत्वात् जिहृषापिपासायां पूर्वेण किन्त्वादगुणत्वम्॥ १०६॥ भ॰

द्युतीत्यादि। शशिना नक्तं रात्रौ द्युतित्वा दीप्तिमता भूत्वा रश्मिभिः परिवर्जितं वृद्धिं नीतं सन्तं तोयधिं मेरोराभोगम्महत्त्वं जेतुमिव मुहुरुच्चैर्दिद्योतिषुं वर्द्धितुमिच्छुमित्यर्थः। अनेकार्थत्वाद्धातूनां द्युतित्वा दिद्योतिषुमिति रलोव्युपधादिति किन्त्वाकिन्त्वे तत्र ह्युकारो-

विलोक्य सलिलोच्चयानधिसमुद्रमभ्रंलिहान्
भ्रमन्मकरभीषणं समधिगम्य चाधः पयः।
गमागमसहं द्रुतं कपिवृषाः परिप्रैषयन्
नगेन्द्रगुरुविक्रमं तरुमृगोत्तमं मारुतिम्॥ १०८॥

इति भट्टिकाव्येऽधिकारकाण्डे द्वितीयः काव्यस्य
सप्तमः सर्गः॥ ७॥

पधादिकारोपधाच्च रलन्ताद्धलादेर्धातोः परौ क्त्वासनौ वा न कितौ भवत इति सूत्रार्थः॥ १०७॥ ज० म०

द्युतित्वेत्यादि। पुनः कीदृशं तोयधिं शशिना नक्तं रात्रौ द्युतित्वा दीप्तिमता सता रश्मिभिः परिवर्द्धितं वृद्धिं नीतं द्युतल्ड् दीप्तौ व्युडोवोहसादेरिति वा कित्त्वाद्गुणाभावः मेरोराभोगं परिपूर्णतां जेतुमिव तत उच्चैरधिकं मुहुः पुनः पुनः दिद्योतिषुं द्योतनमिच्छन्तम् उच्चैर्भूत्वा द्युतिमिच्छन्तं वा धातोरनेकार्थतया उच्चैरूर्द्ध्वं वर्द्धितुमिच्छन्तमिति केचित् द्युतेः सनि द्युत्स्वाप्योरिति खेर्जिः पूर्वेण पच्चे कित्त्वाभावात् गुणः॥ १०७॥ भ०

विलोक्येत्यादि। कपिवृषाः कपिमुख्या मारुतिं हनूमन्तं द्रुतं परिप्रैषयन् व्यसर्जयन् परिपूर्वादिषुगतावित्यस्मात् हेतुमण्ण्यन्तात् लङि रूपं किं कृत्वेत्याह विलोक्य सलिलोच्चयान् सलिलोर्मीन् ऊर्द्ध्वं चीयत इत्येरच् अधिसमुद्रं समुद्रस्योपरि अभ्रंलिहान् दूरमुच्छ्रितान् अधश्च पयः समधिगम्य ज्ञात्वा कीदृशं भ्रमद्भिर्मकरैर्भीषणं भयानकं भीषयतीति नन्द्यादित्वाल्ल्युः समागमसहं गमनागमनयोग्यं मारुतिं गजेन्द्रस्येव गुरुर्विक्रमो यस्य तरुमृगेषु वानरेषूत्तममिति सप्तमीति योगविभागात् सः। इति ङित्त्वातिदेशाधिकारः॥ १०८॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे द्वितीयः
परिच्छेदकार्य्यस्य सीतान्वेषणः सप्तमः सर्गः।

# अष्टमः सर्गः।

—*—

अगाधत ततो व्योम हनूमानुरुविग्रहः।
अत्यशेरत तद्वेगं न सुपर्णार्कमारुताः॥ १॥

विलोक्येत्यादि। अधिसमुद्रं समुद्रस्योपरि सलिलोच्चयान् तरङ्गान् अभ्रंलिहान् अत्युच्छ्रितान् विलोक्य अवस्य पयो जलं भ्रमद्भिरितस्ततो गच्छद्भिर्मकरैर्जलचरजन्तुविशेषैर्भीषणं भयानकं समधिगम्य ज्ञात्वा भयात् स्वयं गन्तुमशक्ताः कपिश्रेष्ठाः कपिश्रेष्ठा मारुतिं हनूमन्तं द्रुतं परिप्रैषयन् व्यसर्जयन् परिप्रपूर्वादिषुगतावित्यस्मात् प्रेरणे ञ्यन्तात् षो। मारुतिं कीदृशं गमने चागमने च समर्थं गजेन्द्रस्येव ऐरावतस्येव गुरुर्विक्रमो यस्य तम् अतएव तरस्विनेषु वानरेषु उत्तमं श्रेष्ठम् ऊर्द्ध्वं चीयत इत्यल् उच्चयः अधिसमुद्रमिति सप्तम्यर्थेऽव्ययीभावः अभ्रंलिहानिति तृम्बहदजीत्यादिना अभिधानादसंज्ञायामपि खः। गुणावोऽप्यभिधानात् भीषणमिति नन्द्यादित्वादनः कभाऽवेशी इत्यनेन वा अनट्। इति किदतिदेशाधिकारः॥ १०८॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लिकात्मजश्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायाम् अधिकारकाण्डे सप्तमः सर्गः।

——

आत्मनेपदमधिकृत्याह अगाधतेति। ततो विसर्जनानन्तरं हनूमान् समुद्रलङ्घनाय व्योमाकाशमगाधत प्रस्थितवान् गाधृप्रतिष्ठालिप्सयोरित्यस्माद्ङ् अनुदात्तङित इति अनुदात्तत्वादात्मनेपदम् उरुविग्रहः कामरूपित्वात् तदानीमुत्पादितविपुलकायः तस्य चोत्पततो वेगं गरुडादित्यपवनाः नात्यशेरत नातिशयितवन्तः। ङित्वात्तङ् शीङोरट् शीङः सार्वधातुके गुणः॥ १॥ ज० म०

अभाय यथार्केण सुप्रातेन शरन्मुखे ।
गम्यमानं न तेनासीदगतं क्रामता पुरः ॥ २ ॥
वियति व्यत्यतन्वातां मूर्त्ती हरिपयोनिधी ।
व्यत्यैताञ्चोत्तमं मार्गमर्केन्द्रेन्दुनिषेवितम् ॥ ३ ॥

आत्मनेपदाधिकारः स च स्वमते साधिकारः । अगेत्यादि । ततः मैथिल्यानन्तरं हनूमान् समुद्रलङ्घनाय व्योम आकाशमगाधत प्रस्थितवान् गाधृङ् ओप्रतिष्ठालिप्सयोः ङित्त्वान्नवशः पमे इति सं अगाहतेति पाठे गाहूविलोडे इत्यस्मात् घो ठरुविग्रहः कामरूपित्वात्तदानीमुत्पादितमहाशरीरः सुपर्णार्कमारुता गरुड़सूर्य्यवायवोऽपि तस्य हनूमतो वेगं न अत्यशेरत नातिचक्रमुः शीङ्लजिस्वप्ने बानुबन्धत्वादादिकः ङानुबन्धानां शीङोरेणुरिति गुणः कान्तोरमिति रम् सान्तोऽदनत इति अत् शोभनानि पर्णानि पक्षा यस्य हिरण्मयत्वात् स सुपर्णः ॥ १ ॥ भ०

अभेत्यादि । यथा अर्केण सुप्रातेन सुप्रसातेन नीहाराद्यभावात् शोभनं प्रातरनेनेति सुप्रातः सुश्वेति समासान्तनिपातनं शरन्मुखे शरदारम्भे अभायत दीप्यते स्म भावकर्मणोरिति भावे तङ् तद्वत्तेनाभायत पुरोऽग्रतो यदर्केण गम्यमानमवष्टभ्यमानं वर्त्मेत्यर्थात् कर्मण्यात्मनेपदं तेन हनूमता क्रामता गच्छता शिति क्रम इति दीर्घत्वं नागतमासीत् अपितु सर्वमेव गतमिति ॥ २ ॥ ज० म०

अभेत्यादि । शरन्मुखे शरदारम्भे सुप्रातेन सुप्रभातेनार्केण यथा अभायत दीप्यते स्म तथा तेन हनूमता अभायतेति सम्बन्धः भातेर्भावे घ्या सं शोभनं प्रातरस्येति सोः स्वःप्रातर्भ्यां ड इति परः स्वमते प्रातरेव प्रातं स्वार्थे ष्णः व्यटेर्लोप इति टिलोपः तेन समासः पुरोऽग्रतोऽर्केण गम्यमानं वर्त्मेत्यर्थात् क्रामता गच्छता तेन हनूमता अगतं नासीत् किन्तु गतमेव तेजसा वेगेन च हनूमतः सूर्य्यसाम्यमुक्तं गमेः कर्मणि शानः ॥ २ ॥ भ०

वियेत्यादि । हरिपयोनिधी हनूमत्समुद्रौ मूर्त्ती स्वदेहौ विय-

व्यतिजिग्ये समुद्रोऽपि न धैर्य्यन्तस्य गच्छतः ।
अगच्छचास्य न गतं प्रचण्डोऽपि प्रभञ्जनः ॥ ४ ॥

आकाशे व्यत्यतन्वातां व्यतिविस्तारितवन्तौ तनोतेर्लङ् कर्त्तरि कर्मव्यतीहार इत्यात्मनेपदम् उत्तमञ्च मार्गम् अर्केन्द्रेन्दुनिषेवितं व्यत्यैतां व्यतिगतवन्तौ इणः परस्य लङ् कर्मव्यतीहार इत्यात्मनेपदं प्राप्तं न गतिहिंसार्थेभ्य इति गत्यर्थत्वात् प्रतिषिद्धं तेन तस्तामादेशः । तत्र हरेर्गच्छतः पुरतो यस्मिन् वियत्प्रदेशे स्वमूर्त्तिं विस्तारयितुमवसरो भविता तत्र पयोनिधिरूर्मिभिः स्वमूर्त्तिं वितस्तार पयोनिधेश्च वेलातटङ्गच्छतो यत्र स्वमूर्त्तिं वितस्तार तथा पयोनिधेर्यन्मार्गं गन्तुमवसरो भविता हरिरेत्य तं मार्गं गन्तुमैच्छत् यञ्च हरेर्मार्गं गन्तुमवसरो भविता तं मार्गं पयोनिधिरभ्रंलिहैरूर्मिभिरैच्छत् यत्र यत्क्रियावसरे क्रियां करोति स तत्र तत्क्रियाकारीत्युपचर्य्यते यथा देवदत्तसाध्यां क्रियां यज्ञदत्तः कुर्वन् तत्कारीत्युच्यते ततश्चेतरेणेतरसम्बन्धिन्याः क्रियायाः करणात् अन्यतरसम्बन्धिन्याश्चेतरकरणात् सम्भवति कर्मव्यतीहारः ॥ ३ ॥ ज० म०

वियतीत्यादि । हरिपयोनिधी हनूमत्समुद्रौ वियत्याकाशे मूर्त्तीं स्वदेहौ व्यत्यतन्वाताम् अन्योन्यं विस्तारितवन्तौ तनदुञ् विस्तृतौ व्यतीहारे गतिहिंसेत्यादिना मं सूर्य्येन्द्रचन्द्रनिषेवितम् अतएव उत्तमं मार्गम् आकाशं तौ व्यत्यैतां परस्परं जग्मतुः व्यतीहारे गतिहिंसाशब्दार्थहसान्येति गत्यर्थादिवर्जनात् न व्यतीहारे मं इणो ध्यां रूपम् ॥३॥ भ०

व्यतीत्यादि । तस्य हरेर्गच्छतः स्वदेहस्यात्मतां कर्त्तुं योऽवसरो भावी तत्र समुद्रो नातिशयधैर्य्यं कृतवान् तेन तस्य धैर्य्यं न जितं तदानीं तस्योद्धतकल्लोलत्वात् अपिशब्दाच्च हनूमानपि समुद्रस्य यानत्वं कर्त्तुं योऽवसरो भावी तत्र नातिशयधैर्य्यं कृतवान् तेन तस्य धैर्य्यं वा न जितं तदानीं तस्य विपुलकायत्वात् तदेवं हनूमतः समुद्रो हनूमानपि समुद्रस्य धैर्य्यं न व्यतिजिग्ये नाभिबभूव एकवचनस्य प्रत्येकाभिसम्बन्धात् कर्मव्यतीहारे पूर्ववदात्मनेपदं सन्लिटोर्जेरिति कुत्वं तस्य

व्यतिघ्नतीं पथि घ्नन्तं राक्षसीं पवनात्मजः ।
जघानाविश्य वदनं निर्यान् भित्त्वोदरं द्रुतम् ॥ ५ ॥
अन्योन्यं स्म व्यतियुतः शब्दान् शब्दैस्तु भीषणान् ।
उदन्वांश्चानिलोद्भूतो म्रियमाणा च राक्षसी ॥ ६ ॥

हनूमतो गतं गमनं प्रचण्डोऽपि महान् प्रभञ्जनः वायुर्न व्यत्यगच्छत् न प्राप्नवान् ॥ ४ ॥ ज० म०

व्यतीत्यादि। गच्छतस्तस्य हनूमतो धैर्य्यं समुद्रोऽपि न व्यतिजिग्ये नाभिभूतवान् निर्भयत्वात् अपिशब्दात् सोऽपि समुद्रस्य धैर्य्यं न व्यतिजिग्ये उद्वेगात् क्षोभेऽपि मर्य्यादालङ्घनात् एकवचनेऽपि उभयोरुभयापेक्षित्वाद्व्यतीहारः जेर्गिः सन्लिटोरिति ग्यादेशः। प्रचण्डोऽपि प्रभञ्जनो वायुरस्य हनूमतो गतं गमनं न व्यगच्छत् न प्राप्नवान् तस्यातिवेगत्वात् क्तस्येति त्वमावक्तेति भावक्तेन योगे कर्त्तरि षष्ठी ॥४॥भ०

तस्यातिजवेन गच्छतः पथि राक्षसी संप्राप्ता तामसौ व्यापादितवानित्याह व्यतीत्यादि। हनिष्यास्येनमिति राक्षस्या यो बधकरणावसरः तत्र घ्नन् यः कश्चित् प्राप्तः तस्यैनां हनिष्यामीति यो बधकरणावसरः तत्र घ्नतीन्तद्देवमितरेतरक्रियाकरणेन व्यतिघ्नतीं राक्षसीं न गतीत्यादिना हिंसार्थत्वादात्मनेपदप्रतिषेधः तां पवनात्मजो हनूमान् जघान कथं वदनमाविश्य उदरम्भित्त्वा द्रुतं निर्यान् निर्गच्छन् यातेः शतरि रूपम् ॥ ५ ॥ ज० म०

व्यतीत्यादि। पवनात्मजो हनूमान् गच्छन्नेव पथि संप्राप्तां राक्षसीं जघान किं कुर्वन् द्रुतं प्रविश्य उदरं भित्त्वा विदार्य्य निर्यान् निर्गच्छन् यातेः शतः। कीदृशं घ्नन्तं जनं व्यतिघ्नतीम् अन्योन्यं घ्नतीं हिंसार्थवर्जनात् व्यतीहारेऽपि न तम् ॥ ५ ॥ भ०

अन्योन्यमित्यादि। अन्योन्यमित्यन्योन्यस्येत्यर्थः कर्मव्यतीहारे सर्वनाम्नो द्वे भवतः समासवच्च बहुलं यदा नासमासवत् तदा पूर्वपदस्य च प्रथमैकवचने स्त्रीनपुंसकयोरामभाव इति वक्तव्यम् अन्योन्यस्य सम्बन्धिभिः शब्दैः उदन्वद्राक्षसौ शब्दान् भीषणानात्मीयान् व्यतियुतः स्म मिश्रित-

न्यविक्षत महाग्राहसङ्कुलं मकरालयम् ।
सैका बह्वीनां कुर्वाणा नक्राणामाश्रितभ्रवम् ॥ ७ ॥
कृतेनोपकृतं वायोः परिक्रीणानमुत्थितम् ।
पित्रा संरक्षितं शक्रात् स मैनाकाद्रिमैक्षत ॥ ८ ॥

वन्तौ युमिश्रण इत्यस्माल्लट् स इति भूते लट् इतरेतरेत्यादिना कर्मव्यतीहार आत्मनेपदप्रतिषेधः ततोदन्वतः शब्दकरणाद्यो भीषणशब्दमिश्रणावसरो भावी तत्र राक्षसी म्रियमाणा शब्दान् भीषणानुदन्वच्छब्दैर्युयाव राक्षस्याः शब्दकरणाद्यो भीषणशब्दमिश्रणावसरो भावी ततोदन्वाननिलोद्धूतः शब्दान् भीषणान् राक्षसीशब्दैर्युयाव ॥६॥ज०म०

अन्योन्यमित्यादि । तदानीं हनुमद्वेगेनानिलोद्धूत उदन्वान् समुद्रः म्रियमाणा राक्षसी उभावेतौ शब्दैर्भीषणान् शब्दान् अन्योन्यं व्यतियुतः स संमिश्रितवन्तौ युलमिश्रणे कौस्नातीत इति अन्योन्यार्थे इत्युक्ते व्यतीहारेऽपि सं अन्योन्यार्थ इति ज्ञापकात् व्यतीहारेऽन्योन्यादयो मनीषादित्वान्निपातिताः उदकस्य वतौ लोकोपचारादुदनादेशः उदन्शब्दोऽप्यस्ति उक्तं हि पदादयः पृथक्शब्दा इत्येके इति ॥ ६ ॥ म०

न्यवीत्यादि । महद्भिर्ग्राहैः सङ्कुलं मकरालयं समुद्रं न्यविक्षत प्रविष्टवती नेर्विश इत्यात्मनेपदं शल इगुपधादनिटः क्सः बह्वीनां नक्राणामेकापि सती स्वाश्रितभ्रुवं सुष्ठु तस्मिं कुर्वाणा आश्रिते भुव इति भावे खच् ॥ ७ ॥ ज० म०

न्यवीत्यादि । राक्षसी एकापि सती बह्वीनां नक्राणां कुम्भीराणाम् आश्रितभ्रवं सुष्ठु दृप्ततां महाशरीरत्वात् कुर्वाणा मकरालयं समुद्रं न्यविक्षत प्रविष्टवती विपराजीत्यादिना निपूर्वविशतेर्म् हपशोऽनिमिणुङ इति सक् । कीदृशं महद्भिर्ग्राहैर्जलजन्तुभिः सङ्कुलं व्याप्तम् आङ्पूर्वोऽश्नातिस्तृप्त्यर्थः भावभेत्वाश्रितादभुव इति खः ॥ ७ ॥ म०

कृतेत्यादि । स हनूमान् समुद्रादुत्थितं मैनाकाद्रिमैक्षत वायोरुपकृतमुपकारकृतेन प्रत्युपकारेण परिक्रीणानं परिक्रयं विचिन्वन्तं

खं पराजयमानोऽसावुन्नत्या पवनात्मजम् ।
जगादाद्रिर्विजेषीष्ठा मयि विश्रम्य वैरिणम् ॥ ९ ॥
फलान्यादत्स्व चित्राणि परिक्रीडस्व सानुषु ।
साध्वनुक्रीडमानानि पश्य वृन्दानि पक्षिणाम् ॥ १० ॥

परिव्ययेभ्यः क्रिय इत्यकर्त्रभिप्रायविषयम् आत्मनेपदं पित्रा वायुना रक्षितं शक्रात् तेन हि पक्षच्छेदकाले महता वेगेन समुद्रं नीत्वा रक्षित इति श्रूयते ॥ ८ ॥ ज० म०

तत इत्यादि । स हनूमान् समुद्रादुत्थितं मैनाकनामानमद्रिम् ऐक्षत दृष्टवान् ईक्षङ् दर्शने अनुदात्तेत्त्वात् कीदृशं शक्रात् पक्षच्छेदोद्यतात् पित्रा वायुना संरक्षितम् अतएव वायोरुपकृतम् उपकारं कृतेन प्रत्युपकारेण परिक्रीणानं परिवर्त्तयन्तं विपराजीति परिपूर्वक्रीञो मं शानः ॥ ८ ॥ भ०

खमित्यादि । असावद्रिः उन्नत्या उन्नततया खं पराजयमानोऽभिभवन् पवनात्मजं जगाद मयि विश्रम्य स्थित्वा वैरिणं शत्रुं विजेषीष्ठाः त्वमभिभूयाः आशिषि लिङ् उभयत्रापि विपराभ्यां जेरिति तङ् ॥ ९ ॥ ज० म०

खमित्यादि । असौ अद्रिः पवनात्मजं जगाद कीदृशः सन् उन्नत्या उन्नततया खमाकाशं पराजयमानः अभिभवन् विपराजीति मं किं जगादेत्याह मयि विश्रम्य विश्रामं कृत्वा वैरिणं विजेषीष्ठाः अभिभूयाः आशिषि पूर्ववन्मम् ॥ ९ ॥ भ०

फलानीत्यादि । चित्राणि नानाविधानि फलानि आदत्स्व गृहाण आङो दो नास्यविहरणे इत्यात्मनेपदं सानुषु समैकदेशेषु परिक्रीडस्व विहर पक्षिणाञ्च वृन्दानि साधु शोभनम् अनुक्रीडमानानि विहरन्ति सन्ति पश्य उभयत्र क्रीडोऽनुसम्परिभ्यश्चेति तङ् ॥१०॥ज०म०

फलेत्यादि । चित्राणि अद्भुतानि फलानि त्वमादत्स्व गृहाण आदोऽनास्यप्रसारे इति मं आमन्त्रणे गो आध्वरोरित्यालोपः । मम सानुषु एकदेशेषु परिक्रीडस्व विहर पर्य्यन्ववाङः क्रीड इति मं

क्षणं भद्रावतिष्ठस्व ततः प्रस्थास्यसे पुनः।
न तत् संस्थास्यते कार्य्यं दचेणोरीकृतं त्वया ॥ ११ ॥
त्वयि नस्तिष्ठते प्रीतिस्तुभ्यं तिष्ठामहे वयम्।
उत्तिष्ठमानं मित्रार्थे कस्त्वां न बहु मन्यते ॥ १२ ॥

पचिणां द्वन्द्वानि पश्य कीदृशानि साधु शोभनम् अनुक्रीड़मानानि विहरन्ति पूर्ववन्मम् ॥ १० ॥ भ०

क्षणमित्यादि। हे भद्र! कल्याण! क्षणमवतिष्ठस्व ततः पश्चात् प्रस्थास्यसे यास्यसि यच्च कार्य्यं करणीयं दक्षेणानलसेन त्वया उरीकृतमङ्गीकृतं न च संस्थास्यते अपितु निष्पत्स्यत एवेत्यर्थः सर्वत्र समवप्रविभ्यः स्थः इति तङ् ॥ ११ ॥ ज० म०

क्षणमित्यादि। हे भद्र! कल्याणयुक्त! त्वं क्षणम् अवतिष्ठस्व ततः पुनः प्रस्थास्यसे यास्यसि दक्षेण अनलसेन त्वया उरीकृतम् अङ्गीकृतम् कार्य्यं न च संस्थास्यते न नाशं गमिष्यति सम्पत्स्यत एवेति भावः प्रतिज्ञानिर्णयेत्यादिना अवसंप्रपूर्वतिष्ठतेर्मम् ॥ ११ ॥ भ०

त्वयीत्यादि। त्वयि विषये अस्माकं प्रीतिरस्ति तेन संशये अस्माभिरन्यो निर्णेता नान्वेषणीयः किन्तु नोऽस्माकं प्रीतिरेव निर्णयं पश्यन्ती त्वयि तिष्ठते प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदं विवादपदनिर्णेता स्थेय उच्यते तुभ्यं तिष्ठामहे वयमिति त्वयि विषये अस्माकं चेतो वर्त्तत इति स्वाभिप्रायं तुभ्यं तिष्ठामहे स्वाभिप्रायं निवेदयाम इत्यर्थः अत्र प्रकाशनञ्च स्वाभिप्रायकथनं श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान इति सम्प्रदानसंज्ञायां चतुर्थी कस्मादेवं मां श्लाघस इति वेदाह उत्तिष्ठमानं यतमानम् उदोऽनूर्द्ध्वकर्मणीत्यात्मनेपदं कस्त्वां न बहुमन्यते न श्लाघते ॥१२॥ज०म०

त्वयीत्यादि। त्वयि नोऽस्माकं प्रीतिस्तिष्ठते निश्चयेनास्ति तद्विषयेऽस्माकं प्रीतिरस्ति न वेति सन्देहे अस्माभिरन्यो निर्णेता नान्वेषणीयः किन्त्वस्माकं प्रीतिरेव त्वां निर्णेतारं करोतीति निर्णयार्थोऽत्र स्थाधातुः त्वमस्मदाप्तो न वेत्यत्र त्वद्विषयेप्रीतिर्निर्णयं करोतीत्यन्ये वयं तुभ्यं तिष्ठामहे स्थित्वा स्वाभिप्रायं प्रकाशयामः प्रकाशार्थोऽत्र स्थाधातुः

ये सूर्य्यमुपतिष्ठन्ते मन्त्रैः सन्ध्यात्रयं द्विजाः ।
रक्षोभिस्तापितास्तेऽपि सिद्धिं ध्यायन्ति तेऽधुना ॥१३॥
अव्यग्रमुपतिष्ठस्व वीर! वायोरहं सुहृत् ।
रविर्वितपतेऽत्यर्थमाश्वस्य मयि गम्यताम् ॥ १४ ॥

यस्मै दित्सेत्यादिना सम्प्रदानत्वं प्रतिज्ञानिर्णयेत्यादिना सं अत्र प्रकाशः स्वाभिप्रायकथनं कथं मह्यं श्लाघसे इत्याह मित्रार्थे रामार्थे उत्तिष्ठमानं यतमानं त्वां को न बहु मन्यते न श्लाघते अपि तु सर्व एव उद्दोऽनुबद्धे इति सम् ॥ १२ ॥ भ०

य इत्यादि। ये द्विजा मन्त्रैः करणभूतैः सूर्य्यमुपतिष्ठन्ते प्रत्युपासते उपान्मन्त्रकरण इत्यात्मनेपदं सन्ध्यात्रयं त्रिसन्ध्यम् अत्यन्तसंयोगे द्वितीया तेऽपि रक्षोभिस्तापिताः उपद्रुताः अधुना ते सिद्धिं ध्यायन्ति किं पुनरहं यस्ते पितुः सुहृत् तदेव दर्शयन्नाह ॥ १३ ॥ ज० म०

य इत्यादि। ये द्विजा ब्राह्मणा मन्त्रैः करणभूतैः सन्ध्यात्रयं व्याप्य सूर्य्यमुपतिष्ठन्ते उपासते मन्त्रेणोपादिति सं तेऽपि द्विजा रक्षोभिस्तापिता उपद्रुताः सन्तः अधुना इदानीं तव सिद्धिं ध्यायन्ति चिन्तयन्ति अहन्तु तव पितुः सुहृत् सुतरां तथेति भावः यद्वा द्विजानुकूलत्वादपि त्वं श्लाघ्य इति भावः सन्ध्यात्रयमिति सदाध्वादीति द्वितीया ॥ १३ ॥ भ०

अव्येत्यादि। हे वीर! अव्यग्रमनाकुलं मय्युपतिष्ठस्व सन्निहितो भव अकर्मकाच्चेत्यात्मनेपदं यतो वायोस्तव पितुरहं सुहृत् रविरत्यर्थं वितपते दीप्यते उद्विभ्यामित्यात्मनेपदं तत्राकर्मकादिति वर्त्तते तस्मादाश्वस्य विश्रम्य गम्यताम् ॥ १४ ॥ ज० म०

अव्येत्यादि। हे वीर! अव्यग्रमनाकुलं यथा स्यात्तथा त्वमुपतिष्ठस्व सन्निहितो भव अठादिति सं यतोऽहं वायोस्तव पितुः सुहृन्मितं विश्रामौचित्यं दर्शयति रविरत्यर्थं वितपते दीप्यते व्युत्तप इति सं अठत्वात् अतएव मयि आश्वस्य प्राणनिर्वृतिं प्राप्य त्वया गम्यताम् ॥ १४ ॥ भ०

तीव्रमुत्तपमानोऽयमशक्यः सोढुमातपः।
आघ्नान इव सन्दीप्तैरलातैः सर्वतो मुहुः॥ १५॥
संशृणुष्व कपे! मत्कैः सङ्गच्छस्व वनैः शुभैः।
समारन्त ममाभीष्टाः सङ्कल्पास्त्वय्युपागते॥ १६॥

तीव्रेत्यादि। तीव्रं सुष्ठु उत्तपमानो दीप्यमान आतपः सोढु-मशक्यः पूर्ववदात्मनेपदम् अलातैः उल्मुकैः सन्दीप्तैः सर्वत आघ्नान इव ताड़यन्निव आङोयमहन इत्यविवक्षितकर्मकत्वादात्मनेपदं गमहने-त्युपधालोपः होहन्तेरिति कुत्वम्॥ १५॥ ज० म०

तीव्रेत्यादि। पुनर्विश्रामौचित्यमाह तीव्रमुत्तपमानो दीप्यमानो-ऽयमातपः सोढुं न शक्यः पूर्ववत् मं सन्दीप्तैरलातैरङ्गारैर्मुहुर्वारं वारं सर्वत आघ्नान इव ताड़यन्निव आत्माङ्गादाङ्घ्नाहनयम इति मं अविवक्षितकर्मत्वात् अङ्गारोऽलातमुल्मुकमित्यमरः। आलातैरिति पाठे स्वार्थे ष्णः विद्यादलातमालातमिति द्विरूपकोषः॥ १५॥ म०

संशृण्वित्यादि। हे कपे! संशृणुष्व आकर्णय समोगमृच्छीत्या-दिविवक्षितकर्मकत्वादात्मनेपदं शुभैः शोभमानैः इगुपधलक्षणः कः वनैर्मत्कैः मत्स्वामिकैः अहं स्वामी येषामिति स एषां ग्रामणीरिति कः प्रत्ययोत्तरपदयोश्चेति मदादेशः सङ्गच्छस्व सङ्गतो भव पूर्ववदात्मने-पदं समारन्त ममाभीष्टा इति ममाभिप्रेता ये सङ्कल्पा अभिप्रायाः कदा नु मे सुहृत्तया वा कश्चिदेष्यति यस्याहमुपयोगी स्यामिति ते समारन्त आगताः त्वय्युपागते सति अर्त्तेर्लुङि पूर्ववदात्मनेपदं सर्त्ति-शास्त्यर्त्तिभ्य इत्यङि ऋदृशोऽङि गुणः आङ्जादीनाम् भाषाविषयस्य प्रयोगः॥ १६॥ ज० म०

समित्यादि। हे कपे! संशृणुष्व आकर्णय मत्कैर्मत्स्वामिकैः शुभैः शोभमानैर्निर्भयत्वेन कल्याणयुक्तैर्वा वनैः सह सङ्गच्छस्व सङ्गतो भव अहं स्वामी येषामिति विकारसङ्घेत्यादिना कः समे मानीत्यर्थे वा त्वयि उपागते सति ममाभीष्टा वाञ्छिताः सङ्कल्पा अभिप्रायाः सुहृद्दर्शनादिरूपाः समारन्त सङ्गतवन्तः सङ्गतो सर्वत्र समोगमृच्छ

के न संविद्रते वायोर्मैनाकाद्रिर्यथा सखा ।
यत्नादुपाह्वये प्रीतः संह्वयस्व विवक्षितम् ॥ १७ ॥
द्यामिवाह्वयमानन्तमवोचद्भूधरं कपिः ।
उपकुर्वन्तमत्यर्थं प्रकुर्वाणोऽनुजीविवत् ॥ १८ ॥

इत्यादिना मं श्नोः श्नुर्वे इति श्नुः निस्व वक्तारस्येत्यादिना वर्त्तेर्ङः इग्नोर्णुरिति गुणः ॥ १६ ॥ भ०

न चैवं मिथ्या वायुर्मे सुहृदित्याह के नेत्यादि । वायोर्मैनाकाद्रिर्यथा सखेति के न संविद्रतेन जानन्ति वेत्तेः पूर्ववदात्मनेपदं वेत्तेर्विभाषेति रुट् तस्मात् प्रीतः सन् अहं यत्नादुपाह्वये भवन्तमाह्वयामि ततः संह्वयस्व कथय विवक्षितमभिप्रेतं निसमुपविभ्योह्व इत्यकर्त्रभिप्राये जट्लोटोरात्मनेपदं ततोऽकर्मकादिति निवृत्तं सामान्येन विधानम् ॥ १७ ॥ ज०

के नेत्यादि । कथितः सखा त्वमसीति किंप्रमाणमित्याशङ्क्याह मैनाकाद्रिर्वायोर्यथा सखा तथा के जना न संविद्रते न जानन्ति अपि तु सर्व एव समीगच्छेति मं अविवक्षितकर्मत्वात् मान्तोरमिति रम् अतएवाहं प्रीतः सन् यत्नादुपाह्वये त्वामाह्वयामि त्वमपि विवक्षितं वक्तुमिष्टं संह्वय संकथय इति जगादाद्रिरिति सम्बन्धः निसंव्युपह्व इति मम् ॥ १७ ॥ भ०

द्यामित्यादि । द्यामिवाकाशमिवाह्वयमानं महत्तया स्पर्द्धमानं स्पर्द्धायां माङ् इत्यात्मनेपदम् अत्यर्थमुपकुर्वन्तम् आतिथ्येन तमीदृशं भूधरमवोचत् कपिः प्रकुर्वाणः सेवमानोऽनुजीविवत् भृत्यवत् गन्धनेत्यादिना सेवने तङ् ॥ १८ ॥ ज० भ०

द्यामित्यादि । कपिर्हनूमान् तं भूधरं मैनाकं पर्वतम् अवोचत् उक्तवान् कीदृशं द्यामाकाशमाह्वयमानमिव महत्त्वेन स्पर्द्धमानमिव स्पर्द्धायामाङ् इति मं अत्यर्थमुपकुर्वाणमुपकारोद्यतं कीदृशः कपिः अनुजीविवत् भृत्यवत् प्रकुर्वाणः सेवमानः सूचनावक्षेपणेत्यादिना सेवायां मम् ॥ १८ ॥ भ०

कुलभार्य्यां प्रकुर्वाणमहं द्रष्टुं दशाननम्।
यामि त्वरावान् शैलेन्द्र! मा कस्यचिदुपस्कृथाः ॥१९॥
योऽपचक्रे वनात्सीतामधिचक्रे न यं हरिः।
विकुर्वाणः स्वरानद्य बलं तस्य निहन्म्यहम् ॥ २० ॥

कुलेत्यादि। अहं दशाननं द्रष्टुं यामि कुलभार्य्यां प्रकुर्वाणं कुल-नारीमभिगच्छन्तं तस्यां सहसा प्रवर्त्तमानमित्यर्थः साहसिक्ये तङ् त्वरावान् त्वरायुक्तः अतः शैलेन्द्र! मा कस्यचिद्दर्शनपानादिकस्य उप-स्कृथाः अतिशययन्तं माकार्षीरित्यर्थः माङिलुङ् प्रतियत्ने तङ् तना-दिभ्यस्तथासोरिति सिचो लुक् उपात्प्रतियत्न इति सुट् कस्यचिदिति कृञः प्रतियत्न इति कर्मणि षष्ठी ॥ १९ ॥ ज० म०

कुलेत्यादि। किमवोचदित्याह हे शैलेन्द्र! अहं त्वरायुक्तः सन् दशाननं द्रष्टुं यामि कीदृशं कुलभार्य्यां कुलपालिकां प्रकुर्वाणं साहसे-नाभिगच्छन्तं तस्यां साहसात् प्रवर्त्तमानमित्यर्थः सूचनावक्षेपणेत्या-दिना साहसे मं कुलस्त्री कुलपालिकेत्यमरः। अतएव कस्यचित् मा उपस्कृथाः कस्यापि द्रव्यस्य भोज्यस्य पेयस्य वा मदर्थं प्रतियत्नं न कुरु पूर्वेण प्रतियत्ने मं सतोगुणान्तराधानं प्रतियत्नः उत्कर्षसमीहा प्रतियत्नमिति केचित्। सम्परेः समुपादिति सुम् कृस्खाञ्कसीति सलोपः कस्यचिदिति समार्थेनेत्यादिना कर्मणि षष्ठी एधोदकस्योप-स्कुरुत इत्युदाहरता प्रतियत्ने कृञः कर्मणि न द्वितीया इति सूचितं गुणोत्कर्षे कृञः कर्मणि षष्ठीति परः ॥ १९ ॥ भ०

योऽमेत्यादि। यः सीतामपचक्रे अभिबभूव अपचेपणे तङ् वना-दिति वनमुपगम्य ल्यब्लोपे कर्मणि पञ्चमी यं हरिरिन्द्रो नाधिचक्रे न प्रसेहे अर्थः प्रसहन इति तङ् तस्य बलं दशाननस्य सामर्थ्यं कीदृशं स्वरान् विकुर्वाणं विविधान् स्वरान् कुर्वाणं वेः शब्दकर्मण इति तङ् तस्य दशाननस्य बलं निहन्मि ॥ २० ॥ ज० म०

य इत्यादि। यो वनात् सीतामपचक्रे प्रतिभूतवान् सूचनावक्षे-पणेत्यादिना अपचेपणे मं सूचने भमिति केचित् तदापकारं प्रयुज्य

विकुर्वे नगरे तस्य पापस्याद्य रघुद्विषः ।
विनेष्ये वा प्रियान् प्राणानुदानेष्येऽथवा यशः ॥ २१ ॥
विनेष्ये क्रोधमथवा क्रममाणोऽरिसंसदि ।
इत्युक्त्वा खे पराक्रंस्त तूर्णं सूनुर्नभस्वतः ॥ २२ ॥

हिंसां सूचयतीत्यर्थः वनादिति हेतौ पञ्चमी वनं प्राप्येति यबर्थे वा हरिरिन्द्रो यं नाधिचक्रे नाभिभूतवान् अधेः प्रसहनेऽवति भ्रंशिक्त्तिरभिभवः तस्य दशाननस्य बलं शक्तिमहमद्य निहन्मि कीदृशः स्वरान् विविधान् कुर्वाणः द्वितीयान्तपाठे यमित्यस्य विशेषणं शब्दार्थादीवेरिति तङ् ॥ २० ॥ भ०

विकुर्व इत्यादि । तस्य रघुद्विषो रामशत्रोः पापस्य नगरे पुर्यामहमद्य विकुर्वे विविधं चेष्टे अकर्मकाच्चेति तङ् तत्र विकुर्वाणो यदि वा प्रियानपि प्राणान् स्वाम्यर्थे विनेष्ये अपनेष्यामि सम्माननेत्यादिना व्यये तङ् यतो धर्मादिषु विनियोगो व्ययः यशो वा उदानेष्ये ऊर्द्ध्वं नेष्यामि तस्यापकारकरणात् अतोत्क्षेपणे तङ् उत्क्षेपणमुत्क्षेपणम् ॥ २१ ॥ ज० म०

विकुर्वे इत्यादि । तस्य पापाचारस्य रघूणां रामादीनां द्विषो रावणस्य नगरे लङ्कायाम् अहमद्य विकुर्वे विविधं चेष्टे शब्दार्थादेरिति अकर्मकत्वान्म तत्र च विकुर्वाणोऽहं प्रियानपि प्राणान् वा विनेष्ये स्वाम्यर्थे त्यक्ष्यामि सम्मानाचार्योत्क्षेप इत्यादिना व्ययार्थे म व्ययो धर्मादिषु विनियोगः अथवा यश उदानेष्ये ऊर्द्ध्वं नेष्यामि पूर्वे णोत्क्षेपणे तङ् ॥ २१ ॥ भ०

विन इत्यादि । यदि वा क्रोधमात्मनो विनेष्ये अपनेष्यामि कर्तृस्थे चेति तङ् कर्तृस्थस्य क्रोधकर्मणोऽशरीरत्वात् अत्र व्ययो न सम्भवतीति अरिसंसदि शत्रुसभायां क्रममाणः अप्रतिबन्धेन प्रवर्त्तमानः वृत्तिसर्गेत्यादिना वृत्तौ तङ् वृत्तिरप्रतिबन्धः इत्येवमुक्त्वा सूनुर्नभस्वतः वायोस्तनयः खे तूर्णं पराक्रंस्त शीघ्रमुत्पेदे उपपराभ्यामित्यनेन सर्गे तङ् सर्ग उत्साहः ॥ २२ ॥ ज० म०

परीक्षितुमुपाक्रंस्त राक्षसी तस्य विक्रमम् ।
दिवमाक्रममाणेव केतुताराभयप्रदा ॥ २३ ॥
जले विक्रममाणाया हनूमान् शतयोजनम् ।
आस्यं प्रविश्य निरगादणूभूयाप्रचेतितः ॥ २४ ॥

विनेष्य इत्यादि । अथवा क्रोधं विनेष्ये अपनेष्यामि शत्रुहननात् कस्यामूर्त्तद्वादिति सं अमूर्त्तमशरीरं कर्तृस्थादुक्तकर्मकाद्विपूर्वनीज आत्मनेपदमिति विद्यासागरः । सम्मतेऽपि शब्दद्वाद्वेरित्यतो मण्डूकप्लुत्या वेरित्यनुवर्त्तते इति वाच्यं क्रोधं विनयत इत्युदाहरणदर्शनात् । अन्ये तु विपूर्वत्वं न वदन्ति तन्न साधु, विगणय्य नयन्ति पौरुषं विहितक्रोधरया जिगीषव इत्यादिदर्शनात् । किं कुर्वन् अरिसंसदि शत्रुसभायां क्रममाणः अप्रतिबन्धेन चेष्टमानः वृत्त्युत्साहेत्यादिना सं वृत्तिरप्रतिबन्धः इत्येवमुक्त्वा नभस्वतो वायोः सूनुः पुत्रो हनूमान् खे आकाशे तूर्णं शीघ्रं पराक्रंस्त उत्साहं चकार पूर्वेणोत्साहे सं आस्कानन्दपोऽलोत्साहः स्नुक्रमोऽस इति नेम् ॥ २२ ॥ भ०

परीत्यादि । तस्य हनूमतो विक्रमं शौर्य्यं परीक्षितुं राक्षसी उपाक्रंस्त उत्सेहे पूर्ववत्तङ् । दिवमाक्रममाणेव यथा केतुः स्वर्भानुः तारा नभस्युद्गच्छति भयङ्करा आङः उद्गमन इति तङ् तत्र हि ज्योतिरुद्गमन इत्युक्तं केतुतारायाश्च ज्योतिःस्वभावत्वात् ॥ २३ ॥ ज० म०

परीत्यादि । तस्य हनूमतो विक्रमं शौर्य्यं परीक्षितुं राक्षसी उपाक्रंस्त उत्सहते स्म पूर्ववत् सं दिवमाकाशमाक्रममाणा उद्गमपूर्वकं प्राप्नुवती केतुस्वभावा तारेव भयप्रदा भयं प्रददातीति हनजनादिति डुः आङोभोद्गम इति सं आक्रामति धूमः स्वमित्यत्र उद्गमो न विवक्षते किन्तु व्याप्तिमात्रम् ॥ २२ ॥ भ०

जल इत्यादि । विक्रममाणायाः पद्भ्यां विचरन्त्याः वेः पादविहरण इति तङ्, जलग्रहणात् गतिविशेषं दर्शयति । आस्यं शतयोजनं शतं योजनानि यस्य प्रमाणमतः तदणूभूय सूक्ष्मीभूय प्रविश्य निरगात् निर्गत उदरं विदार्येत्यर्थात् अप्रचेतितः अविज्ञातः ॥ २४ ॥ ज० म०

द्रष्टुं प्रक्रममाणोऽसौ सीतामम्भोनिधेस्तटम्।
उपाक्रंस्ताकुलं घोरैः क्रममाणैर्निशाचरैः ॥ २५ ॥
आत्मानमपजानानः शशमात्रोऽनयद्दिनम्।
आसे रात्राविति प्राज्ञः प्रत्यज्ञास्त क्रियापटुः ॥२६॥

जल इत्यादि। जले विक्रममाणायाः पङ्क्तां विचरन्त्या राक्षस्याः शतयोजनमास्यं प्रविश्य हनूमान् अणूभूय सूक्ष्मीभूय अप्रचेतितस्तया अपरिज्ञातः सन् निरगात् निर्गतः कर्णपथेनेत्यर्थात् उदरं भित्त्वेत्यन्ये तच्च रामायणविरुद्धम्। शतं योजनानि प्रमाणतो यस्येति विग्रहः वेः पद्भिरिति मं पद्भिरिति बहुत्वनिर्देशेन पादमात्रस्य करणत्वे वेः क्रमो ममिति बोध्यं न तु साधु विक्रमते वाजीत्युदाहरणदर्शनात् बहुपादकरणत्वं वाच्यं वेः पङ्क्तामिति कातन्त्रसूत्रे द्वित्वमुपलक्षणं तेन तन्मते साधु विक्रमते वाजीत्यादि सिद्धम् ॥२४॥ भ०

द्रष्टुमित्यादि। असौ हनूमान् सीतां द्रष्टुं प्रक्रममाणः आरभमाणः आदिकर्म यथा भोक्तुं प्रक्रमते इति उदधेस्तटमुपाक्रंस्त गन्तुं प्रारब्धवानित्यर्थः ततश्च प्रोपयोरादिकर्मणि समानार्थत्वं वृ प्रोपाभ्यां समार्थाभ्यामिति तङ्। घोरैः रौद्रैः निशाचरैराकुलं व्याप्तं तटं क्रममाणैः इतस्ततो गच्छद्भिः अनुपसर्गाद्वेति तङ् ॥ २५ ॥ ज० म०

द्रष्टुमित्यादि। असौ हनूमान् निर्गतः सन् सीतां द्रष्टुं प्रक्रममाण आरभमाण उदधेस्तटमुपाक्रंस्त गन्तुमारभते स्म यद्यपि भोक्तुमुपक्रमते इत्यादावारम्भमात्रमुपक्रमेरर्थस्तथापीह गमनारम्भो वाच्यः वाचनिकत्वात् द्रष्टुमित्यस्यानुषङ्गेण अम्भोनिधेस्तटमुपाक्रंस्तेति वा प्रोपादारम्भे इति मं। घोरैर्भयानकैर्निशाचरैराकुलं व्याप्तं क्रममाणैरितस्ततो गच्छद्भिः वागेरिति मम् ॥ २५ ॥ भ०

आत्मेत्यादि। मा कश्चिद्द्राक्षीदिति तथाविधमात्मानं शरीरमपजानानः अपह्नुवानः अपह्नवे ज्ञ इति तङ्। यो हि शशमात्रो भूत्वा स्थितः तेन कथमात्मा लोके नापह्नुपितः स्यात् अनयद्दिनम् अगमयद्दिनं आसे रात्राविति प्रत्यज्ञास्त प्रतिज्ञातवानित्यर्थः सम्प्रतिभ्या-

संज्ञानानान् परिहरन् रावणानुचरान् बहून्।
लङ्कां समाविशद्रात्रौ वदमानोऽरिदुर्गमाम्॥ २७॥
किञ्चिन्नोपावदिष्टासौ केनचिद् व्यवदिष्ट न।

अनाध्यान इत्यात्मनेपदं लुङो भवति आत्मानञ्चोत्कण्ठनं चाख्ये इत्य-कर्मकाच्चेत्यकर्मकक्रियावचनत्वादात्मनेपदं प्राज्ञः क्रियापटुरिति बुद्धि-कौशलं कर्मकौशलञ्च दर्शयति॥ २६॥ ज० म०

आत्मानमित्यादि। असौ शशमात्रः शशपरिमाणो भूत्वा दिन-मनयत् गमयामास दृश्यमानद्वयपट्मान इति मात्रट् कथं तथाविध-स्याल्पत्वमित्याह आत्मानमपजानानः अपह्नुवानः निह्नवे च इति सं रात्रावहं चाख्ये इति प्रत्यज्ञास्त प्रतिज्ञातवान् संप्रतेरस्मृताविति सं चाख्ये इति अद्‌धादिति सं अविवक्षितकर्मत्वात् जिज्ञरन्तेत्यादिना वा प्राज्ञः क्रियापटुरिति पदद्वयेन बुद्धिकौशलं क्रियाकौशलञ्च दर्शि-तम्॥ २६॥ भ०

सञ्ज्ञेत्यादि। रावणस्यार्थेषु कार्येषु ये चरन्तीति चरेटः तान् बहून् सञ्जानानान् चेतयतः परिहरन् अनाध्याने लङ् रात्रौ लङ्कां समाविशत् प्रविष्टवान् अरिदुर्गमां रात्रुदुर्गमां वदमानो भासमानः भासनोपसम्भाषेत्यादिना आत्मनेपदम्॥ २७॥ ज० म०

समित्यादि। असौ हनूमान् रात्रौ लङ्कायां समाविशत् प्रविष्ट-वान् कीदृशः वदमानः शोभमानो वदन् शोभोपलक्षितं शोभाहेतुकं वा यथा स्यात्तथा कथयन् वा ज्ञानयत्नप्रलोभे वद इति सं ज्ञानपदेन ज्ञानपूर्वकत्वात् शोभाप्युच्यत इति कातन्त्रटीकायां व्याख्यातत्वात् प्रका-शनादौ वद इति क्रमदीश्वरस्थलदर्शनाच्च शोभा च वदत्यर्थस्य लक्षण-भावेन हेतुभावेन वा विशेषणं न तु तन्मात्रं वाच्यमिति न्यासः। बहून् रावणस्यानुचरान् सेवकान् परिहरन् कीदृशान् संजानानान् चेतयमानान् संप्रतेरस्मृताविति सं कीदृशीं लङ्काम् अरिदुर्गमां शत्रुभि-र्दुरापाम्॥ २७॥ भ०

किञ्चिदित्यादि। असौ प्रविष्टः सन् न कञ्चिदुपावदिष्ट उपसा-

शृण्वन् संप्रवदमानाद्रावणस्य गुणान् जनात् ॥ २८ ॥

जल्पितोत्कृष्टसङ्गीतप्रनृत्तस्मितवल्गितैः ।
घोषस्यान्ववदिष्टेव लङ्का पूतक्रतोः पुरः ॥ २९ ॥

न्वितवान् उपसम्भाषायां तङ् केनचिद्व्यवदिष्ट न । न भाषितवान् विमतौ तङ् । विमतिर्नानामतिः संशृण्वन् श्याकर्णयन् जनान् प्रवदमानात् रावणस्य सम्बन्धिनो गुणान् सम्भूय भाषमाणान् व्यक्तवाचामित्यात्मनेपदं जनानां व्यक्तवाक्यम् ॥ २८ ॥ ज० म०

किञ्चिदित्यादि । असौ हनूमान् प्रविष्टः सन् न किञ्चिदुपावदिष्ट न किञ्चित् प्रलोभनवाक्यं भाषते स्म आनयत्तेत्यादिना प्रलोभे सं केनचित् सह न व्यवदिष्ट नानामतिपूर्वकं विचित्रं न भाषते स्म विमतिपूर्वकं विचित्रकथनमत्र वदत्यर्थः विमतिव्यक्तसहोक्त्योरिति विमतौ सं संप्रवदमानात् सम्भूय व्यक्तं भाषमाणात् जनात् रावणस्य गुणान् शृण्वन् पूर्वेण व्यक्तसहोक्तौ मम् ॥ २८ ॥ भ०

जल्पीत्यादि । पूतक्रतोरिन्द्रस्य या पूः तस्या अमरावत्याः सम्बन्धिनो घोषस्यान्ववदिष्टेव लङ्का अनुशब्दः सादृश्ये सदृशं वादं कृतवती तैर्जल्पितादिभिः उभयत्रापि जल्पितादिघोषस्य तुल्यत्वात् लङ्केति तत्स्थो जन उच्यते तेन व्यक्तवाग्विषयत्वात् अनोरकर्मकादिति तङ् तत्र व्यक्तवाचामिति अनुवर्त्तते न ससुच्चारण इति ॥ २९ ॥ ज० म०

जल्पित इत्यादि । लङ्का जल्पितादिभिः पूतक्रतोरिन्द्रस्य पुरोऽमरावत्या घोषस्य शब्दस्य अन्ववदिष्टेव सदृशभाषणं कृतवतीव उभयत्रापि जल्पितादिघोषणानां तुल्यत्वात् अनुशब्दः सदृशभाषणद्योतकः तद्गतजनानां भाषणेन तद्भाषणमुत्प्रेक्ष्यते अनोरकर्मकादिति सं अनुपूर्वादकर्मकाद्वदेस्तौ व्यक्तवाचामात्मनेपदमिति केचित् तन्मते लङ्काशब्देन लक्षणया लङ्कास्थितजन उच्यते व्यक्तवाचामिति तु वोपदेवेन नाङ्गीकृतम् अनोरकर्मक इति कातन्त्रसूत्रेऽपि व्यक्तवाचामित्यस्य सम्बन्धो नाङ्गीकृतः जल्पितं व्यक्तभाषणम् उत्कृष्टमाह्वानं सङ्गीतं सम्यक् गानं प्रनृत्तं नर्त्तनशब्दः स्मितं हास्यशब्दः वल्गितं मत्तवचनम् ॥ २९ ॥ भ०

ऐद्विप्रवदमानैस्तां संयुक्तां ब्रह्मराक्षसैः।
तथावगिरमाणैश्च पिशाचैर्मांसशोणितम् ॥ २० ॥
यथास्वं सङ्गिरन्ते स्म गोष्ठीषु स्वामिनो गुणान्।
पानशौण्डाः पथः क्षीवा हन्दैरुदचरन्त च ॥ २१ ॥

ऐदित्यादि। तां ब्रह्मराक्षसैः संयुक्तां हनूमानैत् जगाम इणो लङि रूपं विप्रवदमानैः परस्परविरुद्धार्थाभिधायिभिः विप्रलापात्मके व्यक्तवाचां समुच्चारणे विभाषाविप्रलाप इति तङ् तथा पिशाचैर्मांस-शोणितमवगिरमाणैः भक्षयद्भिः संयुक्तां गिरतेरभ्यवहारार्थत्वादवद्रुप इति तङ् मांसशोणितमिति जातिरप्राणिनामित्येकवद्भावः ॥ २० ॥ ज० म०

ऐदित्यादि। हनूमान् तां लङ्काम् ऐत् गतवान् इणो घ्यां रूपम्। कीदृशीं ब्रह्मस्वरूपैस्तत्सम्बन्धिभिर्वा राक्षसैः संयुक्तां कीदृशैः विप्रवदमानैः सम्भूय विरुद्धप्रलापिभिः एको यादृक् वदति अपरस्तादृक् न वदति वितण्डां कुर्वद्भिरित्यर्थः तद्योगे वेति मं तद्योग इति तयोः पूर्वोक्तयोः विमतिव्यक्तसहोक्त्योर्योगे युगपत्प्रवृत्तौ विमतिरिह विरुद्धप्रलापमात्रं तथा पिशाचैः संयुक्तां कीदृशैर्मांसशोणितञ्चावगिरमाणैर्भक्षयद्भिः अवाद्गिरतेरिति मं मांसशोणितमिति समाहारद्वन्द्वः पिशितमश्नातीति पिशाचो मनीषादित्वात्साधुः ॥ २० ॥ भ०

यथेत्यादि। ब्रह्मराक्षसाः पिशाचाश्च यथास्वमात्मीयस्य स्वामिनो गुणान् गोष्ठीषु गोष्ठीमध्ये सङ्गिरन्ते स्म अभ्युपगतवन्तः समः प्रति-ज्ञान इति तङ् पानशौण्डाः पानासक्ताः क्षीवा मत्ताः सन्तः पथो यागांशुदचरन्त उत्क्रम्य गच्छन्ति स्म उदश्चरः सकर्मकादिति तङ् हन्दैरिति सम्भूयेत्यर्थः ॥ २१ ॥ ज० म०

यथेत्यादि। ब्रह्मराक्षसाः पिशाचाश्च यथास्वं स्वीयस्य स्वामिनो गुणान् गोष्ठीषु गोष्ठीमध्ये सङ्गिरन्ते स्म अभ्युपगतवन्तः समः प्रति-ज्ञायामिति मं पाने शौण्डा आसक्ताः अतएव क्षीवाः मत्ताः सन्तः

यानैः समचरन्तान्ये कुञ्जराश्वरथादिभिः ।
संप्रायच्छन्त वन्दीभिरन्ये पुष्पफलं शुभम् ॥ २२ ॥
कोपात्काश्चित् प्रियैः प्रत्तमुपायंसत नासवम् ।
प्रेम जिज्ञासमानाभ्यस्ताभ्योऽशपन्त कामिनः ॥ २३ ॥

वृन्दैः सम्भूय पथो मार्गान् उदचरन्त उत्क्रम्य जग्मुः उच्चरः सकर्मकादिति सम् ॥ २१ ॥ भ०

यानैरित्यादि । अन्ये यानैः कुञ्जरादिभिः समचरन्त सञ्चरन्ते स्म समस्तृतीयायुक्तादिति तङ् अन्ये वन्दीभिरानीताभिः सम्प्रदाने तृतीया अशिष्टव्यवहारात्तृतीयाचतुर्थ्यर्थे भवतीति वचनाद्वन्दीभ्य इत्यर्थः पुष्पफलं शोभनं सम्प्रायच्छन्त ददति स्म दाणश्च सा चेच्चतुर्थ्यर्थः इति तङ् पुष्पफलमिति जातेरेकवद्भावः ॥ २२ ॥ ज० म०

यानैरित्यादि । अन्ये कुञ्जरादिभिर्यानैः समचरन्त सञ्चरन्ते स्म समस्तेति सं अन्ये शुभं शोभनं पुष्पं फलञ्च वन्दीभिः हठहृतस्त्रीभिः संप्रायच्छन्त संप्रददुः सन्दानोभेऽधर्मे नित्यमिति सम्प्रदाने तृतीया । वन्दीभिः सह विहरणेच्छया ताभ्यो ददुरित्यधर्मः दाणः सा चेच्चतुर्थ्यर्थे इति सं सेत्यनेन समस्तेत्यस्मात् वी आकृष्यते ॥ २२ ॥ भ०

कोपादित्यादि । काश्चित् स्त्रियः कोपात् अन्यस्त्रीगमनजनितात् आसवं मद्यविशेषं नोपायंसत न स्वीकृतवत्यः विभाषोपयम इत्यकित्त्वपक्षे रूपम् उपाद्यमः स्वीकरण इति तङ् पाणिग्रहणपूर्वस्य स्वीकरणस्य तत्र स्थितत्वादौपचारिकमत्र स्वीकरणं द्रष्टव्यं समुदाङ्भ्यो यमो ग्रन्थ इति वा तङ् उदाङ्पूर्वस्य यम आदानार्थत्वात् अवसरप्राप्तन्तु सूत्रद्वयमुदाहृतं स्यात् प्रियैः प्रत्तन्दत्तम् अच उपसर्गात्तः प्रेम जिज्ञासमानाभ्यः किमस्मासु प्रेमास्ति वा न वेति कृतकोपप्रकाशेन ज्ञातुमिच्छन्तीभ्यः ज्ञाश्रुस्मृदृशां सन इति तङ् । ताभ्यो योषिद्भ्यः कामिनः अशपन्त न मे त्वदन्या प्रियास्तीति तदीयशरीरस्पर्शनेन शपथञ्चक्रुः शप उपलम्भने इत्यात्मनेपदं वाचा उपलम्भनं शरीरस्पर्शनं स्वाचङ्-



प्रादिदृक्षत नो नृत्यं नाशुश्रूषत गायनान्।
रामं सुस्मूर्षमाणोऽसौ कपिर्विरहदुःखितम्॥ २४॥

त्यादिना सम्प्रदानसंज्ञायां चतुर्थी तासां ज्ञापयितुमिष्यमाणत्वात्
॥ २३॥ ज॰ म॰

कोपादित्यादि। काश्चित् स्त्रियः कोपात् सपत्नीसङ्गजनितात् प्रियैः प्रत्तं प्रदत्तमासवं मद्यविशेषं नोपायंसत न स्वीकृतवत्यः उपयमो विवाह इति सं विवाहः स्वीकारः उपाद्यमः स्वीकरणे इति क्रम॰ दीश्वरसूत्रदर्शनात् यमः सूचने वा तद्वाह इति से: किन्त्वाभावपक्षे सलोपाभावः अत्राप्युद्वाहः स्वीकारः स्वीकरणे चेति परसूत्रदर्शनात् उपयमो विवाह इत्यत्र विवाहः पाणिग्रहणमेवेति चेत् जिनुजश्रन्त॰ पिबेत्यादौ कन्यामुत्समायत इति फलवत्कर्त्तरि उपाङ्पूर्वान्न प्रत्तमिति व्यचस्तवेति दाजः क्तो तादेशः अन्यासु प्रियस्य स्नेहोऽस्ति न वेति सन्दिह्य कृतकोपेन प्रेम ज्ञातुमिच्छन्तीभ्यस्ताभ्यः स्त्रीभ्यः कामिनोऽसप्सत न मेऽन्या प्रियास्तीति ज्ञापनार्थं शपथं चक्रुः शप॰ याशीर्गत्यनुकारे शपेति सं मिथ्यानिरासार्थं ज्ञापनमिह शपथः वाचा शरीरस्पर्शनमिति पाणिनीयाः यस्मै दिव्सेत्यादिना सम्प्रदानत्वं स्पृह॰ शनत्नुत्तेति ज्ञो मम्॥ २३॥ भ॰

प्रादीत्यादि। असौ कपिर्लङ्कायां नो नृत्यं प्रादिदृक्षत गायनान् गायकान् गस्यकन् युच्च नाशुश्रूषत न श्रोतुमिष्टवान् किमिति रामं विरहदुःखितं सुस्मूर्षमाणः स्मर्त्तुमिच्छन् सनन्तेभ्यः पूर्ववदात्मनेपदम् अज्झनगमांसनीति दीर्घत्वम् उदोष्ठ्यपूर्वस्येत्युत्वम्॥ २४॥ ज॰ म॰

प्रादीत्यादि। असौ कपिर्लङ्कायां नृत्यं नटनं न प्रादिदृक्षत न द्रष्टुमिच्छति स्म गायनान् नाशुश्रूषत न श्रोतुमिच्छति स्म तद्गीतश्रव॰ णेन गायनश्रवणमुपचर्य्यते यतोऽसौ विरहेण दुःखितं रामं सुस्मूर्ष॰ माणः स्मर्त्तुमिच्छन् सर्वत्र सूदृशनत्नुत्तेत्यादिना सनि सं पुनर्निमीत्य॰ गुणत्वं हयः यक्त्राजिति षड् षडोः कः से सुस्थधात्वोर्घोऽज्झनिङ्गमा॰ मिति दीर्घः स्मरतेर्ह्र दिरणावुरित्युर् गायतेर्णेनट् यकाविति नपट्
॥ २४॥ भ॰

अनुजिज्ञासतेवाथ लङ्कादर्शनमिन्दुना ।
तमोऽपहविमुक्तांशु पूर्वस्यां दिश्युदैयत ॥ ३५ ॥
आशुश्रूषन् स मैथिल्या वार्त्तां हर्म्येषु रक्षसाम् ।
शीयमानान्धकारेषु समचारीदशङ्कितः ॥ ३६ ॥

अन्वित्यादि । अथैतस्मिन् प्रस्तावे इन्दुना चन्द्रेण उदैयत उदितम् इणो भावे लङि रूपम् । पूर्वस्यां दिशि पूर्णेनेति दर्शयति दृश्यते यत् दर्शनं रूपं लङ्कायाः रूपमनुजिज्ञासतेव पूर्ववत् प्राप्तस्यात्मनेपदस्य नानोर्ज्ञ इति प्रतिषेधः तमोपहास्तमो विध्वंसमानाः विमुक्ताः प्रेरिता अंशवो यस्मिन् उदय इति ॥ ३५ ॥ ज० म०

अन्वित्यादि । अथानन्तरमिन्दुना पूर्वस्यां दिशि उदैयत उदितम् इणो भावे पी पूर्वस्यां दिशीत्युपादानेन इन्दोः पूर्णत्वं सूचितं कृष्णपक्षः सूचितो वा किं कुर्वता लङ्काया यद्दर्शनं हनूमतेत्यर्थात् तदनुज्ञातुमनुमन्तुमिच्छतेव चन्द्रोदये सत्येव हनूमता लङ्का द्रष्टव्येति तत्र तदनुमतिरत्प्रेक्ष्यते अन्ये तु दृश्यत इति दर्शनं रूपं लङ्काया रूपं ज्ञातुमिच्छतेवेत्याहुः स्वदृशनज्ञो त्वत्र अनुवर्जनाच्च सं तमोऽपहा अन्धकारविध्वंसका विमुक्ताः प्रेरिता अंशवो यत्रेत्युदयक्रियाविशेषणं यद्यपि परमते क्तान्तस्य पूर्वनिपातो दृश्यते तथापि विमुक्तशब्दस्यात्र न पूर्वनिपातो गमकत्वात् अतएव दैक्यं सोऽन्वये सतीत्युक्तं केचित्तु हन्तेर्भावे क्विप् तमोऽपहननाय विमुक्ता अंशवो यत्रेत्याहुः ॥३५॥भ०

आश्वित्यादि । स कपिर्मैथिल्याः सीताया वार्त्तामाशुश्रूषन् श्रोतुमिच्छन् प्रत्याङ्भ्यां श्रुव इत्यात्मनेपदप्रतिषेधः । रक्षसां हर्म्येषु गृहेषु समचारीत् संक्रान्तवान् अतो लान्तस्येति वृद्धिः । शीयमानान्धकारेषु अपगच्छत्तमःसु षद्लृशातने शदेःशित इति तङ् प्राप्नोति शीयादेशः अशङ्कितः । शङ्कारहितः ॥ ३६ ॥ ज० म०

आश्वित्यादि । हनूमान् मैथिल्या वार्त्तामाश्रोतुमिच्छन् रक्षसां हर्म्येषु सौधगृहेषु समचारीत् सञ्चरति स्म तृतीयायोगाभावात् समश्येति न सं प्रजवदेति निः स्वदृशनज्ञो त्यादावाङ्वर्जनस्य संक्रीडेषु

शतसाहस्रमारक्षं मध्यमं रक्षसां कपिः ।
ददर्श यं कृतान्तोऽपि म्रियेतासाद्य भीषणम् ॥ २७ ॥
अध्यासिसिषमाणेऽथ वियन्मध्यं निशाकरे ।
कासाञ्चक्रे पुरी सौधैरतीवोद्भासिभिः सितैः ॥२८॥

शीयमाना अपगच्छन्तोऽन्धकारा येभ्यः शदेोऽपि शमिति सं अशङ्कितः निर्भयः कर्त्तरि क्तः अकर्मकत्वात् भावे क्तो वा शङ्का जाताऽस्येति इतोऽस्य जात इति इतो वा ॥ २६ ॥ भ०

शतेत्यादि । मध्यमं मध्यप्रकोष्ठगतम् आरक्षं गोपकं शतसाहस्रं रक्षसां लक्षमानं ददर्श विलोकितवान् शतसहस्रं परिमाणमस्येति शाण्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति वचनात् शतमान-विंशतिकेत्यादिना अणि संख्यायाः संवत्सरेत्युत्तरपदवृद्धिः भीषणं भया-नकम् आसाद्य प्राप्य कृतान्तोऽपि यमोऽपि म्रियेत प्राणान् सन्त्यजेत् म्रियतेर्लुङ्लिङोश्चेति तङ् तत्र हि शित इत्यनुवर्त्तते ॥२७॥ ज०म०

शतेत्यादि । कपिर्मध्यमं मध्यकोष्ठगतं रक्षसामारक्षं ददर्श शत-साहस्रं शतसहस्रं परिमाणमस्येति विकारसंघेत्यादिना तदस्य परि-माणमित्यर्थे अण: सुपञ्चालादित्वादुत्तरपदे वृद्धिः । यं भीषणं भयङ्करम् आसाद्य प्राप्य कृतान्तोऽपि म्रियेत प्राणान् त्यजति किमुतान्यः विधि-निमन्त्रणेत्यादिना सम्भावनायां लिङ्, म्रङ्शीङ्ग्भमिति सम् ॥२७॥ भ०

अध्येत्यादि । अथ निशाकरे चन्द्रमसि वियन्मध्ये अध्यासितु-मारोढुमिच्छति सति पूर्ववत् सन इत्यात्मनेपदम् आस्तेरनुदात्तेत्त्वमा-त्मनेपदनिमित्तं तेनैव सनन्तादपि भवति अत्र सनि इटि कृते अजादे-र्द्वितीयस्येति द्विर्वचनं पुरी लङ्का कासाञ्चक्रे शोभते स्म सौधैः सौधानां ज्योत्स्नया चोद्भास्यमानत्वात् आम्प्रत्ययवदिति तङ् ॥२८॥ ज० म०

अध्येत्यादि । अथानन्तरं निशाकरे चन्द्रे आकाशस्य मध्यमध्या-सितुमारोढुमिच्छति सति पुरी लङ्का सौधैर्गृहविशेषैः कासाञ्चक्रे शुशुभे काशृङ्कुशब्द इत्यस्यानेकार्थत्वाद् दीप्त्यर्थता काशृङ्दीप्तौ

इन्दुं चषकसंक्रान्तमुपायुङ्क्त यथामृतम् ।
प्रयुञ्जानः प्रियावाचः समाजानुरतो जनः ॥ ३९ ॥
संक्ष्णुवान इवोत्कण्ठामुपाभुङ्क्त सुरामलम् ।
ज्योत्स्नायां विगलन्मानस्तरुणो रक्षसां गणः ॥४०॥

दन्त्यान्तोऽस्तीति विद्यासागरः । केचित्तु काशाञ्छ इति तालव्य-शकारवान् पाठः काश्छुताविव्यस्य रूपं वदन्ति ॥ ३८ ॥ भ०

इन्दुमित्यादि । एवं शोभितायां लङ्कायां समाजानुरतः पान-गोष्ठीरतो जनः चषकसंक्रान्तं मद्यभाजने प्रतिबिम्बेन संक्रान्तमिन्दु-मुपायुङ्क्त उपभुक्तवान् प्रतिबिम्बावच्छिन्नस्य मद्यस्योपलक्ष्यमाणत्वादेव-मुक्तं यथाऽमृतम् अमृतमिव प्रिया अनुकूला वाचः प्रयुञ्जानः अभि-दधानः प्रोपाभ्यामिति तङ् ॥ ३९ ॥ ज० म०

इन्दुमित्यादि । एवं शोभितायां लङ्कायां समाजानुरतः पान-गोष्ठीरतो जनश्चषकसंक्रान्तं मद्यपात्रे प्रतिबिम्बेन सङ्गतं चन्द्रमुपा-युङ्क्त दर्शनादिक्रियाव्याप्यं चकार चन्द्रोपयोगो दर्शनादिरूप एव जय-मङ्गलायान्तु चन्द्रमुपायुङ्क्त बुभुजे चन्द्रशब्देन तत्प्रतिबिम्बावच्छिन्न-मद्यभागस्य लक्षितत्वात् यथामृतमिवेत्युक्तं किं कुर्वन् यथामृतं तद्वत् प्रिया वाचः प्रयुञ्जानः पीयतामित्याद्यनुकूलवाचोऽभिदधानः युजिर् उक्तञ्च इति मं महाकाव्योचितं मधुपानवर्णनमिदम् ॥ ३९ ॥ भ०

संक्ष्णुवान इत्यादि । रक्षसां तरुणो गणः उत्कण्ठां प्रियानु-संस्मरणं संक्ष्णुवान इव सन्तेजयन्निव सन् क्ष्णु व इति तङ् ज्योत्-स्नायां सुराम् अलमत्यर्थमुपाभुङ्क्त अभ्याहृतवान् भुजोऽनवन इति तङ् विगलन्मानः ॥ ४० ॥ ज० म०

संक्ष्णुवान इत्यादि । तरुणो युवा रक्षसां गणः उत्कण्ठां प्रियाभिलाषं संक्ष्णुवान इव सन्तेजयन्निव ज्योत्स्नायां सुरां मदि-राम् अलमत्यर्थम् उपाभुङ्क्त भक्षितवान् सुरापानादेव विगलन्मानः अपगतमानः संक्ष्णोः भुजोऽनवने इति मं उत्कण्ठोक्ताऽनवाप्तौ योऽभिलाषस्तद्वाप्तये इति ॥ ४० ॥ भ०

मध्वपाययत स्वच्छं सोत्पलं दयितान्तिके।
आत्मानं सुरताभोगविस्रम्भोत्पादनं मुहुः ॥ ४१ ॥
अभीषयन्त ये शक्रं राक्षसा रणपण्डिताः।
अविस्मापयमानस्तान् कपिराटीद् गृहाद् गृहम् ॥४२॥

मध्वित्यादि। कीदृशं मधु स्वच्छत्वात् सोत्पलतया सुरभित्वात् शोभनं जातं यतः स्वयमात्मानं मुहुरपाययत पायितवत् पोरणाविति तङ् दयितान्तिके दयितस्य समीपे सुरताभोगः सुरतविमर्दः तत्र विस्रम्भः तस्योत्पादनं जनकम् उत्पादयतीति कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् ॥ ४१ ॥ ज० म०

मध्वित्यादि। रक्षसां गणो दयितान्तिके रमणीसमीपे आत्मानं मधु मुहुर्वारं वारम् अपाययत जिनृजग्रन्तपिबेति सं यद्वा मध्वेव कर्तृभूतमात्मानम् अपाययत् निस्पृहमपि रक्षोगणं सुरापानमकारयत् मधुगुणादेव पानात् जेढेऽजौघे इति मं अजौ मधुनः कर्मत्वात् मधु कीदृशं स्वच्छं निर्मलं सोत्पलं प्रियाकर्णोत्पलप्रतिबिम्बात् सौरभाय प्रक्षिप्तोत्पलं वा सुरताभोगे सुरतविमर्दे विस्रम्भस्य विश्वासस्य उत्पादनं जनकं कभावेभीति कर्त्तरि अनट् भावेऽनटि रूपकालङ्कारो वा नन्द्यादित्वाद्वाऽनः। उत्पादनक्षममिति पाठस्तु सुगम एव ॥४१॥ भ०

अभीत्यादि। एवं रक्षःसु यथायथं चेष्टमानेषु ये राक्षसाः रण० पण्डिताः संग्रामविज्ञाः शक्रमभीषयन्त भीषितवन्तः भीःस्योर्हेतुभय इति तङ् भियो हेतुभये षुक् भयग्रहणमुपलक्षणं तेन स्मयतेरपि भवति तानसौ कपिरविस्मापयमानः विस्मयमकारयन् नित्यं स्मयतेरित्यात्वं गृहाद् गृहमाटीत् गतवान् लुङि रूपम् ॥ ४२ ॥ ज० म०

अभीषयन्तेत्यादि। रणे पण्डिताः कुशलाः ये राक्षसाः शक्रं अभीषयन्त त्रासितवन्तः तान् अविस्मापयमानः विस्मितान् कारयन् मधुपानाद्यासक्ततया तैरविज्ञात इति भावः असौ कपिर्गृहात् एकस्मात् गृहमपरमाटीत् जगाम भीर्भीप् वेति जौ नं भीयादेशस्य अत्र

सीतां दिदृक्षुः प्रच्छन्नः सोऽगर्द्धयत राक्षसान् ।
अवञ्चयत मायाश्च स्वमायाभिर्नरद्विषाम् ॥ ४३ ॥
अपलापयमानस्य शत्रूंस्तस्याभवन्मतिः ।
मिथ्या कारयते चारैर्घोषणां राक्षसाधिपः ॥ ४४ ॥

धात्वर्थं इत्यनुवर्त्तते अत ध्वर्थोभयं तत्तु राक्षसकर्त्तृत एव ञिङः स्तिभ्योधात्वर्थे मश्चेति ञौ इकारस्यात्वं मश्च अटेप्यां सिः ॥ ४२ ॥ भ०

सीतामित्यादि । स कपिः सीतां दिदृक्षुः सीतां द्रष्टुमिच्छुः प्रच्छन्नः राक्षसानगर्द्धयत व्यामोहयत् स्वमायाभिश्च नरद्विषां मायाश्च अवञ्चयत अतिसंहृतवान् गृधिवञ्च्योः प्रलम्भन इति तङ् ॥ ४३ ॥ ज० म०

सीतामित्यादि । सीतां दिदृक्षुर्द्रष्टुमिच्छुः प्रच्छन्नो गुप्तः स कपिः राक्षसान् अगर्द्धयत व्यामोहयत् स्वमायाभिर्नरद्विषां राक्षसानां मायाश्च अवञ्चयत वृथा चकार प्रतारे वञ्चिगर्द्धेरिति मं प्रतारो विसं-वादनं मिथ्याख्यानमिति केचित् ॥ ४३ ॥ भ०

अपेत्यादि । तस्य कपेः शत्रून् राक्षसान् अपलापयमानस्य न्यक्कुर्वतः विभाषा लीयतेरित्यात्वे लियः सम्मानेत्यादिना शालिनीकरणे न्यग्भावने आत्मनेपदं मतिरभवत् । कीदृशीत्याह मिथ्या कारयत इति अयं राक्षसाधिपतिश्चारैर्दण्डवाहकैः यां घोषणां पुनः पुनः कार-यति जाग्रत जाग्रतेति तां मिथ्या कारयते येनाहमविज्ञात एव प्रविष्टः मिथ्योपपदात् कृञोऽभ्यास इति तङ् अभ्यासस्य पुनः पुनः करणम् ॥ ४४ ॥ ज० म०

अपेत्यादि । शत्रून् राक्षसान् अपलापयमानस्य वञ्चयमानस्य तस्य कपेरित्यं मतिरभवत् मिथ्योरिति लियोङा पूजाभिभवे च जापे-रिति चकारात् प्रतारे मं । कीदृशी मतिरित्याह राक्षसाधिपो रावण-श्चारैर्घोषणां मिथ्या कारयते जाग्रत जाग्रतेत्युच्चैर्घुष्टं मिथ्यैव चारैः कारयति तां कर्त्तुं चरान् पुनः पुनः प्रयुङ्क्ते निष्फलमेव येनाह-

गूहमानः स्वमाहात्म्यमटित्वा मन्त्रिसंसदः।
त्रुध्योऽपवादमानस्य रावणस्य गृहं ययौ ॥ ४५ ॥
दिशो द्योतयमानाभिर्दिव्यनारीभिराकुलम्।
श्रियमायच्छमानाभिरुत्तमाभिरनुत्तमाम् ॥ ४६ ॥

अविज्ञात एव भ्रमामि मिथ्याकारेरभ्यास इति मं अभ्यासः पौनःपुन्यं चर एव चारः स्वार्थे ष्णः ॥ ४४ ॥ भ०

गूहेत्यादि। स्वमाहात्म्यं स्वपराक्रमं गूहमानः आच्छादयन्। उदुपधायागोह इत्यूत्वं, स्वरितञित इति तङ्। अटित्वा मन्त्रिसंसदः शुकसारणादिगृहाणि गत्वा रावणस्य गृहं ययौ। कीदृशस्य त्रुध्योऽपवादमानस्य कुप्यतः असूयतो वा अपाद्वद इति तङ्, त्रुध्य इति क्रुधद्रुहेति सम्प्रदानसंज्ञायां चतुर्थी ॥ ४५ ॥ ज० म०

गूहेत्यादि। असौ स्वमाहात्म्यं स्वपराक्रमं गूहमानः संवृण्वन् मन्त्रिणां संसदो गृहाणि अटित्वा गत्वा रावणस्य गृहं ययौ। कीदृशस्य त्रुध्योऽपवादमानस्य असूयतः जिनृजरन्तपिबेत्यादिना अपवदेर्यस्मै दित्सेत्यादिना असूयार्थे न सम्प्रदानत्वं गुहेश्च संवृतौ उभयपदी पुगन्तलघूपधस्य इति गुणः गुहोणोरुरित्योकारस्य ऊत्वम् ॥ ४५ ॥ भ०

कीदृशं गृहमित्याह।

दिश इत्यादि। दिशः द्योतयमानाभिः भासयमानाभिः णिचश्चेति तङ्। दिव्यनारीभिः उत्तमाभिः प्रधाननायिकाभिराकुलं व्याप्तं श्रियमनुत्तमामतिशयवतीम् आयच्छमानाभिः स्वीकुर्वाणाभिः समुद्राङ्भ्य इति तङ् ॥ ४६ ॥ ज० म०

दिश इत्यादि। कीदृशं गृहं ययौ दिव्यनारीभिर्दिवि भवाभिः स्त्रीभिराकुलं व्याप्तं कीदृशीभिः दिशो द्योतयमानाभिः भासयमानाभिः जरन्तत्वादुभयपदम्। उत्तमाभिः श्रेष्ठाभिः अनुत्तमाम् अत्युत्कृष्टां श्रियम् आयच्छमानाभिः स्वीकुर्वाणाभिः जिनृजरन्तेत्यादिना आङ्पूर्वयमो मं न विद्यते उत्तमं यस्या इति विग्रहः उत्तमेऽनुत्तमं विद्यादिति त्रिरूपकोषः ॥ ४६ ॥ भ०

नित्यमुद्यच्छमानाभिः स्मरसम्भोगकर्म्मसु।
जानानाभिरलं लीलाकिलकिञ्चितविभ्रमान् ॥४७॥
स्वं कर्म्म कारयन्नास्ते निश्चिन्तो या झषध्वजः।
स्वार्थं कारयमाणाभिर्यूनो मदविमोहितान् ॥ ४८ ॥

नित्येत्यादि। स्मरसम्भोगकर्मसु कामोपभोगक्रियासु नित्यमुद्यच्छमानाभिः पूर्ववत्तङ् लीलाः स्त्रीणां शृङ्गारचेष्टाविशेषाः तथाचोक्तं लीलाः सलीलाः किलकिञ्चितानि विब्बोकमाध्यायितविभ्रमाणि। विच्छित्तमाकुट्टमितेञ्चितानि योज्यानि तज्ज्ञैः सुकुमारन्त्य इति वचणश्चैषां व्ययास्ते ॥ ४७ ॥ ज० म०

नित्यमित्यादि। कीदृशीभिः सुरतसम्भोगकर्मसु कामोपभोगक्रियासु नित्यमुद्यच्छमानाभिः उद्यमं कुर्वतीभिः जिनृजन्नित्यादिना उत्पूर्वयमो मं लीलाकिलकिञ्चितविभ्रमान् शृङ्गारचेष्टाविशेषान् अलमत्यर्थं जानानाभिः पूर्ववत् अभिज्ञो सं प्रियानुकरणे लीलावेशभाषाविचेष्टितैः क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितम्। विभ्रमस्त्वरया काले भूषास्थानविपर्य्ययः। ईदृशीभिर्दिव्यनारीभिराकुलं दृष्टं ययाविति सम्बन्धः ॥ ४७ ॥ म०

स्वमित्यादि। स्वमात्मीयं मोहनादिकर्म दिव्यनारीः कारयन् अनुष्ठापयन् एष झषध्वजः कामदेवः निश्चिन्त आस्ते ताभिराकुलमिति योज्यं हृक्रोरन्यतरस्यामिति द्विकर्मकता यूनः स्वार्थं स्वप्रयोजनं मैथुनाख्यङ्कारयमाणाभिः आकुलं तान् हनूमानिति वक्ष्यमाणेन सम्बन्धः कीदृशान् मदविमोहितान् मधुपानमदप्रवशान् ताभिः ॥ ४८ ॥ ज० म०

स्वमित्यादि। या दिव्यनारीः स्वं कर्म मोहनादि कारयन् झषध्वजः कामो निश्चिन्तो निराकुलः सन्नास्ते यासां काम एवास्ति न चिन्ता तद्विरोधिनी ताभिराकुलं दृष्टं ययौ घोऽभ्येरित्यादिना प्रयोज्यस्य कर्मत्वं मदेन विमोहितान् यूनस्तरुणान् स्वार्थं स्वप्रयोजनं कारयमाणाभिः अन्तस्योभयपदित्वात् प्रत्ययानौ दर्शितौ ॥४८॥ म०

कान्तिं स्वां वहमानाभिर्यजन्तीभिः स्वविग्रहान्।
नेत्रैरिव पिबन्तीभिः पश्यतां चित्तसंहतीः॥ ४९॥

कीदृशीभिरित्याह।

कान्तिमित्यादि। स्वां कान्तिं शोभां वहमानाभिः यजन्तीभि स्वविग्रहान् ददतीभिः कामिभ्यः तत्र स्वं कर्मेति णिचश्चेत्यस्य विषयः कान्तिं स्वां स्वविग्रहानिति स्वरितेत इत्यस्य विषयः विभाषोपपदेन प्रतीयमान इति विभाषा आत्मनेपदम् इत्यात्मनेपदाधिकारः शेषभूतत्वात् परस्मैपदविधानमाह नेत्रैरिति पश्यतां चित्तसंहतीः चित्तसन्दोहान् पिबन्तीभिरिव गृह्णन्तीभिरिव शेषात् कर्त्तरि परस्मैपदम् ॥ ४९ ॥ ज० म०

कान्तिमित्यादि। स्वां कान्तिं वहमानाभिः धारयन्तीभिः वहीञ् प्रापणे ञिनुञन्तपिबेति फलवत्कर्त्तरि मं, मन्मथेनार्पिता छाया सैव कान्तिरिति स्मृता। स्वविग्रहान् स्वदेहान् यजन्तीभिः कामिभ्यो ददतीभिः यजेञौ देवार्चादानसङ्गतिकृतौ ञिनुञन्तेत्यादौ ञिज्ञातोः फलवत्कर्त्तर्य्यात्मनेपदस्यानित्यत्वं नित्यत्वे हि नवशःपसे इत्यनेन ञिज्ञातोरुभयपदकथनमनर्थकं स्यात् फलवत्कर्त्तृनियमितात्मनेपदादन्यत्र परस्मैपदस्य गम्यमानत्वात् दीर्घमजिति नियमादन्यत्र किं परस्मैपदं न गम्यते तेनात्र यजेः फलवत्कर्त्तर्य्यपि परस्मैपदं फलवत्कर्त्तरि आत्मनेपदमेव अन्यत्रोभयपदमिति नवशःपसेञित इत्यस्य साफल्यमिति चेत् क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् नवशःपसेञित इत्यनेनोभयपदित्वं विद्यासागरस्तु फलवत्त्वाविवक्षायां पदं संस्कृत्य पश्चात् स्वशब्दादिसम्बन्धात् वाक्ये क्रियाफलस्य कर्त्रन्वयो गम्यत इत्याह अपरे तु कर्त्रभिप्रायेऽपि क्रियाफले विभाषोपपदेन प्रतीयमान इति सूत्रेण पक्षे आत्मनेपदाभावमाहुः। इत्यात्मनेपदाधिकारः अथ परस्मैपदमुच्यते। पश्यतां जनानां चित्तसमूहान् नेत्रैरिव पिबन्तीभिः स्त्रीभिराकुलं दृष्टं यथावित्यन्वयः पापाने नवशःपसे इति पं शदः॥ ४९ ॥ म०

ता हनूमान् पराकुर्वन्नगमत् पुष्पकं प्रति ।
विमानं मन्दरस्याद्रेरनुकुर्वदिव श्रियम् ॥ ५० ॥
तस्मिन् कैलाससङ्काशं शिरःशृङ्गं भुजद्रुमम् ।
अभिक्षिपन्तमैक्षिष्ट रावणं पर्वतश्रियम् ॥ ५१ ॥

ता इत्यादि । ता दिव्यनारीः पराकुर्वन्नपक्षिपन् अगमत् पुष्पकं प्रति पुष्पकविमानं प्रति येन पुष्पकविमानेन जगाम कीदृशं मन्दरस्याद्रेः श्रियमनुकुर्वदिव अनुपराभ्यां कृञः कर्त्रभिप्राये चात्मनेपदस्य प्राप्तत्वात् ॥ ५० ॥ ज० म०

ता इत्यादि । हनूमान् ता दिव्यनारीः पराकुर्वन् विक्षिपन् पुष्पकनामानं विमानं प्रति लक्ष्मीकृत्य अगमत् कीदृशं मन्दरनाम्नोऽद्रेः श्रियमनुकुर्वदिव तच्छ्रिया सदृशीकुर्वदिव कृञोञित्त्वादुभयपदप्राप्ते क्षेपं परेति पं ता इत्यत्र तान् इति पठित्वा यान् यूनः स्वार्थे कारयमायाभिराकुलं स्वहं ययौ तान् पराकुर्वन्निति तृतीयश्लोकेनान्वयो जयमङ्गलायामुक्तः, व्योमयानं विमानोऽस्त्रीत्यमरः ॥ ५० ॥ भ०

तस्मिन्नित्यादि । तस्मिन् विमाने रावणमैक्षिष्ट कैलाससङ्काशं कैलासतुल्यं शिरःशृङ्गं शिरांसि शृङ्गाणीव यस्य भुजद्रुमं भुजा द्रुमा इव यस्य तं पर्वतस्य श्रियोऽभिक्षिपन्तम् अभिभवन्तम् अभिप्रत्यतिभ्यः क्षिप इति परस्मैपदं तस्य स्वरितेत्त्वात् कर्त्रभिप्राय आत्मनेपदं प्राप्तम् ॥ ५१ ॥ ज० म०

तस्मिन्नित्यादि । हनूमान् तस्मिन् विमाने रावणमैक्षिष्ट दृष्टवान् कीदृशं कैलाससङ्काशं कैलासतुल्यं तुल्यतां दर्शयति शिरांसि शृङ्गाणीव यस्य भुजाश्च द्रुमा इव यस्य तादृशम् अन्येषां पर्वतानां श्रियम् अभिक्षिपन्तम् अभिभवन्तं क्षेपमित्यादौ प्रत्यभ्यतिक्षिपेति मं कैलासेति केलिः प्रयोजनमस्येति विकारसंघेत्यादिना ष्णे कैलः आस्यतेऽस्मिन्नित्यासः पश्चात् कर्मधारयः केलीनां समूहः कैलं पूर्ववत् ष्णः तस्यास इति वा ॥ ५१ ॥ भ०

प्रवहन्तं सदामोदं सुप्तं परिजनान्वितम्।
मघोने परिमृष्यन्तमारमन्तं परं स्मरे ॥ ५२ ॥
व्यरमत् प्रधनादस्मात् परित्रस्तः सहस्रदृक्।
चणं पर्य्यरमत्तस्य दर्शनान्मारुतात्मजः ॥ ५३ ॥

प्रवहेत्यादि। सदामोदं कस्तूरिकादिपरिमलं प्रवहन्तं प्राहृत्य इति परस्मैपदं स्वरितेत्त्वात् सुप्तं शयने संविष्टं परिजनान्वितं पारिपार्श्विकाधिष्ठितं मघोने इन्द्राय परिमृष्यन्तम् असूयन्तं परेर्मृष इति परस्मैपदं मृषेः स्वरितेत्त्वात् क्रुधद्रुहेति सम्प्रदानसंज्ञायां चतुर्थी। स्मरे कामे परमत्यर्थम् आरमन्तं सक्तिं कुर्वाणं व्याङ्परिभ्यो रम इति परस्मैपदं रमेरनुदत्तेत्त्वात् ॥ ५२ ॥ ज० म०

प्रवहन्तमित्यादि। कीदृशं रावणं सन्तमुत्कृष्टम् आमोदं कस्तूरिकादिपरिमलं सदा सर्वदा वा आमोदं प्रवहन्तं चे पमित्यादौ प्रवहेति पं। सुप्तं शयानं परिजनैः पारिपार्श्विकैरन्वितं मघोने इन्द्राय परिमृष्यन्तम् असूयन्तं चेपमित्यादौ परिमृषेति पं यस्मै दिवुचेत्यादिना सम्प्रदानत्वम्। स्मरे कामे परमत्यर्थम् आरमन्तं क्रीड़न्तं चेपमित्यादौ व्यापरिरम इति पम् ॥ ५२ ॥ भ०

व्यरेत्यादि। यस्माद्रावणात् सहस्रदृगिन्द्रः परित्रस्तः भीतार्थानामित्यपादाने पञ्चमी। प्रधनात् युद्धात् व्यरमत् उपरतव्यापारोऽभूत् व्याङ्परिभ्यो रम इति परस्मैपदं, जुगुप्साविरामप्रमादार्थानामपादाने पञ्चमी। तस्य दर्शनान्मारुतात्मजः हनूमान् चणं पर्य्यरमत् तुष्टिमानभवदित्यर्थः साधु रावणेति पूर्ववल्लङः परस्मैपदम् ॥ ५३ ॥ ज० म०

व्यरमदित्यादि। सहस्रदृगिन्द्रो यस्मात् रावणात् परित्रस्तो भीतः सन् प्रधनात् युद्धात् व्यरमत् उपरतोऽभूत् यतोऽपायेत्यादिना भीविरामयोरपादानं पूर्ववत् पं सहस्रदृगिति पदोपन्यासो युक्तः परित्रस्तस्य सर्वत्र प्रेरितनेत्रत्वात् तस्य दर्शनात्। मारुतात्मजो हनूमान् चणं पर्य्यरमत् तुष्टोऽभवत् पूर्ववत् पम् ॥ ५३ ॥ भ०

उपारंसीच्च संपश्यन् वानरस्तं चिकीर्षितात् ।
रम्यं मेरुमिवाधूतकाननं श्वसनोर्मिभिः ॥ ५४ ॥
दृष्ट्वा दयितया साकं रहीभूतं दशाननम् ।
नात्र सीतेत्युपारंस्त दुर्मना वायुसम्भवः ॥ ५५ ॥
ततः प्राकारमारोहत् चपाटानविबोधयन् ।

उपेत्यादि । तं रावणं पश्यन् वानरः चिकीर्षितात् कर्त्तुमिष्टात् सीतान्वेषणादुपारंसीत् निवृत्तः उपाङ्भ्यामित्यधिकृत्य विभाषाकर्मकादिति लुङः परस्मैपदं तस्य मेरोरिव रम्यत्वात् यदाह मेरुमिव श्वसनोर्मिभिः वातसमूहैः आधूतकाननं प्रचलितवनं मेरुं तथा श्वसितकल्लोलैः आधूतानि शिरांस्याननानि च यस्येति ॥ ५४ ॥ ज० म०

उपेत्यादि । वानरस्तं रावणं संपश्यन् चिकीर्षितात् कर्त्तुमिष्टात् सीतान्वेषणादपि उपारंसीत् निवृत्तः क्षेपमित्यादौ वातूपरम इति पक्षे यं यमरमेति दृमुसनो । मेरुवत् रम्यं श्वसनोर्मिभिर्निश्वासवेगैराधूतानि ईषत्कम्पितानि काननानि दृष्टाणि येन कानि शिरांसि आननानि च यस्येति वा मेरुपक्षे श्वसनोर्मिभिर्वायुवेगैराधूतानि काननानि वनानि यत्र, ऊर्मिस्तरङ्गे पीड़ायां वेगे सङ्गप्रकाशयोः । काननं विपिने गेहे परमेष्ठिमुखेऽपि चेति विश्वः । कं शिरोऽम्बुनोरित्यमरः ॥ ५४ ॥ भ०

दृष्ट्वेत्यादि । रहीभूतं विजनस्थं दशाननम् अरुर्मनश्चक्षुरित्यादिना चौ सलोपः । दयितया साकं दृष्ट्वा नात्र सीतेति कृत्वा उपारंस्त विमना निवर्त्तते स्म विभाषाकर्मकादिति तङ् । वायुसम्भवो हनूमान् ॥ ५५ ॥ ज० म०

दृष्ट्वेत्यादि । दयितया साकं सह रहीभूतं विजनदेशस्थं दशाननं दृष्ट्वा अत्र सीता नास्तीति मत्वा दुर्मना दुःखितचित्तो वायुसम्भवो हनूमान् उपारंस्त निवर्त्तते स्म तस्मादुपाङ्भ्यामित्यर्थात् पूर्ववत् पक्षे मं, अरहसि रहसि भवनमिति मनश्चक्षुरित्यादिना सलोपः ॥ ५५ ॥ भ०

तत इत्यादि । तत उत्तरकालं प्राकारमारोहत् आरूढवान्

नायोधयत् समर्थोऽपि सीतादर्शनलालसः ॥ ५६ ॥
अध्यासीद्राघवस्याहं नाशयेयं कथं शुचः।
वैदेह्या जनयेयं वा कथमानन्दमुत्तमम् ॥ ५७ ॥
दृष्ट्वा राघवकान्तां तां द्रावयिष्यामि राक्षसान्।
तस्या हि दर्शनात् पूर्वं विक्रमः कार्य्यनाशकृत् ॥ ५८ ॥

क्षपाटान् राक्षसान् अविबोधयन् अचेतयन् णिचश्चेत्यात्मनेपदे प्राप्ते बुधयुधेत्यादिना वा लटः परस्मैपदं बुधेरणौ सकर्मकस्य चित्तवत्कर्त्तृकत्वात् हनूमतश्चित्तवत्त्वात् तत्र ह्यकर्मका ये तेषामन्वितवत्कर्त्तृत्वार्थमुपादानमित्युक्तं तान्नायोधयत् समर्थोऽपि न संग्रामितवान् यतः सीतादर्शनलम्पटः अणावकर्मकादित्यनेन उभयत्रापि लङः परस्मैपदं युधेरेकस्याचित्तवत्कर्त्तृकत्वात् ॥ ५६ ॥ ज० म०

तत इत्यादि। ततोऽनन्तरं हनूमान् प्राकारमारोहत् आरूढ़वान् किं कुर्वन् क्षपाटान् राक्षसान् अविबोधयन् अचेतयन् समर्थोऽप्यसौ तान् नायोधयत् सीतायाः दर्शने लालसो महाभिलाषोऽस्य अत्रन्तादुभयपदे प्राप्ते कस्मान्नार्थेङित्यादिना पम् ॥ ५६ ॥ भ०

अध्येत्यादि। राघवस्याहं कथं केन प्रकारेण शुचं शोकं नाशयेयं कथं वा वैदेह्याः सीताया आनन्दं जनयेयमिति हनूमानध्यासीत् चिन्तितवान् ध्यै चिन्तायामित्यस्य लुङि रूपं, नशिजन्योरकर्मकत्वात् अणावित्यनेन लिङः परस्मैपदं, न बुधेत्यादिना जनिवृधित्यादिना जनेर्मित्संज्ञायां ह्रस्वत्वम् ॥ ५७ ॥ ज० म०

अध्येत्यादि। अहं राघवस्य शुचः शोकान् केन प्रकारेण नाशयेयं कथं वा वैदेह्याः सीताया उत्तममानन्दं जनयेयम् इति हनूमान् अध्यासीत् चिन्तितवान् ध्यै चिन्तायाम् एचोऽयित्या यमरमेति इमसनौ अत्रन्तनशजनाभ्यां कस्मान्नार्थे इत्यादिना पं, जनेर्घटादिजनीति ह्रस्वः ॥ ५७ ॥ भ०

दृष्टेत्यादि। इयमसाविति राघवस्य कान्तां दृष्ट्वा द्रावयिष्यामि

इति चिन्तयन्नित्युत्तुङ्गैः प्लावयन्तीं दिवं वनैः।
अशोकवनिकामारादपश्यत् स्तवकाचिताम्॥५९॥
तां प्राविशत् कपिव्याघ्रस्तरूनचलयन् शनैः।
अत्रासयन् वनेशयान् मृगान् शाखासु पक्षिणः॥६०॥

राक्षसान् पलाययिष्यामि अत्र अणावित्यनेन न बुधेत्यादिना तस्याकर्मकस्य चित्तवत्कर्तृकत्वात् हि यस्मात् तस्याः सीतायाः दर्शनात् पूर्वं विक्रमः कार्य्यस्य सीतादर्शनरूपस्य नाशकृत्॥५८॥ ज० म०

दृष्ट्वेत्यादि। तां राघवस्य कान्तां सीतां दृष्ट्वा अहं राक्षसान् द्रावयिष्यामि पलायनपरान् करिष्यामीति पूर्ववत् पं हि यस्मात् तस्य राघवस्य कान्ताया दर्शनात् पूर्वकालं विक्रमः कार्य्यस्य सीतादर्शनस्य नाशकभावं करिष्यति इत्थं चिन्तयन्निति वक्ष्यमाणश्लोकेनान्वयः॥५८॥ भ०

चिन्तेत्यादि। इत्थं पूर्वोक्तप्रकारेण चिन्तयन्नारात् समीपे अशोकवनिकामपश्यत् उत्तुङ्गैरुच्चैर्वनैर्दिवमाकाशं प्लावयन्तीं व्याप्नुवानां बुधयुधेत्यादिना तिप् प्लवतेरकर्मकस्याचित्तवत्त्वात् स्तवकाचिताम् अशोकपुष्पस्तवकैः छन्नाम्॥५९॥ ज० म०

चिन्तेत्यादि। इत्थं पूर्वोक्तप्रकारेण चिन्तयन् आरात् समीपेऽशोकवनिकाम् अपश्यत् कीदृशीम् उत्तुङ्गैरुच्चैर्वनैर्दिवमाकाशं प्लावयन्तीं व्याप्नुवतीं पूर्ववत् पं। नगैरिति पाठे नगैर्वृक्षैरित्यर्थः स्तवकैः पुष्पगुच्छैराचिताम् व्याप्ताम्॥५९॥ भ०

तामित्यादि। तामशोकवनिकां कपिव्याघ्रः कपिर्व्याघ्र इव शनैर्मन्दं प्राविशत् तरूनचलयन् अकम्पयन् चलेरकर्मकत्वाच्चित्तवत्कर्तृकत्वादणावित्यनेन च लटः परस्मैपदं अनिगरणेत्यादिना तद्धि तत्र सकर्मकार्थम् अचित्तवत्कर्तृकार्थञ्चेत्युक्तं वनेशयान् पक्षिणः शाखासु मृगान् अत्रासयन् अणावित्यनेन परस्मैपदं वने शेरत इति अधिकरणे शेतेरित्यच् शयवासवासिष्वित्यादिना सप्तम्या विभाषा अलुक्॥६०॥ ज० म०

तामित्यादि। कपिव्याघ्रः कपिश्रेष्ठो हनूमान् तामशोकवनिकां शनैर्मन्दं प्राविशत् किं कुर्वन् तरून् अचलयन् अकम्पयन् पूर्ववत् पं,

अवाद्वायुः शनैर्यस्यां लतां नर्त्तयमानवत् ।
नायासयन्त सन्त्रस्ता ऋतवोऽन्योन्यसम्पदः ॥ ६१ ॥
ज्योत्स्नामृतं शशी यस्यां वापीर्विकसितोत्पलाः ।
अपाययत सम्पूर्णः सदा दशमुखाज्ञया ॥ ६२ ॥

घटादित्वात् ह्रस्वः । वनेशयान् वनचरान् शाखासु सुप्तान् पक्षिणोऽत्वा-
शयन् कम्पाद्यर्थेङित्यादिना अजिग्राणिषाढादिति यं, वने शेते इति
पचादित्वादन् अभिधानात् सप्तम्या अलुक् असमासेऽपि न चतिः
अकालवाचिनः शयवासवासिषु इति सप्तम्या अलुगिति परः एवोसुबा
अवरवमिनि आविशङ्क इति वचनात् ने इत्यस्य वधुत्वं गरुत्वे जिह्वा-
कष्टं वनशयानिति केचित् पठन्ति अकालवाचिन इत्यादि परस्त्रतस्या-
नित्यत्वेन विभक्तिलोपात् ॥ ६० ॥ भ०

अवादित्यादि । यस्यामशोकवनिकायां वायुर्वातः शनैर्मन्दमवात्
वाति स्म तामाटेति वक्ष्यमाणेन सम्बन्धः, लतां नर्त्तयमानवत् नृत्य-
मिव कारयन् नृतिश्चलने वर्त्तते ततश्च निगरणेत्यादिना परस्मैपदं
प्राप्तं नपादम्मीत्यादिना प्रतिषिद्धम् । ऋतवोऽन्योन्यं सम्पदं परस्परस्य
विभूतिं नायासयन्त नोपपीड़यन्ति स्म सन्त्रस्ता रावणात् आङ्पूर्वा-
द्यसेः चित्तवत्कर्त्तृकत्वात् अणावित्यादिना परस्मैपदं प्राप्तं नपाद-
मीत्यादिना प्रतिषिद्धम् ॥ ६१ ॥ ज० म०

अवादित्यादि । यस्यामशोकवनिकायां वायुः शाखाभङ्गभयात्
शनैर्मन्दम् अवात् वाति स्म तां प्राविशदिति पूर्वेण तामाटेति वक्ष्य-
माणेन वा सम्बन्धः, लतां नर्त्तयमान इव जिनृत्यन्तेत्यनेन फलवत्-
कर्त्तरि मं फलवत्कर्त्तृत्वाभावे तु नृतेः कम्पार्थत्वात् परस्मैपदं स्या-
दिति पुरुषोत्तमः । यत्र रावणात् सन्त्रस्ता भीता ऋतवो वसन्तादयः
परस्परसम्पद्भीर्न आयासयन्त न पीड़यन्ति स्म कर्मि प्राणिषाढाचेति
प्राप्ते पूर्ववन्मं ॥ ६१ ॥ भ० ॥

ज्योत्स्नेत्यादि । यस्यां रावणाज्ञया शशी सदा सम्पूर्णः सन्
ज्योत्स्नामृतं वापीरपाययत पायितवान् निगरणार्थत्वात्तिपि प्राप्ते

प्रादमयन्त पुष्पेषु यस्यां वन्द्यः समाहृताः ।
परिमोहयमाणाभी राक्षसीभिः समावृताः ॥ ६३ ॥
यस्यां वासयते सीतां केवलं स्म रिपुः स्मरात् ।
न त्वरोचयतात्मानं चतुरो बुद्धिमानपि ॥ ६४ ॥

नपादम्येत्यादिना प्रतिषिद्धे णिचश्चेति तङ् ॥ ६२ ॥ ज० म०

ज्योत्स्नेत्यादि । यस्यां रावणाज्ञया सदा सम्पूर्णः शशी ज्योत्स्नारूपमस्तं वापीर्दीर्घिका अपाययत पायितवान् अन्नार्थत्वात् षे प्राप्ते पूर्ववन्तं शाच्छासाह्वेत्यादिना यन् अतएव विकसितानि उत्पलानि यासु तास्तया ज्योतिरस्याम् अस्तीति ज्योत्स्ना निपातनात् ॥ ६२ ॥ भ०

प्रादेत्यादि । यस्यां वन्द्यः समाहृताः समानीताः पुष्पेषु कामं प्रादमयन्त शमितवत्यः तन्मतस्याचरणात् कीदृश्यः परिमोहयमाणाभिः व्यामोहयन्तीभिः राक्षसीभिः परिवृताः दमिपरिमुहोः अणावित्यादिना प्राप्तस्य परस्मैपदस्य नपादमीत्यादिना प्रतिषेधे णिचश्चेत्यात्मनेपदम् ॥ ६३ ॥ ज० म०

प्रादेत्यादि । यस्यामशोकवनिकायां समाहृता आनीता एकत्र कृता वा वन्द्यो हठहृताः स्त्रियः पुष्पेषु कामं प्रादमयन्त प्रशमितवत्यः अतिदुःखात् यतः परिमोहयमाणाभिर्व्यामोहयन्तीभीराक्षसीभिः समावृताः परिवृता दमुपरिमुहोरञ्जि प्राणिषादाच्चेति षे प्राप्ते पूर्ववन्तं ॥ ६३ ॥ भ०

यस्यामित्यादि । रिपुर्दशाननः स्मरात् कामाद्धेतोः केवलं निष्फलं यस्यां सीतां वासयते स्म वासितवान् न त्वरोचयत् आत्मानं नैवात्मानमुपरोचितवान् चतुरोऽपि योषिदाराधनकुशलोऽपि बुद्धिमानपि सम्पन्नोऽपि रोचिवासोरणावित्यादिना प्राप्तस्यापि च परस्मैपदस्य न पादमीति प्रतिषेधे णिचश्चेति तङ् ॥ ६४ ॥ ज० म०

यस्यामित्यादि । यस्यामशोकवनिकायां रिपुर्दशाननः स्मरात् कामात् केवलं सीतां वासयते स्म वसतिं कारयति स्म न तु आत्मानं

मन्दायमानगमनो हरितायत्तरूं कपिः।
द्रुमैः शकशकायद्भिर्मारुतेनाट सर्वतः॥ ६५॥
अस्यन्दन्निन्दुमणयो व्यरुचन् कुमुदाकराः।

तस्यै अरोचयत रोचितवान् चतुरोऽपि योषिदाराधनकुशलोऽपि बुद्धिमानपि सरशास्त्रज्ञानवानपि वसरुचोर्यजि प्राणिषाद्वाश्चेति पे प्राप्ते पूर्ववन्मम्॥ ६४॥ भ०

मन्देत्यादि। कपिः सर्वतः सर्वत्र तामाट विजहार यत्तदोर्नित्यसम्बन्धात्तामिति गम्यते मन्दायमानगमनः मन्दीभवद्गमनः कीदृशीं हरितायत्तरूं शाद्वलीभवद्वृक्षाम् अप्राणिजातेश्चेत्यूङ् द्रुमैरुपलक्षितां कीदृशैः शकशकायद्भिः शकस्वभावैः शकीभवद्भिः केन मारुतेन अत्तामन्दं मन्दं भवति अहरिता हरिता भवन्तीति लोहितादित्वात् क्यष् अशकाः शका भवन्तीति वाक्ये अव्यक्तानुकरणादिति डाच् तस्मिन्विषयभूते डाचि बहुलं द्वे भवतः नित्यमाम्रेडिते डाचीति पररूपत्वं डाजन्तात् शकशकाशब्दात् क्यष् वा क्यष् इति परस्मैपदम् आत्मनेपदञ्च॥ ६५॥ ज० म०

मन्देत्यादि। कपिः सर्वतः सर्वत्र तामशोकवनिकामाट बभ्राम कीदृशः मन्दायमानगमनः अमन्दं मन्दं भवति मन्दायमानं तादृशं गमनमस्येति विग्रहः भृशादेश्च च्व्यर्थे इति क्यङ् ङित्त्वान्तं। तां कीदृशीं हरितायत्तरूं हरिद्वर्णीभवद्वृक्षाम् अहरिता हरिता भवन्ति हरितायन्तस्तादृशास्तरवो यत्र डाज्लोहितादेरिति च्व्यर्थे क्यङ् पक्षे पञ्च। मारुतेन वायुना शकशकायद्भिः शकत्शकदिति शब्दं कुर्वद्भिः द्रुमैरुपलक्षितां द्रुमैः करणभूतैराटेति वा शकदित्यनुकरणशब्दात् नैकाचोऽव्यक्तानुकरणादिति डाच् द्वित्वञ्च तलोपोऽत इति प्रकृतेर्द्वेश्च तलोपः अशकशकाः शकशका भवन्तीति डाच्लोहितादेरिति च्व्यर्थे क्यङ् पक्षे पञ्च शकदित्यस्य शब्दवाचकस्यापि लक्षणया तद्वति इत्थं वृत्तिः॥ ६५॥ भ०

अस्येत्यादि। चन्द्रोदयादिन्दुमणयः अस्यन्दन् स्यन्दन्ते स्म तामा-

अलोठिषत वातेन प्रकीर्णाः स्तवकोच्चयाः॥ ६६॥
सीतान्तिके विवृत्सन्तं वर्त्स्यत्सिद्धिं प्लवङ्गमम्।
पतत्त्रिणः शुभा मन्द्रमानुवाना स्वजिह्लदन्॥ ६७॥

टेति योज्यम् व्यरुचन् कुमुदाकराः विराजितवन्तः स्तवकोच्चयाः गुच्छ-राशयः वातेन प्रकीर्णाः इतस्ततो विक्षिप्ताः सन्तः अलोठिषत लुठन्ति स्म सर्वत्र द्युद्भ्यो लुङीति विभाषा परस्मैपदं द्युतादयश्च कृपूपर्य्यन्ताः॥ ६६॥ ज० म०

अस्वेत्यादि। इन्दुमणयश्चन्द्रकान्ता अस्यन्दन् स्रवन्ति स्म चन्द्र-रश्मिभिरित्यर्थात् यस्यां तामाटेति सम्बन्धो बोध्यः यस्यां कुमुदानामा-करा उत्पत्तिस्थानानि व्यरुचत् विरेजुः यस्यां स्तवकोच्चयाः पुष्पगुच्छ-समूहा वातेन प्रकीर्णाः इतस्ततो विक्षिप्ताः सन्तः अलोठिषत लुलुठुः स्यन्दूङ्स्रवणे लुठ्-प्रतीघाते रुचलुङ्प्रीतिप्रकाशयोः रुच्लुठ्ङवादित्वात् एषां ङित्त्वादात्मनेपदे सिद्धे शास्त्रविद्युतृपुत्रादेरिति द्युतादित्वात् टी पे ङविधानं तेनैव पं अतएव द्युतादेष्वाबुभयपदित्वं गम्यते परे तु लुङि द्युतादेरिति सूत्रेण विकल्पेनात्मनेपदमाहुः ङे स्यन्देर्नलोपाभावो बाहुल्यात् देवीदासचक्रवर्त्ती तु शास्त्रविद्युदित्यादौ ग्लुचुनैवेष्टसिद्धौ ग्लुञ्चूपादानेन ङे क्वचित् नलोपाभावो ज्ञापित इत्याह। केचित्तु क्वचि-दात्मनेपदिनोऽपि परस्मैपदित्वं स्यादिति ज्ञापनाय घ्यां रूपं दर्शित-मित्याहुः, अलोठिषतेति सान्तोऽदनत इत्यतादेशः॥ ६६॥ भ०

सीतेत्यादि। सीतासमीपे विवृत्सन्तं वर्त्तितुमिच्छन्तं प्लवङ्गमं वत्-र्स्यत्सिद्धिं तत्स्यन्ती भविष्यन्ती सिद्धिः सीतादर्शनलक्षणा यस्य वृद्भ्यः स्यसनोरिति विभाषातिप् तं पक्षिणः शुभाः प्रशस्ता अजिह्लदन् सुख-यन्ति स्म णिचि लुङि रूपम्। कीदृशाः मन्द्रं गम्भीरं मधुरमानुवाना वाश्यमानाः आङिनुप्रच्छ्योरुपसंख्यानमिति तङ् णुस्तुतावित्यादादि-कस्य परस्मैपदित्वात्॥ ६७॥ ज० म०

सीतेत्यादि। शुभाः अनुकूलाः पतत्त्रिणः पक्षिणः प्लवङ्गमं हनूमन्तम् अजिह्लदन् आनन्दयामासुः ह्लादीङ्मोदने णौ ङ्यां रूपम्।

वर्त्तिष्यमाणमात्मानं सीता पत्युरिवान्तिके ।
उदपश्यत्तदा तथ्यैर्निमित्तैरिष्टदर्शनैः ॥ ६८ ॥
निरवर्त्स्यन्न चेद्वार्त्ता सीताया वितथैव नः ।
अकल्प्स्यदुद्यतिः सर्वा हनूमानित्यचिन्तयत् ॥ ६९ ॥

इत्यात्मनेपदाधिकारः ।

किं कुर्वन्तः मन्द्रं गम्भीरस्वानुवानाः उत्कण्ठापूर्वकं शब्दं कुर्वाणाः आङ्पूर्वो नौतिरुत्कण्ठायां शब्दे वर्त्तते विपराजीत्यादिना सं कीदृशं सीतासमीपे विष्टवन्तं वर्त्तितुमिच्छन्तं वर्त्स्यन्ती भविष्यन्ती सिद्धिः सीतादर्शनरूपा यस्य तं शुभशब्देन भाविनीं सिद्धिमनुनाय कपेरानन्द इति ध्वनिः । वृद्भ्यो नेमसे स्यसनोर्वात्मने इति इसनिषेधः अतएव पं तेन वृतादेः स्यसनोरुभयपदित्वं गम्यते ॥ ६७ ॥ भ०

वर्त्तीत्यादि । सीतापि तदा तस्मिन् काले पत्यूरामस्यान्तिके आत्मानं वर्त्तिष्यमाणमिव उदपश्यत् उत्प्रेक्ष्यते स्म वृद्भ्यः स्यसनोरिति विभाषावचनात्तङ् । निमित्तैश्चक्षुःस्पन्दनादिभिः तथ्यैरविसंवादिभिः इष्टदर्शनैः इष्टार्थप्रकाशकैः दर्शनमिति कल्यल्युटो बहुलमिति कर्त्तरि ल्युट् ॥ ६८ ॥ ज० म०

वर्त्तीत्यादि । तदा तस्मिन् काले सीतापि पत्यूरामस्यान्तिके वर्त्तिष्यमाणमिवात्मानं निमित्तैश्चक्षुःस्पन्दनादिभिरुदपश्यत् उत्प्रेक्षितवती तथ्यैरविसंवादिभिः इष्टः प्रियो दृश्यते यैः करणेऽनट् इष्टं दर्शयन्तीति कर्त्तरि वा इष्टस्य दर्शनं येभ्य इति वा वृतादेः पे स्यसनोरिमनिषेधः से तु इस् भवत्येव इवार्थोऽत्र सादृश्यं सम्भावना वा ॥ ६८ ॥ भ०

निरेत्यादि । चेदिति यद्यर्थे यदि सीताया वार्त्ता न निरवर्त्स्यत् निर्वृतिं नायास्यत् तदा वृथैव निष्फलैव नोऽस्माकमुद्यतिः सर्वा उद्यमः समुद्रलङ्घनादिकः अकल्प्स्यत् अभविष्यत् इत्येवं हनूमानचिन्तयत् क्रियातिपत्तौ लृङ् तत्र निवर्त्स्यदिति वृद्भ्यः स्यसनोरिति विभाषापरस्मैपदम् अकल्प्स्यदिति लुटि चक्लृप इति चकारात्

वृक्षाद् वृक्षं परिक्रामन् रावणाद् बिभ्यतीं भृशम् ।
भुवो त्राणमपश्यन्तीमदृश्यो जनकात्मजाम् ॥ ७० ॥

व्यसनोरपि भवति विभाषापरस्मैपदं व्ययतिरिति यमेः स्त्रियां क्तिन् अनुदात्तेत्यादिना अनुनासिकलोप इत्यात्मनेपदपरस्मैपदाधिकारः ॥ ६९ ॥ ज० म०

निरेत्यादि । चेद्यदि सीताया वार्त्ता न निरवर्त्स्यत् न निष्पत्स्यते तदास्माकं सर्वा समुद्रलङ्घनादिरूपा उद्यतिरुद्यमो वितथैव निष्फलैव अकल्प्स्यत् अभविष्यत् इति हनूमान् अचिन्तयत् वृतादेः पूर्ववदुभयपदम् अनिम् च स्यां रूपं निष्पूर्वो वृत्तिर्निष्पत्त्यर्थः कृपूधञ्च कल्पने कृपकृपोऽकृपादाविति कृपादेशः यमेः क्तौ वनतनाद्यनिमाभिति मलोपः । इति परस्मैपदाधिकारः ॥ ६९ ॥ भ०

इतः प्रभृति कारकमधिकृत्याह ।

वृक्षादित्यादि । तां जनकात्मजां सीतां स कपिकुञ्जरोऽपश्यदिति वक्ष्यमाणेन सम्बन्धः वृक्षात् वृक्षं परिक्रामन् गच्छन् ध्रुवमपायेऽपादानमित्यपादानसंज्ञायां पञ्चमी रावणात् बिभ्यतीं भृशं त्रसन्तीम् अत्यर्थं भुवो रावणाद्त्राणमपश्यन्तीं यतो भयन्ततः कुतो रक्षेति भीत्रार्थानामित्यपादानसंज्ञा अदृश्यः प्रच्छन्नो भूत्वा ऋदुपधेत्यादिना क्यप् ॥ ७० ॥ ज० म०

अथ कारकाधिकारः ।

वृक्षादित्यादि । तां जनकात्मजां कपिकुञ्जरोऽपश्यदिति तृतीयश्लोकेनान्वयः किं कुर्वन् अदृश्यो भूत्वा वृक्षादेकस्मादपरं वृक्षं परिक्रामन् गच्छन् तां कीदृशीं रावणात् बिभ्यतीं त्रसन्तीं भुवो रावणात् त्राणं रक्षणम् अपश्यन्तीं यतोऽपायेत्यादिना सर्वत्रापादानत्वम् अपायः संश्लेषः अपाययोगे यच्छब्दोऽवधिवचनः यतो भीर्भयमित्यत्र यच्छब्दो भयहेतुवचनः तेन भयार्थयोगे भयहेतोरपादानत्वं त्राणं रक्षणं तच्च भीतस्य तेनात्रापि यच्छब्दो भयहेतुवचनः तेन त्राणार्थयोगेऽपि भयहेतोरपादानत्वं दृश्यजुषेत्यादिना ऋदुङ्त्वात् दृशेः क्यप् ॥ ७० ॥ भ०

तां पराजयमानां स प्रीतेरक्ष्यां दशाननात्।
अन्तर्दधानां रक्षोभ्यो मलिनां ध्याममूर्द्धजाम्॥ ७१॥
रामादधीतसन्देशो वायोर्जातस्तुरतस्मिताम्।
प्रभवन्तीमिवादित्यादपश्यत् कपिकुञ्जरः॥७२॥

तामित्यादि। प्रीतेः रावणसम्बन्धिन्याः पराजयमानां विमुखीभवन्तीं पराजेरसोढ इत्यपादानत्वम् असोढोऽर्थः प्रीतिः रक्ष्यां दशाननात् रावणविषये स्वयं निवार्य्यप्रसरां वारणार्थानामीप्सित इत्यपादानत्वं प्रवृत्तिविघातलक्षणया रक्षणक्रियया आत्मसम्बन्धिन्या दशाननस्य व्याप्तुमभिप्रेतत्वात् अन्तर्दधानां रक्षोभ्यः मा मां रक्षांसि द्राक्षुरिति तत्रान्तर्द्धौ येनादर्शनमित्यपादानसंज्ञा अन्तर्द्धिनिमित्तं हि रक्षोभिरात्मनोदर्शनस्यानीप्सितत्वात् मलिनां शरीरेण स्नानमूर्द्धजां मलिनकेशां बद्धवेणीत्वात्॥ ७१॥ ज० म०

तामित्यादि। तां कीदृशीं प्रीतेरावणसम्बन्धिन्या इत्यर्थात् पराजयमानां प्रीतिमसहमानामित्यर्थः यतोऽपायेत्यादौ पराजयोऽसहनं पराजयपदनिर्देशेन परापूर्व्वजेरसहनविषयीभूतो गम्यते पराजेरसोढ इति पाणिनिसूत्रदर्शनात् पराजेः सोढुमशक्यमिति क्रमदीश्वरसूत्रदर्शनाच्च अशक्त्या निवर्त्तनं वा पराजयः रावणप्रीतेः सकाशात् अशक्त्या निवर्त्तमानामित्यर्थः यद्यपि प्रीतिं बुद्ध्या प्राप्य ततो निवर्त्तत इति बुद्धिकृताय एवापादानत्वं घटते तथापि पराजयेति कृतं प्रपञ्चार्थं दशाननात् रक्ष्यां रक्षणीयां त्राणार्थेऽपादानत्वं रक्ष्यां निवारणीयां वा तदा वारणार्थेऽपादानत्वं रक्षोभ्योऽन्तर्दधानां राक्षसकर्त्तृकदर्शनाभावेच्छया व्यवहिनीभवन्तीम् अन्तर्द्धावपादानत्वम् अन्तर्द्धिर्व्यवधानं तच्च यदीयदर्शनाभावेच्छया तस्यापादानत्वं रक्षांसि विलोक्येति वा ल्यबर्थे पञ्चमी मलिनां शरीरेण ध्याममूर्द्धजां मलिनां वेणीबन्धात् मत्वर्थात् फलादित्वात् गोत्रणमेघेत्यादिना इनः॥ ७१॥ भ०

रामादित्यादि। सत्कृत्य अधीतसन्देशो गृहीतसन्देशः कपिकुञ्जरः आख्यातोपयोग इत्यपादानसंज्ञा रामस्याख्यातृत्वात् साव-

रोचमानः कुट्टिभ्यो रक्षोभ्यः प्रत्तवान् श्रियम् ।
श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिपः ॥ ७२ ॥

ख्यातितया सन्देशग्रहणात् नियमपूर्वकविद्यावत्सन्देशग्रहणं वायोर्जात इति जनिकर्तुरित्यपादानसंज्ञा जन्यर्थस्य जन्मनः कर्ता हनूमान् तस्य वायुः प्रकृतिः कारणं च्युतक्षितां शोकाक्रान्तत्वात् प्रभवन्तीमिवादित्यात् भुवः प्रभव इत्यनेन भवत्यर्थस्य सीतायाः कर्तृभूतायाः प्रथमत उपलभ्यमानत्वात् अतः प्रभव आदित्यः तस्यास्तेजस्वित्वात् ॥ ७२ ॥ ज० म०

रामादित्यादि । च्युतं क्षितं यस्याः शोकाक्रान्तत्वात् ताम् आदित्यात् प्रभवन्तीमिव उत्पद्यमानामिव प्रथमत उपलभ्यमानां वा एतेन तेजोऽतिशयो दर्शितः यतोऽपायेत्यादिना यतो भूरित्यपादानत्वं भूरुत्पत्तिः उत्पत्तितुल्यत्वलक्षणया प्रथमोपलम्भस्थानस्य बुद्धिसंश्लेषपूर्वकस्यापायस्य सत्त्वात् यतोऽपाय इत्यपादानत्वं वा यत्र प्रकाशनं प्रभव इत्याधारस्यापादानत्वमिति श्रीपतिः । भुव आद्योपलम्भस्थानमित्यपादानसंज्ञार्थं क्रमदीश्वरसूत्रम् ईदृशीं तां कपिकुञ्जरः कपिश्रेष्ठो हनूमान् अपश्यदित्यन्वयः स कीदृशः रामादधीतसन्देशः गृहीतवाचिकः यत आदानमित्यपादानत्वं वायोर्जातः यतो भूरित्यपादानत्वम् ॥ ७२ ॥ भ०

रोचेत्यादि । तत्र तस्यामशोकवनिकायां राक्षसाधिपो रावणः आगात् आगतः रोचमानः कुट्टिभ्यः त्यक्तत्रयीधर्मत्वात् ये कुट्टयः कुवृत्तयः तान् स्वविषये स्पृहावतः कारयन्नित्यर्थः रुच्यर्थानां प्रीयमाण इति सम्प्रदानसंज्ञायां चतुर्थी रुचेरभिलाषस्य तत्रावस्थानात् कुट्टयः प्रीयमाणाः रक्षोभ्यः श्रियं विभूतिं प्रत्तवान् कर्मणा यमभिप्रैतीति सम्प्रदानं ददाति क्रियया राक्षसानामभिप्रीयमाणत्वात् श्लाघमानः परस्त्रीभ्यः युष्मद्विषयेऽस्माकं श्लाघेति परकलत्राणि ज्ञापयितुमेषयन् श्लाघह्नुङित्यादिना सम्प्रदानत्वं श्लाघया बहुमानेन ज्ञापयितुमिष्यमाणत्वात्तासाम् ॥ ७२ ॥ ज० म०

कुलकम् । रोचेत्यादि । तत्र तस्यामशोकवनिकायां राक्षसाधिपो

अशपत निह्नुवानोऽसौ सीतायै स्मरमोहितः ।
धारयन्निव चेतस्यै वसूनि प्रत्यपद्यत ॥ ७४ ॥

रावण आगात् आगतः कीदृशः कुदृष्टिभ्यो रोचमानः ये कुदृष्टयः कुबुद्धयः त्यक्तधर्मत्वात् तेभ्यो रोचमानस्तेषां प्रीतिमुत्पादयन् यस्मै दित्सेत्यादिना यस्मै रुचिरिति सम्प्रदानत्वं रुचिरभिलाषोत्पादनं तेन रुच्यर्थस्य कर्त्ता यस्य प्रीतिमुत्पादयति तस्य सम्प्रदानत्वमिति पर्य्यवसितोऽर्थः रक्षोभ्यः श्रियं प्रत्तवान् कृतसम्पत्तिदानः व्यचस्तवेति दाजस्तादेशः यस्मै दित्सेति सम्प्रदानत्वम् । परस्त्रीभ्यः श्लाघमानः तासां श्लाघया तास्तोषयन् स्वकीयश्लाघां ता ज्ञापयन् वा तास्वात्मश्लाघां कथयन् वा यस्मै श्लाघार्थ इति सम्प्रदानत्वं यस्मै श्लाघार्थ इति श्लाघार्थेन यो ज्ञीप्स्यमानस्तस्य सम्प्रदानत्वमित्यर्थः ॥ ७३ ॥ भ०

अशपत्त्यादि । सीतायै निह्नुवानः क्रौर्य्यादिकं न मेऽस्तीति सीतां ज्ञापयितुमपपयन्नित्यर्थः तस्यै सीतायै अशपत् शपथं सीतां ज्ञापयितुमैपदित्यर्थः किमित्येयमाह स्मरमोहितः अत्र शपथापह्नुतिक्रियया सीतामाज्ञापयितुमिष्यमाणत्वात् पूर्ववत् सम्प्रदानसंज्ञा किञ्चास्यै सीतायै स्वामिनीभूतायै वसूनि द्रव्याणि प्रत्यपद्यत अङ्गीकृतवान् धारयन्निव गृहीतवित्त इव अत्र धारेरुत्तमर्ण इति सीतायाः कयाचिदुत्तमर्णया तुल्यत्वात् ॥ ७४ ॥ ज० म०

अशपत्त्यादि । असौ रावणः स्मरेण मोहितः सन् सीतायै अशपत् शपथं मिथ्यानिरसनं तां ज्ञापयितुमिच्छति स्म स्वशपथपूर्वकं वा किञ्चित् ज्ञापयितुमिष्टवान् शपथाभीर्गत्यनुकार इति शपथे सं तस्यै निह्नुवानः कपटापह्नवेन सीतां स्वाभिप्रायं ज्ञापयितुमिच्छन् किञ्च एतस्यै सीतायै वसूनि धारयन्निव तत्सम्बन्धीनि धनानि आत्मनि स्थापयन्निव गृहीतवित्तोऽधमर्ण इव तस्यै वसूनि प्रत्यपद्यत दातुमङ्गीकृतवान् यस्मै दित्सेत्यादिना सर्वत्र सम्प्रदानत्वं शपह्नुधात्वर्थयोगे यच्छन्दो ज्ञीप्स्यमानवचनः धात्वर्थयोगे यच्छब्द उत्तमर्णवचनः ॥ ७४ ॥ भ०

तस्मै स्पृहयमाणोऽसौ बहुप्रियमभाषत ।
सानुनीतिश्च सीतायै नाक्रुध्यन्नाप्यसूयत ॥ ७५ ॥
संक्रुध्यसि मृषा किं त्वं दिदृक्षुं मां मृगेक्षणे ! ।
ईक्षितव्यं परस्त्रीभ्यः स्वधर्मो रक्षसामयम् ॥ ७६ ॥

तस्य इत्यादि । असौ राक्षसाधिपः स्पृहयमाणः सीतामाप्तुमिच्छन् बहुप्रियमभाषत वक्ष्यमाणं स्पृहेरीप्सित इति स्पृहयतेः स्वार्थिकण्यन्तस्य प्रयोगे सीताया ईप्स्यमानत्वात् सानुनीतिश्च सानुनयः सीतायै नाक्रुध्यत् तां प्रति कोपं न कृतवान् नाप्यसूयत दोषाविष्करणलक्षणामसूयां न कृतवान् क्रुध्यतिसूयत्योर्दिवादिकयोरुदात्तेत्त्वात् तङ् लङि प्रयोगे क्रुधद्रुहेत्यादिना सम्प्रदानम् ॥ ७५ ॥ ज० म०

तस्य इत्यादि । असौ रावणो बहुप्रियं वक्ष्यमाणम् अभाषत तस्मै सीतायै स्पृहयमाणः स्पृहां कुर्वन् यस्मै दित्सेत्यादिना सम्प्रदानत्वं स्पृह्यर्थे यच्छब्द ईप्सितवचनः सानुनीतिः सानुनयः सन् सीतायै नाक्रुध्यत् न कोपं कृतवान् नापि असूयत दोषाविष्करणं नापि कृतवान् सूयोऽसूताविव्यस्यानेकार्थत्वात् इदं रूपं ष्यां कण्ड्वादावसूधातोर्घोटीयीष्वमित्यस्य कचिद्व्यभिचाराद्यमोऽभाव इति केचित् । नाप्यसूयतेति केचित् पठन्ति पूर्ववत् सम्प्रदानत्वम् ॥ ७५ ॥ भ०

संक्रुध्यादि । किं त्वं शुभाशुभे दिदृक्षुं द्रष्टुमिच्छुं मां हे मृगेक्षणे ! संक्रुध्यसि क्रुधद्रुहोरुपसृष्टयोः कर्मसंज्ञा क्रुधेरुपसर्गेण युक्तत्वात् । कुतस्ते परिज्ञानं यत्परस्त्रीषु शुभाशुभं निरूपयसि अन्यत्र दुष्टाशयत्वात् अथ कथं मृषा संक्रुध्यामीति चेदाह ईक्षितव्यं परस्त्रीभ्यः का शुभा न शुभेति यदीक्षितव्यमीक्षणीयं तदयं स्वधर्मो रक्षसां राधीक्ष्योर्यस्य विप्रश्न इति सम्प्रदानसंज्ञा यतः स्त्रीविषये विविधस्य प्रश्नस्य क्रियमाणत्वात् ॥ ७६ ॥ ज० म०

संक्रुध्यादि । किं प्रियमभाषतेत्याह हे मृगेक्षणे ! त्वं शुभा न वेति द्रष्टुमिच्छन्तं मां किं मृषा त्वं संक्रुध्यसि क्रुधद्रुहोरुपसर्गे सम्-

स्पृवद्भ्यः प्रतिशृखन्ति मध्यमा भीरु ! नोत्तमाः ।
शृण्वद्गोऽनुशृण्वन्त्यन्ये कृतार्था नैव मद्विधाः ॥ ७७ ॥

दानस्य कर्मत्वमिति केचित् । खनते स्वभावादिमौ सोपसर्गौ सकर्मकाविति दुर्गवाक्यमाहृतं क्रियाव्याप्यस्य कर्मत्वात् परस्त्रीदर्शने युक्त एव क्रोधः कथं स्वप्रेति चेदाह परस्त्रीभ्य ईक्षितव्यं विविधप्रश्नपूर्वकं तद्दर्शनं तासां शुभाशुभनिरूपणं वा कर्त्तव्यमित्ययं रक्षसां स्वधर्मः यस्मै दित्सेत्यादिना ईक्षार्थयोगे सम्प्रदानत्वम् ईक्षितम विविधप्रश्नपूर्वकदर्शनार्थः शुभाशुभपर्य्यालोचनार्थो वा ॥ ७६ ॥ म०

शृण्वदित्यादि । अनेनात्मना प्रभावं दर्शयति शृण्वद्भ्यः प्रार्थयमानेभ्यः स्वामिन्निदं क्रियतामिति मध्यमाः प्रभवः प्रतिशृण्वन्ति ओमित्युपगच्छन्ति । हे भीरु ! नोत्तमा मादृशाः ते हि स्वातन्त्र्यात् स्वयमेव हि तत्प्रतिपद्यन्त इति भावः प्रत्याङ्भ्यां श्रुवःपूर्वस्य कर्त्तेति सम्प्रदानसंज्ञा पूर्वस्याः प्रार्थनक्रियायाः प्रार्थयितुः कर्त्तृत्वात् अन्ये प्रभवोऽकृतार्थाः अलब्धलाभाः गृणद्भ्यः अनुग्राह्यस्य भृत्यस्य कस्यचिन्न स्तुतिं कुर्वद्भ्यो मन्त्रिभ्यः अनुगृणन्ति तान् मोत्साहयन्ति अनुगृणीत अनुगृणीतेति ममानुगतो भवतीति नैव मद्विधा अनुगृणन्ति कृतार्थत्वात् गृशब्द इत्यस्य प्रयोगे अनुप्रतिगृणश्चेति सम्प्रदानसंज्ञा गृणातेः स्तुतिक्रियापेक्षया कर्तृत्वात् ॥ ७७ ॥ ज० म०

शृण्वदित्यादि । इदानीमात्मोत्कर्षः कथ्यते हे भीरु ! शृण्वद्भ्यः प्रार्थयमानेभ्यः स्वामिन्निदं क्रियतामित्युपदेष्टृभ्यो मध्यमा एव प्रभवः प्रतिशृण्वन्ति तैः प्रयुक्ताः सन्तस्तथा कर्त्तव्यमित्युपगच्छन्ति न तु मद्विधा मादृशाः उत्तमाः ते हि स्वातन्त्र्यात् स्वयमेव हिताहितं जानन्तीति भावः अन्ये ते अकृतार्थाः प्रभवो गृणद्भ्यः स्तुतिं कुर्वद्भ्य एव अनुगृणन्ति तैः प्रयुक्ता धनादिकं दातुमभ्युपगच्छन्ति स्वमपिद्भ्ये स्तावकेभ्यो यच्छन्तीत्यर्थः नन्वेवं मद्विधाः स्वतः प्रविज्ञत्वेन परस्तुत्यनपेक्षत्वात् यस्मै दित्सेत्यादिना उभयत्र सम्प्रदानत्वम् अत्र आप्रतिशुप्रश्नतुपर्थयोगे यच्छब्दो गम्यपूर्वक्रियाकर्तृवचन इति तु रामं वदन्त

इच्छ स्नेहेन दीव्यन्ती विषयान् भुवनेश्वरम् ।
सम्भोगाय परिक्रीतः कर्त्तास्मि तव नाप्रियम् ॥ ७८ ॥
आस्स्व साकं मया सौधे मा धिष्ठा विजनं वनम् ।
मा धिवात्सीर्भुवं शय्यामधिशेष्व स्मरोत्सुका ॥ ७९ ॥

प्रोत्साहयामासेत्यर्थः इत्यनेन सूचितम् अत हि प्रार्थनस्यैव पूर्वक्रिया यस्या तस्याः कर्त्ता प्रयाणच्छन्दः एवं स्तुतिकरणस्यैव पूर्वक्रियागस्या तस्याः कर्त्ता स्वपुच्छन्दः ॥ ७७ ॥ भ०

इच्छेत्यादि । ईदृशं पूजितं भुवनेश्वरं त्रिलोकविजयिनमिच्छ अङ्गीकुरु आत्मानमुद्दिश्य स्नेहेन प्रेम्णा साधकतमकरणमिति करण-संज्ञा । दीव्यन्ती क्रीड़न्ती विषयान् शब्दादिभिरित्यर्थः दिवः कर्म चेति करणसंज्ञापवादात् कर्मसंज्ञा । सम्भोगाय परिक्रीतः तद्विषयभोगेन परिक्रीत इत्यर्थः परिक्रयणे सम्प्रदानमिति सम्प्रदानत्वं । तव नाप्रियं कर्त्तास्मि न करिष्यामि ॥ ७८ ॥ ज० म०

इच्छेत्यादि । भुवनानामीश्वरं मां त्वं स्नेहेन प्रेम्णा इच्छ अङ्गीकुरु साधनहेतुरिति करणत्वम् । किं कुर्वती विषयान् दीव्यन्ती विषयैः स्रक्चन्दनादिभिः क्रीड़न्ती दिवोधवेति पक्षे करणे द्वितीया । सम्भोगाय सम्भोगेन परिक्रीतो नियतकालं त्वया सेवायै स्वीकृतोऽहं तवाप्रियम् अहं न कर्त्तास्मि न करिष्यामि परिक्रियोधेवेति पक्षे करणे चतुर्थी ॥ ७८ ॥ भ०

आस्स्वेत्यादि । मया साकं सार्द्धं सौधे धवलगृहे आस्स्व तिष्ठ आसेर्लोटि रूपम् आधारोऽधिकरणमित्यधिकरणसंज्ञायां सप्तमी । मा धिष्ठा निर्जनं वनम् अधिशीङ्स्थासां कर्मेत्यधिकरणे कर्मसंज्ञा लुङि रूपम् । मा धिवात्सीः भुवं भूमौ मा शयिष्ठाः माङि लुङि रूपम् उपान्वध्याङ्वस इति अधिकरणे कर्मसंज्ञा । किन्तु शय्यामधिशेष्व शीङो लोटि रूपम् अधिशीङिति कर्मसंज्ञा स्मरोत्सुका कामार्थिनी ॥ ७९ ॥ ज० म०

आस्स्वेत्यादि । मया साकं सह सौधे धवलगृहे आस्स्व तिष्ठ

अभिन्यविक्षथास्त्वं मे यथैवाव्याहृता मनः।
तथाप्यध्यावसन्तं मां मा रौत्सीर्हृदयं तथा॥ ८०॥

मावमंस्था नमस्यन्तमकार्य्यज्ञे! जगत्पतिम्।
संदृष्टे मयि काकुत्स्थमधन्यं कामयेत का॥ ८१॥

अभिसङ् उपवेशे आमन्त्रणे प्रार्थने वा गो काजभावाधारमित्याश्लेषाधारत्वं निर्जनं वनं त्वं मा धिषाः निर्जने वने न तिष्ठ कर्मक्रियेत्यादिना अधिपूर्वस्य आधारस्य कर्मत्वं भूस्थेति सिलुक् गीकः सुस्सुमेत्यादिना सत्वम्। भुवं मा धिवाल्यो: भूमौ मा शयिष्ठाः पूर्ववदधिवसेराधारस्य कर्मत्वं मत्सरः इति तः। मरोतृष्णका कामासक्ता सती त्वं मय्यास् अभिशेष्व पूर्ववदधिशीङ आधारस्य कर्मत्वम्॥ ७८॥ भ०

अभीत्यादि। यथैव त्वमव्याहृता अनिवारिता सती मे मम मनः अभिन्यविक्षथाः अभिनिविष्टासि लुङि रूपं नेर्विश इति तङ् अभिनिविशश्चेत्यधिकरणे मनसः कर्मसंज्ञा। तथा त्वमपि त्वद्धृदयमध्यावसन्तं मां मा रौत्सीः मा निवारय रुधेर्लुङि रूपम् उपान्वध्याङ्वस इति हृदयस्य कर्मसंज्ञा॥ ८०॥ ज० म०

अभीत्यादि। यथैव येनैव प्रकारेण त्वमव्याहृता मया अनिवारिता सती मम मनोऽभिन्यविक्षथाः अभिनिविष्टासि शौविश प्रवेशे विपराजीति मं कृशपोऽनिभिजुङः इति सक्। अभिन्यविशथा इति पाठे धी पूर्ववदाधारस्य कर्मत्वं तथा तेनैव प्रकारेण तव हृदयमध्यावसन्तं मां त्वमपि मा रौत्सीः न निवारय मां हृदि कुर्विति भावः रुधिरौजिधञ् आवृतौ टी पूर्ववदधिवसेराधारस्य कर्मत्वम्॥ ८०॥भ०

मावेत्यादि। हे अकार्य्यज्ञे! अविशेषज्ञे! मां जगत्पतिं नमस्यन्तं मावमंस्थाः लुङि रूपं कर्त्तुरीप्सिततममिति कर्मसंज्ञा अवमानक्रियया कर्त्तृ सम्बन्धिन्या जगत्पतेरामुनिष्टत्वात् सन्दृष्टे मयि काकुत्स्थमधन्यं सन्दभाग्यं का कामयेत का इच्छेत् नैवेत्यर्थः तथा युक्तं चानीप्सितमिति कर्मसंज्ञा येनैव प्रकारेण कर्त्तुरीप्सिततमं क्रियया युक्तं तेनैवेप्सितादन्यस्य रामस्य प्रयुज्यमानत्वात्॥ ८१॥ ज० म०

य: पयो दोग्धि पाषाणं स रामाद्भूतिमाप्नुयात् ।
रावणं गमय प्रीतं बोधयन्तं हिताहितम् ॥ ८२ ॥
प्रीतोऽहं भोजयिष्यामि भवतीं भुवनत्रयम् ।
किं विलापयसेऽत्यर्थं पार्श्वे शायय रावणम् ॥ ८३ ॥

मावेत्यादि । हे अकार्यज्ञे ! अविशेषज्ञे ! नमस्यन्तं प्रणमन्तं जगत्पतिं मां त्वं मावमंस्थाः नावजानीहि जगन्नमस्योऽप्यहं त्वां नमस्यामीति नावज्ञा युक्तेति भावः । कर्मक्रियेति कर्मत्वं कर्मक्रियेत्यत्र कर्म क्रियाव्याप्यं तच्च चतुर्विधं प्राप्यनिर्वर्त्त्यविकार्यानीप्सितभेदात् इदन्तु प्राप्यं कर्म प्राप्नुमिष्टत्वात् तत्र पूर्वमवमननक्रियया जगत्पतिर्व्याप्यते पश्चान्नञ्योगेन वहिरङ्गेन न तन्निवृत्तिः नमः करोतीति नमस्तपोवरिव इति क्यः । मयि सन्दृष्टे सति अधन्यं मन्दभाग्यं काकुत्स्थं रामं का कामयेत् इच्छेत् । इदमनीप्सितं कर्म ॥ ८१ ॥ भ०

यः पेत्यादि । यथा पाषाणात् पयो न सम्भवति तथा रामादपि विभूतिरिति नैराश्यं दर्शयति पयसः पूर्वेणैव कर्मसंज्ञा पाषाणस्याकथितञ्चेत्यनेन रावणं गमय प्रीतिं भवत्या सह प्रीतिं गच्छन्तं गमय प्रीतिं स्वयमेव हिताहितं भवतीं बुध्यमानां बोधयन्तं गतिबुद्धीत्यादिना कर्मसंज्ञा गतिबुध्योरण्यन्तावस्थायां तयोः कर्तृत्वात् ॥ ८२ ॥ ज०म०

य इत्यादि । यः पाषाणं पयो दोग्धि पाषाणेन हेतुना पयो निःसारयति स एव रामाद्भूतिं प्राप्नुयात् सम्भावनयां लिङ् यथा पाषाणात् पयो न सम्भवति तथा रामादपि भूतिरिति भावः याच्ञार्थेत्यादिना दुहो द्विकर्मकत्वं पाषाणमिति कर्महेतोः कर्मत्वं पय इति निर्वर्त्यं कर्म तस्मात् रावणं मां प्रीतिं गमय प्रापय हितञ्चाहितञ्च बोधयन्तं भवतीमित्युत्तरश्लोकस्थमिहानुषज्यते णोऽणौ इति गतिज्ञानार्थयोः प्रयोज्यकर्त्तुः कर्मत्वम् ॥ ८२ ॥ भ०

प्रीत इत्यादि । अहं प्रीतः सन् भुवनत्रयं तत्रस्थं भोज्यं भोक्तुं योग्यात्मवतीं भोजयिष्यामि प्रत्यवसानार्थत्वात् कर्मसंज्ञा प्रत्यवसानमभ्यवहारः अकर्त्रभिप्राये णिचश्चेत्यात्मनेपदं न भवति विलपन्तं

आज्ञां कारय रक्षोभिर्मां प्रियाण्युपहारय ।
कः शक्रेण कृतं नेच्छेदधिमूर्द्धानमञ्जलिम् ॥ ८४ ॥
इति कारकाधिकारः ।

विविधं भाषमाणं किं विलापयसेऽत्यर्थं नाहं त्वामिच्छामीति ब्रुवाणा अत्र शब्दकर्मकत्वात् कर्मसंज्ञा कर्त्रभिप्राये णिचश्चेत्यात्मनेपदं तस्मादिदं प्रार्थये पार्श्वे रावणं शायय अत्राकर्मकत्वात् कर्मसंज्ञा ॥ ८२ ॥ ज० म०

प्रीत इत्यादि । अहं प्रीतः सन् भवतीं त्वां भुवनत्रयं भोजयिष्यामि भुवनत्रयसम्बन्धिसुखोपभोगो भुवनत्रयभोगेन लक्ष्यते पूर्ववद्ग्रनार्थस्य प्रयोज्यकर्त्तुः कर्मत्वम् किं रावणं माम् अत्यर्थं विलापयसि विविधं भाषयसि शब्दार्थत्वात् प्रयोज्यस्य कर्मत्वं तस्मादिदं प्रार्थये मां पार्श्वे शायय स्वापय प्रार्थनायां गीयीङोऽकर्मकत्वात् प्रयोज्यस्य कर्मत्वम् ॥ ८३ ॥ म०

आज्ञामित्यादि । रक्षांसि त्वदाज्ञां कुर्वन्त्येव कारय प्रियाणि च त्वत्सम्बन्धीनि मामुपहरन्तमुपहारय उत्पादय हृक्रोरन्यतरस्यामिति कर्मसंज्ञा शक्रेण कृतं विरचितम् अञ्जलिमधिमूर्द्धानम् अधिगतः प्राप्तो मूर्द्धा येनेति को नेच्छेत् स्वतन्त्रस्य इति कर्तृसंज्ञा शक्रेण प्रणतोऽहमित्यर्थः प्रयोज्यकर्त्ता नोदाहृतोऽस्यन्तावस्थायामुदाहृतत्वात् । इति कारकाधिकारः ॥ ८४ ॥ ज० म०

आज्ञामित्यादि । रक्षोभिराज्ञां कारय तान्याज्ञाकरणाय प्रेरय मां प्रियाणि अभिलषणीयानि उपहारय प्रियाण्युपहर्त्तुमानेतुं प्रेरय हृक्रमाभिवादिदृशस्सुवेति प्रयोज्यस्य विकल्पेन कर्मत्वं कर्मत्वाभावपक्षे साधनहेत्वित्यादिना कर्त्तरि । तृतीया को जनः शक्रेण कृतं विरचितम् अधिमूर्द्धानमञ्जलिं न इच्छेत् अपि तु सर्व एवेच्छति इन्द्रेणाहं प्रणतः त्वामपि मत्प्रियामसौ नमस्करिष्यतीति भावः मूर्द्धानमधिगतः प्राप्तः अधिमूर्द्धा अधिगतो मूर्द्धा येनेति वा अत्र स्वतन्त्रकर्त्तोदाहृतः अौप्रयोज्यकर्त्ता दर्शित एव त्वयैत्यादिना उक्तकर्त्तरि प्रथमा कर्त्ता क्रियामुख्यः प्रयोजकस्य । इति कारकाधिकारः ॥ ८४ ॥ भ०

वचनं रक्षसां पत्युरनु क्रुद्धा पतिप्रिया ।
पापानुवसितं सीता रावणं प्राब्रवीद्वचः ॥ ८५ ॥
न भवाननुरामञ्चेदुपशूरेषु वा ततः ।
अपवाह्य कलाढ्यौ किमर्थं मामिहाहरः ॥ ८६ ॥

इतः प्रभृति कर्मप्रवचनीयमधिकृत्याह ।

वचनमित्यादि । रक्षसां पत्यू रावणस्य वचनमनु लक्ष्यीकृत्य अनुर्लक्षणे इति कर्मप्रवचनीयसंज्ञायां द्वितीया । क्रुद्धा सती सीता पतिप्रिया पतिः प्रियो यस्या इति रावणं प्राब्रवीद्वचो वक्ष्यमाणं पापानुवसितं पापेन संयुक्तं तृतीयार्थे इत्यनेन कर्मप्रवचनीयसंज्ञायां द्वितीया पापमन्ववसित इति द्वितीयेति योगविभागात् सः सुप्सुपेति वा ॥ ८५ ॥ ज० म०

अथ कर्मप्रवचनीयाधिकारः । स च स्वमते धिक्समयेत्यादिसूत्रसमूहनिर्दिष्टविभक्त्यधिकारः । वचनमित्यादि ।

पतिः प्रियो यस्याः सा सीता रक्षसां पत्यूरावणस्य वचनमनु लक्ष्यीकृत्य तेन हेतुना वा क्रुद्धा सती रावणं वचो वक्ष्यमाणं प्राब्रवीत् रावणं कीदृशं पापानुवसितं पापमनु पापेन सह वसितं सम्बद्धमिति द्वितीयासमासः षिञ् बन्धे अवपूर्वात् क्तः वातो वाप्योरिति अवस्यालोपः धिक्समयेत्यादिना अनुयोगे द्वितीया वीप्सेत्यम्भावचिह्नेऽभिक्तेषु भागे परिप्रती । अनुरक्षेषु सहार्थे च हीनेऽनूपौ मतावितेति वीप्सादिसम्बन्धं द्वितीया वक्ति अभ्यादयो द्योतका अनुरत्र चिह्नार्थे सहार्थे च चिह्नं लक्षणं हेतावप्यनुयोगे द्वितीयेति केचित् ॥ ८५ ॥ भ०

नेत्यादि । यदि भवान्नानुरामं रामान्न हीन इत्यर्थः हीन इत्यनेन कर्मप्रवचीयसंज्ञा अनुशब्दस्य स्वहीनार्थद्योतकः हीनश्चोत्कृष्टापेक्षः उपशूरेषु वा शूरेभ्यो वा यद्यधिको भवान् उपोऽधिके चेति चकाराद्धीने उपशब्दस्य कर्मप्रवचनीयसंज्ञा यस्मादधिकमित्यनेन सप्तमी उपशब्दस्याधिकद्योतनात् किमर्थं कनकमृगच्छलेन वीरौ रामलक्ष्मणौ अपवाह्य अन्यतो नीत्वा मामिहाहरः लङ्कामानीतवान् ॥ ८६ ॥ ज० म०

उपशूरं न ते वृत्तं कथं रात्रिञ्चराधम!।
यत्संप्रत्यपलोकेभ्यो लङ्कायां वसतिर्भयात्॥ ८७॥
आरामदर्शनात् पाप! विद्योतस्व स्त्रियः प्रति।
सद्वृत्तानतु दुर्वृत्तः परिस्त्रीं जातमन्मथः॥ ८८॥

नेत्यादि। किं प्रावब्रीदित्याह। चेद्यदि भवान् अनुरामं रामात् हीनो न भवेत् यदि वा उपशूरेषु शूरेभ्यो यद्यधिको भवान् तदा किमर्थं किं निमित्तं कनकमृगच्छलेन वीरौ रामलक्ष्मणौ अपवाह्य अन्यतो नीत्वा त्वं नाभिहाहरः लङ्कायामानीतवानसि समर्थो हि जित्वैवानयति हृञो धौ पूर्ववदनुयोगे द्वितीया अनुरत्र हीनार्थे अधि-केशार्थौपाधिभ्यामिति अधिकार्थोपयोगे सप्तमी॥ ८६॥ भ०

उपेत्यादि। हे रात्रिञ्चराधम! कथं ते वृत्तं चरितं नोपशूरं शूरेभ्यो न हीनम् उपोऽधिके चेति चकाराद्धीने उपशब्दस्य कर्मप्रव-चनीयसंज्ञा यद्यस्मात् सम्प्रत्यधुना भयाल्लङ्कायां जलपर्वतदुर्गायां वसतिः वसेरतिवसिवर्त्तिभ्यश्चेत्यौणादिकः अपलोकेभ्यो लोकान् वर्ज-यित्वा अपपरीवर्जने इति कर्मप्रवचनीयसंज्ञायां पञ्चम्यपाङ्परिरिति पञ्चमी॥ ८७॥ ज० म०

उपेत्यादि। हे रात्रिञ्चराधम! कथं ते तव वृत्तं चरितं नोप-शूरं शूरेभ्यो न हीनं शूरशब्दोऽत्र लक्षणया शूरवृत्तवाची धिक्सम-येत्यादिना द्वितीया उपोऽत्र हीनार्थे यत् यस्मात् सम्प्रति भयाद्धेतो-रपलोकेभ्यो लोकान् वर्जयित्वा लङ्कायां जलपर्वतदुर्गायां तव वसति-र्निवासः अन्यारभ्येत्यादिना अपयोगे पञ्चमी अपत्यागार्थे आङ्व्याप्ति-सीम्नोरुद्धागेऽन्यौ प्रतिदाननिधौ प्रतीति अन्यौ पर्य्यपौ॥ ८७॥ भ०

आरेत्यादि। हे पाप! आरामदर्शनात् रामदर्शनं यावत् आङ्-मर्यादावचनेन पूर्ववत्पञ्चमी। स्त्रियः प्रति योषितो लक्षीकृत्य विद्यो-तस्व शोभस्व लक्षणेत्थंभूतेति कर्मप्रवनीयत्वं परिस्त्रीं जातमन्मथः अत्र वीप्सायां कर्मप्रवचनीयत्वम्॥ ८८॥ ज० म०

अभिद्योतिष्यते रामो भवन्तमचिरादिह ।
उद्गूर्णबाणः संग्रामे यो नारायणतः प्रति ॥ ८९ ॥
कुतोऽधियास्यसि क्रूर ! निहतस्तेन पत्तिभिः ।
न सूक्तं भवतात्युग्रमतिरामं मदोद्धत ! ॥ ९० ॥

आरामेत्यादि । हे पाप ! दुराचार ! आरामदर्शनात् रामदर्शनात् यावत् स्त्रियः प्रति लक्ष्यीकृत्य विद्योतस्व शोभस्व पूर्ववत् सीमायोऽङ्योगे पञ्चमी धिक्समयेत्यादिना चिह्नार्थप्रतियोगे द्वितीया । त्वं कीदृशः सद्वृत्तान् सदाचारान् अनु दुर्वृत्तः दुश्चरित्रः सदाचारेषु कथञ्चित्प्रकारं द्रोहादिकमापन्नो दुर्वृत्तो भवसीत्यर्थः पूर्ववदित्यम्भावार्थानुयोगे द्वितीया इत्यम्भावः कस्यचित् प्रकारस्यापत्तिः स्त्रीः परि लक्ष्यीकृत्य स्त्रीषु कथचित्प्रकारं विहारित्वादिकमापन्नो वा जातकामः पूर्ववच्चिह्नार्थे इत्यम्भावार्थे वा परियोगे द्वितीया वीप्सायां परिग्रहस्य कर्मप्रवचनीयत्वमिति जयमङ्गला न युक्ता वीप्सायां द्वित्वं लोकतः सिद्धमिति टीकायामुक्तत्वात् क्वचित् सम्बुद्ध्यन्तमिदं विशेषणद्वयं दृश्यते ॥ ८८ ॥ भ०

अभीत्यादि । भवन्तमभि भवन्तं लक्षीकृत्य अभिरभाग इति कर्मप्रवचनीयत्वम् अचिरादिह लङ्कायां रामो द्योतिष्यते असह्यतेजा भविष्यति य उद्गूर्णबाणः उद्यतबाणः संग्रामे नारायणतः प्रति तेन तुल्यः प्रतिनिधिः प्रति प्रतिनिधीति प्रतिनिधौ कर्मप्रवचनीयत्वं प्रतिः प्रतिनिधि प्रतिदाने च यस्मादिति पञ्चमी प्रतियोगे पञ्चम्यास्तसिः मुख्यसदृशः प्रतिनिधिः ॥ ८९ ॥ ज० म०

अभीत्यादि । भवन्तमभि लक्ष्यीकृत्य रामोऽचिरादिह लङ्कायां द्योतिष्यते असह्यतेजा भविष्यतीत्यर्थः पूर्ववत् चिह्नार्थाभियोगे द्वितीया यो रामः संग्रामे उद्गूर्णबाण उद्यतकाण्डः सन् नारायणतः प्रति तेन तुल्यः अन्यारभ्येत्यादिना प्रतिनिध्यर्थप्रतियोगे पञ्चमी प्रसक्तेति पञ्चम्यास्तस् ॥ ८९ ॥ भ०

कुत इत्यादि । हे क्रूर ! तेन रामेण उद्गूर्णबाणेन पत्तिभिः

परिशेषं न नामापि स्थापयिष्यति ते विभुः।
अपि स्थाणुं जयेद्रामो भवतो ग्रहणं कियत् ॥ ९१ ॥

शरैः निहतः सन् कुतोऽधियास्यसि केन प्रकारेण निःसरिष्यसि अधि-परी अनर्थकाविति अधेः कर्मप्रवचनीयसंज्ञा धात्वर्थव्यतिरेकेणार्थस्यानभिधानादनर्थकत्वं संज्ञा च गत्युपसर्गसंज्ञाबाधनार्था तेन तिङि चोदात्तवतीति निघाताभावो द्रष्टव्यः पञ्चमी च प्रश्नाख्यानयोरित्युपसंख्यानात् भवति किमिति हनिष्यतीति चेत् यतो भवता न सूक्तं प्रशस्तमुक्तं सुः पूजायामिति कर्मप्रवचनीयत्वं गतिरनन्तर इति स्वराभावः। अत्युग्रमतिरौद्रम् अतिरामं राममधिक्षिप्य काकुत्स्थमधन्यमिति अतिरतिक्रमणे चेति कर्मप्रवचनीयत्वं चकारात् पूजायाञ्च तत्र चाप्युक्तमिति प्रयोगः हे मदोद्धत ! ॥ ९० ॥ ज० म०

कुत इत्यादि। हे क्रूर ! तेन रामेण संग्रामे पतिभिः शरैर्निहतः सन् कुतस्त्वम् अधियास्यसि सर्वतोभावेन कस्मात् निःसरिष्यसि हे मदोद्धत ! अतिरामं राममतिक्रम्य अधिक्षिप्य अत्युग्रम् अतिरौद्रं भवता न सूक्तं न शोभनमुक्तं रामाक्षेपकं तव पूर्ववचनं मिथ्यैवेति भावः धिक्समयेत्यादिना अतियोगे द्वितीया ॥ ९० ॥ म०

परीत्यादि। रामो विभुः प्रभुः ते परिशेषं नामापि संज्ञामपि न स्थापयिष्यति किमु देहम् अपिः पदार्थेत्यादिना पदार्थे कर्मप्रवचनीयसंज्ञा पदस्य देहस्याप्रयुज्यमानस्यार्थे अपिशब्दो वर्त्तते अपि स्थाणुं जयेद्रामो यस्मात्राध्याधिपत्यं प्राप्नवानसि तमपि स्थाणुं महादेवं जेतुं सम्भाव्यते भवतो ग्रहणं कियत् वस्त्वेव न भवति अत्र संभावनायां कर्मप्रवचनीयत्वं सम्भावने लिङ् उपसर्गबाधनत्वात् संज्ञाया उपसर्गात् सुनोतीत्यादिना षत्वं न भवति ॥ ९१ ॥ ज० म०

परीत्यादि। स प्रभूरामस्ते तव परिशेषं नामापि संज्ञामपि न स्थापयिष्यति किं पुनः शरीरम् अत्रापिशब्देन देहस्य समुच्चयात् अत्राचार्यां स्वतो नातिक्रमोऽस्ति: पर्य्यधी मतौ। अपिः पदार्थसंभावनगर्हानुज्ञासमुच्चये इत्यनेनोपसर्गत्वाभावः तेन व्यस्यत्यनुकारेत्यादिना न

अपि स्तुह्यपि सेधास्मांस्तथ्यमुक्तं नराशन ! ।
अपि सिञ्चेः कृशानौ त्वं दर्पं मय्यपि योऽभिकः ॥९२॥
अधिरामे पराक्रान्तमधिकर्त्ता स ते चयम् ।

समासः धातुपूर्वत्वनियमाभावः गोकः स्तुस्तुभेत्यादिना न षत्वञ्च परेस्त्वेतदर्थं कर्मप्रवचनीयसंज्ञा कृता कुतस्त्वैवं सामर्थ्यमित्याह रामः स्थाणुमपि जयेत् यमाराध्य त्वमाधिपत्यं प्राप्तवान् तमपि स्थाणुं महादेवं स जयेदिति सम्भाव्यते अपिशब्दः सम्भावनाया द्योतकः तत्रैव रामेण बलाद्भवतो यहणं कियत् अल्पायाससाध्यमेव पूर्ववत् षत्वस्यो तेन निषेधः ॥ ९१ ॥ भ०

अपीत्यादि । हे नराशन ! मया तथ्यमुक्तं यन्नामापि न स्थापयिष्यतीति अस्मानपि स्तुहि साधूक्तमिति प्रशंस सेधं पिञ्चेति अपिति ङित्त्वाद्गुणाभावः अपि सेध निराकुरु यथेच्छं तथा क्रियतां मया तु सत्यमेवोक्तमिति भावः अत्रानुपसर्गे कामचारानुज्ञाने कर्मप्रवचनीयसंज्ञा किञ्च कृशानावग्नौ दर्पम् अपि सिञ्चेः क्षरेस्त्वम् अत्र गर्हायां लिङि रूपम् । योऽयं मय्यपि मद्विषयेऽपि अभिकः कामयिता अनुकाभिकेत्यादिना निपातितः उपसर्गसंज्ञाबाधनार्थत्वात् स्तौतिसेधिसिचां षत्वं न भवति ॥ ९२ ॥ ज० म०

अपीत्यादि । हे नराशन ! परिशेषं न नामापि स्थापयिष्यतीति तथ्यं सत्यमेव मयोक्तं त्वमस्मान् अपि स्तुहि साधूक्तमिति प्रशंस अपि सेध निराकुरु यथा तवेच्छा तथैव क्रियतां मया तु सत्यमेवोक्तमिति भावः अत्रापिशब्दः समुच्चयेऽनुज्ञायां वा पूर्ववत् षत्वनिषेधः ष्टुञ् स्तुतौ षिधू शिवे शास्त्रे हौ रूपम् । त्वं कृशानौ वह्नावेव दर्पम् अपि सिञ्चेः सुञ्च अत्रापिशब्दो गर्हायां पूर्ववत् षत्वनिषेधः । यद्यपि जात्वपिभ्यां सदाचेपे इति काससानमान्ये गर्हायां की विहिता तथापि पदसंस्कारात् विधौ खो अपतः स्यात् अत्र सर्पशब्देन दर्पजनकत्वाद्रोत उच्यते यस्त्वं मय्यपि मद्विषये अभिकः कामुकः ॥९२॥म०

अपीत्यादि । पराक्रान्तस्य शौर्य्यस्य राम दर्यितेत्यस्मिन्नर्थ अधि-

इत्युक्त्वा मैथिली तूष्णीमासाञ्चक्रे दशाननम् ॥ ९३ ॥
ततः खड्गं समुद्यम्य रावणः क्रूरविग्रहः।
वैदेहीमन्तरा क्रुद्धः क्षणमूचे विनिश्वसन् ॥ ९४ ॥

रामे पराक्रान्तं नपुंसके भावे क्तः अधिरीश्वर इति स्वस्वामिसम्बन्धे अधेः कर्मप्रवचनीयसंज्ञा यस्मादधिकमित्यादिना सप्तमी। यद्येवं स रामस्ते क्षयमधिकर्त्ता करिष्यति अत्र कर्मण्येव द्वितीया न कर्मप्रवचनीययुक्त इति विभाषाकृञीति या संज्ञा तस्या गत्युपसर्गसंज्ञाबाधनार्थत्वात् संज्ञापक्षे तिङि चोदात्तवतीति निघाताभावो द्रष्टव्य इति एवमुक्त्वा दशाननं मैथिली तूष्णीमासाञ्चक्रे तूष्णीं स्थितवती। इति कर्मप्रवचनीयाधिकारः ॥ ९३ ॥ ज० म०

अधीत्यादि। रामः पराक्रमस्य स्वामीत्यर्थे अधिरामे अधिकेशार्थौपाधिश्यामिति सप्तमी पराक्रान्तमिति भावे क्तः। अधिरामे पराक्रान्तं यथा भवति तथा स रामस्ते तव क्षयम् अधिकर्त्ता अधिकं करिष्यति स्वकीयपराक्रमेण क्षयं करिष्यतीत्यर्थः इति दशाननमुक्त्वा मैथिली तूष्णीं मौनेन आसाञ्चक्रे स्थितवतीर्विजादीत्यास्। इति कर्मप्रवचनीयाधिकारः ॥ ९३ ॥ भ०

इतः प्रभृत्यनभिहित इत्यधिकृत्य विभक्तिविधानमाह।

तत इत्यादि। ततः सीतावचनादुत्तरकालं रावणः खड्गं समुद्यम्य उत्क्षिप्य कर्मणि द्वितीया। क्रूरविग्रहः दुष्प्रेक्ष्यत्वात् वैदेहीमन्तरा क्रुद्धः वैदेह्या मध्ये कुपितः अन्तरान्तरेण युक्त इति षष्ठ्यपवादाद्द्वितीया अन्तराशब्दो मध्यमाधेयप्रधानमाचष्टे आधेयश्चात्र क्रुद्धो रावणः क्षणमूचे उक्तवान् उक्तिक्रियया क्षणस्य कालस्य साकल्येन सम्बन्धात् कालाध्वनोरिति द्वितीया। विनिश्वसन् क्रोधात् ॥९४॥ज०म०

अथानभिहिताधिकारः। अथानभिहित इत्यधिकृत्य पाणिनिना या द्वितीयादिविभक्तयो विहितास्ताः कथ्यन्ते स्वमतेऽनभिहिताधिकाराभावेऽपि उक्ते कर्मादौ प्रथमा स्यात् पारिशेष्यादनभिहित इत्यवगम्यते। तत इत्यादि। सीतावचनानन्तरं रावणः क्रूरविग्रहो रोषात्

चिरेणानुगुणं प्रोक्ता प्रतिपत्तिपराङ्मुखी ।
न मासे प्रतिपत्तासे मांश्चेन्मर्त्तासि मैथिलि ! ॥ ९५ ॥

दुश्च्यवशरीरः सन् खड्गमुद्यम्य उत्क्षिप्य जगं विनिश्वसन् जचे कीदृशः वैदेहीमन्तरा सीताया मध्ये क्रुद्धः मध्यभागं छेत्तुमुद्यत इत्यर्थः किंवा रावणपरिजनश्चेत्यत्राध्याहार्य्यं वैदेहीं रावणः परिजनश्चान्तरा क्रुद्धः वैदेह्या रावणपरिजनस्य चान्तरामध्ये कुपितः सन्नित्यर्थः खड्गमिति कर्मणि द्वितीया अन्तराशब्दो मध्यार्थः तद्योगे धिक्समयेत्यादिना द्वितीया क्षणमिति सदाध्वादिव्याप्ताविति द्वितीया विनिश्वासक्रियया वचनेन वा तस्यातिसंयोगसम्बन्धात् ॥ ९४ ॥ भ०

चिरेत्यादि । हे मैथिलि ! चिरेणापि कालेनानुगुणमनुकूलं मया प्रोक्तापि सती प्रतिपत्तिपराङ्मुखी उक्तस्यार्थस्यानुष्ठानं प्रतिपत्तिः तस्यां पराङ्मुखी इदानीं यदि त्वं मासे त्रिंशद्दिवसलक्षणे मां न प्रतिपत्तासे नाङ्गीकरिष्यसि तदा मर्त्तासि मरिष्यसि उभयमपि लुटि रूपम् तत्र चिरेण प्रोक्तेत्यपवर्गे तृतीया विवक्षितार्थप्रकाशनं फलं तस्य प्राप्तौ तत्क्रियापरिसमाप्तिरपवर्ग इति मां मासेन प्रतिपत्तास इति सप्तमीपञ्चम्यौ कारकमध्य इति सप्तमी कर्मकर्त्रोः कारकयोर्मध्यत्वात् मासस्य ॥ ९५ ॥ ज० म०

चिरेणेत्यादि । हे मैथिलि ! चिरेण कालेन मयानुगुणम् अनुकूलं प्रोक्तापि तस्योक्तस्य प्रतिपत्तिरनुमतिस्ततः पराङ्मुखी त्वमधुना चेद्यदि मासे त्रिंशद्दिनपरिमिते काले मां न प्रतिपत्तासे नाङ्गीकरिष्यसि तदा मर्त्तासि मरिष्यसि खड्गप्रहारेणेत्यर्थात् मास इति व्याप्तिविवक्षया न द्वितीया सत्यामपि व्याप्तौ निर्धारे अधिकेन क्रियान्तः कालाध्वनोश्च प्रीचेति सप्तमी आद्यैका वचनक्रिया अपरा च प्रतिपत्तिक्रिया तन्मध्ये मासः कालस्तेन तद्विषयः मासे अनतिक्रान्ते सतीत्यध्याहृत्य पदं साधितं बोपतिः प्रतिपूर्वपदोरूडन्त लुटां रूपम् ॥ ९५ ॥ भ०

प्रायुङ्क्त राक्षसीर्भीमा मन्दिराय प्रतिव्रजन्।
भयानि दत्त सीतायै सर्वा यूयं कृते मम॥ ९६॥
गते तस्मिन् समाजग्मुर्भयाय प्रति मैथिलीम्।
राक्षस्यो रावणप्रीत्यै क्रूरञ्चोचुरलं मुहुः॥ ९७॥

प्रायुङ्क्तेत्यादि। रावणो राक्षसीर्भीमा भयानकाः प्रायुङ्क्त समादिष्टवान् लुङि रूपम् मन्दिराय प्रतिव्रजन् गृहाय प्रतिव्रजन् गत्यर्थकर्मणीत्यादिने तु चतुर्थी कर्मप्रवचनीयाधिकार एव दर्शितत्वात् क्रियादिश्यदित्याह सर्वा यूयं सीतायै भयानि दत्त बोटि रूपं चतुर्थी सम्प्रदाने सम्पूज्याहत्य प्रकर्षेण दीयत इति सम्प्रदानं मम कृते मद्रक्षणनिमित्तम्॥ ९६॥ ज० म०

प्रायुङ्क्तेत्यादि। रावणो मन्दिराय प्रतिव्रजन् गृहं प्रति गच्छन् भीमा भयानका राक्षसीः प्रायुङ्क्त समादिष्टवान् गत्यर्थमन्यते इति कर्मणि चतुर्थी। क्रियादिर्थादित्याह सर्वा यूयं मम कृते मन्निमित्तं मत्कार्य्याय वा सीतायै भयानि दत्त प्रयच्छत संप्रदाने चतुर्थी यद्यपि स्वस्वत्वध्वंसपूर्वेत्यादिलक्षणं दानं भयस्य न सम्भवति आरोपणार्थ एव ददातिस्तथापि दिवामध्दस्य विवक्षामात्रवचनत्वात् साधुत्वं कृतेशब्दो निमित्तार्थोऽव्ययः क्वचिप तादर्थ्ये वा चतुर्थी॥ ९६॥ भ०

गत इत्यादि। तस्मिन् रावणे गते सति राक्षस्यः समाजग्मुः सम्भूय गताः समोगम्यृच्छीत्यादिना आत्मनेपदं न भवति आङा व्यवहितत्वात् मैथिलीं प्रति लक्ष्यीकृत्य भयाय सीतायै भयं दातुं क्रियार्थोपपदस्य कर्मणि स्थानिन इति चतुर्थी ददातेः क्रियार्थोपपदस्य स्थानिनः प्रयुज्यमानस्य भयं कर्म क्रिया चात्र समागमः तत्रोपपदं क्रियार्थमिति क्रूरञ्च भयानकं मुहुः प्रतिक्षणम् अलं पर्याप्तमूचुः उक्तवत्यः रावणप्रीत्यै रावणस्यैवं प्रीतिः स्यादिति तुमर्थाच्च भाववचनादिति चतुर्थी क्रियायां क्रियार्थायामिति तुमुना समानार्थत्वात् भाववचनाश्चेत्यनेन विहितस्य क्तिनः क्रियार्थ उपपदं क्रूराभिधानम्॥ ९७॥ ज० म०

रावणाय नमस्कुर्य्याः स्यात् सीते! स्वस्ति ते ध्रुवम्।
अन्यथा प्रातराशाय कुर्य्याम त्वामलं वयम्॥ ९८॥

गते इत्यादि। तस्मिन् रावणे गते सति मैथिलीं प्रति वच्यमाणत्व भयाय सीतायै भयं दातुं राक्षसः समाजग्मुः आङ्व्यवधानात् समोगमृच्छेति न सं भयायेति नित्यं कर्मणि तुमोऽप्रयोगिन इति चतुर्थ्यर्थं परस्मैपदं स्वसते तादर्थ्ये एव मैथिलीमिति धिक्समयेत्यादिना प्रतियोगे द्वितीया अथ रावणप्रीत्यै क्रूरं कठोरम् अलम् अत्यर्थं सुहुर्वारंवारम् जचुः क्रूरमिति क्रियाविशेषणे द्वितीया॥ ९७॥ भ०

रावेत्यादि। हे सीते! रावणाय नमस्कुर्य्याः रावणं नमस्कुरु एवञ्च सति ते तुभ्यं स्वस्ति कल्याणं ध्रुवं स्यात् युष्मच्छब्दस्य चतुर्थ्येकवचनान्तस्य ते आदेशः नमस्कृत्वेति पाठान्तरं तत्र नमस्कृत्वा स्थितायै तुभ्यमित्यध्याहृत्य योज्यम् अन्यथा ह्यसमानकर्तृकत्वात् क्त्वाप्रत्ययो न घटते नमस्कृत्येति पाठान्तरं साक्षात्प्रभृतिषु नमःशब्दस्य विकल्पेन गतिसंज्ञा गत्यभावपक्षे नित्यं गतिसमासाभावे ल्यबादेशः नमस्पुरसोर्गत्योरिति विसर्जनीयस्य सकारादेशस्य न सम्भवतीति अन्यथेति यदि न नमस्कुर्य्याः तदा अलम्प्रातराशाय प्रातर्भोजनाय त्वां कुर्य्याम वयमित्यूचुः नित्यं ङित इति सलोपः रावणायेत्यादिषु नमःस्वस्तीत्यादिना चतुर्थी॥ ९८॥ ज० म०

रावणायेत्यादि। किमूचुरित्याह हे सीते! त्वं रावणाय नमः प्रणामं कुर्य्याः तेनैव ध्रुवं ते तुभ्यं स्वस्ति कुशलं स्यात् शक्तार्थवषड्त्यादिना नमःस्वस्तियोगे चतुर्थी नमःशब्दोऽयं यदा वाचक एव तदा तद्योगे चतुर्थीति बोध्यं नारायणं नमस्कृत्येत्यादिषु नमःशब्दो द्योतकः तत्रैव प्रणामं वक्ति तेन तद्योगे न चतुर्थी किन्तु द्वितीया नमस्कुर्य्याः इति सकारवत्पाठे हस्तेपाणावित्यादिना साक्षादादित्वात्पक्षे समासः खतुकखपफेवेति पक्षे विसर्गस्य सकारः नमस्कृत्येति पाठे स्थितायाः इत्यध्याहार्य्यं विष्णुं नत्वा स्तौतीत्युदाहरणेन एककर्तृकधातुद्वययोगे पूर्वकाले क्त्वाचो ज्ञापितत्वात् अन्यथा यदि रावणं न प्रणमसि तदा

तृणाय मत्वा ताः सर्वा वदन्तीस्त्रिजटावदत् ।
आत्मानं हत दुर्वृत्ताः ! स्वमांसैः कुरुताशनम् ॥ ९९ ॥
अद्य सीता मया दृष्टा सूर्यं चन्द्रमसा सह ।
स्वप्ने स्पृशन्ती मध्येन तनुः श्यामा सुलोचना ॥ १०० ॥

प्रातराशाय प्रातर्भोजनायालं समर्थां त्वां वयं कुर्याम प्रातर्भोज्यास इत्यर्थः अलंशब्दः शक्तार्थस्तेन तद्योगे चतुर्थी ॥ ९८ ॥ भ०

तृणेत्यादि । अथानन्तरं राक्षसीर्वदन्तीः त्रिजटा रावणस्वसा अवदत् उक्तवती तृणाय मत्वा तृणमिव सङ्कल्प्य मन्यकर्मण्यनादर इति चतुर्थी तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तम् इह माभूत् तृणं मत्वेति किमवदत् आत्मानं हत मारयत दुर्वृत्ताः दुराचाराः स्वमांसैः कुरुताशनमिति करणे तृतीया ॥ ९९ ॥ ज० म०

तृणायेत्यादि । इति वदन्तीस्ताः सर्वा राक्षसीस्तृणाय मत्वा तृणवन्मत्वा त्रिजटा नाम राक्षसी वक्ष्यमाणमवदत् गत्यर्थसन्धढ इति अवज्ञाबोधकत्वात् कर्मणि चतुर्थी राक्षसीशब्दो नावज्ञाबोधकः तेन तच्छब्दात् कर्मणि न चतुर्थी किन्तु द्वितीया । किमवददित्याह हे दुर्वृत्ताः ! दुराचाराः ! यूयम् आत्मानं हत मारयत स्वकीयैर्मांसैरशनं भोजनं कुरुत यतः सीताभोजनोद्यताः करणे तृतीया । वनतनाद्यनिनामिति हन्तेर्नलोपः ॥ ९९ ॥ भ०

किमर्थमेवमाहेत्याह

अद्येत्यादि । स्वप्ने मया अद्य सीता दृष्टा कर्त्तरि तृतीया । सूर्यं स्पृशन्ती चन्द्रमसा सह सहयोगे तृतीया । सूर्याचन्द्रमसाविति रामलक्ष्मणाविति भावः । मध्येन तनुः तन्वी इत्थम्भूतलक्षणे तृतीया वोतोगुणवचनादिति ङीब्भावपक्षे रूपम् । श्यामा वर्णेन सुलोचना शोभननेत्रा ॥ १०० ॥ ज० म०

अद्येत्यादि । अद्य स्वप्ने मया सीता दृष्टा कर्त्तरि तृतीया । कीदृशी चन्द्रमसा सह सूर्यं स्पृशन्ती एतादृशः स्वप्नः साम्राज्यलक्षणमिति केचित् । सूर्याचन्द्रमसाविव रामलक्ष्मणावित्याशय इति जय०

तास्तया तर्जिताः सर्वा मुखैर्भीमा यथागतम्।
ययुः सुषुप्सवस्तल्पं भीमैर्वचनकर्म्मभिः॥ १०१॥
गतासु तासु मैथिल्याः संजानानोऽनिलात्मजः।
आयातेन दृगास्यस्य संस्थितोऽन्तर्हितश्चिरम्॥ १०२॥

मङ्गला। सहवाग्गणेति सहयोगे तृतीया। मध्येन तनुः तन्वी भेदके तृतीया। श्यामा—शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला। तप्तकाञ्चनवर्णाभा वा स्त्री श्यामेति कथ्यते॥ श्यामवर्णेनेत्यन्ये। सुलोचना शोभननेत्रा॥ १००॥ भ०

ता इत्यादि। ता राचस्यस्तया त्रिजटया तर्जिता भर्त्सिताः सुषुप्सवः स्वप्तुमिच्छवस्तल्पं शयनीयं ययुर्गताः यथागतं यतोयतस्तल्पादुत्थायागताः यथासादृश्य इति वीप्सायामव्ययीभावः। मुखैर्भीमा रौद्राः मुखानां विकृतत्वात् येनाङ्गविकार इति तृतीया भीमैर्वचनकर्मभिः उपलक्षिताः इत्थम्भूते तृतीया॥ १०१॥ ज० म०

ता इत्यादि। ताः सर्वा राचस्यः तया त्रिजटया तर्जिता भर्त्सिता सत्यः सुषुप्सवः शयितुमिच्छवस्तल्पं ययुः यथागतं यस्माद्यस्मात् उत्थायागतास्तत्र तत्रैव वीप्सायामव्ययीभावः मुखैर्भीमाः मुखविकारोपलक्षिताः भेदके तृतीया। येनाङ्गेनाङ्गिनो विकृतिर्लक्ष्यते तस्मादिति परः भीमैर्वचनकर्मभिरुपलक्षिताः विशेषणे तृतीया। तल्पं शय्याट्टदारेष्वित्यमरः॥ १०१॥ भ०

गतेत्यादि। तासु राचसीषु गतासु अनिलात्मजो हनूमान् रामसङ्कथां प्रास्तावीदिति वक्ष्यमाणेन सम्बन्धः मैथिल्या सञ्जानानः इयं सेत्यवगच्छन् संज्ञोऽन्यतरस्यामिति कर्मणि तृतीया। सम्प्रतिभ्यामिति तङ्। दृगास्यस्यायातेनागमनेन हेतुना चिरमन्तर्हितो निलीनः स्थितः हेताविति तृतीया॥ १०२॥ ज० म०

गतास्वित्यादि। तासु राचसीषु गतासु सतीषु अनिलात्मजो हनूमान् रामसङ्कथां प्रास्तावीत् प्रावर्त्तयदिति वक्ष्यमाणश्लोकेनान्वयः। कीदृशः मैथिल्या सञ्जानानः सैवेयमित्यवगच्छन् संज्ञोऽन्यतराविति

ऋणाद् बद्ध इवोन्मुक्तो वियोगेन क्रतुद्विषः।
हेतोर्बोधस्य मैथिल्याः प्रास्तावीद्रामसङ्कथाम् ॥ १०३ ॥
तं दृष्ट्वाचिन्तयत् सीता हेतोः कस्यैष रावणः।
अवरुह्य तरोरारादेति वानरविग्रहः ॥ १०४ ॥

कर्मणि तृतीया सम्प्रतेरस्तुताविति कर्मणि तृतीया सम्प्रतेरस्तुताविति मं दयासस्यायातेनागमनेन हेतुना अन्तर्हितो विलीनः सन् चिरं संस्थितः हेतौ तृतीया स्वभावस्येति दयाख्यात् कर्त्तरि षष्ठी सम्बन्धविवक्षया वा ॥ १०२ ॥ भ०

ऋणादित्यादि। ऋणाद्धेतोर्बद्धः इवोन्मुक्तो यथा स्थानान्तरं गतवान् अकर्तृर्यृण इति पञ्चमी। ऋणस्याकर्तृहेतुत्वात् ऋणेन बन्धित इवेति नोक्तम् अप्रयोजकं कर्तृत्वाहणस्य उन्मुक्तः क्रतुद्विषो रावणस्य वियोगेन विश्लेषेण विभाषागुणेऽस्त्रियामिति पक्षे तृतीयोदाहृता न पञ्चमी वियोगस्य गुणपदार्थत्वात् सङ्कथां प्रस्तावीदित्याह हेतोर्बोधस्य मैथिल्याः एष रामदूत इति मैथिल्या बोधोऽवगमः स्यात् षष्ठी हेतुप्रयोगे इति बोधशब्दस्य षष्ठी प्रास्तावीदिति स्तुसुधूञ्भ्यः परस्मैपदेष्वितीट् नेटीति हलन्तलक्षणाया वृद्धेः प्रतिषेधः नेगन्तलक्षणायाः ॥ १०३ ॥ ज० म०

ऋणादित्यादि। हनूमान् कीदृशः क्रतुद्विषो रावणस्य वियोगेन विश्लेषेण हेतुना उन्मुक्तः स्वच्छन्दः यथा ऋणाद्धेतोर्बद्धः सन् उन्मुक्तः स्थानान्तरं गतस्तद्वत् हेतौ पञ्चमी तृतीया च दर्शिता किमर्थं रामसङ्कथां प्रास्तावीदित्याह एष रामदूत इति मैथिल्या यो बोधस्तस्य हेतोस्तदर्थं प्रयोजनमपि हेतुरुच्यते तदुद्देशेन कार्योत्पत्तेः त्यादयोऽर्थैकत्वेरिति षष्ठी स्तुसुधोः सेरिम्ये इतीम्, मजवदेति त्रिः ॥ १०३ ॥ भ०

तमित्यादि। तं हनूमन्तं रामं स्तुवन्तं दृष्ट्वा सीता अचिन्तयत् कस्य हेतोः रावणो वानरविग्रहः सन् ऐति आयाति आङ्पूर्वस्येणो रूपं सर्वनाम्नस्तृतीया चेति षष्ठी किंशब्दस्य सर्वनामत्वात् आरात्

पूर्वस्मादन्यवद् भाति भावाद्दाशरथिं स्तुवन् ।
ऋते क्रौर्य्यात्समायातो मां विश्वासयितुं नु किम् ॥ १०५ ॥
इतरो रावणादेष राघवानुचरो यदि ।
सफलानि निमित्तानि प्राक् प्रभातात्ततो मम ॥ १०६ ॥

अन्तिके तरोरिति अन्यारादित्याराच्छब्दयोगे पञ्चमी अवरुह्यावतीर्य्येति अवरोहणामेक्षयेत्यपादाने पञ्चमी अपेक्षा अयौगपद्याभावादुपपद-विभक्तेः कारकविभक्तिर्बलीयसी आराद्योगे न वर्त्तते ॥ १०४॥ ज० म०

तमित्यादि । तं रामं स्तुवन्तं हनूमन्तं दृष्ट्वा सीताचिन्तयत् किं चिन्तितवतीत्याह कस्य हेतोः किमर्थं रावणोऽयं वानरमूर्त्तिः सन् अवरुह्य वृक्षान्तरादर्थात् तयोरारात् तदाश्रितवृक्षस्य समीपे ऐति आगच्छति आङ्पूर्वं इणगतौ कस्य हेतोरिति त्यादयोऽर्थाश्चैकत्तेः षष्ठी हेतुप्रयोगे इति षष्ठी, तयोरित्यादन्या उभयत्र सम्बन्धादेकत्रापादाने पञ्चमी, अपरत्र अन्यारम्भेत्यादिना पदद्वयमेवोदाहृतम् अपादान-पञ्चम्याः कारकाधिकारे दर्शितत्वात्तरोरित्यस्यावरुह्येत्यनेन सम्बन्धो न विवक्षितः आरादित्यनेनैव सम्बन्ध इति केचित् उपपदविभक्तेः कारक-विभक्तिर्गरीयसीत्यपादान एव पञ्चमीति केचित् ॥ १०४ ॥ भ०

पूर्वेत्यादि । पूर्वस्माद्रावणादन्यवद्भाति ज्ञायते अन्येन तुल्यं वर्त्तत इति कृत्वा अन्यशब्दयोगे पञ्चमी यतो भावात् स्नेहाद्दाशरथिं स्तुवन् किन्तु क्रौर्य्यादृते क्रौर्य्यं वर्जयित्वा ऋतशब्दयोगे पञ्चमी मां विश्वास-यितुं सम्भावयितुं किमागत इत्यचिन्तयत् ॥ १०५ ॥ ज०म०

पूर्वस्मादित्यादि । अयं पूर्वस्माद्रावणादन्य इव भाति प्रकाशते अन्यारम्भेति पञ्चमी कुत इत्याह भावादभिप्रायाद्धेतोर्दाशरथिं स्तुवन् किन्तु क्रौर्य्यात् ऋते रामविषये क्रूरतां विना मां विश्वासयितुं किन्तु समायातः नु वितर्के ऋते योगे पूर्ववत्पञ्चमी । भावः स्वभावेऽभिप्राये चेष्टासत्तात्मजन्मसु । क्रियालीलापदार्थेषु दृष्टजन्तुविभूतिष्विति विश्वः ॥ १०५ ॥ भ०

इत इत्यादि । यदि रावणादितरः प्रतियोगी राघवानुचरः

उत्तराहि वसन् रामः समुद्राद्रक्षसां पुरम्।
अवैल्लवणतोयस्य स्थितां दक्षिणतः कथम्॥ १०७॥
दण्डकान् दक्षिणेनाहं सरितोऽद्रीन् वनानि च।
अतिक्रम्याम्बुधिश्चैव पुंसामगममाहृता॥ १०८॥

राघवार्थकारी इतरयोगे पञ्चमी। ततो मम सफलानि स्वप्नलक्षणानि दर्शनादीनि निमित्तानि प्राक् प्रभातात् आदित्योदयात् पूर्वस्मिन् काले अन्यस्य हि प्रभातादुत्तरकालं सफलानि उत्तरपदयोगे पञ्चमी ॥ १०६ ॥ ज० म०

इतर इत्यादि। एष यदि रावणादितरोऽन्यः राघवानुचरः रामप्रयोजनकारी भवेत् मम प्राक् प्रभातात् सूर्योदयात् पूर्वकाले यानि शुभस्य निमित्तानि स्वप्नदर्शनादीनि तानि मम सफलानि स्युः इतरशब्दोऽन्यार्थः तद्योगे दिक्शब्दयोगे च पञ्चमी दिक्शब्दाद्दिग्देशकालेऽस्तातस्य लुक् च ॥ १०५ ॥ भ०

उत्तरेत्यादि। रामदूतोऽयमिति न सम्भाव्यते यतः समुद्रादुत्तरा या दिक् तस्यामुत्तराहि वसन् रामः आहि चदूरे उत्तराच्चेति तत्राहिप्रत्ययान्तेन उत्तराहिशब्देन योगे समुद्रादिति पञ्चमी लवणतोयस्य लवणसमुद्रस्य दक्षिणतो दक्षिणस्यां दिशि स्थितां रक्षसां पुरीं लङ्कां कथमवैत् ज्ञातवान् दक्षिणत इति दक्षिणोत्तराभ्यामतसुच् तदन्तेन योगे षष्ठ्यतसर्थप्रत्ययेनेति षष्ठी ॥ १०७ ॥ ज० म०

उत्तरेत्यादि। अथ रामदूतोऽयं न सम्भाव्यते यतः इतः समुद्रादुत्तरस्यां दिशि वसन् रामो लवणतोयस्य समुद्रस्य दक्षिणस्यां दिशि स्थितां रक्षसां पुरं लङ्कां कथमवैत् ज्ञातवान् दक्षिणोत्तराच्चाहीति सप्तम्या आहि अन्यारादित्यादिना दिक्शब्दयोगे पञ्चमी तसृक्रेरिति सप्तम्यास्तस् तद्योगे षष्ठ्यतसर्थेनेत्यादिना षष्ठी ॥ १०७ ॥ भ०

दण्डेत्यादि। दण्डकानामदूरे या दक्षिणा दिक् तस्यामिति एनबन्यतरस्यामिति सप्तम्यन्तादेनप् प्रत्ययः तदन्तेन योगे एनपा द्वितीयेति द्वितीया दक्षिणेन दण्डकानां दक्षिणस्यां दिशि सरितोऽद्रीन्

पृथक्नभस्वतश्चण्डाद्वैनतेयेन वा विना ।
गन्तुमुत्सहते नेह कश्चित् किमुत वानरः ॥ १०९ ॥
इति चिन्तावतीं कृच्छ्रात् समासाद्य कपिद्विपः ।
मृत्तां स्तोकेन रक्षोभिः प्रोचेऽहं रामकिङ्करः ॥ ११० ॥

वनानि च अम्बुधिं चातिक्रम्य पुंसामगममगम्यं यच्चदनिश्चितगमत्वं त्वम् अहमाहृता आनीता तत् कथमवैदित्यचिन्तयत् ॥१०८॥ ज० म०

दण्डकानित्यादि । दण्डकाया अदूरे दक्षिणस्यां दिशि स्थितानि सरितोऽद्रीन् वनानि च अम्बुधिञ्चातिक्रम्य पुंसामगममविज्ञातं यथा स्यात्तथाहमाहृता पुंसामगम्यं देशं प्रापिता वा न विद्यते गमो ज्ञानं यत्र तत् कथमवैदिति सम्बन्धः वनोऽपीति सप्तम्या एनः तद्योगे धिक्-समयेत्यादिना द्वितीया एनोऽपञ्चम्या इति परस्परसात् लक्षजितसमा-सानामभिधानं नियामकमित्युक्तेरदूरार्थमपि बोध्यं दण्डकादव्दोवने-ऽपि स्त्रीलिङ्गः नित्यबहुवचनान्तः पुंलिङ्ग इत्यन्ये तन्मते दण्डकानिति पाठः ॥ १०८ ॥ भ०

पृथगित्यादि । नभस्वतो वातात् चण्डात् पृथक्वायुं त्यक्त्वा वैन-तेयेन वा विना गरुड़ं वा वर्जयित्वा पृथग्विनेत्यादिना तृतीयापञ्चम्यौ इह लङ्कायां कश्चित् गन्तुं नोत्सहते किमुत वानरः ॥१०९॥ ज० म०

पृथगित्यादि । चण्डान्नभस्वतो वातात् पृथगन्यः वैनतेयेन गरु-ड़ेन वान्यः कश्चिदिह गन्तुं न उत्सहते किं पुनर्वानरः इत्येवमचिन्त-यदिति सम्बन्धः पृथक्शब्दोऽन्यार्थस्तेन तद्योगे विना योगे च अन्या-रभ्येत्यादिना पञ्चमी नभस्वन्तं वैनतेयञ्च वर्जयित्वेत्यर्थ इति केचित् किमुतेत्यव्ययं पुनरर्थे ॥ १०९ ॥ भ०

इतीत्यादि । एवमुक्तेन प्रकारेण चिन्तावतीं कपिद्विपो हनूमान् कृच्छ्रात्समासाद्य कथमप्युपगम्य अहं रामकिङ्करः रामप्रेषणकर इति प्रोचे मुक्तां स्तोकेनाल्पेन रक्षोभिः कर्तृभिः करणेन च स्तोकाल्पे-त्यादिना तृतीयापञ्चम्यौ कृच्छ्रस्तोकयोरसत्ववचनयोः करणत्वात् ॥ ११० ॥ ज० म०

विप्रकृष्टं महेन्द्रस्य न दूरं विन्ध्यपर्वतात् ।
नानभ्यासे समुद्रस्य तव माल्यवति प्रियः ॥ १११ ॥
असंप्राप्ते दशग्रीवे प्रविष्टोऽहमिदं वनम् ।
तस्मिन् प्रतिगते द्रष्टुं त्वामुपाक्रंस्यचेतितः ॥ ११२ ॥

इतीत्यादि । कपिद्विपः कपिश्रेष्ठो हनूमान् तां सीतां कृच्छ्रात् चिरकालान्वेषणेन समासाद्य प्राप्य अहं रामस्य किङ्करः परिचारक इति प्रोचे वदति स्म कीदृशीम् एवमुक्तप्रकारेण चिन्तायुक्तां रक्षोभिः स्तोकेनाल्पेन मुक्तां त्यक्तां करणे कतिपयस्तोकाल्पकृच्छ्रादसत्त्व इति सूत्रेण विभाषया पञ्चमीमाह परः स्वमते कृच्छ्रादिति हेतौ पञ्चमी स्तोकेनेति करणे तृतीया ॥ ११० ॥ भ०

यदि त्वं रामकिङ्करः क्वासावित्याह ।

विप्रेत्यादि । माल्यवति पर्वते तव प्रियो रामः महेन्द्रस्य पर्वतस्य विप्रकृष्टं दूरं विन्ध्यपर्वताच्च न दूरं दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामिति षष्ठीपञ्चम्यौ महेन्द्रपर्वतविन्ध्ययोर्दूरविप्रकृष्टयोस्तु दूरान्तिकार्थेभ्यो द्वितीया चेति द्वितीया नानभ्यासे न दूरे समुद्रस्य दूरान्तिकार्थैरिति षष्ठी माल्यवति सप्तम्यधिकरणे चेति सप्तमी चकाराद्दूरान्तिकार्थेभ्यश्च यस्य च भावेनेत्यनेनानभ्यास इति सप्तमी ॥ १११ ॥ ज० म०

विप्रेत्यादि । यदि त्वं रामकिङ्करस्तदा क्वासावित्यत इदमुच्यते तव प्रियो माल्यवति पर्वते वर्त्तते महेन्द्रस्य पर्वतविशेषस्य न विप्रकृष्टं न दूरं विन्ध्यनाम्नः पर्वतात् न दूरं समुद्रस्य नानभ्यासे न दूरे वा-रादर्थैरिति विन्ध्यपर्वतशब्दात् पक्षे पञ्चमी तदप्रवृत्तिपक्षे सम्बन्धे षष्ठ्येव आरादर्थैरिति दूरान्तिकार्थैः दूरान्तिकार्थादसत्त्वेऽमुटाङसिङि-श्चेति परः स्वमते विप्रकृष्टादयो देशार्थत्वे विवक्षिताः स्थितिक्रियात्व-र्थाक्षिप्यत एव तेनास्तीत्यध्याहारात् देशाध्वकालभावं वाईरिति धात्विककर्मत्वं कर्मत्वाभावपक्षे सप्तमी ॥ १११ ॥ भ०

अहमित्यादि । दशवदने असंप्राप्ते अप्रविष्टे अहमचेतितः सन् इदं वनमशोकवनिकाख्यं प्रविष्ट इति तस्मिन् प्रति गते त्वां द्रष्टुमुपा-

तस्मिन् वदति रुष्टोऽपि नाकार्षं देवि ! विक्रमम् ।
अविनाशाय कार्य्यस्य विचिन्वानः परापरम् ॥ ११३ ॥
वानरेषु कपिः स्वामी नरेष्वधिपतेः सखा ।

क्रंसि षस्तत्सहे च यस्य च भावेनेति सप्तमी कपेः प्रवेशोपक्रमयोः रावणसंप्राप्तिप्रतिगमनक्रियाभ्यां लक्ष्यमाणत्वात् उपाक्रंसीति उपपराभ्यामित्यनेन वृत्यादिषु सर्ग उत्साहे क्रमेस्तङ् उत्तमपुरुषैकवचनम् इट् स्नौक्रमोरनात्मनेपदनिमित्त इति सिच् इट् न भवति ॥११२॥ज० म०

असमित्यादि । रावणे असंप्राप्ते अनागाते सति अहमचेतितोऽज्ञातः सन्निदं वनं प्रविष्टः प्रवेशस्य गतिविशेषत्वात् गत्यर्थाढेति कर्त्तरि क्तः तस्मिन् प्रतिगते सति त्वां द्रष्टुं साक्षात्कर्त्तुम् अहम् उपाक्रंसि उद्यतोऽस्मि प्रोपाभ्यामारम्भ इति मं क्यां सिः उपाक्रंसि उत्साहं कृतवानस्मीति वार्थः वृत्त्युत्साहतायन इति मं कालभावाधारस्मिति उभयत्र भावे सप्तमी ॥ ११२ ॥ भ०

यद्याहावेव प्रविष्टोऽसि तर्हि किमिति स्वकर्म न दर्शितवानसीत्याह ।

तस्मिन्नित्यादि । हे देवि ! तस्मिन् वदति रुष्टोऽपि विक्रमं नाकार्षं तं तथा वदन्तमनादृत्य विक्रमं नाकार्षमित्यर्थः षष्ठी चानादर इति चकारात्सप्तमी किमर्थं कार्य्यस्य सन्देशकथादेरविनाशाय विचिन्वानः परापरं पौर्वापर्य्यं निरूपयन् कर्त्रभिप्राये तङ् ॥ ११३ ॥ ज० म०

तस्मिन्नित्यादि । हे देवि ! तस्मिन् रावणे वदति वदन्तं तम् अनादृत्य रुष्टोऽप्यहं विक्रमं नाकार्षं न कृतवान् स्वामीश्वराधिपतीत्यादिना अनादरे सप्तमी तस्मिन् वदति सतीति भावे सप्तमीति विद्यासागरः । कुत इत्याह यतोऽहं कार्य्यस्य सन्देशकथनस्य अविनाशाय अविघाताय परापरं विचिन्वानः परं यद्भविष्यति विरोधादि अपरञ्च यद्भूतं सन्देशकथनार्थमागमनादि तत् सर्वं विचारयन् उत्तरे सति कथं न पूर्वस्य बाध इति चिन्तयन् ॥ ११३ ॥ भ०

कथं वानरस्त्वं तस्य किङ्कर इत्याह ।

वानरेत्यादि । वानरेषु स्वामी यः कपिः सुग्रीवः स नरेष्वधिपते

जातो रामस्य सुग्रीवस्ततो दूतोऽहमागतः ॥ ११४ ॥
ईश्वरस्य निशाटानां विलोक्य निखिलां पुरीम् ।
कुशलोऽन्वेषणस्याहमायुक्तो दूतकर्मणि ॥ ११५ ॥
दर्शनीयतमाः पश्यन् स्त्रीषु दिव्यास्वपि स्त्रियः ।
प्राप्तो व्यालतमान् व्यस्यन् भुजङ्गेभ्योऽपि राक्षसान् ॥११६॥

रामस्य सखा जातः स्वामीश्वरेत्यादिना षष्ठीसप्तम्योर्विधानात् सप्तम्युदाहृता ततोऽहं दूत आगतः ॥ ११४ ॥ ज० म०

रामस्यानुचरो वानरः कथमित्याह ।

वानरेष्वित्यादि । वानराणां कपिः सुग्रीवो नराणामधिपते रामस्य सखा जातः ततोऽहं दूत आगतः स्वामीश्वराधिपतीति सप्तमी ॥ ११४ ॥ भ०

आगत्य च लङ्कां प्रविश्य इहायात इत्याह ।

ईश्वरस्येत्यादि । निशाटानां राक्षसानामीश्वरस्य दशाननस्य अत्र षष्ठ्युदाहृता पुरीं निखिलां निःशेषां विलोक्य किं तत्र वर्त्तत इति प्राप्त इति वक्ष्यमाणेन सम्बन्धः कुशलोऽन्वेषणस्याहं सीताया अन्वेषणस्य निपुणः आयुक्तो दूतकर्मणि दूतकर्मणि दूतक्रियायां व्यापृतः आयुक्तकुशलाभ्यामिति षष्ठीसप्तम्यौ ॥ ११५ ॥ ज० म०

ईश्वरस्येत्यादि । निशाटानां राक्षसानाम् ईश्वरस्य रावणस्य निखिलां समस्तां पुरीं विलोक्य अहं प्राप्त इत्यग्रिमश्लोकेनान्वयः । कीदृशः अन्वेषणस्य कुशलः सीतान्वेषणनिपुणः दूतकर्मणि आयुक्तः तत्परः स्वामीश्वराधिपतीत्यादिना षष्ठीसप्तम्यौ ॥ ११५ ॥ भ०

दर्शेत्यादि । तत्र दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः पश्यन् यतश्च निर्द्धारणमिति सप्तमी दर्शनीयतमत्वेन गुणेन पृथक्करणात् भुजङ्गेभ्योऽपि व्यालतमान् हिंस्रान् राक्षसान् व्यस्यन् अपक्षिपन् पञ्चमी विभक्तिः इति पञ्चमी । भुजङ्गेभ्यो राक्षसानां विभागात् प्राप्तो देव्याः पादमूलमित्यर्थात् ॥ ११६ ॥ ज० म०

भवत्यामुत्सुको रामः प्रसितः सङ्गमेन ते।
मघासु कृतनिर्वापः पितृभ्यो मां व्यसर्जयत्॥ ११७॥

दर्शेत्यादि। दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः पश्यन् भुजङ्गेभ्योऽपि व्यालतमान् अतिहिंस्रान् राक्षसान् व्यस्यन् अवक्षिपन् अहं प्राप्तो देव्याः स्थानमित्यर्थात् गम्यते स्त्रीष्वित्यत्र दर्शनीयतमत्वेन गुणेन समुदायादेकदेशस्य निर्द्धारणात् स्वामीश्वराधिपतीत्यादिना निर्द्धारे सप्तमी भुजङ्गेभ्य इत्यत्र पञ्चमीव्यतिरेके इति सूत्रे ण पञ्चमीमाह परः व्यतिरेको हीनाधिकभाव इति परः स्मृते निर्द्धारेऽधिकेनेत्यादिना निर्द्धारे पञ्चमी केनचिद्गुणेन समानधर्मिभ्यो यत् पृथक्करणं स निर्द्धारः भुजङ्गराक्षसयोस्तु सधर्मित्वं व्यालत्वेन वास्तवता अपि क्वचित् पञ्चमीत्यनेन निर्द्धारे पञ्चमीमाहुः॥ ११६॥ भ०

किमवस्थो राम इत्याह।

भवेत्यादि। भवत्यां त्वयि उत्सुकः उन्मनाः रामः तव सङ्गमेन प्रसितः प्रसक्तः प्रसितोत्सुकाभ्यां तृतीया चेति चकारात् सप्तमी सवाभियुक्तः कालः तत्समीपे चन्द्रमसो वर्त्तमानत्वात् नक्षत्रे ण युक्तः काल इत्यण् तस्य लुबविशेष इति लुप् तस्मिन् काले पितृभ्यः कृतनिर्वापः दत्तदानः मां व्यसर्जयत् नक्षत्रे च लुपीति सप्तमी तत्रापि लुपि युक्तवद् व्यक्तिवचन इति स्त्रीलिङ्गबहुवचने भवत्यां व्यसर्जयदिति विशङ्कात् प्रातिपदिकेत्यादिना प्रातिपदिकमात्रे प्रथमा॥११७॥ज०म०

भवत्यामित्यादि। रामो मां व्यसर्जयत् प्रास्थापयत् कीदृशः सन् भवत्यां त्वयि उत्सुकः उन्मनाः तव सङ्गमेन प्रसितः प्रसक्तः प्रसितोत्सुकाभ्यां तृतीयासप्तम्याविति परः स्मृते विषयविवक्षया सप्तमी करणत्वविवक्षया तृतीया मघासु मघानक्षत्रयुक्तकाले पितृभ्यः कृतनिर्वापः कृतदानः काले सप्तमी मघाशब्दस्य तत्रयुक्तकालवाचित्वं कालवाचिनो नक्षत्रादित्युक्तेरेव गम्यते लोकोपचारात् कालेऽपि स्त्रीलिङ्गत्वं बहुवचनान्तत्वञ्च परे तु मघानक्षत्रेनेन्दुयुक्तो न युक्तः काल इत्यर्थे टण् तन्लुक् च प्रकृतिवल्लिङ्गवचने इति स्त्रीत्वं बहुवचनत्वञ्चाहुः॥११७॥ भ०

अयं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुलीयकः।
भवत्याः स्मरतात्यर्थमर्पितः सादरं मम॥ ११८॥

रामस्य दयमानोऽसावध्येति तव लक्ष्मणः।
उपास्कृषातां राजेन्द्रावागमस्येह मा त्रसीः॥ ११९॥

सन्देहनिवृत्त्यर्थं चाभिज्ञानं दर्शयन्नाह।

अयमित्यादि। काकुत्स्थस्यायमङ्गुलीयकोऽभिज्ञानं चिह्नमयमभिज्ञानमिति लिङ्गाधिके प्रातिपदिकमात्रे प्रथमा मैथिलीति सम्बोधनाधिके सम्बोधने चेति सामन्त्रितं सम्बुद्धिश्चात्रैव द्रष्टव्यं काकुत्स्थस्येति षष्ठी शेष इति षष्ठी भवत्या अत्यर्थम् स्मरता मम सादरमर्पितम् अधीगर्थेत्यादिना स्मरणार्थे कर्मणः शेषविवक्षायां षष्ठी॥११८॥ ज०म०

सन्देहनिरासार्थमाह।

अयमित्यादि। हे मैथिलि! अयं काकुत्स्थस्य रामस्य अङ्गुलीयक आभरणविशेषोऽभिज्ञानं चिह्नं त्वयि सम्बुद्धुक्तार्थ इति लिङ्गार्थे सम्बोधने च प्रथमा काकुत्स्थस्येति सम्बन्धे षष्ठी अत्यर्थं भवतीं स्मरता रामेण सादरं यथा स्यात्तथा मम समर्पितः भवत्या इति समार्थैनेत्यादि कर्मणि षष्ठी अन्ये तु कर्मणो वा दयादेः स्मृत्यर्थस्य चेत्यादिविशेषसूत्रैः कर्मणि षष्ठीसञ्ज्ञा कर्मादिविषयेऽप्यविवक्षिते कर्मादौ सम्बन्धविवक्षायां षष्ठ्येवेत्यनेनान्यत्रापि षष्ठीं स्वीकुर्वन्ति विशेषसूत्रविषयादन्यत्रापि दृष्टत्वात् समेत्याधारे सम्बन्धविवक्षा अङ्गुलौ भवति तिष्ठतीति ढघेकादिति ईयः तदन्तस्य वाच्यलिङ्गत्वात् अलङ्कारशब्दस्य गम्यमानत्वात् पुंस्त्वमुदाहृतम् अङ्गुलीयकमूर्मिकेत्यमरेण सामान्यत्वान्नपुंसकं प्रयुक्तम्॥ ११८॥ भ०

रामेत्यादि। असौ लक्ष्मणो रामस्य दयमानो रामं रक्षन् शुचं मा कार्षीरिति दयतेः कर्मणि षष्ठी तवाध्येति त्वां स्मरति अधीगर्थे षष्ठी आश्वासनार्थमाह मा त्रसीः उद्वेगं मा कार्षीः त्रसेरीदित्वाच्छिष्ठायामिट्प्रतिषेधात् सिच इट् भवति यतो राजेन्द्रौ रामलक्ष्मणौ इहागमस्यागमनस्य भावे अप् उपास्कृषातां प्रतियत्नं कृतवन्तौ आगमनस्य

रावणस्येह रोच्यन्ति कपयो भीमविक्रमाः ।
धृत्या नाथस्व वैदेहि ! मन्योरुज्जासयात्मनः ॥ १२० ॥

निश्चितत्वात् तस्यैव सुग्रीवसख्येन गुणाधानात् तेन सतः प्रविपत्न इति कर्मणि षष्ठी प्रतियत्ने लुङ् तङ् लुट् ॥ ११९ ॥ ज० म०

रामेत्यादि । असौ लक्ष्मणो रामस्य दयमानः शोकापनोदनेन रामं प्रतिपालयन् तत्र अध्येति त्वां स्मरति पूर्ववत् कर्मणि षष्ठी आचार्यमाह राजेन्द्रौ क्षत्रियश्रेष्ठौ तौ इहागमस्य उपास्कृपाताम् आगमनमुपस्कृतवन्तौ अतो मा त्रसीः भयं न कुरु सूचनावक्षेपणेत्यादिना प्रतियत्ने सं सम्परेः सुसुपादित्यादिना सुम् सतो गुणान्तराधानं प्रतियत्नः निश्चितत्वात् सत एव गमनस्य सुग्रीवसख्येन गुणान्तरस्योत्कर्षस्याधानात् पूर्ववत् कर्मणि षष्ठी त्रसः प्रतियत्ने कर्मणि षष्ठीति परः त्रसी उद्वेगे टी ॥ ११९ ॥ भ०

रावेत्यादि । इह लङ्कायां कपयो भीमविक्रमाः असह्यपराक्रमाः रावणस्य रोच्यन्ति सरोगं रावणं करिष्यन्ति भीमविक्रमा इति गुणप्रधानो निर्देशः ततश्च विक्रमे रुजः भावकर्तृकत्वात् रुजार्थानां भाववचनानामज्वर इति षष्ठी अतो वैदेहि ! धृत्या नाथस्व आशंसस्व धृतिं लभस्वेत्यर्थः आशिषि नाथ इति कर्मणि षष्ठी आशिषि नाथ इत्युपसंख्यानात्तङ् मन्योरुज्जासयात्मनः मन्युं नाशय जसु हिंसायां ताड़ने च चौरादिकस्य हिंसार्थत्वात्तेन जासिनिप्रहणेति कर्मणि षष्ठी ॥ १२० ॥ ज० म०

रावणस्येत्यादि । इह लङ्कायां कपयो भीमपराक्रमाः सन्तो रावणस्य रोच्यन्ति रावणं पीड़यिष्यन्ति रुजो भङ्गे तो कर्मणि षष्ठी अन्ये तु रुजार्थस्य भावकर्तृत्वे इति सूत्रेण कर्मणि षष्ठ्या उदाहरणार्थं कपयस्तत्सम्बन्धिनो भीमा विक्रमाश्च इह रावणस्य रोच्यन्तीत्यन्वयं कुर्वन्ति हे वैदेहि ! धृत्या नाथस्व धृतिर्भूयादित्यात्मन्याशिषं कुरु धृतिं लभस्वेति भावः कर्मणि षष्ठी आशिषि नाथ इति षष्ठ्यर्थं मरस्कृतं सपथाशीरित्यादिना सं आत्मनो मन्योरुज्जासय आत्मनः

राक्षसानां मयि गते रामः प्रणिहनिष्यति ।
प्राणानामपणिष्टासौ रावणस्त्वामिहानयन् ॥ १२१ ॥
अदेवीद् बन्धुभोगानां प्रादेवीदात्मसम्पदम् ।
शतकल्पस्त्वेकस्याः स्मरत्यङ्गो रघूत्तमः ॥ १२२ ॥

यथोक्तं नाशय जयकवधे कर्मणि षष्ठी जासिनिप्रहणनाटिक्राथपिषां हिंसायामिति षष्ठ्यर्थं परस्मैपदम् ॥ १२० ॥ भ०

राक्षेत्यादि । मयि गते रामो राक्षसानां प्रणिहनिष्यति राक्षसान् मारयिष्यति पूर्ववत् कर्मणि षष्ठी निप्रहणेति इत्युक्तविन्द्वीतविपर्यस्तग्रहणमित्युक्तं नेर्गदेत्यादिना णत्वं किञ्च प्राणानामपणिष्टायमिति रावणस्त्वामिहानयन् प्राणानपणिष्ट विक्रीतवान् व्यवहृञ्पणोः समर्थयोरिति षष्ठी प्राणानामपणायिष्टेति पाठान्तरं तदयुक्तं स्तुत्यर्थस्य पणेस्तत्र ग्रहणात् गुपूधूपेत्यादिना आयप्रत्ययो न भवति ॥ १२१ ॥ ज० म०

राक्षसानामित्यादि । मयि गते सति रामो राक्षसानां प्रणिहनिष्यति राक्षसान् मारयिष्यति प्राग्वन्नो ण इति नेर्णत्वं कर्मणि षष्ठी असौ रावणस्त्वामिह लङ्कायामानयन् प्राणानामपणिष्ट प्राणान् विक्रीतवान् व्यवहृञ्पणोर्व्यवहारे इति षष्ठ्यर्थं परसूत्रं तत्र व्यवहारे इति क्रयविक्रयलक्षणे द्यूतक्रियायाञ्चेति व्याख्यातं पणव्यवहृतौ स्तुतौ वारे इत्यनेन कमञ्जत इत्यादिसूत्रविहिता अिङीयङाया विभाषिताः तेन पक्षे नायप्रत्ययः अपणिष्टेति चिन्त्यमिति विद्याविनोदस्य मतमिदं व्यवस्थितवाधिकारादायादयोऽसार्वधातुके वा भवन्तीति पक्षे नायप्रत्यय इति विद्यासागरेणोक्तत्वात् स्वमतं युक्तमेव ॥ १२१ ॥ भ०

अदेवीदित्यादि । न केवलं प्राणानपणिष्ट बन्धुभोगानामदेवीत् बन्धुभोगान् विक्रीतवान् दिवस्तदर्थस्येति षष्ठी दिवो व्यवहारार्थत्वात् प्रादेवीदात्मसम्पदं विक्रीतवान् विभाषोपसर्गे इति पक्षे द्वितीया प्रयत्नेन

तवोपशायिका यावद्राक्षस्यश्चेतयन्ति न ।
प्रतिसंदिश्यतां तावद्भर्त्तुः शार्ङ्गस्य मैथिलि ! ॥ १२३ ॥

युक्तत्वात् रामानुरागं पुनर्दर्शयन्नाह रघूत्तमः स्मरति अधीगर्थेति षष्ठी अङ्ग इति एकस्मिन्नर्थेऽङ्ग क्तोऽर्थप्रयोगकालेऽधिकरण इति षष्ठी ॥ १२२ ॥ ज० म०

अदेवीदित्यादि । न केवलं प्राणानामपणिष्टाऽसौ रावणो बन्धून् भोगांश्च अदेवीत् क्रीतवान् त्यक्तवानिति यावत् कर्मणि षष्ठी आत्मसम्पदमपि प्रादेवीत् विक्रीतवान् कर्मणि द्वितीया परे तु व्यवहारे सोपसर्गस्य दिवः कर्मणि वा षष्ठी नित्यन्त्वनुपसर्गस्येत्याहुः अथ संक्षिप्य पुनरपि रामानुरागं दर्शयति अङ्गः शतकृत्वो दिवसे शतं वारान् राम एकस्यास्तव एकां त्वां स्मरति चकृत्वस् वारे इति शतशब्दात् चकृत्वस् तद्योगे स्वामीश्वराधिपतीत्यादौ कृजर्थैरिति अहन्शब्दात् षष्ठी तवेति कर्मणि षष्ठी ॥ १२२ ॥ म०

एवं तामाश्वास्य सन्देशं दापयितुमाह ।

तवेत्यादि । हे मैथिलि ! तवोपशायिका परिपाट्या शयनं याभीराक्षसीभिः सहेत्यर्थात् पर्य्यायार्हर्णोत्पत्तिषु ण्वुच् यावन्न चेतयन्ति न प्रतिबुध्यन्ते तावत् प्रतिसन्दिश्यतां प्रतिसन्देशो दीयतां शार्ङ्गस्य भर्त्तुः शार्ङ्गं धनुर्धारयतो रामस्य तव शार्ङ्गस्येति यथाक्रमं कर्तृकर्मणोः कृतीति षष्ठी ॥ १२२ ॥ ज० म०

तवेत्यादि । हे मैथिलि ! तवोपशायिका पर्य्यायशयनं याभीराक्षसीभिः सहेत्यर्थात् पर्य्यायप्राप्ता ताश्च राक्षस्यो यावन्न चेतयन्ति न प्रतिबुध्यन्ते तावत् शार्ङ्गस्य भर्त्तुर्धनुर्धारयतो रामस्य कृतप्रतिसन्दिश्यतां प्रतिसन्देशो दीयतां इत्येवं हनूमान् प्रोचे इति पूर्वेण सम्बन्धः उपपूर्वशीङ् पर्य्यायशयनवाचकः अस्त्ररणकेति ज्ञापकात् भावे ण्वुकः स्त्रीत्वञ्च टाबितीत्यादिना तवेत्यत्र कर्त्तरि षष्ठी शार्ङ्गस्येत्यत्र कर्मणि तव उप समीपे शायिकाः शयाना राक्षस्यः कर्त्तरि ण्वक इति केचित् चिरव्यवधाने वुर्ध्योजिः ॥ १२२ ॥ म०

पुरः प्रवेशमाश्चर्य्यं बुद्ध्वा शाखामृगेण सा।
चूड़ामणिमभिज्ञानं ददौ रामस्य सम्मतम्॥ १२४॥
रामस्य शयितं भुक्तं जल्पितं हसितं स्थितम्।
प्रक्रान्तञ्च मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत्॥ १२५॥

पुर इत्यादि। शाखामृगेण मर्कटेन पुरो लङ्कायाः दुष्प्रवेशायाः प्रवेशः तमाश्चर्य्यमद्भुतं बुद्ध्वा सा सीता चूड़ामणिमभिज्ञानं ददौ सर्वं-सक्तमस्य सम्भावत इति उभयप्राप्तौ कर्मणीति षष्ठी प्रवेश इत्युभय-प्राप्तौ क्रति लङ्काहनूमतोः कर्मकर्तृत्वात् रामस्य सम्मतं प्रियं मति-बुद्धीत्यादिना वर्त्तमाने निष्ठा नलोकेति षष्ठीप्रतिषेधे प्राप्ते क्तस्य च वर्त्तमाने इति षष्ठी॥ १२४॥ ज० म०

पुर इत्यादि। शाखामृगेण वानरेण पुरो लङ्कायाः प्रवेशमाश्चर्य्यं बुद्ध्वा मत्वा सा सीता चूड़ामणिमभिज्ञानं शिरोरत्नं स्वकीयचिह्नं ददौ रामस्य सम्मतं रामेण मन्यमानं ज्ञायमानं सदा स्मरणात् ज्ञाच्छे-च्छार्थेति वर्त्तमाने क्तः तद्योगे क्तस्य च वर्त्तमान इति कर्त्तरि षष्ठी प्रपूर्वविशेर्घञ् यद्योगे उभेक्रतीति पुर इत्यत्र कर्मणि षष्ठी काचिदप-वादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् शाखामृगेणेत्यत्र उभे-क्रतीत्यनेन षष्ठीविषयेऽपि साधनकृत्येत्यादिना कर्त्तरि तृतीया इति केचित्। वस्तुतस्तु यत्रैकक्रद्योगे कर्त्तरि कर्मणि च षष्ठ्या विषयः स्यात् तत्र उभेक्रतीत्यादिना कर्मणि नित्यं षष्ठी त्वभावक्तेत्यादौ सढ इत्यनेन तु कर्त्तरि विभाषया षष्ठी सटे षष्ठी योग्यकर्मवत् क्रति प्रयुज्यमाने इत्यर्थः यत्तु कर्त्तृकर्मप्राप्तौ कर्मण एवैकक्रतीति षष्ठ्यर्थं क्रमदीश्वरस्य सूत्रं तत्तु प्रायिकम् वचनात् लिङ्गैर्येत्यपरे इति तेनैव पश्चादुक्तं शब्दानामनुशासनमाचार्य्येणाचार्य्यस्येत्याद्युदाहरन्ति प्राञ्चः॥ १२४॥ भ०

रामेत्यादि। रामस्य त्वभिज्ञानं दत्त्वा शयितादिकं मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत् प्रेषितवती तस्य शयितं शयनस्थानं किं भूमौ शेते

असौ दधदभिज्ञानं चिकीर्षुः कर्म दारुणम् ।
गामुकोऽप्यन्तिकं भर्त्तुर्मनसाचिन्तयत् क्षणम् ॥१२६॥

अन्यत्रेति वा भुक्तं भोजनस्थानं किं गृहे भङ्क्ते मुनिजनगृहे वेति जल्पितं मन्त्रस्थानं किं रहसि मन्त्रयते प्रकाशे वेति हसितं हसनस्थानं किं शृङ्गारवस्तुनि हसति वीरवस्तुनि वेति स्थितं निवासस्थानं किं गुहायां तिष्ठत्युत तरुतले वेति प्रक्रान्तं प्रचंक्रमणस्थानम् अनुनासिकेत्यादिना दीर्घः किम् अङ्गने क्रम्यते अन्यत्र वेति एषां ध्रौव्यगतिप्रत्यवसानार्थत्वात् क्तोऽधिकरणे वेति क्तः तस्य प्रयोगे अधिकरणवाचिनश्चेति षष्ठी ॥ १२५ ॥ ज० म०

रामस्येत्यादि । अभिज्ञानं दत्त्वा रामस्य शयितादि मुहुर्वारंवारं पृष्टा सीता हनूमन्तं व्यसर्जयत् प्रेषितवती शयितं शयनस्थानं भूमिः शय्या वेति भुक्तं भोजनस्थानं खगृहं मुनिगृहं वेति जल्पितं मन्त्रणास्थानं रहः प्रकाशितं वा हसितं हास्यस्थानं शृङ्गारवस्तु वीरवस्तु वा स्थितं वासस्थानं तरुतलं गृहादिकं वा प्रक्रान्तं चंक्रमणस्थानम् अङ्गनं वनं वा सर्वत्र ध्रौव्यगत्यदनार्थादिति आधारे क्तः तद्योगे क्तस्य चसङ्गार्थक्ते इति कर्त्तरि षष्ठी यदि भावे क्तः तदा स्वभावक्तेति षष्ठी सम्बन्धविवक्षया वा ॥ १२५ ॥ भ०

असावित्यादि । असौ हनूमान् दधत् धारयन्नभिज्ञानं चिह्नं कर्तृकर्मणोः कृतीति षष्ठ्यां प्राप्तायां न लोकेति शप्रयोगे प्रतिषेधः ल इति शानन्नादयो गृहीताः दारुणमशोकवनिकाभङ्गादिकं कर्म चिकीर्षुः कर्त्तुमिच्छुः उकारप्रश्लेषात् षष्ठ्याः प्रतिषेधः भर्त्तुः स्वामिनः अन्तिकं समीपं गामुकोऽपि गमनशीलोऽपि उकप्रयोगे प्रतिषेधः मनसा क्षणं चिन्तितवान् वक्ष्यमाणं कर्म ॥ १२६ ॥ ज० म०

असावित्यादि । असौ हनूमान् अभिज्ञानं चिह्नं दधत् धारयन् दारुणं कर्म चिकीर्षुः कर्त्तुमिच्छुः भर्त्तू रामस्य अन्तिकं समीपं गामुको गमनशीलोऽपि क्षणं मनसाचिन्तयत् वक्ष्यमाणमिति योज्यं ढघेकतीति सूत्रे व्यादिवर्जनात् न कर्मणि षष्ठी ॥ १२६ ॥ भ०

कृत्वा कर्म यथादिष्टं पूर्वकार्य्याविरोधि यः ।
करोत्यभ्यधिकं कृत्यं तमाहुर्दूतमुत्तमम् ॥ १२७ ॥
वैदेहीं दृष्टवान् कर्म कृत्वान्यैरपि दुष्करम् ।
यशो यास्याभ्युपादाता वार्त्तामाख्यायकः प्रभोः ॥ १२८ ॥

कृत्वेत्यादि । यो दूतो यथोद्दिष्टं कर्म कार्य्यं कृत्वा अत्र कृत्वेत्यव्ययप्रयोगे प्रतिषेधः तत उत्तरकालं पूर्वकर्माविरोधि पूर्वकृतस्य कार्य्यस्य यदविरोधि तदधिकं करोति तमुत्तमं दूतमाहुर्विदुर्नीतिविद इति शेषः मया च यथोद्दिष्टं सीतान्वेषणं कृतमिति भावः ॥१२७॥ज०म०

कृत्वेत्यादि । यो दूतो यथादिष्टमाज्ञानतिक्रमेण कार्य्यं कृत्वा पूर्वकार्य्याविरोधि अधिकं कार्य्यान्तरं करोति तमुत्तमं दूतमाहुर्नीतिविद इति शेषः तस्मात् सीतान्वेषणमादिष्टं कर्म कृत्वा अधिकमपि करिष्यामीत्यपिमश्लोके वक्ष्यति कृत्वेति व्यवर्जनात् न तद्योगे षष्ठी ॥ १२७ ॥ भ०

तदेव च दर्शयन्नाह ।

वैदेहीमित्यादि । अहमद्य तावद्वैदेहीं दृष्टवान् निष्ठाप्रयोगे प्रतिषेधः अन्यदपि कार्य्यमतिदुष्करं कृत्वा क्त्वाप्रयोगे प्रतिषेधः ततो यश उपादाता आत्मसात्कर्त्ता इदमतिदुष्करं तेन कृतमिति तृजन्तस्य प्रयोगे प्रतिषेधः वार्त्तामाख्यायकः प्रभोर्वार्त्तामाख्याता ख्यातिभविष्यदधिकारात्तुमुन्ण्वुलौ क्रियायामिति ण्वुल् अकेनोर्भविष्यदाधमर्ण्ययोरिति प्रतिषेधः ॥ १२८ ॥ ज० म०

वैदेहीमित्यादि । वैदेहीं दृष्टवानहम् अन्यैरतिदुष्करं कर्म वक्ष्यमाणं वनभङ्गादि कृत्वा यश उपादाता उपादानशीलः सन् प्रभोः समीपे वार्त्तामाख्यायकः आख्यातुं यास्यामि क्तवतुखलर्थशीलार्थतृणां योगे षष्ठीनिषेधो दर्शितः आख्यायक इति वक्ष्यमाणेत्युक्तं तृन्ण्वकौ च इति विधानादन्यत्रापि ण्वको भवतीति ज्ञापितं तेनात्र तमर्थे ण्वको बोध्यः किंवा तृन्ण्वकौ च इत्यनेनैव ण्वकः तत्र कालसामान्येन सर्वस्मिन् काले तौ भवत इति प्राप्तम् अत्र तु भविष्यत्कालो विवक्षितः

राघवेन्द्रस्य संरक्ष्यं मया लव्यमिदं वनम् ।
इति संचिन्त्य सदृशं नन्दनस्याभनक् कपिः ॥ १२९ ॥
राघवाभ्यां शिवं दूतस्तयोरहमिति ब्रुवन् ।
हितो भनज्मि रामस्य कः किं ब्रूतेऽत्र राक्षसः ॥ १३० ॥

आख्यायकः आख्यास्यन्नित्यर्थः क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति न्यायात् षष्ठीविषयेऽपि द्वितीया । परे तु क्रियार्थोपपदस्य चेति सूत्रेण यकं ण्वकस्तुमर्थे प्राय इति सूत्रेण षष्ठीनिषेधश्चाह्वः प्रायोग्रहणात् क्वचित् षष्ठीमपि ॥ १२८ ॥ भ०

राघेत्यादि । इदं वनमशोकवनिकाख्यं राघवेन्द्रस्य संरक्ष्यं रक्षार्हम् अर्हे कृत्यः ऋहलोर्ण्यत् तन्मया लव्यं लवनीयं कृत्यानां कर्त्तरि वेति षष्ठी तृतीये कर्त्तरि भवतः इत्येवं संचिन्त्य कपिर्नन्दनस्य वनस्य सदृशं तुल्यं तुल्यार्थैरिति पक्षे षष्ठी अभनक् भग्नवान् भञ्जेर्लङि श्नान्नलोप इति नलोपे हल्ङ्यादिलोपे जश्चर्त्वे च रूपम् ॥ १२९ ॥ ज० म०

राघेत्यादि । इदं वनं राघवेन्द्रस्य संरक्ष्यं सम्यक् रक्षार्हं मया लव्यं छेदनीयम् इति सञ्चिन्त्य नन्दनस्य इन्द्रवनस्य सदृशं तद्वनं कपिर्हनूमान् अभनक् भग्नवान् भनुजेर्घ्यां रुधादित्वात् श्नम् लव्यभावक्तेति त्वयोगे कर्त्तरि विभाषया षष्ठी समार्थैनेति समार्थेन षष्ठी ॥ १२९ ॥ भ०

राघवेत्यादि । राघवाभ्यां रामलक्ष्मणाभ्यां शिवं भद्रमस्तु तयोर्हनूमान् दूतो हितो रामस्य भनज्मीदं वनम् एवञ्च क्रियमाणे को भवतां मध्ये राक्षसः किं ब्रूते इत्येवं ब्रुवन् बभञ्ज पवनात्मजो रिपुवनमिति वक्ष्यमाणेन सम्बन्धः राघवाभ्यां शिवं हितो रामस्येति चतुर्थी चाशिष्येत्यादिना षष्ठीचतुर्थ्यौ । इति विभक्त्यधिकारः ॥ १३० ॥ ज० म०

राघवाभ्यामित्याह । हे राक्षसः ! राघवाभ्यां रामलक्ष्मणाभ्यां शिवं भूयादिति शेषः चतुर्थार्थवषड़ित्यादिना हितार्थत्वात् शिवशब्दयोगे चतुर्थी तत्र हि शक्त इत्यनेन शक्तार्थानाम् अलं प्रभुप्रोधपर्य्याप्तसमर्थादीनां ग्रहणम् अर्थशब्दः प्रयोजनवाची तेन प्रयोजनार्थानां

विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमं
कुसुमनिपातविचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनम् ।
शकुननिनादनादिककुब्विलोलविपलायमानहरिणं
हरिणविलोचनाधिवसतिं बभञ्ज पवनात्मजो रिपुवनम् १२१

इति भट्टिकाव्येऽष्टमः सर्गः ।

ग्रहणं हितमित्यनेन हितार्थानां भद्रशोभनशिवादीनां कल्याणपर्याय-पठितानाम् अन्येषाञ्च साध्वादीनां ग्रहणं हितार्थत्वेन स्वस्तिशब्दे गृहीतेऽपि स्वस्तिशब्दग्रहणं समार्थैर्नेत्यादिना हितार्थत्वेन प्राप्तषष्ठ्या अप्रवृत्त्यर्थम् अतएव स्वस्तिर्जं कुशलार्थैरिति विभाषया चतुर्थ्यर्थे परत्वम् एवं सुखार्थानां सुखीत्यादीनां ग्रहणम् अतएव चलाय साधुः चत्रिय इत्युदाहृतं रामस्य हितः सन् इदं वनं भनज्मि समार्थैर्नेति सम्बन्धे हितयोगे च षष्ठी एवं क्रियमाणे अत्र कर्मणि को राक्षसः किं ब्रूते इति ब्रुवन् पवनात्मजो रिपुवनं बभञ्जेत्यग्रिम-श्लोकेनान्वयः ॥ १२० ॥ भ०

विलुलितेत्यादि । कीदृशं बभञ्ज विलुलितानां पुष्पाणां रेणुभिः कपिशं पिङ्गं प्रशान्ताः अवसन्नाः कलिकाः पलाशानि पत्राणि कुसु-मानि च यत्र कुसुमानां निपातेन विचित्रा वसुधा यत्र सशब्दैर्निप-तद्भिर्द्रुमैरुत्काः उन्मनसः शकुना यत्र शकुनानां पलायमानानां निना-देन नादिताः सञ्जातनादाः ककुभो दिशो यत्र विलोला व्याकुला विप-लायमाना हरिणा यत्र हरिणस्येव लोचने यस्याः सीतायाः तस्या अधिवसतिं निवासम् । इत्यनभिहिताधिकारः ॥ १२१ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायाम् अधिकारकाण्डे तृतीयः परिच्छेदः । काव्यस्याशोकवनिकाभङ्गो नामाष्टमः सर्गः ।

विलुलितेत्यादि । पवनात्मजो रिपुवनं बभञ्ज कीदृशं विलुलितानां विघटितानां पुष्पाणां रेणुभिः कपिशं पिङ्गलं प्रशान्तानि अवसन्नानि कलिकाः पत्राणि पुष्पाणि च यत्र कुसुमानां निपातेन विचित्रा वसुधा

# नवमः सर्गः।

अथ प्रकीर्णकाः।

द्रुमभङ्गध्वनिसंविग्नाः कुवत्पक्षिकुलाकुलाः।
अकार्षुः चण्डाचर्य्यो रावणस्य निवेदनम् ॥ १ ॥

यत्र सशब्दैः सशब्दं वा निपतद्भिर्द्रुमैरुत्सुकाः स्थानान्तरं गन्तुमुन्मनसः शकुनाः पक्षिणो यत्र शकुनानां पलायमानानां निनादेन नादिताः अज्ञातनादाः शब्दायमानीकृता वा ककुभो दिशो यत्र विलोला व्याकुलाः सन्तो विपलायमाना हरिणा यत्र हरिणस्येव विलोचने यस्याः सीतायास्तदधिवसतिं तन्निवासस्थानम् ॥ १२१ ॥ म०

इति सद्वैद्यहरिहरस्थानवंशसम्भवगौराङ्गमल्लिकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायामधिकारकाण्डेऽष्टमः सर्गः।

---

अथान्तरे प्रकीर्णकश्लोकानाह।

द्रुभङ्गेत्यादि। चण्डाचर्य्यो निशाचर्य्यः चरेटः रावणस्य निवेदनमकार्षुः कृतवत्यः वक्ष्यमाणप्रकारेण द्रुमभङ्गध्वनिसंविग्नाः शाखाभङ्गशब्देन सन्त्रस्ताः ओविजीभयचलनयोः ओदितश्चेति निष्ठानत्वं कुवत्पक्षिकुलाः कूजद्भिः पक्षिकुलैः व्यस्तमानसाः कुशब्दे तौदादिकस्य डवङादेशः ॥ १ ॥ ज० म०

द्रुभङ्गेत्यादि। सीतासन्निधिस्थाः चण्डाचर्य्यो राक्षसो रावणस्य निवेदनं वक्ष्यमाणम् अकार्षुः कृतवत्यः कजश्री चनुसिद्धेरित्युस् कीदृश्यः द्रूणां द्रुमाणां भङ्गशब्दैः संत्रस्ताः विजङ्भीशोभीकम्पे ओदित्वात् नत्व न कुवद्भिः शब्दायमानैः पक्षिणां कुलैः समूहैराकुला व्याकुलितास्ताः कुङ्शब्दे कुकचेत्यादादिकात् शतः कुशब्दे भौवादिक

यद्वताप्सीच्छनैर्भानुर्यन्नावासीन्मितं मरुत्।
यदाप्यानं हिमोस्रेण भनक्त्युपवनं कपिः॥ २॥
ततोऽशीतिसहस्राणि किङ्कराणां समादिशत्।
इन्द्रजित्सूर्विनाशाय मारुतेः क्रोधमूर्च्छितः॥ ३॥

इति जयमङ्गलायां प्रमादस्तस्यात्मनेपदित्वात् शपो लुग्विकरणत्वाच्च कूज-त्पक्षिकुलाकुला इति क्वचित् पाठः॥ १॥ भ०

यदित्यादि। यद्वनं भानुः शनैर्मन्दमताप्सीत् तपति स्म हवन्त-वचया वृद्धिः मरुत् मितं स्तोकमवासीत् वाति स्म हिमोस्रेण शिशिररश्मिना आप्यानं वृद्धिं नीतं प्यायतेर्लोपो व्योर्वलीति यलोपः ओदित्वान्नत्वं तदुपवनं कपिर्भनक्ति चूर्णयतीति निवेदनमकार्षुः॥ २॥ ज० म०

निवेदनमाह।

यदित्यादि। यदुपवनं भानुः शनैर्मन्दम् अताप्सीत् तपति स्म ह्मन्-यटेति त्रिः अनिट्त्वात् यत्रोपवने वायुर्मितमल्पम् अवासीत् वाति स्म यमरमेति इट्सकौ यदुपवनं हिमोस्रेण चन्द्रेण आप्यानं स्फीतम् ओप्यायीङ्वृद्धौ कर्त्तरि क्तः व्योर्वलीति यलोपः किरणोस्रमयूखांशुगभस्तिघृणिघृष्णय इत्यमरः। तदुपवनं कपिर्भनक्ति इति निवेदन-मकार्षुरिति पूर्वेण सम्बन्धः॥ २॥ भ०

तत इत्यादि। निवेदनानन्तरमिन्द्रजित्सूः रावणः इन्द्रजितं सूत इति सत्सूद्विषेत्यादिनानुपसर्गे क्विप्। मारुतेर्हनूमतो विनाशाय अशीतिसहस्राणि समादिशत् समादिष्टवान् किङ्कराणां किं कुर्वन्ति दिवाविभेत्यादिना टच्। क्रोधमूर्च्छितः क्रोधोद्धतः मूर्च्छेः समुच्छ्राये वर्त्तमानत्वात्॥ ३॥ ज० म०

तत इत्यादि। ततोऽनन्तरमिन्द्रजित्सूः रावणः क्रोधेन मूर्च्छितः सञ्जातमूर्च्छः सन् मारुतेर्हनूमतो विनाशाय किङ्कराणाम् अशीति-सहस्राणि समादिशत् आज्ञापयत्। इन्द्रजितं सूते इति क्विप्॥ ३॥ भ०

शक्त्यष्टिपरिघप्रासगदामुद्गरपाणयः ।
व्यश्नुवाना दिशः प्रापुर्वनं दृष्टिविषोपमाः ॥ ४ ॥
दध्वान मेघवद्भीममादाय परिघं कपिः ।
नेदुर्दीप्तायुधास्तेऽपि तडित्वन्त इवाम्बुदाः ॥ ५ ॥
कपिनाम्भोधिधीरेण समगंसत राक्षसाः ।
वर्षास्वुद्धततोयौघाः समुद्रेणेव सिन्धवः ॥ ६ ॥

शक्तीत्यादि । ते किङ्करा वनं प्रापुः प्राप्नवन्तः शक्त्यादयः प्रहरणविशेषाः पाणौ येषामिति प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः व्यश्नुवानाः दिशो व्याप्नुवन्तः अश्नूव्याप्तौ स्वादिकः दृष्टिविषोपमा भुजङ्गवत् दृश्यैव विनाशयन्त इत्यर्थः ॥ ४ ॥ ज० म०

शक्तीत्यादि । शक्त्यादयः पाणौ येषां ते किङ्करा वनं प्रापुः दिशो व्यश्नुवाना व्याप्नुवन्तः अश्नूङ्व्याप्तिसंहत्योः दृष्टिविषैः सर्पविशेषैरुपमा येषां दृष्टिर्दर्शनं विषोपमा विषमिव येषामिति वा ॥४॥ भ०

दध्वेत्यादि । कपिर्भीमं परिघं भयानकमर्गलमादाय मेघवद्दध्वान ध्वनति स्म तेऽपि किङ्कराः तडित्वन्त इवाम्बुदाः नेदुः नदन्ति स्म किङ्कराणां कृष्णत्वात् मेघैः सादृश्यम् आयुधानाञ्च तडितेति ॥ ५ ॥ ज० म०

दध्वानेत्यादि । कपिर्हनूमान् भीमं भयानकं परिघं लौहवन्मुद्गरमादाय गृहीत्वा मेघ इव दध्वान ध्वनशब्दे तेऽपि दीप्तप्रहरणा राक्षसास्तडिद्युक्ता मेघा इव नेदुः शब्दितवन्तः ॥ ५ ॥ भ०

कपीत्यादि । कपिना अम्भोधिधीरेण क्षोभ्यत्वात् राक्षसाः समगंसत सङ्गताः समोगमीत्यादिना तङ् लुङ् यथा सिन्धवो नद्यः उद्धततोयौघाः उद्रिक्तजलपूराः समुद्रेण सङ्गच्छन्ते ॥ ६ ॥ ज० म०

कपिनेत्यादि । ते राक्षसाः समुद्रवद्धीरेण कपिना समगंसत मिलिता बभूवुः समोगमृच्छेति सं मात्मोऽदनत इत्यतादेशः यथा वर्षासुद्धतजलपूराः सिन्धवो नद्यः समुद्रेण सङ्गता भवन्ति ॥ ६ ॥ भ०

लाङ्गूलमुद्धतं धुन्वन्नुद्वहन् परिघं गुरुम् ।
तस्थौ तोरणमारुह्य पूर्वं न प्रजहार सः ॥ ७ ॥

एते प्रकीर्णकाः ।

सिचि वृद्ध्यधिकारमाह ।

अचारिषुः शराम्भांसि तस्मिन् रक्षःपयोधराः ।
न चाह्वालीन्न चाव्राजीत्त्रासं कपिमहीधरः ॥ ८ ॥

लाङ्गूलेत्यादि । स हनूमान् लाङ्गूलं पुच्छमुद्धतम् उत्क्षिप्तं धुन्वन् धूञ् कम्पन इति स्वादौ पठितः परिघं गुरुम् उद्वहन् तोरणमारुह्य तस्थौ न तु पूर्वं प्रजहार प्रहृतवान् शूराणां पश्चात् प्रहारित्वात् ॥ ७ ॥ ज० म०

एते प्रकीर्णकाः ।

लाङ्गूलेत्यादि । स हनूमान् तोरणं बहिर्द्वारमारुह्य उद्धतमुत्क्षिप्तं लाङ्गूलं धुन्वन् कम्पयन् गुरुं परिघम् उद्वहन् धारयन् तस्थौ पूर्वं न प्रजहार शूराणां पश्चात् प्रहारित्वात् ॥ ७ ॥ भ०

एते प्रकीर्णकाः ।

इतः परं सिचि वृद्धिमधिकृत्याह ।

अचेत्यादि । तस्मिन् वने रक्षःपयोधराः रक्षांसि पयोधरा इव शराम्भांसि शरान् अम्भांसीव अचारिषुः चरितवन्तः चरतिरकर्मकः चरेत् क्षुतजवृत्तिरित्यादिप्रयोगेषु दृश्यते इह तु सकर्मको विवक्षितः कपिर्महीधर इव न चाह्वालीत् न चलितवान् ह्वयोरप्यतो हलादेर्लघो-रिति विकल्पे प्राप्ते अतो लान्तस्येति सिचि वृद्धिः नाव्राजीत् त्रासं भयञ्च न जगाम महीधरतुल्यत्वात् नेटीति प्रतिषेधस्यातो हलादे-र्लघोरिति विकल्पिते वदव्रजेत्यादिना वृद्धिः ॥ ८ ॥ ज० म०

अथ सिचि वृद्ध्यधिकारः समते सिच् सिः ।

अचेत्यादि । तस्मिन् कपौ रक्षांसि पयोधरा इव शरानम्भांसीव अचारिषुः क्षिप्तवन्तः किन्तु कपिर्महीधर इव न च अह्वालीत् नैव

अवादीत्तिष्ठतेत्युच्चैः प्रादेवीत् परिघं कपिः।
तथा यथा रणे प्राणान् बहूनामग्रहीत् द्विषाम्॥ ९॥
व्रणैरवमिषू रक्तं देहैः प्रोर्णविषुर्भुवम्।
द्विषः प्रोर्णविषुश्चान्ये यातुधाना भवद्भियः॥ १०॥

चलितवान् न च तासमत्राजीत् प्राप्तवान् चर्जसञ्चलने झलझलचाले व्रजगतौ सर्वत्र ख्यां सिः व्रजवदेति वृद्धिः॥ ८॥ भ०

अवेत्यादि। ततः उत्तरकालं कपिस्तिष्ठत मा पलायध्वमिति उच्चैस्तानवादीत् पूर्ववद्वृद्धिः तथा तेन प्रकारेण परिघं परिघेण प्रादेवीत् विजिगीषते स्म दिवः कर्म चेति परिघस्य कर्मसंज्ञा दिवेर्नेटीति वृद्धिप्रतिषेधः यथा बहूनां द्विषां शत्रूणां प्राणान्यग्रहीत् निगृहीतवान् अतो हलादेरिति विकल्पे प्राप्ते ह्मन्तक्षणश्वस इति प्रतिषेधः॥ ९॥ ज० म०

अवादीदित्यादि। अतः परं यूयं तिष्ठत मा पलायध्वमित्युच्चैर्महता ध्वनिना कपिरवादीत् उक्तवान् पूर्ववद् वृद्धिः परिघेण तथा तेन प्रकारेण प्रादेवीत् क्रीड़ति स्म जेतुमैच्छद्वा दिव्यु जिगीषेच्छापणिद्युतौ क्रीड़ागत्योः टी युर्भूङ इति णुः दिवोर्धञेति करणे द्वितीया यथा रणे बहूनां शत्रूणां प्राणान् अग्रहीत् अपहृतवान् हयादेः सेम इति ह्मान्तवर्जनान्न वृद्धिः॥ ९॥ भ०

व्रणैरित्यादि। यातुधाना राक्षसा व्रणैः प्रहारमार्गैः रक्तं शोणितमवमिषुः वमन्ति स्म ह्मन्तेति वृद्धिप्रतिषेधः देहैर्भुवं प्रोर्णाविषुः छादितवन्तः अन्ये यातुधानाः भवद्भियः भवन्तो भीर्येषामिति भयात् पलायमानाः द्विषः प्रौर्णविषुः छादितवन्तः ऊर्णोतेर्विभाषेति विकल्पः ऊर्णोर्विभाषेर्णोरित्यङिन्त्वपक्षे द्रष्टव्यः ङित्त्वे गुणवृद्धिप्रतिषेधात्॥ १०॥ ज० म०

व्रणैरित्यादि। यातुधाना व्रणैः प्रहारमार्गै रक्तम् अवमिषुः वमन्ति स्म पूर्ववन्मान्तवर्जनान्न वृद्धिः देहैर्भुवं प्रोर्णाविषुः आच्छादितवन्तः भवन्तो विद्यमाना भीर्भयं येषां तेऽन्ये यातुधाना द्विषः प्रोर्णविषुः

अक्राविषुश्च्युतोत्साहा भिन्नदेहाः प्रियासवः ।
कपेरत्रासिषुर्नादान् मृगाः सिंहध्वनेरिव ॥ ११ ॥

इति सिचि वृद्ध्यधिकारः ।

मायानामीश्वरास्तेऽपि शस्त्रहस्ता रथैः कपिम् ।
प्रत्याववृतिरे हन्तुं हन्तव्या मारुतेः पुनः ॥ १२ ॥

पलायन्त स्मेत्यर्थः ऊर्णुञाच्छादने ऊर्णविष्यामिति इट्विरावादेशश्च ॥ १० ॥ भ०

अक्रेत्यादि । च्युतोत्साहाः निरुत्साहाः अक्राविषुः क्रुताः स्म इति शब्दितवन्तः यतः प्रियासवः प्रियप्राणाः कपेः सम्बन्धिनो नादादत्रासिषुः त्रस्ताः उभयत्रापि नेटीति प्रतिषिद्धोऽतो हलादेरिति विकल्पः ॥ ११ ॥ ज० ज०

इति सिचि वृद्ध्यधिकारः ।

अक्रेत्यादि । प्रिया असवः प्राणा येषां ते यातुधाना भिन्नदेहा विदीर्णशरीरा भूत्वा निरुत्साहा निःस्पृहाः सन्तः अक्राविषुः क्रुताः स्म इति शब्दितवन्तः कणशब्दे हलादेः शेष इति पक्षे वृद्धिः कपेर्नादात् अत्रासिषुः त्रस्ताः पूर्ववत् पक्षे वृद्धिः यथा सिंहस्य ध्वनेर्मृगास्त्रस्यन्ति ॥ ११ ॥ भ०

इति सिचि वृद्ध्यधिकारः ।

इत इट्प्रतिषेधमधिकृत्याह ।

मायेत्यादि । अथानन्तरं राक्षसा ये दिशो गताः ते कपिं हन्तुं पुनः प्रत्याववृतिरे प्रतिनिवृत्ताः मायानामीश्वराः प्रभवः स्थेशेति वरच् नेड्वशिकृतीति नेट् आर्द्धधातुकेत्यादिना प्राप्तत्वात् रथैस्तत्र गताः सन्तः शस्त्रहस्ताः शस्त्राणि हस्तेषु येषामिति हनिकुषीत्यादिना रमेरौणादिकः क्थन् रथाः अमिचमीत्यादिना शसेरौणादिकस्त्रन् हसिमृग्रिण्वमीत्यादिना हसेस्तन् तयोस्तितुत्रेत्यादिना इट्प्रतिषेधः हन्तव्या मारुतेरिति हनूमतो वधार्हः कृत्यानां कर्त्तरि वेति षष्ठी एकाच इत्यादिना इट्प्रतिषेधः हन्तेर्नमान्तत्वेऽप्यनिट्त्वात् ॥ १२ ॥ ज० म०

तांश्चेतव्यान् चितौ श्रित्वा वानरस्तोरणं युतान् ।
जघानाधूय परिघं विजिघृक्षून् समागतान् ॥ १२ ॥
संजुघुक्षव आयूंषि ततः प्रतिरुरूषवः ।
रावणान्तिकमाजग्मुर्हतशेषा निशाचराः ॥१४ ॥

इत इट्प्रतिषेधाधिकारः ।

मायानामित्यादि । अथानन्तरं ये द्विषः शौर्यंविषुः ते कपिं हन्तुं रथैः पुनः प्रत्यावर्त्तिरे प्रत्यागताः प्रतिनिवृत्ता हनत्तौ गतौ वधे वसोरस्येसनौदित इति श्वौदिहृर्जनादनिम् कीदृशास्ते मायानामीश्वराः प्रभवः यायायभासकस इति वरः हनततेरिति नेम् शस्त्रं हस्ते येषां ते तथा शस्यते हन्यतेऽनेनेति शस्त्रं शसवधे तास्त्विति त्वः पूर्ववत्नेम् मारुतेर्हनूमतो हन्तव्याः हन्तुं शक्याः त्वभावेति पक्षे कर्त्तरि षष्ठी ॥ १२ ॥ भ०

तांश्चेतेत्यादि । समुदिता एकस्यामेव वेलायां मया हन्तव्या इति वानरस्तोरणमाश्रितवान् स तोरणं श्रित्वा तान् राक्षसान् विजिघृक्षून् विग्रहीतुमिच्छून् युतान् समुदितान् समागतान् ढौकितान् चितौ पृथिव्यां चेतव्यान् पुञ्जीकर्त्तव्यान् जघान हतवान् परिघमाधूय परिभ्राम्य तत्र चेतव्यानिति एकाच इतीट्प्रतिषेधः चिताविति क्तिच्क्तौच संज्ञायामिति क्तिच् तितुत्रेत्यादिना इट्प्रतिषेधः श्रित्वा युतानिति श्र्युकः कितीट्प्रतिषेधः विजिघृक्षूनिति सनि ग्रहगुहोश्चेति तत्र रुदविदेति सनः कित्त्वं ग्रहिज्येति सम्प्रसारणं ढत्वकत्वषत्वानि ॥ १२ ॥ ज० म०

तानित्यादि । तोरणं श्रित्वा परिघमवधूय परिभ्राम्य वानरस्तान् राक्षसान् जघान कीदृशान् चितौ चेतव्यान् पुञ्जीकर्त्तव्यान् युतान् एकीभूतान् विजिघृक्षून् विग्रहं कर्त्तुमिच्छून् समागतान् मिलितान् चिञस्तव्यः नेमेकाजादित्यादिना इण्निषेधः श्रुद्रुश्रिञ्जूर्णोरिति श्रियुभ्यां नेम् नेस्तुगुहपह इति ग्रहेः सनि नेम् गमेरोदित्वान्नेम् ॥ १२ ॥ भ०

संजिघत्यादि । तत उत्तरकालं ये हतशेषा निशाचराः ते संजु-

एकेन बहवः शूराः साविष्काराः प्रमत्तवत् ।
वैमुख्यञ्चक्रमेत्युचैरूचुर्दशमुखान्तिके ॥ १५ ॥
मांसोपभोगसंशूनानुद्विग्नांस्तानवेत्य सः ।
उद्वृत्तनयनो मित्रान्मन्त्रिणः स्वान् व्यसर्जयत् ॥ १६ ॥

गुप्सव आयूंषि जीवितानि गोपायितुमिच्छवः गुपेः पूर्ववत् प्रतिषेधः रावणान्तिकमाजग्मुः आगताः प्रतिरुरुत्सवः वक्ष्यमाणमर्थं कथयितुमिच्छवः अत्रापि पूर्ववत्प्रतिषेधः तत्र चकारेणोगन्तानां सनि समुच्चितत्वात् ॥ १४ ॥ ज० म०

समित्यादि । ततोऽनन्तरं हतशेषा निशाचरा रावणस्य समीपमाजेदुः समागमन्ः कीदृशाः आयूंषि जीवितानि गोपायितुमिच्छवः गुप्त्यसंवृतौ सन् नेसुगुरुपह इति नेम् प्रतिरुरुत्सवः वक्ष्यमाणं कथयितुमिच्छवः रुतध्वनौ पूर्ववन्नेम् ॥ १४ ॥ भ०

एकेनेत्यादि । वयं बहवः शूराः साविष्काराः साहङ्कारा अपि सन्तः एकेनापि कपिना हेतुभूतेन वैमुख्यं चक्रम पराङ्मुखत्वमनुष्ठितवन्तः प्रमत्तवत् मद्यपानमत्ता इव एवञ्च चित्तव्याक्षेपादुत्तमपुरुषे लिटि क्रमे कस्व इत्यादिना इट्प्रतिषेधः नियमित इति एवं दशमुखान्तिके उच्चैरूचुः ॥ १५ ॥ ज० म०

एकेनेत्यादि । एकेन कपिना हेतुना बहवोऽपि समर्था अपि प्रमत्ता इव साहङ्कारा अपि वैमुख्यं विमुखतां चक्रम विमुखा भवामः स्मेत्यर्थात् इति ते हतशेषाः निशाचरा रावणस्य समीपे ऊचुः नेमनुमिति नेम् परमते अस्मदि वाच्ये चित्तविक्षेपार्थे टी तदर्थसूचनाय प्रमत्तवदित्युक्तं मद्यपानां हि चित्तविक्षेपः सम्भवत्येव स्वमते सर्वत्र टी दुर्निवारा ॥ १५ ॥ भ०

मांसेत्यादि । स दशमुखस्तानुद्विग्नान् भीतानवेत्य ज्ञात्वा स्वानात्मीयान् मन्त्रिणो व्यसर्जयत् प्राहिणोत् कीदृशांस्तान् मांसोपभोगसंशूनान् मांसोपभोगेन स्थूलवर्ष्मणः उभयत्रापि श्वीदितो निष्ठायामितीट्प्रतिषेधः तत्र श्वयतेर्यजादित्वात् सम्प्रसारणं हल इति सम्प्र-

प्रमेदिताः सपुत्रास्ते सुखान्ता बाढविक्रमाः ।
अक्लिष्टनादा निरगुः फाण्टचित्रास्त्रपाणयः ॥ १७ ॥

सारणस्य दीर्घः द्वयोरप्योदित्त्वान्निष्ठानत्वम् उद्वृत्तनयनो रोषात् निष्क्रान्ततारकः यस्य विभाषेतीट्प्रतिषेधः ष्वितेरुदित्त्वात् मित्वान् स्निग्धान् मन्त्रिणः आदितश्चेतीट् प्रतिषेधः रदाभ्यामिति निष्ठानत्वम् ॥ १६ ॥ ज० म०

मांसेत्यादि । तान् राक्षसान् उद्विग्नान् त्रस्तान् अवेत्य ज्ञात्वा स रावणो मन्त्रिणो व्यसर्जयत् कीदृशान् मांसोपभोगेन संस्फूनान् स्थूलान् मित्वान् स्निग्धान् स कीदृशः उद्वृत्तनयनः उद्घूर्णितनेत्रः क्रोधवशात् स्फायोवीर्गतिष्ठ्योः नेमडीश्वीदिति नेम् यजादित्वात् प्रहस्वपाद्योरिति जिः जिर्वोऽन्त्यः स्फलाद्योर्दिति ओदित्त्वात् क्तस्य नः विजडीशोभीकम्पे ईदित्त्वात् पूर्ववन्नेम् ष्टतड्वल्ववर्त्तने पूक्लिशुदित इत्यनेन वेमृत्वात् पूर्ववन्नेम् ञिमिदा ञिमिदाञिडच इति चकारात् स्नेहने आदित इति नेम् ॥ १६ ॥ भ०

प्रम इत्यादि । ते मन्त्रिणः सपुत्त्राः पुत्त्रैः सह निरगुः निर्गताः इणो गा लुङि प्रमेदिताः स्निग्धीभवितुमारब्धाः आदिकर्मणि निष्ठा ततो विभाषाभावादिकर्मणोरिति प्रतिषेधः इट्पक्षे निष्ठा शीङ्त्यादिना किच्चप्रतिषेधात् गुणः सुखान्ताः स्वामिनि कल्याणमनसः बाढविक्रमाः भृशपराक्रमाः अक्लिष्टनादाः विस्पष्टवाचः मन्त्रिणां वाग्मित्वात् फाण्टचित्रास्त्रपाणयः यदश्रृतपिष्टं कषायम् उदकसम्पर्कमात्राद्विभक्तरसम् ईषदुष्णं तदल्पप्रयाससाध्यत्वात् अनायाससाध्यं फाण्टमित्युच्यते तेन चित्राणि रञ्जितानि अस्त्राणि पाणौ येषामिति स्वान्तादयः क्षुब्धेत्यादिना निपातिताः ॥ १७ ॥ ज० म०

प्रमे इत्यादि । ते मन्त्रिणः सपुत्त्राः पुत्त्रैः सह निरगुर्निर्गतवन्तः इणश्चां रूपं कीदृशाः प्रमेदिताः बहिर्गमनसमये भार्यादीन् प्रति स्नेहं कर्त्तुमारब्धवन्तः राजप्रसादात् स्निग्धा भवितुमारब्धा विविधोपभोगेन प्रीता भवितुमारब्धा वा भार्यादिदेवेति पक्षे इमु

तान् दृष्ट्वातिदृढान् धृष्टान् प्राम्रान् परिवृढाज्ञया ।
कष्टं विनर्दतः क्रूरान् शस्त्रघुष्टकरान् कपिः ॥ १८ ॥
अव्यर्णो गिरिकूटाभानभ्यर्णानार्दिदद् द्रुतम् ।
हस्तयस्तान् महारम्भानदान्तांस्त्रिदशैरपि ॥ १९ ॥

युग्मकम् ।

सुखान्ताः शोभनमनसः वाढविक्रमाः भृशपराक्रमाः अम्लिष्टनादा विस्पष्टवाचः मन्त्रिणां वाग्मित्वात् फाण्टचित्ताः फाण्टेन कषायभेदेन चित्राणि अस्त्राणि पाणौ येषां ते तथा क्षुब्धवाढेत्यादिना स्वनवाढ्म्लिष्टफाण्टा निपातिताः पुनातीति पूत्वः शादेः ख इत्यस्य योगविभागेन ह्रस्वत्वान्न गुणः इवत-तेरिति नेम् ॥ १७ ॥ भ०

तानित्यादि । तान् दृष्ट्वा कपिः आर्दिददिति वक्ष्यमाणेन सम्बन्धः किम्भूतान् धृष्टान् धृष्णोतीति धृष्टः धृषीशसीवैयात्ये इतीट्प्रतिषेधः अतिदृढान् बलवतः दृढस्थूलबलयोरिति निपातनं परिवृढाज्ञया परिवृढस्य प्रभोराज्ञया प्राम्रान् प्रभौ परिवृढ इति निपातनं कष्टं विनर्दतः उच्चं ध्वनतः गम्भीरस्वञ्च कच्छगहनयोः कष इतीट्प्रतिषेधः क्रूरान् हिंस्रान् शस्त्रघुष्टकरान् घुषिरविशब्दे न इतीट्प्रतिषेधः ॥ १८ ॥ ज०म०

तानित्यादि । कपिर्हनूमान् तान् राक्षसान् दृष्ट्वा द्रुतम् आर्दिददित्युत्तरश्लोकेनान्वयः कीदृशान् अतिदृढान् बलवत्तरान् धृष्टान् प्रगल्भान् परिवृढस्य प्रभोराज्ञया प्राम्रान् कष्टं उच्चं भीतदुःखदं विनर्दतः शब्दायमानान् क्रूरान् हिंस्रान् शस्त्रैर्घुष्टौ घोषणां प्राप्तः सततधारणाद् घृष्टो वा करौ येषां तान् पूर्ववत् इह दृषदृहकषघुषां क्तो निपातः ॥ १८ ॥ भ०

अव्यर्ण इत्यादि । अव्यर्णोऽपीड़ितः अर्दैः संनिविश्य इतीट्प्रतिषेधः गिरिकूटाभान् महागिरिशृङ्गप्रमाणान् अभ्यर्णानविदूरान् अभेरचाविदूर्ये इतीट्प्रतिषेधः द्रुतमार्दिदत् हिंसितवान् अर्दैः स्वार्थिकण्यन्तस्य लुङि रूपं हस्तयस्तोऽधीतयस्त्रविद्यः यसेरध्ययने इत्तमिति

दमितारिः प्रशान्तोर्जा नादापूरितदिङ्मुखः।
जघान रुषितो दृष्टांस्त्वरितस्तूर्णमागतान्॥ २०॥
तेषां निहन्यमानानां संघुष्टैः कर्णभेदिभिः।
अभूदभ्यमितत्रासमाक्रान्ताशेषदिग्जगत्॥ २१॥

इड़भावो णिलुक् निपात्यते महारम्भान् अनल्पव्यापारान् त्रिदशै-रप्यदान्तान् अशमितान् वादान्तेत्यादिना इड़भावो णिलुक् च निपात्यते॥ १९॥ ज० म०

अव्यर्ण इत्यादि। गिरिकूटाभान् पर्वतशृङ्गसदृशान् अभ्यर्णान् समीपगतान् दृत्तशस्त्रान् अधीतशस्त्रविद्यान् महारम्भान् कृतव्यूहत्वात् त्रिदशैर्देवैरपि अदान्तान् अदमितान् कपिः कीदृशः अव्यर्णः अपीड़ितः अर्दैः क्त नेम् सन्निव्यर्द्द इति नेम् क्षुब्धस्वान्तेत्यादिना सामीप्ये चाभिपूर्वा दर्देर्नत्र त्वष्टतोरध्ययने च निपातितः अत्रन्तदमेर्दान्तशान्तेत्यादिना निपातः॥१९॥ भ०

दमीत्यादि। ये तु प्रशान्तौजसः शमितबलाः सन्तो दृष्टाः तूर्ण-मागताः तान् कपिर्जघान व्यापादितवान् प्रतापाहाम्यन्तोऽरयो दमिता येन दमितारिः प्रशान्तं शत्रूणामोजो येन स प्रशान्तौजाः नादापूरितदिङ्मुखः तस्य हृष्टत्वात् रुषितः क्रुद्धः त्वरितः ससम्भ्रमः अत्र दमितप्रशमितपूरिताः ण्यन्ताः वादान्तेत्यादिना विकल्पितेटः दृष्टरुषितत्वरिताः रुष्यमत्वरेत्यादिना॥ २०॥ ज० म०

दमीत्यादि। कपिस्तूर्णं शीघ्रम् आगतान् राक्षसान् त्वरितः सन् जघान कीदृशः दमिता उपशमिता अरयः शत्रवो येन स तथा नादै-रापूरितं दिङ्मुखं येन रुषितः क्रुद्धः कीदृशान् प्रशान्तौजान् उप-शमितबलान् दृष्टान् क्रुद्धान् अत्रन्तशमेः क्त इमलोपो णेरिति णि-लोपः अत्रन्तदमेर्दान्तशान्तेत्यादिना निपातः रुषत्वरिभ्यां क्तस्य वा रुषा-मित्यादिना विभाषितं इमू त्वरेरनिमूपचे श्विवावमवेत्यादिना अट्॥ २०॥ भ०

तेषामित्यादि। तेषां रक्षसां निहन्यमानानां संघुष्टैः शब्दैः

भयसंहृष्टरोमाणस्ततस्तेऽपचितद्विषः ।
क्षणेन क्षीणविक्रान्ताः कपिनानेषत क्षयम् ॥ २२ ॥

इतीट्प्रतिषेधाधिकारः ।

कर्णभेदिभिः वाक्भिर्य्यकरैः अभ्यमितत्वासम् अभिगतत्रासं जगदभूत् आस्वान्ताः आदेषा दिशो यस्मिन् जगति संघुष्टाभ्यमितास्वान्ताः रुष्यमत्वरेति विकल्पितेटः ॥ २१ ॥ ज० म०

तेषामित्यादि। हनूमता निहन्यमानानां तेषां राक्षसानां संघुष्टैः शब्दैः जगत् भुवनम् अभ्यमितत्रासं प्राप्तभयम् अभूत् कीदृशैः कर्णभेदिभिः श्रोत्रविदारिभिः कीदृशम् आस्वान्ता आशब्दिता अशेषा दिशो यत्र तत्तथा सम्पूर्वंघुष अम् आङ्पूर्वस्वनाश्च वा रुषामित्यादिना क्तक्तवत्वोर्वेमत्वम् ॥ २१ ॥ भ०

भयेत्यादि । ततस्ते राक्षसाः कपिना क्षणेन क्षयं विनाशमनेषत नीताः कर्मणि लुङ् भयसंहृष्टरोमाणः भयोद्गतरोमाञ्चाः हृषेर्लोमस्विति विभाषितेट् अपचितद्विषः अपचितानां पूजितानाम् ऋषीणां शत्रवः अपचितश्चेति निपातः क्षीणविक्रान्ताः क्षीणं विक्रान्तं पराक्रमो येषां क्षियो दीर्घादिति निष्ठातकारस्य नः ॥ २२ ॥ ज० म०

भयेत्यादि । ततोऽनन्तरं कपिना ते राक्षसाः क्षणेन क्षयम् अनेषत प्रापिताः कर्मणि टी णुर्घुङ इति णुः मान्तोऽदनत इत्यदादेशः न्यादिजन्ताढगत्यर्था इति मुख्यकर्मोक्तं कीदृशा भयेन संहृष्टानि उद्गतानि रोमाणि येषां वाहृषामहृषेति वेम् अपचितानां पूजितानां मुन्यादीनां द्विषः शत्रवः नेमेकाजिति नेम् क्षीणं विक्रान्तं पराक्रमो येषां क्षेः पूर्ववन्नेम् क्षेर्मोढे इषि दीर्घत्वे ह्रस्वाद्योरित्यादिना क्तस्य नः क्रमुगतावित्यस्य पूक्लिशुदित इत्यनेन वेमत्वात् नेम् डोमीदिति नेम् असुङभास्य षाविति षः ॥ २२ ॥ भ० ॥

इतीट्प्रतिषेधाधिकारः ।

हत्वा रक्षांसि लवितुमक्रमीन्मारुतिः पुनः ।
अशोकवनिकामेव निगृहीतारिशासनः ॥ २३ ॥
आवरीतुमिवाकाशं वरितुं वीनिवोत्थितम् ।
वनं प्रभञ्जनसुतो नादयिष्ट विनाशयन् ॥ २४ ॥
वरिषीष्ट शिवं क्षिप्यन् मैथिल्याः कल्पशाखिनः ।
प्रावारिषुरिव क्षौणीं क्षिप्ता वृक्षाः समन्ततः ॥२५ ॥

इतः प्रभृतीटमधिकृत्याह ।

हत्वेत्यादि । रक्षांसि हत्वा मारुतिरशोकवनिकामेव पुनर्लवितुं छेत्तुम् आर्द्धधातुकस्येट् अक्रमीत् गतवान् स्नुक्रमोरनात्मनेपदनिमित्त इतीट् निगृहीतारिशासनः ध्वस्तारिव्यवस्थः ग्रहो लिटि दीर्घ इतीटो दीर्घत्वम् ॥ २३ ॥ ज० म०

अथेडधिकारः ।

हत्वेत्यादि । रक्षांसि हत्वा निगृहीतरावणाज्ञो मारुतिर्हनूमान् पुनरप्यशोकवनिकामेव लवितुं छेत्तुम् अक्रमीत् जगाम लूञ् छिदि वसोरस्येतीम् क्रमेष्टो स्नुक्रमोऽम इति इम् मान्तवर्जनात् हयादेः श्वेम इति न वृद्धिः ग्रहेरिमोर्घत्वम् ॥ २३ ॥ भ०

आवेत्यादि । प्रभञ्जनसुतो हनूमान् वनमशोकवनिकाख्यं विनाशयन् नादयिष्ट दयां न कृतवान् लुङि रूपम् आकाशमावरितुमिव आच्छादयितुमिवोत्थितं वनं वीन् पक्षिणो वरितुं प्रार्थयितुमिवोत्थितम् आगच्छत नान्यत्र यात इहैव फलवृद्धिं प्राप्स्यथेति आवरीतुं वरितुमिति वृतो वेति विकल्पेनेटो दीर्घत्वम् ॥ २४ ॥ ज० म०

आवेत्यादि । प्रभञ्जनसुतो हनूमान् वनं विनाशयन् न अदयिष्ट दयां न कृतवान् कीदृशम् आकाशम् आवरीतुम् आच्छादयितुमिव वीन् पक्षिणो वरितुं प्रार्थयितुमिव उत्थितम् अत्युच्चत्वात् उच्चत्वोत्प्रेक्षा नैमित्तिकादौ इवर्जनादिम् वृतो वेमोर्घ इति वा दीर्घः ॥ २४ ॥ भ०

वरीत्यादि । ये कल्पशाखिनः कल्पवृक्षाः स्वर्गादाहृत्यारोपिता-

संवुवूर्षुः स्वमाकूतमाशां विवरिषुं द्रुतम् ।
अवरिष्टाचमक्षम्यं कपिं हन्तुं दशाननः ॥ २६ ॥

स्तानुन्मूल्य यथास्थानं क्षिपन् मैथिल्याः शिवं कल्याणं वरिषीष्ट प्रार्थितवान् मैथिल्या भद्रमस्त्वित्याशंसावचने लिङ् न लिङीति दीर्घ-प्रतिषेधः अन्ये च वृक्षास्तेन समन्ततः क्षिप्ताः सन्तः क्षौणीं पृथ्वीं प्रावारिषुरिवाच्छादितवन्त इव तेषामनाच्छादितत्वादिवार्थः सिचि वृद्धिः परस्मैपदेष्विति वृद्धिः ॥ २५ ॥ ज० म०

वरीत्यादि । हनूमान् मैथिल्याः शिवं मङ्गलं वरिषीष्ट प्रार्थितवान् आशिषि ढौ स्वाद्यृद्द्‌ध्रुरिति पक्षे इम् षठीढीपक्षेरिति नेमो दीर्घः किं कुर्वन् ये कल्पवृक्षाः स्वर्गादानीयाशोकवनिकायामारोपिता-स्तानुन्मूल्य यथास्थानं क्षिपन्ननुप्रेरयन् शिवशब्दस्य हितार्थत्वात् समार्थैनेत्यादिना मैथिल्या इत्यत्र षष्ठी अन्ये वृक्षाः समन्ततस्तेन क्षिप्ताः क्षौणीं भूमिं प्रावारिषुरिव आच्छादितवन्त इव वा अन्वि-रूपं पूर्ववन्नेमोर्घः ॥ २५ ॥ म०

संवृत्यादि । रामदूतेन कपिना कर्मेदृशं कृतमिति स्वमाकूतम-भिप्रायं संवुवूर्षुः संवरीतुमिच्छुः दशाननो द्रुतमाशां विवरिषुः प्रक-टितुमिच्छुः अक्षं स्वसुतमवरिष्ट प्रार्थितवान् कर्त्रभिप्राये तङ्, किमर्थं कपिं हन्तुं हनिष्यामीति अक्षम्यं क्षन्तुमशक्यं पोरदुपधादिति यत् संवुवूर्षुः विवरिषुरिति उगन्तत्वात् सनि ग्रहगुहोश्चेति चकारेणेट्-प्रतिषेधे प्राप्ते इट् सनिवेति विभाषेट् तत्रानिट्पक्षे इको झलीति कित्त्वे उदोष्ठ्यपूर्वस्येत्युत्वपक्षे गुण एव ॥ २६ ॥ ज० म०

समित्यादि । अथ दशाननो द्रुतं कपिं हन्तुम् अक्षनामानं कुमा-रम् अवरिष्ट प्रार्थितवान् पक्षे इमोर्घाभावः । कीदृशम् अक्षम्यं न क्षमार्हं कीदृशः कपिमात्रेण रामदूतेनैवं कृतमिति स्वमाकूतं स्वकीय-माशयं संवुवूर्षुः संवरीतुमिच्छुः आशां विवरिषुः हे अक्षागच्छागच्छ कपिर्हन्यतामित्याशां विवरीतुं प्रकटयितुमिच्छुः स्वाद्वृद्द्‌ध्रुरिति

ऊचे संवरिषीष्ठास्त्वं गच्छ शत्रोः पराक्रमम् ।
ध्वृषीष्ठा युधि मायाभिः स्वरिता शत्रुसम्मुखम् ।२७ ॥
द्रुतं संस्वरिषीष्ठास्त्वं निर्दयः प्रधनोत्तमे ।
स मायानामगात् सीता कपेर्विधवितुं द्युतिम् ॥२८॥

इजः सनो वेम् अनिसृपञ्चे वौऽसनिङ्गमामिति दीर्घत्वे पुनर्णिनिमि० सनीत्यणुत्वात् ऋदिरणाविलुर् ॥ २६ ॥ भ०

ऊचे इत्यादि । किमित्याह त्वं गच्छ शत्रोः पराक्रमं संवरिषीष्ठाः सञ्छादय आशिषि लिङ्सिचोरात्मनेपदेष्विति इजो विभाषेट् उश्चे-तीट् पक्षे न कित्त्वं ध्वृषीष्ठाः युधि मायाभिः कर्तृभूताभिः त्वं कुटिलीक्रषीष्ठाः ध्वृ हर्च्छने इच्छाकौटिल्ये तस्य चोदात्तत्वात् आशिषि कर्मणि लिङ् ऋतश्च संयोगादेरिति विभाषेट् अनिट् पक्षे उश्चेति कित्त्वं स्वरिता उपतापयिता शत्रुसम्मुखं शत्रोरग्रतः अतो द्रुतं स्वरिषीष्ठा इति वक्ष्यमाणेन योज्यं स्वृशब्दोपतापयोरित्यस्य स्वरति-सूतिसूयेत्यादिना विभाषेट् लिङ्सिचोरिति नानुवर्त्तते ॥२७॥ ज०म०

विवरणमाह दशानन ऊचे किमित्याह ।

ऊचे इत्यादि । हे अच ! त्वं गच्छ गत्वा शत्रोः कपेः पराक्रमं संवरिषीष्ठाः आच्छादय आशिषि ढौ पूर्ववत् पक्षे इम् । त्वं युधि संग्रामे मायाभिः कर्त्रीभिः ध्वृषीष्ठाः कुटिलीक्रषीष्ठाः ध्वृ कौटिल्ये कर्मणि ढौ स्वाद्यृद्दृदुरिति पक्षे इमोऽभावे इगुडुर्मढीस्यनिम इति कित्त्वान्न गुणः त्वं कीदृशः शत्रुसम्मुखं यथा स्यात्तथा स्वरिता शत्रो-रग्रत उपतापयितेत्यर्थः किंवा शत्रुसम्मुखं शत्रूणां प्रधानं स्वरिता उपतापनशीलः मुखमाद्ये प्रधाने चेत्यमरः । स्वृ उशब्दोपतापयोः वेमूदित्स्वरेति पक्षे इम् ॥ २७ ॥ भ०

द्रुतमित्यादि । संस्वरिषीष्ठाः उपतापय निर्भयः सन् आशिषि लिङ् समोगम्यृच्छीत्यात्मनेपदम् अत ऋतश्चेतीट् प्रधनोत्तमे संग्रामवरे एवमुक्तः सन् स मायानां सीता जनकः कपेर्द्युतिं तेजो विधवितु-

विगाढारं वनस्यासौ शत्रूणां गाहिता कपिः ।
अत्तं रधितुमारेभे रद्धा लङ्कानिवासिनाम् ॥ २९ ॥
निष्कोषितव्यान्निष्कोष्टुं प्राणान् दशमुखात्मजात् ।
आदाय परिघं तस्थौ वनान्निष्कुषितद्रुमः ॥ ३० ॥

अपनेतुमगात् गतः सोता धविलमिति स्वरतीत्यादिसूत्रेण विभाषेट् ॥ २८ ॥ ज० म०

द्रुतमित्यादि । त्वं प्रधनोत्तमे महायुद्धे निर्भयः सन् द्रुतं संस्करिपीष्टाः उपतापय शत्रुमित्यर्थात् समोगन्धच्छेति मं एवमुक्तः सोऽक्षः कर्मेर्ष्युतिं तेजो विधवितुम् अपनेतुम् अगात् गतः कीदृशः मायानां सोता जनकः सूधुजां पूर्ववत् पक्षे इम् ॥ २८ ॥ म०

विगेत्यादि । असौ कपिः वनस्य विगाढा अवलोडयिता अरं शीघ्रं शत्रूणां गाहिता विनाशयिता कर्मणि षष्ठी ऊदित्त्वाद्विभाषेट् स्वतरीत्यादिना अत्तं रधितुं हिंसितुमारेभे प्रवृत्तः लङ्कानिवासिनां रक्षसां रद्धा हिंसिता रधादिभ्यश्चेति विभाषेट् ॥२९॥ ज०म०

विगेत्यादि । असौ हनूमान् अत्तं रधितुं हिंसितुम् आरेभे प्रवृत्तः कीदृशः अरं शीघ्रं वनस्य विगाढा विलोड़यिता शत्रूणां गाहिता नाशयिता लङ्कानिवासिनां रद्धा हन्ता गाहुविलोड़े इत्यस्य ऊदित्वात् रधहतो इत्यस्य च रधादित्वात् पूर्ववद्विभाषया इम् ॥२९॥म०

निष्क इत्यादि । दशमुखात्मजादक्षात् प्राणान्निष्कोषितव्यान् अपनेतव्यान् अपनयार्हान् निष्कोष्टुम् अपनेष्यामीति परिघमादाय तस्थौ निरः कुष इति विभाषेट् । निष्कुषितद्रुमः वनादपनीतवृक्षः इण् निष्ठायामितीट् ॥ ३० ॥ ज० म०

निष्क इत्यादि । दशमुखात्मजात् अक्षात् निष्कोषितव्यान् आकर्षणयोग्यान् प्राणान् निष्कोष्टुम् अपहर्तुं परिघम् आदाय गृहीत्वा कपिः तस्थौ कीदृशः वनात् निष्कुषिता आकृष्टा द्रुमा वृक्षा येन पूर्ववत् निःपूर्वकुषोवेम् नेमुडीश्वीदिदम् इति ज्ञानेम् निषेधस्तत्र निष्क षवर्जनात् ॥ ३० ॥ म०

एष्टारमेषिता संख्ये सोढारं सहिता भृशम् ।
रेष्टारं रेषितुं व्यास्थद्रोष्टाच्छः शस्त्रसंहतीः ॥ २१ ॥
शस्त्रैर्दिदेविषुं संख्ये दुद्यूषुः परिघं कपिः ।
अर्दिधिषुर्यशः कीर्त्तिमीर्त्सुं वृक्षैरताड़यत् ॥ २२ ॥

एष्टेत्यादि । कपिं युद्धस्यैष्टारम् एषिता एषणशीलोऽच्छः ताच्छील्ये तृन् न लोकेति षष्ठीप्रतिषेधः सोढारं प्रहरणस्य सहितारं सहिता भृशं सहनशीलः रेष्टारं हिंसकं रेषितुं हिंसितुं रोष्टा रोषणशीलः शस्त्रसंहतीर्व्यास्थत् क्षिप्तवान् लुङि रूपं सर्वत्र तीषसहेत्यादिना वेट् ॥ २१ ॥ ज० म०

एष्टेत्यादि । अच्छः संख्ये युद्धे रेष्टारं हिंसकं हनूमन्तं रेषितुं हिंसितुं शस्त्रसमूहान् व्यास्थत् क्षिप्तवान् असु क्षेपणे धौ । कीदृशम् एष्टारम् इच्छाशीलं युद्धस्येत्यर्थात् सोढारं सहनशीलं भृशमत्यर्थं सोऽपि एषिता एषणशीलः सहिता सहनशीलः रोष्टा रोषणशीलः इषु वाञ्छे सहजङ्शक्तौ रिषवधे रुषजि च चकारात् वधे वेम्सहे-त्यादिना वेम् ॥ २१ ॥ म०

शस्त्रैरित्यादि । कपिः अर्दिधिषुः यशोवर्द्धितुमिच्छुः परिघं दुद्यूषुः परिघेण क्रीड़ितुमिच्छुः अक्षं वृक्षैरताड़यत् हतवान् कीदृशं शस्त्रैर्दिदेविषुं क्रीड़ितुमिच्छुं कीर्त्तिमीर्त्सुं वर्द्धितुमिच्छुं दिवेरिव-न्तस्य ऋधुवृद्धावित्यस्य च सनीवन्तर्द्धेत्यादिना विभाषितेट् तत्र दिवे-रिडभावपक्षे च्छ्वोः शूट् ऋधेराप्ज्ञप्यामीदितीत्वम् अभ्यासलोपश्च ॥ २२ ॥ ज० म०

शस्त्रैरित्यादि । कपिः संख्ये युद्धे वृक्षैरक्षमताड़यत् अक्षं कीदृशं शस्त्रैर्दिदेविषुं क्रीड़ितुमिच्छन्तम् ईर्त्सुं वर्द्धयितुमिच्छुं कपिः कीदृशः परिघेण दुद्यूषुः क्रीड़ितुमिच्छुः दिवोधेवेति करणे द्वितीया । यशो-ऽर्दिधिषुः वर्द्धयितुमिच्छुः दिवु क्रीड़ादौ भ्रस्जभिस्वृयूर्णुभरेत्यादिना इवन्तत्वात् सनो वेम् इमोऽभावपक्षे च्छ्वोः शूठावित्यादिना ऊठ् ऋधु वृद्धौ पूर्वेण सनो वेम् नाजन्तादेराद्विर्दिरित्यकारस्य स्यादौ नवद्धो-

भूयस्तं धीप्सुमाहूय राजपुत्रं दिदम्भिषुः।
अहंस्ततः स मूर्च्छावान् संशिश्रीषुरभूद्ध्वजम्॥ ३३॥
आश्वस्याक्षः क्षणाल्लोकान् बिभ्रक्षुरिव तेजसा।
कृषा विभ्रज्जिषुप्रख्यं कपिं बाणैरवाकिरत्॥ ३४॥

ऽये इति रेफस्य च न द्वित्वम् अनिस्पक्षे ज्ञपर्धापामीर्त्य इति ईट्
खिलोपस्य अन्तर्भूतण्यर्थोऽत्र बोध्यः॥ ३२॥ भ०

भूय इत्यादि। तं राजपुत्रम् अक्षं धीप्सुं दम्भितुं वञ्चयितु-
मिच्छुं भूयः पुनरपि दिदम्भिषुः वञ्चयितुमिच्छुः आहूयागच्छे-
त्यहन् हतवान् ततः सोऽक्षः मूर्च्छावान् मूर्च्छायुक्तः ध्वजमात्मीयं
संशिश्रीषुः संश्रयितुमिच्छुः अभूत् भूतः। अत्र दम्भेः श्रयतेश्च सनी-
वन्तर्द्धेतीट् अत्र श्रयतेरनिट्पक्षे अज्झनगमां सनीति दीर्घः द्वितीयस्य
च दम्भ इच्च अभ्यासलोपः दम्भेर्हल् ग्रहणस्य जातिपरत्वात् सिद्ध-
मिति कित्त्वे अनुनासिकलोपः एकाचो बश इति भष् खरि चेति
चत्त्वम्॥ ३३॥ ज० म०

भूय इत्यादि। कपिस्तमक्षम् आहूय आगच्छ युद्धे इत्युक्त्वा भूयः
पुनरपि अहन् हन्तेर्वा कीदृशं धीप्सुं दम्भं कर्त्तुमिच्छुं स च दिद-
म्भिषुः दम्भं कर्त्तुमिच्छुः ततः प्रहारानन्तरं सोऽक्षो ध्वजं संशि-
श्रीषुः आश्रयितुमिच्छुः सन् मूर्च्छावान् मूर्च्छितोऽभूत् अत्तज्श्रीत्या-
दिना दम्भेः श्रयतेश्च सनो वेम् दम्भेरनिस्पक्षे दभोयाविति अच इत्वं
खिलोपस्य अनकारनिर्देशात् नस्य लोपः झभान्तस्येति दस्य धः
श्रयतेर्णोऽज्झनिङ्गमामिति दीर्घः॥ ३३॥ भ०

आश्वेत्यादि। क्षणात् क्षणमात्रेणाश्वस्य संज्ञां लब्ध्वा लोकान्
जनान् तेजसा क्रोधोत्थेन बिभ्रक्षुरिव अथ स कपिं बाणैरवाकिरत्
सञ्छादितवान् कीदृशं विभ्रज्जिषुप्रख्यम् अग्नितुल्यं बिभ्रज्जिषुः
बिभ्रक्षुरिति सनीवन्तर्द्धेत्यादिना विभाषेट् तत्रानिट्पक्षे स्कोरिति
सलोपः व्रश्चेति षः इट्पक्षे सकारस्य जश्त्वं शुत्वञ्च॥ ३४॥ ज० म०

आश्वस्येत्यादि। ततोऽक्षः क्षणात् आघातस्य चेतनां प्राप्य बाणैः

संयुयूषु दिशो बाणैरच्चं यियविषुर्द्रुमैः।
कपिर्मायामिवाकार्षीद्दर्शयन् विक्रमं रणे ॥ ३५ ॥
वानरं प्रोर्णुनविषुः शस्त्रैरक्षो विदिद्युते।
तं प्रोर्णुनूषुरुपलैः स द्रुमैराबभौ कपिः ॥ ३६ ॥
त्वां जिज्ञापयिषू शक्तिं बुभूषू नु जगन्ति किम्।

कपिस्तमाकिरत् आच्छादितवान् कीदृशः तेजसा लोकान् बिभ्रक्षुरिव क्रोधज्वलनमत तेजः रुषा क्रोधेन बिभ्रज्जिषु प्रख्यम् अग्नितुल्यं भ्रस्जभ्रीति भ्रस्जेः सनि वेम् ॥ २४ ॥ भ०

समित्यादि। बाणैर्दिशः संयुयूषु मिश्रयितुमिच्छुम् अक्षं कपिः द्रुमैर्यियविषुः योतुमिच्छुर्मायामिवेन्द्रजालमिवाकार्षीत् कृतवान् रणे विक्रमं दर्शयन् यौतेः सन् सनीवन्तर्द्धेति विभाषेट् ओः पुयण्ज्यपर इतीत्वम् अज्झनगमां सनीति दीर्घः ॥ ३५ ॥ ज० म०

समित्यादि। कपी रणे विक्रमं दर्शयन् मायामिव अकार्षीत् इन्द्रजालमिव दर्शितवानित्यर्थः। कीदृशः द्रुमैरक्षं यियविषुः मिश्रयितुमिच्छुः अक्षं कीदृशं बाणैर्दश दिशः संयुयूषु मिश्रयितुमिच्छु भ्रस्जभ्रीति वेम् ॥ ३५ ॥ भ०

वानेत्यादि। वानरं प्रोर्णुनविषुः छादयितुमिच्छुरक्षः विदिद्युते विद्योतते स्म द्युतिस्वाप्योरिति सम्प्रसारणं कपिरपि तमक्षम् उपलैर्वृक्षसहितैः प्रोर्णुनूषुः संवरीतुमिच्छुराबभौ भाति स्म ऊर्णोतेः पूर्ववद्विभाषेट् इट्पक्षे गुणः अन्यत्र अज्झनेति दीर्घः उभयत्र नन्द्रा इति देको न द्विरुच्यते ॥ ३६ ॥ ज० म०

वानरमित्यादि। अक्षः शस्त्रैर्वानरं प्रोर्णुनविषुः आच्छादयितुमिच्छुः सन् विदिद्युते दीप्तः द्युत्स्वाप्योः खेर्जिः कपिरपि द्रुमसहितैरुपलैः पाषाणैस्तमक्षं प्रोर्णुनूषुः आच्छादयितुमिच्छुः सन् बभौ दीप्यते स्म ऊर्णुञ् आच्छादने भ्रस्जभ्रीत्यादिना वेम् ॥ ३६ ॥ भ०

त्वामित्यादि। तौ कपिराक्षसौ किं त्वां शक्तिं जिज्ञापयिषू

अस्त्रैरित्यकृषातां तौ पश्यतां बुद्धिमाहवे ॥ २७ ॥
मायाभिः सुचिरं क्लिष्ट्वा राक्षसोऽक्लिशितक्रियम् ।
संप्राप्य वानरं भूमौ पपात परिघाहतः ॥ २८ ॥
पवितोऽनुगुणैर्वातैः शीतैः पूत्वा पयोनिधौ ।
बभञ्जाध्युषितं भूयः क्षुधित्वा पत्रिभिर्वनम् ॥ २९ ॥

बोधयितुमिच्छू इव बुभूर्षू त्रिजगन्ति किं नु त्रैलोक्यं शस्त्रेण भर्तुं पूरयितुमिच्छू इत्येवं बुद्धिमाहवे पश्यतां प्रेक्षकाणाम् अकृषातां कृतवन्तौ जिज्ञापयिषू बुभूर्षू इति विभाषेट् तत्र भृञ्भरण इति भौवादिकस्य ग्रहणं सनीवन्तर्धेति सूत्रे भरेति शपा निर्देशात् ॥ २७ ॥ ज० म०

स्वामित्यादि । तौ कपिराक्षसौ पश्यतां जनानाम् आहवे युद्धे इति बुद्धिमकृषातां चक्रतुः । कीदृशीं बुद्धिमित्याह किं नु किमु एतौ स्वां शक्तिं ज्ञापयितुमिच्छू जगन्ति त्रिभुवनानि शस्त्रैर्बुभूर्षू पूरयितुमिच्छू ज्ञपिभूर्ष्यां अस्जभ्रीत्यादिना सनोवेम् भृभौवादिकः सूत्रे भरेति निर्देशात् ॥ २७ ॥ भ०

मायेत्यादि । राक्षसो मायाभिः सुचिरं क्लिष्ट्वा क्लेशं कृत्वा वानरम् अक्लिशितक्रियमनभिभूतव्यापारं सम्प्राप्य परिघाहतो भूमौ पपात क्लिशः क्त्वानिष्ठयोरिति विभाषेट् ॥ २८ ॥ ज० म०

मायाभिरित्यादि । राक्षसोऽक्षो मायाभिः सुचिरं क्लिष्ट्वा क्लेशं प्राप्य अक्लिशितक्रियम् अनभिभूतव्यापारं वानरं सम्प्राप्य परिघेणाहतः सन् भूमौ पपात क्लिशेः पूङ्क्लिशुदित इति क्त्वाचो वेम् पूङ्क्लिशवञ्जमेति क्तक्तवत्वोर्नेम् ॥ २८ ॥ भ०

पवीत्यादि । कपिरपि पयोनिधौ पूत्वा स्नात्वा अनुगुणैरनुकूलैः शीतैर्वातैः पवितः पवित्रीकृतः पूङश्चेति विभाषेट् भूयः पुनर्वनं बभञ्ज कीदृशं पत्रिभिः पक्षिभिः क्षुधित्वा क्षुधितैर्भूत्वा अध्युषितं कृतनिवासं वसतिक्षुधोरितीट् ॥ २९ ॥ ज० म०

उच्चैरञ्चितलाङ्गूलः शिरोऽञ्चित्वेव संवहन् ।
दधद्विलुभितं वातैः केशरं वह्निपिङ्गलम् ॥ ४० ॥
जरित्वेव जवेनान्ये निपेतुस्तस्य शाखिनः ।
व्रश्चित्वा विवशानन्यान् बलेनापातयत्तरून् ॥ ४१ ॥

पवित इत्यादि । कपिः क्षुधित्वा क्षुधितो भूत्वा पयोनिधौ पूत्वा स्नात्वा फलादिकं भुक्त्वा चेत्यर्थात् शीतलैरनुगुणैर्वातैः पवितश्चक्रमः सन् भूयः पुनरपि तद्वनं बभञ्ज भग्नवान् कीदृशं पतत्रिभिः पक्षिभिरध्युषितम् अधिष्ठितं चयं भङ्गाभावात् पूञः पूक्लिशवमेति क्त्वाक्तवत्वोर्वेम् पूङीष्टपेत्यादिना गुः पूक्लिशुदित इति क्त्वाचो वेम् वसेः क्षुधेश्च क्षुधवसपूजार्थाच्च इतीम् ॥ ३९ ॥ भ०

उच्चैरित्यादि । उच्चैरूर्द्ध्वम् अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य शोभनविन्यासेन स्थितत्वात् शिरोऽञ्चित्वेव संवहन् अनम्रत्वात् पूजयित्वेव शिरो बिभ्राणः अञ्चेः पूजायामिति विभाषेट् वह्निपिङ्गलञ्च केशरं सटां दधत् बिभ्रत् वातैर्विलुभितम् आकुलितं लुभोर्विमोहन इतीट् विमोहनमाकुलीकरणम् ॥ ४० ॥ ज० म०

उच्चैरित्यादि । कपिः कीदृशः उच्चैरञ्चितलाङ्गूलः ऊर्द्ध्वम् अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य स तथा शिरोऽञ्चित्वेव अनम्रत्वात् पूजयित्वेव संवहन् बिभ्राणः वातैर्विलुभितं चञ्चलीकृतं वह्निवत्पिङ्गलं केशरं दधत् धारयन् ईदृशो वनं बभञ्जेति पूर्व्वेणान्वयः क्षुधवसपूजार्थाञ्चामाध्यर्थलुभ इति इम् नेदित् पूजार्थाञ्चोरिति नलोपाभावः ॥४०॥ भ०

जरीत्यादि । तस्य कपेर्जवेन वेगेन अन्ये शाखिनः जरित्वेव जीर्णा इव भूत्वा निपेतुः अन्यांस्तरून् बलेन व्रश्चित्वा छित्त्वा विवशान् स्रस्तपल्लवानपातयत् पातितवान् जॄव्रश्चोः क्त्वीतीट् ॥ ४१ ॥ ज० ज०

जरित्वेत्यादि । अन्ये शाखिनः तस्य कपेर्जवेन वेगेन जरित्वेव जीर्णा इव भूत्वा निपेतुः निपतितवन्तः अन्यान् विवशान् अनायत्तान् तरून् बलेन व्रश्चित्वा छित्त्वा कपिरपातयत् पातयामास जॄव्रश्चोर्न्जिरिति इम् जिनिषेधश्च ॥ ४१ ॥ भ०

इमित्वाप्यरिसङ्घातानश्रान्त्वा कपिकेशरी ।
वनं चचार कर्त्तिष्यन्नर्त्स्यन्निव निरङ्कुशः ॥ ४२ ॥

पारं जिगमिषन् सोऽथ पुनरावर्त्स्यतां द्विषाम् ।
मत्तद्विरदवद्रेमे वने लङ्कानिवासिनाम् ॥ ४३ ॥

यद्यकल्प्स्यदभिप्रायो योद्धुं रक्षःपतेः स्वयम् ।
तमप्यकर्त्स्यमद्याहं वदन्नित्यचरत् कपिः ॥ ४४ ॥

इमीत्यादि । कपिकेशरी हनूमान् अरिसङ्घातान् इमित्वा उपशमं नीत्वा अश्रान्त्वा अपरिश्रान्तो भूत्वा वनं चचार उदितो वेति विकल्पेनेट् निरङ्कुशः निरवग्रहः कर्त्तिष्यन् छेत्स्यन् नर्त्स्यन्निव नर्त्तुकाम इव सेसिचीत्यादिना विभाषेट् ॥ ४२ ॥ ज० म०

इमित्वेत्यादि । कपिकेशरी हनूमान् शत्रुसमूहान् इमित्वा नाशयित्वापि अश्रान्त्वा अश्रान्तो भूत्वा वनं कर्त्तिष्यन् छेत्स्यन् नर्त्स्यन्निव नर्त्तितुकाम इव निरङ्कुशो निरवग्रहः सन् चचार बभ्राम इमु इर्षमे अनुभ्य इति पःखेदयोरुदित्वात् पूक्लिशुदित इति वेम् कृतीयपक्षिइदिन्त्यन्तत्यो अनयोर्नृप्कृदिति वेम् ॥ ४२ ॥ भ०

पारमित्यादि । अथ स कपिर्द्विषां पारं जिगमिषन् गन्तुमिच्छन् गमेरिट् परस्मैपदेषु पुनरावर्त्स्यतां प्रतीपीभविष्यतां नञ्झर इतीट्प्रतिषेधः ङ्झरः स्यसनोरिति परस्मैपदं लङ्कानिवासिनां वने मत्तद्विरद इव रेमे क्रीड़ितवान् ॥ ४२ ॥ ज० म०

पारमित्यादि । अथानन्तरं स हनूमान् पुनरावर्त्स्यतां प्रत्यागमिष्यतां लङ्कानिवासिनां द्विषां शत्रूणां पारमन्तं गन्तुम् इच्छुः सन् वने मत्तहस्तीव रेमे क्रीड़ति स गमोऽमे च इति गच्छतेरिम् इङ्गरो नेम् पे इति इतेर्नेम् अतएव पम् ॥ ४२ ॥ भ०

यदीत्यादि । रक्षःपतेः रावणस्य स्वयं योद्धुं यद्यभिप्रायोऽकल्प्स्यत् समपत्स्यत् तासि च क्लृप इति चकारात् स्यकारे च नेट् तदा तमप्यहमकर्त्स्यम् उत्पाटयामि अहनिष्येति एवं वदन् कपिर्वनमचरत्

हते तस्मिन् प्रियं श्रुत्वा कल्प्ता प्रीतिं परां प्रभुः ।
तोषोऽद्यैव च सीतायाः परश्चेतसि कल्प्स्यति ॥ ४५ ॥
आहूय रावणोऽवोचदथेन्द्रजितमन्तिकात् ।
वने मत्त इव क्रुद्धो गजेन्द्रः प्रधनेष्वटन् ॥ ४६ ॥

सेसीचीत्यादिना विभाषेट् अकल्प्स्यदकर्त्तास्मिति च लिङ्निमित्त इति लृङ् हेतुहेतुमद्भावश्च लिङो निमित्तम् ॥ ४४ ॥ ज० म०

यदीत्यादि । यदि रक्षःपतेः रावणस्य स्वयं योद्धुमभिप्रायोऽकल्प्स्यत् कल्पिष्यते तमप्यद्याहमकर्त्स्यम् च्छेत्स्यम् इति वदन् कपिरचरत् चरति स्म कृपूङ्‌व्लृच कल्पने पूर्ववत् हताादित्वात् स्यस्य नेम् कृतीच्छदिं चृदिति वेम् ॥ ४४ ॥ भ०

हत इत्यादि । हते तस्मिन् रक्षःपतौ प्रियं श्रुत्वा प्रभुः रामः परां प्रीतिं कल्प्ता जनयिता अत्रान्तर्भावितो ण्यर्थः धातोरकर्मकत्वात् सीतायाश्चाद्यैव चेतसि तोषः परो महान् कल्प्स्यति सम्पत्स्यते तासि च क्लृप इतीट्प्रतिषेधः लुटि च क्लृप इति परस्मैपदम् ॥४५॥ ज० म०

हते इत्यादि । तस्मिन् रावणे हते सति प्रियं श्रुत्वा प्रभू रामः परां प्रीतिं कल्प्ता प्राप्स्यति नेम्पेक्षा इति तेनैव पं किञ्च अद्यैव च अधुनैव च सीतायाश्चेतसि परस्तोषः कल्प्स्यति भविष्यति पूर्ववत् हतादित्वात् स्यस्य नेम् इति वदन् कपिरचरदिति पूर्वेणान्वयः ॥४५॥ भ०

आहूयेत्यादि । अथ रावणः इन्द्रजितमाहूय अन्तिकमवोचत् किमवोचदित्याह वने मत्त इव यथा गजेन्द्रो मत्तः क्रुद्धो वने पर्य्यटन् द्विषामन्तं गतवान् तथा त्वं प्रधनेषु संग्रामेष्वटन् द्विषामन्तं ययाथेति वक्ष्यमाणश्लोकेनान्वयः ॥ ४६ ॥ ज० म०

आहूयेत्यादि । अथानन्तरम् अन्तिके समीपे इन्द्रजितमाहूय रावणोऽवोचत् उक्तवान् किमवोचदित्याह त्वं क्रुद्धः सन् प्रधनेषु युद्धेषु अटन् परिभ्रमन् वने मत्तो गजेन्द्र इव द्विषामन्तं ययाथेत्यग्रिमश्लोकेनान्वयः सदीभिर्यजिहृषे नेमडीवीदिति ईदित्त्वान्नेम् स्वल्पाद्योदित्वादौ सरवर्जनाच्च क्रस्य नः क्रुधद्धयो कोपे आदित्वाच्चेम् ॥४६॥ भ०

ययाथ त्वं द्विषामन्तं भूयो यातासि चासकृत् ।
शशक्थ जेतुं त्वं देवान् मायाः सस्रष्ठ संयति ॥४७॥
त्वं ससर्जिथ शस्त्राणि ददृष्ठारींश्च दुःसहान् ।
शस्त्रैरादिथ शस्त्राणि त्वमेव महतामपि ॥ ४८ ॥

ययेत्यादि । न केवलं ययाथ भूयः पुनरपि यातासि यास्यसि याते: क्रादिनियमात् प्राप्तस्येटः अचस्तास्वत्थल्यनिटो नित्यमिति प्रतिषेधः तस्य हि तासौ नित्यमनिट्त्वम् अजन्ता धातवोऽनुदात्त इति वचनात् देवान् जेतुं त्वमसकृत् बहुधा शशक्थ शक्तोऽसि उपदेशे त्वत इति थलीट्प्रतिषेधः शकेस्तासौ नित्यानिट्त्वं शकिस्तु कान्त इति वचनात् मायाश्च कूटयुद्धानि संयति युद्धे सस्रष्ठ ज्ञातवानसि कृतो भारद्वाजस्येतीट्प्रतिषेधः ॥ ४७ ॥ ज० म०

ययाथेत्यादि । असकृत् बारंवारं द्विषामन्तं ययाथ प्राप्तवानसि सृजदृशजिति वेमुत्वं भूयः पुनरपि यातासि च यास्यसि च नेमेकाजिति नेमुत्वं देवान् जेतुं शशक्थ शक्तो भूतोऽसि सृजदृशजिति वेमु संयति युद्धे माया बह्वीः सस्रष्ठ सृष्टवानसि नेमृतस्थप इति नेम् ॥ ४७ ॥ म०

त्वमित्यादि । त्वं शस्त्राणि ससर्जिथ चिप्तवानसि अरींश्च दुःसहान् युध्यतः ददृष्ठ दृष्टवानसि न पलायितोऽसि विभाषासृजिदृशोरिति थलि विभाषेट् अनिट्पक्षे सृजिदृशोर्झल्यमकिति अमागमे महतामपि मध्ये त्वमेव शस्त्राणि परकीयानि शस्त्रैः स्वैरादिथ जग्धवानसि इडत्यर्त्तिव्ययतीनामित्यदेरिट् ॥ ४८ ॥ ज० म०

त्वमित्यादि । त्वं शस्त्राणि च ससर्जिथ चिप्तवानसि सृजदृशेति वेमु दुःसहानरीन् ददृष्ठ दृष्टवानसि पूर्ववत् वेमुत्वात् पक्षेऽनिम् अम्झाजिति षङ् वद्धोऽकिदिति कृतोरः स्वकीयैः शस्त्रैः त्वमेवाद्वितीयः महतामिन्द्रादीनामपि शस्त्राणि आदिथ भक्षितवानसि सृजदृशेत्यादौ अदत्र्जनाच्चेमृधमित्यादिना नियमात् नित्यमिम् ॥ ४८ ॥ म०

स त्वं हनिष्यन् दुर्बुद्धिं कपिं व्रज ममाज्ञया।
मा नाञ्जीराक्षसीर्मायाः प्रस्तावीर्मा न विक्रमम् ॥४९॥
मा न सावीर्महास्त्राणि मा न धावीररिं रणे।
वानरं मा न संयंसीर्व्रज तूर्णमशङ्कितः ॥ ५० ॥

स त्वमित्यादि। स त्वमेवंविधः कपिं दुर्बुद्धिं चपलत्वाद्धनिष्यन्निति मदाज्ञया व्रज स्वञ्जनोऽस्य इतीट् वस्त्वेकाजिति सूत्रत्रयं नोदाहृतं फलादेशस्य छन्दोविषयत्वात् राक्षसीं मायां मा नाञ्जीः मा न व्यक्तीकुरु अपितु व्यक्तीकुर्वित्यर्थः अञ्जेः सिचीतीट् विक्रमं न मा प्रस्तावीः मा न प्रादुरभूस्त्व स्तुसुधूञ्भ्य इतीट् ॥ ४९ ॥ ज० म०

स त्वमित्यादि। स एवंविधः प्रसिद्धस्त्वं दुष्टमतिं कपिं हनिष्यन् विनाशयिष्यन् ममाज्ञया व्रज गच्छ स्वस्वेन इति द्रम् राक्षसमव्ब-ञ्जिनीर्माया मा न अञ्जीः व्यक्तीकरिष्यसि अपितवश्यमेव अनृजूधजि-व्यक्तिगतिम्रक्षणे अदित्वाद् वेम्त्वे अनृजः सेरिनिति नित्यमिम् विक्रमं मा न प्रस्तावीः न न प्रस्तुतं करिष्यसि अपितवश्यमेव स्तुसुधोः सेरितीम् व्रजवदेति त्रिः मायोगे इसोऽभावः नाटी वेति सदा टी च ॥ ४९ ॥ भ०

मा नेत्यादि। रणे महास्त्राणि मा न सावीः मा न प्रसुहि मा न मुञ्चेत्यर्थः षुप्रसवैश्वर्य्ययोरित्यस्य रूपम् अरींश्च मा न धावीः मा न कम्पय अपितु भीषयस्वेत्यर्थः पूर्ववदिट् वानरं मा न संयंसीः मा न बधीः यमरमेत्यादिना सगिटौ समुदाङ्भ्यो यम इति तङ् न भवति तत्राकर्मकादिति वर्त्तते यत एवं तस्मादशङ्कितस्तूर्णं व्रज ॥५०॥ ज०म०

मा नेत्यादि। महास्त्राणि मा न सावीर्न न सम्धास्यसि अपितु सम्धानं करिष्यस्येव रणे अरिं शत्रुं मा न धावीर्न न कम्पयिष्यसि अपितवश्यमेव वानरं मा न संयंसीः बद्धं न न करिष्यसि अपितवश्यमेव तस्मात्त्वं निर्भयः सन् तूर्णं शीघ्रं व्रज गच्छ षुञ्नसन्धाने-पीड़ासन्ये धुञ्नकम्पे आभ्यां स्तुसुधोः सेरितीम् यमो उपरतौ संपूर्वो बन्धनार्थः यमरमेति इनुसनौ जिवृजन्नन्ते त्वादौ अपमञ्जोत्पना-

अनंसीच्चरणौ तस्य मन्दिरादिन्द्रजिद् व्रजन्।
गते तस्मिन्नुपारंसीत् संरम्भाद्रक्षसां पतिः ॥ ५१ ॥
इन्द्रजिद्विक्रमाभिज्ञो मन्वानो वानरं जितम्।
संसिस्मयिषमाणोऽगान्मायां व्यञ्जिजिषुर्द्विषः ॥ ५२ ॥
जगत् पिपविषुर्वायुः कल्पान्त इव दुर्द्धरः।
लोकानामग्निमिषोस्तुल्य कृतान्तस्य विपर्य्यये ॥ ५३ ॥

यम इति न मं कर्त्तुः फलवत्त्वाभावात् इति रावणोऽमोचदिति पूर्व्वेण सम्बन्धः ॥ ५० ॥ भ०

अनमित्यादि। एवमुक्त इन्द्रजित् मन्दिरात् व्रजन् गमिष्यन् वर्त्तमानसामीप्ये वर्त्तमानवदिति लट्। तस्य पितुश्चरणावनंसीत् नतवान् पूर्ववत् सगिटौ गते तस्मिन् रक्षसां पतिः रावणः संरम्भात् क्रोधात् उपारंसीत् निवृत्तवान् पूर्ववत् सगिटौ रमेरुपाङ्गेति तिप् ॥५१॥ज०म०

अनंसीदित्यादि। एवमुक्त इन्द्रजित् मन्दिरात् व्रजन् गच्छन् तस्य रावणस्य चरणौ अनंसीत् प्रणनाम तस्मिन्निन्द्रजिति गते सति रक्षसां पतीरावणः संरम्भात् क्रोधात् उपारंसीत् निवृत्तः उभयत्र यमरमनमेति इट्सकौ ॥ ५१ ॥ भ०

इन्द्रेत्यादि। वानरं जितं मन्वानोऽवगच्छन् यतो विक्रमाभिज्ञः अगात् गतवान् द्विषः शत्रून् संसिस्मयिषमाणः उपहसितुमिच्छन् पूर्ववत्तन इति तङ् मायां व्यञ्जिजिषुः व्यक्तीकर्त्तुमिच्छुः स्मिपूङ्रञ्जश्वामनीतीट् तत्राञ्जेर्नेन्द्रा इति नकारो न द्विरुच्यते ॥ ५२ ॥ ज० म०

इन्द्रजिदित्यादि। इन्द्रजित् स्वविक्रमाभिज्ञः अतएव वानरं जितमभिभूतं मन्वानो जानन् द्विषः शत्रोः संसिस्मयिषमाणः उपहसितुमिच्छुः सन् मायां व्यञ्जिजिषुर्व्यक्तीकर्त्तुमिच्छुः सन् अगात् गतः स्मिङपूङित्यादिना स्मिङोऽनुज्ञस्य सन इम् द्विष इति सम्बन्धे षष्ठी ॥ ५२ ॥ भ०

जगदित्यादि। कल्पान्ते युगान्ते वायुरिव दुर्द्धरः जगत् पिप-

वने चिकरिषोर्दृप्तान् बलं जिगरिषुः कपेः ।
लसद्विचित्रशस्त्रौघः संग्रामो मूर्त्तिमानिव ॥ ५४ ॥
रोदिति स्मेव चायाति तस्मिन् पक्षिगणः शुचा ।
मुक्तकण्ठं हतान् दृप्तान् बन्धून् बन्धोरिवागमे ॥५५॥

पिपु: पवित्रहवृद्धोमुमिच्छु: विपर्यये विनाशकाले लोकानाशिशिषोः भक्षयितुमिच्छोः कृतान्तस्य तुल्योऽगादिति पूर्वेण सम्बन्धः पूर्ववदिट ॥ ५२ ॥ ज० म०

जगदित्यादि । कीदृशः जगत् भुवनं पिपविषुः पवित्रहवृद्धोमुमिच्छुः कल्पान्ते वायुरिव दुर्द्धरः धर्त्तुमशक्यः विपर्य्यये जगतां विनाशकाले लोकान् आशिशिषोः व्याप्तुमात्मसात् कर्त्तुमिच्छोः कृतान्तस्य यमस्य तुल्यः ईदृश इन्द्रजिदगादिति पूर्वेणान्वयः पूङ्शोधे अशूङ्व्याप्तिसंहत्योः आभ्यां सनः स्मियपूङित्यादिना इम् आशिशिषोर्भक्षयितुमिच्छोरिति केचित् तन्न साधु सूत्रे अशू इत्यूदनुबन्धनिर्देशात् ॥ ५२ ॥ भ०

वन इत्यादि । वने दृप्तांश्चिकरिषोः विक्षेप्तुमिच्छोः कपेर्बलं सामर्थ्यं जिगरिषुः अपनेतुमिच्छुः लपोरुगन्तत्वात् सनि ग्रहगुहोश्चेति प्रतिषेधे प्राप्ते इच्छानिवेति विकल्पे किरश्च पञ्चभ्य इतीट् किरतेरिटो दीर्घत्वं नेच्छन्तीति न दीर्घः लसन् शोभमानो विविधो बहुप्रकारः शस्त्राणामायुधानामोघः समूहो यस्य स मूर्त्तिमान् शरीरी संग्राम इव इन्द्रजिदगादिति पूर्वेणान्वय इत्यर्थः ॥ ५४ ॥ ज० म०

वने इत्यादि । पुनः कीदृशः वने दृप्तान् चिकरिषोर्विक्षेप्तुमिच्छोः कपेर्बलं सामर्थ्यं जिगरिषुर्भक्षयितुं नाशयितुमिच्छुः लसन् दीप्यमानो विचित्रो नानाविधः शस्त्रसमूहो यस्य मूर्त्तः संग्राम इव इन्द्रजिदगादिति पूर्वेण सम्बन्धः कॄ विक्षेपे गॄ निगरणे आभ्यां सनः पूर्ववदिम् ॥ ५४ ॥ भ०

रोदीत्यादि । तस्मिन्निन्द्रजिति आयात्यागच्छति सति पक्षिगणः

आश्वसीदिव चायाति तद्वेगपवनाहतम् ।
विचित्रस्तवकोद्भासि वनं लुलितपल्लवम् ॥ ५६ ॥

न प्राणिषि दुराचार ! मायानामीशिषे न च ।
नेडिषे यदि काकुत्स्थं तमूचे वानरो वचः ॥ ५७ ॥

इतीडधिकारः ।

हतान् दृष्ट्वान् कपिनाशितान् शुचा शोकेन मुक्तकण्ठं सशब्दं नाम॰ग्राहं रोदिति स्मेव रुदितवानिव नामग्रहणपूर्वया रोदनक्रियया व्याप्यमानत्वात् दृच्चाणां कर्मसंज्ञा रुदादिभ्य इतीट् बन्धून् बन्धोरिव यथा बन्धोरागमने कश्चित् बन्धून् रोदिति ॥ ५५ ॥ ज॰ म॰

रोदितीत्यादि । तस्मिन्निन्द्रजिति आयाति आगच्छति सति पक्षिगणः शुचा शोकेन मुक्तकण्ठं सशब्दं यथा स्यात्तथा हतान् हनूमता विनाशितान् दृच्चान् रोदिति स्मेव क्रन्दति स्मेव यथा बन्धोरागमने लोको हतान् बन्धून् रोदिति सशब्दरोदनक्रियायां रुदिः सकर्मकः रुद्भ्रोऽयोरुपस्य स्येतीम् हनस्तोऽगतौ वधे चौदित्वान्नेम् ॥५५॥ म॰

आश्वेत्यादि । तस्मिन्नायाति वनं तद्वेगपवनाहतं सत् आश्वसीदिव सञ्जीवितमिव लब्धरूपम् । यतो विचित्रस्तवकोद्भासि लुलितपल्लवञ्च जातं पूर्ववदिट् ॥ ५६ ॥ ज॰ म॰

आश्वसीदित्यादि । तस्मिन्नायाति सति वनञ्च आश्वसीदिव सञ्जी-वितमिव श्वसघ्लुप्राणने शी रुदाद्यस्तीति दूम् । कीदृशं तस्य हनूमतो वेगवायुना आहतम् । आश्वस्ततामाह विचित्रेण स्तवकेनोद्भासमानं ग्रहादित्वान्नेम् । लुलितं मनोहरं पल्लवं यस्य तत् तथा ॥५६॥ म॰

न प्रेत्यादि । वानरस्तमागच्छन्तमिदं वचनमूचे हे दुराचार ! न प्राणिषि न जीवसि अनचेत्यस्य रूपं पूर्ववदिट् अनितेरिति णत्वम् । न च मायानामीशिषे नेशिता भवसि ईशः स इति इट् अधीगर्थेति कर्मणि षष्ठी । यदि काकुत्स्थं नेडिषे न स्तौषि ईडजनोर्ध्वे चेति चकारात् सेचेतीट् ॥ ५७ ॥ ज॰ म॰

इतीडधिकारः ।

सुसैन्यश्छादयन् संख्ये प्रावर्त्तिष्ट तमिन्द्रजित् ।
शरैः क्षुरप्रैर्मायाभिः शतशः सर्वतो मुहुः ॥ ५८ ॥

न मेत्यादि । वानरो हनुमान् तमिन्द्रजितं वच ऊचे किं वच इत्याह हे दुराचार ! त्वं काकुत्स्थं यदि नेडिषे न स्तौषि तदा न प्राणिषि न जीवसि न च मायानामीशिषे मायानामीश्वरो न भविष्यसि माया यथेष्टं न च विनियोक्ष्यसे इति वा कर्मणि षष्ठी धातूनामनेकार्थत्वात् विनियोगार्थता वर्त्तमानसामीप्येऽपि वर्त्तमानवद्विवक्षत इति न्यायात् सर्वत्र की अनद्यतनप्राणने रुदादिभ्योऽय इति इम् ईडवन्दवृशंसदुहां ण्यतः इम् ॥ ५७ ॥ भ०

इतीडधिकारः ।

इदानीं विसर्जनीयस्य स इत्यधिकृत्याह ।

सैत्यादि । इन्द्रजित् ससैन्यः सबलः तं वानरं सर्वतः शरैः क्षुरप्रैः भल्लैः छादयन् मुहुः चणं मायाभिः शतशोऽनेकधा संख्ये प्रावर्त्तिष्ट प्रवृत्तः लुङि रूपं तत्र ससैन्यश्छादयन् इति विसर्जनीयस्य स इति सत्वं छकारे परे श्चुत्वं शरैः क्षुरप्रैरिति सत्वापवादः शर्परे खरि विसर्जनीयस्य विसर्जनीयः विसर्जनीयस्य विकारनिवृत्त्यर्थः मायाभिः शतशः सर्वत इति वाशरीति विकल्पः विसर्जनीयः सकारो वा ॥ ५८ ॥ ज० म०

अतः परं विसर्जनीयसत्वाधिकारः । सकारप्रदमादेशमात्रोपलक्षणं समते विसन्ध्यधिकारः ।

ससैन्य इत्यादि । इन्द्रजित् ससैन्यः सैन्यैः सह शरैः क्षुरप्रैश्च सर्वतो मुहुर्वारंवारं तं वानरं छादयन् संख्ये युद्धे मायाभिः शतशः शतं शतं वारान् प्रावर्त्तिष्ट प्रवृत्तः ससैन्यश्छादयन्नित्यत्र वेः सोऽशसन्त्येच्छते इति विसर्गस्य सः स्तुश्चुभिरिति तालव्यत्वं शरैः क्षुरप्रैरित्यत्र कखपफयोर्मुन्यावित्यस्य न विषयः अशसन्त इत्यस्यानुवर्त्तनात् विभक्तिव्यत्ययेन अशसन्तयोरिति कखपफयोर्विशेषणात् परे तु शषप्रयोः स्वाञि च म ह्यादिति जिह्वामूलीयनिषेधं मसपरयोर्न

वानरः कुलशैलाभः प्रसह्यायुधशीकरम् ।
रक्षस्पाशान् यशस्काम्यंस्तमस्कल्पानदुद्रुवत् ॥ ५९ ॥

स्यादित्यनेन उपध्मानीयनिषेधज्ञापकः चतुरस्रैर्मायाभिरत्यत रिचोऽवे इति विसर्गस्य रेफः यद्यपि रवे इति कृते इष्टसिद्धिः स्यात्तथापि इच इति कृतस्य साफल्यमाह देवीदासचक्रवर्त्ती यथा क्वचिदपवाद-विषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति न्यायात् भभोभगोऽघोभ्योऽवे लुवि-त्यादिस्थलविषये प्रवृत्त्याशङ्कानिरासः तेन हि न्यायेन दधिना पतिने-त्यादिसिद्धं मायाभिः शतश इत्यत्र शसिशसित्यस्य विषयः सर्वतो युद्ध-रित्यत्र अतोऽत्रव्यु रित्यस्य विषयः ॥ ५८ ॥ भ०

वानेत्यादि । वानरः कुलशैलाभः संग्रामे स्थिरत्वात् आयुधं शीकरमिव नैरन्तर्य्येण पतनात् प्रसह्याभिभूय कुःपौः कःपौ चेति जिह्वामूलीयोपाध्मानीयौ रक्षस्पाशान् कुत्सितराक्षसान् पाश्ये पाशप् स्वार्थिका अपि प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते यशस्काम्यन् आत्मनो यश इच्छन् अत्र तकारे परतोनश्छव्यप्रशानिति नुत्वं विसर्जनीय-मकारौ च पूर्वस्यानुनासिकः तमस्कल्पान् ईषदसमाप्ततमसः कुघोरपवादः सोपदादाविति सकारः तत्र पाशकल्पकाम्येष्विति परिगणनम् अदुद्रु-वत् ढौकते स्म णिश्रीत्यादिना चङ् ॥ ५९ ॥ ज० म०

वानर इत्यादि । वानरः कुलपर्वततुल्यः क्षोभरहितत्वात् आयुधं शीकरमिव नैरन्तर्य्येण पतनात् प्रसह्य सोढ्वा रक्षस्पाशान् कुत्सित-रक्षांसि अदुद्रुवत् ढौकते स्म द्रावितवानित्यर्थः द्रु गतौ टौ णिश्रि-द्रुस्रुकम इति अङ्, कीदृशः यशस्काम्यन् आत्मनो यश इच्छतीति वेः काम्यक् स्वेच्छायामिति काम्यक् ततः शतृः। कीदृशान् तमस्कल्पान् अन्धकारतुल्यान् त्यादेश्चोने इति कल्पः कुत्सितानि रक्षांसि रक्षस्पाशाः पाशः कुत्सायामिति पाशः पुंस्त्वमभिधानात् राजानमिच्छति राजीय-तीत्यादिषु नोलुप्फेधावित्यनेनैवेष्टसिद्धौ नलोपार्थं नलोपः क्यङे इति कृतं ज्ञापयति लुप्तविभक्तिकस्य विरामाश्रितकार्य्यं स्यानित्यमिति तेन रक्षस्पाशादिषु विसर्गाभावः किंवा रक्षस्पाशादयो मनीषादित्वात्

धनुष्पाशभृतः संख्ये ज्योतिष्कल्पोरुकेशरः ।
दुधाव निर्नमस्कारान् राक्षसेन्द्रपुरस्कृतान् ॥ ६० ॥

स्वामिनो निष्क्रयं गन्तुमाविष्कृतबलः कपिः ।
रराज समरे शत्रून् घ्नन् दुष्कृतबहिष्कृतः ॥ ६१ ॥

स्थिताः किंवा सेतु कखपफे वेत्यस्य योगविभागात् वाशब्दस्य व्यवस्थावाचित्वाच्च पाशकाम्यकल्पेषु विसर्गस्य नित्यं सकारः ॥ ६८ ॥ भ०

धनुरित्यादि । धनुष्पाशभृतः कुत्सितधनुर्धरान् राक्षसान् ज्योतिष्कल्पोरुकेशरः अग्नितुल्यदृढसटो वानरः इणः ष इति पाशादिष्वेव विसर्जनीयस्य षत्वं दुधाव कम्पितवान् यस्मान्निर्नमस्कारान् अप्रणामान् राक्षसेन्द्रेणेन्द्रजिता पुरस्कृतान् अग्रतः स्थापितान् नमस्पुरसोर्गत्योरिति विसर्जनीयस्य सकारः इच उत्तरस्य तु विसर्जनीयस्य स एवाधिक्रियते तत्र नमःशब्दस्य साक्षात्प्रभृतिषु पाठात् पुरःशब्दस्य पुरोऽव्ययमिति गतिसंज्ञा ॥ ६० ॥ ज० म०

धनुरित्यादि । वानरः संख्ये युद्धे तान् राक्षसान् दुधाव कम्पितवान् धुनञ्कम्पे ठी । कीदृशान् धनुष्पाशभृतः निन्दितधनुर्द्धरान् पूर्ववत्पाशः निर्नमस्कारान् नमस्कारवर्जितान् अप्रशस्तानित्यर्थः राक्षसेन्द्रपुरस्कृतान् इन्द्रजिता पुरस्कृतान् इन्द्रजितोऽग्रतः स्थापितान् कीदृशः ज्योतिष्कल्पोरुकेशरः अग्नितुल्यवर्णविपुलसटः पूर्ववत् कल्पः सर्वत्र पूर्ववत् विसर्गाभावः वेः सकारो वा तस्येणात्परस्य सस्य षत्वमभिनिष्पद्यत इत्यत्र व्याख्यातम् ॥ ६० ॥ भ०

स्वामीत्यादि । स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं गन्तुं शत्रून् घ्नन् विनाशयन् कपिः समरे रराज आविष्कृतबलः प्रकटितसामर्थ्यः दुष्कृतबहिष्कृतः दुष्कृतं पापं बहिष्कृतमनेनेति वाहिताग्न्यादिषु द्रष्टव्यं सर्वत्र इदुदुपधस्य चेत्यनेनाप्रत्ययविसर्जनीयस्य षत्वम् ॥ ६१ ॥ ज० म०

स्वामीत्यादि । कपिः समरे संग्रामे शत्रून् घ्नन् विनाशयन् रराज दीप्यते स्म कीदृशः स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं गन्तुम् आविष्कृतं प्रकाशितं बलं सामर्थ्यं येन तादृशः दुष्कृतेन पापेन

चतुष्काष्ठं क्षिपन् वृक्षान् तिरस्कुर्वन्नरीन् रणे ।
तिरस्कृतदिगाभोगो ददृशे बहुधा भ्रमन् ॥ ६२ ॥
द्विष्कुर्वतां चतुष्कुर्वन्नभिघातं नगैर्द्विषाम् ।
बहिष्करिष्यन् संग्रामाद्रिपून् ज्वलनपिङ्गलः ॥ ६३ ॥

बहिष्कृतस्त्यक्तः निष्पाप इत्यर्थः दुष्कृतं बहिष्कृतं येनेति वा पूर्वनिपातस्यानियमात् क्वचित् क्तान्तस्य परनिपातः आहिताग्न्यादेर्वेति परः दुर्निरावि र्बहिःप्रादुश्चतुरां षः कखपफे इति परस्त्वतद्दर्शनात् निष्क्रयादिषु सेतु कखपफे वेत्यस्य वाशब्दस्य व्यवस्थावाचित्वात् नित्यं षकारो बोध्यः विकल्पोऽपि न चातिः दुःखं दुष्खञ्चेति द्विरूपदर्शनात् मूर्द्धन्यषत्वं पूर्ववत् ॥ ६१ ॥ भ०

चतुरित्यादि । चतस्रः काष्ठा दिशो यस्मिन् क्षेपणे इति क्रियाविशेषणं पूर्ववत् षत्वं चतसृषु दिक्षु वृक्षान् रणे भ्रमन् एकोऽपि बहुधा ददृशे दृष्टः कपिः क्षिपञ्चिति तौदादिकः अरींस्तिरस्कुर्वन् अभिभवन् तिरस्कृतदिगाभोगः अपनीतदिग्विस्तरः तिरसोऽन्यतरस्यामिति पक्षे षत्वम् ॥ ६२ ॥ ज० म०

चतुरित्यादि । स एकः कपीरणे भ्रमन् बहुधा ददृशे जनैरित्यर्थात् किं कुर्वन् चतुष्काष्ठं वृक्षान् क्षिपन् चतस्रः काष्ठा दिश आधारत्वेन यस्मिन् क्षेपणे क्रियाविशेषणमिदं चतसृषु दिक्षु वृक्षान् क्षिपन्नित्यर्थः अरीन् शत्रून् तिरस्कुर्वन् अभिभवन् तिरस्कृतदिगाभोगः आच्छादितदिग्विस्तारः पूर्ववद्विभाषया विसर्गस्य सकारः ॥ ६२ ॥ भ०

द्विष्कुर्वेत्यादि । असौ कपिराटीदिति वक्ष्यमाणेन सम्बन्धः कीदृशः द्विष्कुर्वतां द्वौ वारावभिघातं कुर्वतां द्विषां चतुष्कुर्वन् चतुरो वारान् नगैर्वृक्षैरभिघातं कुर्वन् द्विस्त्रिश्चतुरिति कृत्वोऽर्थे इति विसर्जनीयस्य वा षत्वम् अरीन् संग्रामाद्बहिष्करिष्यन् अपनेष्यामीति इसुसोः सामर्थ्ये इति विसर्जनीयस्य षत्वं पक्षे सामर्थ्यं चात्र व्यपेक्षानैकार्थीभावः बहिष्करिष्यन्निति द्वयोः परस्परव्यपेक्षत्वात् ॥६३॥ज०म०

द्विरित्यादि । असौ कपिराटीदित्यग्रिमश्लोकेनान्वयः किं कुर्वन् द्वौ

ज्योतिष्कुर्वन्निवैकोऽसावाटीत् संख्ये परार्द्ध्यवत् ।
तमनायुष्करं प्राप शक्रशत्रुर्धनुष्करः ॥ ६४ ॥
अस्यन्नरुष्करान् बाणान् ज्योतिष्करसमद्युतिः ।
यशस्करो यशस्कामं कपिं बाणैरताडयत् ॥ ६५ ॥

वारो अभिघातं कुर्वतां द्विषां नगैः पर्वतैश्चतुरो वारान् अभिघातं कुर्वन् द्विस्त्रिश्चतुःकृत्वोऽर्थे इति सूत्रेण विभाषया कस्कादित्वात् प-द्वयमिति परः समते इस्तेपाणावित्यादिना साक्षादादित्वात् वा समासः । समासे सेत कखेति रूपद्वयं निर्विरोधम् एवमसमासेऽपि कखपफे वेत्यस्य योगविभागः कार्य्यः समासपक्षे षत्वं व्याख्यातमेव असमासेऽपि क्रिलादित्यस्य योगविभागात् षत्वं मनीषादित्वाद्वा संग्रा-मात् अरीन् षवून् वहिष्करिष्यन् पूर्ववत् यः सः षत्वञ्च ज्वलनवत् वह्निवत् पिङ्गलः ॥ ६३ ॥ भ०

ज्योतिरित्यादि । एकोऽपि ज्वलनपिङ्गलः ज्योतिष्कुर्वन्निव अग्निं दीपयन्निव पूर्ववत्पक्षे विसर्जनीयस्य षः परार्द्ध्यवत् दिव्य इव परार्द्धो द्युलोकः ब्रह्माण्डसम्बन्धिन ऊर्द्ध्वभागस्योत्कृष्टत्वात् तत्र भव इति परावराधमेति यत् संख्ये संग्रामे आटीत् परिचक्राम इट इटीति सिचो लोपः तं वानरमनायुष्करं प्राणापहारिणं शक्रशत्रु-रिन्द्रजित् प्राप प्राप्तवान् धनुष्करः धनुः करे यस्येति नित्यं समासे-त्यादिना षत्वम् ॥ ६४ ॥ ज० म०

ज्योतिरित्यादि । एकोऽसौ कपिः संख्ये परार्द्ध्यवत् अत्युत्कृष्ट-संख्याविशेषावच्छिन्नवत् ज्योतिष्कुर्वन् आटीत् परिचक्राम परार्द्ध्यवत् दिव्यवदिति जयमङ्गला तं कपिं शक्रशत्रुरिन्द्रजित् प्राप कीदृशं न आयुः करोतीत्यनायुष्करं कीदृशः धनुः करे यस्य स तथा पूर्ववद्वेः षः षत्वञ्च इदुदुपधस्य चाप्रत्ययस्येति परः ॥ ६४ ॥ भ०

अस्यन्नित्यादि । बाणानरुष्करान् व्रणजनकान् दिवाविभेत्यादिना टः । अस्यन् क्षिपन् ज्योतिष्करसमद्युतिः ज्योतिष्करणशीलः आदित्यः क्रञो हेत्वादिना टः तेन तुल्य इत्यर्थः पूर्ववत् षत्वं यशस्करो यशो-

चकाराधस्पदं नासौ चरन् वियति मारुतिः ।
मर्माविद्भिस्तमस्काण्डैर्विध्यमानोऽप्यनेकधा ॥ ६६ ॥

इति सत्वाधिकारः ।

पुरुहूतद्विषोधूर्षु युक्तानच्छस्य वाजिनः ।
आयूंषि त्वक्षु निर्भिद्य प्राभञ्जनिरमोचयत् ॥ ६७ ॥

जननशीलः इन्द्रजित् यशस्कामं यशसि कामोऽस्येति तं कपिं बाणै-रवाकिरत् अताड़यत् अतः समसीत्यादिना न व्ययविसर्जनीयस्य सत्वम् ॥ ६५ ॥ ज० म०

अस्यन्नित्यादि । इन्द्रजिदरुष्करान् व्रणजनकान् बाणान् अस्यन् क्षिपन् बाणैः कपिमताड़यत् ज्योतिष्करस्य सूर्यस्य यथा द्युतिर्यस्य यशस्करो यशोजननशीलः कीदृशं कपिं यशस्कामं यशसि कामो यस्य सर्वत्र पूर्ववद्भिः स इत्यात् षत्वञ्च अरुर्ज्योतिर्यशस्य करोतीति सकुष्टः ॥६५॥ भ०

चकारेत्यादि । असौ मारुतिर्वियति चरन् अधस्पदं पृथिव्यां पदं न चकार अधस्पदमिति मयूरव्यंसकादित्वात्ः कस्कादिषु चेति षत्वं मर्माणि विध्यन्तीति क्विप् नहिवृतीत्यादिना पूर्वपदस्य दीर्घत्वम् ॥ ६६ ॥ ज० म०

इति षत्वसत्वाधिकारः ।

चकारेत्यादि । असौ मारुतिर्हनूमान् वियति आकाशे चरन् मर्माणि विध्यद्भिः कालायसघटितत्वात् तमस्तुल्यैः काण्डैः शरैरनेकधा विध्यमानस्ताड्यमानोऽपि अधस्पदं पृथिव्यां पदं न चकार पूर्ववद्भिः सः अधःशिरसोः पदे तमसस्तु काण्डे नित्यं विसर्गस्य सकारः इति परः ॥ ६६ ॥ भ०

इति विसर्जनीयसत्वाधिकारः ।

इतः प्रभृति अपदान्तस्य मूर्द्धन्य इत्यधिक्रियते ।

पुरुहूतेत्यादि । पुरुहूतद्विष इन्द्रजितः सम्बन्धिनो यानस्य रथस्य धूर्षु युक्तान् वाजिनः त्वक्षु चर्मसु निर्भिद्य प्राभञ्जनिर्मारुतिरायूंषि जीवितानि अमोचयत् त्याजितवान् धूर्षु त्वक्षिति आदेशप्रत्यययो-

सुषुपुस्ते यदा भूमौ रावणिः सारथिं तदा।
आहर्त्तुं मन्यानशिषत् प्रोषितत्रासकर्कशः॥ ६८॥

रिति षः प्रत्ययसकारत्वात् तत्र हि इण्कोरिति वर्त्तते परेण च चकारेण प्रत्याहारः आयूंषीति नुम् विसर्जनीयेत्यादिना सहेः साटः ष इति छन्दोविषयत्वान्नोदाहृतं ततः छन्दसि सह इति ण्विप्रत्ययस्य विधानात् एवञ्च पृतनाषाड्द्विष इति पाठान्तरमयुक्तम् ॥६७॥ ज० म०

अथ मूर्द्धन्यषत्वाधिकारः।

पुरुहूतेत्यादि। प्रभञ्जनस्यापत्यं हनूमान् पुरुहूतद्विषः शक्रशत्रो-र्मेघनादस्य यानस्य रथस्य धूर्षु भारेषु युक्तान् वाजिनोऽश्वान् त्वक्षु चर्मसु निर्भिद्य आयूंषि अमोचयत् त्याजयामास घोऽञ्जेरिति सूत्रे उपसर्जनीभूतार्था अपि शब्दार्थादयो गृह्यन्ते इति तु प्राप्त्यर्थ-निवृत्तेः प्रतिषेधेन ज्ञापितं तेन वाजिनां प्रयोज्यानां कर्मत्वम् अत्र हि मुचिर्मुक्तिपूर्विकायां गतौ वर्त्तते अतएवामोचयत् मोचनेन भवा-न्तरमगमयदित्यर्थः किलादित्यादिना धूर्ष्विंत्यत्र रेफात् आयूंषीत्यत्र नुवि व्यवधानेऽपि त्वक्ष्वित्यत्र ककारात् सस्य षत्वं पुरुहूतेत्यत्र पृतना-षाड्डिति क्वचित्पाठः॥ ६७॥ भ०

सुष्वित्यादि। ते यदा भूमौ सुषुपुः निपेतुः आदेशसकारत्वात् पूर्ववत् षत्वं तदा रावणिरन्यानश्वानाहर्त्तुमानेतुं सारथिमशिषत् आदिष्टवान् सर्त्तिशास्त्यर्त्तिभ्यश्च शास इदङ्हलोरिति इकारः शासि-वसीति षत्वं प्रोषितत्रासः प्रोषितात्त्रासादुपगतभयः कर्कशश्च रौद्रः प्रोषित इति यजादित्वात् सम्प्रसारणत्वं पूर्ववत्॥ ६८॥ ज० म०

सुषुपुरित्यादि। ते वाजिनो यदा भूमौ सुषुपुः निपेतुः ञिष्वपौ शये ध्यात्वादिष्ण इति मूर्द्धन्यस्य दन्त्यत्वं ततः किलादिति सस्य सत-त्वात् षत्वं तदा तस्मिन् काले रावणस्यापत्यमिन्द्रजित् अन्यानश्वाना-हर्त्तुं सारथिम् अशिषत् आदिष्टवान् कीदृशः प्रोषितोऽपगतस्त्रासो यस्येति बहुव्रीहिः स चासौ कर्कशश्चेति पश्चात् कर्मधारयः प्रोषित-त्रासेन कर्कशो वा शास्तेः शासिवद्युदिति ङः शासइडिति इत् वसेः

प्रतुष्टुषुः पुनर्युद्धमासिषञ्जयिषुर्भयम्।
आतस्थौ रथमात्मीयानुत्सिसाहयिषन्निव॥ ६९॥
बलान्यभिषिषिचन्तं तरुभिः कपिवारिदम्।
विजिगीषुः पुनश्चक्रे व्यूहं दुर्जयमिन्द्रजित्॥ ७०॥

ष्टुषवसेति क्त्वा इस् षष्ठ्यसपाद्योरिति जिः कित्वादित्यादौ शासवसेति षत्वम्॥ ६८॥ म०

प्रतिव्यादि। अश्वा आनीता इति पुनरपि युद्धं प्रतुष्टुषुः प्रस्तोतुमारब्धुमिच्छुः सन् अभ्यागमनं सनीति दीर्घः सनाशंसभिक्ष उः नलोकेति षष्ठीप्रतिषेधः रथमातस्थौ आरूढवान् भयमासिषञ्जयिषुः संश्लेषयितुमिच्छुः हनूमता अत स्तौतेः षत्वभूते सञ्जेश्च स्तौतिण्यो-रिति अभ्यासादुत्तरस्य षत्वम् आत्मीयान् भृत्यानुत्सिसाहयिषन्निव उत्साहयितुमिच्छन्निव युध्यध्वमिति स्तौतीत्यादिना षत्वे प्राप्ते सः स्विदित्यादिना षकारस्य सत्वम्॥ ६९॥ ज० म०

प्रतुष्टुषुरित्यादि। इन्द्रजित् पुनः सज्जीभूतं रथमातस्थौ आश्रितवान् कीदृशः युद्धं प्रतुष्टुषुः प्रस्तोतुमारब्धुमिच्छुः भयम् आसिषञ्जयिषुः हनूमतो भयमासञ्जयितुं संश्लेषयितुम् इच्छुः आत्मीयान् अनुचरान् उत्सिसाहयिषन्निव उत्साहयितुमिच्छन्निव स्थिस्तोः खेरित्यादिना षत्वभूते सनि खेः षत्वं तत्रैव सहवर्जनात् उत्सिसाह-यिषन्नित्यत्र न षत्वम्॥ ६९॥ भ०

बलेत्यादि। कपिवारिदं कपिं वारिदमिव बलान्यभिषिषिचन्तं तरुभिः अभिषेक्तुं छादयितुमिच्छन्तं स्थादिष्वभ्यासेत्यादिना तु सकार-स्याभ्याससकारस्य च षत्वं तमेवंविधं कपिं विजिगीषुर्विजेतुमिच्छुः इन्द्रजित् सनुलिटोर्जेरिति कुत्वं पुनर्व्यूहं बलसन्निवेशं दुर्जयाख्यं चक्रे हस्त्यश्वादिसैनिकानां मण्डलस्थित्या विरच्यते॥ ७०॥ ज० म०

बलानीत्यादि। तरुभिर्बलानि अभिषिषिचन्तं छादयितुमिच्छन्तम् अतएव कपिं वारिदमिव जेतुमिच्छुरिन्द्रजित् पुनर्व्यूहं बलविन्यासं चक्रे दुर्जयं जेतुमशक्यं व्यूहस्य कपेर्वा विशेषणम् अभिपूर्वं सिचः सनः

अभिष्यन्तः कपिं क्रोधादभ्यषिञ्चन्निवात्मनः ।
सम्प्रहारसमुद्भूतैरक्तैः कोष्णैरवस्रुतैः ॥ ७१ ॥
संग्रामे तानधिष्ठास्यन् निषद्य पुरतोरणम् ।
अविषीदन्नवष्टब्धान् व्यष्टम्भान्नरविष्वणान् ॥ ७२ ॥

षत्वे जिस्त्वोः खेरिति नियमेन क्विबादियादिना गोक इत्यादिना च प्राप्तं षत्वं बाध्यते प्रकृतेर्बाधितत्वात् गोक इत्यादिना खेः सकारस्यापि न षत्वमिति केचित् जिस्त्वोः खेरित्यनेन खिनिमित्तं षत्वं बाध्यते तेन प्रकृतेः सस्य न षत्वं खेस्तु गोक इत्यादिना षत्वं भवत्येवेति केचित् । वस्तुतस्तु षत्वभूते सनि खिनिमित्तस्यैव षस्य निषेधः न तु गिनिमित्तस्य तेनोभयत्र गोक इति षत्वम् ॥ ७० ॥ भ०

अभीत्यादि । राक्षसाः क्रोधादात्मनोऽभिष्यन्तः अन्तं नयन्तः षोऽन्तकर्मणीत्यस्य शतरि ओतः श्यनीत्योकारलोपः उपसर्गादिति षत्वं सम्प्रहारसमुद्भूतैः रक्तैः कोष्णैरीषदुष्णैः अवस्रुतैः व्रणान्निर्गतैः कपिमभ्यषिञ्चन्निव अभिषिक्तवन्त इव लङि रूपं प्राक् सितादड्व्यवायेऽपीति षत्वम् ॥ ७१ ॥ ज० म०

अभीत्यादि । राक्षसाः क्रोधादात्मनो अभिष्यन्तोऽन्तं नयन्तः सम्यक् प्रहारजातैः ईषदुष्णैर्विच्युतैः रक्तैः कपिम् अभ्यषिञ्चन्निव अभिषिक्तवन्त इव षोयनाद्ये शतः अभिषोसिचोर्गोक: स्तुस्तुभषो इत्यादिना षत्वम् ॥ ७१ ॥ भ०

संग्राम इत्यादि । ये प्राणिनः अभिषिञ्चन्ति तान्नरविष्वणान् राक्षसान् संग्रामे अधिष्ठास्यन् आत्मतन्त्रीकरिष्यन् कपिः उपसर्गादिति षत्वं पुरतोरणं पुरद्वारं व्यष्टम्भात् आश्रितवान् निषद्य तत्रैव पुरतोरणे स्थित्वा प्राणिनो मा प्रविक्षुरिति अविषीदन् विषादमगच्छन् निषद्य विषीदन्निति सदिरप्रतेरिति षत्वम् अवष्टब्धान् अविदूरान् अवाच्चालम्बनाविदूर्य्ययोरिति षत्वं व्यष्टम्भादिति अड्व्यवायेऽपि स्तम्भेरिति षत्वं स्वना, स्वन, इत्यादिना आप्रत्ययः सप्रन्दायामभ्यवहारक्रियायां स्वन॰

विषह्य राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन् ।
यन्न व्यषहतेन्द्रोऽपि कपिः पर्य्यषहिष्ट तत् ॥ ७३ ॥
विष्यन्दमानरुधिरो रक्तविस्यन्दपाटलान् ।
विष्कन्तॄन् परिषेणाहन्नविस्कन्ता कपिर्द्विषः ॥ ७४ ॥

तिर्वर्त्तते नराणां विष्वणा इति सः नरान् सघन्दभभ्यवहरन्त इत्यर्थः वेश्वस्वनो सभोजन इति षत्वम् ॥ ७२ ॥ ज० म०

संग्राम इत्यादि । हनूमान् संग्रामे निषद्य स्थित्वा अविषीदन् विषण्णो न भवन् तान् राक्षसान् अधिष्ठास्नून् अभिभविष्णून् पुरतोरणं पुरीवहिर्द्वारं व्यष्टम्भात् आक्रान्तवान् पुरतोरणमधिष्ठास्नून् तान् व्यष्टम्भादिति वा कीदृशान् अवष्टब्धान् निकटस्थान् ऊर्जितान् वा नरविष्वणान् मनुष्यं भुञ्जानान् अधिस्थानिविषदविस्तम्भाद्यार्थविस्वानां गोक इत्यादिना षत्वम् अवष्टब्धानिति गोक इत्यादौ अवस्वनेत्यस्य योगविभागार्थात् कचिदन्नार्थादन्यत्रापि षत्वं मनीषादित्वाद्वा अवात् स्तम्भेरौर्जित्याश्रयनिकटभोजनेष्विति परः ॥ ७२ ॥ भ०

विषेत्यादि । विषह्य सोढ्वा कपिचेष्टितमित्यर्थात् सात्सदाद्योरिति प्रतिषेधे प्राप्ते परिनिविभ्य इति षत्वं राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन् विक्षिप्तवन्तः लङि रूपं यच्च शस्त्रजालमिन्द्रोऽपि न व्यषहत न सोढ़वान् सः लङि रूपं तत् कपिः पर्य्यषहिष्ट लुङि रूपं सहेः सिवादीनामित्यादिना विभाषाषत्वम् ॥ ७३ ॥ ज० म०

विषह्येत्यादि । राक्षसा विषह्य सोढ्वा हनूमतः प्रहारमित्यर्थात् क्रुद्धाः सन्तः शस्त्रजालं शस्त्रसमूहं नैरन्तर्य्येण सर्वतोविक्षेपात् जालमिव अवाकिरन् विक्षिप्तवन्तः घ्यां रूपं यत् शस्त्रजालम् इन्द्रोऽपि न व्यषहत न विसोढ़वान् कपिस्तत् शस्त्रजालं पर्य्यषहिष्ट परिसोढ़वान् घ्यां रूपं विषह्येत्यत्र गोक इत्यादिना षत्वं व्यषहतेत्यत्र पर्य्यषहिष्टेत्यत्र च निविपरिसनजेत्यादिना पाक्षिकषत्वम् ॥ ७३ ॥ भ०

विष्येत्यादि । विष्यन्दमानरुधिरः क्षरद्रक्तः कपिः परिषेणाहन्

मेघनादः परिष्कन्दन् परिस्कन्दन्तमाशरिम् ।
अवध्नादपरिस्कन्दं ब्रह्मपाशेन विस्फुरन् ॥ ७५ ॥

ताड़ितवान् द्विषः शत्रून् रक्तविस्यन्दपाटलान् रक्तस्रुतिलोहितान् अनुपर्य्यभिनिविस्यः स्यन्दतेरिति विभाषाषत्वं रक्तस्याप्राणित्वात् विष्कन्तॄन् विविधं स्कन्तुं गन्तुं शीलमेषामिति तृन् अविस्कन्ता कपिः अगमनशीलः स्थानशील इत्यर्थः वेः स्कन्देरनिष्ठायामिति विभाषाषत्वम् ॥ ७४ ॥ ज० म०

विध्येत्यादि । कपिर्द्विषः शत्रून् परिघेण अहन् ताड़ितवान् कीदृशः विष्यन्दमानरुधिरः क्षरद्रक्तः अविस्कन्ता अविचलनशीलः कीदृशान् रक्तविस्यन्दपाटलान् रक्तस्रुतिलोहितान् विष्कन्तॄन् विविधगतिशीलान् स्यन्दूङ् प्रस्रुतौ स्कन्दिरौ शोषणे गत्याम् अनयोः सस्य विस्कम्भानिर्वेविस्यत्यादिना पक्षे षत्वं स्यन्देः कर्तृ रक्तं तेनाप्राणिकर्तृकत्वं स्कन्देस्तृन् भापभषोरिति दस्य तः सवर्गात् सवर्गस्य सवर्गे लुग्वेति दूतवे षच्वे दलोपमाङ्कुः परे सगते मनीषादित्वाच्चद्रूपमपि ॥ ७४ ॥ भ०

मेघेत्यादि । मेघनाद इन्द्रजित् परिष्कन्दन् परितो भ्रमन् परिस्कन्दन्तं परिभ्रमन्तमरिं कपिं ब्रह्मपाशेन ब्रह्मणा दत्तेन पाशेन शीघ्रमबध्नात् बद्धवान् लङि श्नाप्रत्यये रूपं परेश्चेति वा षत्वम् अपरिस्कन्दम् अप्राच्यभरतत्वात् तेन परिस्कन्दः प्राच्यभरतेष्विति निपातनं विस्फुरन् द्वेषादुद्गच्छन्नित्यर्थः स्फुरतिस्फुलत्योरिति विभाषाषत्वम् ॥ ७५ ॥ ज० म०

मेघेत्यादि । मेघनाद इन्द्रजित् परिष्कन्दन् परितो भ्रमन् परिस्कन्दन्तं परितो भ्रमन्तमरिं हनूमन्तं ब्रह्मपाशेन आशु शीघ्रम् अपरिस्कन्दं निश्चलं यथा स्यात्तथा अबध्नात् बद्धवान् न विद्यते परिस्कन्दनं यस्मात् बन्धनात् क्रियाविशेषणम् अरेर्विशेषणमिति केचित् । विस्फुरन् कोपात् हर्षाद्वा कम्पमानः परिस्कन्दविस्फुरोः सस्य विस्कम्भानिर्वेत्यादिना विभाषया षत्वम् । ७५ ॥ भ०

विस्फुलङ्गिर्गृहीतोऽसौ निष्फुलः पुरुषाशनैः ।
विष्कम्भितुं समर्थोऽपि नाचलद्ब्रह्मगौरवात् ॥ ७६ ॥
क्षपीढ्वं भर्त्तुरानन्दं मा न प्रोढं द्रुतं वियत् ।
वानरं नेतुमित्युच्चैरिन्द्रजित् प्रावदत् स्वकान् ॥ ७७ ॥
गतमङ्गुलिषङ्गं त्वां भीरुष्ठानादिहागतम् ।
खादिष्याम इति प्रोचुर्नयन्तो मारुतिं द्विषः ॥ ७८ ॥

विस्फुलेत्यादि । असौ कपिः पुरुषाशनैः राक्षसैः विस्फुलद्भिः ईषच्चलद्भिर्गृहीतः निष्फुलः सतेजाः निस्फुलेति विभाषाषत्वं विष्कम्भितुं व्यापारितुं समर्थोऽपि ब्रह्मगौरवान्नाचलत् न चलितः साभून्मोघो ब्राह्मः पाश इति वेस्कम्नातेरिति षत्वम् ॥ ७६ ॥ ज० म०

विस्फुलेत्यादि । असौ कपिर्विस्फुलद्भिरीषच्चलद्भिः पुरुषाशनैः राक्षसैः गृहीतोऽपि निष्फुलो निष्कम्पः विष्कम्भितुं व्यावर्त्तितुं समर्थोऽपि ब्रह्मगौरवात् नाचलत् न चलितवान् विस्कम्भेत्यादिना विष्कम्भः षत्वं नित्यं स्फुरस्फुलोस्तु विभाषितम् ॥ ७६ ॥ भ०

क्षपीत्यादि । भर्त्तुः रावणस्य आनन्दं क्षपीढ्वं कुरुध्वं लिङि रूपम् अतो वानरं द्रुतं नेतुं वियदाकाशं मा न प्रोढ्वं मा नोत्पतिष्ट माङि लुङ् इणः षीध्वमिति धकारस्य मूर्द्धन्यढकारः इत्येवमुच्चैरिन्द्रजित् स्वकान् भृत्यान् प्रावदत् वदेर्लङि रूपम् ॥ ७७ ॥ ज० म०

क्षपीढ्वमित्यादि । यूयं भर्त्तू रावणस्य आनन्दं क्षपीढ्वं कुरुध्वं ध्वा रूपम् इग्गुडुर्मढीति कित्त्वान्न गुणः टीठीडीधोऽढि च इति धस्य ढत्वं क्रिवादिति षः वानरं नेतुं द्रुतं यूयं वियदाकाशं मा न प्रोढ्वं न न गच्छत अपितु प्रोढ्वं प्रुप्लुङ्च सर्पणे माङ्योगे टी सिः गुणः घेसलोपो वेति पक्षे सिलोपः टीठीडीधोऽढि च इति धस्य ढत्वम् इत्युक्तम् इन्द्रजित् स्वकान् आत्मीयान् उच्चैर्महता ध्वनिना प्रावदत् प्रोक्तवान् ॥ ७७ ॥ भ०

गतमित्यादि । अङ्गुलीनां सङ्गः अङ्गुलीषङ्गः तं गतं प्राप्तं हस्तप्राप्तमित्यर्थः समासेऽङ्गुलेः सङ्ग इति षत्वं भीरोः कातरस्य यत् स्थानं

अग्निष्टोमादिसंस्थेषु ज्योतिष्टोमादिषु द्विजान् ।
योऽरक्षीत्तस्य दूतोऽयं मानुषस्येति चावदन् ॥ ७९ ॥
नासां मातृष्वसेय्याश्च रावणस्य लुलाव यः ।
मातुः स्वसुश्च तनयान् खरादीन् विजघान यः ॥ ८० ॥

तस्माद्भीरुस्थानादिहागतं भीरोः स्थानमिति षत्वं खादिष्याम इति प्रोचुः द्विषो राक्षसा मारुतिं नयन्तो नेष्यन्तः वर्त्तमानसामीप्ये भविष्यति लट् ॥ ७८ ॥ ज० म०

गतमित्यादि । मारुतिं नयन्तो राक्षसा इति प्रोचुः उक्तवन्तः किमित्याह त्वां वयं खादिष्यामः कीदृशं त्वाम् अङ्गुलेः सङ्गं गतं प्राप्तं हस्तप्राप्तमित्यर्थः भीरोरामस्य स्थानादिह लङ्कायामागतं समासेऽङ्गुलेः सङ्गस्य भीरोः स्थानस्य चेति षत्वमिति परः स्वमते किजादित्यस्य योगविभागात् षासवसषसाढाश्चेत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वादन्येषामपीत्यर्थाद्वा सनीषादित्वाद्वा ॥ ७८ ॥ भ०

अग्नीत्यादि । अग्निष्टोमादिसंस्थेषु सप्तयेषु ज्योतिष्टोमादिषु यो द्विजानरक्षीत् तस्य मानुषस्यायं दूत इति चावदन् नयन्तो द्विषः अग्नेस्तुत्स्तोमसोमाः ज्योतिरायुषस्तोम इति षत्वम् ॥ ७९ ॥ ज० भ०

अग्नीत्यादि । अग्निष्टोमादिसप्तयेषु ज्योतिष्टोमादिषु यज्ञेषु यो द्विजान् अरक्षीत् आदिशब्दाद्वाजपेयादेर्ग्रहणम् आयुर्ज्योतिरग्निभ्यः स्तोमस्येति षत्वमिति परः स्वमते सनीषादित्वात् तस्य मानुषस्यायं दूत इति च ते द्विषोऽवदन् ॥ ७९ ॥ भ०

नासामित्यादि । रावणस्य या मातुः स्वसा भगिनी सा मातृष्वसा मातृपितृभ्यामिति षत्वं तस्या अपत्यं मातृष्वसेयी मातृष्वसुश्चेति ढगन्तोपौ तस्या यो नासां लुलाव मातुः स्वसुश्च तनयान् खरादीन्विजघान मातृपितृभ्यामन्यतरस्यामिति षत्वाभावपक्षे विभाषास्वसृपत्योरिति षष्ठ्या अलुक् ॥ ८० ॥ ज० म०

नासामित्यादि । यो रावणस्य मातृष्वसेया मातृष्वसुर्दुहितुः शूर्पणखाया नासां लुलाव छिन्नवान् मातृस्वसृशब्दादत्यादित्वात् ष्णेयः

प्रादुःषन्ति न संत्रासा यस्य रक्षःसमागमे।
तस्य क्षत्त्रियदुःषूतेरयं प्रणिधिरागतः॥ ८१॥
दृष्ट्वा सुषुप्तं राजेन्द्रं पापोऽयं विषमाशयः।
चारकर्मणि निष्णातः प्रविष्टः प्रमदावनम्॥ ८२॥

मनीषादित्वादन्तलोपः आदिसस्य षत्वञ्च मातृपितृभ्यां स्वसुरिति परः। यो मातुः स्वसुश्च मातुर्भगिन्याश्च तनयान् पुत्त्रान् खरादीन् निजघान तस्य दूतोऽयमिति सम्बन्धः स्वसुर्वा मातृपितृभ्यामिति विभाषया षत्वमिति परः स्वमते मनीषादित्वात्॥ ८०॥ भ०

प्रादुरित्यादि। यस्य रक्षःसमागमे सन्त्रासाः भयानि न प्रादुःषन्ति न प्रादुर्भवन्ति उपसर्गप्रादुर्भ्यामित्यादिना दुःशब्दादुत्तरस्यास्तिसकारस्य श्नसोरल्लोप इत्यल्लोपे कृते षत्वं प्रादुःसकारस्य च ष्टुत्वं तस्य क्षत्त्रियदुःषूतेः दुष्पुत्त्रस्यायं प्रणिधिरागत इति चावदन् नयन्तः सूयत इति सूतिः दुर्निन्दायामिति सूतेः सकारस्य सुविनिर्दुर्भ्य इति षत्वम् ॥ ८१॥ ज० म०

प्रादुरित्यादि। रक्षसां समागमे यस्य सन्त्रासा न प्रादुःषन्ति न प्रादुर्भवन्ति प्रादुर्गीक इति षत्वं यस्य क्षत्त्रियदुःषूतेः प्रणिधिश्चरोऽयमागतः विनिस्सुदुर्भ्यः सूतिसमसुपामिति षत्वमिति परः स्वमते मनीषादित्वात्॥ ८१॥ भ०

दृष्ट्वेत्यादि। राजेन्द्रं रावणं दृष्ट्वा प्रमदावनं प्रविष्टः सुषुप्तं गाढ़निद्रं वच्यादिना सम्प्रसारणं पापोऽयं विषमाशयः सुपीत्यादिना षत्वं चारकर्मणि निष्णातः कुशलः निनदीभ्यां स्नातेः कौशल इति षत्वम्॥ ८२॥ ज० म०

दृष्ट्वेत्यादि। अयं पापो दुराचारो राजेन्द्रं रावणं दृष्ट्वा प्रमदावनं प्रविष्टः कीदृशं राजेन्द्रं सुषुप्तं गाढ़निद्रितं विस्वप्नानिर्वविसुनिर्दुःस्वप इति षत्वं कीदृशः विषमाशयः कुटिलहृदयः विषमेत्यत्र मनीषादित्वात् षत्वं चारकर्मणि निष्णातः कुशलः निनदीभ्यां स्नातेः कौशले इति षत्वमिति परः स्वमते मनीषादित्वात्॥ ८२॥ भ०

सुप्रतिष्णातसूत्राणां कपिष्ठलसमत्विषाम् ।
स्थितां वृत्ते द्विजातीनां रात्रावैक्षत मैथिलीम् ॥८३॥

कुलकम् ।

सर्वनारीगुणैः प्रष्ठां विष्टरस्थां गविष्ठिराम् ।
प्रयानां कुष्ठले तारां दिविष्ठामिव निर्मलाम् ॥ ८४ ॥

सुप्रेत्यादि । येषां द्विजातीनां सुप्रतिष्णातानि मन्यतोऽर्थतश्च निश्चितानि सूत्राणि तेषां सुप्रतिष्णातसूत्राणां सूत्रं प्रतिष्णातमिति निपातनं कपिष्ठलसमत्विषां कपिष्ठलो नाम द्विजर्षभो गोत्रप्रवर्त्तकः कपिष्ठलो गोत्र इति साधुः तत्तुल्यतेजसां द्विजातीनां वृत्ते चरिते स्थितां मैथिलीम् ऐक्षत ॥ ८३ ॥ ज० म०

सुप्रेत्यादि । अयं रात्रौ द्विजातीनां वृत्ते स्थितां मैथिलीम् ऐक्षत दृष्टवान् ध्यां रूपं कीदृशानां सुप्रतिष्णातं मन्यतोऽर्थतश्च विशुद्धं गोभिलादिसूत्रं येषां सनीषादित्वात् सूत्रे प्रतिष्णातस्य षत्वं कपिष्ठलसमत्विषां कपिष्ठलाख्यस्य ऋषेः समा त्विट् येषां सनीषादित्वात् गोत्रे कपेः स्थलस्य सस्य षत्वम् ॥ ८३ ॥ भ०

कीदृशीमित्याह, सर्वेत्यादि । यावन्तो नारीगुणाः तैः प्रष्ठाम् अग्रगामिनीं प्रष्ठोऽग्रगामिनीति साधुः विष्टरस्थां वृक्षासनयोर्विष्टर इति साधुः गविष्ठिरां वाचिस्थिरां गवियुधिभ्यामिति षत्वम् अस्मादेव वचनात् सप्तम्या अलुक् कुष्ठले प्रयानां कौ स्थले भूतले शुद्धं विकुशमित्यादिना षत्वं दिविष्ठां दिवि तिष्ठतीति सुपि स्थ इति कः तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक् गगनस्थां तारामिव निर्मलाम् अम्बाम्बेत्यादिना षत्वम् ॥ ८४ ॥ ज० म०

सर्वेत्यादि । मैथिलीं कीदृशीं सर्वनारीगुणैः प्रष्ठां यावन्तो नारीगुणास्तैरग्रगामिनीं सनीषादित्वात् प्रात्स्थोऽग्रगे षत्वं विष्टरस्थाम् आसनस्थां सनीषादित्वाद्वृक्षासनयोर्विष्टर इति रूपसिद्धिः गविष्ठिरां वाचिस्थिरां सप्तमीतत्पुरुषः अभिधानाच्च ङेर्लोपः सनीषादित्वात् गवियुधिभ्यां स्थिरस्य षत्वं कुष्ठले भूस्थले प्रयानां सनीषादित्वात्

सुषाम्णीं सर्वतेजःसु तन्वीं ज्योतिष्टमां शुभाम् ।
निष्टपन्तीमिवात्मानं ज्योतिःसात्कुर्वतीं वनम् ॥ ८५ ॥
मधुसाङ्कृतकिञ्जल्कापिञ्जरभ्रमराकुलाम् ।
उल्लसत्कुसुमां पुण्यां हेमरत्नलतामिव ॥ ८६ ॥

श्चमिपरिविकुस्थः स्थलस्य षत्वं दिविष्ठां तारामिव निर्मलां दिवि तिष्ठ-तीति हनज्जनादिति डः अभिधानात् सप्तम्या अलुक् स्त्रियामाप् मनीषादित्वात् षत्वम् ॥ ८४ ॥ म०

सुषेत्यादि । शोभनं साम यस्या इति विग्रहे अन उपधालोपिनो-ऽन्यतरस्यामिति ङीप् सुषामादिषु चेति षत्वं सुषु प्रियंवदामित्यर्थः तन्वीं कृशां शुभां कल्याणीं सर्वतेजःसु ज्योतिष्टमाम् अतिशयेन ज्योतिष्मतीं ह्रस्वात्तादौ तद्धित इति षत्वम् एवञ्च कृत्वा निष्टपन्ती-मिवात्मानं सकज्ज्वलयन्तीमिवात्मानं निसस्तपतावन्यसेवन इति षत्वं वनं ज्योतिःसात्कुर्वन्तीम् अज्योतिर्ज्योतिःकुर्वाणां कात्स्न्येन दीपयन्ती-मित्यर्थः कात्स्न्येर्ये सातिप्रत्ययः तत्र सुषि विसर्जनीयस्येत्यादिना प्राप्तस्य षत्वस्य सात्पदाद्योरिति प्रतिषेधः युष्मदित्यादिनोदाहृतं छान्द-सत्वात् ॥ ८५ ॥ ज० म०

सुषाम्णीमित्यादि । पुनः कीदृशीं मैथिलीं सुषाम्णीं प्रियंवदां शोभनं साम यस्या इति नान्तत्वात् स्त्रियामोप् निःसुदुर्भ्यः समासे धसञ्चीनामिति षत्वमिति परः स्वमते मनीषादित्वात् तन्वीं कृशां गुणाद्वोत इति पक्षे ईप् सर्वज्योतिःसु मध्ये ज्योतिष्टमां प्रकृष्टप्रकाश-रूपां लोकोर्घादिति षत्वं शुभां कल्याणयुक्ताम् आत्मानं निष्टपन्तीमिव सन्तापयन्तीमिव हनूमद्दर्शनात् तपस्य नैरन्तर्याभावात् निरस्तपौ-सन्तत्येवने इति षत्वमिति परः । स्वमते मनीषादित्वात् तापस्य सन्तत्येवनमत्र विवक्षितं वनं ज्योतिःसात्कुर्वतीं कात्स्न्येन दीपयन्ती-मित्यर्थः कात्स्न्र्यार्थयोः सम्पद्यकादाविति चसात् किबादित्यादौ साद्वर्जनात् न षत्वम् ॥ ८५ ॥ भ०

मध्वित्यादि । मधुसाङ्कृतकिञ्जल्कं कात्स्न्येन मधुतामापन्नं यत्

विलोचनाम्बु मुञ्चन्तीं कुर्वाणां परिसेसिचाम् ।
हृदयस्येव शोकाग्निसन्तप्तस्योत्तमव्रताम् ॥ ८७ ॥
दृष्ट्वा तामभनग् वृक्षान् द्विषो घ्नन् परिसेधतः ।
परितस्तान् विचिक्षेप क्रुद्धः स्वयमिवानिलः ॥ ८८ ॥

किञ्जल्कं पुष्पकेशरं तन्मधुसाद्भूतकिञ्जल्कम् आदेशप्रत्यययोरिति प्राप्तस्य पूर्ववत् प्रतिषेधः तेन पिञ्जराः पिङ्गलाः ये भ्रमराः तैराकुलाम् उल्लसत्कुसुमां राजत्पुष्पां हेमरत्नलतामिव यथा हेमरत्नमयीं कल्पतरुलतां पुण्यां पवित्रान्तद्वत्तामपीत्यर्थः ॥ ८६ ॥ ज० म०

मधुसादित्यादि । पुनः कीदृशीं हेमरत्नलतामिव कल्पतरुलतामिव पुण्यां पवित्राम् उत्तमामित्यर्थः हेमरत्नलतां कीदृशीं कात्स्न्र्येन मधुतामापन्नेन किञ्जल्केन पुष्पकेशरेण पिञ्जराः पिङ्गला ये भ्रमरास्तैराकुलां व्याप्ताम् अत्रापि सादर्जनान्न षत्वम् उल्लसत्कुसुमां राजत्पुष्पाम् ॥ ८६ ॥ म०

विलोचेत्यादि । विलोचनाम्बु अस्रु मुञ्चन्तीं विक्षिपन्तीं हृदयस्य शोकाग्निसन्तप्तस्य परिसेसिचां भृशं निर्वाणमिव कुर्वाणामैक्षतेति पूर्वेण सम्बन्धः सिचेर्यङन्तात् स्त्रीलिङ्गे भावे अकारप्रत्ययः उपसर्गादित्यादिना अभ्यासव्यवायेऽपि प्राप्तस्य षत्वस्य सिचो यङीति प्रतिषेधः उत्तमव्रतां पतिव्रतात्वात् ॥ ८७ ॥ ज० म०

विलोचनेत्यादि । विलोचनाम्बु मुञ्चन्तीम् अस्रु क्षिपन्तीं शोकरूपाग्निसन्तप्तस्य हृदयस्य परिसेसिचां पुनः पुनरतिशयेन वा सेचनं कुर्वाणामिव अग्निनिर्वाणाय जलसेकः क्रियत इत्युत्प्रेक्षा सिचो यङ्लुकि संख्याद इति अः स्त्रियामाप् गोक इत्यादौ अयङ् सिचेति यङ्वर्जनान्न षत्वम् उत्तमव्रतां पतिव्रतात्वात् ईदृशीं मैथिलीमैक्षतेति सम्बन्धः ॥ ८७ ॥ म०

दृष्ट्वेत्यादि । तां दृष्ट्वा वृक्षानभनक् चूर्णितवान् द्विषः शत्रून् परिसेधतः आगच्छतः घ्नन् हिंसन् पूर्ववत् प्राप्तस्य सेधतेर्गताविति प्रतिषेधः परितश्च समन्ताद्वृक्षान्चिक्षेप उन्मूलितवान् लिटः संयोगादित्वाद-

अप्रतिस्तब्धविक्रान्तमनिस्तब्धो महाहवे।
विसोढवन्तमस्त्राणि व्यतस्तम्भद्घनध्वनिः ॥ ८९ ॥
ते विज्ञायाभिसोष्यन्तं रक्षैरक्षांसि सव्यथाः।
अन्यैरप्यायतं सेवुर्वरत्राशृङ्खलादिभिः ॥ ९० ॥

किन्त्वे गुणः क्रुद्धः स्वयमिव साक्षादिवानिलः ॥ ८८ ॥ ज० म०

दृष्ट्वेत्यादि। अयं तां चितां दृष्ट्वा वृक्षान् अभनक् भग्नवान् किं कुर्वन् द्विषः शत्रून् घ्नन् हिंसन् कीदृशान् परिषेधतः सर्वतो गच्छतः गीक इत्यादौ अगतिरिपेति गत्यर्थवर्जनात् न षत्वम् अयं तान् वृक्षान् परितः समन्तात् प्रचिक्षेप चिक्षिप्तवान् क्रुद्धः सन् स्वयं साक्षात् अनिल इव ॥ ८८ ॥ भ०

अप्रेत्यादि। घनध्वनिर्मेघनादः अनिस्तब्धोऽनभिभूतः अप्रतिस्तब्धविक्रान्तम् अनभिभूतविक्रमं कपिं स्तम्भेरिति प्राप्तस्य षत्वस्य प्रतिस्तब्धनिस्तब्धौ चेति प्रतिषेधनिपातनम् अस्त्राणि महाहवे विसोढवन्तं सोढ इति प्रतिषेधः व्यतस्तम्भत् निष्पादितवान् एवं नयन्तोऽवष्टब्नीति योऽयं स्तम्भेर्णन्तस्य स्तम्भविष्वसहाञ्चङीति षत्वप्रतिषेधः ॥ ८९॥ ज० म०

अप्रेत्यादि। घनध्वनिर्मेघनादः अप्रतिस्तब्धविक्रान्तम् अनभिभूतविक्रमं हनूमन्तं व्यतस्तम्भत् निश्चलं कृतवान् कीदृशः अनिस्तब्धः अनभिभूतः कीदृशं महायुद्धे शस्त्राणि विसोढवन्तं सहेः क्तवतुः वेमसहेति वेमत्वात् नेमृडीश्वीदिति नेम् होढः सहवहोऽदोढीति ओत्वं गीक इत्यादौ अनोङ्सहेति ओङ्वर्जनान्न षत्वं स्तम्भेः प्रेरणे जिः जिश्रीत्वङ् गीक इत्यादौ अनङ्स्तम्भेति अङ्वर्जनान्न षत्वं प्रतिस्तब्धनिस्तब्धयोः प्रतिनिशब्दौ उपसर्गप्रतिरूपकौ तेन गीक इत्यादिना न षत्वं प्रतिनिभ्यां स्तब्धस्येति षत्वनिषेधार्थमरसूत्रम् ॥ ८९ ॥ भ०

ते इत्यादि। राक्षसाः ये मारुतिं सेवन्तः रक्षैः रक्षांसि विसोष्यन्तम् अभिषेक्ष्यन्तं कपिं सुनोतेः स्यसनोरिति षत्वं यद्याक्रम्यमाणो न नीयेत अवश्यं राक्षसान् रक्षैः सोष्यतीति विज्ञाय सव्यथाः सभयाः सन्तः अन्यैरपि वरत्राशृङ्खलादिभिरायतं दीर्घं

विषसादेन्द्रजिद् बुद्‌ध्वा बन्धे बन्धान्तरक्रियाम् ।
दिव्यबन्धो विषहते नापरं बन्धनं यतः ॥ ९१ ॥

इति षत्वाधिकारः ।

मुष्णन्तमिव तेजांसि विस्तीर्णोरस्थलं पुरः ।
उपसेदुर्दशग्रीवं गृहीत्वा राक्षसाः कपिम् ॥ ९२ ॥

नेद्धः बध्नन्ति स्म षह बन्धन इत्यस्य लिटि रूपम् ॥ ९० ॥ ज० म०

ते इत्यादि । ते मारुतिं नयन्तो राक्षसा विज्ञाय हनूमत्पराक्रममित्यर्थात् सव्ययाः सभयाः सन्तः ब्रह्मास्त्रबन्धे सत्यपि अन्यैरपि वरत्राश्रृङ्खलादिभिरायतं दीर्घं कपिं सेदुः बध्नन्ति स्म षवनहे नह्योबन्धनं यां रूपं कीदृशं रक्षैः स्वगात्रसम्बैरङ्गांसि अभिसोष्यन्तम् अभिषेक्ष्यन्तं गीक इत्यादौ अस्यान्तसुजेति स्यान्तवर्जनाच्च षत्वं वरत्रा चर्मरज्जुः ॥ ९० ॥ भ०

विषेत्यादि । बन्धे दिव्ये बन्धान्तरक्रियां बन्धनविशेषकरणं बुद्‌ध्वा इन्द्रजित् विषसाद विषादमुपगतः नियतं दिव्यबन्धं मुक्तवानिति यतो दिव्यबन्धो नापरं स्वयं बन्धनं विषहते अतो विषसादेति योज्यं सदिसञ्जोः परस्य लिटि प्रत्वप्रतिषेधः पूर्वस्य तु सदिरप्रतेरिति भवत्येव विषहत इति न प्रतिषेधः तत्र सोढ़रूपस्य ग्रहणात् ॥ ९१ ॥ ज० म०

इति मूर्द्धन्याधिकारः ।

विषेत्यादि । इन्द्रजित् बन्धे बन्धान्तरकरणं बुद्ध्वा ज्ञात्वा विषसाद विषादं गतवान् गीक इत्यादिना षत्वे प्राप्ते सत्स्वञ्जोर्घ्यां नाखेरिति प्रकृतेः षत्वनिषेधः खे तु षत्वमेव यतो यस्मात् दिव्यबन्धोऽपरं बन्धनं न विषहते गीक इत्यादिना षत्वम् ॥ ९१ ॥ भ०

इति षत्वाधिकारः ।

इतः प्रभृति णत्वमधिकृत्याह ।

मुष्णेत्यादि । राक्षसाः पुरः कपिमादाय दशग्रीवमासेदुः ढौकितवन्तः नव दर्शनगोचरं गताः स्वप्रभातत्वात् कीदृशं तेजांसि मुष्णन्तं

बहुधा भिन्नमर्माणो भीमाः खरणसादयः ।
अग्रेवणं वर्त्तमाने प्रतीच्यां चन्द्रमण्डले ॥ ८३ ॥

खण्डयन्तमिव विस्तीर्णोरस्थलं विस्तृतवक्षसं तत्र रषाभ्यां नो ण इति णत्वम् ॥ ८२ ॥ ज० म०

अथ णत्वाधिकारः ।

मुष्णन्तमित्यादि । राक्षसाः कपिं गृहीत्वा पुरोऽग्रतो दशग्रीवमुपसेदुः कीदृशं तेजांसि मुष्णन्तमिव खण्डयन्तमिव स्वतेजसाऽभिभवात् विस्तीर्णवक्षसम् उभयत्र ऋवर्णोऽदान्ते न इति णत्वम् ॥ ८२ ॥ भ०

बह्वित्यादि । वानरद्विषो राक्षसा ऊचुरिति वक्ष्यमाणेन सम्बन्धः कीदृशाः किमूचुरित्याह बहुधा भिन्नमर्माण इति यानि कालान्तरे प्राणहराणि मर्माणि तानि बहुधा भिन्नानि येषामिति बहुव्रीहिः अट्पवर्गसमुदायस्य व्यवधानादट् कुप्वाङित्यादिना णत्वं खरणसादयः खरस्येव नासिका यस्येति अज्नासिकाया इत्यच् नसादेशश्च पूर्वपदात् संज्ञायामिति णत्वं खरणसादयो राक्षसा वनस्याग्रे अग्रेवणं राजदन्तादित्वात्परनिपातः वनं परगेति णत्वं प्रतीच्यां दिशि वर्त्तमानस्य वनस्याग्रे उपरि वर्त्तमाने चन्द्रमण्डले प्रभातसन्ध्यायामित्यर्थः ॥ ८३ ॥ ज० म०

बहुधेत्यादि । वानरद्विषो राक्षसा इत्यूचुरित्यग्रिमश्लोकेनान्वयः । कीदृशाः बहुधा भिन्नानि मर्माणि जीवितस्थानानि येषां तादृशाः ऋवर्णोऽदान्ते इत्यादिना अवकुप्वन्तरेऽपीति णत्वम् । भीमाः भयानकाः खरस्येव नसा नासिका येषां ते सादयो येषां ते तथा ऋवर्ण इत्यादावतह्यादित्यस्य योगविभागात् णत्वं नसाशब्दस्य रूपमिदं वपनं वदनं तुण्डमाननं नासिका नसेति रभसः । नसा नासा च नासिकेति कोषान्तरम् । खरखुराभ्यां नासिकाया नस्नसाविति परः । किमूचुरित्याह चन्द्रमण्डले प्रतीच्यां पश्चिमायां दिशि वनस्याग्रे वर्त्तमाने सति अनेनोद्यानं निर्वणं वनशून्यं कृतमिति परश्लोकेनान्वयः वनस्याग्रे अग्रेवनं तस्मिन् व्यं पूर्वमिति अग्रेशब्दस्य पूर्वनिपातः अग्रेवणमिति

निर्वणं क्षतमुद्यानमनेनाम्रवणादिभिः ।
देवदारुवनाभिख्यैरित्यूचुर्वानरद्विषः ॥ ९४ ॥
उपास्थिषत संप्रीताः पूर्वाह्णे रोषवाहणम् ।
राक्षसाः कपिमादाय पतिं रुधिरपायिणाम् ॥ ९५ ॥

पाठे देशाध्वकालेति ढसंज्ञा अग्रेवणमित्यनुस्वारवत् पाठोऽत्र प्रमादकृतः समस्यन्तत्वादिति विद्याविनोदः । अग्रेवण इति खरणसवर्णत्वम् अग्रे मिश्रकाशारिकाशिश्रकापुरगाकोटराग्र्यो वनस्य संज्ञायामिति परस्तुतं संज्ञायामिति सम्भवपरमुक्तं तेनासंज्ञायामपि णत्वं स्यादिति बोध्यम् अग्रेवणे वर्त्तमाने प्रतीच्यां चन्द्रमण्डल इत्यनेन प्रातःसन्ध्या सूचिता ॥ ९३ ॥ भ०

निर्वेत्यादि । उद्यानं सन्निवेशविशेषः निर्वणं वृक्षरहितम् अनेन कपिना क्षतम् आम्रवणादिभिरुपलक्षितम् उभयत्रापि प्रनिरन्त इति णत्वं देवदारुवनाभिख्यैरिति विभाषौषधीत्यादिना णत्वं न भवति द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यमिति वचनात् इत्येवमूचुः ॥९४॥ ज० स०

निर्वणमित्यादि । कीदृशमुद्यानम् आम्रवणादिभिरुपलक्षितं कीदृशैः देवदारुवनाभिख्यैः देवदारुवनयुक्तैः निर्वणाम्रवणयोः खरणसवर्णत्वं देवदारुवनेत्यत्र योगविभागस्य क्वचिद्विषयाद्य णत्वं परमते आम्रसुचपीयूचशरखदिरनिःप्रकार्य्यान्तरिक्षुभ्यो वनस्य णत्वं तथा इरिकाभद्रिकातिमिरवर्जं द्वित्यक्षरौषधिस्यपूर्वा वनस्य णत्वं देवदारुशब्दस्य चतुरक्षरत्वाद्देवदारुवनाभिख्यैरित्यत्र न णत्वम् ॥ ९४ ॥ भ०

उपेत्यादि । ते राक्षसाः पतिमुपास्थिषत उपागताः दृष्टिपथं गता इत्यर्थः उपाद्देवपूजेत्यादिना वङ्गतिकरणे तङ् स्थाघ्वोरिच्च सम्प्रीताः हृष्टाः तेषामनुज्ञातप्रवेशत्वात् पूर्वाह्णे प्रत्यूषसि अह्नोऽदन्तादिति णत्वं रोषवाहणं कपिमादाय रोषस्यासनीकृतं वाहनमाहितादिति णत्वं रोषस्य तत्राधीयमानत्वात् पतिं रुधिरपायिणां राक्षसानां पानं देश इति णत्वम् ॥ ९५ ॥ ज० म०

उपेत्यादि । राक्षसाः कपिमादाय संप्रीताः सन्तः पूर्वाह्णे प्रत्यू-

सुरापाणपरिक्षीवं रिपुदर्पहरोदयम् ।
परस्त्रीवाहिणं प्रापुः साविष्कारा: सुरापिणः ॥ ९६ ॥

पति रुधिरपायिणां राक्षसानां पतिं रावणम् उपास्थिषत उपगताः मैत्रावध्वसङ्गाराध इति सङ्गमे स्यादोर्ङिंत्यीमे इति ङिः गुणाभावश्च भान्तोऽदनत इत्यत् । कथं कीदृशं रोषवाहणम् आरूढक्रोधं पूर्वाङ्ग इति प्राग्वन्नोणोऽतोऽङ्गस्येति णत्वं रोषवाहणमिति खरणसवसत्वं परमते वाक्षग्रवाहनस्य णत्वं रोषस्य वाह्यत्वात् रुधिरपायिणामिति रुधिरं रक्तं पिबन्तीति ग्रहादित्वात् णिन् प्रण्योऽदान्त इत्यादौ नैकाचकोस्त्वेति पाक्षिकं णत्वम् असृक्पाणाधिपं तूर्णं अपिमादाय राक्षसा इति कचित्पाठः तदा असृक् प्रधानं पानं येषां तेषामधिपम् असृजां पानं यत्र सोऽसृक्पाणो देशः तस्याधिपमिति वा असृगेव पानं पेयं येषामिति वा खरणसवसत्वं देशे पानस्य णत्वं नित्यं भावकरणयोः पानस्य वा णत्वमिति परः ॥ ९५ ॥ भ०

सुरेत्यादि । सुरापाणात्परिक्षीवं मत्तं रावणं वा भावकरणयोरिति णत्वं रिपुदर्पहर उदयो वृद्धिर्यस्य तं परस्त्रियं वाहयितुमुपभोक्तुं शीलं यस्य तं परस्त्रीवाहिणं प्रातिपदिकान्त इति णत्वाभावः पाक्षिकः प्रापुः सुष्ठु निकटीकृताः साविष्काराः साहङ्काराः सुरापिणः सुरापैर्युक्ताः सुरां पिबन्तीति गापोष्टक् ते येषां सन्तीति मत्वर्थीयः एकाजुत्तरपदे ण इति णत्वम् उत्तरस्य प्रातिपदिकान्तस्यैकाच्त्वात् ॥ ९६ ॥ ज० म०

सुरेत्यादि । राक्षसा रावणं प्रापुः । कीदृशं सुरापाणेन परिक्षीवं मत्तं खरणसवसत्वं भावकरणयोः पानस्य वा णत्वमिति परः । रिपूणां दर्पहारक उदयो यस्य तं परस्त्रियं वोढुम् उपभोक्तुं शीलं यस्य तं प्रण्योऽदान्ते इत्यादिना नैकाचकोस्त्वेति पक्षे णत्वं परस्त्रीकामिणमिति पाठे तेनैव कवर्गवत्त्वात् नित्यं णत्वम् । कीदृशाः साविष्काराः साहङ्काराः सुरापिणः सुरापैर्युक्ताः सुरां पिबन्तीति सुरापाः इनजनादिति डः ततोऽस्त्यर्थे इन् पूर्ववदेकाच्त्वात् नित्यं णत्वम् ॥९६॥ भ०

संहर्षयोगिणः पादौ प्रणेमुस्त्रिदशद्विषः ।
प्रहिखन्तो हनूमन्तं प्रमीणन्तं द्विषन्मतीः ॥ ९७ ॥
प्रवपाणि शिरो भूमौ वानरस्य वनच्छिदः ।
आमन्त्रयत संक्रुद्धः समितिं रक्षसां पतिः ॥ ९८ ॥
प्रत्यगादीत् प्रणिघ्नन्तं घनः प्रणिनदन्निव ।
ततः प्रणिहितः स्वार्थे राक्षसेन्द्रं विभीषणः ॥ ९९ ॥

संहेत्यादि । संहर्षयोगिनः स्पर्द्धायोगिणः कुमति चेति णत्वं ते अन्योन्याभिभवेच्छया त्रिदशद्विषो रावणस्य पादौ प्रणेमुः उपसर्गाद्-समासेऽपीति णत्वम् । हनूमन्तं प्रहिखन्तः ढौकयन्तः द्विषन्मतीः शत्रु-बुद्धीः प्रमीणन्तम् अभिभवन्तं मीञ् हिंसायां क्रैयादिकः हिनुमिना इति णत्वम् ॥ ९७ ॥ ज० म०

समित्यादि । राक्षसास्त्रिदशद्विषो रावणस्य पादौ प्रणेमुः प्रणत-वन्तः प्राग्वन्नेण इत्यादिना नादिधातुत्वाण्णत्वं संहर्षयोगिणः महा-हर्षयुक्ताः पू॒, र्ष इत्यादिना कवर्गवत्त्वात् नित्यं णत्वं हनूमन्तं प्रहि-खन्तः प्रापयन्तः कीदृशं द्विषन्मतीः शत्रुबुद्धीः प्रमीणन्तम् अभिभवन्तं प्राग्वन्नेण इति मीनाहिन्नोर्णत्वम् ॥ ९७ ॥ म०

प्रवेत्यादि । अस्य वानरस्य वनच्छिदः शिरो भूमौ प्रवपाणि छित्त्वा पातयामि आनिलोडिति णत्वं वपिरत्र पातने वर्त्तते संक्रुद्धः रक्षसां पतिः स्वामी समितिं समूहम् आमन्त्रयत भाषितवान् ॥ ९८ ॥ ज० म०

प्रवेत्यादि । रक्षसां पती रावणः संक्रुद्धः सन् समितिं सभाम् आमन्त्रयत उक्तवान् । किं तदित्याह अहं वनच्छिदो वानरस्य शिरो भूमौ प्रवपाणि छित्त्वा पातयामीत्यर्थः वपिरत्र प्रहरणे प्राग्वन्नेण इति आनिपोणत्वम् ॥ ९८ ॥ म०

प्रत्येत्यादि । तत उत्तरकालं विभीषणो राक्षसेन्द्रं प्रणिघ्नन्तं हनुमारभमाणं प्रत्यगादीत् वक्तुं प्रवृत्तः घन इव प्रणिनदन् गर्जन्

प्रणिशाम्य दशग्रीव! प्रणियातुमलं रुषम्।
प्रणिजानीहि हन्यन्ते दूता दोषे न सत्यपि ॥ १०० ॥
प्राणयन्तमरिं प्रोचे राक्षसेन्द्रो विभीषणम्।
प्राणिणिषुर्न पापोऽयं योऽभाङ्क्षीत् प्रमदावनम् ॥१०१॥

स्वार्थे राक्षसेन्द्रस्य प्रणिहितोऽर्पितमनाः सर्वत्र नेर्गदेति णत्वम् ॥ ९९ ॥ ज० म०

प्रख्येत्यादि। ततोऽनन्तरं हनूमन्तं प्रणिघ्नन्तं हन्तुमारभमाणं राक्षसेन्द्रं विभीषणो घन इव प्रणिनदन् गर्जन् प्रत्यगादीत् वक्तुं प्रवृत्तः स्वार्थे रावणप्रयोजने प्रणिहितः सावधानः सर्वत्र प्राग्वण्णत्वम् इति णत्वम् ॥ ९९ ॥ भ०

प्रणीत्यादि। हे दशग्रीव! प्रणिशाम्य रोषं त्यज शोटि श्यनि रूपम् शमामष्टानामिति दीर्घः। रुषं प्रणियातुमलं न किञ्चित् पूर्व-वण्णत्वं प्रणिजानीहि अवगच्छ सत्यपि दोषे न हन्यन्ते दूता इति जानातेः शेषधातोरुपदेशावस्थायाम् अकखाद्यषान्तत्वात् शेषे विभाषे-त्यादिना णत्वम् ॥ १०० ॥ ज० म०

प्रणीत्यादि। हे दशग्रीव! प्रणिशाम्य शान्तो भव शमेर्ण्यो रूपं शन्योरमादिविति इति दीर्घः हेर्लोपः। रुषं क्रोधं प्रणियातुम् आश्रयितुम् अलं नार्हसि निषेधार्थोऽलंशब्दः उभयत्र प्राग्वण्णत्वम् इति णत्वं त्वं प्रणिजानीहि अवगच्छ पूर्ववदकखाद्यषान्तान्नेरिति पक्षे णत्वं दोषे सत्यपि दूता न हन्यन्ते नीतिशैरित्यर्थात् ॥ १०० ॥ भ०

प्राणेत्यादि। अरिं कपिं यः प्राणयति जीवयति तं प्राणयन्तं विभीषणं श्वसप्राणने अनचेत्यस्य रूपम् अनितेरिति णत्वं प्रोचे राक्ष-सेन्द्रः न प्राणिणिषुः न जीवितुमिच्छुरयं पापः उभौ साभ्यासस्येति णत्वं द्वयोरपि योऽभाङ्क्षीत् भग्नवान् प्रमदावनं हननपञ्चया वृद्धिः ॥ १०१ ॥ ज० म०

प्राणेत्यादि। अरिं हनूमन्तं प्राणयन्तं जीवयन्तं विभीषणं राक्षसेन्द्रः प्रोचे उक्तवान् अनितेर्ण्यन्तस्य रूपम्। किमुक्तवानित्याह अयं

प्राघानिषत रक्षांसि येनाम्राणि वने मम ।
न प्रहण्मः कथं पापं वद पूर्वापकारिणम् ॥ १०२ ॥
वेश्मान्तर्हणनं कोपान्मम शत्रोः करिष्यतः ।
मा कार्षीरन्तरयणं प्रयाणार्हमवेह्यमुम् ॥ १०३ ॥

पापो दुराचारो न प्राणिणिषुर्न जीवितुमिच्छुः अनितेः सनि रूपं प्राग्वन्नोण इत्यादिना वा त्वनेति विभाषया णत्वम् । योऽयं मम्दावनम् अभाङ्क्षीत् भग्नवान् वधां रूपम् ॥ १०१ ॥ भ०

प्राघेत्यादि । मम आम्राणि चूतप्रभृतीनि येन वने प्राघानिषत मारितानि कर्मणि लुङ् चिण्वदिट् होहन्तेरिति घत्वं तपरपरिच्छिन्नाकारपूर्वस्य नकारस्य हन्तेरत्पूर्वस्येति णत्वं न भवति तं पूर्वापकारिणं पापं कथं न प्रहण्मः मारयाम इति वद कथय श्वोर्वेति णत्वम् ॥ १०२ ॥ ज० म०

प्राघेत्यादि । येन ममाम्राणि रक्षांसि चूतप्रभृतीनि रक्षो प्राघानिषत मारितानि कर्मणि टी हनग्रहदृशश्च इति चिण् स्येहोघो ञ्णिति चेति घः हनोऽह्नोऽह्नोणन इत्यत अ इत्युपलक्षणं हस्यान्यथात्वे णत्वाभाव इति बोध्यं तेन घत्वेऽपि णत्वनिषेधः होघत्वे इति णत्वनिषेधार्थं परस्तत्र तं पूर्वापकारिणं पापं कपिं कथं वयं न प्रहण्मः इति त्वं वद प्राग्वन्नोण इत्यादौ मवान्तहन इति पक्षे णत्वं पूर्वापकारिणमिति ऋ्वर्ण इत्यादिना कवर्गवत्त्वात् नित्यं णत्वम् ॥ १०२ ॥ भ०

वेश्मेत्यादि । शत्रोर्वेश्मान्तः गृहमध्य एव हणनं कोपान्मम करिष्यतः अन्तरदेश इति नकारस्य णत्वं हननस्याभावरूपस्यादेशत्वात् अन्तरयणमन्तरायणं विघातं मा कार्षीः अयनञ्चेति णत्वं प्रयाणार्हं दीर्घप्रस्थानार्हममुमवेहि अवगच्छ कृत्यच इति णत्वम् अच उत्तरस्य नकारस्य हस्यत्वात् ॥ १०३ ॥ ज० म०

वेश्मेत्यादि । वेश्मान्तर्गृहमध्ये शत्रोर्हणनं करिष्यतो मम अन्तरयणं विघ्नं त्वं मा कार्षीः न कुरु । हे विभीषण ! अमुं वानरं प्रयाणार्हं दीर्घप्रस्थानार्हं मरणयोग्यम् अवेहि जानीहि अन्तर्हणन-

प्रहीणजीवितं कुर्य्युर्ये न शत्रुमुपस्थितम्।
न्याय्याया अपि ते लक्ष्म्याः कुर्वन्त्याशु प्रहापणम् ॥१०४॥
कः कृत्वा रावणामर्षप्रकोपणमवद्यधीः।
शक्तो जगति शक्रोऽपि कर्तुमायुःप्रगोपणम् ॥ १०५ ॥
वनात्प्रेङ्खणः पापः फलानां परिणिंसकः।
प्रणिश्चिष्यति नो भूयः प्रणिन्धाऽस्मान् मधून्ययम् ॥१०६॥

मिति प्राग्वन्नोम इति णत्वम् अन्तरोऽदेशे इन इति णत्वमिति परः। अन्तरयणमिति खरणसयणत्वम्। अन्तरोऽदेशेऽयनस्येति नत्वमिति परः। प्रयाणार्हमिति नोऽचोऽन्तरदुर्गेभ्यरिति णत्वम् ॥१०२॥ भ०

प्रहीत्यादि। शत्रुमुपस्थितं प्रहीणजीवितं ये न कुर्युः जहातेरोदितश्चेति निष्ठादेशनकारस्य पूर्ववणत्वं ते न्याय्याया अपि कुलक्रमादागताया अपि लक्ष्म्याः प्रहापणं त्याजनं कुर्वन्ति णेर्विभाषेति णत्वम् ॥ १०४ ॥ ज० म०

प्रहीत्यादि। ये उपस्थितं शत्रुं प्रहीणजीवितं त्यक्तप्राणं न न कुर्युः ओहाक् त्यागे दामागैहागिति ङी ओदित्त्वात् तस्य नः नोऽचोऽन्तरदुर्गेभ्यरिति णत्वं ते न्याय्याया न्यायप्राप्ताया अपि लक्ष्म्याः आशु प्रहापणं त्यागं कुर्वन्ति नोऽचोऽन्तरदुर्गेभ्यरित्यादिना अत्रन्तात् प्रत्ये णत्वम् ॥ १०४ ॥ भ०

कः कृत्वेत्यादि। अवद्यधीः योऽबुद्धिः रावणामर्षस्य प्रकोपणमभिवृद्धिं कृत्वा आयुःप्रगोपणं कर्तुं शक्रोऽपि कः शक्तः हलश्चेजुपधादिति णत्वं कुपगुपयोर्हलन्तयोरिगुपधत्वात् ॥ १०५ ॥ ज० म०

क इत्यादि। कोऽवद्यधीर्दुर्बुद्धिः शक्रोऽपि इन्द्रतुल्योऽपि रावणसम्बन्धिक्रोधस्य प्रकोपणमतिवृद्धिं कृत्वा आयुषः प्रगोपणं कर्तुं शक्तः समर्थो भवति नोऽचोऽन्तरदुर्गेभ्यादिना कुपगुपोरिजुङ्त्वात् विभाषया णत्वम् ॥ १०५ ॥ भ०

वनेत्यादि। प्रेङ्खति गच्छतीति प्रपूर्वादिङ्खेः कर्तरि ल्युट् वना-

हरेः प्रगमनं नास्ति न प्रभानं हिमद्रुहः ।
नातिप्रवेपनं वायोर्मया गोपायिते वने ॥ १०७ ॥
दुष्पानः पुनरेतेन कपिना भृङ्गसम्भृतः ।
प्रनष्टविनयेनाग्र्यः स्वादुः पुष्पासवो वने ॥ १०८ ॥

नस्य वनसमीपस्य प्रेङ्खणः इजादेः सनुम इति णत्वं फलानां परिखिंसकः भक्षयिता खिसिचुम्बन इत्यस्य रूपम् अस्मान् प्रखिन्य तिरस्कृत्य भूयः पुनरप्ययं मधूनि नोऽस्माकं प्रखिखिष्यति भोक्ष्यति खिचचुम्बन इत्यस्य रूपं वानिंसविचनिन्दामिति णत्वम् ॥ १०६ ॥ ज० म०

वनान्तेत्यादि । अयं पापोऽस्मान् प्रखिन्य तिरस्कृत्य भूयः पुनरपि मधूनि नः प्रखिखिष्यति न चुम्बिष्यति न भक्षयिष्यतीत्यर्थः कीदृशः वनान्तप्रेङ्खणः वनमध्यग इखिगतो नन्द्यादित्वादनः नोऽचोऽन्तरदुर्गैरित्यादिना इजादेर्दित्वात् णत्वं फलानां परिखिंसकः चुम्बकः भञ्जक इत्यर्थः प्राग्वन्नोणोऽन्तरदुर्गैरित्यादिना निंसनिक्षनिन्दां विभाषया नत्वम् ॥ १०६ ॥ भ०

हरेरित्यादि । मया गोपायिते रक्षिते वने हरेरिन्द्रस्यापि चन्द्रस्य वा प्रगमनं सञ्चारो नास्ति हिमद्रुहः आदित्यस्य न प्रभानं न प्रकर्षेण दीप्तिः वायोर्नातिप्रवेपनं कम्प्रगमनं तदनेन भग्नमित्यर्थात् क्यच इति प्राप्तस्य णत्वस्य न भाभूपूकमिगमीत्यादिना प्रतिषेधः ॥ १०७ ॥ ज० म०

हरेरित्यादि । मया गोपायिते रक्षिते वने हरेरिन्द्रस्यापि चन्द्रस्य वा प्रगमनं सञ्चारो नास्ति हिमद्रुहः सूर्यस्य प्रभानं प्रकृष्टा दीप्तिर्नास्ति वायोरतिप्रवेपनं प्रचण्डगमनं नास्ति सर्वत्र नोऽचोऽन्तरदुर्गैरित्यादौ स्वाभादिवर्जनान्न णत्वम् ॥ १०७ ॥ भ०

दुष्पेत्यादि । पुनरेतेन प्रनष्टविनयेन कपिना पुष्पासवो दुष्पानः दुःखेन पास्यत इति आतो युच् पानदान्तादिति णत्वस्य प्रतिषेधः भृङ्गसम्भृतो भ्रमरसञ्चितः प्रनष्ट इति नशेः षान्तस्येति प्रतिषेधः अग्र्यः श्रेष्ठः ॥ १०८ ॥ ज० म०

रोषभीमसुखेनैवं क्षुभ्नतोक्ते प्लवङ्गमः।
प्रोचे सानुनयं वाक्यं रावणं स्वार्थसिद्धये॥ १०९॥
इति णत्वाधिकारः।
दूतमेकं कपिं बद्धमानीतं वेश्म पश्यतः।
लोकत्रयपतेः क्रोधः कथं तृणलघुस्तव॥ ११०॥

दुष्पान इत्यादि। प्रनष्टविनयेन एतेन कपिना वने भृङ्गेण भ्रमरेण सम्भृतः सञ्चितः श्रेष्ठः अग्र्यः स्वादुर्मिष्टः पुष्पासवः पुनर्दुष्पानः दुःखेन पास्यते मयाद्य ताड़नात् नोऽचोऽन्तरदुर्गेरित्यादौ दुर्नञ्जनाच्च णत्वं नञः क्वे गच्छाजिति यङ् प्राग्वन्नेण इत्यादिना नञः णान्तत्वाभावात् न णत्वम्॥ १०८॥ भ०

रोषेत्यादि। रोषभीमसुखेन इति पदव्यवायेऽपि णत्वप्रतिषेधः भीमसुख इत्यनेन निमित्तनिमित्तिनोर्व्यवधानात् क्षुभ्नादिषु चेति णत्वप्रतिषेधः। एवमुक्ते सति प्लवङ्गमः रावणं प्रोचे वक्तुं प्रवृत्तः वाक्यं वक्ष्यमाणं सानुनयम् अनुकूलं किमर्थं स्वार्थस्य सिद्धये स्वार्थस्य सीताप्रत्यर्पणम्॥ १०९॥ ज० म०

इति णत्वाधिकारः।

रोषेत्यादि। रोषेण भीमं दुष्प्रेक्ष्यं मुखं यस्य तेन क्षुभ्नता कलुषीभवता रावणेन एवमुक्ते सति प्लवङ्गमो हनूमान् स्वार्थस्य सीताप्रत्यर्पणरूपस्य सिद्धये सानुनयमनुकूलं वाक्यं रावणं प्रोचे रोषभीमसुखेनेति पूर्ण इत्यादौ अतद्धादिति अतद्धपदेन नकारवत् पूर्ववर्त्ति निमित्तवदेकमात्रपदं गृह्यते प्रथमदृष्टत्वात् न तु पूर्वपूर्ववर्त्ति यावत् पदं तेनात्र कार्य्यकारणयोर्भीमपदव्यवधानात् न णत्वम् अनाङ्पदव्यवायेऽपीति णत्वनिषेधार्थं परस्तत्वं क्षुभ्नतेति मनीषादित्वात् प्रयुक्तस्य नस्य णत्वनिषेधः॥ १०९॥ भ०

इति णत्वाधिकारः।

इतः प्रभृति प्रकीर्णकश्लोकानाह।

दूतमित्यादि। दूतं सन्देशस्य हारकम् एकमद्वितीयं बद्धम्

अग्न्याहितजनप्रह्वे विजिगीषापराङ्मुखे।
कस्माद्वा नीतिनिष्णस्य संरम्भस्तव तापसे॥ १११॥
न सर्वरात्रकल्याण्यः स्त्रियो वा रत्नभूमयः।
यं विनिर्जित्य लभ्यन्ते कः कुर्य्यात्तेन विग्रहम्॥११२॥

अस्तत्वीकृतं वेश्मानीतं पश्यत इति सर्वमेतच्च रोषकारणम् अतो लोकत्रयपतेस्तवायं तृणवल्लघुरसारः कथं कोपः॥ ११०॥ ज० म०

अथ प्रकीर्णकाः।

दूतमित्यादि। एकमद्वितीयं बद्धं वेश्म गृहमानीतं कपिं दूतं सन्देशहारकं मां पश्यतो लोकत्रयपतेस्तव कथं तृणवत् लघुरसारः क्रोधः॥ ११०॥ भ०

अग्न्येत्यादि। अग्न्याहितजनप्रह्वे आहिताग्नौ जने प्रवणे वाहिताग्न्यादिषु पूर्वनिपातः तस्मिन् विजिगीषापराङ्मुखे त्यक्त-राज्यत्वात् तापसे रामे तपःबहुत्वाभ्यां विनिनी अण्चेत्यण् निष्णस्य तव नीतौ पटुप्रज्ञस्य कस्माद्धेतोः संरम्भः रोषः॥ १११॥ ज० म०

अग्न्येत्यादि। कस्माद्वा तव तापसे रामेः संरम्भः क्रोधः कीदृशे अग्न्याहितजनप्रह्वे याज्ञिकजनेषु नम्रे अग्निराहितो येन सोऽग्न्या-हितः क्तान्तस्य पूर्वनिपात औत्सर्गिकः। अत्र तु आहितादिरग्न्यादे-रिति सूत्रेण क्तान्तस्य विकल्पेन परनिपात इति परः। स्वमते पूर्व-निपातपरनिपातयोरन्वयबोधेन कर्त्तव्यत्वं नियमाभावात् तथात्वे विवक्षाधीनत्वादुभयपदं सिद्धमेव विजिगीषापराङ्मुखे विजेतुमिच्छा विजिगीषा तत्र पराङ्मुखे विगतस्पृहे कीदृशस्य नीतिनिष्णस्य नीतौ पण्डितस्य तस्य॥ १११॥ भ०

न सेत्यादि। यं विनिर्जित्य सर्वरात्रं कल्याण्यः स्त्रियो न लभ्यन्ते सर्वाश्च ता रात्रयश्चेति पूर्वकालेति सः अहः सर्वेत्यादिना अच् सर्वरात्रं कल्याण्य इति सः न रत्नभूमयः रत्नाकराः रत्नानि भूमयश्चेति सः कः तेन सह विग्रहं कुर्य्यात् सन्धिरेव युक्तः॥ ११२॥ ज० म०

सङ्गच्छ रामसुग्रीवौ भुवनस्य समृद्धये ।
रत्नपूर्णाविवाम्भोधी हिमवान् पूर्वपश्चिमौ ॥ ११३ ॥
सुहृदौ रामसुग्रीवौ किङ्कराः कपियूथपाः ।
परदारार्पणेनैव लभ्यन्ते मुञ्च मैथिलीम् ॥ ११४ ॥
धर्मं प्रत्यर्पयन् सीतामर्थं रामेण मित्रताम् ।

न सेत्यादि । यं विनिर्जित्य सर्वरात्रान् व्याप्य कल्याण्यः सुखदाः स्त्रियो रत्नानि भूमयश्च न लभ्यन्ते तेन सह विग्रहं कः पुरुषः कुर्यात् सर्वाश्च ता रात्रयश्चेति सर्वरात्राः ततः सदाध्वादिव्याप्ताविति द्वितीयाविधानात् द्वितीयातत्पुरुषः सर्वैकदेशसंख्यातेति षः तदन्तरात्रिशब्दस्य पुंलिङ्गत्वं पूर्वरात्र इत्युदाहरणेन ज्ञापितम् ॥ ११२ ॥ भ०

तदेव दर्शयन्नाह ।

सङ्गेत्यादि । यथा रत्नपूर्णावम्भोनिधी पूर्वपश्चिमौ भुवनस्य समृद्धये हिमवान् सङ्गतवान् तथा त्वमपि रामसुग्रीवौ भुवनस्य समृद्धये सङ्गच्छ सङ्गतिं कुरु सकर्मकत्वात्समोगमिति तङ् न भवति ॥११३॥ ज०म०

सङ्गेत्यादि । भुवनस्य समृद्धये वृद्धये त्वं रामसुग्रीवौ सङ्गच्छ सकर्मकत्वात् समोगमृच्छेति न सं हिमवान् हिमालयः पर्वतः रत्नैः पूर्णौ पूर्वपश्चिमौ समुद्रौ यथा सङ्गतवान् ॥ ११३ ॥ भ०

तच्च सङ्गतं परदारार्पणेनैवेति दर्शयन्नाह ।

सुहृदित्यादि । रामसुग्रीवौ सुहृदौ लभ्येते सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातनं तत्प्रीतिलाभात् किङ्करा लभ्यन्ते किं कुर्वन्तीति दिवाविभेति टः कपियूथपाः नीलप्रभृतयः तस्मान्मुञ्च मैथिलीमिति ॥ ११४ ॥ ज० म०

सुहृदित्यादि । रामसुग्रीवौ सुहृदौ त्वया लभ्येते एवं सति कपियूथपा नीलादयः किङ्करा लभ्यन्ते परस्त्रीसमर्पणेनैव नतु स्वकीयकिञ्चिद्द्रव्यप्रदानेन तस्मान्मैथिलीं मुञ्च त्यज ॥ ११४ ॥ भ०

किञ्च सीताप्रत्यर्पणात् पुरुषार्थप्राप्तिरिति दर्शयन्नाह ।

धर्ममित्यादि । सीतां प्रत्यर्पयन् धर्मम् अधर्मविरतेः अर्थं रामेण

कामं विश्वासवासेन सीतां दत्त्वाप्नुहि त्रयम् ॥ ११५॥
विराधताड़काबालिकबन्धखरदूषणैः ।
न च न ज्ञापितो यादृङ्मारीचेनापि ते रिपुः ॥ ११६॥
खरादिनिधनञ्चैव मा मंस्था वैरकारणम् ।
आत्मानं रक्षितुं यस्मात् कृतं तन्न जिगीषया ॥ ११७॥

मित्रतां सर्वलाभानामर्थसम्पन्नमित्रलाभस्य महत्त्वात् विश्वासवासेन रामविश्वासपूर्वकेणावस्थानेन कामम् अतः सीतां दत्त्वा आप्नुहि लभस्व त्रयं त्रिवर्गं त्रयोऽवयवा अस्येति द्वित्रिभ्यां तयस्यायज्वा ॥ ११५॥ ज० म०

सीतार्पणेन त्रिवर्गप्राप्तिं दर्शयति ।

धर्ममित्यादि । सीतां दत्त्वा त्रयं त्रिवर्गम् आप्नुहि लभस्व यथा सीतां प्रत्यर्पयन् धर्मं प्राप्स्यसि परस्त्रीहरणाभावात् रामेण सह मित्रतामर्थं प्राप्स्यसि विश्वासवासेन कामं प्राप्स्यसि त्रयोऽवयवा अस्येति द्वित्रिभ्यामयट् ॥ ११५ ॥ भ०

रिपुरेवास्तु किन्तेन मित्रीकृतेन न चासौ शक्तोऽपकर्त्तुमिति चेदाह ।

विराधेत्यादि । यादृगसौ रिपुः तादृग्विराधादिभिः न च न ज्ञापितः तव अपितु ज्ञापित एवेत्यर्थः तस्मात्तेन सह मैत्री युक्ता न विग्रह इति भावः यादृगिति त्यदादिषु दृश इति किन् आसर्वनाम्नः ॥ ११६ ॥ ज० म०

शत्रुरपि रामः किं कर्त्तुं शक्नोतीत्यत आह ।

विराधेत्यादि । तव रिपुर्यादृक् विराधाद्यैर्मारीचेन च न न ज्ञापितः अपितु ज्ञापित एव ॥ ११६ ॥ भ०

खरादीन् व्यापादयता तेनैव वैरकारणमाचरितं न मयेति चेदाह ।

खरेत्यादि । खरादिनिधनञ्चापि वैरकारणं मा मंस्थाः मा ज्ञासीः लुङि रूपम् यस्मादात्मानं संरक्षितुं तत् खरादिनिधनं कृतं न तु जिगीषया विजेतुमिच्छया ॥ ११७ ॥

खरादीत्यादि । खरप्रभृतिविनाशमपि विरोधबीजं त्वं मा मंस्थाः

ततः क्रोधानिलापातकम्प्रास्याम्भोजसंहतिः ।
महाह्रद इव क्षुभ्यन् कपिमाह स्म रावणः ॥ ११८ ॥
हतराक्षसयोधस्य विरुग्णोद्यानशाखिनः ।
दूतोऽस्मीति ब्रुवाणस्य किं दूतसदृशं तव ॥ ११९ ॥
पङ्गुबालस्त्रियो निघ्नन् कबन्धखरताडकाः ।
तपस्वी यदि काकुत्स्थः कीदृक् कथय पातकी ॥ १२० ॥

मा ज्ञासीः स्वां रूपं यस्मात् आत्मानं रक्षितुं तत् कृतं न तु जेतु-
मिच्छया ॥ ११७ ॥ भ०

तत इत्यादि । ततः कपिवाक्यानन्तरं क्रोधोऽनिल इव तस्यापा-
तेन संश्लेषेण कम्प्रा कम्पनशीला आस्याम्भोजानां मुखपद्मानां संहति-
र्यस्य स एवं महाह्रद इव क्षुभ्यन् चलन् दैवादित्याच्छ्रन् ॥ ११८ ॥
ज० म०

तत इत्यादि । कपिवचनानन्तरं रावणो महाह्रद इव क्षुभ्यन्
सञ्चलन् कपिमाह स्म उक्तवान् की स्मेनातीते इति की मश्चतिप्रञ्च-
स्वाहस्येति ब्रूञस्तिपो णप आहादेशश्च कीदृशः क्रोधोऽनिल इव
तस्यापातेनागमनेन संश्लेषेण कम्प्रा कम्पनशीला मुखपद्मानां संहति-
र्यस्य स तथा अतएव ह्रदतुल्यता ॥ ११० ॥ भ०

हतेत्यादि । हताः राक्षसयोधाः अक्षप्रभृतयो येन विरुग्णाः
भग्नाः ओदितश्चेति निष्ठानत्वम् उद्यानशाखिनो येन तस्यैवंविधस्य तव
दूतोऽस्मीति ब्रुवाणस्य किं दूतसदृशं सन्देशमात्रस्य प्रापका हि दूता
इति भावः ॥ ११९ ॥ ज० म०

हतेत्यादि । हे वानर ! अहं दूतोऽस्मीति ब्रुवाणस्य तव किं
कर्म दूतसदृशं न किमपि दूता हि सन्देशप्रापका भवन्ति तव कीदृशस्य
हता राक्षसयोधा येन विरुग्णा उद्यानवृक्षा येन स तस्य ॥११९॥ भ०

अग्न्याहितजनप्रह्वे तापसे कस्मात् संरम्भ इत्याह ।

पङ्गुबालेत्यादि । पङ्गुमङ्गविकलं कबन्धं बालं खरं स्त्रियं ताड़कां

अभिमानफलं जानन् महत्त्वं कथमुक्तवान् ।
रत्नादिलाभशून्यत्वान्निष्फलं रामविग्रहम् ॥ १२१ ॥
परस्त्रीभोगहरणं धर्म एव नराशिनाम् ।
सुखमस्तीत्यभाषिष्ठाः का मे साशङ्कता त्वयि ॥ १२२ ॥

निघ्नन् व्यापादयन् यदि तपस्वी काकुत्स्थः कीदृक् पातकीति कथय इदं किमोरोगकी ॥ १० ॥ ज० म०

कस्मात् धर्म्मस्तव तापसे इत्यस्योत्तरमाह ।

पङ्गुवालेत्यादि । पङ्गुं कवन्धं बालं खरं स्त्रियं ताड़काञ्च निघ्नन् रामो यदि तपस्वी तदा पातकी कीदृगिति त्वं कथय ॥ १२० ॥ भ०

यदुक्तं यं विनिर्जित्य स्त्रियो रत्नभूमयश्च न लभ्यन्त इत्याह ।

अभीत्यादि । अभिमानः फलं यस्य महत्त्वस्य तज्जानन् रत्नादिलाभशून्यं रामविग्रहं कथं निष्फलमुक्तवानसि विग्रहे सति अभिमानफलं महत्त्वं स्यात् ॥ १२१ ॥ ज० म०

न सर्वरात्नकल्याण्य इत्यादि यदुक्तं तदुत्तरमिदम् ।

अभीत्यादि । अभिमानमेव फलं यस्य तन्महत्वं जानन् त्वं कथं रामविग्रहं रत्नादिलाभशून्यत्वात् निष्फलम् उक्तवान् अभिमानस्य फलत्वात् ॥ १२१ ॥ भ०

सीतां प्रत्यर्पयन् धर्मभाग्भवतीत्येतदप्ययुक्तमित्याह ।

परेत्यादि । परस्त्रीणां हरणं परेषाम्भोगहरणञ्च द्वयमपि नराशिनां धर्म एव आचार एव अतो सुखमस्तीत्यभाषिष्ठाः अभिहितवानसीति सीतां प्रत्यर्पयन् धर्मभाग्भवतीति लुङि रूपं भयात् प्रत्यर्पयसि चेदाह का मे साशङ्कता त्वयीति त्रैलोक्यविजयित्वात् त्वयीति हनूमद्व्यपदेशेन रामं सूचयति ॥ १२२ ॥ ज० म०

धर्मं प्रत्यर्पयन् सीतामित्यादि यदुक्तं तदप्ययुक्तमित्याह ।

परेत्यादि । परेषां स्त्रीणां भोगानाञ्च यद्धरणं तदेव नराशिनां राक्षसानां धर्म आचारः अतएव सुखमस्ति इति हेतोः सीतां प्रत्यर्पयन् धर्मभित्यादि अभाषिष्ठाः उक्तवानसि मां रूपं भयात् सीतां प्रत्यर्पयि-

ब्रूहि दूरविभिन्नानामृद्धिशीलक्रियान्वयैः।
हनूमन्! कीदृशं सख्यं नरवानररक्षसाम्॥ १२३॥
एको द्वाभ्यां विराधस्तु जिताभ्यामविवक्षितः।
हतश्छलेन मूढोऽयं तेनापि तव कः स्मयः॥ १२४॥
मन्नियोगाच्च मारीचः पलायनपरायणः।

ष्यति चेदाह का मे मम त्वयि साशङ्कता भगवत्ता त्रैलोक्यविजयित्वात् त्वयीति रामव्यपदेशेन हनूमतीति॥ १२२॥ म०

सङ्गच्छ रामसुग्रीवावित्येतदपि न घटत इत्याह।

ब्रूहीत्यादि। ऋद्ध्या विभूत्या शीलेन स्वभावेन क्रियया अनुष्ठानेन अन्वयेन कुलेन दूरविभिन्नानां नरादीनां कीदृशं सख्यमिति हनूमन्! त्वमेव ब्रूहि॥ १२३॥ ज० म०

सङ्गच्छ रामसुग्रीवाविति यदुक्तं तदप्ययुक्तमित्याह।

ब्रूहीत्यादि। हे हनूमन्! त्वमेव ब्रूहि नरवानरराक्षसानां सख्यं कीदृशं कीदृशानाम् ऋद्ध्या सम्पत्त्या शीलेन स्वभावेन क्रियया अनुष्ठानेन अन्वयेन कुलेन चातिविभिन्नानाम्॥ १२३॥ म०

विराधादिभिर्ज्ञापितोऽसि यादृगरिरित्यत्रोत्तरमाह।

एक इत्यादि। एकेनापि विराधेन प्रथमं द्वावपि जितौ ताभ्यां पश्चाज्जतः तत्रापि न प्रकाशम् अपि तु छलेन यतोऽसौ मूढोऽल्पबुद्धिः तथाप्यविवक्षितः शौर्यादिना प्रतीतः तेनापि हतेन तव विस्मयो जातः॥ १२४॥ ज० म०

विराधादिभिर्न च न ज्ञापितो यादृगित्यस्योत्तरमिदम्।

एक इत्यादि। एकेनापि विराधेन द्वावपि जिताविति जिताभ्यां द्वाभ्यां पश्चात् छलेन विराधोऽपि हतः यतोऽसौ मूढः अल्पबुद्धिः एकोऽद्वितीयः अविवक्षितः अप्रसिद्धः शौर्येणाप्रथितो वा तेनापि हतेन तव को विस्मयो जातः॥ १२४॥ म०

मन्नीत्यादि। मारीचस्तु यतो राममपहरन् ममार मन्नियोगा-दादेशात् पलायनपरायणः अपसर्पणनिष्ठः सन् पलायनपरायण इति

युयुत्सारहितो रामं ममारापहरन् वने ॥ १२५ ॥

निजघानान्यसंसक्तं सत्यं रामो लताप्लवगम् ।
त्वमेव ब्रूहि सञ्चिन्त्य युक्तं तन्महतां यदि ॥ १२६ ॥

पुंसा भक्ष्येण बन्धूनामात्मानं रक्षितुं बधः ।
क्षंस्यते दशास्येन कथेयं तव दुर्मतिः ॥ १२७ ॥

परस्य नामरूपत्वादनुपसर्गत्वान्न षत्वं युयुत्सारहितः योद्धुमिच्छारहितः मद्वियोगादिति प्रत्ययोत्तरपदयोश्चेति त्वमदो मदादेशः ॥ १२५ ॥ ज० म०

मारीचेन च ज्ञापित इत्यस्योत्तरमाह ।

मदित्यादि । मारीचस्तु मन्निदेशतः पलायनतत्परः सन् वने रामम् अपहरन् योद्धुमिच्छया रहितो ममार तेन तव को विस्मय इति भावः ॥ १२५ ॥ म०

निजघानेत्यादि । रामो लताप्लगं वानरं बालिनं निजघानेति सत्यमेतत् किन्तु अन्यसंसक्तं सुग्रीवेण सह युध्यमानं हतवान् तत्त्वमेव सञ्चिन्त्य ब्रूहि युक्तं तन्महतां यदि ॥ १२६ ॥ ज० म०

बालिवधोऽप्ययुक्त इत्याह ।

निजेत्यादि । लताप्लगं बालिनं रामो निजघान कीदृशम् अन्यसंसक्तं सुग्रीवेण सह युध्यमानं सत्यं साधु सत्यं तथ्यं वा निजघानेत्यनेन ब्रूहीत्यनेन वा सम्बन्धः, हे हनूमन् ! त्वमेव सञ्चिन्त्य ब्रूहि तद्यदि महतां युक्तम् ॥ १२६ ॥ म०

पुंसेत्यादि । आत्मानं रक्षितुं पुंसा भक्ष्येण भक्षणार्हेण सता बन्धूनां खरदूषणादीनां बधो दशास्येन क्षमिष्यते सहिष्यते कथेयं कथमेयं तव दुर्मतिर्दुष्टबुद्धिः कथच्छादव्ययात्यप् क्षमेश्चकतसितेष्व इति परिगणनात् ॥ १२७ ॥ ज० म०

आत्मानं गोपितुं यस्मादिति यदुक्तं तस्योत्तरमाह ।

पुंसेत्यादि । भक्ष्यार्हेण पुंसा रामेण आत्मानं रक्षितुं बन्धूनां खरदूषणादीनां बधो मारणं दशास्येन क्षमिष्यते सहिष्यते इयं तव

कपिर्जगाद दूतोऽहमुपायं तव दर्शने ।
द्रुमराक्षसविध्वंसमकार्षं बुद्धिपूर्वकम् ॥ १२८ ॥
आत्रिकूटमकार्षुर्ये त्वत्का निर्जङ्गमं जगत् ।
दशग्रीव ! कथं ब्रूषे तानबध्यान् महीपतेः ॥ १२९ ॥

दुर्मतिः दुर्बुद्धिः कत्था कभवा कुत आतेत्यर्थः त्यताद्यचिरेत्यादिना त्वः ॥ १२७ ॥ भ०

इदानीं कपिर्दशाननोक्तं दूषयन्नाह ।

कपिरित्यादि । तव दर्शने अन्य उपायो नास्तीति बुद्धिपूर्वकं बुद्ध्वा निश्चित्य द्रुमभङ्गं राक्षसविनाशञ्च उपायमकार्षं कृतवानस्मीति कपिर्जगाद अन्यथा दूतोऽहमागत इति मदावलिप्तः को मां गणयेत् अतः सद्यमेव मया कृतमिति ॥ १२८ ॥ ज० भ०

इदानीं रावणोक्तं क्रमेण दूषयन् कपिराह तत्र प्रथमं किं दूत-सद्यं तवेत्यस्योत्तरमाह ।

कपिरित्यादि । कपिर्जगाद किं तदित्याह दूतोऽहं तव दर्शने द्रुमाणां राक्षसानाञ्च विनाशरूपमुपायम् अकार्षं कृतवानस्मि बुद्धि-पूर्वकं बुद्ध्वा निश्चित्य अन्यथा दूतोऽयमागत इति को मां गणयेत् अतः सद्यमेव कृतमिति ॥ १२८ ॥ भ०

आत्रीत्यादि । हे दशमूर्द्धन् ! ये त्वत्काः त्वद्गामणीकाः कबन्धा-दयः स एषां ग्रामणीरिति कन् आत्रिकूटं त्रिकूटपर्वतमभिव्याप्य जगत् निर्जङ्गमं निर्जन्तुकमकार्षुः तान् महीपतेः रामस्य कथमबध्यान् ब्रूषे अशिष्टनिग्रहो हि महीपतेर्धर्मः जङ्गम इति गमेर्यङ्लुगन्त-स्यापि रूपम् ॥ १२९ ॥ ज० भ०

पङ्कुबातस्त्रिय इत्यादि यदुक्तं तदुत्तरमाह ।

आत्रीत्यादि । ये त्वत्कास्त्वदीयकाः कबन्धादयस्त्रिकूटपर्वतमभि-व्याप्य जगत् निर्जङ्गमं निर्जन्तुकम् अकार्षुः कृतवन्तः तत्स्वामिनि स्वर्ग त्वां सेवन्त इति ढघेकादिति कः त्वमेव मुख्यो येषामिति वा तवामी इति मा विकारसंघेत्यादिना कः युष्मदस्मदोस्त्वाहावित्यादिना एकत्वे

अभिमानफलं प्रोक्तं यत्त्वया रामविग्रहे।
विनेशुस्तेन शतशः कुलान्यसुररक्षसाम्॥ १३०॥
यत् स्वधर्ममधर्मं त्वं दुर्बलं प्रत्यपद्यथाः।
रिपौ रामे च निःशङ्को नैतत् क्षेमङ्करञ्चिरम्॥ १३१॥
अन्वयादिविभिन्नानां यथा सख्यमनीप्सितम्।
नैभीर्विरोधमप्येवं सार्द्धं पुरुषवानरैः॥ १३२॥

त्वदादेशः, हे दशग्रीव! तान् महीपते राज्ञो रामस्यावध्यान् कथं ब्रूषे अभिष्टनिग्रहो हि महीपतेर्धर्मः॥ १२९॥ म०

अभीत्यादि। मा भूद्रामविग्रहे रत्नादिलाभः अभिमानफलं महत्त्वमस्तीति यत्त्वया प्रोक्तं तेन निमित्तेन शतशोऽनेकशः असुररक्षसां कुलानि विनेशुः विनष्टानि॥ १३०॥ ज० म०

अभीत्यादि। मा भूद्रामविग्रहे रत्नादिलाभोऽभिमानफलं महत्त्वमस्तीति यत्त्वया प्रोक्तं तेन हेतुना शतशः शतं शतम् असुराणां रक्षसाञ्च कुलानि विनेशुर्विनष्टानि॥ १३०॥ म०

यत् स्वेत्यादि। यदधर्मं परस्त्रीभोगहरणं दुर्बलम् असारम् अश्रेयसाम् आवाहकत्वात् स्वधर्ममात्मीयमाचारं त्वं प्रत्यपद्यथाः प्रतिपन्नवानसि स्वधर्म एव नराधिनामिति लङि थासि रूपं यच्च रिपौ रामे निःशङ्कः निर्भयः विहरसि का मे साशङ्कता त्वयीति तदेतदुभयमपि न चिरं क्षेमङ्करं कल्याणकरं क्षेमप्रियमद्रोऽच्चेति खच्॥१३१॥ ज०म०

यदित्यादि। परस्त्रीभोगहरणं यत् स्वधर्ममात्मीयमाचारं धर्मरहितं दुर्बलमसारं प्रत्यपद्यथाः प्रतिपन्नवानसि यच्च रामे रिपौ त्वं निःशङ्कः निर्भयः का मे साशङ्कता त्वयीत्युक्तवान् तदेतदुभयं चिरं क्षेमङ्करं कल्याणदायकं न भविष्यति क्षेमप्रियमद्रात् कुर्वेति खः॥ १३१॥ म०

अन्वेत्यादि। यथा नरादीनाम् अन्वयादिभिर्द्दूरविभिन्नत्वात्

विराधं तपसां विघ्नं जघान विजितो यदि ।
वरो धनुर्भृतां रामः स कथं न विवक्षितः ॥ १२३ ॥
प्रपश्यन्नपि नाशक्नोदत्येतुं बाणगोचरम् ।
त्वयैवोक्तं महामायो मारीचो रामहस्तिनः ॥ १२४ ॥

सख्यमनीप्सितम् आमुमनिष्टम् एवं पुरुषवानरैः सार्द्धं विग्रहमपि नैषीः नेष्टवानसि ॥ १२२ ॥ ज० म०

ब्रूहि दूरविभिन्नानामित्यादि यदुक्तं तदुत्तरमिदम् ।

अन्वयेत्यादि । अन्वयादिविभिन्नानां नरवानररक्षसां यथा सख्यमनीप्सितं नेष्टं विरोधमप्येवं पुरुषवानरैः सह नैषीः न इच्छ सायोगेटो ॥ १२२ ॥ भ०

विरेत्यादि । तपसां विघ्नं विराधं विहन्यतेऽस्मिन्निति घञर्थे कविधानमिति कः । तादृक् छलेनापि हन्तुं न दोषायेति दर्शयति धनुर्भृतां वरः श्रेष्ठः सन् विजितोऽभिभूतोऽपि रामो यदि जघान स कथं न विवक्षितः यतो राममप्यसौ जितवान् ॥ १२३ ॥ ज० म०

एको द्वाभ्यामिति यदुक्तं तदुत्तरमाह ।

विराधमित्यादि । धनुर्धराणां श्रेष्ठोऽपि रामः आदौ विजितोऽभिभूतोऽपि सन् पश्चात्तापसां विघ्नमन्तरायं विराधं यदि जघान तदा कथं स विराधो न विवक्षितः न प्रसिद्धः अपि तु विवक्षित एव स राम इत्यन्ये विहन्यतेऽस्मिन्निति विघ्नः अभिधानादाधारे टक् ॥ १२३ ॥ भ०

प्रपेत्यादि । मारीचः प्रपश्यन्नपि पलायनपरोऽपि सन् महामायः कनकमृगरूपधारित्वात् रामहस्तिनः रामो हस्तीव तस्य बाणगोचरं बाणपदवीम् अत्येतुम् अतिक्रमितुं नाशक्नोत् न शक्तवानिति त्वयैवोक्तं ममारेत्यभिदधता न मया यदि शक्नोति अतिक्रमितुं न ममार ॥ १२४ ॥ ज० म०

मन्नियोगाच्च मारीच इत्यादि यदुक्तं तदुत्तरमाह ।

प्रपश्यन्नित्यादि । महती माया यस्य स मारीचः प्रपश्यन्नपि

अन्यासक्तस्य यद्वीर्य्यं न त्वं स्मरसि वालिनः।
मूर्च्छावान् नमतः सन्ध्यां ध्रुवं तद्बाहुपीडितः॥१२५॥
असद्बन्धुवधोपज्ञं विमुञ्च बलिविग्रहम्।
सीतामर्पय नन्तव्ये कोषदण्डात्मभूमिभिः॥१२६॥

वलायमानोऽपि रामहस्तिनो बाणगोचरं बाणपदवीम् अत्येतुम् अतिक्रमितुं न अशक्नोत् न शक्तोऽभूत् इति तु त्वयैवोक्तं रामो हस्तीव बलवत्त्वात् एतेन रामस्य धन्विश्रेष्ठत्वमस्त्येवेति सूचितम्॥१२४॥ भ०

अन्येत्यादि। सन्ध्यादेवतां नमतः अन्यासक्तस्य वालिनो यद्वीर्य्यं सामर्थ्यं तत् ध्रुवमवश्यं त्वं न स्मरसि न चेतयसि कुतः बाहुपीडितः सन् मूर्च्छावान् जातः अतएव न स्मरसि येनैवमुक्तवानसि॥१२५॥ज०म०

निजघानान्यसंसक्तमित्यादि यदुक्तं तदुत्तरमाह।

अन्येत्यादि। अन्यासक्तस्य वालिनो यद्वीर्य्यं तत्त्वं ध्रुवं न स्मरसि कीदृशस्त्वं सन्ध्यां नमतो वन्दमानस्य तस्य बाहुपीडितः सन् मूर्च्छावान् एतेन वालिवधेऽपि सहृत्त्वमस्तीति सूचितम्॥१२५॥ भ०

निजघानान्यसंसक्तमिति उपसंहरन्नाह।

असदित्यादि। यतो बलवद्भ्योऽपि बलीयान् रामः तस्माद्बलिना रामेण सह विग्रहं विमुञ्च त्यज कीदृशं बन्धुवधोपज्ञं प्रथमतो ज्ञातिविनाशेन विदितमित्यर्थः उपज्ञायत इत्युपज्ञा इगुपधेति कः बन्धुवधस्योपज्ञेति सः उपज्ञोपक्रममिति नपुंसकलिङ्गता तत् सामानाधिकरण्यादसदिति नपुंसकलिङ्गता नन्तव्ये प्रणामार्हे कोषदण्डात्मभूमिभिः सह सीतामर्पय॥१२६॥ ज० म०

असदित्यादि। तस्मात् बलिना रामेण सह विग्रहं विरोधं विमुञ्च त्यज कीदृशम् असतां बन्धूनां बधस्य उपज्ञं प्रथमतो ज्ञातिबधेनावेदितमित्यर्थः उपज्ञायते यत इत्युपज्ञ स्यात् इति ङः परमते उपज्ञोपक्रमयोरादिकथने क्लीवत्वं तन्मते असतां बन्धूनां बधस्य उपज्ञा प्रथमतो ज्ञानं यस्मादिति बहुव्रीहिः एतेन रावणस्य बन्धुबधो न

स्फुटपरुषमसह्यमित्थमुच्चैः
सदसि मरुत्तनयेन भाष्यमाणः।
परिजनमभितो विलोक्य दाहं
दशवदनः प्रदिदेश वानरस्य ॥ १२७ ॥

इति प्रकीर्णकाः।

इति भट्टिकाव्येऽशोकवनप्रभञ्जनं नाम
नवमः सर्गः।

भविष्यतीति यत् ज्ञानमासीत् बलिविग्रहेण तदभाव इति सूचितं तस्मात् न नत्व्ये प्रणम्ये रामे कोपादिभिः सीतां समर्पय ॥ १२६ ॥ भ०

स्फुटेत्यादि। इत्थं स्फुटपरुषम् उक्तप्रकारेण स्फुटं स्पष्टं परुषं रूक्षम् अतएवासह्यं सोढुमशक्यम् उच्चैर्महता ध्वनिना सदसि सभायां मरुत्तनयेन भाष्यमाणोऽभिहितः इत्थमित्यनेन वस्तुनः परिसमापितत्वात् तेन वर्त्तमानसामीप्य इति लट् परिजनमभितः उभयपार्श्वे स्थितान् भृत्यान् विलोक्य वानरस्य दाहं प्रदिदेश आदिष्टवान् ॥ १२७ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे चतुर्थः परिच्छेदः।
काव्यस्य मारुतिसंयमो नाम नवमः सर्गः।

स्फुटेत्यादि। इत्थमुक्तप्रकारेण स्फुटं स्पष्टं परुषं रूक्षम् अतएवासह्यम् उच्चैर्महता ध्वनिना सदसि सभायां मरुत्तनयेन हनूमता भाष्यमाण उक्तः सन् अभित उभयपार्श्वे परिजनं विलोक्य दशवदनो रावणो वानरस्य दाहं प्रदिदेश आदिष्टवान् ॥ १२७ ॥ भ०

इति प्रकीर्णकाः।

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लिकात्मजश्रीभरतसेनविरचितायां भट्टिटीकायां मुग्धबोधिन्यां नवमः सर्गः।

समाप्तमधिकारकाण्डम्।

———

# दशमः सर्गः ।

अथ स वल्कदुकूलकुथादिभिः परिगतो ज्वलदुद्धतबालधिः ।
उदपतद्दिवमाकुललोचनैर्नृरिपुभिः सभयैरभिवीक्षितः ॥१॥

अनुप्रासवत् ।

शब्दलक्षणपुक्तमपि लक्षयन् काव्यलक्षणार्थं प्रसन्नकाण्डमुच्यते काव्यस्यात्र प्रसन्नत्वात् प्रथमश्चेदं लक्षणं यत् प्रसन्नतानाम अविद्वदङ्ग-नाबालप्रतीतार्थं प्रसन्नवदिति शब्दलक्षणं पुनः प्रकीर्णमेव द्रष्टव्यं तत्रा-स्मिन् काण्डे चत्वारः परिच्छेदाः अलङ्कारमाधुर्य्यप्रदर्शनदोषाः भाषा-समावेशश्चेति तत्रालङ्कारो द्विविधः शब्दालङ्कारोऽर्थालङ्कारश्चेति तत्र पूर्वो द्विविधः अनुप्रासो यमकश्चेति उभयं दर्शयन्नाह ।

अथेति । अथ दाहादेशानन्तरं स वानरो वियदाकाशमुदपतत् उत्पतितवान् वल्कम् अंशुकं शुल्कावल्कोल्का इति निपातनम् आदि-शब्दादन्यैरपि मुञ्जादिभिः परिगतः परिवेष्टितः ज्वलन्नुद्धत ऊर्द्ध्वीकृतो बालधिः पुच्छं यस्य सः न्टरिपुभिः राक्षसैः सभयैराकुललोचनैरभि-वीक्षितः किमयमनुष्ठास्यतीति अनुप्रासवदिति अनुप्रासो यस्मिन् विद्यत इति तस्य च लक्षणं सरूपवर्णविन्यासमनुप्रासं प्रचक्षत इति ॥ १ ॥ ज० म०

अथ प्रकीर्णकशब्दलक्षणमुक्तं काव्यं लक्षयन् प्रसन्नकाण्डमारभते काव्यस्यात्र प्रसन्नत्वात् प्रसादः शब्दार्थयोर्गुणविशेषः तत्रास्मिन् काण्डे चत्वारः परिच्छेदाः अलङ्कारस्य माधुर्य्यादिगुणस्य भाविकस्य भाषासमा-वेशस्य च दर्शनात् काव्यशोभाजनकोऽलङ्कारः स च द्विविधः शब्दा-लङ्कारोऽर्थालङ्कारश्च तत्र पूर्वो द्विविधः अनुप्रासो यमकश्च तत्र प्रथम-मनुप्रासशब्दालङ्कारं प्रदर्शयति ।

अथेत्यादि । दाहादेशादनन्तरं स वानरो वियदाकाशम् उदपतत् उद्गतवान् कीदृशः वल्कैस्तरुविशेषत्वग्भिर्दुकूलैः क्षौमैः कुथैश्चित्रकम्बलैः

रणपण्डितोऽग्र्यविबुधारिपुरे
कलहं स रामसहितः कृतवान् ।
ज्वलदग्नि रावणगृहञ्च बलात्
कलहंसराममहितः कृतवान् ॥ २ ॥

युक्पादयमकम् ।

आदिशब्दात् कुशादिभिश्च परिगतो वेष्टितः ज्वलन् उद्धत उद्दीप्तो बालधिः पुच्छं यस्य सः तथा न्दरिपुभिः राक्षसैरभिवीक्षित आभि-मुख्येन भावितः कीदृशैः किमयं करिष्यतीति सभयैस्त्रासयुक्तैः अतएव आकुललोचनैः आकुलानि इतस्ततः परिक्षिप्तानि लोचनानि येषां वल्कं वल्कलमस्त्रियामित्यमरः । कार्पासं वादरं प्रोक्तं दुकूलाद्यञ्च वल्कलमित्यमरमाला । कुथपदस्थाने कुशपदं केचित्पठन्ति । वालहस्तश्च बालधिरित्यमरः । द्रुतविलम्बितनाम वृत्तमिदं तल्लक्षणं यथा द्रुत-विलम्बितमाह नभौ भराविति । अनुप्रासवदिति अनुप्रासो विद्यते-ऽस्मिन्निति मोऽङ्गसञ्ज्ञकपादतुरिति वतुः वर्णानुवृत्तिरनुप्रासः तथाच वर्णानामनुवृत्तिर्या नातिदूरान्तरस्थितिः । अनुप्रासः स तेनैव सनाथा काव्यपद्धतिरिति । सरूपवर्णविन्यासमनुप्रासं प्रचक्षत इति च अनु-प्रासो द्विविध उद्भटानुप्रासश्छेकानुप्रासश्च अनेकस्य वर्णस्य सकृत् सादृश्यं छेकानुप्रासः स एवोत्कृष्टत्वादिह प्रदर्शितः ॥ १ ॥ भ०

यमकस्यापि लक्षणम् । तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम् । वर्णानां यः पुनर्वादो यमकं तन्निरूप्यते ॥ इति । तदनेकविधं दर्शयन्नाह

रणेति । स कपिः वियदुत्पतितो राममहितो रामपूजितः रणपण्डितो युद्धकुशलः अग्र्यविबुधारिपुरे अग्र्यो यो विबुधः इन्द्रः तस्य यो रिपुर्दशाननस्तस्य पुरे लङ्कायां कलहं कृतवान् कलहंसान् रमयतीति कलहंसरामं रमेर्ण्यन्तात् कर्मण्यण् तादृशं रावणगृहं बलाद्धार्ष्ट्यमाश्रित्योऽपि ज्वलदग्नि दीप्यमानपावकं कृतवान् कृतं विद्यते यस्येति कृतापेक्षीत्यर्थः । अहितः शत्रुः । युक्पादयमकमिति युजो-र्द्वितीयचतुर्थयोः पादयोर्यमितत्वात् ॥ २ ॥ ज० म०

निखिला भवन्न सहसा सहसा ज्वलनेन पूः प्रभवता भवता ।
वनिताजनेन वियता वियता त्रिपुरापदं नगमिता गमिता ३

पादान्तयमकम् ।

अथ यमकान्युच्यन्ते तल्लक्षणं यथा तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम् । वर्णानां य पुनर्वादो यमकं तन्निरुच्यत इति । अस्य भेदा बहवः काव्यप्रकाशादौ दर्शिताः केचनात्र दर्शिताः तत्र प्रथमं युक्पादयमकं दर्शयति ।

रणेत्यादि । अपरस्य श्रेष्ठस्य विबुधस्य इन्द्रस्य योऽरिः शत्रुर्दशाननः तस्य पुरे लङ्कायां स कपिः कलहं युद्धं कृतवान् रावणस्य गृहं ज्वलदग्नि दीप्यमानपावकं बलाद्धार्य्यमाणोऽपि कृतवान् चकार रावणगृहं कीदृशं कलहंसरामं कलहंसेन कादम्बेन राममभिरामं कलहंसान् रमते रमयतीति अन्तर्भूतण्यर्थाद्रमेः ढात् पश्चिति षञ् वा कलहंसा रमन्तेऽत्रेत्याधारे घञ् वा यद्वा बलेन रूपेण अतः अतन्यो गृहन्त्यः कलहंसरामा राजपत्न्यो यत्र गृहे तत्तथा स कीदृशः रणपण्डितः युद्धकुशलः रामसहितः रामेण महितः पूजितः मह पूजे ज्ञानेच्छार्थेत्यादिना वर्त्तमानविहितः क्तो भूतक्तस्य बाधक इति केचित् । वस्तुवस्तु भूते कर्मणि क्तः अग्रुवन्धादिभ्यो वर्त्तमानक्तेनातीतक्तस्य बाधेन प्रमाणमिति कातन्त्रटीकाकृतामुक्तम् अहितः शत्रुर्यातुधानानाम् यस्य विष्णोरामरूपस्य हित इति वा कृतवान् कृती कार्य्यक्षः हिंसावान् वा बलं गन्धे रसे रूपे स्थामनि स्थौल्यसैन्ययोरिति रभसः । कलहंसस्तु कादम्बे राजहंसे न्पोत्तमे इति मतं युगेऽपि हिंसायां पर्य्याप्ते विहिते कृते इति च विश्वः । युक्पादयमकमिति युजोर्द्वितीयचतुर्थयोः पादयोर्यमकितत्वात् । तथाच द्वितीये च चतुर्थे च यमकम् यत्र दृश्यते । युक्पादयमकं तत्तु विज्ञेयं कविपुङ्गवैरिति ॥ २ ॥ भ०

निखीत्यादि । ज्वलनेनाग्निना प्रभवता उद्भिद्गच्छता भवता समुत्पद्यमानेन सहसा तत्क्षणं पूः पुरी निखिला सर्वा न सहसा अभवत् सानन्दा न जाता हासस्यानन्दकार्य्यत्वात् एवमुक्तं स्वनहसो-

सरसां सरसां परिमुच्य तनुं
पततां पततां ककुभो बहुशः ।
सकलैः सकलैः परितः करुणैः
रुदितैरुदितैरिव खं निचितम् ॥ ४ ॥

पादादियमकम् ।

न्त्यपि रूपम् । वनिताजनेन वियता नभसा वियता भयादितस्ततो गच्छता त्रिपुरापदङ्गमिता प्रापिता पूः त्रिपुरेष्वपि दह्यमानेषु भयादितस्ततो जनो गतः नगन्त्रिकूटपर्वतमिता सती । पादान्तयमकमिति पादान्तेषु यमितत्वात् ॥ २ ॥ ज० म०

निखिलेत्यादि । ज्वलनेनाग्निना सहसा तत्क्षणं निखिला सकला पूर्लङ्का सहसा हासयसहिता नाभवत् किन्तु सशोकाभवत् हासस्यानन्दकार्य्यत्वात् ज्वलनेन कीदृशेन प्रभवता दृद्धिं गच्छता भवता उत्पद्यमानेन पूः कीदृशी वनिताजनेन त्रिपुरापदं त्रिपुरसम्बन्धिनीमापदं विपत्तिं गमिता प्रापिता स्त्रीजनेन कीदृशेन वियता गगनपथेन वियता गच्छता भयात् पलायमानेन यथा हरशराग्निना संदह्यमानेषु त्रिपुरेषु भयाद्वनिता इतस्ततो गच्छन्ति तथात्रापीति भावः ज्वलनेन त्रिपुरापदं गमिता वनिता जनेनोपलक्षितेति केचित् पुनः कीदृशी नगं त्रिकूटपर्वतम् इता प्राप्ता नगेन मिता परिच्छिन्नेति वा इयेरत्नि इत्यः त्रिपूर्वादिणः क्तः वीलङ्ङ्वदित्यस्माद इणकान्तिगतिव्याप्तिक्षेपप्रजनखादने इति प्रमिताक्षरानाम वृत्तं तल्लक्षणं यथा प्रमिताक्षरा सजससैः कथितेति पादान्तयमकमिति पादचतुष्टयान्त्ययमकितत्वात् ॥ ३ ॥ म०

सरसामित्यादि । सरसां तोयाशयानां तनुं शरीरं सरसां सार्द्रां परिहृत्य त्यक्त्वा पततां पक्षिणां बहुशः बहून् वारान् ककुभो दिशः पततां गच्छताम् रुदितैः शब्दितैः पदेर्यजादित्वात्सम्प्रसारणम् । सकलैः समस्तैः सकलैः माधुर्य्यवद्भिः कलमव्यक्तः गुणसमावृत्तित्वात्

न च काञ्चन काञ्चनसद्मचितिं
न कपिः शिखिना शिखिना समयौत्।
न च न द्रवता द्रवता परितो
हिमहानकृता न कृता क्वचन ॥ ५ ॥

पादमध्ययमकम्।

संहति वर्त्तते ततश्च सहशब्देन समासो भवति करुणैः कारुण्यजनकैः रुदितैरिव क्रन्दितैरिव परितः समन्तात् खमाकाशं पतितं व्याप्तम्। पदादियमकमिति पदानामादौ यमितत्वात् ॥ ४ ॥ ज० म०

सरसामित्यादि। सरसां जलाशयानां सरसाम् आर्द्रां स्निग्धां तनुं शरीरं जलाशयमध्यं परिमुच्य भयात्त्यक्त्वा बहुशो बहून् वारान् ककुभो दिशः पततां गच्छतां पक्षिणाम् उदितैः शब्दितैः खमाकाशं परितः सर्वतो निचितं व्याप्तं रुदितैरिव क्रन्दितैरिव सकलैः सम्पूर्णैः सकलैरव्यक्तमधुरैः कलशब्दोऽत्र धर्मवचनः किंवा सर्वैरुदितैर्वचनैरव्यक्त-मधुरध्वनियुक्तैरित्यर्थः वाक्यसमुदायस्यावयवयोगात् करुणैः कारुण्य-जनकैः केचित्तु सरसां सम्बन्धिनां पततां सरसां तनुं परिमुच्य भयात् परिशोष्येत्याहुः वदेः क्ते यजादित्वात्सम्प्रसारणम् इति जिः तोटकनाम वृत्तं तल्लक्षणं यथा वद तोटकमब्धिसकारयुतम्। पादादियमकमिति चतुर्णां पादानामादौ यमकितत्वात् ॥ ४ ॥ भ०

न चेत्यादि। काञ्चनसद्मचितिं सौवर्णगृहसंहतिं काञ्चन काञ्चि-दपि शिखिना अग्निना शिखिना ज्वालावता न कपिर्न च समयौत् न च न मिश्रितवान् अपि तु संश्लेषं नीतवान् यौतेर्लुङि उतो वृद्धि-र्लुकि हलीति वृद्धिः क्व च क्वचिन्नाम हिमहानकृता हिमहानस्य हिमापचयस्य कर्त्रा शिखिना जहातेर्भावे ल्युट् न च न द्रवता न च न विसर्पता अपितु द्रुतस्ततो गच्छता द्रवता द्रवभावः परितः न न कृता किन्तु कृतैव काञ्चनसद्मचितेरित्यर्थात्। पादमध्ययमकमिति पादानां मध्ये यमितत्वात् ॥ ५ ॥ ज० म०

अवसितं हसितं प्रसितं मुदा
विलसितं ह्रसितं स्मरभासितम् ।
न समदाः प्रमदा हतसम्मदाः
पुरहितं विहितं न समीहितम् ॥ ६ ॥

चक्रवालयमकम् ।

न चेत्यादि । कपिर्हनूमान् काञ्चनं काञ्चनसञ्चितं सौवर्णगृहसंहतिं शिखिना अतिशयितशिखायुक्तेन जाज्वल्यमानेन शिखिना वह्निना न समयौत् इति न अवश्यमेव समयौत् मिश्रितवान् युञ् मिश्रणे धौ रपिङ्लुतोऽह्नेर्त्रिरिति त्रिः अभिधानात् विभक्त्यन्तात् किमस्मिञ्चनाविष्यते । हिमहानकृता वह्निना परितः सर्वतो न च न द्रवता अपि तु गच्छता सता कचन कुत्रापि काञ्चनसञ्चितेर्द्रवता द्रवत्वं न कृता अपि तु कृतैव द्रुगतौ शतृ द्रवस्य भाव इति तः । हिमस्य हानं नाशं करोतीति किप् हानमिति जहातेरनटि रूपम् । पादमध्ययमकमिति चतुर्णां पादानां मध्ये यमकितत्वात् ॥ ५ ॥ म०

अवेत्यादि । हसितं दत्प्रसितं सन्ततप्रवृत्तं नित्यप्रमुदितत्वात्तत्त्यजनस्य तदग्निसङ्गमादवसितम् अपगतं षोऽन्तकर्मणीत्यस्य द्यतिस्यतीतीत्वं मुदा हर्षेण यद्विलसितं शृङ्गारविचेष्टितं लसितं श्लिष्टमनुबद्धमिति यावत् स्मरभासितं मन्मथदीपितं ह्रसितम् अल्पीकृतं प्रमदाः स्त्रियः न समदाः सदर्पा न जाताः हतसंमदाः ध्वस्तहर्षाः प्रमदसम्मदौ हर्ष इति निपातनं यच्च पुरहितं पुरानुकूलं समीहितं कर्त्तुमीप्सितं तच्च विहितं नानुष्ठितमित्यर्थः । चक्रवालयमकमिति मण्डलाकारेण यमितत्वात् तथाहि द्वयोर्द्वयोः पदयोरन्त्यवर्णानां नेमिवदवस्थितत्वात् मध्यस्य वर्णद्वयाविसदृशस्य नेमिवदिति । तथा चास्य लक्षणं पादानामवसाने तु वाक्ये स्यात्तुल्यवर्णता । प्रतिपादं भवेद्यत्र चक्रवालं तदुच्यत इति ॥ ६ ॥ ज० म०

अवेत्यादि । मुदा हर्षेण यदवसितं हास्यं प्रसितम् अत्यन्तप्रवृत्त-

समिद्धशरणा दीप्ता देहे लङ्का मतेश्वरा ।
समिद्धशरणादीप्ता देहे लङ्कामतेश्वरा ॥ ७ ॥

समुद्गयमकम् ।

आसीत् तदवसितं विनष्टं तत्रत्यलोकानामप्रमुदितत्वात् षोयन्तकर्मकत्वात् गत्यर्थाकर्मकेत्यादिना कर्त्तरि क्तः, द्योषोरन्यतरस्यामिति ङिः, प्रमितमिति षिनृमज्जवन्धो इत्यस्य रूपम् । किञ्च मुदा यत् विलसितं विलासः शृङ्गारचेष्टितं स्मरेण कामेन भासितम् उद्दीपितं वसितं संश्लिष्टमासीत् तदप्यवसितमिति सम्बन्धः लपस्त्रिषिक्रोड़े हसितमिति पाठे विलसितमल्पीभूतं प्रमदाश्च स्त्रियो न समदाः न सदर्पाः यतो हतसम्पदा नष्टहर्षा जाताः घञलनट इति सदेरल् यच्च पुरहितं नगरानुकूलं समीहितं कर्त्तुमिष्टं तच्च विहितं नानुष्ठितम् । चक्रवालयमकमिति मण्डलाकारेण यमकितत्वात् तथाहि सर्वेषां पादानाम् अन्त्यवर्णानां सदृशतया नेमिवदवस्थितत्वात् मध्यस्य वर्णस्य च विसदृशस्य नाभिवदवस्थितत्वात् । मण्डलाकारतालक्षणं यथा पादानामवसाने तु सर्वेषां तुल्यरूपता । प्रतिपादं भवेद्यत्र चक्रवालं तदुच्यत इति ॥ ६ ॥ भ०

समिद्धेत्यादि । देहे अभ्यन्तरभागे समिद्धशरणा उज्ज्वलगृहा तत एव दीप्ता शोभावती लङ्का पुरी मतेश्वरा ज्ञातमहादेवा तत्रान्यदेवस्य नामापि न गृह्यते समिधो दधति हुतवन्तो वेति समिद्धा ऋषयः पूर्वं आदातोऽनुपसर्गे क इति कः द्वितीयस्मादन्येष्वपि दृश्यत इति डः अपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वात् धात्वन्तरादपि भवति झयो होऽन्यतरस्यामिति पूर्वसवर्णः तान् शृणन्ति हिंसन्तीति कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् समिद्धशरणा राक्षसास्तान् दानमानाभ्यामादीपयति प्रोत्साहयतीति क्विप् समिद्धशरणा दीप्तेन रावणेन तायते पाल्यत इति तायतेः कर्मणि कारके विवक्षिते सम्पदादिदर्शनात् क्विप् वेरपृक्तस्येति लोपात् पूर्वं लोपो व्योर्वलीति लोपः समिद्धशरणा दीप्ता

रावणस्य पालनीया समिद्धशरणा दीप्ता लङ्का देहे दग्धा अलङ्कामो-ऽस्तेत्यलङ्कामः तद्भावः अलङ्कामता तस्यामलङ्कामतायां पर्याप्तेच्छायाम् ईश्वरा लङ्का सर्वेच्छासम्पादनात्। समुद्गयमकमिति समुद्गाकारेण यमि-तत्वात् पादद्वययोरर्द्धद्वययोश्च संपुटवत्स्थाइश्यात्॥ ७॥ ज० म०

समिद्धेत्यादि। लङ्का देहे दग्धा अर्थात् हनूमता कर्मणि ठो। कीदृशी देहे अभ्यन्तरभागे समिद्धशरणा उज्ज्वलगृहा, शरणं गृह-रक्षित्रोरित्यमरः। अतएव दीप्ता शोभावती मतेश्वरा मतो ज्ञात ईश्वरो महादेवो यस्यां तत्रान्यदेवस्य नामापि न ज्ञायते इति भावः। मतः पूजित इति वा पुनः कीदृशी समिद्धशरणा दीप्ता समिधो दधा-तीति आदन्तत्वात् हनजनादिति डः किंवा समिधो जुहोतीति तेनैव गमादित्वात् डः समिद्धो मुनिः तं श्रृणन्ति हिंसन्तीति समिद्धशरणा राक्षसाः श्रृहृगि हिंसने कभावेऽसौ इति कर्त्तर्य्यनट् नन्द्यादित्वाद्वा तान् मानदानाभ्यां दीपयतीति कर्त्तरि क्विप् समिद्धशरणादीप् रावणः तेन ताय्यते पाल्यते इति कर्मणि क्विप् ताट्ङपालनसन्तत्योः य्वोर्लोपोऽस्य य इति यलोपः समिद्धशरणादीपो रावणस्य पालनीये-त्यर्थः किंवा समिद्धानां दीप्तिमतां देवादीनां शरणेन हिंसनेन अदीपं दीप्त्यभावं तायते पालयति सन्तनुते वेति भावे क्विप् दीपनं दीबिति भावे क्विप् मयाद्यत्समासः अलङ्कामतेश्वरा अलङ्कामतायां यथेष्टे-च्छायाम् ईश्वरा सर्वेच्छायाः सम्पादयित्रीत्यर्थः अलमत्यर्थः कामोऽस्य अलङ्कामः तस्य भावोऽलङ्कामता तस्यामीश्वरेति सप्तमीसमासः वरप्रत्य-यान्तादीश्वरशब्दात् स्त्रियामत आबित्याप् भवत्येव औणादिकवरट्-प्रत्ययान्तात्तु ईप्प्रत्यय इति बोध्यं श्रीपतिस्वरसात् नदादावीश्वरशब्दं विभाषया पठन्त्यन्ये। श्रीनादिरयमित्यपरे यद्वा लङ्काभिः कुलटाभि-र्मतः पूजित ईश्वरो यत्र यद्वा अलमत्यर्थं कामत ईप्सात ईश्वरो यत्र कोटीपदर्थे इति कुशब्दस्य कादेशः लङ्का रक्षःपुरी शाखा डाकिनी कुलटासु चेति विश्वः। समुद्गयमकमिति द्वयोरर्द्धयोः सम्पुटाकारेण यमकितत्वात् तथाच रुद्रभटः अर्द्धं पुनरावृत्तं जनयति यमकं समुद्गकं नामेति। अर्द्धाभ्यासः समुद्गः स्यादिति दण्डी॥ ७॥ भ०

पिशिताशिनामनुदिशं स्फुटतां
स्फुटतां जगाम परिविह्वलता ।
ह्वलता जनेन बहुधा चरितं
चरितं महत्त्वरहितं महता ॥ ८ ॥

काञ्चीयमकम् ।

न गजा नगजा दयिता दयिता
विगतं विगतं ललितं ललितम् ।

पिशिताशिनामित्यादि । पिशिताशिनां मांसाशिनां राक्षसानामनुदिशं दिशि दिशि अव्ययीभावे शरत्प्रभृतिभ्य इति टच् स्फुटतां पलायमानानां परिविह्वलता स्फुटतां स्पष्टतां जगाम जनेन चेतरेण ह्वलता चलता महता शौर्य्यादिगुणयुक्तेनापि सता यच्चरितं चेष्टितं बहुधा बहुप्रकारं तन्महत्त्वरहितं महता विक्रमाचरितम् अनुष्ठितं भयात् । काञ्चीयमकमिति रसनाकारेण यमितत्वात् तथाद्यपादस्यान्ते परस्यादौ च सदृशो विन्यासः ॥ ८ ॥ ज० म०

पिशितेत्यादि । पिशिताशिनां राक्षसानां परिविह्वलता व्याकुलता स्फुटतां स्पष्टतां जगाम किं कुर्वताम् अनुदिशं दिशि दिशि स्फुटतां पलायनेन विकाशं गच्छतां स्फुटशिविकाशे अनुशब्देन वीप्सायामव्ययीभावे शरद्विपाडय इति अप्रत्ययः । महता शौर्य्यादिगुणयुक्तेनाप्यपरेण जनेन ह्वलता चलता महत्त्वरहितं माहात्म्यविवर्जितं चरितं चेष्टितं बहुधा बहुप्रकारैराचरितं कृतं भयात् ह्वलह्वलचाले । काञ्चीयमकमिति रसनाकारेण यमकितत्वात् तथाच एकस्यान्ते परस्यादौ सदृशं दृश्यते यदि । तत् काञ्चीयमकं नाम व्याहृतं कविपुङ्गवैरिति । एतदेव दण्डिना सन्दष्टयमकमुक्तं तथाहि सन्दष्टयमकस्थानमन्तादीपादयोर्द्वयोरिति ॥ ८ ॥ भ०

न गजेत्यादि । गजा हस्तिनः नगजाः पर्वतजाताः अतएव दयिता इष्टा न दयिताः न रक्षिताः दयतिरत्र रक्षणार्थः । विगतं

प्रमदा प्रमदा महता महता
मरणं मरणं समयात् समयात् ॥ ८ ॥

यमकावली ।

न वानरैः पराक्रान्तां महद्भिर्भीमविक्रमैः ।

वीनां पक्षिणाङ्कृतं गमनमपि विगतं नष्टं ललितं यदीप्सितं वस्तु तल्ललितं पीड़ितं प्रमदा योषित् प्रमदा प्रगतो मदो यस्या इति प्रमदा हर्षशून्येत्यर्थः आमहता रोगपीड़ितेव आमोरोग इव शब्दलोपोऽत्र द्रष्टव्यः अमेन पीड़िता पलायनहता वा अमोगत्यादिषु महतां शूराणाम् अरणम् अविद्यमानयुद्धं मरणं विनाशनं समयात् सम्प्राप्तं यातेर्लङि रूपं समयात् कालेन । यमकावलीति यमकमाला ॥ ८ ॥ ज० म०

नगेत्यादि । गजा हस्तिनो न दयिता न रक्षिताः जिदयङ् रक्षणे गतौ वधे दानेऽवने कीदृशाः नगजाः पर्वतजाः तेनोत्कृष्टा अतएव दयिता इष्टाः परञ्च विगतं वीनां पक्षिणां गतं गमनं विगतं विनष्टम् अग्निदग्धपक्षत्वात् ललितमीप्सितं वस्तु हारभेदो वा ललितं चलितं भयाकुलजनसंसर्गादन्यत्र गतमित्यर्थः, ललितं हारभेदे स्यादीप्सिते चलितेऽपि चेति विश्वः । प्रमदा नारी अप्रमदा प्रमदरहिता हर्षशून्या इत्यर्थः प्रगतमदा वा आमहता रोगपीड़ितेव इवशब्दार्थोऽत्र गम्यते अमक् रोगे घञ् यद्वा अमेन गमनेन हता पीड़िता यद्वा अमेन शब्देन हाहाकारशब्देन वह्निशब्देन वा हता व्याकुला अम गतौ शब्दे महतां शूराणाम् अरणं युद्धरहितं मरणं समयात् कालवशात् समयात् संप्राप्तं यातेर्घ्नि यद्वा महतां जनानाम् अह खेदेऽद्भुते निश्चये वा तां प्रमदां समयात् समीपे समयात् कालेन युद्धरहितं मरणम् आत् आगत अत् सातत्यगमने इत्यस्मात् आङ्पूर्वात् क्विप् स्त्रियं हित्वा यतो न गच्छन्तीत्यर्थः । यमकावलीति यमकमाला तथाहि पदेषु यत्र सर्वेषु सादृश्यं दृश्यते यदि । यमकावलिरुद्दिष्टा शिष्टा यमककोविदैरिति ॥ ८ ॥ म०

न वेत्यादि । वानरैरन्यैर्महद्भिर्महाप्राणैर्भीमविक्रमैः कसद्भयशौर्यैः

न वा नरैः पराक्रान्तां ददाह नगरीं कपिः ॥ १० ॥

अयुग्मपादयमकम् ।

द्रुतं द्रुतं वह्निसमागतं गतं
महीमहीनद्युतिरोचितं चितम् ।
समं समन्तादपगोपुरं पुरं
परैः परैरप्यनिराकृतं कृतम् ॥ ११ ॥

पादाद्यन्तयमकम् ।

शक्रादिभिः न पराक्रान्तां नावष्टब्धां नगरीं लङ्कां नरैर्मनुष्यैर्न च पराक्रान्तां विगृहीतां कपिर्हनूमान् ददाह दग्धवान् । अयुक्पादयमकमिति । प्रथमतृतीययोर्यमितत्वात् ॥ १० ॥ ज० म०

न वेत्यादि । कपिर्हनूमान् नगरीं ददाह दग्धवान् नगरीं कीदृशीं वानरैर्वालिसुग्रीवादिभिर्न पराक्रान्तां न गतां सर्वैर्मनुष्यैः कार्त्तवीर्य्यादिभिर्न पराक्रान्तां न विगृहीतां किंवा अनरैर्मनुष्यभिन्नैर्देवबलादिभिरपि न वा पराक्रान्तां न च विगृहीतां कीदृशैर्नरैर्महद्भिर्महाप्रमाणैर्भीमविक्रमैर्भीमशौर्य्यैः शिवतुल्यपराक्रमैर्वा । अयुक्पादयमकमिति । अयुजोः प्रथमतृतीययोर्यमकितत्वात् ॥ १० ॥ भ०

द्रुतमित्यादि । यत् पुरं चितं सौवर्णष्टकसंहत्या व्याप्तं तद्वह्निसमागतम् अग्निसंयुक्तं द्रुतं विलीनं द्रुतं प्रवाहेण प्रवृत्तं द्रुतं शीघ्रम् अहीनया उत्कृष्टया द्युत्या तेजसा रोचितं भासितं महीङ्गतं व्याप्तम् अपगोपुरम् अपगतपुरद्वारम् अतएव समन्तात्सर्वतः समं तुल्यं कृतं परैः शत्रुभिः परैरपि उत्कृष्टैरपि शक्रादिभिरनिराकृतम् अनभिभूतं सत् । पादाद्यन्तयमकमिति पादस्यादावन्ते च यमितत्वात् ॥ ११ ॥ ज० म०

द्रुतमित्यादि । पुरं लङ्कां समन्तात् सर्वतः समं भूमितुल्यं कृतम् उच्चानां द्रुतत्वात् कीदृशं द्रुतं शीघ्रं द्रुतं द्रवीभूतं यतो वह्निसमागतम् अग्निसंयुक्तं महीं भूमिं गतं प्रवाहेण प्राप्तमहीनद्युतिरोचितम्

नश्यन्ति ददर्श वृन्दानि कपीन्द्रः।
हारीण्यबलानां हारीण्यबलानाम्॥ १२॥
मिथुनयमकम्।

नारीणामपनुनुदुर्न देहखेदा-
न्नारीणामलसलिला हिरण्यवाप्यः।

अहीनया उत्कृष्टया द्युत्या दीप्त्या रोचितं शोभितम् अहीनद्युतिना रावणेन रोचितम् अभिलषितमिति केचित्। चितं स्वर्णस्फटिकाद्यैर्व्याप्तम् अतएव वह्नियोगे द्रवत्वसक्तम् अपगोपुरम् अपगतपुरद्वारं परैरुत्कृष्टैरपि परैः शत्रुभिरिन्द्रादिभिरनिराकृतम् अनभिभूतं, द्रुतं शीघ्रे विलीने च विद्राणे चाभिधेयवदिति विश्वः। पादाद्यन्तयमकमिति पादस्यादावन्ते च यमकितत्वात्॥ ११॥ भ०

नश्येत्यादि। अबलानां स्त्रीणाम् अबलानाम् अविद्यमानरक्षकाणां वृन्दानि समूहान् हारीणि हारवन्ति हारीणि अवश्यं हरन्ति आवश्यके णिनिः चेतस इत्यर्थात् नश्यन्ति पलायमानानि सन्ति कपीन्द्रो ददर्श। मिथुनयमकमिति पादद्वयस्य चक्रवाकमिथुनवदवस्थितत्वात्॥ १२॥ ज० म०

नश्यन्तीत्यादि। कपीन्द्रो हनूमान् अबलानां स्त्रीणां वृन्दानि समूहान् ददर्श दृष्टवान् कीदृशानि नश्यन्ति नाशं प्राप्नुवन्ति पलायमानानि वा हारीणि हारयुक्तानि हारीणि मनोहारीणि ग्रहादित्वात् णिन् अवश्यं हरन्तीति आवश्यके णिनिति परः। कीदृशानाम् अबलानाम् अविद्यमानरक्षकाणाम् अतिक्षमानां वा। तनुमध्याच्छन्दः लक्षणं यथा त्यौ चेत्तनुमध्या। मिथुनयमकमिति पादद्वयस्य चक्रवाकयुगलवत् स्थितत्वात्॥ १२॥ भ०

नारीत्यादि। अरीणां सम्बन्धिन्यो हिरण्यवाप्यः सुवर्णघटिता वाप्यः नारीणां स्त्रीणाम् अग्नितापादेहखेदानापनुनुदुः नापनीतवत्यः कुतः आरीणामलसलिलाः रीङ् स्रवणे इत्यस्मादाङ्पूर्वात् स्यादय

नारीणामनलपरीतपत्रपुष्पा-
न्नारीणामभवदुपेत्य शर्म वृक्षान् ॥ १२ ॥
वृन्तयमकम्।

ओदित इति निष्ठा णत्वम् आरीणङ्गतममलं सलिलं यासु हिरण्य-वापीष्विति वृक्षांश्चोपेत्य गत्वा तासां शर्म सुखं नाभवत् न जातम् अनलपरीतपत्रपुष्पत्वाद्वृक्षाणाम् आरीणां नारीणामिति योज्यं अत्र सम्बन्धिनीनामित्यर्थः अरीणामिमा इति तस्येदमित्यण् तदन्तात् टिड्ढाणञित्यादिना ङीप् अत्र वृक्षानुपेत्य स्थितानामित्यध्याहर्त्तव्यम् अन्यथा समानकर्त्तृकत्वात् पूर्वकाले क्त्वाप्रत्ययो न स्यात्। वृन्तयमक-मिति प्रतिपदं पुष्पफलस्येव मूलेऽवस्थितत्वात् ॥ १२ ॥ ज० म०

नारीणामित्यादि। हिरण्ययवाप्यः सुवर्णस्थलनिर्मितदीर्घिकाः नारीणां स्त्रीणां देहखेदात् अग्निसन्तापजनितान् न अपनुनुदुः नापनीतवत्यः हिरण्यवाप्यः कीदृश्यः आरीणामलसलिलाः आरीणं द्रुतम् अमलं निर्मलं सलिलं स्वर्णजलं यासु अग्नितेजसा स्वर्णघटित-तीरस्य द्रुतत्वात् स्वर्णजलं तत्र जातमित्यर्थः ओरीङ् गत्यर्थे आङ्-पूर्वात् क्तः स्वत्वादोदित इति नः किंवा शुष्कत्वादारीणम् ईषद्गतं जलं यासु रीगीवधे गतौ गत्यर्थात् कर्तरि क्तः ल्वादित्वात् क्तस्य नः णत्वञ्च आरीणाम् अरिसम्बन्धिनीनां तासां नारीणां वृक्षान् उपेत्य समीपे गत्वा स्थितानां शर्म सुखं नाभवत् न जातं स्थितानामित्यध्याहारात् समानकर्तृकता वृक्षान् कीदृशान् अनलपरीतपत्रपुष्पान् अनलेनाग्निना परीतं व्याप्तं पत्रञ्च पुष्पञ्च येषां तान् अतएव न शर्म नारीणां कीदृ-शानां नारीणाम् आपो नारा इति प्रोक्तास्तत्र भवानां ततो वा आगतानां वरुणलोकादानीतानामित्यर्थः आरीणामिति अरिशब्दात् तस्येमा इति अण्ः शर्म नाभवदित्यत्र पूर्वतो नञनुषज्यते केचित्तु अरीणां शत्रूणां हिरण्यवाप्य इति पूर्वत्र योजयन्ति नारीणां जल-भवानामिति न व्याचक्षते तन्मते पराद्धेऽपि नञ् विद्यते। कश्चित्तु पुष्पाचारीणामिति न द्वयसंयोगवत् पाठो दृश्यते तत्र पूर्वोक्तव्याख्याया

अथ लुलितपतत्रिमालं दुरणासनबाणकेशरतमालम्।
सवनं विविक्तमालं सीतां द्रष्टुं जगामालम्॥ १४॥
पुष्पयमकम्।

न नञनुषङ्गस्तस्य विद्यमानत्वात् केचित्तु आङ्पूर्वात् रौणादिक इप्रत्ययः आ समन्तात् रीणां गच्छन्तीनामित्याङः। महर्षिणीच्छन्दः लक्षणं यथा त्याशाभिर्मनजरगाः प्रहर्षिणीयमिति। दन्तयमकमिति प्रतिपादं पुष्पफलस्येव मूले दन्तवदवस्थितत्वात् तथाहि पादादौ सदृशं यस्य प्रतिपादं प्रदृश्यते। तद् दन्तयमकं नाम कथ्यते कविपुङ्गवैरिति॥ १३॥ भ०

अथेत्यादि। दाहानन्तरं लुलितानां चलितानां पतत्रिणां पक्षिणां माला संहतिर्यस्मिन् तद्वनमशोकवनिकाख्यं स कपिर्जगाम दुरणाः मग्नाः असनादयो यस्मिन् वने तत्रासनः पीतसालः बाणः ग्रन्थिका केशरो नागकेशरो देववल्लभो वा विविक्ताः शुचयो मालाः स्रजो यस्मिन् तद्विविक्तमालं सीतां द्रष्टुम् अलं पर्याप्तौ सीतां द्रक्ष्यामीति जगाम। पुष्पयमकमिति प्रतिपादं दन्तादुपरि पुष्पमिवावस्थितत्वात्॥ १४॥ ज० म०

अथेत्यादि। अथ दाहानन्तरं स हनूमान् अलं पर्याप्तं सीतां द्रष्टुं वनम् अशोकवनिकां जगाम वनं कीदृशं लुलितपतत्रिमालं लुलिता चलिता पतत्रिणां पक्षिणां माला संहतिर्यत्र यद्यपि छन्दःशास्त्रे सानुस्वारस्य गुरुत्वमनुशिष्टं तथापि तथा पादान्तगोऽपि वेति वचनात्तस्य लघुत्वात् प्रथमपादे द्वादशमात्रा भवन्ति किन्तु भवति नेह विषमेज इत्यार्यायां प्रायिकं तृतीयगणस्यात मध्यगुरुत्वात् सत्तगणादौ हन्ताजोनलहुच्छटणेऽजोयिषम इत्यत्र नजः प्रशंसापरत्वमिति टीकाकृतोक्तं यापचमती यपञ्चमस्स चोद्दारोण हो इयुरनजखा गुविखीए गुरुनहि आगहो देसिणआसेद इत्यनेन अप्रामाण्योक्तत्वात् न तु विषमस्यजगणे लक्षणवहिर्भूता गाथा भवन्तीति वस्तुतः पलिमालमिति पाठः मध्ये तकारपाठो लेखकप्रमादात् दुरणा भग्ना

घनगिरीन्द्रविलङ्घनशालिना
वनगता वनजद्युतिलोचना ।
जनमता ददृशे जनकात्मजा
तरुमृगेण तरुस्थलशायिनी ॥ १५ ॥

पादादिमध्ययमकम् ।

अवनादयो यत्र वने असनः पीतसालः बाणोऽजिह्मगस्टीविशेषः केशरं किञ्जुल्कं प्रोक्तं केशरो नागकेशरे सिंहच्छटायां किञ्जल्कपुन्नागबकुलेष्वपीति विश्वः । तमालः स्वनामख्यातः विविक्ताः पृथग्भूता मालाः स्रजः पङ्क्तयो यत्र तत्तथा विविक्तः स्यादसम्पृक्ते विविक्तः शुभभूतयोः । चारुवद्गणिते धीरैर्विविक्तं रहसि स्मृतमिति विश्वः । पुष्पयमकमिति प्रतिपादान्ते वर्णोपरि पुष्पवत् स्थितत्वात् ॥ १४ ॥ भ०

घनेत्यादि । तरुमृगेण कपिना जनकात्मजा ददृशे दृष्टा घनाः निरन्तराः ये गिरीन्द्राः मेघसदृशा वा तेषां यल्लङ्घनम् अतिक्रमणं तेन शालिना युक्तेन कपिना वनगता काननस्था वनजद्युतिलोचना पद्मस्येव कान्तिर्ययोर्लोचनयोः ते तथाविधे लोचने यस्याः नक्रोडादिबह्वचः इति ङीप्प्रतिषेधः । जनमता जनैनावबुद्धा पतिव्रतेयमिति मतु अवबोधन इत्यस्य भूते निष्ठायां रूपं न लोकेति षष्ठीप्रतिषेधः कर्त्तरि तृतीया तस्याश्च कर्तृकरण इति समासः वर्त्तमाने तु मतिबुद्धीत्यादिना क्तप्रत्ययः क्तस्य च वर्त्तमान इति षष्ठी, तस्याश्च क्तेन च पूजायामिति समासप्रतिषेधः स्यात् तरुस्थलशायिनी तरुमूले यत् स्थलं तत्रैव शयाना सत्यपि शयने तेन व्रत इति णिनिः । पादिमध्ययमकमिति पादानामादौ मध्ये च घनवनजनतरुशब्दानां यमितत्वात् ॥ १५ ॥ ज० म०

घनेत्यादि । तेन तरुमृगेण कपिना तरुस्थलशायिनी जनकात्मजा ददृशे कर्मणि रूपम् । तेन कीदृशेन घनगिरीन्द्रविलङ्घनशालिना घना निविड़ा ये गिरीन्द्राः पर्वतास्तेषां विलङ्घनं विद्यतेऽस्येति अस्त्यर्थे

कान्ता सहमाना दुःखं च्युतभूषा ।
रामस्य वियुक्ता कान्ता सहमाना ॥ १६ ॥

विपथयमकम् ।

मितमवददुदारं तां हनूमान् मुदारं
रघुवृषभसकाश्यं यामि देवि ! प्रकाशम् ।

शाखिन्प्रत्ययो बोध्य इति शाब्दिकाः । यद्वा तेषां विलङ्घनेन शाडिह् शोभितुं शीलं यस्य शाडृ श्लाघायां णिनिः डलयोरलयोश्चेति लत्वम् । कीदृशी वनगता अशोकवनिकास्थिता पुनः कीदृशी वनजद्युतिलोचना वने जले जायते इति नमादित्वात् डः वनजं पद्मं कैरवं वा तस्येव द्युतिर्ययोस्तादृशे लोचने यस्याः सा वनं सलिलकानन इत्यमरः । पुनः कीदृशी जनेन मता ज्ञाता प्रतिव्रतात्वेन पूजिता वा न तु जनानामिति षष्ठी तथाचोक्तं कारकषष्ठी न समस्यते इति न्यायात् ज्ञानेच्छापूजेति क्तः तद्योगे प्राप्तापि षष्ठी न स्यात् अथास्यानित्यता च दृश्यते इति न्यायात् यद्वा वर्त्तमाने क्तो नातीतक्तस्य बाधक इति अतीते वा क्तस्तत्र चकारात् सम्बोधने धातूनामनेकार्थत्वात् पूजार्थेऽप्यस्य प्रयोगः । आदिमध्ययमकमिति प्रतिपादमादिमध्ययोस्तुल्यत्वात् ॥ १५ ॥ भ०

कान्तेत्यादि । कान्ता कमनीया सहमाना वेदयमाना दुःखं वियोगजं च्युतभूषणा रामस्य कान्ता प्रिया वियुक्ता वियोगिनी सहमाना सह मानेन वर्त्तत इति वोपसर्जनस्येति सभावविकल्पः दृष्टा इति सम्बन्धः । विपथयमकमिति पादद्वयातिक्रमाद्विपथेन विमार्गेण यमितत्वात् ॥ १६ ॥ ज० म०

कान्तेत्यादि । जनकात्मजा सीता कीदृशी दृष्टा कान्ता कमनीया दुःखं वियोगजं सहमाना ततोद्वेगं न करोतीत्यर्थः । च्युतभूषणा रामस्य कान्ता प्रिया वियुक्ता वियोगिनी सहमाना मानेन चित्तसमुन्नत्या पूजया वा सहिता । विपथयमकमिति पादद्वयातिक्रमाद्विपथेन विमार्गेण यमकितत्वात् तनुमध्याच्छन्दः ॥ १६ ॥ भ०

मितमित्यादि । मितम् अल्पाक्षरम् अर्थावगाढं तां सीतां हनू-

तव विदितविषादो दृष्टकृत्स्नामिषादः
श्रियमनिशमवन्तं पर्वतं माल्यवन्तम् ॥ १७ ॥

मध्यान्तयमकम् ।

उदपतद्वियदप्रगमः परैरुचिरमुन्नतिमत्पृथुसत्ववत् ।

मान् मुदा हर्षेण युक्तः अवदत् कथितवान् । किमित्याह अरं शीघ्रं हे देवि ! रघुवृषभसकाशं रामसमीपं माल्यवन्तं पर्वतं प्रकाशं प्रकटं यामि तव विदितविषादो ज्ञातावसादः दृष्टकृत्स्नामिषादः वीक्षिताशेषनिशाचरः आमिषं मांसमदन्तीति कर्मण्यण् वासरूपोऽस्त्रियामिति वचनात् अदोऽनन्न इति विट्प्रत्ययेनाणोविकल्पेन बाधनात् श्रियं शोभाम् अनिशमवन्तं रक्षन्तं पर्वतम् । मध्यान्तयमकमिति पादस्य मध्ये अन्ते च यमितत्वात् ॥ १७ ॥ ज० म०

मितमित्यादि । हनूमान् मुदा हर्षेण मितमल्पाक्षरमुदारं गम्भीरार्थं ताम् अवदत् । किमित्याह हे देवि ! अरं शीघ्रं रघुवृषभस्य रघुश्रेष्ठस्य सकाशं समीपं माल्यवन्तं पर्वतं प्रकाशं यथा स्यात्तथा यामि तव विदितो ज्ञातो विषादो येन विषादस्य नित्यसापेक्षत्वात् समासः । दृष्टः कृत्स्नः सकल आमिषादो राक्षसो येन स तथा अनिशं सततं श्रियं शोभामवन्तं माल्यवन्तं नाम पर्वतम् । मध्यान्तयमकमिति मध्यान्तपादयोर्यमितत्वात् । मालिनीवृत्तम् ॥ १७ ॥ म०

उदपतदित्यादि । वियदाकाशमुदपतत् उत्पपात परैः शत्रुभिरप्रगमः अनभिभवनीयः गमेः प्रहृष्टनिम्निनमस्येति कर्मण्यप् कर्तृकर्मणोः कृतीत्यत्र विभाषोपसर्ग इति मण्डूकप्लुत्या अनुवर्तनीयं सोपसर्गस्य प्रयोगे विभाषाषष्ठी । रुचिरं शोभितं वियन्निर्मलत्वात् अथवा अप्रगमोऽन्येषामित्यर्थात् परैरुत्कृष्टैरन्तरीक्षचारिभिः रुचिरं दीपितम् उन्नमितवत् उच्छ्राययुक्तं पृथुसत्त्ववद्भिः प्राणिभिर्युक्तं किं कृत्वा उदपतदित्याह वपुः शरीरं प्रतिविधाय कृत्वा रुचितान् तुष्टान्मोदयतीति रुचितमुत् ण्यर्थोऽत्रान्तर्भूतः द्विषां शत्रूणां भयदं नतिमत् तदानीं देवेषु कृतशिरःप्रणामत्वात् अथवा रुचिरमेवाभीष्टमेव वपुः

रुचिरमुन्नतिमत्पृथुसत्त्ववत्पतिविधाय वपुर्भयदं द्विषाम् ॥१८॥

गर्भयमकम्।

बभौ मरुत्वान् विकृतः समुद्रो
बभौ मरुत्वान् विकृतः समुद्रः।

उन्नतिमत् विभूतिमत् पृथुसत्त्ववत् विस्तीर्णसत्त्ववत् सत्त्वगुणयुक्तं वा। गर्भयमकमिति द्वयोः पादयोर्मध्ये पादद्वयस्य यमितत्वात् ॥१८॥ ज०म०

उदपतदित्यादि। कपिर्वियदाकाशमुदपतत् उत्पपात कीदृशः परैः शत्रुभिरप्रगमोऽनभिभवनीयः न प्रगम्यतेऽसौ अप्रगमः यद्वा परैः सह नास्ति प्रकृष्टं गमनं यस्येत्यर्थः अतिशीघ्रगामित्वात् कीदृशं वियत् परैरुत्कृष्टैरन्तरीक्षगामिभिः रुचिरं दीपितं पुनः कीदृशम् उन्नतिमत् उच्छ्राययुक्तं पृथुसत्त्ववत् महाप्राणियुक्तम् उन्नतिमदिति सत्त्वविशेषणं वा किं कृत्वोदपतदित्याह द्विषां शत्रूणां भयदं वपुः रुचिरमुत् रुचिरान् दृष्टान् मोदते इति क्विप् नतिमत् तदानीं देवेषु कृतप्रणामत्वात्। गर्भयमकमिति मध्यपादद्वयस्य यमितत्वात् ॥ १८ ॥ भ०

बभावित्यादि। मरुत्वान् हनूमान् पितृत्वेन मरुद्विद्यते यस्येति कृत्वा मतुप इति वत्वं विविधं कृतं वनभङ्गादि कर्म येन विविधं वा करोतीति विकृतः इगुपधलक्षणः कः वृक्षादीनां छेदक इत्यर्थः समुद्रो मुद्रयाभिज्ञानेन चूड़ामणिना सह वर्त्तत इति समुत्पतितो नभसि तेजःपुञ्ज इव बभौ दीप्यते स्म इत्ययं प्रथमः पादः। तस्मिन् तथाभूते मरुत्वानिन्द्रः अनुजीवितया मरुतो देवा अस्य सन्तीति कृत्वा विकृतः रावणपरिभवात् विकृतदेवाधिपत्यः विकृतः स च समुद्रः मुद्रया अप्सरसा सह वर्त्तमानः समुपलब्धमारुतिवृत्तान्तः बभौ हृष्टवान् कपिना ताव-दिदं कृतं रामः पुनः समूलं छेत्स्यतीति अनेकार्थत्वाद्धातूनां भातिरत्र तुष्टौ वर्त्तते इत्ययं द्वितीयः। समुद्रो जलनिधिः मरुत्वान् हनूमदु-त्पतनजनितवायुना युक्तः अतएव विकृतोऽतिक्रान्तमर्यादः बभौ बभूव अत सत्तायां प्रयुक्त इत्ययं तृतीयः स लोकपालो मरुत्वान् महाभूता-

बभौ मरुत्वान् विकृतः समुद्रो
बभौ मरुत्वान् विकृतः समुद्रः ॥ १९ ॥

सर्वयमकम् ।

तत्रैन युक्तः मरुत्वान् पूर्ववन्मतुप् मरुत्वानिति व्याख्याने जजाङ्गयो-ऽन्त इति जग् स्यात् मुदो हर्षस्य दाता पुत्रो मे सुखेन यास्यतीति मुदं राति प्रददातीति आतोऽनुपसर्गे कः विकृतो मन्दगतिः बभौ वाति स्म अत्र गतौ प्रयुक्त इत्ययं चतुर्थः । अन्यस्त्वाह यमकेषु क्रियापद-स्याभिधेयत्वं न दुष्यतीति तेन दीप्त्यर्थ एव योज्यः । सर्वयमकमिति चतुर्णामपि पादानां सदृशत्वात् ॥ १९ ॥ ज० म०

बभावित्यादि । मरुद्वायुः पितृत्वेन वेगजनितत्वेन वा विद्यते यस्य स हनूमान् बभौ शुशुभे इत्यन्वयः कीदृशः विविधानि कृतानि वनभङ्गलङ्कादाहादीनि येन सः समुद्रः मुद्रया प्रत्यभिज्ञानेन चूडा-मणिना सहितः मुद्रा प्रत्ययकारिणीति कोषः । इति प्रथमपादार्थः । तस्मिंस्तथाभूते सति मरुत्वानिन्द्रो बभौ तुतोष धातूनामनेकार्थत्वात् भातिरत्र तोषे कीदृशः विकृतः पराभवात् विगता क्रिया जगत्परि-पालनरूपा यस्य सः समुद्रः मुद्राख्याभिरप्सरोभिः सहित इति द्वितीयपादार्थः । समुद्रः सागरोऽपि बभौ चुकोप धातूनामनेकार्थत्वा-द्भातिरत्र कोपे पुनः पुनर्वानरेण लङ्घनात् कीदृशः मरुत्वान् मरुतो देवा विद्यन्ते यस्य सः मरुतौ पवनामरावित्यमरः । अतएव विकृतः अति-क्रान्तमर्य्यादः वीन् पक्षिणः करोति चेष्टते इति विकृतः कृतौ चेष्टे पूर्ववत् कः अतिक्रान्तमर्य्यादत्वात् इति तृतीयपादार्थः । वाचकत्वेन मरुच्छब्दो विद्यतेऽस्य मरुत्वान् वायुर्बभौ वाति स्म भातिरिव गत्यर्थः केचित्तु मरुद्वायुर्वान् गच्छन् बभौ सन्धेरनित्यत्वात् न तस्य दत्वं यदुक्तं संहितैकपदे नित्या नित्या धातूपसर्गयोः । सूत्रेष्वपि तथा नित्या सैवान्यत्र विभाषिता ॥ इत्याहुः । समते सन्धेरनित्यत्वं खवातोडौरित्यत्र स्रोकरणेनैवेष्टसिद्धौ डित्करणेन ज्ञापितामिति देवीदासचक्रवर्त्तिनोक्तं कीदृशः विकृतः मन्दगतित्वात् पुत्रस्नेहादन्यथाभूतः समुद्रः समुद्रह-

अभियाता वरं तुङ्गं भूभृतं रुचिरं पुरः
कर्कशं प्रथितं धाम ससत्त्वं पुष्करेक्षणम् ।
अभियातावरं तुङ्गं भूभृतं रुचिरं पुरः
कर्कशं प्रथितं धाम ससत्त्वं पुष्करेक्षणम् ॥ २० ॥

महायमकम् ।

चोऽग्निर्यस्मात् वायोरग्निसखत्वात् किंवा स इति विशेष्यपदं स लोकपालत्वेन प्रसिद्धो वायुरित्यर्थः मुदं प्रीतिं गात्रसंसर्गात् राति ददातीति मुद्रः इत्ययं चतुर्थपादार्थः । सर्वत्र भातेर्दीप्त्यर्थत्वमेव युक्तमिति केचित् नैकं पदं द्विः प्रयोज्यं प्रायेणैकार्थत्वेन तेनात्र भातेर्नानार्थत्वेन प्रयुक्तो न दोषावहः । सर्वयमकमिति पादचतुष्टयस्य तुल्यरूपत्वात् कण्ठाभरणेन महायमकमिदमुक्तं तथाहि एकाकारचतुष्पादं महायमकमुच्यते इति रुद्रभटमते पङ्क्तिरिति नाम तदुक्तम् अन्योन्यं पश्चिमयोराद्ययोर्वा पादयोर्भवति पुच्छः । सर्वैः सार्द्धं युगपत्प्रथमस्य जायते पङ्क्तिरिति ॥ १९ ॥ भ०

अभियातेत्यादि । भूभृतं रामं वरं श्रेष्ठं तुङ्गं महाकुलीनत्वादिति सर्वेषामुपरि स्थितं गुणैरुचिरं सर्वाङ्गसुन्दरं पुरोऽग्रतो वक्षःस्थले कर्कशं लोमशं प्रथितं लोके प्रख्यातं धाम गृहं वर्णाश्रमधर्माणां ससत्त्वं पराक्रमयोगात् पुष्करेक्षणं पद्मलोचनम् अभियाता आभिमुख्येन यास्यति हनूमान् लुटि रूपम् अभियातेत्यादि भूभृतं पर्वतं यत्राङ्गदादयः स्थिताः तमभिया अभिगच्छता हनूमता कुतः पुरो लङ्कायाः सकाशात् पुष्करे आकाशे धाम तेजः कथं मुहूर्तं प्रथितं विस्तारितम् अभियातीत्यन्येभ्योऽपि दृश्यत इति क्विप् तृतीयैकवचने आतो धातोरित्याकारलोपे अभियेति रूपं कीदृशम् अतावरं सातत्येनाततीति पचाद्यच् अतो वायुः आदित्यो वा आवृणोतीत्यप् आवरः अतस्यावरं यतस्तुङ्गम् उच्चैस्तरं रुचिरं दृष्टिं रुचिं रातीति कर्कशं कठिनस्वभावं ससत्त्वं प्राणियुतम् । महायमकमिति श्लोकस्यैकस्य द्वितीयेन श्लोकेन यमितत्वात् ॥ २० ॥ ज० म०

अभीत्यादि । अर्थादत्र हनूमान् कर्त्ता भूभृतं राजानं रामम् अभियाता अभिगमिष्यति इयां रूपं यद्वा भूभृतम् अभियाता आभिमुख्येन गन्ता हनूमान् बभौ भाति स्मेति पूर्वेणान्वयः क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति तद्योगेऽपि कर्मणि द्वितीया किंवा शीलार्थत्वं विवक्षितम् अभियोगे द्वितीया । भूभृतं कीदृशं वरं श्रेष्ठं तुङ्गं सर्वेषामुपरि स्थितं महाकुलीनत्वात् रुचिरं सर्वाङ्गसुन्दरं पुरोऽपि वक्षःस्थले कर्कशं महापुरुषत्वात् कठिनं लोमशं वा प्रथितं लोकविख्यातं धाम गृहं गुणानामित्यर्थात् तेजःस्वरूपं वा ससत्त्वं सपराक्रमं सत्त्वगुणयुक्तं वा पुष्करेक्षणं पुष्करवत् पद्मवदीक्षणे लोचने यस्य तं किंवा युद्धार्थं पुष्करं शरम् ईक्षते पश्यतीति नन्द्यादित्वादनः । अभीत्यादि तेन हनूमता पुरो लङ्कायाः सकाशात् यत्राङ्गदादयः सन्ति तं भूभृतं पर्वतम् अभि लक्ष्यीकृत्य याता गच्छता पुष्करे आकाशे धाम तेजः क्षणं मुहूर्तं प्रथितं विस्तारितं यातेति यातेः शतृः भूभृतं कीदृशं वरं व्रियतेऽसौ वरं कर्मण्यप् देवादिभिरङ्गदादिभिर्वा वृतमित्यर्थः किंवा वरं श्रेष्ठं किंवा भूभृतम् अभि लक्ष्यीकृत्य या गच्छता यातीति याः कर्त्तरि क्विप् धोरालोपोऽच्यचाविति टापरे आलोपः अतावरम् अतति सातत्येन गच्छतीति अतो वायुः सूर्यादिर्वा अतसातत्यगमने पचादित्वादन् आप्नोतीत्यावरः अत्रापि पचादित्वादन् अतस्यावरमिति समासः पर्वतविशेषणं यतस्तुङ्गमत्युच्चं किंवा भूभृतम् अता गच्छता अततीति अत् कर्त्तरि क्विप् अभिया अविद्यमानभयेन हनूमद्विशेषणम् आवरम् आप्नोति अर्थात् सूर्यादीन् तुङ्गत्वादित्यावरं पूर्ववत् पुनः कीदृशं पर्वतं रुचिरं तुष्टिदं रुचिं राति ददाति जनञ्जनादिति डः कर्कशं कठिनं पाषाणमयत्वात् ससत्त्वं प्राणिभिर्हिंस्रादिभिर्युक्तं पुष्करं पङ्कजे व्योम्नि पयः करिकराग्रयोः । औषधद्वीपविहगतीर्थराजोरगान्तरे । पुष्करं तूर्य्यवक्त्रे च काण्डे खड्गफलेऽपि चेति विश्वः । महायमकमिति आद्यश्लोकस्य द्वितीयश्लोकेन यमकितत्वात् तथाच रुद्रभटः अर्द्धं पुनरावृत्तं जनयति यमकं समुद्गकं नाम । श्लोकस्तु महायमकमिति ॥ २० ॥ भ०

चित्रं चित्रमिवायातो विचित्रं तस्य भूभृतम्।
हरयो वेगमासाद्य सन्त्रस्ता मुमुहुर्मुहुः ॥ २१ ॥

आद्यन्त यमकम्।

गच्छन् स वारीण्यकिरत्पयोधेः
कूलस्थितांस्तानि तरूनधुन्वन्।

चित्रमित्यादि। भूभृतं पर्वतं चित्रं गैरिकादिभिर्नानावर्णम् अतएव चित्रमिवालेख्यमिव आयातः आगच्छतस्तस्य हनूमतः वेगञ्च विचित्रम् अद्भुतमासाद्य प्राप्य हरयः कपयः सन्त्रस्ताः सभयाः मुहुः मुहुः चपम्। श्लोकाद्यन्तयमकमिति श्लोकस्यादावन्ते च यमितत्वात् ॥ २१ ॥ ज॰ म॰

चित्रमित्यादि। तस्य हनूमतश्चित्रमद्भुतं वेगं यमासाद्य प्राप्य हरयः कपयः सन्त्रस्ताः सन्तो मुहुर्वारंवारं मुमुहुर्मोहमुपागताः तस्य कीदृशस्य भूभृतं पर्वतमायातः आगच्छतः यातेः शतृ। कीदृशं भूभृतं विचित्रं गैरिकादिभिर्नानावर्णम् अतएव चित्रमिव आलेख्यमिव। आद्यन्तयमकमिति श्लोकस्यादावन्ते च यमितत्वात् ॥ २१ ॥ म॰

अर्थालङ्कारस्तु दीपकरूपकादिभेदेनानेकप्रकारः तत्र वाक्यार्थ-प्रकाशनाद्दीपकमुच्यते तदादिमध्यान्तभेदात्त्रिविधमिति दर्शयन्नाह।

गच्छन्नित्यादि। स हनूमान् वेगेन गच्छन् पयोधेर्वारीणि वेग-जेन वायुना अकिरत् विक्षिप्तवान् तानि वारीणि अधिक्षिप्तानि कूलस्थितांस्तरूनधुन्वन् कम्पितवन्ति धूञ् कम्पने इति सौवादिकः ते तरवः कम्पिताः पुष्पास्तरान् पुष्पाणां प्रकरान् आस्तीर्यन्त इति कर्त्तोरप् अङ्कुलान् मृदुस्पर्शत्वात् कायस्य सुखहेतूनतन्वन् विस्तारितवन्तः तान् पुष्पास्तरान् किन्नराः मन्मथिनः कामवन्तः अध्यतिष्ठन् अध्यासितवन्तः अधिशीङित्यादिनाधिकरणस्य कर्मसंज्ञा आदिदीपकमिति क्रियापदस्यादौ श्रूयमाणत्वात् द्विविधं ह्यादिदीपकम् एकतिङनेकतिङ्-सहितञ्च तत्र यत्पूर्वं तदेकमप्यनेकार्थप्रकाशकं यथाह भामहः मदो

पुष्पास्तरांस्तेऽङ्गसुखानतन्वन्
तान् किन्नरा मन्मथिनोऽध्यतिष्ठन् ॥ २२ ॥

आदिदीपकम् ।

स गिरिं तरुषण्डमण्डितं समवाप्य त्वरया लतामृगः ।

जनयति प्रीतिमानन्दं मानभङ्गुरम् । यत् प्रियासङ्गमोत्कण्ठामसह्यां मनसः शुचमिति । यत्तु द्वितीयं तत्समस्तवाक्यार्थप्रकाशकं यथेदमेव तत्र ह्युत्तरेषां वाक्यार्थानामाद्येनैव दीपनात् तस्मिन्नसति शेषाणामस्फुटत्वात् पूर्वकं परित्यज्य द्वितीयस्य प्रदर्शनं यत् तत् प्रतीपदीपकं नाम चतुर्थमस्तीति दर्शनार्थं तद्यथा तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् । मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय स्वान् गुणान् कीर्त्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितमिति शेषो यदत्र परस्परमसम्बद्धमिति ॥ २२ ॥ ज० म०

अथ शब्दालङ्कारं प्रदर्श्य अर्थालङ्कारं दर्शयति स च बहुप्रकारो रूपकदीपकादिभेदात् तत्रादौ दीपकं दर्शयति ।

गच्छन्नित्यादि । स हनूमान् गच्छन् वेगजेन वायुना पयोधेर्वारीणि अकिरत् क्षिप्तवान् ते तानि वारीणि विक्षिप्तानि सन्ति कूलस्थितान् तरून् अधुन्वन् अकम्पयन् धुञ् कम्पे ते तरवः कम्पिताः सन्तः पुष्पाणामास्तरान् अतन्वन् तनुञ् विस्तारे अङ्गसुखान् शरीरे सुखजनकान् मृदुस्पर्शत्वात् तान् पुष्पास्तरान् किन्नरा मन्मथिनः कामिनः सन्तः अध्यतिष्ठन् अध्यवात्सुः कर्मक्रियेत्यादिना डस्य ढत्वम् । आदिदीपकमिव गच्छन्नित्यादावुपादानात् तदेव सर्वां क्रियां दीपयति अन्यासां तन्मूलत्वात् अकिरदिति पदादौ दत्तं तेनैवान्यासामपि क्रियाणामुद्दीपनादिति केचित् । तथाहि अकिरदिति क्रियापदेन कीर्णानि वारीणि इति योजना एवं सर्वत्र ॥ २२ ॥ भ०

स गिरिमित्यादि । स लतामृगो हनूमान् प्रयोजककर्त्ता गिरिमङ्गादिभिरध्यासितं तरुषण्डमण्डितं त्वरया वेगेन समवाप्य कपि-

स्मितदर्शितकार्य्यनिश्चयः कपिसैन्यैर्मुदितैरमण्डयत् ॥२३॥

अन्तदीपकम्।

गरुडानिलतिग्मरश्मयः पततां यद्यपि सम्मता जवे।
अचिरेण कृतार्थमागतं तममन्यन्त तथाप्यतीव ते ॥ २४ ॥

मध्यदीपकम्।

सैन्यैर्मुदितैर्हृष्टैः प्रयोज्यकर्तृभिः अमण्डयत् मडि भूषायामिति भौवादिकः चौरादिके तु कपिसैन्यैः करणभूतैरिति योज्यं मुदितत्वे कारणमाह स्मितदर्शितकार्य्यनिश्चयः ईषद्धसितप्रकटीकृतसीतोपलब्धि-निश्चयः। अन्तदीपकमिति अमण्डयदिति क्रियापदस्यान्ते निर्दिष्ट-त्वात् ॥ २३ ॥ ज० म०

स गिरिमित्यादि। स कृतार्थगः कपिर्हनूमान् प्रयोजककर्त्ता अङ्गदादिभिरध्यासितं गिरिं त्वरया वेगेन समवाप्य मुदितैर्हृष्टैः कपिसैन्यैः प्रयोज्यैरमण्डयत् शोभयामास गिरिमिति काकाचिगोल-कन्यायेन उभयत्र सम्बध्यते भौवादिकमडिधातोः प्रेरणे णिः किंवा स कृतार्थगः कर्त्ता त्वरया गिरिं समवाप्य कपिसैन्यैः करणभूतैरमण्ड-यत् शोभते स्म चौरादिकमडिधातोरूपं किमडि भूषे गिरिं कीदृशं तरुषण्डैर्वृक्षसमूहैर्मण्डितं कपिसैन्यानां मुदितत्वे हेतुमाह स्मितेति स्मितेन ईषद्धास्येन दर्शितो ज्ञापितः कार्य्यस्य सीतादर्शनरूपस्य निश्चयो येन षण्डं पद्मादिसंघाते षण्डः स्यान्नोपतावपीति विश्वः। सुन्दरीच्छन्दः तल्लक्षणं यथा अयुजोर्यदि सौ जगौ युजोः सभराल्गौ यदि सुन्दरी तदेति अत्र वाक्यभेदाभावेऽपि अमण्डयदित्यन्तिमक्रिया-पदेन सम्पूर्णवाक्योपकारादन्तदीपकं किंवा गिरिमवाप्य तं स्वयममण्ड-यत् कपिसैन्यैश्चामण्डयदिति वाक्यभेदोऽत्र मन्तव्यः ॥ २३ ॥ भ०

गरुडेत्यादि। पततां गच्छतां मध्ये यद्यपि गरुडादयो जवे वेग-विषये सम्मताः अभिमताः तथापि तं हनूमन्तम् अचिरेणैव कालेन कृतार्थं कृतकृत्यमागतम् अतीवजविनं ते कपयः अमन्यन्त मन्यतेर्लङि

व्रणकन्दरलीनशस्त्रसर्पः पृथुवक्षःस्थलकर्कशोरुभित्तिः।
च्युतशोणितबद्धधातुरागः शुशुभे वानरभूधरस्तदासौ ॥२५॥

रूपकम्।

रूपम्। मध्यदीपकमिति क्रियापदस्य मध्ये निर्दिष्टत्वात् ॥२४॥ ज०म०

गरुड़ेत्यादि। गरुड़वायुसूर्य्या यद्यपि पततां गच्छतां मध्ये जवे वेगविषये लोकस्य सम्मता अभिमतास्तथापि ते कपयस्तं हनूमन्तम् अतीव जववन्तम् अमन्यन्त ज्ञातवन्तः मन्यौङ् बोधे यतोऽचिरेणैव कालेन कृतार्थं कृतकार्य्यमागतम्। मध्यदीपकमिति सम्मता इत्यस्या-मन्यन्तेत्यस्य वा क्रियापदस्य मध्ये निर्दिष्टत्वात् विद्यासागरस्तु जव इति कारकपदं मध्ये श्रूयमाणमतीवेत्यपि दीपयतीति कारकदीपक-मिदमित्याह ॥ २४ ॥ भ०

रूपकमनेकविधं दर्शयन्नाह।

व्रणेत्यादि। असौ वानरो भूधर इव वानरभूधरः उपमित-मित्यादिना समासः तदा तस्मिन्वानरमध्यगमनकाले कृतार्थः शुशुभे शोभते स्म व्रणानि शस्त्रकृतानि कन्दराणीव शस्त्राणि सर्पा इव शस्त्रसर्पाः व्रणकन्दरेषु लीनाः शस्त्रसर्पा यस्य वक्षःस्थलं कर्कशोरुभि-त्तिरिव सा पृथुला विस्तीर्णा यस्य सः शोणितं बद्धधातुराग इव श्लिष्टगैरिकादिराग इव स च्युतो यस्य सर्वत्र उपमितमित्यादिना समासः। रूपकमिति सावयवेन भूधरेणोपमानेन सावयवस्य कपेरुप-मेयस्य तन्निःस्वभावतयाध्यारोपितत्वात् यथोक्तम् उपमानेन तुल्यत्वमुप-मेयस्य रूप्यते। गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुरिति ॥२५॥ज०म०

व्रणेत्यादि। असौ वानरस्वरूपभूधरस्तदा वानरमध्यगमनकाले शुशुभे दीप्यते स्म कीदृशः व्रणानि शस्त्रक्षतस्वरूपाणि कन्दराणि तेषु लीनाः शस्त्रस्वरूपाः सर्पा यस्य पृथु विस्तीर्णं वक्षःस्थलमेव कर्कशोरुः कठिनोरुर्भित्तिर्यस्य शोणितमेव बद्धधातुरागः श्लिष्टगैरिकादिरागश्च्युतो यत्र रूपकमिति व्रणादीनां कन्दरादिभिरिह सादृश्यं न वाच्यं किन्तु अभेद एव विवक्षितः स च यद्यपि बाधितस्तथापि सादृश्यातिशयव्यञ्ज-

अस्यैव भेदा अपरे चत्वारः।

चलपिङ्गलकेशरहिरण्यलताः

स्फुटनेत्रपङ्क्तिमणिसंहतयः।

कलधौतसानव इवाथ गिरेः

कपयो बभुः पवनजागमने ॥ २६ ॥

एतद्विशिष्टोपमायुक्तं रूपकम्।

नात्तथात्वं गम्यते यदुक्तम् उपमैव तिरोभूतभेदा रूपकमिष्यत इति उपमानेन यत्तुल्यमुपमेयस्य रूप्यते। गुणानां समतां दृष्ट्वा रूपकञ्चैव तद्विदुरिति च यदि व्रणानि कन्दराणीव वानरो भूधर इवेत्युपमानसमास उच्यते तदेतदेव लुप्तोपमोदाहरणं बोद्धव्यं यद्वा उपमानसमासेऽपि रूपकत्वमिति मते उदाहरणमिदं तथाच सरस्वतीकण्ठाभरणे यदोपमानशब्दानां गौणवृत्तिरपाश्रया। उपमेये भवेद्वृत्तिस्तदा तद्रूपकं विदुरिति ॥ २५ ॥ भ०

चलेत्यादि। अथ पवनजागमने हनूमदागमने कपयो गिरेस्तस्यैव कलधौतसानव इव सौवर्णैकदेशा इव बभुः शोभन्ते स्म पिङ्गलकेशराणि पिङ्गलसटाः तानि हिरण्यलता इव सुवर्णलता इव ताश्चला येषां कपीनां नेत्रपङ्क्तयो मणिसंहतय इव ताः स्फुटा उज्ज्वला येषामिति। एतदपि रूपकमेव किन्तु कलधौतत्वेन सानूनां विशिष्टत्वाद्विशिष्टोपमायुक्तं कमलकं नाम ॥ २६ ॥ ज० म०

चलेत्यादि। अथानन्तरं कपयोऽङ्गदादयः पवनजस्य हनूमत आगमने बभुः शोभन्ते स्म तस्यैव गिरेः कलधौतसानव इव स्वर्णसानव इव, कलधौतं रूप्यहेम्नोरिति विश्वः। कीदृशाः पिङ्गलकेशराणि कपिलसटा एव हिरण्यलतास्ताश्चलाश्चञ्चला येषां नेत्रपङ्क्तय एव मणिसंहतयस्ताः स्फुटा उज्ज्वला येषाम्। इदमपि रूपकमेव केशराणां लतात्वेन नेत्राणां मणित्वेन च रूपणात् किन्तु कलधौतसानूनां विशिष्टत्वाद्विशिष्टोपमायुक्तमिति ॥ २६ ॥ भ०

कपितोयनिधीन् प्लवङ्गमेन्दुर्मदयित्वा मधुरेण दर्शनेन ।
वचनामृतदीधितीर्वितन्वन्नकृतानन्दपरीतनेत्रवारीन् ॥ २७॥

एतच्छेषार्थान्ववसितमवतंसकम् ।

परिखेदितविन्ध्यवीरुधः परिपीतामलनिर्झराम्भसः ।
दुधुवुर्मधुकाननं ततः कपिनागा मुदिताङ्गदाज्ञया ॥ २८ ॥

अर्द्धरूपकम् ।

कपीत्यादि । प्लवङ्गम इन्दुरिव प्लवङ्गमेन्दुः कपयस्तोयनिधय इव कपितोयनिधीन् मधुरेण सुखेन दर्शनेन मदयित्वा हर्षयित्वा मही-हर्षग्लपनयोरिति घटादित्वान्मित्त्वे ह्रस्वत्वं वचनानि अमृतमयदीधितय इव वचनामृतदीधितीर्वितन्वन् विस्तारयन् लोकवृत्तान्तसम्बन्धोधकमाह्लादकं वचनमुदाहरन्नित्यर्थः आनन्देन हर्षेण परीतं सञ्जातं नेत्रवारि येषां तानेवंविधानकृत कृतवान् । एतद्रूपकं शेषार्थान्ववसितं कपितादन्यो योऽर्थः आनन्दपरीतनेत्रवारीनिति स शेषः तेनान्ववसितं युक्तमवतंसकं नाम विसदृशस्यार्थस्य ज्ञपितत्वात् तदेवान्यैः खण्डरूपकमित्युच्यते ॥ २७ ॥ ज० म०

कपीत्यादि । प्लवङ्गमो हनूमानेव इन्दुः कपीनेव समुद्रान् मधुरेण प्रेमदर्शनेन मदयित्वा हर्षयित्वा वचनान्येव अमृतदीधितीः सुधासम्बन्धकिरणान् वितन्वन् युद्धवृत्तान्तबोधकमाह्लादकवचनमुदाहरन् आनन्देन हर्षेण परीतं सञ्जातं नेत्रवारि येषां तानेवंविधान् अकृत कृतवान् महीहर्षग्लपनयोः घटादित्वात् ह्रस्वः एतच्छेषार्थान्ववसितमवतंसकमिति एतद्रूपकम् उक्तादन्यः शेषः रूपकादन्यः इत्यर्थः रूपितार्थादन्यार्थं आनन्दपरीतनेत्रवारीनकृतेत्येवंरूपः तेनाववसितं युक्तम् अवतंसं नाम विसदृशस्यार्थस्योक्तत्वात् एतदेवान्यैः खण्डरूपकमित्युक्तम् ॥ २७ ॥ भ०

परिखेदितेत्यादि । तत उत्तरकालं कपयो नागा इव हस्तिन

विटपिमृगविषादध्वान्तनुद्वानरार्कः
प्रियवचनमयूखैर्बोधितार्थारविन्दः।
उदयगिरिमिवाद्रिं संप्रमुच्याभ्यगात् खं
नृपहृदयगुहास्थं घ्नन् प्रमोहान्धकारम् ॥ २९ ॥

एतदन्वर्थोपमायुक्तललामकम्।

इव कपिनागाः मुदितस्याङ्गदस्याज्ञया मधुकाननं सुग्रीवस्य क्रीड़ोद्यानं दुधुवुः कम्पितवन्तः मधून्युपभुज्य सम्भ्रममकुर्वन्नित्यर्थः परिखेदिताः परिमृदिताः विन्ध्यवीरुधो विन्ध्यलता गुल्मा यैः परिपीतममलनिर्झराम्भो यैः। अर्द्धरूपकमिति पश्चिमार्द्धे कपिनागा इति रूपितम् ॥ २८ ॥ ज० म०

परीत्यादि। ततोऽनन्तरं कपय एव नागा हस्तिनो मुदितस्य हृष्टस्याङ्गदस्याज्ञया मधुकाननं सुग्रीवस्योद्यानं दुधुवुः कम्पितवन्तः मधुवनं भङ्क्त्वा भुक्तवन्तः इत्यर्थः कीदृशाः परिखेदिता मर्दिता विन्ध्यपर्वतस्य वीरुधो लता यैः ते तथा परिपीतं निर्मलं निर्झरजलं यैः। नागाः काननं धुन्वन्त्येवेति रूपणमर्द्धरूपकमित्युक्तं कपिनागा इत्युत्तरार्द्धे रूपितं न तु पूर्वार्द्धे ॥ २८ ॥ भ०

विटपीत्यादि। वानरार्कः वानरोऽर्क इव वानरार्कः उदयगिरिमिवाद्रिपर्वतं महेन्द्रं सम्प्रमुच्य खमाकाशमभ्यगात् अभिगतवान्। विटपिमृगाणां यो विषाद आसीत् कथं सीतान्वेषणीयेति स ध्वान्तमिव तं नुदतीति क्विप् प्रियवचनानि मयूखा इव तैः करणभूतैः बोधितमर्थारविन्दं येन अर्थः सीतोपलब्धिः सोऽरविन्दमिव नृपहृदयं गुहेव तत्र तिष्ठतीति नृपहृदयगुहास्थं प्रमोहो विषादोऽन्धकार इव तं घ्नन् हनिष्यन् वर्त्तमानसमीपत्वात् भविष्यति लट्। एतदिति रूपकम् अन्वर्थयोपमया युक्तं ललाम नाम यत उदेत्यस्मादित्युदयः अकर्त्तरि च कारके सच् स चासौ गिरिश्चेत्यनुगतार्थता सत्यान्वर्थता नास्त्युपमायाः तदुपमायुक्तमेव रूपकं द्रष्टव्यम् ॥ २९ ॥ ज० म०

रघुतनयमगात्तपोवनस्थं
विधृतजटाजिनवल्कलं हनूमान्।
परमिव पुरुषं नरेण युक्तं
समशमवेशसमाधिनानुजेन॥ २०॥

इवोपमा।

विटपीत्यादि। स वानररूपोऽर्क उदयाचलमिव अद्रिं महेन्द्राद्रिं समुत्सृज्य खमाकाशम् अभ्यगात् आभिमुख्येन गतवान् कीदृशः विटपिमृगाणां वानराणां यो विषादः सीतानुपलब्धिजनितः स एव ध्वान्तमन्धकारस्तं नुदति अपसारयतीति क्विप् प्रियवचनरूपैर्मयूखैर्बोधितानि विकाशितानि अर्थरूपाणि सीतोपलब्धिरूपाणि पद्मानि येन नृपस्य रामस्य हृदयरूपायां गुहायां तिष्ठन्तं प्रमोहरूपमन्धकारं घ्नन् विनाशयिष्यन् वर्त्तमानसामीप्ये वर्त्तमानत्वोपचारात् शतः एतदपि रूपकम् अन्वर्थोपमायुक्तं ललामकं नाम तथाहि उदेत्यस्मादित्युदयः अपादानेऽल् स चासौ गिरिश्चेति अनुगतार्थत्वमुदयगिरिशब्दस्य योगार्थस्यान्वयात् उदयगिरिमिवेत्युपमा दर्शिता विषादादीनां ध्वान्तत्वादिना रूपणम्॥ २९॥ भ०

उपमालङ्कारं दर्शयन्नाह।

रघुतनयमित्यादि। हनूमान् रघुतनयमगात् प्राप्तवान् तपः प्रधानं वनं तपोवनं तत्र स्थितं विधृता जटा अजिनं चर्म वल्कलञ्च येन तम् अनुजेन कनीयसा भ्रात्रा लक्ष्मणेन समास्तुल्याः शमा वेशाः समाधयश्च यस्य तेन युक्तं परमुत्तमं पुरुषमिव पुरुषोत्तममिव नरेण युक्तं वदरिकाश्रमे नरनारायणयोस्तपस्यया स्थितत्वात् इवोपमेति। इवशब्देनोपमार्थस्य गम्यमानत्वात्। उपमाया लक्षणं विरुद्धेनोपमानेन देशकालक्रियादिभिः। उपमेयस्य यत्साम्यं गुणमात्रेण सोपमेति अत्र विरुद्धदेशकालक्रियागुणः पुरुषोत्तम उपमानं तेन रामस्योपमेयस्य तपोवनस्थत्वेन विधृतजटाजिनवल्कलत्वेन नरानुकारिलक्ष्मणेनानुगतत्वेन च गुणमात्रेण साम्यमुपमानम्॥ २०॥ ज० म०

करपुटनिहितं दधत् स रत्नं
परिविरलाङ्गुलिनिर्गताल्पदीप्ति।
तनुकपिलघनस्थितं यथेन्दुं
नृपमनमत्परिभुग्नजानुमूर्द्धा ॥ २१ ॥

यथोपमा।

रश्मित्यादि। हनूमान् रघुतनयं रामम् अगात् प्राप्तवान् कीदृशं तपः प्रधानं वनं तपोवनं तत्र स्थितं बिभृतं जटाष्टगचर्मवल्कलञ्च येन समास्तुल्याः शमः शान्तिर्वैधो जटावल्कादिधारणं समाधिर्ध्यानञ्च यस्य तादृशेन अनुजेन कनीयसा लक्ष्मणेन युक्तं परं नरेण मुनिना युक्तं पुरुषमिव नारायणमिव नरनारायणयोर्वदरिकाश्रमे तपश्चर्यार्थं स्थितत्वात्। पुष्पिताग्राच्छन्दः। लक्षणं यथा अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति। इवोपमेति इवशब्देनोपमाया गम्यमानत्वात् उपमालक्षणं यथा विरुद्धेनोपमानेन देशकालक्रियादिभिः। उपमेयस्य साम्यं यद्गुणमात्रेण सोपमेति। अत्र विरुद्धदेशकालक्रियादिगुणयुक्तः पुरुषोत्तम उपमानं तेन रामस्य तपोवनस्थत्वेन बिभृतजटत्वेन उपमेयस्य लक्ष्मणानुचरत्वेन च गुणमात्रेण साम्यादुपमा इवशब्द उपमाद्योतकः तथा च दण्डी, इववद्वायथाशब्दा ज्ञेयाः सादृश्यसूचका इति ॥ २० ॥ भ०

यथेवशब्द उपमार्थसूचकस्तथान्योऽपीति दर्शयन्नाह।

करपुटनिहितमित्यादि। करपुटे करयुग्मे निहितं न्यस्तं रत्नं सीताचूड़ामणिं परिविरलाङ्गुलिभ्यो निर्गता अल्पा दीप्तयो यस्य तद्रत्नं दधद्धारयन् स हनूमान् नृपं राममनमत् प्रणतवान् परिभुग्ने अवनते जानुनी मूर्द्धा च यस्य हनूमतः यथेन्दुम् इन्दुमिव तनुः अच्छः कपिलश्च यो घनः मेघः तत्र स्थितमिन्दुमिव रत्नम्। यथोपमेति यथाशब्देनोपमार्थस्य गम्यमानत्वात् ॥ २१ ॥ ज० म०

करेत्यादि। परिभुग्ने कुटिलीकृते जानुनी मस्तकञ्च यस्य तथा-

रुचिरोन्नतरत्नगौरवः परिपूर्णामृतरश्मिमण्डलः ।
समदृश्यत जीविताशया सह रामेण वधूशिरोमणिः ॥ ३२ ॥
सहोपमा ।

भूतः सन् स हनूमान् नृपं रामम् अनमत् प्रणतवान् कीदृशः रत्नं सीताचूडामणिं दधत् धारयन् कीदृशं करपुटे निहितमर्पितं परितो विरलाभ्यः अङ्गुलिभ्यो निर्गता अल्पा दीप्तिर्यस्य स तथा अतएव तनुरत्नः कपिलो यो घनो मेघस्तत्र स्थितम् इन्दुं यथा येन रूपेण दधाति तथा रत्नं दधदिति सम्बन्धः । यथोपमेति यथाशब्देनोपमानस्य गम्यमानत्वात् ॥ ३१ ॥ भ०

रुचिर इत्यादि । वधूशिरोमणिः सीताचूडामणिः उन्नतं महद्रत्नगौरवं महार्घ्यादिलक्षणं यस्य रुचिरो दीप्तिमांश्चासौ उन्नतरत्नगौरवश्चेति सः परिपूर्णस्यामृतरश्मेश्चन्द्रमसो मण्डलमिव मण्डलं यस्य सः रामेण समदृश्यत सन्दृष्टः कर्मणि लङ् । जीविताशया सह सार्द्धं तद्दर्शनतो जीवितोऽस्मीति तदाशया सहसा रुचिरा तुष्टिदा रुचिं राति ददातीति कृत्वा उन्नतरत्नगौरवादुन्नतं रत्नेष्विव गौरवं बहुमानो यस्यामिति परिपूर्णममृतममरणं रश्मिमण्डलं यस्यामिति सहोपमेति सहशब्देन जीविताशया उपमाद्योतनात् ॥ ३२ ॥ ज० म ०

रुचिर इत्यादि । रामेण वध्वाः सीतायाः शिरोमणिः समदृश्यत सदृष्टः कर्मणि घी जीवितोऽस्मीति या प्रत्याशा तया सदृशः सहशब्दोऽत्र सादृश्यार्थः उभयसाधर्म्यमाह रुचिरोन्नतरत्नगौरवः उन्नतं महद्रत्नगौरवं बहुमूल्यत्वादिलक्षणं गुरुत्वाख्यगुणविशेषो वा यस्य तथा ततो रुचिरः शोभायुक्तश्चासावुन्नतरत्नगौरवश्चेति कर्मधारयः जीविताशापि रुचिं तुष्टिं राति ददातीति रुचिरा उन्नतरत्नेष्विवं गौरवं बहुमानो यस्यामिति भावः परिपूर्णस्यामृतरश्मेश्चन्द्रस्येव मण्डलं वक्राकारत्वं यस्य स तथा आशापक्षे परिपूर्णममृतमिव रश्मिमण्डलं यस्यां जीविताशायां सत्यां शरीरस्य तेजस्वित्वसम्भवात् परिपूर्णममृतेनामरणेन रश्मिमण्डलं यस्यामिति केचित् । सहोपमेति

अवसन्नरुचिं वनागतं तमनामृष्टरजोविधूसरम् ।
समपश्यदपेतमैथिलिं दधतं गौरवमात्रमात्मवत् ॥ २२ ॥

तद्धितोपमा ।

सहशब्देन जीविताशासादृश्यसूचनात् चूडामणिदर्शनेन तस्य जीवि-ताशा जातेति व्यङ्ग्यार्थः ॥ २२ ॥ भ०

अवसन्नरुचिमित्यादि । तं शिरोमणिम् आत्मवदात्मानमिव सम-पश्यद्रामः तेन तुल्यमिति वतिः । अवसन्नरुचिं मन्दप्रभं वेणीवन्धन-मलिनत्वात् इतरत्र सशोकत्वात् वनागतम् अशोकवनिकाख्याद्वनादा-गतम् इतरं पितुरादेशाद्वनमागतं सुप्सुपेति सः अनामृष्टम् अनप-नीतं यद्रजः तेन विधूसरम् उभयमपि अपेतमैथिली येन यस्माद्वा दधतं गौरवमात्रं गुरुत्वमेव न दीप्त्यादिकम् इतरम् माहात्म्यं दधतम् । तद्धितोपमेति तद्धितप्रत्यया द्रष्टव्याः ॥ २२ ॥ ज० म०

अवेत्यादि । रामस्तं शिरोमणिमात्मवदात्मानमिव समपश्यत् संदृष्टवान् उभयसाधर्म्यमाह अवसन्नरुचिं मन्दप्रभं वेणीवन्धेन मलिन-त्वमार्जनाद्वा आत्मपक्षे सशोकत्वात् वनागतम् अशोकवनिकायाः समा-गतं पक्षे पितुरादेशात् वनमायातम् अनामृष्टरजोविधूसरम् अना-मृष्टम् अनपनीतं यद्रजो भूमौ शयनाल्लग्नं तेन विधूसरं पाण्डरं धूसरशब्दो दन्त्यमध्यः मद्दिषधूसरितः सरितस्तट इति प्रयोगात् अपेतमैथिलिम् अपेता मैथिली यस्मात् बहुप्रेयसीत्युदाहरणेन वृतः इत्यस्य प्रायिकत्वसूचनान्न कप्रत्ययः गत्वादेरिति ह्रस्वः किंवा मैथिल्याः सकाशादपेतं भ्रष्टम् अपेतस्य पूर्वनिपातोऽभिधानात् राज-दन्तादित्वादिति परः । गौरवमात्रं केवलं गुरुत्वाख्यगुणविशेषं दधतं धारयन्तं न दीपनादि आत्मपक्षे माहात्म्यं तद्धितोपमेति तद्धितसंज्ञ-केन वत्प्रत्यय इति कतवत्प्रत्ययेन सादृश्याभिधानात् एवं कल्पादयोऽपि सादृश्यसूचकाः स्वमते तद्धितस्य तसंज्ञा ॥ २२ ॥ भ०

सामर्थ्यसम्पादितवाञ्छितार्थः
चिन्तामणिः स्यान्न कथं हनूमान्।
सलक्ष्मणो भूमिपतिस्तदानीं
शाखामृगानीकपतिश्च मेने॥ ३४॥

लुप्तोपमा।

युष्मानचेतन् क्षयवायुकल्पान्
सीतास्फुलिङ्गं परिगृह्य जाल्मः।
लङ्कावनं सिंहसमोऽधिशेते
मर्त्तुं द्विषन्नित्यवदद्धनूमान्॥ ३५॥

समोपमा।

सामर्थ्येत्यादि। सामर्थ्येन शक्त्या सम्पादितो निष्पादितो वाञ्छितोऽभिलषितोऽर्थो येन स हनूमान् कथं चिन्तामणिश्चिन्ता मणिरिव न स्यात् इति तदानीं मेने ज्ञातवान् सलक्ष्मणः सह लक्ष्मणेन भूमिपतीरामः शाखामृगानीकपतिश्च सुग्रीवः। लुप्तोपमेति चिन्तामणिरित्यत्र वशब्दार्थस्य गम्यमानत्वात् लुप्तोपमेति॥ ३४॥ ज० म०

सामर्थ्येत्यादि। तदानीं तस्मिन् चूड़ामणिप्राप्तिसमये लक्ष्मणसहितो भूमिपतीरामः शाखामृगानीकस्य कपिसैन्यस्य पतिः सुग्रीवश्च इति मेने ज्ञातवान् किमित्याह हनूमान् कथं चिन्तामणिरिव न स्यात् स्यादेव यतः सामर्थ्येन स्वशक्त्या सम्पादितो वाञ्छितार्थो येन। लुप्तोपमेति इवशब्दस्य गम्यमानत्वादनुच्चारात् तथाच कण्ठाभरणे लोपे सामान्यधर्माणां द्योतकस्य च योपमा। प्रतीयमाने सादृश्ये द्वयोर्लुप्तेति तां विदुरिति॥ ३४॥ भ०

युष्मानित्यादि। युष्मान् रामादीन् क्षयवायुकल्पान् प्रलयकालमहावायुसदृशान् अचेतन् अजानन् चितीसंज्ञान इति भौवादिकः द्विषन् दशाननः जाल्मः मूर्खः सीतास्फुलिङ्गं सीतामग्निकणमिव

अहृत धनेश्वरस्य युधि यः समेतमायो धनं
तमहमितो विलोक्य विबुधैः कृतोत्तमायोधनम् ।
विभवमदेन निह्नुतह्रियातिमात्रसम्पन्नकं
व्यथयति सत्पथादधिगताथ वेह सम्पन्नकम् ॥ २६ ॥

अर्थान्तरन्यासः ।

परिरक्ष्याद्य लङ्कां वनमिवाधिशेते मर्त्तुं मरिष्यामीति सिंहसम इत्यवदद्धनूमान् । समोपमेति समशब्देनोपमाया अभिधानात् एवं निभसदृशादयोऽपि द्रष्टव्याः ॥ २५ ॥ ज० म०

युष्मानित्यादि । हनूमान् इति अवदत् किमित्याह सिंहसमः सिंह इव जाल्मोऽसमीक्ष्यकारी द्विषन् खलु रावणः सीतां स्फुलिङ्गमिवाग्निकणमिव परिरक्ष्य युष्मान् रामादीन् अयवायुकल्पान् प्रलयकालसम्बन्धिवायुसदृशान् अचेतन् अजानन् मर्त्तुं प्राणान् त्यक्तुं लङ्कां वनमिव अधिशेते अधिवसति सिंहोऽप्युग्रत्वादन्यमगणयित्वा वने वसतीति सादृश्यम् । समोपमेति समशब्देन उपमाभिधानात् एवं निभसदृशादयो द्रष्टव्याः ॥ २५ ॥ भ०

इदानीमलङ्कारान्तराख्याह ।

अहृतेत्यादि । यो द्विषन् युधि संग्रामे समेतमायः समेता प्राप्ता माया येनेति तृतीयार्थे बहुव्रीहिः मायावीत्यर्थः धनेश्वरस्य धनदस्य धनमहृत हृतवान् हृस्वादङ्गादिति सिचो लोपः तं विबुधैर्देवैः सह कृतोत्तमायोधनं कृतमहासंग्रामं निह्नुता अपलपिता ह्रीर्लज्जा येन विभवमदेन तेन निह्नुतह्रिया अतिमात्रं सुष्ठु सम्पन्नकं युक्तं येन परस्त्रियमपहृत्यानीतवानसौ तं विलोक्य अहमितः प्राप्तः विभवमदो लज्जां त्याजयतीत्यमुमेवार्थम् अनुस्मृत्यार्थान्तरमाह व्यथवेति व्यथवा शब्दे निपातसमुदायः यथार्थे वर्त्तते यथादिह लोके संपत् विभूतिरधिगता प्राप्ता सत्पथात् सन्मार्गात् कं न व्यथयति चलयति व्यथिरत्र चलने वर्त्तते । अर्थान्तरन्यास इति उक्तादर्थादन्यस्योपन्यासात् ।

ऋद्धिमान् राक्षसो मूढ़श्चित्रं नासौ यदुद्धतः ।
को वा हेतुरनार्य्याणां धर्म्ये वर्त्मनि वर्त्तितुम् ॥ ३७ ॥

आक्षेपः ।

यथोक्तम्, उपन्यसनमर्थस्य प्रक्रान्तादपरस्य यत् । ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतौ यथेति ॥ ३६ ॥ ज० म०

अहृतेत्यादि । यो द्विषन् शत्रु धनेश्वरस्य कुवेरस्य धनम् अहृत हृतवान् ह्रस्वादङ्गादिति सिचो लोपः कीदृशः युधि संग्रामे समेता प्राप्ता माया येन सम्बद्धा माया यत्रेति वा तं विलोक्य अहमित आगतः कीदृशं विवुधैर्देवैः सह कृतोत्तमायोधनं कृतमहायुद्धं निष्कृतह्रिया अपनीतलज्जेन विभवमदेन ऐश्वर्य्यमत्ततया अतिमात्रमतिशयेन सम्पन्नकं युक्तं विकारसङ्कुलत्यादिना कुत्सायां कः परस्त्रियमपहृत्याप्यानयतीति निर्लज्जत्वं विभवमदो लज्जां त्याजयतीति अर्थान्तरन्यासमाह अथवा यस्मात् अधिगता प्राप्ता सम्पत् विभूतिरिह लोके कं जनं सत्पथात् सदाचारात् न व्यथयति न चालयति अपि तु सर्वमेव व्यथङ् दुःखे चाले भये अत्र चलनार्थः अथवेत्यव्ययं यस्मादर्थे । नन्दनं नाम छन्दः लक्षणं यथा नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनमिति अत्र तृतीयपादे नवमाक्षरस्य प्रह्वे वेति पिङ्गलसूत्रेण गुरुत्वविकल्पविधानात् लघुत्वं तथाच माघे प्राप्तनाभिह्रदमज्जनमाशु इति । यदा तीव्रप्रयत्नेन संयोगादेव गौरवम् । न छन्दोभङ्गभयाद्धस्तदा दोषाय स्मरय इति कण्ठाभरणम् । केचित्तु संयोगे गुरुत्वात् छन्दोभङ्गः स्यादिति शङ्कया निष्कृतह्रियेत्यत्र निष्कृतभियेति पाठं कल्पयन्ति । अर्थान्तरन्यास इति ज्ञेयः सोऽर्थान्तरन्यासो योऽन्यत् प्रस्तुत्य किञ्चन । तत्साधनसमर्थस्य न्यासो भिन्नस्य वस्तुन इति । उपन्यसनं समर्थस्य प्रक्रान्तादपरस्य यत् । ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यथेत्यन्योऽपि ॥ ३६ ॥ भ०

ऋद्धिमानित्यादि । यदसाधुरुद्धतो दुर्वृत्तः न तच्चित्रमाश्चर्य्यं यस्मादसौ ऋद्धिमान् राक्षसश्च उभयथा विमूढ़ इत्येतदुक्तमिति प्रतिषेधव-

तस्याधिवासे तनुरुत्सुकासौ
दृष्टा मया रामपतिः प्रमन्युः ।
कार्य्यस्य सारोऽयमुदीरितो वः
शेषेण शेषेण किमुद्धतेन ॥ २८ ॥

आक्षेप एव ।

आह को वेति । किमनेनोक्तेन यस्मादनार्य्याणां तद्विधानां धर्म्ये धर्मा-दनपेते वर्त्मनि मार्गे वर्त्तितुं को वा हेतुः किन्नाम कारणं नैवेत्यर्थः । आक्षेप इति प्रतिषेधो नाम । यथोक्तं प्रतिषेध इवेष्टस्य यो विशेषा-भिधित्सया । आक्षेप इति तं सन्तः शंसन्ति द्विविधो यथेति । अत्र पूर्वार्द्धेनोक्तो य इष्टोऽर्थः तस्य को वेत्यादिना विशेषप्रतिपादनेच्छया प्रतिषेध इति स च उक्तवक्ष्यमाणविषयभेदाद् द्विविधः अयमुक्तविषयः ॥ २७ ॥ ज० म०

ऋद्धिमानित्यादि । असौ रावणो यदुद्धतो दुर्वृत्तो भवति तन्न चित्रं नाश्चर्य्यं यस्मादसौ ऋद्धिमान् सम्पत्तियुक्तो राक्षसश्च उभयथापि मूढो विचारशून्य एव एतदुक्तं प्रतिषेधयन्नाह को वेति अथवा किमने-नोक्तेन यस्मात् अनार्य्याणाम् उद्धतानां तादृशानां धर्म्ये धर्मादनपेते वर्त्मनि सदाचारे वर्त्तितुं स्यात् को वा हेतुः न कोऽपीत्यर्थः अतएवा-सावुद्धतः किमद्याप्यादिहेतुचिन्तयेति भावः । वाशब्द आक्षेपद्योतकः आक्षेपप्रतिषेध इति । निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया । वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मत इति अयन्तूक्ताक्षेपः पूर्वा-र्द्धेनोक्तो य इष्टस्तस्य को वेत्यादिना विशेषाभिधानेच्छया प्रतिषेधात् ॥ २७ ॥ भ०

तस्येत्यादि । तस्य रावणस्याधिवासे लङ्कायाम् असौ रामपतिः सीता मया दृष्टा रामः पतिर्यस्या इति विभाषा सपूर्वस्येति नकारा-भावपक्षे रूपं तनुः कृशाङ्गी सीतोगुणवचनादिति ङीषो विकल्पः । उत्सुका सोत्कण्ठा प्रमन्युः प्रकृष्टशोका ऊङुतङ्त्युङ् न भवति तत्वा-योपधादिति वर्त्तते अयङ्कार्य्यस्याभ्युदायतस्य सारः शरीरं सीतादर्शनम्

समतां शशिलेखयोपयायात्
अवदाता प्रतनुः क्षयेण सीता।
यदि नाम कलङ्क इन्दुलेखाम्
अतिवृत्तो लघयेन्न चापि भावी ॥ ३९ ॥

व्यतिरेकः।

उदीरितः कथितः वो युष्मभ्यं शेषेणोद्धतेन अशोकवनिकाभङ्गादिना किं प्रोक्तेन न किञ्चित् प्रयोजनम्। स एवेत्ययमप्याक्षेप एव किन्तु वक्ष्यमाणविषयः। अत्र पूर्वार्द्धेनोक्तो यो दृष्टोऽर्थः तस्य विशेषाभिधित्सया प्रोक्तेनेत्यादिना शेषार्थप्रतिषेधः ॥ ३८ ॥ ज० म०

तस्येत्यादि। तस्य रावणस्य अधिवासे लङ्कायां रामपतिः सीता मया दृष्टा रामः पतिर्यस्या इति बहुव्रीहिः परमते बहुव्रीहौ पत्युरिकारस्य नकार ईप्प्रत्ययश्च विभाषितः तेन रामपत्नी रामपतिश्चेति पदद्वयं स्वमते बहुव्रीहौ रामपतिरित्यादि भवत्येव रामपत्नीत्यादौ तु नारीसखीत्यादिना निपातितस्य पत्नीशब्दस्य ग्रहणं पत्नीशब्दो रूढी भार्य्यावाचकः तेन षष्ठीसमासः कामेकपत्नीं व्रतदुःखशीलामित्यादौ कर्मधारयश्च वाच्यः कीदृशी तनुः कृशाङ्गी गुणाहोत इति पक्षे ईप्प्रत्ययाभावः उत्सुका उत्कण्ठावती त्वयीत्यर्थात् त्वत्सङ्गमभिलषमाणेत्यर्थः। केचिदाहुः तनुषा शरीरेणाप्युत्सुका किं पुनर्मनसा तथाच स्यात्तनुस्तनुषा सार्द्धं धनुषा च धनुस्तथेति शब्दभेदः समन्युः सशष्टशोका अयं कार्य्यस्य सन्दिष्टयस्य सार उत्कृष्टभागो वो युष्मभ्यमुदीरित उक्तः अशेषेणापरेण उद्धतेन उच्चावचेन प्रोक्तेन किं न किञ्चित् प्रयोजनं स एवेति आक्षेप एव किन्तु वक्ष्यमाणविषयक इति भेदः पूर्वार्द्धेनोक्तस्य दृष्टार्थस्य विशेषाभिधेच्छया प्रोक्तेनेत्यादिना शेषार्थप्रतिषेधात् ॥ ३८ ॥ भ०

समतामित्यादि। सीता अवदाता शुभ्रा प्रतनुः प्रकर्षेण तन्वी क्षयेण दौर्बल्येन एतावता तुल्यधर्मत्वाच्छशिलेखया तुल्यतां समतामुपयायात् उपगच्छेत् यदि कलङ्को नामापरोऽतिवृत्तोऽतिक्रान्तः इन्दुलेखां न लघयेत् न न्यूनयेत् तथा भावी आगामी नाशयिष्यत्

अपरीक्षितकारिणा गृहीतां
त्वमनासेवितवृद्धपण्डितेन।
अविबाधितनिष्ठुरेण साध्वीं
दयितां त्रातुमलं घटस्व राजन्!॥ ४०॥

विभावना।

यदि न चैवं न स्याच्चन्द्रलेखया न समेति भावः। व्यतिरेक इति अयं व्यतिरेको नाम अन्वयः पूर्वार्द्धे उपमानोपमेययोरर्थो दर्शितः तस्य पश्चादर्द्धेन भेददर्शनात्। यथोक्तम् उपमानवतोऽर्थस्य यद्विशेषनिदर्शनम्। व्यतिरेकं तमिच्छन्ति विशेषोत्पादनाद्ययेति॥ ३९॥ ज० म०

समतामित्यादि। सीता शशिलेखया चन्द्रकलया समतां तुल्यताम् उपयायात् प्राप्नुयात् कीदृशी अवदाता शुद्धा चन्द्रलेखाप्यवदाता शुक्ला क्षयेण दौर्बल्येन प्रतनुः अतिकृशा शशिलेखापि क्षयेण रोगविशेषेण प्रतनुः यदि नामातिवृत्तोऽतीतो भावी भविष्यंश्च कलङ्कस्तामिन्दुलेखां न लघयेत् नातिशयेन न्यूनां कुर्य्यात् कलङ्कस्य भूतत्वाद्भावित्वाच्च सा चन्द्रलेखयापि न समेति भावः। लघुशब्दात् लेः तत्याख्याने णिरिति णिः ओर्गुणश्च णिदिति णित्त्वात् टेर्लोपः नामेत्यव्ययं प्रकाशसम्भावना-क्रोधाभ्युपगमकुत्सनेषु व्यतिरेक इति उपमानाद्यदन्यस्य व्यतिरेकः स एव स इति अन्यस्य उपमेयस्य व्यतिरेक आधिक्यम्॥ ३९॥ म०

अपरीक्षितकारिणेत्यादि। अपरीक्षितकारिणा अविचारितकरणशीलेन अनासेवितवृद्धपण्डितेन अपर्य्युपासितज्ञानवृद्धसत्यधेन अविरोधितनिष्ठुरेणानपकृतोऽपि क्रूरः सन् यः शत्रुः तेन गृहीतां साध्वीं पतिव्रतां दयितामिष्टां त्वाशार्हां त्रातुं रक्षितुमलं पर्य्याप्तं त्वं घटस्व यतस्व, हे राजन्नित्यवदद्धनूमान्। विभावनेति परीक्षा सेवा विरोधनञ्चेति तिस्रः क्रियाः तासां यः प्रतिषेधः नञा तेन अपरीक्षा-पूर्वकं यत्करणं यथा वृद्धसेवापूर्वकं यत्पण्डितत्वं यच्चाविरोधपूर्वकं निष्ठुरत्वं तस्य क्रियाफलस्य विभावनात् प्रकाशनात्। यथोक्तं

**स च विह्वलसत्वसङ्कुल: परिशुष्यन्नभवन्महाह्रद:।**
**परित: परितापमूर्च्छित: पतितञ्चाम्बु निरभ्रमीप्सितम् ॥४१**

**समासोक्ति:।**

क्रियाया: प्रतिषेधेन तत्फलस्य विभावनात्। ज्ञेया विभावनैवासौ सान्वर्थं कथ्यते यथेति ॥ ४० ॥ ज० म०

अमेत्यादि। हे राजन्! दयितां सीतां प्रियां त्रातुं रक्षितुं त्वमसमर्थं घटस्व चेष्टस्व यत: साध्वीं पतिव्रताम् अपरीक्षितकारिणा अविचारितकरणशीलेन अनासेवितवृद्धपण्डितेन वृद्धमनुपास्यैव पण्डितेन पण्डितम्मन्येन अविबाधितेनानपकृतेनापि सता निष्ठुरेण क्रूरेण रावणेनेत्यर्थात् गृहीताम् इत्यवदद्धनूमानिति सम्बन्ध:। विभावनेति परीक्षावृद्धसेवाविधानैर्विनापि करणपाण्डित्यनैष्ठुर्याणां तत्फलानां स्वाभाविकत्वेन प्रकाशनात्। तथाच, क्रियाया: प्रतिषेधेऽपि फलव्यक्तिर्विभावनेति काव्यप्रकाशे। प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित् कारणान्तरम्। यत्र स्वाभाविकत्वं वा विभाव्य सा विभावनेति दण्डी ॥ ४० ॥ भ०

स चेत्यादि। स च रामो महाह्रद: महाह्रदसम: सीताविरहात् विह्वलेनाकुलेन सत्वेन चेतसा संकुलो व्याप्त: परिशुष्यन् शोषमुपगच्छन् परित: समन्तात् परितापमूर्च्छित: शोकसन्तापेन मूर्च्छान्वितोऽभवत् भूत: अनन्तरं चाम्बु जलं सीतावार्त्ताश्रवणमीप्सितम् अभिप्रेतं निरभ्रमाकस्मिकं पतितमित्येकोऽर्थ: महाह्रद: परिपुष्यन् विह्वलै: सत्त्वैर्मत्स्यादिभि: संकुलो व्याप्त: परितापमूर्च्छित: परितापेन मूर्च्छित: वर्द्धतापान्वितोऽभवत् अम्बु च निरभ्रं विना मेघेन पतितमिति द्वितीय: समासोक्ति:। यथोक्तम् यत्रोक्तौ गम्यतेऽन्योऽर्थस्तत्समानविशेषण:। सा समासोक्तिरुदिता संक्षिप्तार्थतया यथेति एवञ्च सत्वा अयं श्लेषाद्भिद्यते श्लेषे हि द्वयोरपि श्रूयमाणत्वात् ॥ ४१ ॥ ज० म०

स चेत्यादि। स च रामो महाह्रद इव अभवत् अथ निरभ्रं मेघं विनापि आकस्मिकम् ईप्सितम् अभिलषितं सीतावार्त्ताश्रवणस्वरूप-

अथ लक्ष्मणतुल्यरूपवेशं
गमनादेशविनिर्गताग्रहस्तम् ।
कपयोऽनुययुः समेत्य रामं
नतसुग्रीवगृहीतसादराज्ञम् ॥ ४२ ॥

अतिशयोक्तिः ।

अम्बु जलं पतितं प्राप्तम् अभवच्च पतितश्चेति चकारद्वयं तुल्यकालता-सूचनार्थं कीदृशः विह्वलेन विरहव्याकुलेन सत्वेन चेतसा संकुलो व्याप्तः परिशुष्यन् कार्श्यमुपगच्छन् परितः समन्तात् परितापेन शोकसन्तापेन मूर्च्छितः मोहं प्राप्तः महाह्रदोऽपि परिशुष्यन् विह्वलैः सत्त्वैर्जन्तु-भिर्मत्स्यादिभिः संकुलः परितापेन सूर्य्यातपेन मूर्च्छितो यदा भवति तदेप्सितमम्बु विना मेघेन पतितम् । सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुष्विति विश्वः । समासोक्तिरिति साक्षान्महाह्रदस्यानुपादानेऽपि तत्तुल्य-विशेषणतया रामस्य गम्यमानत्वात् संक्षेपेणान्वयस्योक्तिरित्यर्थः । यदुक्तं यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषणः । सा समासोक्तिरुदिता संक्षेपार्थतया तथेति । अन्यत्रापि वस्तु किञ्चिदभिप्रेत्य तद्वदन्यस्य वस्तुनः । उक्तिसंक्षिप्तरूपत्वात् समासोक्तिरिहोच्यते इति । अतएव श्लेषाद्भेदः तत्र द्वयोरपि श्रूयमाणत्वात् ॥ ४१ ॥ भ०

अथेत्यादि । अथ वार्त्ताश्रवणानन्तरं कपयः समेत्य मिलित्वा राममनुययुः अनुगतवन्तः लक्ष्मणेन तुल्यं रूपं वेशश्च यस्य रामस्य गमनाय प्रयाणाय आदेशः तदर्थं विनिर्गतौ अग्रहस्तौ यस्य नतेन प्रणतेन सुग्रीवेण गृहीता प्रतिष्ठिता सादराज्ञा यस्य तं रामम् । अतिशयोक्तिरिति अतिशयाभिधानात् अत्र सुष्ठ्वपि नामासौ लक्ष्मणे च तुल्यरूपवेशः स्यात् न तु प्रत्यक्षप्रमाणपरिच्छेद्य इति लोकाति-क्रान्तवचनमेतद्वचनम् अवश्यञ्च कश्चिद्विशेषोऽस्ति । यथोक्तं निमित्ततो यत्र वचो लोकातिक्रान्तगोचरम् । मन्यन्तेऽतिशयोक्तिं तामलङ्कार-तया यथेति ॥ ४२ ॥ ज० म०

कपिपृष्ठगतौ ततो नरेन्द्रौ
कपयश्च ज्वलिताग्निपिङ्गलाक्षाः ।
मुमुचुः प्रययुर्द्रुतं समीयुः
वसुधां व्योम महीधरं महेन्द्रम् ॥ ४२ ॥

यथासंख्यम् ।

अथेत्यादि। सीतावार्त्ताश्रवणानन्तरं कपयः समेत्य मिलित्वा रामम् अनुययुः अनुगतवन्तः कीदृशं लक्ष्मणेन तुल्यं रूपं वेशश्च यस्य तं रामदुःखेन लक्ष्मणोऽधिकं दुःखितः सीतावार्त्ताश्रवणाच्च रामादप्यधिकं हृष्ट इति लक्ष्मणेन तुल्यतोक्ता। कपीनां गमनाय प्रस्थानाय आदेश आज्ञा तदर्थं विनिर्गतोऽग्रहस्तो यस्य तं हस्तशब्दस्यैकदेशवृत्तितया अग्रशब्देन कर्मधारयः अन्ये तु राजदन्तादौ पठन्ति प्रणतेन सुग्रीवेण गृहीता सादराज्ञा यस्य तम्। अतिशयोक्तिरिति अतिशयार्थप्रतिपादनात् अत्र हि आज्ञानन्तरमेव कपीनामनुगमनेनैव भक्त्यतिशयत्वं लक्ष्मणतुल्यताभिधानेन तद्गतहर्षशोकातिशयत्वञ्च। तथाच विवक्षाया विशेषस्य लोकसीमातिवर्त्तिनी। असावतिशयोक्तिः स्यादलङ्कारोत्तमा च सा। सा तु प्रायो गुणानाञ्च क्रियाणाञ्चोपकल्प्यते। नहि द्रव्यस्य जातेर्वा भवत्यतिशयः क्वचिदिति ॥ ४२ ॥ भ०

कपिपृष्ठगतावित्यादि। ततोऽनन्तरं नरेन्द्रौ रामलक्ष्मणौ कपयश्च सर्वे एते मुमुचुः वसुधां त्यक्तवन्तः प्रययुर्व्योम आकाशं महेन्द्रं महीधरं समीयुः गतवन्तः लिटः कित्त्वे गुणाभावाद्धातोरियङ्। नरेन्द्रौ किम्भूतौ कपिपृष्ठगतौ हनूमन्तमारूढौ। यथासंख्यमिति मुमुचुरित्यादिना क्रियाणां वसुधादीनाञ्च कर्मणामनुक्रमशो निर्देशात्। यथोक्तं भूयसामुपदिष्टानां क्रियाणामथ कर्मणाम्। क्रमशो योऽनुनिर्देशो यथासङ्ख्यं तदुच्यत इति ॥ ४२ ॥ ज० म०

कपीत्यादि। ततोऽनन्तरं कपिपृष्ठगतौ वानरपृष्ठस्थौ नरेन्द्रौ रामलक्ष्मणौ ज्वलदग्निवत् पिङ्गलशरीराः कपयश्च वसुधां पृथ्वीं मुमुचुः त्यक्तवन्तः व्योमाकाशं प्रययुः प्रयातवन्तः महेन्द्राख्यं पर्वतं द्रुतं

स्थितमिव परिरचितुं समन्ता-
दुदधिजलौघपरिप्लवाद्धरित्रीम्।
गगनतलवसुन्धरान्तराले
जलनिधिवेगसहं प्रसार्य्य देहम्॥ ४४॥

उत्प्रेक्षा।

समीयुः सङ्गतवन्तः। यथासंख्यमिति क्रियापदानां कर्मपदानाञ्च क्रमेणान्वयात् यदुक्तं काव्यप्रकाशे यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वय इति अन्यत्राप्युक्तं भूयसामुपदिष्टानामर्थानां समधर्मिणाम्। क्रमशो योऽर्थनिर्देशो यथासंख्यं तदुच्यत इति॥ ४३॥ भ०

स्थितमित्यादि। उदधिजलौघात्समन्ततो यः परिप्लवो विनाशः तस्माद्धरित्रीं परिरचितुमिव गगनतलवसुन्धरयोरन्तराले देहं शरीरं जलनिधिवेगं सहत इति मूलविभुजादित्वात् कः प्रसार्य्य स्थितं महेन्द्रं समीयुः। उत्प्रेक्षेति यथोक्तम् अविवक्षितसामान्यात् किञ्चिच्चोपमया सह। अतद्गुणक्रियारोपादुत्प्रेक्षातिशयान्वितेति अत महीधरसामान्यस्यापि विवक्षितत्वादविवक्षितं सामान्यत्वं रक्षितुमिवेति किञ्चिदुपमया सह महेन्द्रगिरेरतद्गुणतया रक्षणक्रियायोगः गगनतलं वसुन्धरां व्याप्य स्थितमित्यतिशयान्विता॥ ४४॥ ज० म०

स्थितमित्यादि। कीदृशं महेन्द्रम् उदधेर्जलौघेन परिप्लवात् विनाशात् समन्तादाप्लवनाद्वा धरित्रीं पृथिवीं परिरचितुमिव समन्तात् त्रातुमिव गगनतलवसुन्धरयोराकाशपृथिव्योरन्तराले मध्ये जलनिधिवेगसहं देहं प्रसार्य्य विस्तार्य्य स्थितं सहेः पचादित्वादच् परिप्लुङो भावेऽल् परिप्लवामिति पाठे पचादित्वादच् चञ्चलां व्याकुलां वा परिप्लवचञ्चलः स्यादाकुलेऽपि परिप्लव इति विश्वः। उत्प्रेक्षेति अन्यथावस्थिता वृत्तिश्चेतनस्येतरस्य वा। अन्यथोत्प्रेक्ष्यते यत तामुत्प्रेक्षां विदुर्बुधा इति। अत स्वाभाविका द्यावापृथिव्योरन्तराले स्थितिः पृथिवीरक्षणार्थतया सम्भाव्यते। अन्यस्त्वाह अविवक्षितसामान्यात् किञ्चिच्चोपमया सह। अतद्गुणक्रियायोगादुत्प्रेक्षातिशयान्वितेति तत

विषधरनिलये निविष्टमूलं
शिखरशतैः परिमृष्टदेवलोकम् ।
घनविपुलनितम्बपूरिताशं
फलकुसुमाचितवृक्षरम्यकुञ्जम् ॥ ४५ ॥

वार्त्ता ।

महीधरसामान्या विवक्षितत्वादत्राविवक्षितसामान्यत्वं परिरक्षितुमिवेति प्रयोगात् किञ्चिच्चोपमया सह योगित्वं महेन्द्रगिरेरतद्गुणतया रक्षणक्रियायोगः गगनतलवसुन्धरान्तरालं व्याप्य स्थितमित्यतिशयान्वितत्वम् इवशब्दोऽप्युत्प्रेक्षाव्यञ्जकः ॥ ४४ ॥ भ०

विषधरनिलय इत्यादि । विषधरनिलये पाताले निविष्टमूलं महेन्द्रं शिखरशतैः करणभूतैः परिमृष्टः संस्पृष्टो देवलोको येन घनैर्निरन्तरैर्विपुलैर्विस्तीर्णैर्नितम्बैर्मेखलाभागैः पूरिता व्याप्ता आशा दिशो येन फलकुसुमान्वितैर्वृक्षैः रम्यं कुञ्जं गहनं यस्मिन् वार्त्तेति तत्त्वार्थकथनात्मा द्विविधा विशिष्टा निर्विशिष्टा च तत्र या पूर्वा सा स्वभावोक्तिरुदिता यथेयमेव तथाचोक्तं स्वभावोक्तिरलङ्कार इति केचित्प्रचक्षते अर्थस्य तादवस्थ्यञ्च स्वभावोऽभिहितो यथेति निर्विशिष्टा वार्त्तानामलङ्कारः यथोक्तं गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः । इत्येवमादिकं काव्यं वार्त्तामेतां प्रचक्षत इति ॥ ४५ ॥ ज० म०

विषधरेत्यादि । पुनः कीदृशं महेन्द्रं विषधरनिलये पाताले निविष्टं मूलं यस्य तं शिखराणां शतैः करणभूतैः परिमृष्टः स्पृष्टो देवलोकः स्वर्गो येन घनैर्निरन्तरालैर्विपुलैर्विशालैर्घनेन मेघेन विपुलैर्वा नितम्बैर्मध्यभागैः पूरिता व्याप्ता आशा दिशो येन फलेन पुष्पेण चाचितैर्व्याप्तैर्वृक्षैः रम्यं कुञ्जं लतादिपिहितस्थलं यत्र तं तथा । वार्त्तेति तत्त्वार्थकथनात् सा द्विविधा विशिष्टा निर्विशिष्टा च तत्र पूर्वा स्वभावोक्तिरुच्यते यदुक्तं स्वभावोक्तिरलङ्कार इति केचित् प्रचक्षते । अर्थस्य तादवस्थ्यञ्च स्वभाव इति कथ्यते इति निर्विशिष्टा तु

मधुकरविरुतैः प्रियाध्वनीनां
सरसिरुहैर्दयितास्यहास्यलक्ष्म्याः।
स्फुटमनुहरमाणमादधानं
पुरुषपतेः सहसा परं प्रमोदम् ॥ ४६ ॥

प्रेयः।

सैव वार्त्तालङ्कारः। यथोक्तं, गतोऽयमस्तमादित्यो यान्ति वासाय पक्षिणः। इत्येवमादिकं काव्यं वार्त्तामेतां प्रचक्षत इति प्रकृते तु स्वभावोक्तिरूपैव वार्त्ता बोध्या ॥ ४५ ॥ भ०

मधुकरविरुतैरित्यादि। प्रियाध्वनीनां सीतासम्बन्धिनां जल्पितानां मधुकरविरुतैः स्फुटं स्पष्टमनुहरमाणमनुकुर्वन्तं स दृश्यमित्यर्थात् दयितायाः सीतायाः यदास्यं हास्यञ्चैतयोर्लक्ष्म्याः सरसिरुहैः सादृश्यमनुहरमाणं सन्तं महेन्द्रं तत्र पद्मैरास्यलक्ष्म्याः कुमुदैर्हास्यलक्ष्म्याः अथवा कृत्यार्थैरिति षष्ठी अनुहरमाणशब्दस्य तुल्यार्थत्वात् सदृशीभवन्तमित्यर्थः पुरुषपतेः रामस्य सहसा तत्क्षणम् आगतमात्रस्येत्यर्थः परमुत्कृष्टं प्रमोदमादधानं जनयन्तं समीयुः। प्रेय इति प्रियतमवस्त्वभिधानात् ॥ ४६ ॥ ज० म०

मधुकरेत्यादि। पुनः कीदृशं महेन्द्रं मधुकराणां भ्रमराणां विरुतैः शब्दैः प्रियायाः सीताया जल्पितानां स्फुटं व्यक्तम् अनुहरमाणं सादृश्यं दर्शयन्तं धातोरनेकार्थत्वात् अनुहरमाणमनुकुर्वन्तमित्यन्ये सरसिरुहैः पद्मैर्दयितायाः सीतायाः आस्यस्य मुखस्य हास्यस्य च लक्ष्म्या अपि अनुहरमाणं पद्मविकाशस्यात्र हास्यसाम्येन पद्मैस्तदनुहरणमुक्तम् अन्ये तु सरसिरुहपदेन कुमुदमप्युच्यते तस्यापि सरःसम्भूतत्वात् तेन पद्मैरास्यलक्ष्म्याः कुमुदैर्हास्यलक्ष्म्याश्चानुहरमाणमित्याहुः। अतएव पुरुषपते रामस्य सहसा तत्क्षणमागतमात्रस्यैव परमुत्कृष्टं प्रमोदमानन्दं दधानं कुर्वन्तं जनयन्तमित्यर्थः एतेन यात्रायां मङ्गलमपि सूचितम्। प्रेय इति प्रियतरवस्त्वभिधानात् ॥ ४६ ॥ भ०

ग्रहमणिरसनं दिवो नितम्बं
विपुलमनुत्तमलब्धकान्तियोगम् ।
च्युतघनवसनं मनोऽभिरामं
शिखरकरैर्मदनादिव स्पृशन्तम् ॥ ४७ ॥

रसवत् ।

अचपलमगुरुम्भरासहिष्णुं
जनमसमानमनूर्जितं विवर्ज्यं ।
कृतवसतिमिवार्णवोपकण्ठे
स्थिरमतुलोन्नतिमूढतुङ्गमेघम् ॥ ४८ ॥

ऊर्जस्वी ।

ग्रहेत्यादि । दिवो नितम्बं मध्यभागं ग्रहाः मणिरसनेव यस्य विपुलं विस्तीर्णं न विद्यते उत्तमोऽस्मादित्यनुत्तमम् अतिशयवान् लब्धः कान्त्या योगो येन च्युतो घनो वसनमिव यस्मात् शिखरैः करैरिव मदनादिव स्पृशन्तं महेन्द्रम् । रसवदिति दिवो गिरेश्च स्त्रीपुंसयोरिव शृङ्गाररसाभिधानात् । तथाचोक्तं, रसवद्दर्शितं स्पष्टं शृङ्गारादिरसं यथेति ॥ ४७ ॥ ज० म०

ग्रहेत्यादि । पुनः कीदृशं महेन्द्रं शिखररूपकरैर्मदनात् कामाद्धेतोरिव दिव आकाशस्य नितम्बं मध्यभागं स्पृशन्तं कीदृशं नितम्बं ग्रहमणिरसनं ग्रहाश्चन्द्रादयो मणिनिर्मिता रसना काञ्ची यत्र विपुलं विस्तीर्णम् अनुत्तमलब्धकान्तियोगं न विद्यते उत्तमो यस्मात् लब्धः कान्तियोगो येन पश्चात् कर्मधारयः च्युतघनवसनं च्युतो घनो मेघो वसनमिव यस्मात् एतेन माहात्म्योऽपि सूचितः अतएव मनोऽभिरामं चित्तानन्दकरम् अत्र दिवो नायिकासाम्यं महेन्द्रस्य नायकसाम्यं व्यङ्ग्यम् । रसवदिति दिवो गिरेश्च स्त्रीपुंसयोरिव शृङ्गाररसस्याभिधानात् । तथाच दण्डी, रसवद्रसभापणमिति ॥ ४७ ॥ भ०

अचपलमित्यादि । जनं लोकं अचपलम् अस्थिरम् अगुरुं लघुम्

स्फटिकमणिगृहैः सरत्नदीपैः
प्रतरुणकिन्नरगीतनिस्वनैश्च ।
अमरपुरमतिं सुराङ्गनानां
दधतमदुःखमनल्पकल्पवृक्षम् ॥ ४९ ॥

पर्य्यायोक्तम् ।

अतएव भरासहिष्णुम् अनूर्जितम् अनहङ्कारं विवर्ज्यैवासमानत्वात् अर्णवस्य समुद्रस्योपकण्ठे समीपे कृतवसतिं कृतावस्थानं समीयुः तदेवासमानत्वाद्दर्शयन्नाह स्थिरम् अचलम् अतुलोन्नतिम् असाधारणमहत्त्वमूढतुङ्गमेघं उद्धृतमहामेघम् आश्रयणीयत्वात् ऊर्जस्वीति साहङ्कारवस्त्वभिधानात् ॥ ४८ ॥ ज० म०

प्रचपलमित्यादि । पुनः कीदृशं महेन्द्रं जनं लोकं विवर्ज्य त्यक्त्वा विजनत्वात् अर्णवस्य समुद्रस्य उपकण्ठे समीपे व्यालरुद्धत्वात् कृता वसतिर्येन स्थिरमचलम् अतुलोन्नतिं महोच्छ्रायम् एतेन गुरुत्वमूर्जितत्वञ्च सूचितम् ऊढतुङ्गमेघं धृतमहामेघं भारसहत्वात् जनवर्जने हेतुमाह प्रचपलेति कीदृशं जनम् अवसानं स्वस्यासदृशम् असमानत्वं दर्शयन्नाह प्रचपलम् अस्थिरम् अगुरु लघुम् अतएव भारासहनशीलम् अनूर्जितं दर्पशून्यं दुर्बलं वा जनस्यासदृशत्वात् त्यागः स्वसदृशस्यार्णवस्य समीपे वासस्य युक्तः । ऊर्जस्वीति साहङ्कारवस्त्वभिधानात् । यदुक्तम् ऊर्जस्विरूढाहङ्कारमिति ॥ ४८ ॥ भ०

स्फटिकमणिगृहैरित्यादि । स्फटिकमणिगृहैः रत्नदीपयुक्तैः प्रतरुणानां किन्नराणां गीतनिस्वनैश्च हेतुभूतैः अमरपुरमतिं स्वर्गबुद्धिं सुराङ्गनानां दधतं जनयन्तम् अदुःखं न विद्यते दुःखमस्मिन्निति सुखहेतुमित्यर्थः बहुकल्पवृक्षं समीयुः । पर्य्यायोक्तिरिति अमरपुरमतिं दधतमित्यनेन पर्य्यायेण वचनभङ्ग्या तदेवामरपुरमिति प्रतिपादनात् । तथाचोक्तं पर्य्यायोक्तं यदन्येन प्रकारेणाभिधीयत इति ॥४९॥ ज०म०

स्फटिकेत्यादि । पुनः कीदृश महेन्द्रं रत्नदीपसहितैः स्फटिकमणीनां गृहैः प्रकृष्टतरुणानां किंपुरुषाणां गीतनादैश्च हेतुभिः सुरा-

अथ ददृशुरुदीर्णधूमधूम्रां
दिशमुदधिव्यवधिं समेतसीताम्।
सहरघुतनयाः प्लवङ्गसेनाः
पवनसुताङ्गुलिदर्शितामुदञ्चाः॥ ५०॥

समाहितम्।

कृतानां देवस्त्रीणाम् अमरपुरमतिं स्वर्गबुद्धिं दधतं जनयन्तम् अदुःखं नास्ति दुःखं यत्र सुखहेतुमित्यर्थः अनल्पा बहवः कल्पवृक्षा यत्र तम् एवम्भूतं महेन्द्रं समीयुरित्यन्वयः। पर्य्यायोक्तमिति अमरपुरमतिं दधतमिति पर्य्यायेण वचनभङ्ग्या तद्देवामरपुरमिति प्रतिपादनात्। यदुक्तम् अर्थमिष्टमनाख्याय तस्यैवार्थस्य सिद्धये। यत् प्रकारान्तराख्यानं पर्य्यायोक्तं तदुच्यते इति। अन्यत्रापि, पर्य्यायोक्तं यदन्येन प्रकारेणाभिधीयत इति। काव्यप्रकाशेऽपि पर्य्यायोक्तं विना वाच्यवाचकत्वेन वस्तु यदिति॥ ४९॥ भ०

अथेत्यादि। अथ प्राप्त्यनन्तरं प्लवङ्गसेनाः सहरघुतनया दिशं ददृशुः उदधिव्यवधिं सजलधिव्यवधानां दक्षिणामित्यर्थः उपसर्गे घोः किः उदीर्णेन महता धूमेन धूम्रामस्पष्टां समेतसीतां सङ्गता सीतानयेति तृतीयार्थे बहुव्रीहिः पवनसुतस्याङ्गुल्या दर्शिताम् उदञ्चाः ऊर्द्धीकृताञ्चाः बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् षिद्गौरादिभ्यश्चेति ङीष् न भवति तस्यानित्यत्वात् तेन दंष्ट्रेत्युपपन्नं भवति। समाहितमिति अनन्यमनस्कतया दिशोऽवलोकनात्॥ ५०॥ ज० स०

अथेत्यादि। महेन्द्रप्राप्त्यनन्तरं रघुतनयाभ्यां रामलक्ष्मणाभ्यां सहिता वानरसेनाः उदञ्चा उन्नतनेत्राः सत्यः समुद्रव्यवधानां दक्षिणां दिशं ददृशुः कीदृशीं उदीर्णेन महता धूमेन धूम्रां कृष्णलोहिताम् अग्निगत्यां तां रूपं समेता सङ्गता सीता यां यत्र वा पवनसुतस्य हनूमतोऽङ्गुल्या दर्शितां निर्द्दिष्टाम् उदञ्चा इति उन्नतमूर्द्धीकृतमञ्च चक्षुर्यासाम् इन्द्रियसामान्यवाचिनोऽप्यक्षशब्दस्य विशेषपरत्वान्नेत्रवाचकत्वं किंवा सक्थ्यक्ष्णः षः स्वाङ्ग इति षप्रत्ययान्तस्य उदक्षशब्दस्य

जलनिधिमगमन् महेन्द्रकुञ्जात्
प्रचयतिरोहिततिग्मरश्मिभासः ।
सलिलसमुदयैर्महातरङ्गैः
भुवनभरक्षममप्यभिन्नवेलम् ॥ ५१ ॥

उदारम् ।

खस्रादौ पाठस्तेन नखनसंख्याखस्रजादेरिति ङीप्प्रत्ययनिषेधः नदादि-पाठस्यानित्यत्वादिति कालापाः मालादित्वादिति वासवताः प्लवङ्गसैन्या इति पठन्त्यन्ये । समाहितमिति दक्षिणदिगवलोकनं स्वत एव जायमानं छनमदङ्कुलिदर्शितत्वेन सुकरत्वात् समाहितं यदुक्तं समाधिः सुकरं कार्य्यं कारणान्तरयोगत इति । अन्यत्रापि किञ्चिदारभमाणस्य कार्य्यं दैववशात् पुनः । तत्साधनसमापत्तिर्यदाज्ञस्तत्समाहितमिति अयमङ्गुलायान्तु एकचित्ततया दिशोऽवलोकनात् समाहितमित्युक्तम् ॥ ५० ॥ भ०

जलनिधिमित्यादि । महेन्द्रकुञ्जात् जलनिधिमगमन् गतवत्यः प्लवङ्गसेनाः लदित्त्वात् लोरङ्प्रचयेन उच्चतया तिरोहितास्तिग्मरश्मिभासो येन निकुञ्जेन तस्मान्निकुञ्जात् सलिलसमुदयैर्महातरङ्गैर्महोर्मिभिः भुवनस्य भरणे क्षममपि शक्तमपि भुभरण इति क्रैयादिकः तस्य कर्तोरपि रूपम् अभिन्नवेलम् अनतिक्रान्तमर्य्यादं जलनिधिम् उदारमिति उदात्तमित्यर्थः महानुभावताप्रतिपादनात् यतो महातरङ्गैर्जलसमूहैर्भुवनभरक्षममपि अभिन्नवेलमिति द्विविधमुदारं महानुभावतया विविधरत्नयोगाच्चेति इयं महानुभावता दर्शिता ॥५१॥ ज०म०

जलनिधिमित्यादि । सरघुतनयाः प्लवङ्गसेना महेन्द्रकुञ्जात् जलनिधिमगमन् कौगमल्लगत्यां लदित्त्वात् च्लां ङ प्रचयेन समूहेन तिरोहिता आच्छादितास्तिग्मरश्मेः सूर्य्यस्य भासो दीप्तयो याभिस्ताः प्लवङ्गसेनानां विशेषणं प्रचयेन उच्चतया तिरोहितास्तिग्मरश्मिभासो येन तस्मादिति कुञ्जविशेषणं वा कीदृशं जलनिधिं महान्तस्तरङ्गा ऊर्मयो येषु तैः सलिलसमुदयैर्जलसमूहैर्भुवनस्य पृथिव्या भरणे पूरणे

पृथुगुरुमणिशुक्तिगर्भभासा
ग्लपितरसातलसंभृतान्धकारम् ।
उपहतरविरश्मिवृत्तिमुच्चैः
प्रलघुपरिप्लवमानवज्रजालैः ॥ ५२ ॥

उदारमेव ।

यमं शक्तमपि अभिन्नवेलमनतिक्रान्तमर्यादम् । उदात्तमिति महानुभावताप्रतिपादनात् महानुभावत्वन्तु महातरङ्गजलसमूहैर्भुवनभरक्षमसाप्यभिन्नवेलत्वात् । तथाचोक्तम्, आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम् । उदात्तं नाम तं प्राहुरलङ्कारं मनीषिण इति । उदारमिति पाठेऽप्ययमेवार्थः । द्विविधमिदं महानुभावत्वात् नानारत्नयोगित्वाच्च । आद्यमतोक्तम् ॥ ५१ ॥ म०

द्वितीयमाह ।

पृथ्वित्यादि । पृथवो महान्तः गुरवश्च न परिच्छेद्याः मणयो मौक्तिका यासां शुक्तीनां तथाविधानां गर्भस्य भासा दीप्त्या ग्लपितं चयितं रसातले संभृतमुपचितमन्धकारं येन तम् उच्चैरुपरि प्रलघूनामल्पानां परिप्लवमानानां वज्राणां यानि जालानि समूहाः तैरुपहता रविरश्मिवृत्तयो यस्मिन् सः तं जलनिधिमगमन् यद्वज्रं वारिणि तरति तत्प्रशस्तमित्युक्तम् एतदेवापरेऽन्येन वाक्यार्थेनान्यथा विदुः । नानारत्नवियुक्तं यत्तत् किलोदारमुच्यते इति ॥ ५२ ॥ ज० म०

द्वितीयं दर्शयति ।

पृथ्वित्यादि । कीदृशं जलनिधिं पृथवो महान्तो गुरवो गुरुत्वाख्यगुणविशेषयुक्ता ये मणयो मौक्तिकानि तेषां याः शुक्तयः तासां गर्भभासा अन्तर्लीनदीप्त्या ग्लापितं नाशितं रसातले पाताले सम्भृतमुपचितमन्धकारं येन तं मुक्तास्फोटः स्त्रियां शुक्तिरित्यमरः । उच्चैरुपरि प्रलघूनां लघुतमानामतएव परिप्लवमानानां तरतां वज्राणां जालैः समूहैरुपहता रविरश्मिवृत्तयो येन यत्र वा तं यद्वज्रं जले तरति तत्प्रशस्तं यदुक्तं रत्नपरीक्षायां गुरूणि सर्वरत्नानि वज्रमेकं

समुपचितजलं विवर्द्धमानै-
रमलसरित्सलिलैर्विभावरीषु।
स्फुटमवगमयन्तमूढवारीन्
शशधररत्नमयान् महेन्द्रसानून्॥ ५२॥

उदात्तमेव।

भुवनभरसहानलङ्घ्यधाम्नः
पुरुरुचिरत्नभृतो गुरूरुदेहान्।

परं लघु। भिद्यतेऽन्यानि वज्रेण तन्न केनापि भिद्यत इति।
उदात्तमेवेति विविधरत्नर्द्धियुक्तत्वात्। यदुक्तं, पूर्वेतादृशयमाहात्म्य-
लवाभ्युदयगौरवम्। विवक्षितमिति व्यक्तमुदात्तं द्वयलक्ष्म इति
अन्यत्रापि नानारत्नर्द्धियुक्तं यत्तच्चोदात्तं किलोच्यत इति॥ ५२॥ म०

समुपचितजलमित्यादि। विभावरीषु विवर्द्धमानैरमलैः सरित्स-
लिलैः समुपचितजलम् उदधिं स्फुटमवगमयन्तं बोधयन्तं किमित्याह
महेन्द्रसानून् शशधररत्नमयान् चन्द्रकान्तस्वभावान् जढवारीन् अन्यथा
कथं धीयते जलं यदि चन्द्रकान्तसानवो न स्युः उदात्तमेवेति रत्न-
योगात्॥ ५२॥ ज० म०

समुपेत्यादि। कीदृशं जलनिधिं विभावरीषु रात्रिषु विवर्द्धमानै-
रमलसरित्सलिलैः निर्मलनदीजलैः समुपचितजलम् अतएव महेन्द्र-
सानून् शशधररत्नमयान् प्रचुरचन्द्रकान्तमयान् तत्स्वरूपान् वा अव-
गमयन्तं बोधयन्तम् जढवारीन् धृतजलान् यदि तत्र चन्द्रकान्तमयाः
सानवो न स्युस्तदा कथमूढजलाः स्युः ततश्च कथं वा तत्समीपे नदीनां
जलवृद्धिरिति तदनुमानमिति भावः। उदात्तमेवेति रत्नयोगात् उदात्त
वस्तुनः सम्पदिति काव्यप्रकाशे॥ ५२॥ म०

भुवनभरसहानित्यादि। गिरीन् भुवनभरसहान् अहींश्च तादृशा-
नेव दधतं जलनिधिमगमन् गिरीनलङ्घ्यधाम्नः अहींस्तानभिभवनीय-
तेजसः गिरीन् पुरुरुचिरत्नभृतः अहींश्च महारुचिरत्नभृतः गिरीन्

श्रमविधुरविलीनकूर्मनक्रान्
दधतमुदूढभुवो गिरीनहींश्च ॥ ५४ ॥

श्लिष्टम् ।

गुरुदेहान् अहींश्च महाकायान् श्रमविधुराः श्रमपीड़िताः निलीनाः कूर्मा नक्राश्च येषु तान् गिरीनहींश्चोदूढभुवो धृतवसुधान् गिरीनहींश्च नञ्च्यप्रधानिति नुत्वं पूर्वस्यानुनासिकः श्लिष्टमिति । उपमानेनोपमेयत्वस्य साधनात् तथाचोक्तं विशेषणेन श्लिष्टम् । उपमानेन यत्तत्त्वमुपमेयस्य साध्यते । क्रियागुणाभ्यां नाम्ना च श्लिष्टं तदभिधीयत इति । अत्रोपमानभूतैरहिभिरुपमेयभूतानां गिरीणां तत्त्वस्य ताद्रूप्यस्य भुवनभरादिताद्रूप्यक्रियया तद्गुणेन च साधनेन गिरिभिरहिभिश्च नाम्ना च शब्देन भुवने भरसहानित्यादिना साध्यमानत्वात् रूपकमपीदृशमेव किन्तु श्लिष्टस्य भेदेनोपमेययोर्युगपत्प्रयोगात् रूपके पुनरेकस्यैवोपमेयपुरुषस्य व्याघ्र उपमानं तथाचोक्तं लक्षणं रूपकेऽपीदं विद्यते कामतत्र तु । इष्टः प्रयोगो युगपदुपमानोपमेययोरिति तदुक्तम् । लक्षणं श्लिष्टं सहोक्त्युपमाहेतुनिर्देशात्त्रिविधं यथोक्तं श्लेषादेवार्थवचसोर्यस्य च क्रियते भिदा । तत्सहोक्त्युपमा हेतुनिर्देशात्त्रिविधं यथेति । तत्रेदं सहोक्तिश्लिष्टमुक्तं गिरीनहींश्चेति सहोक्त्या निर्देशात् ॥५४॥

ज० म०

भुवनेत्यादि । पुनः कीदृशं जलनिधिं गिरीन् पर्वतान् अहीन् सर्पांश्च दधतं पर्वतसर्पयोर्युगपद्विशेषणान्याह भुवनभरसहान् जगतां भारस्य सहान् दृढत्वात् बलवत्त्वाच्च सहेः पचादित्वादन् अलङ्घ्यधाम्नः अनभिगम्यस्थानात् अहिपक्षे अनभिभवनीयतेजसः प्रुरुचिररत्नः प्रचुरदीप्तिमद्रत्नधारकान् रत्नोत्पत्तिस्थानत्वात् फणारत्नयोगाच्च गुरुदेहान् अलघुमहाशरीरान् श्रमविधुरविलीनकूर्मनक्रान् श्रमेण विधुरा विकलाः सन्तो विलीनाः संश्लिष्टाः कच्छपाः कुम्भीराश्च येषु उदूढभुवो धृतभूमीन् पर्वतोपरि वालुकासञ्चयेन भूम्युत्पत्तेः भूमिधारकस्य शेषनागस्य तत्र सत्वाच्च एवमेवम्भूतं जलनिधिमगमन्निति सम्बन्धः ।

प्रदद्दशुरस्तमुक्तशीकरौघान्
विमलमणिद्युतिसंभृतेन्द्रचापान्।
जलमुच इव धीरमन्द्रघोषान्
क्षितिपरितापहृतो महातरङ्गान्॥ ५५॥

श्लिष्टमेव।

श्लिष्टमिति, श्लिष्टमिष्टमनेकार्थमेकरूपान्वितं वचः। तदभिन्नपदं भिन्नपदप्रायमिति द्विधा। तदिहाभिन्नपदं दर्शितं पदभङ्गाभावात्। तत्पुनस्त्रिविधम्। तथाचोक्तं श्लेषादेवार्थवचसोरस्य च क्रियते भिदा॥ प्रत्यहोक्त्युपमा हेतुनिर्देशात्त्रिविधं यथेति। तदिदं सहोक्तिलक्षणं श्लिष्टमुक्तं गिरानहींस्वेति सहोक्त्या निर्देशात् अन्यद्वयं क्रमेणाग्रे उदाहरिष्यति॥ ५४॥ म०

प्रदद्दशुरित्यादि। महातरङ्गान् जलमुच इव मेघानिव प्रदद्दशुः प्रदृष्टवत्यः उरवो महान्तो मुक्ताः प्रकीर्णाः शीकरौघा येषु अमलमणिद्युतय एव सन्ततानि इन्द्रचापानि येषु धीरमन्द्रघोषान् मधुरगम्भीरध्वनीन् क्षितिपरितापहृतः पृथिवीसन्तापहारिणः। इदमपि यथानिर्दिष्टविशेषणात् श्लिष्टं जलमुच इवेत्युपमाननिर्देशात्॥ ५५॥ ला० म०

प्रदद्दशुरित्यादि। रघुपतनयाः प्लवङ्गसेना जलमुच इव मेघानिव महतस्तरङ्गान् ऊर्मीन् प्रदद्दशुः। मेघतरङ्गयोर्युगपद्विशेषणान्याह उर्वीति उरवो महान्तो मुक्ताः कीर्णाः शीकरौघा येषु तान् निर्मलरत्नदीप्तय एव ताभिः करणभूताभिर्वा सम्भृतानि इन्द्रचापानि यत्र। तदुक्तम् अकाले शक्रचापानामुदयस्तु यतो भवेत्। असौ धन्यतरो ज्ञेयो बहुमूल्यो महामणिरिति मेघपक्षे अमलमणीनामिव द्युतिर्येषां तादृशानि उद्भृतेन्द्रचापानि यत्र धीरमन्द्रघोषान् मधुरगम्भीरध्वनीन् क्षितिपरितापहृतः पृथिवीसन्तापहारिणः। श्लिष्टमेवेति पूर्वोक्तलक्षणसत्त्वात् किन्तु जलमुच इवेत्युपमानिर्देशादुपमाश्लिष्टमिदम्॥ ५५॥ भ०

विद्रुममणिकृतभूषा मुक्ताफलनिकररञ्जितात्मानः।
बभुरुदकनागरुग्णा वेलातटशिखरिणो यत्र॥ ५६॥
हेतुश्लिष्टमेव।

भृतनिखिलरसातलः सरत्नः
शिखरिसमोर्मितिरोहितान्तरीक्षः।
कुत इह परमार्थतो जलौघः
जलनिधिमीयुरतः समेत्य मायाम्॥ ५७॥
अपह्नुतिः।

विद्रुमेत्यादि। वेलातटशिखरिणो यत्रेति जलनिधौ बभुः शोभन्ते स्म ते तमीयुरिति वक्ष्यमाणेन सम्बन्धः वेलातटाः शिखरिणश्चेति द्वन्द्वः शेषाणि विशेषणान्युभयत्र तुल्यानि इदमपि यथानिर्दिष्टमेव किन्तु हेतुश्लिष्टं हेतुद्वारेण विशेषणानां निर्देशात् विद्रुममणिकृतभूषत्वात् जलहस्तिभग्नत्वाच्च बभुरिति॥ ५६॥ ज० म०

विद्रुमेत्यादि। यत्र जलनिधौ वेलातटशिखरिणो बभुः शोभन्ते स्म तमीयुरित्यग्रिमश्लोकेनान्वयः। वेलातटाश्च शिखरिणश्चेति द्वन्द्वः उभयं विशिनष्टि विद्रुमैः प्रवालैर्मणिभिश्च कृता भूषा येषु ते तथा मुक्तामणीनाम् उत्कृष्टमौक्तिकानां मुक्तानां मणीनाञ्च वा निकरेण समूहेन रञ्जिता आत्मानो देहाः प्रदेशा येषाम् उदकनागरुग्णा जलहस्तिभग्नाः श्लिष्टमेवेति पूर्वोक्तलक्षणसत्त्वात् किन्तु हेतुश्लिष्टमिदं युगपदुभयविशेषणानां हेतुत्वेनैव निर्देशात् प्रवालमणिकृतालङ्कारत्वात् मुक्तामणिदीप्तिरञ्जितरूपत्वात् उदकनागभग्नत्वाच्च बभुरित्यर्थः॥५६॥भ०

भृतनिखिलरसातल इत्यादि। एवंगुणविशिष्टो जलौघः कुत इह प्रदेशे परमार्थतः परमार्थेन विद्यते। किं तर्हि माया यतः पूरिताशेषपातालत्वात् सरत्नत्वात् शिखरसमैरूर्मिभिः पिहितान्तरीक्षत्वाच्च सरावणाः प्लवङ्गसेनाः समेत्य मायामिव जलधिमीयुः ज्ञातवत्यः सर्वे गत्यर्था ज्ञानार्था इति भृञ् भरण इति भौवादिकः। अप-

शशिरहितमपि प्रभूतकान्तिं
विबुधहृतश्रियमप्यनष्टशोभम् ।
मथितमपि सुरैर्दिवं जलौघैः
समभिभवन्तमविच्युतप्रभावम् ॥ ५८ ॥
विशेषोक्तिः ।

ह्नुतिरिति मायामिवेत्यन्तर्गतोपमारूपतया निर्देशात् विद्यमानार्थस्य चापह्नवात् । तथाचोक्तम् । अपह्नुतिरितीष्टा च किञ्चिदन्तर्गतोपमा । भूतार्थापह्नवादेषा क्रियतेऽस्या भिदा यथेति ॥ ५७ ॥ ज० म०

धृतेत्यादि । महरसुतनयाः प्लवङ्गसेनाः समेत्य मिलित्वा जलनिधिम् अतः कारणात् मायामिव ईयुर्ज्ञातवत्यः सर्वेषां गत्यर्थानां ज्ञानार्थत्वात् । किं कारणं तदाह इह प्रदेशे जलौघः कुतः परमार्थतस्तत्त्वेन विद्यते कीदृशः धृतनिखिलरसातलः पूरिताशेषपातालः रत्नैः सहितः पर्वततुल्यतरङ्गैराच्छादिताकाशः जलस्यैतादृशत्वासम्भवादियं खलु मायेति भावः । अपह्नुतिरिति जलनिधिमुपमेयमसत्यं कृत्वा मायामिवेत्युपमानस्य सत्यतया व्यवस्थापितत्वात् । तथाचोक्तं, प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिरिति अन्यत्रापि अपह्नुतिरभीष्टा च किञ्चिदन्तर्गतोपमा । भूतार्थापह्नवात् चेया क्रियतेऽस्या भिदा यथेति ॥ ५७ ॥ भ०

शशिरहितमित्यादि । शशिरहितमपि मुग्धचन्द्ररहितमपि प्रभूतकान्तिं पद्मरागादिरत्नावभासितत्वात् विबुधहृतश्रियमपि अनष्टशोभं सर्वदा शोभास्पदत्वात् सुरैर्मथितमपि दिवमाकाशं जलौघैः समभिभवन्तम् अत्युच्छ्रितत्वात् तदेवमविच्युतप्रभावम् अखण्डिताभिमानमीयुः ज्ञातवत्यः । विशेषोक्तिरिति शश्यादेरेकदेशस्य विगमेऽपि प्रभूतकान्त्या गुणान्तरेण स्तुतिविशेषस्य प्रतिपादनात् । यथोक्तम् एकदेशस्य विगमे या गुणान्तरसंस्तुतिः । विशेषप्रथनायासौ विशेषोक्तिर्मता यथेति ॥ ५८ ॥ ज० म०

क्षितिकुलगिरिशेषदिग्गजेन्द्रान्
सलिलगतामिव नावमुद्वहन्तम् ।
धृतविधुरधरं महावराहं
गिरिगुरुपोतमपीहितैर्जयन्तम् ॥ ५९ ॥

व्याजस्तुतिः ।

शशीत्यादि । कीदृशं जलनिधिमीयुः शशिरहितमपि चन्द्रेण विरहितमपि प्रभूतकान्तिं प्रचुरदीप्तिं नानारत्नोपशोभितत्वात् विबुधहृतश्रियमपि देवहृतलक्ष्मीकमपि अनष्टशोभं सकलशोभास्पदत्वात् सुरैर्मथितमपि जलौघैर्दिवमाकाशं समभिभवन्तम् अत्युच्छ्रितत्वात् अतएव अविक्षतप्रभावम् अखण्डितमहिमानं विशेषोक्तिरिति चन्द्रादेरेकदेशस्य वैकल्येऽपि तत्कार्य्यप्रभूतकान्त्यादीनां गुणान्तरेण विशेषस्य प्रतिपादनात् । तथाचोक्तं गुणजातिक्रियादीनां यत्र वैकल्यदर्शनम् । विशेषदर्शनायैव सा विशेषोक्तिरिष्यते ॥ अन्यत्रापि एकदेशस्य विगमे या गुणान्तरसंस्तुतिः । विशेषप्रथनायासौ विशेषोक्तिर्मता यथेति ॥५८॥भ०

क्षितीत्यादि । क्षितिं पृथिवीं कुलगिरीन् कुलपर्वतान् शेषं नागराजं दिग्गजेन्द्रानैरावतादीन् सलिलगतामिव नावमुद्वहन्तं जलनिधिं महावराहं धृतविधुरधरं धृता उद्धृता विधुरा विह्वला धरा मही येनेति गिरिगुरुपोतं गिरिवत् गुरु पोतं यस्य तमपीहितैः चेष्टितैर्जयन्तं जलनिधिमीयुः । व्याजस्तुतिरिति क्षित्यादिधारणादधिकगुणस्य जलनिधेस्तोत्रव्यपदेशेन वराहेण तुल्यत्वात् तमपि महावराहं जयन्तमिति किञ्चिद्विधातुमिच्छया निन्दनात् तथाचोक्तं दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यता । किञ्चिद्विधित्सया निन्दा व्याजस्तुतिरसौ यथेति ॥ ५९ ॥ ज० म०

क्षितीत्यादि । जलनिधिमीयुरिति सम्बन्धः कीदृशं क्षितिं कुलपर्वतान् शेषं नागराजं दिग्गजेन्द्रानैरावतादींश्च सलिलगतां नौकामिव उद्वहन्तं दधतम् अतएव महावराहमपि ईहितैश्चेष्टितैर्जयन्तं

गिरिपरिगतचञ्चलापगान्तं
जलनिवहं दधतं मनोऽभिरामम् ।
गलितमिव भुवो विलोक्य रामं
धरणिधरस्तनशुक्लपट्टचीनम् ॥ ६० ॥

उपमारूपकम् ।

कीदृशं महावराहं धृतविधुरधरं धृता उद्धृता विधुरा प्रलये व्याकुला धरा पृथिवी येन गिरिवत् गुरु महत् पोतं शुकं यस्य समुद्रपक्षे पोतं तरङ्गः । व्याजस्तुतिरिति जलनिधेः को महिमा यः सदा चित्यादिभारं सेवकवत् वहतीत्यपो निन्दां कृत्वा महावराहं जयन्तमिति प्रशंसनात् यद्वा भगवज्जयमध्यापाततो निन्दात्वेनोक्ता तत्साहाय्यप्रदर्शनेन स्तुतिरुक्ता । तथाचोक्तं यदि निन्दति वा स्तौति व्याजस्तुतिरसौ मता । दोषाभासा गुणा एव भजन्ते यत्र सन्निधिमिति । अन्यैस्तु चित्यादिधारणादधिकगुणस्य जलनिधेः स्तोतव्यपदेशेन महावराहतुल्यत्वात् तमपि महावराहमोहितैर्जयन्तमिति किञ्चिद्विधित्सया निन्दनाद्व्याजस्तुतिरित्युक्तम् । तथाहि, दूराधिकगुणस्तोतव्यपदेशेन तुल्यता । किञ्चिद्विधित्सया निन्दा व्याजस्तुतिरसौ मतेति ॥ ५८ ॥ भ०

गिरिपरीत्यादि । गिरिभिः परिगताः संश्लिष्टाः चञ्चला विलोला आपगान्ता नद्यन्ता यस्मिन् जलनिवहे तं जलनिवहं दधतं धारयन्तं समुद्रमीयुः । कीदृशमिव जलनिवहं रामं भर्तारं विलोक्य हृष्टाया दूत्यर्थप्राप्तं ततश्च पूर्वकाले क्त्वा भुवः पृथिव्या इव धरणिधरस्तनयोः शुक्लपट्टस्य चीनमिव गलितम् उपमारूपकमिति तथोक्तम् उपमानस्य तद्भावमुपमेयस्य रूपयन् । यो वदत्युपमाभेदमुपमारूपकं यथेति ॥ ६० ॥ ज० म०

गिरिपरीत्यादि । कीदृशं जलनिधिं जलस्य निवहं समूहं दधतं धारयन्तं कीदृशं जलनिवहं गिरिभिः परिगताः संश्लिष्टाश्चञ्चला नद्यन्ता नद्यवयवा यत्र तं मनोऽभिरामं स्वपतिं विलोक्य हर्षवशात्

अपरिमितमहाद्भुतैर्विचित्रः
च्युतमलिनः शुचिभिर्महानलङ्घ्यैः ।
तरुमृगपतिलक्ष्मणक्षितीन्द्रैः
समधिगतो जलधिः परं बभासे ॥ ६१ ॥

## तुल्ययोगिता ।

जायारूपाया भुवः पृथिव्या धरणिधरस्य पर्वतस्य स्तनरूपस्य गलितं जलं शुक्लवर्णपटाञ्चलमिव उपमारूपकमिति उपमासहितं रूपकमित्यर्थः । अत्र उपमानेन स्तनेन उपमेयस्य कस्यचिद्धरणीधरस्य स्तनत्वं रूपितं गलितं पट्टचीनमिवेत्युपमापि निर्दिष्टा । तथाचोक्तम्, उपमानेन तद्भावमुपमेयस्य रूपयन् । यद्वदत्युपमानं तदुपमारूपकं यथेति । अन्यत्राप्युक्तम्, इष्टं साधर्म्यवैधर्म्यदर्शनान्मुख्यगौणयोः । उपमाव्यतिरेकाख्यं रूपकद्वितयं यथेति ॥ ६० ॥ भ०

अपरिमितमहाद्भुतैरित्यादि । तरुमृगपतिलक्ष्मणक्षितीन्द्रैः सुग्रीवलक्ष्मणरामैः समधिगतः प्राप्तो जलधिः परं सुष्ठु बभासे शोभते स्म कीदृशैः कीदृश इत्याह अपरिमितमहाद्भुतैर्विचित्रः नानाद्भुतः शुचिभिर्विमलैः च्युतमलिनो निर्मलोऽलङ्घ्यैरनभिभवनीयैः महान् अनभिभवनीयः एवञ्च सत्वा तेनापि ते समधिगताः परं बभासिर इति तुल्ययोगितेति न्यूनानामपि तेषां सुग्रीवादीनां विशिष्टेन जलनिधिना महाद्भुतत्वादिगुणसाम्यविवक्षया तुल्यस्य कार्यस्य भासनलक्षणस्यानुष्ठानेन तुल्ययोगात् । तथाचोक्तं न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया । तुल्यकार्य्यक्रियायोगादित्युक्ता तुल्ययोगितेति ॥ ६१ ॥ ज० म०

अपरिमितेत्यादि । तरुमृगाणां वानराणां पत्या सुग्रीवेण लक्ष्मणेन क्षितीन्द्रेण रामेण च समधिगतः प्राप्तो जलधिः परमत्यर्थं बभासे शोभते स्म । क्रमेण सुग्रीवादीनां समुद्रस्य च तुल्यानि विशेषणान्याह, अपरिमितमहाश्चर्य्यैर्विचित्रः आश्चर्यान्वितः च्युत-

न भवति महिमा विना विपत्ते-
रवगमयन्निव पश्यतः पयोधिः।
अविरतमभवत् क्षणे क्षणेऽसौ
शिखरिपृथुप्रथितप्रशान्तवीचिः ॥ ६२ ॥

निदर्शनम्।

मलिनः शुचिभिर्निर्मलैः महान् अनभिभवनीयः अलघुभिरनभिभवनीयैः एवञ्च सति तुल्यरूपत्वात्तेन समधिगतास्तेऽपि बभासिरे इत्यर्थाद्गम्यते। तुल्ययोगितेति उपमानानामपि सुग्रीवादीनां विशिष्टेन जलधिना गुणसाम्यविवक्षया तुल्यकार्य्यस्य भासनलक्षणस्य योगात्। तथाचोक्तं विवक्षितगुणोत्कृष्टैर्यत्समीकृत्य कस्यचित्। कीर्त्तनं स्तुतिनिन्दार्थं सा स्मृता तुल्ययोगितेति। अन्यत्राप्युक्तं न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया। तुल्यकार्य्यक्रियायोगादित्युक्ता तुल्ययोगितेति ॥६१॥ म०

न भवतीत्यादि। महिमा महत्त्वं विना विपत्तेः विनाशं विना न भवति पृथग्विनेत्यादिना पञ्चमी नास्त्येव तन्महत्त्वं यस्य विनाशो नास्तीत्येवमवगमयन् बोधयन्निव पयोधिस्तान् पश्यतो रामादीन् अविरतमविच्छेदेन शिखरिवत् पृथवः प्रथिताः प्रशान्ताश्च वीचयो यस्य स एवं क्षणे क्षणे अभवत् भूतवान् निदर्शनेति प्रतिक्षणं वीचीनां पृथुत्वप्रशान्तत्वभवनक्रिययैव महिमभवनस्य तदर्थस्य विपत्तिफलस्य उपादानात् न यथैववतिशब्दानां प्रयोगात् तथाचोक्तं क्रिययैव तदर्थस्य विशिष्टस्योपदर्शनात्। इष्टा निदर्शना नाम यथेववतिभिर्विनेति ॥ ६२ ॥ ज० म०

न भवतीत्यादि। विपत्तेर्विना विनाशं विना महिमा महत्त्वं न भवति अन्यारभ्येति विनायोगे पञ्चमी नास्त्येव तन्महत्त्वं यस्य विपत्तिर्नास्तीति पश्यतो रामादीन् अवगमयन्निव बोधयन्निव असौ पयोधिरविरतम् अविच्छेदेन क्षणे क्षणे शिखरिपृथुप्रथितप्रशान्तवीचिरभवत् पर्वतवत् पृथवो महान्तः प्रथिताः प्रकाशिताः पश्चात् प्रशा-

मृदुभिरपि बिभेद पुष्पबाणैः
जलशिशिरैरपि मारुतैर्ददाह ।
रघुतनयमनर्थपण्डितोऽसौ
न च मदनः क्षतमाततान नार्चिः ॥ ६३ ॥

विरोधः ।

न्ताश्च वीचयस्तरङ्गा यस्य स तथा महता विपत्तौ खेदो न कर्त्तव्य इति रामं प्रत्युपदिष्टमिति पश्यत इत्यस्य भावः । निदर्शनमिति प्रतिक्षणं वीचीनां पृथुत्वप्रशान्तिक्रियां दर्शयित्वा अन्यत्रापि महिम्नो विपत्तिफलस्योपादानात् । तथाचोक्तम् अर्थान्तरप्रवृत्तेन किञ्चित्तत्सदृशं फलम् । सदसद्वा निदर्श्येत यदि स्यात्तन्निदर्शनमिति । अन्यत्राप्युक्तं, क्रिययैव तदर्थस्य विशिष्टस्योपदर्शनात् । दृष्टं निदर्शनं नाम यथेक-वतिभिर्विनेति । कार्य्यः शब्दो यथा घट इत्यादिवत् यथाशब्दादिभि-र्विनेदं निदर्शनमिति ॥ ६२ ॥ भ०

समुद्रोपकण्ठे रामस्य मदनावस्थामाह ।

मृदुभिरित्यादि । मदनोऽनर्थपण्डितः निष्प्रयोजनकुशलः पुष्प-बाणैरपि मृदुभिः रघुतनयं बिभेद न चासौ क्षतं खण्डनमाततान जनितवान् जलशिशिरैर्मारुतैस्तमेव रघुतनयं ददाह न चासावर्चि-र्ज्वालामाततान विरोध इति पुष्पबाणानां यन्मार्दवं मरुताञ्च जलसं-सर्गाद्यच्छैत्यं तयोर्भेददाहलक्षणे क्रिये विरुद्धे तयोरभिधानात् तयोश्च क्रिययोर्वा विरोधिनी क्रिया क्षतार्चिषोरवतानालक्षणास्ताः कामो-द्रेकप्रतिपादनाभिधानात् । तथाचोक्तं, गुणस्य च क्रियाया वा विरु-द्धान्यक्रियाभिधा । या विशेषाभिधानाय विरोधन्तं विदुर्यथेति ॥ ६३ ॥ ज० म०

समुद्रान्तिके सीतास्मरणात् रामस्य कामावस्थामाह ।

मृदुभिरित्यादि । मदनो मृदुभिरपि पुष्पबाणैरघुतनयं बिभेद न चासौ तावतापि क्षतं खण्डनम् आततान कृतवान् सजलशीतलैरपि

अथ मृदुमलिनप्रभौ दिनान्ते
जलधिसमीपगतावतीतलोकौ ।
अनुकृतिमितरेतरस्य मूर्त्त्योः
दिनकरराघवनन्दनावकार्ष्टाम् ॥ ६४ ॥
उपमेयोपमा ।

मारुतैस्तं ददाह, न चासावर्चिराततान अतएवासौ अनर्थपण्डितः निष्प्रयोजने कर्मणि कुशलः विरोध इति पुष्पबाणानां यन्मार्दवं मारुतानाञ्च जलसंसर्गात् यच्छैत्यं तयोर्भेददाहलक्षणं क्रियाद्वयं विरुद्धमभिहितं तयोश्च क्रिययोर्विरुद्धं चताचिषोरकरणं तेन कामोत्-कर्षरूपो विशेषः प्रतिपादितः अयञ्च विरोधो न वास्तवः भेददाहाभ्यां पीड़ामात्रस्य लक्षितत्वात् । यथाचोक्तं, विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम् । विशेषसाधनायैव स विरोधः स्मृतो यथेति । अन्यत्राप्युक्तं गुणस्य च क्रियाया वा विरुद्धार्थक्रियाभिदा । या विशेषाभिधानाय विरोधं तं विदुर्यथेति ॥ ६२ ॥ म०

अथेत्यादि । यथोक्तवस्त्वनन्तरं मृदुमलिनप्रभौ मृदुरप्रचण्डा मलिना प्रभा ययोः तौ दिनकरराघवनन्दनौ रघोरपत्यं राघवः दशरथ-स्तन्नन्दनो रामः दिनान्ते अन्योन्यस्य दिवाकरो रामस्य रामोऽपि दिवाकरस्येति मूर्त्त्योर्देहयोरनुकृतिमिवानुकारमिव यथोक्तधर्मतुल्यतया अकार्ष्टां कृतवन्तौ अतीतलोकौ त्यक्तलोकौ । उपमेयोपमेति तयोः पर्य्यायेण उपमानोपमेयत्वात्, तथाचोक्तम् । उपमानोपमेयत्वं यत्र पर्य्यायतो भवेत् । उपमेयोपमां धीरा ब्रुवते तां यथोदितामिति ॥ ६४ ॥ ज० म०

अथेत्यादि । अनन्तरं दिनकरः सूर्य्यो राघवस्य दशरथस्य नन्दनो रामो दिनस्यान्ते सन्ध्याकाले अन्योन्यस्य मूर्त्त्योः शरीरयोरनुकृतिमनु-कारम् अकार्ष्टां कृतवन्तौ तुल्यधर्मत्वात् सूर्य्यो रामस्य मूर्त्त्यैरनुकृतिं रामोऽपि सूर्य्यस्य मूर्त्तेरनुकृतिं चकारेत्यर्थः द्वयोस्तुल्यतां तौ कीदृशौ

अपहरदिव सर्वतो विनोदान्
दयितगतं दधदेकधा समाधिम् ।
घनरुचि ववृधे ततोऽन्धकारं
सह रघुनन्दनमन्मथोदयेन ॥ ६५ ॥

सहोक्तिः ।

स्फुटप्रचण्डा मलिना प्रभा ययोः सूर्यस्य दिनान्तवशात् रामस्य शोकाच्छय्यादिशयनाच्च समुद्रसमीपं गतौ त्यक्तलोकौ च उपमेयोपमेति इतरेतरशब्देन समानधर्मत्वात् पर्य्यायेणोपमानोपमेयत्वकथनात् । तथाचोक्तम् उपमानोपमेयत्वं यत्र पर्य्यायतो भवेत् । उपमेयोपमां धीरा ब्रुवते तां यथोदितामिति ॥ ६४ ॥ भ०

अपहरदित्यादि । ततस्तूत्तरकाले दिवसे ये विनोदाः चेतसः संस्थापकाः तान् सर्वतः सर्वान् सर्वेण वा प्रकारेण अद्यादित्वात्तसिः अपहरदिव अपनयदिवान्धकारं दयितगतं प्रियागतञ्च समाधिं चित्तैकाग्रताम् एकधा एकप्रकारं दधत् धारयत् घनरुचि बहलच्छायं ववृधे वर्द्धते स्म सह रघुनन्दनमन्मथोदयेन तदानीं तस्य कामोदयोऽपि ववृधे । सहोक्तिरिति अन्धकारमन्मथाश्रितयोर्वर्द्धनक्रिययोस्तुल्यकालयोः ववृधे इत्यनेन पदेन कथनात् । तथाचोक्तं, तुल्यकालक्रिये यत्र वस्तुद्वयसमाश्रिते वाक्येनैकेन कथ्येते सहोक्तिः सा मता यथेति ॥ ६५ ॥ ज० म०

अपहरदित्यादि । ततो दिनान्तादुत्तरकालम् अन्धकारं रघुनन्दनस्य रामस्य कामोदयेन सह ववृधे तदानीमन्धकारो रामस्य कामोदयोऽपि प्रवृद्ध इत्यर्थः । उभयविशेषणमाह सर्वतो विनोदान् अपहरदिव दिवसे ये विनोदाश्चित्तप्रसादकाः तान् सर्वान् सर्वप्रकारेण वा अपनयदिव पक्षे विभक्तिव्यत्ययः दयितगतं समाधिं चित्तैकाग्रताम् एकधा एकप्रकारं दधत् जनयत् घनरुचि मेघवत् श्यामं निविडच्छायं वा कामोदयपक्षे दयिताविषये निविडा श्रद्धा यस्मात् दयितगतमित्यत्र प्रसदनमित्यादिवत् ह्रस्वः वस्तुतस्तु दयितशब्देन सामान्यविवक्षया

अधिजलधि तमः क्षिपन् हिमांशुः
परिददृशेऽथ दृशां कृतावकाशः ।
विदधदिव जगत् पुनः प्रलीनं
भवति महान् हि परार्थ एव सर्वः ॥ ६६ ॥

परिवृत्तिः ।

भार्य्याप्युच्यते, अन्धकारोऽस्त्रियां ध्वान्तमित्यमरः । सहोक्तिरिति अन्धकारकामोदयाश्रितयोर्वृद्धिक्रिययोस्तुल्यकालयोर्वंशधे इत्यनेनाभिधानात् । तथाचोक्तं, तुल्यकालक्रिये यत्र वस्तुद्वयसमाश्रिते । पदेनैकेन कथ्येते सहोक्तिः सा मता यथेति ॥ ६५ ॥ भ०

अधिजलधीत्यादि । अथ हिमांशुरन्धकारवर्द्धनानन्तरम् अधिजलधि जलधेरुपरि विभक्त्यर्थेऽव्ययीभावः, तमः क्षिपन् अपनयन् परिददृशे दृष्टः दृशां चक्षुषां कृतावकाशः दत्तप्रसरः जगल्लोकं प्रलीनं तिरोभूतं पुनर्विदधदिव सृजन्निव । कस्मात्तेनैवं कृतमित्याह यस्मात् महान् स सर्वः परार्थ एव परप्रयोजन एव भवति । परिवृत्तिरिति दृशां कृतावकाश इत्यनेन विशिष्टस्य वस्तुन आदानात् तमः क्षिपन्नित्यनेनास्य वस्तुनः अपोहात् भवतीत्यादिना अर्थान्तरन्यासात् । तथाचोक्तं विशिष्टस्य यदादानम् अन्यापोहेन वस्तुनः । अर्थान्तरन्यासवती परिवृत्तिरसौ यथेति ॥ ६६ ॥ ज० म०

अधीत्यादि । अथान्धकारवृद्ध्यनन्तरं हिमांशुश्चन्द्रो जनैः परिददृशे दृष्टः कीदृशः अधिजलधि समुद्रे तमोऽन्धकारं क्षिपन् नाशयन् अधिजलधीति सप्तम्यर्थेऽव्ययीभावः दृशां चक्षुषां कृतावकाशः दत्तावप्रलीनं तिरोभूतं जगत् पुनर्विदधदिव सृजन्निव । कुतस्तेनैवं कृतमित्याह, हि यस्मात् सर्व एव महान् जनः परार्थ एव परप्रयोजन एव भवति । परिवृत्तिरिति दृशां कृतावकाश इत्यनेन विशिष्टस्य वस्तुन आदानात् तमः क्षिपन् इत्यनेन च कस्यचिद्वस्तुनोऽपोहात् भवति हीत्यादिना अर्थान्तरन्यासात् । तथाचोक्तं, विशिष्टस्य

अशनिरयमसौ कुतो निरभ्रे
शितशरवर्षमसत्तदप्यशार्ङ्गम्।
इति मदनवशो मुहुः शशाङ्के
रघुतनयो न च निश्चिकाय चन्द्रम्॥ ६७॥
ससन्देहः।

यदा तावदन्यापोहेन वस्तुनः। अर्थान्तरन्यासवती परिवृत्तिरसौ यथेति। विद्यासागरस्तु तमःसम्बन्धिनमवकाशं नेत्वाधाय तत्सम्बन्धिनः चेप-णस्य तमसि विधानात् परिवृत्तिरियमित्याह, तथाचोक्तम् अर्थानां यो विनिमयः परिवृत्तिस्तु सा यथेति॥ ६६॥ भ०

अशनिरित्यादि। असौ यश्चन्द्रः किमयमशनिर्वज्रम् असौ कुतो निरभ्रे नभसि कुतः यतोऽसौ मेघादुत्पद्यत इति उत निशितानां शराणां वर्षं तदप्यशार्ङ्गमविद्यमानधनुः असदविद्यमानमित्ययं मदन-वशः कामाभिभूतो मुहुः क्षणं शशाङ्के शशाङ्कविषये रघुतनयोऽभू-दित्यर्थात् द्रष्टव्यं न च चन्द्रं निश्चिकाय निश्चिनोति स्म विभाषा चेरिति कुत्वं ससन्देह इति अशनिशरवर्षाभ्याम् उपमेयस्य चन्द्रस्य तत्त्वम् अशनिशरवर्षमिति प्रयोक्तुरभिधानात् कुतो निरभ्रे तदप्य-शार्ङ्गमिति पुनरुपमानोपमेययोर्भेदाभिधानात् न निश्चिकाय चन्द्र-मिति स्तुत्यर्थं सन्देहवचोऽभिधानाच्च। तथाचोक्तम् उपमानोपमेयस्य तत्त्वञ्च वदतः पुनः। ससन्देहवचः स्तुत्यै ससन्देहं विदुर्यथेति॥ ६७॥ ज० म०

अशनिरित्यादि। रघुतनयो रामः कामवशः सन् चन्द्रं न च निश्चिकाय न निर्णीतवान् किन्तु मुहुः क्षणम् इत्येवं शशाङ्के वित-र्कितवान्। किमित्याह अयमशनिर्वज्रः असावशनिर्निरभ्रे नभसि कुतः यतस्तदशार्ङ्गम् अविद्यमानधनुरभूत् धनुषा विना न भवतीत्यर्थः शशाङ्क इति पाठे इत्येवं मदनवशश्चन्द्रविषयेऽभूत् न च चन्द्रं निश्चि-कायेति योज्यम्। ससन्देह इति उपमेयस्य चन्द्रस्य उपमानाशनि-

कुमुदवनचयेषु कीर्णरश्मिः
क्षततिमिरेषु च दिग्वधूमुखेषु ।
वियति च विललास तद्वदिन्दु-
र्विलसति चन्द्रमसो न यद्वदन्यः ॥ ६८ ॥

अनन्वयः ।

अत्रवर्ष्णरूपत्वमभिधाय कुत इत्यादिना पुनरुपमानोपमेययोर्भेदाभिधानात् तावतापि न च निश्चिकाय चन्द्रमिति ससन्देहवचोऽभिधानाच्च । तथाचोक्तम् उपमानेन तत्त्वं भेदञ्च वदतः पुनः । ससन्देहवचः-स्तुत्यै ससन्देहं विदुर्बुधा इति ॥ ६७ ॥ भ०

कुमुदवनचयेष्वित्यादि । कुमुदवनानां चयेषु समूहेषु दिग्वधूमुखेषु वियति च क्षततिमिरेषु खण्डिततमःसु यतस्तेषु विकीर्णरश्मिः क्षिप्त-मयूखः विललास तद्वदिन्दुः शोभते स्म चन्द्रमसः सकाशात् अन्यो यद्वद्यथा न विलसति तथा विललास इत्युक्तं भवति इन्दुर्विललास चन्द्र इवेति । अनन्वय इति तत्सदृशस्य साम्यस्याविवक्षातश्चन्द्रस्योप-मानोपमेयत्वात् । तथाचोक्तं, यत्तेनैव तस्य स्यादुपमानोपमेयता । सादृश्यस्याविवक्षातस्तमित्याहुरनन्वयमिति ॥ ६८ ॥ ज० म०

कुमुदेत्यादि । इन्दुस्तद्वदिन्दुवत् विललास शोभते स्म चन्द्रादन्यः कोऽपि यद्वत् इन्दुवच्च विलसति इन्दुः कीदृशः कुमुदवनानां चयेषु समूहेषु दिक्वधूनां मुखेषु वियति आकाशे च क्षततिमिरेषु खण्डितान्धकारेषु कीर्णरश्मिः प्रसारितकिरणः केचित्तु इन्दुस्तद्वत्तथा विल-लास यद्वत् यथा चन्द्रमसोऽन्यो न विलसतीत्याहुः । एवं सति चन्द्र-स्योपमानत्वमुपमेयत्वञ्च न स्यात् । अन्ये तु इन्दुर्यथा विललास तथा तदन्यो न विलसतीत्यर्थे चन्द्रस्योपमानत्वञ्चोक्तं स्यादित्याहुः । अनन्वय इति चन्द्रस्योपमानोपमेयत्वकथनेनान्यस्य तत्सदृशस्य निरासात् । तथा-चोक्तं, रुद्रटे सा स्यादनन्वयाख्या यत्रैक्यं वस्त्वन्यदसदृशमिति । तस्य स्वयमेव भवेदुपमानञ्चोपमेयञ्च ॥ ६८ ॥ भ०

शरणमिव गतं तमो निकुञ्जे
विटपिनिराकृतचन्द्ररश्मिरातौ ।
पृथुविषमशिलान्तरालसंस्थं
सजलघनद्युति भीतवत्ससाद ॥ ६८ ॥

उत्प्रेक्षावयवः ।

शरणमित्यादि । पृथुविषमशिलानां यान्यन्तरालानि तेषु संस्थं सन्निषण्णं सत्तमः निकुञ्जे गहने विटपिभिर्निराकृताश्चन्द्रस्य रश्मय एवारातयो यस्मान्निकुञ्जात् तस्मिन् ससाद विलीनं शरणमिव यथा कश्चित् भीतो दुर्गे निलीयते सजलस्य घनस्येव द्युतिर्यस्य तमसः । उत्प्रेक्षावयव इति भीतवत्ससादेति उपमाश्लेषलक्षणस्य श्लिष्टस्यार्थेन योगात् शरणमिव गतमित्युत्प्रेक्षायोगात् विटपिनिराकृतचन्द्ररश्म्यराताविति रूपकार्थेन योगात् तथाचोक्तं श्लिष्टस्यार्थेन संयुक्तः किञ्चिच्चोत्प्रेक्षयान्वितः । रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथेति । विटपितिरस्कृतचन्द्ररश्मियोग इति पाठान्तरम् । तत्र रूपकार्थो नास्तीति असंपूर्णलक्षणता ॥ ६८ ॥ ज० म०

शरणमित्यादि । सजलस्य मेघस्य इव द्युतिर्यस्य तत् तमोऽन्धकारं पृथुविषमशिलायामन्तराले स्थितं सत् निकुञ्जे शरणं गतमिव शरणापन्नमिव ससाद विलीनं भीतवत् यथा कश्चिद्भीतो दुर्गवनान्तरे विलीयते निकुञ्जे कीदृशे विटपिभिर्वृक्षैर्निराकृता चन्द्ररश्मिरूपा अरातयस्तमःशत्रवो यस्मात् उत्प्रेक्षावयव इति भीतवत् ससादेत्युपमाश्लेषरूपश्लिष्टस्यार्थेन योगात् शरणमिव गतमित्युत्प्रेक्षाया योगात् विटपिनिराकृतचन्द्ररश्म्यराताविति रूपकार्थेन योगाच्च । तथाचोक्तं, श्लिष्टस्यार्थेन संयुक्तः किञ्चिच्चोत्प्रेक्षयान्वितः । रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथेति । चन्द्ररश्मियोग इति पाठे रूपकार्थो नास्तीत्यसम्पूर्णलक्षणता ॥ ६८ ॥ भ०

अथ नयनमनोहरोऽभिरामं
स्मर इव चित्तभवोऽप्यवामशीलः।
रघुसुतमनुजो जगाद वाचं
सजलघनस्तनयित्नुतुल्यघोषः॥ ७०॥

संसृष्टिः।

धृतिबन्धपरिलुप्तलोलकेश्यो
नयनजलापहृताञ्जनौष्ठरागाः।

अथेत्यादि। अथ चन्द्रदर्शनानन्तरं रघुसुतं राममभिरामं कामाभिभूतत्वादाभिमुख्येन रम्यत इति अनुजः कनीयान् भ्राता वाचं वक्ष्यमाणं जगाद गदितवान् नयनमनोहरः प्रेक्षणीय इत्यर्थः। इति तुल्ययोगिता न्यूनस्य लक्ष्मणस्याधिकेन रामेण सहाभिरमणीयगुणसाम्यविवक्षया अभिरमणतुल्यक्रियायोगात् स्मर इव चित्तभवोऽपि तस्य चेतसि सदा भवतीति श्लिष्टं तथाप्यवामशीलोऽप्रतिकूल इति विरोधः स्मरस्तु वामशीलः सजलघनस्तनयित्नुना शब्देन तुल्यो घोषो यस्य संसृष्टिरिति बह्वलङ्कारयोगात्। यथाचोक्तं पराभिभूता संसृष्टिर्बह्वलङ्कारयोगतः। रचिता रत्नमालेन सा चैवं कथ्यते यथा॥७०॥ज० म०

अथेत्यादि। चन्द्रोदयदर्शनानन्तरं रघुसुतं रामम् अभिरामं सुन्दरम् अनुजो लक्ष्मणो वाचं वक्ष्यमाणं जगाद कीदृशः स्मर इव काम इव नयनमनोहरः तदुभयानन्दकः चित्तभवः रामस्य चित्ते विद्यमानः अवामशीलः अनुकूलस्वभावः चित्तभवो हि कामोऽवामशीलो वभति तत्पथप्रवर्त्तकत्वात् अयन्तु न तथेत्यापाततो विरोधसूचनायापिशब्दः सजलनिविड़मेघतुल्यशब्दः। संसृष्टिरिति नानालङ्कारसंसर्गात् तथाहि स्मर इवेत्युपमा नयनमनोहर इति तुल्ययोगिता चित्तभव इति श्लेषः अवामशील इति विरोधः सजलघनेत्यादिना पुनरुपमा। तथाचोक्तं संसृष्टिरिति विज्ञेया नानालङ्कारसङ्कर इति॥ ७०॥ भ०

कुरु रिपुवनिता जहीहि शोकं
क्व च मरणं जगतां भवान् क्व मोहः ॥ ७१ ॥

आशीः ।

अधिगतमहिमा मनुष्यलोके
बत सुतरामवसीदति प्रमादी ।
गजपतिरुरुशैलशृङ्गवर्ष्मा
गुरुरवमज्जति पङ्कभाङ् न दारु ॥ ७२ ॥

हेतुः ।

पतीत्यादि । पतिवधेन परिलुप्ता भ्रष्टा लोलाः केशा यासां रिपुवनितानां नयनजलेनाम्बुना अपहृतमञ्जनमोष्ठरागश्च यासान्ताः मन्दोदरीप्रभृतीः कुरु शोकं जहीहीत्याशंस किं क्व भवान् जगतां मरणसाम्यः क्व च मोह इति आशीरिति इष्टस्याशंसनात् । तथाचोक्तम्, आशीरिति च केषाञ्चिदलङ्कारतया मता । सौहृदस्याविरोधोक्तौ प्रयोगोऽस्याश्च तद्यथेति ॥ ७१ ॥ ज० म०

पतीत्यादि । किं जगादेत्याह रिपोरावणस्य वनिताः स्त्रियः पतिवधात् परिलुप्ता भ्रष्टा लोलाश्चञ्चलाः केशा यासां नयनजलेनापहृतमञ्जनमोष्ठरागश्च यासां तथाविधाः कुरु शोकं जहीहि त्यज इत्याशंसे यतो जगतां मरणं रचिता भवान् क्व मोहश्च क्व वा असम्भावनायां क्वद्वयम् । आशीरिति इष्टार्थाशंसनात् तथाचोक्तम् आशीर्नामाभिलषिते वस्तुन्याशंसनात् यथेति । अन्यत्रापि आशीरिति च केषाञ्चिदलङ्कारतया मता । सौहृदस्याविरोधोक्तौ प्रयोगोऽस्याश्च तादृश इति ॥ ७१ ॥ भ०

अधिगतमहिमेत्यादि । मनुष्यलोके योऽधिगतमहिमा प्राप्ताधिपत्यः स प्रमादी शोकादिषु प्रमादवान् बत कष्टमवसीदति न कार्य्यसमर्थो भवति कुत एतदित्याह गजपतिः उरुशैलशृङ्गवर्ष्मा महाशैलशृङ्गप्रमाणं वर्ष्म वपुर्यस्य सः पङ्कभाक् पङ्कम्भजतीति भजो ण्विः

बोद्धव्यं किमिव हि यत्त्वया न बुद्धं
किं वा ते निमिषितमप्यबुद्धिपूर्वम् ।
लब्धात्मा तव सुकृतैरनिष्टशङ्की
स्नेहौघो घटयति मां तथापि वक्तुम् ॥ ७२ ॥

निपुणम् ।

पङ्कमवतीर्णः सन् अवमज्जति अवसीदति यस्मादसौ गुरुः न पुनर्दारु काष्ठं तस्मान्मुञ्च शोकम् । हेतुरिति गजपतेर्हेतुद्वारेण निर्देशात् अय-मर्थान्तरो द्रष्टव्यः ॥ ७२ ॥ ज० म०

अधीत्यादि । अधिगतमहिमा प्राप्ताधिपत्योऽपि मनुष्यलोके प्रमादी कार्य्येऽनवधानवान् सन् वत कष्टं सुतराम् अवसीदति कार्य्या-समर्थो भवति कुत इत्याह उरुशैलशृङ्गत्वग्भी महापर्वतशिखरप्रमाण-शरीरो गजपतिः पङ्कभाक् पङ्कमवतीर्णः सन् अवमज्जति पङ्के प्रवि-शति यस्मादसौ गुरुः न तु दारु काष्ठं मज्जति लघुत्वात् तस्मान्महतां प्रमादो विनाशहेतुः न तु लघीयसां तत्कारणं शोकं संत्यजेति भावः ॥ हेतुरिति गजपतेर्हेतुद्वारेण निर्देशात् । तथाचोक्तं, हेतुमता सह हेतोरभिधानमभेदकृद्यत । सोऽलङ्कारो हेतुः स्यादन्येभ्यः पृथग्-भूतः ॥ ७२ ॥ भ०

बोद्धव्यमित्यादि । किमिव तद्बोद्धव्यं ज्ञातव्यमस्ति नैवेत्यर्थः यत्त्वया न बुद्धं बुद्ध्या विज्ञेयं तव किञ्चिच्चेष्टितमपि नोपेक्षापूर्वकं यतो निमिषितमप्यक्ष्णोर्निमीलनमपि अबुद्धिपूर्वकं नैवेत्यर्थः यद्येवं किमित्यस्माकमुपदिशसीत्याह लब्धात्मेति तथापि सुकृतैर्लब्धात्मा लब्ध-जन्मा स्नेहौघः स्नेहसमूहः अनिष्टशङ्की अनिष्टशङ्कनशीलः मां वक्तुं वदेति घटयति । निपुणमिति अर्थावगाढत्वादस्य चोदात्तेऽन्तर्भावो द्रष्टव्यः भाविकत्वमित्यलङ्कार उक्तः तद्भाव्यविषयत्वात् पृथक् प्रदर्शयि-ष्यति ॥ ७२ ॥ ज० म०

बोध्यव्यमित्यादि । यत्त्वया न बुद्धं तद् बोद्धव्यं किमिवास्ति कापि

सौमित्रेरिति वचनं निशम्य रामः
जृम्भावान् भुजयुगलं विभज्य निद्रान् ।
अध्यष्ठाच्छिशयिषया प्रवालतल्पं
रक्षायै प्रतिदिशमादिशन् प्लवङ्गान् ॥ ७४ ॥

इति भट्टिकाव्ये प्रसन्नकाण्डे काव्यालङ्कारो नाम
दशमः सर्गः ।

---

त न किञ्चिदेव इवशब्दोऽसम्भावनायां तव निमिषितमपि चक्षुषोर्निमीलितमपि किंवा अबुद्धिपूर्वकं नैवेत्यर्थः अतो न किञ्चिदपि चेष्टितं तवानवधानपूर्वकमिति भावः अतो यद्यपि भवतो नोपदेशो युक्तस्तथापि सुकृतैस्तव सुष्ठुकर्मभिरनत्पुण्यैर्वा लब्धात्मा प्राप्तस्वरूपो जातः स्नेहस्समूढस्तवानिष्टशङ्काशीलः मां वक्तुं घटयति त्वामुपदेष्टुं मां प्रेरयति इत्यनुजो जगादेति पूर्वेणान्वयः । निपुणमिति कनिष्ठस्य ज्येष्ठोपदेशानौचित्येऽपि नैपुण्येनोक्तत्वात् । निपुणनामायमलङ्कार इति प्राञ्च इति विद्यासागरः । अस्य प्रेयस्यन्तर्भाव इति देवनाथः प्रेयः प्रियतराख्यानमिति तल्लक्षणात् । उदात्तमध्येऽन्तर्भाव इति जयमङ्गला ॥ ७३ ॥ भ०

सौमित्रेरित्यादि । इत्येवं लक्ष्मणस्य वचनं निशम्य श्रुत्वा रामो जृम्भावान् जातजृम्भिकः जृम्भणं जृम्भा गुरोश्च हल इत्यकारः शप् निद्रान् निद्राङ्गच्छन् द्राकुत्सितायां गतावित्यस्मादादादिकस्य निपूर्वस्य शतरि रूपम् । शिशयिषया शयितुमिच्छया भुजयुगलं विभज्य एकं शिरःस्थाने न्यस्य द्वितीयं शरीरस्योपरि प्रसार्येत्यर्थः विभुज्येति पाठान्तरं तत्र क्रोड़भागे वक्रीकृत्येत्यर्थः प्रवालतल्पं पल्लवशयनीयम् अध्यष्ठात् अधिष्ठितवान् गातिस्थेति सिचो लुक् प्राक्सितेत्यादिना षत्वं सप्तदशदित्वया नियमपूर्वं शुश्रुवापेत्यर्थः रक्षायै रक्षानिमित्तं प्लवङ्गमानादिशन् नियोजयन् प्रतिदिशं दिशि दिशि अव्ययीभावे शरत्-

प्रश्रुतिभ्य इति टच् तत्र दिक्शब्दस्य पठितत्वात् ॥ ७४ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां प्रसन्नकाण्डे
काव्यालङ्कारदर्शनः प्रथमः परिच्छेदः ।
सीताभिज्ञानदर्शनो नाम काव्यस्य
दशमः सर्गः ।

सौमित्रेरित्यादि । इत्येवं लक्ष्मणस्य वचनं निशम्य श्रुत्वा रामः प्रतिदिशं दिशि दिशि रक्षणार्थं प्लवङ्गान् वानरान् आदिशन् जृम्भावान् सन् निद्रान् निद्राङ्गच्छन् शिशयिषया शयितुमिच्छया प्रवालशय्यामध्यष्ठात् अधिष्ठितवान् भुजयुगलं विभुज्य भुग्नं कृत्वा एकं शिरःस्थाने निवेश्य अपरञ्चोरःस्थाने शिरस उपरि वा निवेश्येत्यर्थः विगुह्येति पाठे, क्रोडोपरिवक्रीकृत्येत्यर्थः निद्रानिति निपूर्वात् द्राल स्वप्ने इत्यस्मात् शतः अध्यष्ठादिति अभिपूर्वतिष्ठतेर्लुङ् सिः भूस्थेत्यादिना सेर्लुक् षीक इत्यादिना षत्वं कर्मक्रियेत्यादिना आधारस्य कर्मत्वं प्रतिदिशमिति वीप्सायामव्ययीभावः शरद्विपाड्य इत्यादिना अप्रत्ययः ॥ ७४ ॥ भ०

इति महोपाध्यायहरिहरखानतनयरत्नभवगौराङ्गमल्लीकात्मजश्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां प्रसन्नकाण्डे
काव्यालङ्कारदर्शनं नाम प्रथमः परिच्छेदः ।
काव्यस्य सीताभिज्ञानदर्शनं नाम
दशमः सर्गः ।

# एकादशः सर्गः ।

---

**अथास्तमासेदुषि मन्दकान्तौ पुण्यक्षयेणेव निधौ कलानाम् ।**
**समाललम्बे रिपुमित्रकल्पैः पद्मैः प्रहासः कुमुदैर्विषादः ॥१॥**

माधुर्य्यमपि काव्यस्य गुण उक्तः । तथाचोक्तं, ग्राम्यं नातिसमस्तार्थं काव्ये मधुरमिष्यत इति तत्प्रदर्शनार्थं लङ्कागतप्रभातवर्णनमधिकृत्याह ।

अथेत्यादि । अथानन्तरं कलानां निधौ चन्द्रमसि अस्तं पर्वतमासेदुषि गतवति यथा कश्चित् पुण्यक्षयेणावसानमासेदुषि भाषायां सदवसेति लिटः क्वसुरादेशः मन्दकान्तावित्यस्तगमने पूर्वचिह्नं दर्शयति रिपुकल्पैः पद्मैः प्रहासः विकाशः मित्रकल्पैः कुमुदैर्विषादः सङ्कोचः समाललम्बे समालम्बितः ॥ १ ॥ ज० म०

अथेत्यादि । अथ गुणाः प्रदर्श्यन्ते यतः, अलङ्कृतमपि श्राव्यं न काव्यं गुणवर्जितम् । गुणयोगस्ततो मुख्यो गुणालङ्कारयोगयोः । वामनादिभिर्दश गुणा मन्यते ते तु श्लेष प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधय इति । अन्ये तु और्जित्यमर्थसौक्ष्म्यञ्च गाम्भीर्य्यमर्थविस्तरः । सङ्क्षेपः समितत्वञ्च भाविकत्वं गतिस्तथा । रतिव्यक्तिस्तथा प्रौढिः प्रेयानथ सुशब्दता प्रत्येतानप्यधिकान् गुणानाहुः । काव्यप्रकाशकृता तु, माधुर्य्यौजःप्रसादाख्यास्त्रयस्तेन पुनर्दशेत्युक्तं तन्मते माधुर्य्यप्रकाशक एवायं सर्ग आरभ्यते । तथाचोक्तं कण्ठाभरणे, शृङ्गार एव मधुरः स च प्रह्लादनो रसः । तन्मयं काव्यमाश्रित्य माधुर्यं प्रति तिष्ठतीति । अत्र सर्गे प्रसादगुणोऽपि द्रष्टव्यः । तत्र लङ्कागतप्रभातवर्णनं प्रस्तूयते । अथानन्तरं यथा पुण्यक्षयेण कश्चिदस्तं याति तथा कलानां निधौ चन्द्रे मन्दकान्तौ मन्दप्रभे अस्तं पर्वतमासेदुषि प्राप्ते सति रिपुकल्पैः पद्मैः प्रहासो विकाशः पद्मे प्रकृष्टहासः मित्रकल्पैः कुमुदैर्विषादः

दूरं समारुह्य दिवः पतन्तं भृगोरिवेन्दुं विहितोपकारम्।
बद्धानुरागोऽनुपपात तूर्णं तारागणः संभृतशुभ्रकीर्त्तिः ॥२॥

सङ्कोचः पक्षे विषमता समालम्बे क्षयात्तमासेदुषीति श्लेषोऽत्र शब्दगुणः तथाचोक्तं गुणः सुश्लिष्टपदता श्लेष इत्युपदिश्यते। इति प्रसादोऽप्यत्रास्ति, प्रसिद्धार्थपदत्वं यत् प्रसादोऽसौ निगद्यत इति लक्षणं पद्मैः प्रहास इत्यत्र माधुर्य्यं गुणोऽयं पृथक्पदता माधुर्य्यं तन्माधुर्य्यमुदाहृतमिति न्यायात् आसेदुषीत्यत्र सुशब्दतापि व्युत्पत्तिः सुप्तिङ्गा या तु प्रोच्यते सा सुशब्दतेति वचनात् पद्मैः प्रहास इत्यत्र समाधिरप्यस्ति समाधिः सोऽन्यधर्माणां यदन्यत्रापि रोपणम्। प्रहासश्चेतनाधर्मः स चान्यत्राभिरोपित इति एवमन्यत्रापि गुणनिरूपणं कर्त्तव्यम् ॥ १ ॥ म०

दूरमित्यादि। दूरमाकाशस्य भागमारुह्य पश्चात्तत एवाकाशात् भृगोरिव प्रपातादिव पतन्तमिन्दुं तारापतिमनु पश्चात् तारागणः विहितोपकारं तदुदयेन तारागणाप्यायनाच्चेद्बद्धानुरागः अस्तगमनकाले अनुगतरक्तभावः संभृता विपुलीकृता शुभ्रा निर्मला कीर्त्तिर्येन स तारागणः पपात यथा कश्चित् स्वामिनि भृगोः पतति पश्चात् स्वामिभक्त्या भृत्यलोको बद्धानुरागः संभृतशुभ्रकीर्त्तिः पतति तद्वदिति ॥ २ ॥ ज० म०

दूरमित्यादि। दिव आकाशस्य दूरं भागमारुह्य पश्चात्तत एव सकाशात् भृगोः प्रपाताख्यपर्वतोच्चभागादिव पतन्तमधस्ताद्गच्छन्तमिन्दुं विहितोपकारं तदुदये तारागणस्याप्यायनात्तारापतित्वाच्च तारागणस्तूर्णमनुपपात अनुगजाम तमनु लक्ष्यीकृत्य पपातेति वा कीदृशः बद्धानुरागः अस्तगमनकाले रक्तत्वात् सम्भृता उपचिता शुभ्रा निर्मला कीर्त्तिर्येन अन्योऽपि भार्य्यागणोऽनुरक्तः सन् पतिमनुगच्छन् निर्मलकीर्त्तिर्भवति अत्रोदारत्वमर्थगुणः आशयस्य च उत्कृष्टत्वमुदारत्वमिष्यत इति लक्षणात् समत्वगुणोऽप्यत्र चन्द्रस्यास्तगमने ताराणामप्यस्तमयात्। तथाचोक्तम्, अनैयम्यं क्रमतया समत्वमभिधीयत इति,

क ते कटाक्षाः क विलासवन्ति
प्रोक्तानि वा तानि ममेति मत्वा ।
लङ्काङ्गनानामवबोधकाले
तुलामनारुह्य गतोऽस्तमिन्दुः ॥ २ ॥

प्रसादोऽप्यर्थगुणोऽत्र लोकप्रसिद्धार्थत्वात् । तदुक्तं, यत्तु प्राकट्यमर्थस्य प्रसादः सोऽभिधीयत इति ॥ २ ॥ भ०

क त इत्यादि । ये कटाक्षाः सविलासास्तिर्य्यग्दृष्टयः यानि च प्रोक्तानि जल्पितानि विलासवन्ति तदुभयं क मम विद्यते लङ्काङ्गनानान्तु मुखेन्दवः सकटाक्षाः सविलासाः जल्पिताश्च अतो यावन्न विबुध्यन्ते तावदपक्रमणं युक्तमिति मत्वा निरूप्य तुलामनारुह्य समानतामलब्ध्वा निःसंशयो वा भूत्वा तत्प्रबोधकाले लङ्काङ्गनानामिवं गतोऽस्तमिन्दुः ॥ २ ॥ ज० म०

क ते इत्यादि । मम ते प्रसिद्धाः विलासवन्तः कटाक्षाः क तानि वा विलासवन्ति प्रकृष्टजल्पितानि क न सन्त्येवेत्यर्थः लङ्कास्त्रीणान्तु लङ्कामुखेन्दुषु तदुभयमप्यस्ति अतएव यावत्तदुदयो न भवति तावदपक्रमणं युक्तमिति मत्वा तुलां तत्साम्यम् अनारुह्य अप्राप्य लङ्कास्त्रीणां प्रबोधसमये जागरणकाले इन्दुरस्तं गतः विलासवन्तीति पुंनपुंसकविशेषणत्वेऽपि सामान्यत्वान्नपुंसकत्वं नपुंसकानपुंसकयोर्नपुंसकमेवेति श्रीपतिसूत्रेण वा नपुंसकत्वं तात्कालिकविशेषस्तु विलासोऽङ्गक्रियोक्तिषु । प्रसिद्धानुभूतार्थविषयतच्छब्दो यच्छब्दं नापेक्षत इति काव्यप्रकाशः अत्रौर्जित्यं गुणः और्जित्यं गाढ़बन्धनेति तल्लक्षणात् माधुर्य्यमप्यत्र पूर्ववत् सुकुमारतापि अनिष्ठुराक्षरप्रायं सुकुमारमिहेष्यत इति न्यायात् उदात्ततापि विलासवन्तीति श्लाघ्यविशेषणात् तदुक्तं श्लाघ्यैर्विशेषणैर्योगो यस्तु साम्यादुदात्ततेति गाम्भीर्य्यमप्यर्थगुणोऽत्र विलासादीनां शास्त्रादेव ज्ञानात् । तथाचोक्तं शास्त्रार्थं सव्यपेक्षत्वं गाम्भीर्यमभिधीयत इति ॥ २ ॥ भ०

मानेन तल्पेष्वयथामुखीनाः
मिथ्याप्रसुप्तैर्गमितत्रियामाः ।
स्त्रीभिर्निशातिक्रमविह्वलाभिः
दृष्टेऽपि दोषे पतयोऽनुनीताः ॥ ४ ॥
ईर्ष्याविरुग्णाः स्थिरबद्धमूलाः
निरस्तनिःशेषशुभप्रतानाः ।

मानेनेत्यादि । पतयस्तल्पेषु शयनीयेषु मानेनायथामुखीनाः पराट्टत्तमुखाः यथामुखं संमुखस्य दर्शनं मुखपराट्टत्तत्वात् प्रतिबिम्बाश्रयवत्त्वेषु योषितां प्रतिबिम्बमिव मनो न प्रसादीभवतीत्येवं मिथ्याप्रसुप्तैरलीकनिद्राभिः गमितत्रियामाः प्रेरितप्रथमादिप्रहराः दृष्टेऽपि दोषे गोत्रस्खलितादौ स्त्रीभिरनुनीताः यतो निशातिक्रमात्पर्य्यवसानात् विक्लवा विह्वलास्ताः ॥ ४ ॥ ज० म०

मानेनेत्यादि । स्त्रीभिर्दृष्टेऽपि दोषे गोत्रस्खलनादौ पत्यनुनयेन लब्धा मनस्वित्वादिदोषे ज्ञातेऽपि वा पतयोऽनुनीताः अनुनयकरणे हेतुमाह कीदृशीभिः निशाया अतिक्रमात् पर्य्यवसानात् विह्वलाभिः कीदृशाः पतयः चाटूक्तिपादपतनेनापि प्रियामप्रसन्नां बुद्ध्वा मानेन तल्पेषु शय्यासु अयथामुखीनाः पराट्टत्तमुखाः किमियं करिष्यतीति ज्ञातुं मिथ्याप्रसुप्तैरलीकनिद्राभिर्गमितरात्रयः अतिवाहितप्रहरत्रया इत्यन्ये अयथामुखीना इति मुखस्यानतिक्रमः प्रियाभिमुखस्थितत्वरूपो यथामुखं ततः स्वार्थे ईनः ततो नञ्समासः विद्यासागरस्तु यथामुखं सम्मुखं दृश्यत आभिमिति ईनः पश्चान्नञ्सम्बन्धः यथाशब्दोऽभिमुखे वर्त्तते अव्ययानामनेकार्थत्वादित्याह स्वमतेऽपि तथा विकारसङ्कोचाद्यादिशब्दात् अन्ये तु यथामुखमिति साहस्यनिपातनाच्चिन्त्यमित्याहुः अत कान्तिरर्थगुणः दोषे दृष्टेऽपि पत्यनुनयात् । तथाचोक्तं कान्तिर्दीप्तरसत्वं स्यादिति । समाधिरप्यर्थगुणः मिथ्याप्रसुप्तत्वात् व्याजावलम्बनं यत्तु स समाधिरिति स्मृत इति ॥ ४ ॥ भ०

आप्यायिता नेत्रजलप्रसेकैः
प्रेमद्रुमाः संरुरुहुः प्रियाणाम् ॥ ५ ॥

ततः समाशङ्कितविप्रयोगः पुनर्नवीभूतरसोऽवितृष्णः ।
स्मरस्य सन्तं पुनरुक्तभावं नावर्त्तमानस्य विवेद लोकः ॥ ६ ॥

ईर्ष्याविरुग्णा इत्यादि । प्रियाणां प्रेमद्रुमाः प्रेमाणि द्रुमा इव स्थिरं निश्चलं बद्धमूलम् उत्पत्तिकारणं येषां ते ईर्ष्याविरुग्णाः अतएव निरस्ताः निःशेषाः शुभा एव हसितजल्पितादयः प्रतानाः शाखा येषां ते प्रसादनानन्तरं नेत्रजलप्रसेकैराप्यायिताः संरुरुहुः पुनर्नवीभूताः स्थिरबद्धमूलत्वात् ॥ ५ ॥ ज० म०

ईर्ष्येत्यादि । प्रियाणां प्रेयसां प्रेयसीनां वा एकशेषादुभयेषां प्रेमाणि द्रुमा इव संरुरुहुः पुनः पल्लविताः यतो नेत्रजलप्रसेकैः आप्यायिताः पोषिताः स्थिरबद्धमूलाः स्थिरं निश्चलं बद्धं सम्बद्धं मूलमुत्पत्तिकारणं येषां कीदृशाः पूर्वमीर्ष्यया परोत्कर्षाक्षमया विरुग्णाः भग्ना अतएव निरस्ता निःशेषाः शुभा एव हसितजल्पितादय एव प्रतानाः शाखास्तेषां विस्तारो वा येषाम् अन्येऽपि स्थिरबद्धमूला वृक्षा भग्ना अपि हतप्रताना अपि जलसेकैराप्यायिताः सन्तः संरोहन्तीति भावः । प्रौढिरत्नार्थगुणः विवक्षितार्थनिर्वाहः काव्ये प्रौढिरिति स्मृता प्रेम्णो द्रुमत्वनिर्वाहात् ॥ ५ ॥ भ०

तत इत्यादि । प्रेमद्रुमरोहणानन्तरं लोकः समाशङ्कितविप्रयोगो विप्रयोगोऽस्माकमासन्नवर्त्तीति पुनर्नवीभूतरसः अभिनवीभूतसुरतेच्छः स्मरस्य कामस्य आवर्त्तमानस्य पुनःपुनः प्रवर्त्तनात् अवितृष्णः साभिलाषः सन्तमपि विद्यमानमपि पुनरुक्तभावं पौनःपुन्यं न विवेद आशङ्कितप्रयोगत्वादपूर्वमिव ज्ञातवानित्यर्थः ॥ ६ ॥ ज० म०

तत इत्यादि । प्रेमसंरोहाद्धेतोरनन्तरं वा आवर्त्तमानस्य पुनःपुनः प्रवर्त्तमानस्य स्मरस्य कन्दर्पस्य पुनरुक्तभावं पौनःपुन्यं सन्तं विद्यमानमपि लोको न विवेद न ज्ञातवान् यतो रात्रिगमनेनाशङ्कितविरहः अतएव पुनर्नवीभूतसुरतेच्छः अतएवावितृष्णः तृष्णाविगम-

वृत्तौ प्रकाशं हृदये कृतायां सुखेन सर्वेन्द्रियसम्भवेन ।
सङ्कोचमेवासहमानमस्यादशक्तवद्वञ्चितमानि चक्षुः ॥ ७ ॥

रहितः पुनस्तृष्णोदयात् अधिलप्प इति पाठे अधिकलप्प इत्यर्थः । अत्रापि कान्तिगुणो दीप्तरसत्वात् प्रेयोऽप्यस्ति प्रेयस्त्वर्थेष्वभीप्सता अभीष्टस्य कामस्य प्रतिपादनात् ॥ ६ ॥ म०

वृत्तावित्यादि । सुरतकाले श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानाम् इन्द्रियाणां शब्दस्पर्शरूपरसगन्धग्रहणात् सर्वेन्द्रियसम्भवं सुखम् अथवा सर्वमिन्द्रियं यत्रेति सर्वेन्द्रियः कायः तत्सम्भवं सुखं सर्वेन्द्रियसम्भवं सुखं तथाह्यालिङ्गनचुम्बनदर्शनच्छेदनेषु पुरुषोपसृष्टेषु तत्र प्रयुज्यमाने काये सुखमुत्पद्यते तेन सुखेन हृदये चेतसि प्रकाशं स्पष्टं वृत्तौ कृतायां चक्षुर्वञ्चितमिवात्मानं मन्यमानम् आत्ममाने खश्चेति णिनिः सङ्कोचमेव निमीलनमेवास्यात् अनुष्ठितवत् असहमानमिति सर्वेन्द्रियसम्भवस्य सुखस्य हृदये वृत्तिं सोढुमपारयदित्यर्थः अशक्तवत् यथा कश्चिदसमर्थोऽन्यसम्भवां सम्पदं सोढुमसहमानः सङ्कोचमनुतिष्ठति ॥७॥ ज०म०

वृत्तावित्यादि । सुखेन हृदये चेतसि प्रकाशं स्पष्टं वृत्तौ स्थितौ कृतायां सत्यां चक्षुः कर्तृ सङ्कोचं निमीलनमपि असहमानमेवास्यात् कुचसङ्कोचे इत्यस्माहृत् । यतो वञ्चितमानि सङ्कोचे सति चणमपि रूपादर्शनेनात्मानं वञ्चितमिव मन्यते अशक्तवत् यथा असमर्थं चक्षुर्निष्पन्दं भवति तथा प्रियाङ्गे निष्पन्दमित्यर्थः यद्वा सुखस्य हृदि वृत्तौ सत्यां हृदयाप्रवेशेन वञ्चितमिवात्मानमस्यात् चक्षुःसङ्कोचं मुद्रितमेवास्यात् असहमानं हृदयस्य सुखं सोढुमसमर्थमिव अशक्तवत् यथा कश्चिदसमर्थोऽन्यसम्पदम् असहमानः सङ्कोचित एव तद्वत् यद्वा अशक्तवत् यथा असमर्थं चक्षुरुन्मीलनाचमं सत् मुद्रितमेव तिष्ठति तद्वत् सुरतान्ते नेत्रनिमीलनस्योत्प्रेचेयं कुचकौटिल्ये खेलने इत्यस्मात् पचादित्वादनि कुटादित्वाद्गुणाभावः । सुखेन कीदृशेन सर्वेन्द्रियसम्भवेन रतिकाले स्वस्वविषयसम्बन्धैः सर्वैरिन्द्रियैर्युगपदुत्पादितेन यद्वा सर्वाणि इन्द्रियाणि यस्य स सर्वेन्द्रियः कायः तेनोत्पादितेन प्रौढिरत्र गुणः,

पीने भटस्योरसि वीक्ष्य भुग्नांस्तनुत्वचः पाणिरुहान् सुमध्या ।
इच्छाविभङ्गाकुलमानसत्वाद्भर्त्रे नखेभ्यश्च चिरं जुजूरे ॥८॥
स्रस्ताङ्गचेष्टो विनिमीलिताक्षः स्वेदाम्बुरोमोद्गमगम्यजीवः ।
अशेषनष्टप्रतिभापटुत्वो गाढ़ोपगूढ़ो दयितैर्जनोऽभूत् ॥९॥

विशिष्टा भणितिर्या स्यात् प्रौढिं तां कवयो विदुः । उचितनिमीलन-स्यासहनजन्यत्वात् पूर्ववन्माधुर्य्यमपि शब्दगुणोऽत्र पृथकपदत्वात् ॥७॥ भ०

पीने इत्यादि । काचित् सुमध्या सुमध्यमा नखैः व्यापद्यमाना अहमपस्य क्षतं विधास्यामीति भटस्योरसि पीने कठिने भुग्नान् कुञ्चितान् भग्नानिति पाठान्तरं पाणिरुहान्नखान् वीक्ष्य भर्त्रे नखेभ्यश्च चिरं जुजूरे क्रुध्यति स्म कथमस्य वक्षः कठिनं मम च नखास्तनुत्वचो न कठिना इति पूरीजूरीहिंसावयोहान्योरित्यस्यात्मनेपदिनो रूपं क्रुधद्रुहेत्यादिना सम्प्रदानसंज्ञा । कस्माज्जुजूर इत्याह इच्छाविभङ्गाकुलमानसत्वात् चिकीर्षिताकरणेनाकुलचित्तत्वात् ॥ ८ ॥ ज० म०

पीने इत्यादि । कापि सुमध्या दयितेन नखैः क्षण्यमाना अहमप्यस्य क्षतं विधास्यामीति मत्वा भटस्य योधस्य पीने कठिने उरसि दत्तान् पाणिरुहान् नखान् मृदुत्वक्त्वात् भग्नान् कुण्ठितान् भुग्नानिति पाठे कुटिलान् वीक्ष्य दृष्ट्वा चिकीर्षाविभङ्गेन व्याकुलचित्ततया भर्त्रे नखेभ्यश्च चिरं चिरकालं व्याप्य जुजूरे क्रुध्यति स्म ज्जूरीयीज्यानौ बधे अनेकार्थत्वात् कोपेऽपि यस्मै दित्यादिना सम्प्रदानत्वं शास्त्रव्यपेक्षत्वं गाम्भीर्य्यमत्र गुणः कामशास्त्रे मानावसाने स्थानविशेषे नखक्षतदानस्योक्तत्वात् ॥ ८ ॥ भ०

स्रस्ताङ्गचेष्ट इत्यादि । दयितैर्गाढ़ोपगूढ़ः आलिङ्गितः सन् स्त्रीजनः अशेषनष्टप्रतिभापटुत्वोऽभूत् अशेषं नष्टं प्रतिभाया बुद्धेः पटुत्वं यस्येति एवञ्च सत्वा स्रस्ताङ्गचेष्टोऽपगतकायव्यापारः विनिमीलिताक्षः सुखानुभवान्निमीलितलोचनः मृतस्तर्हीत्याह स्वेदाम्बुरोमोद्गमगम्यजीवः स्वेदाम्बुरोमोद्गमाभ्यां लिङ्गाभ्यां गम्यमानसंज्ञः ॥९॥ ज० म०

स्रस्तेत्यादि । स्त्रीजनो दयितैर्गाढ़ालिङ्गितः सन् अशेषनष्टप्रति-

**तमः प्रसुप्तं मरणं सुखं नु मूर्च्छा नु माया नु मनोभवस्य ।**
**किं तत्कथं वेत्युपलब्धसंज्ञा विकल्पयन्तोऽपि न संप्रतीयुः ॥१०॥**
**वक्षस्तनाभ्यां मुखमाननेन गात्राणि गात्रैर्घटयन्नमन्दम् ।**
**स्मरातुरो नैव तुतोष लोकः पर्य्याप्तता प्रेम्णि कुतो विरुद्धा ॥११॥**

आपटुत्वोऽभूत् अशेषं समस्तमेव नष्टं प्रतिभायाः बुद्धेः पटुत्वं यस्य अतएव स्रस्ताङ्गचेष्टः अपहृतदेहव्यापारः सुखानुभवात् विनिमीलित-लोचनः स्वेदजलरोमाञ्चाभ्यां गम्यमानजीवः जनशब्दोऽत्र स्त्रीजाति-वाचकः तेन दयितैरित्यत्र बहुत्वमदुष्टं गाढालिङ्गनकारित्वेन गौरवे बहुत्वं वा कान्तिरत्र गुणो दीप्तरसत्वात् ॥ ९ ॥ म०

तम इत्यादि । कामुका अपि सुरतावस्थाया उत्तरकालम् उप-लब्धसंज्ञा विकल्पयन्ति तमो नु किमन्धकारं प्रसुप्तं नु किं प्रकर्षेण सुप्तं मरणं नु मरणावस्था नु सुखं नु मूर्च्छा नु मनोभवस्य वा मायेति किं तद्भवति कथं वा केन प्रकारेण तत् स्यात् इत्येवं विकल्पयन्तोऽपि न सम्प्रतीयुः न परमार्थं ज्ञातवन्त इत्यर्थः ॥ १० ॥ ज० म०

तम इत्यादि । कामुका अपि सुरतावस्थाया उत्तरकालमुपलब्ध-चैतन्याः सन्तो विकल्पयन्तीत्याह किं तमः प्रागन्धकारं दृष्टं वस्त्वन्त-रानुपलम्भात् प्रसुप्तं वा प्रसुप्तिर्यत्र स्वप्नोऽपि न दृश्यते मरणं वा अचेष्टत्वात् सुखं वा अनुभूयमानत्वात् मूर्च्छा मोहो वा कत्यस्याप्य-स्मरणान्मनोभवस्य कामस्य माया वा किं तदभवत् केन प्रकारेण वेति एवं विकल्प्योऽपि न सम्प्रतीयुः परमार्थं न निश्चितवन्तः । पूर्ववदत्र माधुर्य्यं गुणः ॥ १० ॥ म०

वक्ष इत्यादि । वक्षोमुखगात्राणि स्वानि स्तनादिभिः स्त्रीसम्ब-न्धिभिर्घटयन् संश्लेषयन् अमन्दं दृढं ङमोर्ह्रस्वादचिङमुट् स्मरातुरो लोको नैव तुतोष तुष्टिं न जगाम यतः पर्य्याप्तता प्रेम्णि कुतो विरुद्धा नैव तस्याविरुद्धत्वात् ॥ ११ ॥ ज० म०

वक्ष इत्यादि । स्मरातुरो लोकं कामार्त्तो जनः स्वकीयं हृदयादि स्त्रीस्तनादिना अमन्दं दृढं घटयन् संश्लेषयन् नैव तुतोष न तृप्तिं

स्रस्ताङ्गयष्टिः परिरभ्यमाणा संदृश्यमानाप्युपसंहृताक्षी।
अनूढमाना शयने नवोढा परोपकारैकरसैव तस्थौ॥ १२॥
आलिङ्गितायाः सहसा त्रपावांस्त्रासाभिलाषानुगतो रतादौ।
विश्वासितायां रमणेन वध्वा विमर्दरम्यो मदनो बभूव॥ १३॥

जगाम कुत इत्याह प्रेम्णि पर्याप्तता इच्छाविच्छेदः कुतो भवेत् यतः सा विदग्धा कान्तिरतापि गुणः॥ ११॥ भ०

स्रस्ताङ्गयष्टिरित्यादि। काचिन्नवोढ़ा शयने शय्यायां परिरभ्यमाणा पत्या आलिङ्ग्यमाना स्रस्ताङ्गयष्टिः न प्रतीपमालिङ्गति संदृश्यमानापि उपसंहृताक्षी निमीलितलोचना न प्रतीपं पश्यति मानं नैवाचरतीति अनूढ़मानापि असंहृतमानापि एवंविधापि सती परोपकारैकरसैव तस्थौ भर्त्तुरुपकारैकाभिप्रायैव अवस्थिता नात्मोपकाराय॥ १२॥ ज० म०

स्रस्ताङ्गयष्टिरित्यादि। काचिन्नवोढ़ा शयने शय्यायां परोपकारैकरसा प्रत्युपकारमात्राभिप्रायैव तस्थौ न तु स्वोपकाराय यतः परिरभ्यमाणा दयितेनालिङ्ग्यमाना स्रस्ताङ्गयष्टिर्न प्रत्यालिङ्गनं करोति नापि प्रतीपा सुखसुन्नमय्य संदृश्यमानापि उपसंहृताक्षी निमीलितनेत्रा न पश्यति मानेनैवं करोतीति चेदाह अनूढ़माना लज्जयैव असृतमाना तथा करोतीत्यर्थः। पूर्ववन्माधुर्य्यादिगुणोऽत्र बोध्यः एवमग्रेऽपि॥ १२॥ भ०

आलिङ्गितायां इत्यादि। कस्याश्चिद् वध्वा रतात्प्राक् रमणेन सहसा तदृक्षणम् आलिङ्गितायास्त्रपावान्मदनो बभूव रतादौ रतारम्भे त्रासाभिलाषाभ्यामनुगतो बभूव विश्वासितायाः शनैर्विश्वासं कारितायाः विमर्दरम्यो बभूव त्रासाभावात्॥ १३॥ ज० म०

आलिङ्गितायां इत्यादि। रतादौ रतात्प्राक् रमणेन कान्तेन सहसा अकस्मादालिङ्गितायाः कस्याश्चिद्वध्वा मदनस्त्रपावात् लज्जावान् त्रासेनाभिलाषेण चानुगतश्च बभूव किंवा आलिङ्गनेन सहसा त्रपावान् रतादौ सुरतारम्भे त्रासाभिलाषाभ्यामनुगतः पश्चात् शनैःशनै-

सामोन्मुखेनाच्छुरिता प्रियेण दत्तेऽथ काचित्पुलकेन भेदे ।
अन्तःप्रकोपापगमाद्विलोला वशीकृता केवलविक्रमेण ॥ १४ ॥
गुरुर्दधाना परुषत्वमन्या कान्तापि कान्तेन्दुकराभिमृष्टा ।
प्रह्लादिता चन्द्रशिलेव तूर्णं क्षोभात् स्रवत्स्वेदजला बभूव १५

र्विश्वासितायाः विश्वासं प्रापितायाः तस्या एव मदनो विमर्दैन रस्यो बभूव त्रासाभावात् ॥ १३ ॥ म०

सामोन्मुखेनेत्यादि । अथ काचित् कोपान्मानवती प्रियेण सामोन्मुखेन सामपरेण प्रसादयता आच्छुरिताख्येन नखकर्मणा संस्पृष्टा सती पुलकेन रोमाञ्चेन भेदे उद्गमे दत्ते सति अन्तःप्रकोपस्यापगमात् विलोला विलोलबुद्धिः केवलविक्रमेण हठाद्ग्रहणेनैव वशीकृतोपभुक्तेत्यर्थः ॥ १४ ॥ ज० म०

सामोन्मुखेनेत्यादि । काचिन्मानिनी सामोन्मुखेन प्रसादनोद्यतेन प्रियेणाच्छुरिता आच्छुरिताख्येन नखकर्मणा स्पृष्टा अथानन्तरं पुलकेन रोमाञ्चेन भेदे उद्गमे दत्ते सति अन्तःप्रकोपस्यापगमात् विलोला चञ्चलबुद्धिः सा सुरते साभिलाषा वा केवलविक्रमेण हठाद्ग्रहणमात्रेण वशीकृता उपभुक्ता भावं ज्ञात्वा प्रसादनान्तरं स्वकृतप्रसादनान्तरेण प्रियेण यद्गण्डस्थलान्तरे अङ्गुष्ठापनखेन ताड्यते तदाच्छुरितमुच्यते ॥ १४ ॥ म०

गुरुरित्यादि । अन्यापि काचित् स्त्री कान्ता कमनीयरूपा गुरुः धीरा वोतोगुणवचनादिति वा ङीप् न भवति दधाना परुषत्वं नैष्ठुर्यं कान्तेन भर्त्रा इन्दुनेव कराभिमृष्टा सती प्रह्लादिता सुखिता क्षोभात् चेतसो विकारात् तूर्णं स्रवत्स्वेदजला बभूव चन्द्रशिलेव चन्द्रमणिरिव सा गरीयसी कान्ता परुषत्वं काठिन्यं दधाना इन्दुना कराभिमृष्टा प्रह्लादिता सुखितेव क्षोभात् स्वप्रकृतिविकारात् स्रवज्जला भवति ॥ १५ ॥ ज० म०

गुरुरित्यादि । अन्या कान्ता परुषत्वं नैष्ठुर्यं दधानापि कान्तेन्दुनेव कान्तस्य चन्द्रस्य वा करेण हस्तेन किरणेन चाभिमृष्टा सती

शशाङ्कनाथापगमेन धूम्रां मूर्च्छापरीतामिव निर्विवेकाम्।
ततः सखीव प्रथितानुरागा प्राबोधयद् द्यां मधुरारुणश्रीः १६
अवीतत्तृष्णोऽथ परस्परेण क्षणादिवायातनिशावसानः।
दुःखेन लोकः परवानिवागात् समुत्सुकः स्वप्ननिकेतनेभ्यः॥१७॥

ततः प्रह्लादिता आनन्दिता च सती क्षोभाच्चेतसो विकारात् तूर्णं स्रवत्स्वेदजला बभूव चन्द्रशिलेव चन्द्रकान्तिमणिरिव कीदृशी गुरुगौरवान्विता चन्द्रशिलापि हि गुरुत्वाख्यगुणयुक्ता कान्ता मनोहरा परुषत्वं काठिन्यं दधानापि कान्तेन कमनीयेन इन्दुना कराभिमृष्टा प्रह्लादिता प्रकाशिता च सती क्षोभात् स्वप्रकृतिविपर्य्ययात् स्रवज्जला भवति। गुरुरिति गुणाद्वोत इति पक्षे ङीप्प्रत्ययाभावः॥ १५॥ भ०

शशाङ्केत्यादि। ततोऽनन्तरं यथा काचित् स्त्री नाथस्य भर्त्तुरपगमेन वियोगेन धूम्रा मलिना मूर्च्छापरीता निश्चेतना अतएव निर्विवेका विवेकाक्षमा सती सख्या प्रकाशितस्नेहया प्रबोध्यते तद्वदाकाशं शशाङ्कनाथस्यापगमेन अस्तगमनेन धूम्रां धूसरतां गतां निर्विवेकाम् अविद्यमानविशेषाम् अरुणश्रीः आदित्यलक्ष्मीरिति मधुराभिनवा प्रथितानुरागा प्राबोधयत् प्रकाशितवती॥ १६॥ ज० म०

शशाङ्केत्यादि। ततोऽनन्तरम् अरुणस्य सूर्य्यस्य तत्सारथेर्वा श्रीर्द्यामाकाशं प्राबोधयत् प्रकाशितवती सखीव यथा सखी काञ्चित् स्त्रियं प्रबोधयति कीदृशीं द्यां नाथस्य चन्द्रस्यापगमेन धूम्रां धूसरां स्त्री च नाथस्य भर्त्तुरपगमनेन विरहेण धूम्रा मलिना भवति मूर्च्छापरीतामिव अचेतनामिव सापि स्त्री मोहपरिगता भवति निर्विवेकां न विद्यते विवेको यत्र तादृशीं सापि स्त्री सदसद्विवेकशून्या सख्या प्रबोध्यते अरुणश्रीः कीदृशी प्रथितानुरागा प्रकाशितरक्तभावा मधुरा प्रिया अभिनवत्वात् सखी च प्रकाशितस्नेहा मधुरा प्रियभाषिणी च भवति॥ १६॥ भ०

अवीत्यादि। अथानन्तरं लोकः परस्परेणान्योन्येन दयितो दयितया दयितापि दयितेन अवीततृष्णः अनपगतसम्भोगाभिलाषः अत-

अर्द्धोत्थितालिङ्गितसन्निमग्नः
रुद्धः पुनर्यान् गमनेऽनभीप्सुः ।
व्याजेन निर्याय पुनर्निवृत्तः
त्यक्तान्यकार्य्यः स्थित एव कश्चित् ॥ १८ ॥

एव च्रणादिव द्रुतमिवायातं निशावसानं यस्य समुत्सुकः उत्कण्ठितः परवानिव पराधीन इव स्वप्ननिकेतनेभ्यः वासगृहेभ्यो दुःखेन अगात् निर्गतवान् ॥ १७ ॥ ज० म०

अपीतेत्यादि । अथानन्तरं लोकः समुत्सुकः समुत्कण्ठितोऽपि परवान् पराधीन इव कार्य्यगौरवात् स्वप्ननिकेतनेभ्यः शयनगृहेभ्यो दुःखेनागात् निर्गतवान् यतः परस्परेण अन्योन्येन दयितो दयितया दयिता दयितेन अपीततृष्णः अविगतसम्भोगाभिलाषः अतएव च्रणादिव द्रुतमियागतं निशावसानं यस्य स तथासुखेन कालबहुत्वाज्ञानात् ॥ १७ ॥ भ०

अर्द्धोत्थितेत्यादि । शयनात् अर्द्धमुत्थितं यस्येत्यर्द्धोत्थितः आहिताग्न्यादिषु द्रष्टव्यः शयनस्य वा अर्द्धादुत्थित इति योज्यं स चालिङ्गितो दयितया सन्निमग्नः शयने सुप्तः पुनर्यान्निर्गच्छन् रुद्धो विधृतः गमने अनभीप्सुरपि निर्य्याय निमित्तव्याजेन पुनर्निवृत्तः प्रविष्टस्त्यक्तान्यकार्य्यः स्थित एव कश्चित् कामी ॥ १८ ॥ ज० म०

अर्द्धोत्थितेत्यादि । कश्चित् कामुकः शयनादर्द्धोत्थितो दयितया आलिङ्गितः सन् पुनः सन्निमग्नः सुप्तः पुनरपि यान् गन्तुमुद्यतः सन् दयितया रुद्धो वारितः अतएव गमनेऽनभीप्सुरिच्छारहितोऽपि गुर्वादिभयान्निर्याय निर्गत्य व्याजेन रोगादिच्छलेन पुनर्निवृत्तः सन् कार्य्यान्तरं त्यक्त्वा स्थित एव शयनगृह इत्यर्थात् अर्द्धोत्थित इति शयनादर्द्धमुत्थितं यस्येत्यग्न्याहितादित्वात् क्तान्तस्य विभाषया परनिपात इति परः समते नियमानिर्द्देशादविरोध एव यद्वा अर्द्धेनोत्थित इति विग्रहः । शयनस्यार्द्धादुत्थित इति वा अर्द्धोत्थितः सन् आलिङ्गितः सन् सन्निमग्न इति क्रमसमासः ॥ १८ ॥ भ०

तालेन सम्पादितसाम्यशोभं शुभावधानं स्वरबद्धरागम् ।
पदैर्गतार्थं नृपमन्दिरेषु प्रातर्जगुर्मङ्गलवत्तरुण्यः ॥ १९ ॥
दुरुत्तरे पङ्क इवान्धकारे मग्नं जगत्सन्ततरश्मिरज्जुः ।
प्रनष्टमूर्त्तिप्रविभागमुद्यन् प्रत्युज्जहारेव ततो विवस्वान् ॥ २० ॥

तालेनेत्यादि । नृपमन्दिरेषु रावणादिराजवेश्मसु प्रातः प्रभातकाले तरुण्यो मङ्गलवत् मङ्गलोपेतं जगुः गायन्ति स्म तालेन क्रियाकालमानेन सम्पादिता साम्यशोभा यत्र गायनक्रियायां शुभावधानं शोभनमवधानं चित्तैकाग्रता यत्र स्वरबद्धरागं षड्जादिभिः स्वरैर्बद्धो ग्रामरागो यत्र पदैः सुप्तिङन्तैर्गतार्थं परिच्छिन्नार्थं निरर्थकपदरहितमित्यर्थः अनेन स्वरगतं पदगतं लयगतमवधानगतमिति चतुर्विधं गीतमाख्यातम् ॥ १९ ॥ ज० म०

तालेनेत्यादि । नृपमन्दिरेषु राजगृहेषु प्रातः प्रभातसमये तरुण्यो मङ्गलवत् मङ्गलयुक्तं यथा स्यात्तथा जगुर्गायन्ति स्म तालेन चञ्चत्पुटादिना सम्पादिता साम्यस्य लयस्य शोभा यत्र गानक्रियायां तालः कालक्रियामानं लयः साम्यमथास्त्रियामित्यमरः साम्यं नृत्यगीतवाद्यानां समत्वमित्यर्थः शुभं शोभनमवधानं चित्तैकाग्रता यत्र स्वरैः षड्जादिभिर्बद्धोऽनुगतो रागो यत्र पदैर्विभक्त्यन्तैर्गतः परिच्छिन्नोऽर्थो यत्र निरर्थकरहितमित्यर्थः तेन स्वरगतं लयगतं पदगतमवधानगतञ्चेति चतुर्विधं गीतमुक्तं नृपशब्दो राजनि रूढो रावणादिष्वपि प्रवर्त्तते ॥ १९ ॥ म०

दुरुत्तर इत्यादि । अन्धकारे पङ्क इव दुरुत्तरे दुःखेनोत्तीर्य्यत इति मग्नं प्रविष्टं जगदुतः प्रनष्टमूर्त्तिप्रविभागं प्रनष्टः स्थावरजङ्गममूर्त्तीनां प्रविभागो यस्मिन् तद्विवस्वानुद्यन् उद्गच्छन् सन्ततरश्मिरज्जुः प्रवितता रश्मयो मयूखा एव रज्जवो येन सः प्रत्युज्जहारेव उद्धृतवानिव तत इत्यन्धकारात् ॥ २० ॥ ज० म०

दुरुत्तर इत्यादि । विवस्वान् सूर्य्य उद्यन् उद्गच्छन् दुःखेनोत्तरितुं शक्यो पङ्के इवान्धकारे मग्नं जगत् ततोऽन्धकारात् प्रत्यु-

**पीतौष्ठरागाणि हृताञ्जनानि भास्वन्ति लोलैरलकैर्मुखानि।**
**प्रातः कृतार्थानि यथा विरेजुस्तथा न पूर्वेद्युरलङ्कृतानि ॥२१**

**प्रजागराताम्रविलोचनान्ता निरञ्जनालक्तकपत्त्रलेखाः।**
**तुल्या इवासन् परिखेदतन्व्यो वासच्युताः सेवितमन्मथाभिः॥२२**

ज्जहारेव उद्धृतवानिव कीदृशो विवस्वान् सन्तता विस्तृता रश्मयो रज्जव इव येन तादृशः अन्योऽपि मग्नं वस्तु रज्जुभिरुद्धरति जगत् कीदृशं प्रनष्टोऽदृश्यः स्थावरजङ्गममूर्त्तीनां प्रविभागो यत्र तादृशमन्धकारमग्नत्वात् दुरुत्तर इति दुःखेनोत्तीर्य्यते यदिति ईषद्दुःसोरिति कर्म्मणि खल् उद्यन्निति इनः शतरि यिणोऽच्यणाविति यत्वम् ॥२०॥ म०

पीतौष्ठरागाणीत्यादि। मुखानि बधूनामित्यर्थात् यथा प्रातः प्रभाते विरेजुः तथा पूर्वेद्युः पूर्वस्मिन्नहनि अलङ्कृतानि न रेजुः तेषामकृतार्थत्वात् तानि पुनः कृतार्थानि कृतकार्य्याणि यतो दयितैः पीतौष्ठरागाणि ओष्ठचुम्बनात् हृताञ्जनानि चक्षुषोरपि चुम्बनात् अपगतकज्जलानि लोलैराकुलैरलकैः कचग्रहाकर्षणात् भास्वन्ति दीप्तिमन्ति ॥ ॥ ज० म०

पीतौष्ठेत्यादि। मुखानि बधूनामित्यर्थात् प्रातःकाले यथा विरेजुः शुशुभिरे न तथा पूर्वेद्युः पूर्वस्मिन् दिवसे अलङ्कृतानि कृतसाधनान्यपि विरेजुः अकृतार्थत्वेन तादृगुल्लासाभावात् प्रातस्तु कृतकार्य्याण्येव यतो दयितैः पीतौष्ठरागाणि ओष्ठचुम्बनात् पीत ओष्ठरागो यत्र हृताञ्जनानि आनन्दाश्रुपतनाच्चक्षुषोश्चुम्बनाद्वा अपगतकज्जलानि कामशास्त्रे नेत्रचुम्बनमभिहितं तथाहि नयनयुगकपोलं दन्तवासो मुखान्तः स्तनजघनललाटं चुम्बनस्थानमाहुरिति। लोलैः करेण कचाकर्षणात् चञ्चलैः अलकैश्चूर्णकुन्तलैर्भास्वन्ति शोभमानानि ॥ २१ ॥ म०

प्रजागरेत्यादि। भर्तृभिः सहैकत्र यच्छयनं स वासः तस्माच्च्युताः काश्चित् स्त्रियः सेवितमन्मथाभिः अनुष्ठितसुरताभिः तुल्या इवासन् यतः प्रजागराताम्रविलोचनान्ताः दयितागमनप्रतीक्षणाद्यः प्रजागरस्तेन आताम्रनेत्रपर्य्यन्ताः नायात इति गृहीतप्रसाधनतया

आबद्धनेत्राञ्जनपङ्कलेख:
ताम्बूलरागं बहुलं दधान: ।
चकार कान्तोऽप्यधरोऽङ्गनानां
सहोषितानां पतिभिर्लघुत्वम् ॥ २३ ॥

निरञ्जनाश्चालकपत्रलेखा: यदि वा अन्यत्र शयित इति रोदनात् निरञ्जना: चित्तोन्मादादितस्तत: पादविक्षेपात् विगतालक्तका: शयने प्रतिक्षणमुद्वर्त्तनपरिवर्त्तनात् कपोलादिभ्यो निष्पत्रलेखा इति खेदात् तन्व्य: कृशाङ्ग्य: ॥ २२ ॥ ज० म०

प्रजागरेत्यादि । कान्तै: सहैकत्र शयनं वासस्तस्माच्च्युता: काश्चित् स्त्रिय: सेवितमन्मथाभिरनुष्ठितसुरताभिस्तुल्या इव आसन् कीदृश्य: दयितस्यागमनप्रतीक्षणाद्य: प्रजागरस्तेनाताम्रो विलोचनान्तो यासाम् उपभुक्तानामपि सुरतासक्तत्वादेव प्रजागर: निरञ्जना निरलका निष्पत्रलेखाश्च विरहेण प्रसाधनाभावात् किंवा रोदनान्निरञ्जना: चित्तोन्मादादितस्तत: पादविक्षेपेण निरलक्तका: शयने मुहु: परिवर्त्तनान्निष्पत्रलेखा: उपभुक्ता अपि चुम्बनादानन्दाश्रुपाताद्वा निरञ्जना विपरीतसुरतान्निरलक्तका: चुम्बनताडनाभ्यां कपोलयोस्तनयोश्च निष्पत्रावलीका भवन्ति परिखेदात् विरहदु:खात् पक्षे सुरतामर्दात् कृशाङ्ग्य: जागर्त्तेर्घञि अलि वा जाग्रोऽणवीनिति गुणे जागर: सेसक्तात्मरोरिति अप्रत्यये क्लीवत्वप्रसङ्गात् किंवा अप्रत्ययेऽभिधानं नियामकमित्युक्तेः क्लीवाविवक्षा केचित्तु अप्रत्ययान्तस्य क्लीवत्वात् प्रजागराताम्रविलोचनान्ता इति समस्तपदं पठन्ति तन्निरर्थकं जागर्य्या जागरा द्वयोरित्यमरवचनात् ॥ २२ ॥ भ०

आबद्धेत्यादि । कासाञ्चिदङ्गनानां पतिभि: सहोषितानामप्यधर: लघुत्वं दौर्भाग्यं चकार सूचितवानित्यर्थ: यतस्ता ईप्सितसुरताप्राप्ता रुदितास्ततश्च बद्धो लग्नो नेत्राञ्जनपङ्कलेशो यस्य सोऽधरो दयितैरपीतत्वाच्च बहुलं ताम्बूलरागं दधान: कान्तोऽपि लघुत्वं चकार ॥ २३ ॥ ज० म०

चक्षूंषि कान्तान्यपि साञ्जनानि
ताम्बूलरक्तञ्च सरागमोष्ठम् ।
कुर्वन् सवासञ्च सुगन्धि वक्त्रं
चक्रे जनः केवलपक्षपातम् ॥ २४ ॥

क्षतैरसञ्चेतितदन्तलब्धैः
सम्भोगकालेऽवगतैः प्रभाते ।
अशङ्कतान्योन्यकृतं व्यलीकं
वियोगवाह्योऽपि जनोऽतिरागात् ॥ २५ ॥

आवद्धेत्यादि । कासाञ्चिदङ्गनानां पतिभिः सहोषितानां स्वभावतः कान्तोऽपि अधरो लघुत्वं चकार दौर्भाग्यं सूचितवानित्यर्थः अनुपभुक्तत्वात् अधरः कीदृशः रोदनादाबद्धो लग्नो नेत्राञ्जनपङ्कस्य लेशोऽल्पभागो यत्र तादृशः दयितैरपीतत्वाद्बहुलं प्रचुरं ताम्बूलरागं दधानः ॥ २३ ॥ म०

चक्षूंषीत्यादि । कान्तान्यपि शोभनान्यपि चक्षूंषि विकचोत्पलद्युतित्वात् साञ्जनानि कुर्वन् स्त्रीजनः प्रातर्गृह्यमाणप्रसाधनत्वात् सरागं चोष्ठं स्वभावतो विम्बफलाकारत्वात् ताम्बूलरक्तं कुर्वन् स्वभावतश्च सुगन्धि वक्त्रं सवासं सुखं वाससुक्तं कुर्वन् केवलपक्षपातं ममत्वं चक्रे अञ्जनादीनां निरर्थकत्वात् ॥ २४ ॥ ज० म०

चक्षूंषीत्यादि । स्त्रीजनः स्वभावतः कान्तान्यपि नेत्राणि अञ्जनयुक्तानि कुर्वन् स्वभावतः सरागमोष्ठं ताम्बूलरक्तं कुर्वन् स्वभावतः सुगन्धि वक्त्रं सवासं कर्पूरादिमुखवाससुक्तं कुर्वन् केवलं पक्षपातं प्रसादनस्नेहञ्चक्रे अञ्जनादीनां निरर्थकत्वात् ॥ २४ ॥ म०

क्षतैरित्यादि । अस्या मया दत्तम् अस्य च मयेति सम्भोगकाले रागान्धतया असञ्चेतितान्यज्ञातानि दन्तेभ्यो लब्धानि यानि क्षतानि चितसञ्चेतन इति स्वार्थिकण्यन्तस्य रूपं प्रभातकाले अवगतैर्दृष्टैः वियोगवाह्योऽपि युक्तोऽपि कामिजनः अतिरागात् अतिस्नेहात्

नेत्रेषुभिः संयुतपक्ष्मपत्रैः
कर्णान्तकृष्टैरुरुकेशशूलाः।
स्तनोरुचक्रास्ततकर्णपाशाः
स्त्रीयोधमुख्या जयिनो विचेरुः॥ २६ ॥

अन्योन्यक्षतम् अन्योन्येन क्षतं व्यलीकम् अपराधम् अशंकत विकल्पितवान् लङि रूपं किमस्यान्यया हृताशया दत्तमिति योषिदशंकत पुरुषोऽपि किमन्येन धूर्त्तेनास्या इति॥ २५॥ ज० म०

क्षतैरित्यादि। वियोगवाह्योऽपि विरहेणायुक्तोऽपि जनोऽतिरागादतिस्नेहात् क्षतैरन्योन्येन क्षतं व्यलीकमपराधमशङ्कत शङ्कितवान् घ्यां रूपं किमस्यान्यया कान्तया दत्तं क्षतमिति योषिदशङ्कत पुरुषोऽपि किमस्या अन्येन प्रच्छन्न कामुकेन दत्तं क्षतमिति शङ्कते स्म कुत इत्याह कीदृशैः क्षतैः सम्भोगकाले रागान्धतया असञ्चेतितानि अज्ञातानि दन्तेभ्यो लब्धानि यानि तैः चित्कसंज्ञाने प्रभातकालेऽवगतैर्ज्ञातैर्दर्शनात्॥ २५॥ भ०

नेत्रेषुभिरित्यादि। नेत्राणि इषव इव तैः संयुतानि संयुक्तानि पक्ष्माण्येव पत्राणि येषां तैः कर्णान्तकृष्टैः कर्णान्तविश्रान्तैः उपलक्षिताः स्त्रियो योधमुख्या इव उरुकेशशूला उरवो महान्तः केशाः शूला इव येषां स्तनोरुचक्राः स्तनाः उरूणि चक्राणीव येषां ततकर्णपाशा तताः कर्णाः पाशाः इव येषां ते जयिनो लब्धविजया विचेरुः भ्रान्ताः॥ २६॥ ज० म०

नेत्रेषुभिरित्यादि। स्त्रियो योधमुख्या इव योद्धृश्रेष्ठा इव विचेरुर्भ्रमन्ति स्म संयुतानि संयुक्तानि पक्ष्माण्येव पत्राणि पक्षा यत्र तैः कर्णान्तकृष्टैः कटाक्षदशायां कर्णान्तप्रेरितैर्नेत्रैरिषुभिरिव उपलक्षिता उरवो महान्तः केशाः शूलानीव येषां श्यामत्वात् दीर्घत्वात् कामपीड़ाकारित्वाच्च स्तना महाचक्राणीव येषां विशालपारिमाण्डल्यात् तताः कर्णाः पाशा इव येषां कामुकमानबन्धनयोग्यत्वात् अतएव जयिनः पुञ्जयनशीलाः॥ २६॥ भ०

पयोधरांश्चन्दनपङ्कदिग्धान्
वासांसि चाश्लिष्टस्रजानि दृष्ट्वा ।
स्त्रीणां सपत्न्यो जहृषुः प्रभाते
मन्दायमानानुशयैर्मनोभिः ॥ २७ ॥
स्मरातुरे चेतसि लब्धजन्मा
रराज लोलोऽपि गुणापहार्य्यः ।
कुतूहलान्नेत्रगवाक्षसंस्थः
पश्यन्निवान्योन्यमुखानि रागः ॥ २८ ॥

पयोधरानित्यादि । चन्दनपङ्कदिग्धान् आम्लुतचन्दनत्वात् वस्त्राणि च अश्लिष्टस्रजानि अनपनीतशुक्लभावानि स्त्रीणां दृष्ट्वा प्रभाते तत्सपत्न्यो मनोभिः न वाह्यं जहृषुः हृष्टाः अप्राप्तसुरतत्वान्मन्दायमानानुशयैः आभिः सह शयिता इति तासु ये अनुशयाः अत्यान्तयो जाताः ते मन्दायमानाः शनैःशनैस्तनूभवन्तो येषु मनःसु तैरित्यर्थः ॥२७॥ ज० म०

पयोधरानित्यादि । स्त्रीणां चन्दनपङ्कैर्दिग्धान् लिप्तान् पयोधरान् स्तनान् दृष्ट्वा अश्लिष्टस्रजानि अनपनीतशुक्लशुक्लभावानि वासांसि च वस्त्राणि च दृष्ट्वा प्रभाते तासां सपत्न्यो मनोभिः करणभूतैः तैरुपलक्षिता वा जहृषुः हृष्टाः कीदृशैः मन्दायमानोऽनुशयः क्रोधो यत्र पूर्वं भर्त्रा सह सपत्नीनामेकत्रवासात् क्रोध उत्पन्नः पश्चात्तासां सम्भोगाभावज्ञानात् क्रोधस्य मन्दायमानत्वं हर्षश्च जातः सम्भोगे हि मर्दनात् चन्दनच्युतिर्वस्त्रमालिन्यञ्च स्यात् ॥ २७ ॥ म०

स्मरातुर इत्यादि । दम्पत्योः प्रातरन्योन्यस्य मुखं पश्यतोः चक्षुषो रागो वर्ण्यते स्मरातुरे कामातुरे चेतसि लब्धजन्मा लब्धोदयः रागो रक्तभावः नेत्रगवाक्षसंस्थः नेत्रयोर्गवाक्षयोरिव स्थितः कुतूहलात् कौतुकात् अन्योन्यस्य मुखानि पश्यन्निव कीदृशं कामिन्या मुखं कामुकस्य मुखं वेति गुणापहार्य्यः तत्प्रतिपक्षेण शुक्लगुणेन अपनेयः अतएव लोलोऽपि अचिरस्थाय्यपि रराज ॥ २८ ॥ ज० म०

गतेऽतिभूमिं प्रणये प्रयुक्तान्
अबुद्धिपूर्वं परिलुप्तसंज्ञः ।
आत्मानुभूतानपि नोपचारान्
स्मरातुरः संस्मरति स्म लोकः ॥ २९ ॥

वस्त्रैरनत्युल्बणरम्यवर्णैः
विलेपनैः सौरभलक्षणीयैः ।
आस्थैच्च लोकः परितोषकान्तैः
असूचयल्लब्धपदं रहस्यम् ॥ ३० ॥

स्मरातुर इत्यादि । दम्पत्योः प्रातरन्योन्यमुखं पश्यतोर्नैशरक्तिमा लक्ष्यते रागो रक्तभावो नेत्रयोर्गवाक्षयोरिव स्थितः सन् कुतूहला-दन्योन्यमुखानि पश्यन्निव कीदृशं कामिन्याः कामुकस्य वा मुखमिति विलोकयन्निव रराज शोभते स्म कीदृशः स्मरातुरे चेतसि लब्धजन्मा लब्धोदयः गुणेन तत्प्रतिपक्षेण शुक्लरूपेणापहार्य्योऽपनेयः अतएव लोलस्वभावः अचिरस्थाय्यपि रराजेत्युत्कर्षः किंवा रागोऽनुरागः गुणापहार्य्यो मुखसौन्दर्य्येण वशीकृतः ॥ २८ ॥ भ०

गत इत्यादि । प्रणये विस्रम्भे अतिभूमिं गते प्रकृष्टावस्थां प्राप्ते सति ये अबुद्धिपूर्वम् अनिरूप्य स्वयं प्रयुक्ताः उपचाराः नख-दन्तक्षतादयः तानात्मानुभूतानपि प्रातर्न स्मरति स्म कामिलोकः इद-मिदं मया प्रयुक्तमिति यतः सुरतावस्थायां स्मरातुरतया विलुप्तसंज्ञो मूढ इति ॥ २९ ॥ ज० म०

गते इत्यादि । प्रणये प्रेम्णि अतिभूमिं प्रकृष्टावस्थां गते सति अबुद्धिपूर्वमविचार्य्य सुरतकाले स्वयं प्रयुक्तान् कृतानपि उपचारान् नखदन्तक्षतादीनात्मानुभूतानपि तदानीं स्मरातुरत्वेन परिलुप्तसंज्ञत्वात् लोकः प्रभाते न स्मरति स्म प्रणयः प्रेम्णि विस्रम्भे याच्ञाप्रसरयो-रपीति रुद्रः ॥ २९ ॥ भ०

वस्त्रैरित्यादि । वस्त्रैः विलेपनैः सौरभलक्षणीयैः सुरभितया

प्रातस्तरां चन्दनलिप्तगात्राः
प्रच्छाद्य हस्तैरधरान् वदन्तः ।
शय्यानिमेषाः सुतरां युवानः
प्रकाशयन्ति स्म निगूहनीयम् ॥ २१ ॥

परिच्छेद्यैः आस्यैश्च व्यपगताधररागैः परितोषकान्तैर्लिङ्गभूतैः रहसि भवं सुरतं लब्धपदं प्राप्तचिह्नं लोकः प्रकाशयति स्म ॥ २० ॥ ज० म०

वस्त्रैरित्यादि । लोको वस्त्रादिचिह्नै रहस्यं रहसि भवं सुरतमसूचयत् प्रकाशितवान् कीदृशं लब्धपदं प्राप्तचिह्नं कामिषु प्राप्तावसरं वा वस्त्रैः कीदृशैरनत्युल्वणरम्यवर्णैः परिम्लदितत्वादनुद्भटरमणीयवर्णैः अनतिविशदरम्यवर्णैर्वा अल्पश्लिष्टैरित्यर्थः उल्वणं विशदं स्फुटमिति कोषः । विलेपनैः कीदृशैः सौरभलक्षणीयैः सौरभेण शरीरगतसुरभित्वमात्रेण लक्षणीयैरनुमेयैः आस्यैः कीदृशैः परितोषकान्तैरधररागपत्रावल्यादिलोपेऽपि परितोषेण कृतार्थताजनितानन्देन कमनीयैः ॥ २० ॥ म०

प्रातस्तरामित्यादि । गुरुजनो नखदशनक्षतं मा द्राक्षीदिति युवानः प्रातस्तरां प्रत्यूषसि चन्दनलिप्तगात्रा हस्तैरधरान् प्रच्छाद्य वदन्तोऽपि शय्यान्निमेषा अनिमिषितनेत्रा गूहनीयं सुतरां प्रकाशयन्ति स्म नूनमेते सत्कृता येन एवमाचरन्तीति ॥ २१ ॥ ज० म०

प्रातस्तरामित्यादि । अहति प्रातः प्रातःकाले नखक्षतादिसङ्गोपनार्थं चन्दनेन लिप्तगात्रा अपि दन्तक्षतसङ्गोपनार्थं गुरुसमीपे हस्तैरधरं प्रच्छाद्य वदन्तोऽपि जागरणजनितनिद्राव्यपगमार्थं शय्यान्निमेषान् निमेषं वारयन्तोऽपि युवानः निगूहनीयं सङ्गोपनीयं सुरतं सुतरामतिशयेन प्रकाशयन्ति स्म सङ्गोपनेनैव नखक्षताद्यनुमानात् यद्वा शय्यान्निमेषाः सन्तः प्रकाशयन्ति निमेषाणां भावत्यागदर्शनात् सौक्ष्म्यमत्र गुणः तत्सौक्ष्म्यमुच्यते यत्र सूक्ष्मार्थस्यापि दर्शनम् । अत्र सुरतस्य सङ्गुप्ततया सूक्ष्मत्वम् ॥ २१ ॥ म०

जितेऽपि लोके मधुरेण वामे !
किमुद्यतं भ्रूधनुरप्रसह्यम् ।
हन्तुं क्षमो वा वद लोचनेषु:
दिग्धो विषेणेव किमञ्जनेन ॥ २२ ॥
दन्तच्छदे प्रज्वलिताग्निकल्पे
ताम्बूलरागस्तृणभारतुल्यः ।
न्यस्तः किमित्यूचुरुपेतभावाः
गोष्ठीषु नारीस्तरुणीर्युवानः ॥ २३ ॥
युग्मकम् ।

जित इत्यादि । हे वामे ! प्रतिकूलवर्त्तिनि मधुरेणाविकृतेन साम्ना लोके अस्मद्विधे जितेऽपि वशीकृतेऽपि भ्रूधनुरप्रसह्यं प्रसोढुमशक्यम् उद्यतम् उत्क्षिप्तम् अथवा विलोचनेषुर्नेत्रशरः स्वत एव हन्तुं क्षमः ततः किमञ्जनेनेव विषेण दिग्धो विप्रलिप्त इति वद कथय ॥ २२ ॥ ज० म०

जित इत्यादि । युवान इत्यूचुरित्यग्रिमश्लोकेनान्वयः हे वामे ! प्रतिकूलवर्त्तिनि लोके चाऽस्मद्विधे मधुरेण माधुर्य्यगुणेन स्वभावसिद्धोपायेन प्रियवचनेन वा जितेऽपि पराभूतेऽपि वशीकृतेऽपि सोढुमशक्यं भ्रूरूपधनुः किमर्थमुद्यतमुत्क्षिप्तम् अयञ्च लोचनरूपशरः स्वयमेवास्मान् हन्तुं क्षमः समर्थः तत्किं विषेणेवाञ्जनेन वा दिग्धो लिप्तः तत्त्वं वद वतेति पाठे खेदे स्वभावैरेव कार्य्यस्य सिद्धौ किमधिककल्पनया भाविकत्वमत्र गुणः अहं त्वदायत्त एवेत्यभिप्रायप्रकाशनात् साभिप्रायोक्तिविन्यासो भाविकत्वं प्रचक्षते इति ॥ २२ ॥ भ०

दन्तच्छद इत्यादि । प्रज्वलिताग्निकल्पे स्वभावलोहितत्वात् दन्तच्छदे ओष्ठे ताम्बूलरागः किमिति न्यस्तः तृणभारतुल्यः निष्प्रयोजनत्वात् इत्येवमूचुर्युवानः प्रातरित्यर्थात् उपेतभावाः जातानुरागाः गोष्ठीषु स्थिता नारीस्तरुणीरिति ॥ २३ ॥ ज० म०

सुखावगाहानि युतानि लक्ष्म्या
शुचीनि सन्तापहराण्युरूणि ।
प्रबुद्धनारीमुखपङ्कजानि प्रातः
सरांसीव गृहाणि रेजुः ॥ २४ ॥

संमृष्टसिक्तार्चितचारुपुष्पैरामोदवद्‌द्रव्यसुगन्धभागैः ।
लक्ष्मीर्विजिग्ये भवनैः सभृङ्गैः सेव्यस्य देवैरपि नन्दनस्य ॥२५

दन्तेत्यादि । दन्तच्छदे ओष्ठे ताम्बूलरागः किमर्थं न्यस्तः कीदृशे प्रज्वलितवह्निसदृशे स्वभावतो लोहितत्वादस्याङ्कत्वाच्च कीदृशः तृणभारसमो निष्प्रयोजनत्वादत्युद्दीपकत्वाच्च वह्नौ तृणप्रक्षेपो भृशमुद्दीपको भवति इत्येवं युवानस्तरुणा उपेतभावा उपगतरागाः सन्तस्तरुणीः नारीः गोष्ठीषु स्त्रीसभासु स्थिता ऊचुः ॥ २२ ॥ म०

सुखावगाहानीत्यादि । प्रातः प्रभाते गृहाणि सरांसीव रेजुः सुखावगाहानि निरुपद्रवत्वात् सुखेनावगाह्यन्ते युतानि लक्ष्म्या देवताकृपया शुचीनि पवित्राणि सन्तापहराणि घर्मादिक्लेशापहारीणि उरूणि महान्ति प्रबुद्धानि विनिद्राणि नारीमुखान्येव पङ्कजानि यत्रेति ॥ २४ ॥ ज० म०

सुखेत्यादि । प्रातः प्रभातकाले गृहाणि सरांसीव रेजुः शोभन्ते स्म कीदृशानि सुखहेतुरवगाहो यत्र तानि लक्ष्म्या सम्पत्त्या शोभया वा युतानि शुचीनि पवित्राणि सन्तापहराणि घर्मादिक्लेशापहारीणि उरूणि महान्ति प्रबुद्धानि विनिद्राणि नारीमुखान्येव पद्मे तानीव पङ्कजानि येषु ॥ २४ ॥ म०

संमृष्टेत्यादि । देवैः सेव्यस्यापि नन्दनस्य लक्ष्मीर्भवनैः प्रातर्विजिग्ये विजिता आदौ संमृष्टरजांसि अपनीतरजांसि पश्चात्सिक्तानि पूर्वापरकालसमासः अर्चितानि पूजितानि प्रशस्तानि चारूणि शोभनानि पुष्पाणि येषु भवनेषु संमृष्टसिक्तानि च तानि अर्चितचारुपुष्पाणि चेति विशेषणसमासः आमोदवन्ति यानि द्रव्याणि चन्दना-

अक्ष्णोः पतन्नीलसरोजलोभात्
भृङ्गः करेणाल्पधिया निरस्तः।
ददंश ताम्राम्बुरुहाभिसन्धिः
तृष्णातुरः पाणितलेऽपि धृष्णुः॥ २६॥

दीनि तैः सुगन्धभाग एकदेशो येषां तैः गन्धस्येतदेकान्तग्रहणादित्वं न भवति षट्पद्रामोदत्वात्॥ २५॥ ज० म०

संसृष्टेत्यादि। देवैरिन्द्रादिभिरपि सेव्यस्य नन्दनवनस्य लक्ष्मीः सम्पत्तिः शोभा वा भवनैर्गृहैः प्रातर्विजिग्ये जिता कर्मणि टी कीदृशैः पूर्वं संसृष्टानि अपनीतरजांसि पश्चात् सिक्तानि संसृष्टसिक्तानि पूर्वकालस्यापरकालेनेति कर्मधारय इति परः सगते एकार्थतायेव अर्चितानि पूजितानि चारूणि शोभमानानि पुष्पाणि येषु तानि पश्चात् संसृष्टसिक्तानि अर्चितचारुपुष्पाणि चेति पुनः कर्मधारयः आमोदवद्भिर्द्रव्यैश्चन्दनादिभिः सुगन्धा भागा एकदेशा येषां सुरभिपूतेरित्यादौ गन्धशब्दो गुणवाचीति टीकाकृद्वचनादभिधानाद्वा इप्रत्ययाभावः, भृङ्गैरामोदानुसारित्वाद्भ्रमरैः सह वर्त्तमानानि नन्दनमप्येवं भवति। उदात्तता गुणोऽसंसृष्टसिक्तत्यादिभिर्विशेषणैर्योगात्, उक्तैर्विशेषणैर्योगो यस्य साम्यादुदात्तता॥ २५॥ भ०

अक्ष्णोरित्यादि। नीलसरोजलोभात् नीलकमलमेतदित्यक्ष्णोः पतन्निलीयमानो भृङ्गः अल्पधिया अल्पबुद्ध्या कयाचित् करेण निरस्तः क्षिप्तः सन् ताम्राम्बुरुहाभिसन्धिः रक्तपद्ममेतदित्यभिसन्धिरभिप्रायो यस्य भृङ्गस्य स धृष्णुः प्रगल्भः पाणितलेऽपि ददंश दष्टवान् तामित्यर्थात्॥ २६॥ ज० म०

अक्ष्णोरित्यादि। नीलसरोजमेतदिति मत्वा तल्लोभात् चक्षुषोः पतन् भृङ्गः कयाचिदल्पधिया मुग्धया करेण निरस्तः सन् पाणितलेऽपि तां ददंश दष्टवान् यतः करं दृष्ट्वा रक्तपद्ममित्यभिसन्धिरभिप्रायो यस्य कीदृशः तृष्णातुरः तृष्णाव्याप्तः धृष्णुः प्रगल्भः। सौकुमार्यमत्र गुणः

विलोलतां चक्षुषि हस्तवेपथुं
भ्रुवोर्विभङ्गं स्तनयुग्मवल्गितम्।
विभूषणानां क्वणितञ्च षट्पदः
गुरुर्यथा नृत्यविधौ समादधे ॥ ३७ ॥

अथानुकूलान् कुलधर्मसम्पदः
विधाय वेशान् सुदिवः पुरीजनः।
प्रबोधकाले शतमन्युविद्विषः
प्रचक्रमे राजनिकेतनं प्रति। ३८ ॥

अक्ष्णोः करस्य चौत्पलत्वेन निरूपणात्, अनिष्ठुरत्वं यत् प्राङ्ः सौकु-मार्यं तदुच्यते ॥ ३६ ॥ भ०

विलोलतामित्यादि। यथा गुरुर्नृत्याचार्यो नृत्यकर्मणि कस्या-श्चिच्चक्षुषि विलोलतां चलतां हस्तवेपथुं हस्तकम्पं भ्रुवोर्विभङ्गं नतो-न्नतिं स्तनयुग्मवल्गितं प्रचलितं भूषणानां क्वणितं शिञ्जितं जनयति तद्दृष्ट्वा षट्पदोऽपि तत्समादधे विहितवान् । ३७ ॥ ज० म०

विलोलतामित्यादि। यथा गुरुर्नृत्याचार्यो नृत्यकर्मणि शिक्षार्थं कस्याश्चिच्चक्षुषि विलोलतां चाञ्चल्यं हस्तयोर्वेपथुं कम्पं भ्रुवोर्विभङ्गमन्य-थाकरणं स्तनयुगलस्य वल्गितं चलनं विभूषणानामलङ्काराणां क्वणितं शिञ्जितं समादधे जनयति तथा षट्पदोऽपि समादधे कृतवान् भ्रमर-बाधया काचिन्नृत्यमिव चकारेत्यर्थः प्रौढ़िरत्र गुणश्चक्षुर्विलोलताप्रभृति-भिर्नृत्यस्य निर्वाहात् विवक्षितार्थनिर्वाहः काव्ये प्रौढिरिति स्मृता ॥३७॥ भ०

अथानुकूलानित्यादि। अथानन्तरं पुरीजनो लङ्कानिवासिजनः प्रतिदिनमवाप्तकल्याणत्वात् सुदिवः सुप्रातेत्यादिना समासान्तनिपातनं यथास्वं कुलधर्मस्य पुरस्य या सम्पद्विभूतिः तस्या अनुकूलान् वेशान्नेप-थ्यानि विधाय कृत्वा शतमन्युविद्विषो रावणस्य प्रबोधकाले राजनिकेतनं प्रत्यभिलक्ष्य प्रचक्रमे गन्तुं प्रवृत्तः प्रोपाभ्यां समर्थाभ्यामिति तङ् ॥ ३८ ॥ ज० म०

शैलेन्द्रशृङ्गेभ्य इव प्रवृत्ताः
वेगाज्जलौघाः पुरमन्दिरेभ्यः ।
आपूर्य्य रथ्याः सरितो जनौघाः
राजाङ्गनाम्भोधिमपूरयन्त ॥ ३९ ॥

प्रबोधकालात् त्रिदशेन्द्रशत्रोः प्रागूर्द्ध्वघोषं परिशुश्रुमाणाः ।
हीना महान्तश्च समत्वमीयुर्द्वास्थैरवज्ञापरुषाश्चिदृष्टाः ॥ ४० ॥

अथेत्यादि । अनन्तरं पुरीजनो लङ्कानिवासिजनो वेशान् विधाय कृत्वा शतमन्युविद्विष इन्द्रशत्रो रावणस्य प्रबोधकाले निद्राभङ्गसमये राजगृहं प्रति लक्ष्योकृत्य प्रचक्रमे गन्तुं प्रवृत्तः प्रोपादारम्भे इति मं कीदृशान् कुलधर्मस्य कुलाचारस्य या सम्पद्विभूतिस्तस्या अनुकूलान् सदृशान् कुलोचितानित्यर्थः कीदृशः सुदिवः प्रतिदिनं प्राप्तकल्याणत्वात् शोभनं दिवा यस्य दिवाशब्दः सप्तम्यन्ताव्यय इति ये वदन्ति तन्मते शोभनं दिवा दिवसे कर्म यस्येति विग्रहः राजादित्वात् सुदिवो निपातित इति कालापाः खादिभ्यो दिवादेरिति सूत्रेण डप्रत्ययमाह क्रमदीश्वरः स्वमते स्वार्थः ष्णः तस्यात्वविवक्षया वृद्धेरभावः ॥ ३८ ॥ भ०

शैलेन्द्रशृङ्गेभ्य इत्यादि । यथा जलानां पूराः शैलेन्द्रशृङ्गात् प्रवर्त्तन्ते तद्वत्पुरमन्दिरेभ्यः प्रवृत्ताः जनौघा रथ्याः सरित इवापूर्य्य राजाङ्गनमम्भोधिमिवापूरयन्त पूरितवन्तः ॥ ३९ ॥ ज० म०

शैलेन्द्रेत्यादि । यथा जलानां वारीणामोघाः पूराः प्रवाहाः शैलेन्द्रशृङ्गेभ्यः प्रवृत्ताः सरितो नदीरापूर्य्य वेगात् सागरं पूरयन्ति तथा जनौघाः लोकसमूहाः पुरमन्दिरेभ्यो लङ्कागृहेभ्यः प्रवृत्ता रथ्याः प्रतोलीरापूर्य्य वेगात् राजाङ्गनं राज्ञो रावणस्य चत्वरमपूरयन्त तवर्गपञ्चमोपान्तमङ्गनमिति विश्वः । पृषोदरादित्वात् णत्वमिति पाणिनीयाः स्वमते मनीषादित्वाद्विभाषया णत्वम् ॥ ३९ ॥ भ०

प्रबोधकालादित्यादि । त्रिदशेन्द्रशत्रो रावणस्य प्रबोधकालात् प्राक् पूर्वम् ऊर्द्ध्वघोषं परिशुश्रुमाणाः राजाङ्गने ऊर्द्ध्वकृता एव प्रबो-

गुरूरुचञ्चत्करकर्णजिह्वैरवज्ञयाग्राङ्गुलिसंगृहीतैः ।
रक्षांस्यनायासहृतैरुपास्थुः कपोललीनालिकुलैर्गजेन्द्रैः ॥४१॥

अकाले शोषं नीयमाना इति अन्तर्भावितण्यर्थो द्रष्टव्यः एवञ्च कृत्वा कर्मण्यात्मनेपदम् अन्ये परिशोष्यमाणा इति णिचं पठन्ति जह्नुसुतेति शसुल् हीनाः महान्तश्च सेवकाः समत्वं तुल्यत्वमीयुः द्वास्थैर्दौवारिकैः द्वारि तिष्ठन्तीति सुपिस्थ इति कः खरवसानयोर्विसर्जनीय इति विसर्जनीयस्य सः अवज्ञया अनादरेण परुषमस्निग्धं यदृच्छि तेनाज्ञा दृष्टाः ॥ ४० ॥ ज० म०

प्रबोधेत्यादि । त्रिदशेन्द्रशत्रो रावणस्य प्रबोधकालात् निद्राभङ्ग-समयात् प्राक् पूर्वं हीना महान्तश्च जनाः समत्वं तुल्यताम् ईयुः प्राप्ताः दौवारिकैः सर्वेषां प्रवेशनिषेधात् कीदृशा जह्नुशोषं परिशुष्य-माणाः जह्नुशोषमिति यदुक्तं तद्विशेषेण मुखादिशोषणं सूचनार्थम् जह्नात् सुषिपूरेः स्वार्थे क्ता णमिति परः किमयं करिष्यतीति त्रासात् शुष्कास्यकण्ठतालुका आसन्नित्यर्थः द्वास्थैः दौवारिकैरवज्ञया अना-दरेण यत्परुषं रूक्षमपि चक्षुस्तेन दृष्टा द्वारि तिष्ठतीति द्वास्थः हन-जनादिति डः मनीषादित्वाद्विभाषया निवर्णलोपः कादियुक्तशषसेलुक्वेति क्रमदीश्वरसूत्रम् ॥ ४० ॥ भ०

गुरूरुचञ्चदित्यादि । गुरवोऽलघवः उरवो महान्तः चञ्चन्तश्चलन्तः कराः कर्णाः जिह्वाश्च येषां गजेन्द्राणां तैरवज्ञया अग्राङ्गुलिसङ्गृहीतैः पदाङ्गुष्ठाग्रेण यन्तृस्थाने परिगृहीतैः अङ्गुलेरग्रमिति राजदन्तादि-त्वात् पूर्वनिपातः अनायासहृतैः शनैः शनैः प्रचोदितैः मत्तत्वात् कपो-ललीनालिकुलैः रक्षांसि उपास्थुः सेवामकार्षुः ॥ ४१ ॥ ज० म०

गुर्वित्यादि । कतिचिद्रक्षांसि राक्षसा गजेन्द्रैरुपास्थुः मत्त-हस्तिनो गृहीत्वा रावणं सेवितवन्तः कीदृशैर्गुरवोऽलघवः उरवो महा-परिमाणाः चञ्चन्तः चञ्चलाः कराः शुण्डाः कर्णाः जिह्वाश्च येषां तैः अवज्ञया अनादरेण अङ्गुल्यग्रेण संगृहीतैः धृतैः अङ्गुलेरग्रम् अग्रा-ङ्गुलिरिति राजदन्तादिरिति परः स्मरते एकदेशेऽपि समुदायोपचा-

निकृत्तमत्तद्विपकुम्भमांसैः संपृक्तमुक्तैर्हरयोऽग्रपादैः ।
आनिन्यिरे श्रेणीकृतास्तथान्यैः परस्परं बालधिसन्निबद्धाः ४२
उपेक्षिता देवगणैस्त्रसद्भिर्निशाचरैर्वीतभयैर्निकृत्ताः ।
तस्मिन्नदृश्यन्त सुरद्रुमाणां सजालपुष्पस्तवकाः प्रकीर्णाः ॥४३

रात् कर्मधारयः अग्रे अग्रतः स्थाने अङ्गुल्या पादाङ्गुष्ठेन संदृष्टैरिति केचित् अनायासेन हृतैः शनैः शनैः प्रेरितैर्मत्तत्वात् कपोले लीनानि भ्रमरकुलानि येषां तैः ॥ ४१ ॥ भ०

निकृत्तेत्यादि । अन्यैः सेवार्थं हरयः सिंहाः आनिन्यिरे आनीताः निकृत्तानि मत्तद्विपकुम्भमांसानि यैरग्रपादैः अतएव संपृक्तमुक्तैः लग्नकुम्भमुक्ताफलैः उपलक्षिताः श्रेणीकृता अश्रेणयः श्रेणयः कृताः श्रेण्यादय इति सः परस्परं बालधिसंनिबद्धाः अन्योन्यस्य पुच्छेन संयताः ॥ ४२ ॥ ज० म०

निकृत्तेत्यादि । अन्यै राक्षसैर्हरयः सिंहा आनिन्यिरे आनीताः तथा पूर्वापेक्षया अग्रपादैः पादाग्रैरुपलक्षिताः कीदृशैः निकृत्तानि छिन्नानि मत्तद्विपानां कुम्भमांसानि यैः संपृक्ताः संयुक्ताः गजकुम्भस्थमुक्ता यत्र कीदृशाः श्रेणीकृता अश्रेणयः श्रेणयः कृता अभिधानं नियामकमित्युक्तेः च्व्यर्थे श्रेण्यादेः कृतादिना समासः इति बोध्यं परस्परमन्योन्यस्य पुच्छेन बद्धाः षष्ठ्या असादेशो लोकोपचारादिति विद्यासागरः क्रियाविशेषणमिति केचित् समस्ते मनीषादित्वात् ॥४२॥ भ०

उपेक्षिता इत्यादि । सुरद्रुमाणां पारिजातानां सजालाः कलिकासहिताः पुष्पस्तवकाः वीतभयैर्निशाचरैर्निकृत्ताः छिन्नाः वीतदयैरिति पाठान्तरं तत्र किमेतैः स्थितैरिति निर्दयैः सजाला एव छिन्नाः छिद्यमानाश्च देवगणैस्त्रसद्भिरुपेक्षिताः वाञ्छायेत्यादिना विकल्पेन ध्यन् तस्मिन्राजाङ्गने प्रकीर्णा अदृश्यन्त सेवकजनेन ॥ ४३ ॥ ज० म०

उपेक्षिता इत्यादि । तस्मिन् राजाङ्गने सुरद्रुमाणां पारिजातादीनां प्रकीर्णा विक्षिप्ताः जालेन कलिकया सहिताः पुष्पस्तवका अदृश्यन्त दृष्टाः सेवकैरित्यर्थात् कीदृशाः तत्रत्रिस्त्रासं गच्छद्भिर्देवगणैरुपेक्षिताः

निराकरिष्णुर्द्विजकुञ्जराणां
तृणीकृताशेषगुणोऽतिमोहात् ।
पापाशयानभ्युदयार्थमार्चीत्
प्राग्ब्रह्मरक्षःप्रवरान् दशास्यः ॥ ४४ ॥

मायाविभिस्त्रासकरैर्जनानामात्तैरुपादानपरैरुपेतः ।
सतां विघातैकरसैरविक्षत् सदः परिक्षोभितभूमिभागम् ४५

कमलमित्यादिना लशेर्विकल्पेन श्यन् विहित इति पक्षे शप् वीतभयैर्विगतत्रासैर्निशाचरैर्निरुक्ताः छिन्नाः वीतदयैरिति पाठे किमेतैः स्थितैरिति निर्दयैः जालं गवाक्षे आनाये कोरके दम्भभेदयोरितिविश्वः ॥४३॥ म०

निराकरिष्णुरित्यादि दशास्यो विबुधः सन् अतिमोहादत्यन्ताज्ञानात् निराकरिष्णुर्निराकरणशीलः द्विजवरानित्यर्थात् द्विजकुञ्जराणां प्रशस्तद्विजानाम् अभ्युदयहेतुतां सम्बन्धिनोऽशेषाः गुणाः तृणीकृता येन स तृणीकृताशेषगुणः प्राक् पूर्वं सभाप्रवेशात् पापाशयान् पापचित्तवृत्तीन् ब्रह्मरक्षःप्रवरान् अभ्युदयार्थमार्चीत् ॥ ४४ ॥ ज० म०

निराकरिष्णुरित्यादि । दशास्यो रावणः प्रबुद्धः सन् सभाप्रवेशात्प्राक् पूर्वं पापाशयान् पापचित्तवृत्तीन् ब्रह्मराक्षसश्रेष्ठान् ज्ञातीनभ्युदयार्थमार्चीत् पूजितवान् कीदृशः अतिमोहात् अत्यज्ञानात् द्विजकुञ्जराणां विप्रश्रेष्ठानां निराकरिष्णुः द्विजश्रेष्ठान्निराकृत्य ब्रह्मराक्षसान् पूजितवानिति सोढ़ः ढघेकृतीत्यादिना उदन्तक्रयोगे षष्ठी न भवतीति सम्बन्धे षष्ठी यद्वा द्विजकुञ्जराणां तृणीकृता अवधीरिताः सकला गुणा येनेति सम्बन्धः अतएव निराकरिष्णुस्तानित्यर्थात् ॥ ४४ ॥ भ०

मायाविभिरित्यादि । आप्तैरव्यभिचारिभिर्मायाविभिर्वञ्चकैः परेषां त्रासकरैः जनानामतिरौद्रत्वात् उपादानपरैः सतां सन्मार्गस्थितानां विघातैकरसैर्विनाशैकस्वभावैः उपेतो दशास्यः सदः सभामविक्षत् प्रविष्टः शल इगुपधात्क्सः ।। कीदृशं राक्षसैश्चरणभारेण परिक्षोभितभूमिभागम् ॥ ४५ ॥ ज० म०

विधृतनिशितशस्त्रैस्तद्युतं यातुधानै-
रुरुजठरमुखीभिः संकुलं राक्षसीभिः ।
स्वगणिशतविकीर्णं वागुरावन्मृगीभि-
र्वनमिव सभयाभिर्देववन्दीभिरासीत् ॥ ४६ ॥
जलद इव तडित्वान् प्राज्यरत्नप्रभाभिः
प्रतिककुभमुदस्यन्निस्वनं धीरमन्द्रम् ।

मायाविभिरित्यादि । दशास्यः सदः सभामविक्षत् प्रविष्टवान् इशघोऽनिमिति सक् कीदृशः आप्तैरात्मीयैराक्षसैरुपेतः उपगतः सन् कीदृशैर्मायाविभिर्वञ्चकैर्जनानां त्रासकरैः अतिरौद्रत्वात् उपादानपरैः आश्चर्यसम्पादनपरैः सतां साधूनां विघातमात्रेच्छुभिः सदः कीदृशं रावणचरणभरेण परिक्षोभितः सञ्चलितो भूमिभागो यत्र ॥४५॥ भ०

विधृतेत्यादि । तत्सदो यातुधानैः विधृतनिशितशस्त्रैः गृहीतशस्त्रैर्युतं युक्तमासीत् तथा राक्षसीभिः उरुजठरमुखीभिः सङ्कुलं व्याप्तं यथा वनं वागुरावत् सवागुरं स्वगणिशतकीर्णम् आखेटकशतच्छन्नं मृगीभिः सभयाभिः स्वगणिकेभ्यो जातभयाभिः व्याप्तमासीत् स्वगणा विद्यन्ते येषामिति स्वगणिकाः अत इति ठक् ॥ ४६ ॥ ज० म०

विधृतेत्यादि । तत्सदो वनमिवासीत् कीदृशं सदः विधृततीक्ष्णशस्त्रैर्यातुधानैराक्षसैर्युक्तं तथा राक्षसीभिः सङ्कुलं व्याप्तं कीदृशीभिः उरु महत् जठरमुदरं मुखञ्च यासां ताभिः तदा देववन्दीभिर्हठात् हृतदेवस्त्रीभिः संकुलमिति सम्बन्धः स्वगणिशतविकीर्णमाखेटकशतच्छन्नं वागुरा वागुरा मृगबन्धनी रज्जुस्तद्युक्तं मृगीभिः संकुलं सभयाभिर्भययुक्ताभिरिति मृगीणां देववन्दीनाञ्च विशेषणं तत्सदोऽपि कुक्कुरधारिभिर्युक्तं तथा रज्जुवद्धमृगीभिर्युक्तं वनमपि राक्षसैः राक्षसीभिश्च युक्तं शुनां गणो विद्यते येषां ते स्वगणिन आखेटिकाः ॥ ४६ ॥ भ०

जलद इत्यादि । प्राज्यानां प्रभूतानां रत्नानां मणीनां प्रभाभिः तडित्वानिव जलदः प्रोन्नतात्मा सर्वेषामुपरि स्थितत्वात् प्रतिककुभं

शिखरमिव सुमेरोरासनं हैममुच्चैः
विविधमणिविचित्रं प्रोन्नतं सोऽध्यतिष्ठत् ॥ ४७ ॥

इति भट्टिकाव्ये एकादशः सर्गः ।

———०———

दिशि दिशि धीरमन्द्रं मन्द्रगम्भीरं निस्वनम् उदस्यन्निक्षिपन् सुमेरोः शिखरमिव हैममासनमुच्चैरुच्चं विविधमणिविचित्रं नानारूपैर्मणिभिर्विचित्रं नानावर्णकमध्यतिष्ठत् समारोहति स्म ॥ ४७ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां प्रसन्नकाण्डे माधुर्य-
प्रदर्शनो नाम द्वितीयः परिच्छेदः ।
काव्यस्य प्रभातवर्णनो नामैकादशः सर्गः ।

जलद इत्यादि । स रावणः सुमेरोः शिखरमिवोच्चैरुच्चं हैमं हिरण्मयमासनमध्यतिष्ठत् किं कुर्वन् विद्युद्युक्तो मेघ इव प्रतिककुभं दिशि दिशि धीरमन्द्रं गभीरतारं निस्वनं ध्वनिमुदस्यन् क्षिपन् प्रोन्नतः सर्वेषामुपरि स्थितः उन्नताकारो वा प्राज्यानां प्रभूतानां रत्नानां प्रभाभिरुपलक्षितः प्राज्यरत्नप्रभाभिः करणभूताभिस्तडित्वान् जलद इव इति वा आसनं कीदृशं विविधैर्नानावर्णैर्मणिभिर्विचित्रं सुमेरुशिखरमप्येवं प्रोन्नतमिति पाठे उच्चैरिति रावणविशेषणं प्रतिककुभमिति ज्ञपनदीति पक्षे व्यप्रत्ययः तडित्वानिति तद्वत्ताहित्यमात्रमत्र विवक्षितमुपमेये प्राज्यरत्नप्रभासाहित्यादतो नात्र पौनरुक्त्यम् ॥ ४७ ॥ भ०

इति महेश्वरहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां
भट्टिटीकायां मुग्धबोधिन्यां प्रसन्नकाण्डे गुणदर्शनं नाम
द्वितीयः परिच्छेदः ।
काव्यस्य प्रभातवर्णनं नामैकादशः सर्गः ।

———

# द्वादशः सर्गः ।

—०○—

ततो विनिद्रं कृतदेवतार्चं दृष्ट्वैव चित्तप्रथमं किरन्तम् ।
आविष्कृताङ्गप्रतिकर्मरम्यं विभीषणं वाचमुवाच माता ॥१॥

भाविकत्वमलङ्कारः प्रबन्धविषय उक्तः नैकदेशिकं तस्य चित्रा-
द्ययोऽर्थाः प्रवृत्तिहेतवः । तथाचोक्तम्,

भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम् ।
प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः ॥
चित्रोदात्ताद्भुतार्थत्वं कथायाः स्वभिनीतता ।
शब्दानाकुलता चेति तस्य हेतुं प्रचक्षते ॥

इति तत्त्वं सम्बन्धनिर्णयप्रबन्धे द्रष्टव्यमिति दर्शयन्नाह ।

तत इत्यादि । ततः प्रभातकालानन्तरं विभीषणं विनिद्रं प्रबुद्धं
कृतदेवतार्चं कृतेष्टदेवतापूजनं दृष्ट्वैव स्निग्धया कायव्यापारेण चित्त-
प्रथमं किरन्तं प्रकाशयन्तम् आविष्कृतं प्रदर्शितं यदङ्गस्य प्रतिकर्म प्रसा-
धनं तेन रम्यं माता नैकषी नाम वाचं वक्ष्यमाणामुवाच ॥१॥ ज० म०

भाविकनामा गुणः प्रबन्धविषय एव नतु श्लेषादिवदेकदेशविषयो-
ऽपि । तदुक्तं दण्डिना,

तं भाविकमिति प्राहुः प्रबन्धविषयं गुणम् ।
भावः कवेरभिप्रायः काव्येष्वासीद्यवस्थितः ॥
परस्परोपकारित्वं सर्वेषां वस्तुपर्वणाम् ।
विशेषणानां व्यर्थानामक्रियास्थानवर्णना ॥
व्यक्तिरुक्तिक्रमबलाद्गम्भीरस्यापि वस्तुनः ।
भावयितुमिदं सर्वमिति तं भाविकं विदुः ॥

इति कण्ठाभरणे तु भावतो वाक्प्रवृत्तिर्या भाविकं तदुदाहृतमिति
शब्दगुणः ।

प्रबाधमानस्य जगन्ति धीमंस्त्वं सोदरस्यातिमदोद्धतस्य ।
आनन्दनो नाकसदां प्रशान्तिं तूर्णं विषस्यामृतवत् कुरुष्व ॥२

साभिप्रायोक्तिविन्यासो भाविकत्वं निगद्यते इत्यर्थः गुण इति अन्यत्रापि

भाविकत्वमलङ्कारप्रबन्धविषयो गुणः ।
प्रत्यक्षा इव दृश्यन्ते पदार्था भूतभाविनः ॥
चित्रोदात्ताद्भुतार्थत्वं कथाया अतिशीलता ।
शब्दानां कौशलञ्चापि तस्य हेतुं प्रचक्षते ॥

इति स एवाधुना प्रदर्श्यते ।

तत इत्यादि । ततः प्रातःकालादनन्तरं माता नैकषी वक्ष्यमाणां वाचं विभीषणम् उवाच कथितवती कीदृशं विगतनिद्रं विहितदेवार्चनं दृष्टिमात्रेण चित्तस्थितां प्रशान्तिं किरन्तं प्रकाशयन्तं शान्तमूर्त्तित्वात् आविष्कृतेन प्रकाशितेनाङ्गप्रतिकर्मणा शरीरसाधनेन रम्यमितेन सर्वतौज्ज्वल्ययुक्तं पेतुकखपफे वेति अस्य वाशब्दस्य व्यवस्थावाचित्वादत्र नित्यं वेः सकारः तस्य निष्पतन्त्य इतिवत् मूर्द्धन्यत्वं दुर्निरार्विर्बहिः-प्रादुश्चतुरां षः कखपफे इति परछत्वम् उवाचेत्यादिप्रयोगे वाचमित्यादिप्रयोगो व्यर्थत्वेऽपि न दुष्यति । यदुक्तं कण्ठाभरणे,

यदप्रयोजकं यच्च गतार्थं व्यर्थमेव वा ।
तस्यापि क्वापि निर्दोषः प्रयोगो दृश्यते यथेति ॥ १ ॥ भ०

प्रबाधमानस्येत्यादि । हे धीमन् ! त्वं नाकसदां देवानाम् आनन्दनः प्रमोदयिता सन् सोदरस्य भ्रातुर्दशाननस्य गर्भावस्थायां समानमुदरं यस्येति योगविभागात्सभावः अतिबलोद्धतस्य महता सामर्थ्येन दृप्तस्य जगन्ति लोकं प्रबाधमानस्य पीड़यतः प्रशान्तिं प्रशमनं तूर्णं कुरुष्व अमृतवत् यथा अमृतं देवानामानन्दनं विषस्य कालकूटनाम्नः सोदरस्य एतस्मिन् समुद्रोदरे स्थितत्वात् जगन्ति प्रबाधमानस्य प्रशान्तिं कृतवदिति ॥ २ ॥ ज० म०

किमुवाचेत्याह ।

प्रबाधमानस्येत्यादि । हे धीमन् ! प्रशस्तबुद्धियुक्त ! त्वम् अमृत-

कुर्य्यास्तथा येन जहाति सीतां
विषादनीहारपरीतमूर्त्तिम् ।
स्थितां क्षितौ शान्तशिखाप्रतानां
तारामिव त्रासकरीं जनस्य ॥ २ ॥

यदमृतमिव विषस्य कालकूटस्य इव सोदरस्य रावणस्य प्रशान्तिं तूर्णं शीघ्रं कुरुष्व कीदृशस्य सोदरस्य जगन्ति लोकत्रयं प्रबाधमानस्य पीड़यतः अतिबलेन महासामर्थ्येन उद्धतस्य तीव्रस्य विषमपि मथनकाले जगन्ति प्रबाधमानं स्वोजसा उद्धतञ्च कीदृशः नाकसदां देवानामानन्दनः प्रमोदयिता अमृतमपि देवानामानन्दकम् एकस्मिन् समुद्रोदरे स्थितत्वात् विषामृतयोरपि सोदरत्वं समानमुदरं यस्येति सोदरः समानार्थस्य सहशब्दस्य सहः सो वेत्यनेन पक्षे सादेशः एवं यत्र भ्राता सहोदर इत्यपि स्यात् रूपनामगोत्रेत्यादौ उदर्य्यशब्दे सोदरशब्दोऽपि व्युत्पन्न इति केचित्, समानस्य सभावो लोकोपचारादित्यन्ये ॥ २ ॥ भ०

कुर्य्या इत्यादि । तथाप्रकारमनुतिष्ठ त्वं येन सीतां जहाति विषादनीहारपरीतमूर्त्तिं विषादो नीहार इव तेन परिगतदेहां क्षितौ स्थितां निमग्ना शान्तशिखाप्रतानाम् अनुज्ज्वलवेणीबन्धां जनस्य त्रासकरीं भयहेतुभूतां हेतौ टः तारामिव यथा काचित्तारा क्षितौ स्थिता पतिता नीहारपरीतमूर्त्तिः शान्तशिखाप्रताना ध्वस्तरश्मिजाला लोकत्रासकरी तद्वत्तामिति ॥ २ ॥ ज० म०

कुर्य्या इत्यादि । त्वं तथा तं प्रकारं कुर्य्याः यथा येन प्रकारेण स सीतां जहाति त्यजति जनस्य त्रासकरीं त्रासहेतुमुत्पाततारामिव प्रकरणात् राक्षसस्य त्रासं करिष्यतीति भावः विषादो नीहार इव तेन परिगतमूर्त्तिं क्षितौ स्थितां भूमिशयनात् नक्षत्रस्यापि भूमौ पाते उत्पातः सिद्धः यद्वा तारा पक्षे क्षितौ क्षयनिमित्तं स्थितामित्यर्थः शान्तशिखाप्रतानां ध्वस्तकेशप्रतानां केशोल्लुञ्चनात् तारापक्षे ध्वस्तकिरणजालाम् ॥ २ ॥ भ०

चिकीर्षिते पूर्वतरं स तस्मिन्
क्षेमङ्करेऽर्थे मुहुरीर्य्यमाणः।
मात्रातिमात्रं शुभयैव बुद्ध्या
चिरं सुधीरभ्यधिकं समाधात्॥ ६॥

खरदूषणादीनां समूहाः हता मारिताः स्यदैधायोद्देत्यादिना निपूर्व्वचिञो घञि समूहार्थे निकायो निपातितः पूर्लङ्का जितभटा उन्मूलितद्रुमा च कृता सदांसि गृहाणि दग्धानि एवमपरस्यापि विनाशः स्यात् तस्मादेतस्मिन् वस्तुनि बन्धुना यद्विधेयं विधातुं योग्यं तत् घटयस्व कुरु तस्मिन् वस्तुनि रावणविषये वा॥ ५॥ भ०

चिकीर्षित इत्यादि। तस्मिन् सीताप्रत्यर्पणलक्षणेऽर्थे मातुरुपदेशात् पूर्वतरं पूर्वमेव चिकीर्षिते कर्त्तुमीप्सिते मात्रा शुभयैव बुद्ध्या कल्याणया अतिमात्रमत्यर्थं मुहुः प्रणमीर्य्यमाणः प्रवर्त्तमानः स विभीषणः सुधीः प्राज्ञः चिरकालमभ्यधिकं समाधात् चिन्तितवान् इदमतिन्याय्यमिति गातिस्थेति सिचो लुक् इयता प्रबन्धेन उदात्तार्थाभिधानादुदात्तार्थत्वमुक्तम् इत उत्तरं प्रहस्तरावणविभीषणमातामहकुम्भकर्णादीनां वचनप्रबन्धेषु चित्राद्भुतार्थत्वं द्रष्टव्यं स्वविनीतता सुबोधता शब्दानाकुलता चेत्येतदुभयं कथायामेव मन्त्रनिर्णयाख्यायां द्रष्टव्यम्॥ ६॥ ज० म०

चिकीर्षिते इत्यादि। तस्मिन् सीताप्रत्यर्पणरूपेऽर्थे पूर्वतरं मातुरुपदेशात् पूर्वमेव स्वयं चिकीर्षिते कर्त्तुमिष्टे यतः क्षेमङ्करे शुभदायके मात्रापि शुभया शोभनयैव बुद्ध्या अतिमात्रमत्यर्थं मुहुः पुनः पुनः प्रेर्य्यमाणः सुधीः प्राज्ञः स विभीषणश्चिरमभ्यधिकं समाधात् न्याय्यमेवैतदिति चिन्तितवान् भूस्थापिबेति दासंज्ञकात् सेर्लुक् इतया प्रबन्धेन उदात्तार्थत्वमुक्तम् इत उत्तरं रावणविभीषणप्रहस्तादीनां वचनप्रबन्धेन चित्राद्भुतार्थत्वं द्रष्टव्यम् अतिशीलता शब्दानां कुशलता चेत्येतदुभयं मन्त्रनिर्णयकथायां द्रष्टव्यम्॥ ६॥ भ०

दौवारिकाभ्याहृतशक्रदूतं सोपायनोपस्थितलोकपालम्।
साशङ्कभीष्माप्तविशन्निशाटं द्वारं ययौ रावणमन्दिरस्य ॥७॥
दूरात् प्रतीहारनतः स वार्त्तां पृच्छन्ननावेदितसंप्रविष्टः।
सगौरवं दत्तपथो निशाटैरैक्षिष्ट शैलाग्रमिवेन्द्रशत्रुम् ॥८॥

दौवारिकेत्यादि। स विभीषणः रावणमन्दिरस्य द्वारं ययौ दौवारिकाः द्वारे नियुक्ताः द्वारादीनामित्यौत् तैरभ्याहृताः शक्रदूता यस्मिन् द्वारे सोपायनाः गृहीतकौशलिकाः उपस्थिता औपढौकिता लोकपाला यत्र साशङ्काः सभयाः भीष्मा भयानकाः आप्ता विशन्तो निशाटा यत्रेति तदिति ॥ ७ ॥ ज० म०

दौवारिकेत्यादि। विभीषणो रावणमन्दिरस्य द्वारं ययौ कीदृशं द्वारं दौवारिकैर्द्वारपालैरभ्याहृता निवारिताः शक्रदूता यस्मिन् सोपायनाः सोपहाराः सन्तः उपस्थिता लोकपाला यत्र साशङ्काः सभयाः सन्तो भीष्मा भयजनका आप्ता आत्मीया विशन्तो निशाटा राक्षसा यत्र तेन परेष्वात्मीयेष्वपि तस्य दुष्टत्वं दर्शितं द्वारि नियुक्तो दौवारिकः दृषेकादिति ष्णिकः द्वारस्वरेति ञन णित्ते त्रिरिति वृद्धिः ॥ ७ ॥ भ०

दूरादित्यादि। स विभीषणः दूरादेव प्रतीहारेण नतः स्वामिनीव तत्र गौरवात् वार्त्तां पृच्छन् कुशली महाराज इति विभीषणो द्वारि तिष्ठतीति राज्ञे अनावेदित एव सम्प्रविष्टो निशाटैः सगौरवञ्च सविनयं दत्तपथो दत्तमार्गः इन्द्रशत्रुं रावणमैक्षिष्ट दृष्टवान् शैलाग्रमिव सिंहासनारूढ़स्य तस्योच्चत्वात् ॥ ८ ॥ ज० म०

दूरादित्यादि। दूरादेव प्रतीहारेण द्वारपालेन नतो नमस्कृतः राजा कुत्र तिष्ठति किंवा करोतीति वार्त्तां पृच्छन् विभीषणो द्वारि तिष्ठतीति राज्ञोऽनावेदित एव सम्प्रविष्टः निशाटै राक्षसैः सगौरवं यथा स्यात्तथा दत्तः पन्था यस्य स विभीषण इन्द्रशत्रुं रावणम् ऐक्षिष्ट दृष्टवान् शैलाग्रमिव पर्वतशिखरमिव सिंहासनस्थत्वात् गुरोर्भावो गौरवं विकारसङ्घेति ष्णः ॥ ८ ॥ भ०

कृशानुवर्णं ह्यधिरूढमुच्चैः सिंहासने संचयमेघभीमम् ।
निसर्गतीक्ष्णं नयनस्फुलिङ्गं युगान्तवह्नेरिव धूमराशिम् ॥ ९ ॥
प्रीत्यापि दत्तेक्षणसंनिपातं भयं भुजङ्गाधिपवद्दधानम् ।
तमःसमूहाकृतिमप्यशेषानूर्जा जयन्तं प्रथितप्रकाशान् ॥ १० ॥

कृशानुवर्णमित्यादि । सिंहासने उच्चैस्तुङ्गे कृशानुवर्णे वह्नितुल्ये अधिरूढम् उपविष्टं संचयमेघवद्भीमम् अतिभयङ्करं निसर्गतीक्ष्णं स्वभावरौद्रं नयनानि स्फुलिङ्गा इव यस्य तमीदृशं युगान्तवह्नेरिव धूमराशिम् वह्नितुल्यसिंहासने उपरि स्थितत्वात् सोऽपि संचयमेघवद्भीमः स्वभावतः कटुत्वात् स्वभावतीक्ष्णः नयनानि विस्फुलिङ्गा यस्येति ॥ ९ ॥ ज० म०

कृशान्वित्यादि । कीदृशं रावणमीदृशं कृशानुवर्णे अग्न्याकारे अग्निसुन्दरे वा उद्दीप्तत्वादुच्चैस्तुङ्गे सिंहासनेऽधिरूढं वर्णो देहे प्रकाशे च सुन्दराकारयोरपीति विश्वः । प्रलयकालीनमेघवद्भीममतिकृष्णत्वात् निसर्गेण स्वभावेन तीक्ष्णं रौद्रं नयनानि स्फुलिङ्गा अग्निकणा इव यस्य युगान्तवह्नेः प्रलयकालीनवह्नेर्धूमराशिमिव अग्नितुल्यसिंहासनस्थत्वात् धूमोऽपि मेघतुल्यः कटुत्वात्तीक्ष्णः स्फुलिङ्गवांश्च भवति ॥ ९ ॥ भ०

प्रीत्येत्यादि । यथा भुजङ्गाधिपः शेषः प्रीत्या स्नेहेन दत्तेक्षणसंनिपातः समर्पितनेत्रनिवहो भयमादधाति तद्भयमादधानं तमःसमूहस्याकृतिर्यस्य तमपि प्रथितप्रकाशानशेषानर्कादीन् ऊर्जा बलेन जयन्तमीदृशं ऊर्जेति भ्राजभासेत्यादिना क्विप् ॥ १० ॥ ज० म०

प्रीत्येत्यादि । पुनः कीदृशं भुजङ्गाधिपः शेषः प्रीत्यापि दत्तेक्षणसंनिपातः समर्पितनेत्रसमूहः सन् यथा भयं जनयति तथा भयं दधानं तमःसमूहस्य राहुदन्दशूकस्य अन्धकारपटलस्येव वा आकृतिर्यस्य तथाभूतमपि ऊर्जा बलेनाशेषान् प्रसिद्धप्रकाशान् सूर्यादीन् जयन्तमभिभवन्तम् ऊर्जं बलप्राणधारणयोः भ्राजादिति भावे क्विप् तमोऽन्धकारे स्वर्भानौ तमः क्लेशे गुणान्तरे इति विश्वः ॥ १० ॥ भ०

न रत्नदायं जितमृत्युलोका रात्रिञ्चराः कान्तिभृतोऽन्वसर्पन्।
प्रयुक्तमुक्ताफलमम्बुवाहं सञ्जाततृष्णा इव देवमुख्याः॥११॥
स किङ्करैः कल्पितमिङ्गितज्ञैः सम्बाधकं पूर्वसमागतानाम्।
सिंहासनोपाश्रितचारुबाहुरध्यास्त पीठं विहितप्रणामः॥१२

न रत्नदायमित्यादि। यथा देवमुख्याः अमरत्वाज्जितमृत्युलोकाः कान्तिभृतो दीप्तिधराः सञ्जाततृष्णाः सन्तः प्रयुक्तमुक्ताफलमम्बुवाहमुपसर्पन्ति तद्वत् विभीषणं रत्नदायं रत्नं दास्यतीति अण् कर्मणि चेति भविष्यत्काले क्रियायां क्रियार्थायामित्यण् तत्र एककर्त्तृके भिन्नकर्त्तृके वेति विशेषाभावात् अथवा दयदानगत्योरित्यस्मात् कर्मण्यण् रत्नं दयते ददातीति कृत्वा रात्रिञ्चरा अग्नयमलोकाः अन्वसर्पन्॥११॥ज०म०

तमित्यादि। रात्रिञ्चराः सञ्जाताभिलाषाः सन्तो रत्नदायं तं विभीषणमन्वसर्पन् अनुगतवन्तः यथा देवमुख्या देवश्रेष्ठा जितमृत्युलोकाः कान्तिभृतः सञ्जाततृष्णाः सन्तः शुक्तिषु तोयप्रक्षेपेण प्रयुक्तमुक्ताफलं मेघमनुसर्पन्ति तद्वत् कीदृशा रात्रिञ्चराः जितमृत्युलोकाः अभिभूतयमलोकाः कान्तिं बिभ्रतीति क्विप् कान्तिभृतः तेजस्विनः देवमुख्याः अपि अमरत्वात् जितमृत्युलोकाः कान्तिभृतश्च रत्नदायमिति रत्नं दास्यतीति भविष्यत्काले दात् परस्मात परण् तस्य कालविशेषानुक्तेस्त्रिषु कालेषु भवति अन्यकालेऽपि न क्षतिः यनूञ्णिदिति यन् दयदाने इत्यस्य रूपं वा यद्वा श्वससव्यधेत्यादिना णः ततः षष्ठीसमासः॥ ११ ॥ भ०

स किमित्यादि। स विभीषणः विहितप्रणामः कृतप्रणतिः पीठमध्यास्त निषण्णवान् किङ्करैर्भृत्यैरिङ्गितज्ञैरभिप्रायवेदिभिः कल्पितमुपनीतं पूर्वसमागतानां प्रथमप्रविष्टानां सम्बाधकं सङ्कटकृत् सम्बाधत इति ण्वुन् रावणस्य सिंहासने उपाश्रितः स्थितः चारुर्बाहुर्यस्य विभीषणस्येति सः॥ १२ ॥ ज० म०

स किङ्करैरित्यादि। स विभीषणो विहितप्रणामः कृतभक्त्यतिशयव्यञ्जकनतिः सन् पीठमध्यास्त अधिरूढवान् किम्भूतमासन-

ततो दशास्यः क्षुभिताहिकल्पं दीप्ताङ्गुलीयोपलमूढ़रत्नम् ।
अनेकचञ्चन्नखकान्तिजिह्वं प्रसार्य्य पाणिं समितिं बभाषे १३

शक्तैः सुहृद्भिः परिदृष्टकार्य्यै-
राम्नातिभिर्नीतिषु बुद्धिमद्भिः ।
युष्मद्विधैः सार्द्धमुपायविद्भिः
सिध्यन्ति कार्य्याणि सुमन्त्रितानि ॥ १४ ॥

मिङ्गितचेरावणाशयवेदिभिः किङ्करैर्भृत्यैः कल्पितमुपनीतं पूर्वसमागतानां प्रथमोपविष्टानाम् अन्येषां मन्त्रिणां सम्बाधकं सङ्कोचकारकं तेषां स्थाने अस्य पीठस्यार्पणात् स कीदृशः रावणसिंहासने उपाश्रितः स्थितश्चारुर्बाहुर्यस्य ॥ १२ ॥ भ०

तत इत्यादि । विभीषणनिवेदनादुत्तरकालं दशास्यः पाणिं क्षुभिताहिकल्पं क्रुद्धविस्तृतफणेन सर्पेण तुल्यं दीप्तो दीपनशीलोऽङ्गुलीयोपलोऽङ्गुलीयरत्नं यतः तत एव गूढरत्नम् अनेकाश्चञ्चन्त्यश्चलन्त्यो नखकान्तयो जिह्वा इव यस्य तं प्रसार्य्य समितिं राक्षससमूहं बभाषे ॥ १३ ॥ ज० म०

तत इत्यादि । विभीषणोपवेशनादनन्तरं दशास्यः पाणिं प्रसार्य्य समितिं राक्षसानां सभां वक्ष्यमाणप्रकारेण बभाषे उवाच कीदृशं पाणिं क्षुभिताहिकल्पं क्रुद्धविस्तृतफणसर्पतुल्यं दीप्तो दीपनशीलोऽङ्गुरीयोपलो मुद्रिकारत्नं यत्र अतएवोढ़रत्नम् अनेन सर्पसादृश्यं सूचितम् अनेकाश्चञ्चन्त्यश्चपला नखकान्तयो जिह्वा इव यस्य ॥१३॥ भ०

शक्तैरित्यादि । शक्तैः समर्थ्यैः सुहृद्भिर्मित्रैः परिदृष्टकार्य्यैः मा भूदृष्टकर्मणां कर्मसु विषाद इति आम्नातिभिः अभ्यस्तनीतिशास्त्रैरित्यर्थः इष्टादिभ्यश्चेति इनि क्तस्येन्विषयेति कर्मणि सप्तमी बुद्धिमद्भिः ज्ञानवद्भिः उपायविद्भिः सामादिकुशलैरित्यर्थः युष्मद्विधैः सह कार्य्याणि सुमन्त्रितानि सिध्यन्ति ॥ १४ ॥ ज० म०

शक्तैरित्यादि । मन्त्रिणां प्रोत्साहनार्थमिदमुच्यते युष्मद्विधैर्भवा-

उपेक्षिते बालिखरादिनाशे दग्धे पुरेऽक्षे निहते सभृत्ये ।
सैन्ये द्विषां सागरमुत्तितीर्षावनन्तरं ब्रूत यदत्र युक्तम् ॥१५॥
भुजांसवक्षःस्थलकार्मुकासीन्
गदाश्च शूलानि च यातुधानाः ।

दृशैः सह सुमन्त्रितानि कार्य्याणि सिध्यन्ति सिद्धिं गच्छन्ति तत्र हेतुमाह शक्तैः समर्थैः न केवलं युष्माभिर्मन्त्रणा दीयते मन्त्रणां दत्त्वा तन्निर्णीतकर्त्तव्यमपि क्रियत इति भावः स्वयमसमर्थो हि न स्वामिनो युद्धाद्यर्थं मन्त्रणां ददातीति वा सुहृद्भिर्मितैः न तु शक्तत्वेनाहङ्कारः नतु वा कुमन्त्रणा दीयत इति भावः परिदृष्टकार्य्यैर्दृष्टकर्माणो हि शास्त्रविदोऽपि मुह्यन्ति नीतिषु आम्नातिभिरभ्यस्तनीतिशास्त्रैः न केवलं दर्शनादेव कार्य्यज्ञानं क्तेनाढे इति कर्मणि सप्तमी विषयविवक्षयेत्यन्ये बुद्धिमद्भिः ऊहापोहक्षमैः न शुकादिवत् अधीतवक्तृत्वम् उपायविद्भिः सामदानादिकुशलैः उपायज्ञानात्, बुद्धिमन्तोऽपि मुह्यन्ति । परिकरालङ्कारोऽयं, विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ॥ १४ ॥ भ०

उपेक्षित इत्यादि । बालिखरादिनाशेषूपेक्षितेषु द्विषाञ्च सैन्ये सागरमुत्तितीर्षावुत्तरितुमेषणशीले अनन्तरमिदानीं ब्रूत वदत यदत्र युक्तमिति उत्तितीर्षाविति इकोचिम् विभक्ताविति तु न भवति तृतीयादिषु भाषितपुंस्कमिति पुंवद्भावः ॥ १५ ॥ ज० म०

उपेक्षित इत्यादि । बालिनः खरादेश्च नाशे उपेक्षिते सति पुरे लङ्कायां दग्धे सति भृत्यैः सह अक्षनाम्नि कुमारे हते सति शत्रूणां सैन्ये समुद्रमुत्तितीर्षौ उत्तरितुमिच्छौ सति अनन्तरमिदानीं यूयं ब्रूत अत्र यद्युक्तमिति बभाषे इति पूर्वेणान्वयः उत्तितीर्षाविति स्नाद्यृहद्भूरिति पक्षेऽनिम् पुंवद्वायोक्तपुंस्कमिति पक्षे पुंवद्भावात् तुजिक इति न तुन् ॥ १५ ॥ भ०

भुजांसेत्यादि । यदि वयं शत्रून् न व्यापादयामस्तदा किमेतैर्भुजादिद्दढैरिति प्रथिताभिमानाः प्रकाशिताहङ्कारा भुजादीन् परा-

परास्त्वयन्तः प्रथिताभिमानाः
प्रोचुः प्रहस्तप्रमुखा दशास्यम् ॥ १६ ॥
अखण्डमानं परिखण्ड्य शक्रं
त्वं पण्डितम्मन्यमुदीर्णदण्डः ।
नराभियोगं नृभुजां प्रधान !
मन्त्रोन्मुखः किं नयसे गुरुत्वम् ॥ १७ ॥

स्वयन्तः प्रहस्तप्रमुखा यातुधाना दशास्यं प्रोचुर्वक्ष्यमाणवाचः वचपरिभाषणे लिट् उस् ॥ १६ ॥ ज० म०

भुजानित्यादि । प्रहस्तप्रभृतयो यातुधाना दशास्यं वक्ष्यमाणं प्रोचुः किं कुर्वन्तः बाहून् स्कन्धान् वक्षःस्थलानि धनूंषि खड्गान् गदाः शूलानि च परास्त्वयन्तः स्पृशन्तः प्रथिताभिमानाः प्रकाशिताहङ्काराः ॥ १६ ॥ म०

अखण्डमानमित्यादि । शक्रमखण्डमानम् अनभिभवनीयाहङ्कारम् अतश्च पण्डितम्मन्यं पण्डितमात्मानं मन्यमानं नान्यः पण्डितोऽस्तीति इदृशं परिखण्ड्य जित्वा त्वं नृभुजां राक्षसानां प्रधान ! उदीर्णदण्डः अभ्यर्चितबलः सन् किमर्थं मन्त्रोन्मुखो मन्त्रप्रवणः नराभियोगं गुरुत्वं नयसे प्रापयसि सुमन्त्रितानि कार्य्याणि सिध्यन्तीति अत्र कर्त्तृगुणाभियोगेन क्रियाफलेन योगादात्मनेपदम् । १७ ॥ ज० म०

किं प्रोचुरित्याह ।

अखण्डेत्यादि । हे नृभुजां राक्षसानां प्रधान ! अखण्डमानं परैरनभिभवनीयमात्मानं पण्डितं मन्यमानं नान्यः पण्डितोऽस्तीति साहङ्कारं शक्रमपि परिखण्ड्य जित्वा त्वम् उदीर्णदण्डो महाबलोऽपि स्वमन्त्रोन्मुखः सन् मन्त्रणां कुर्वन् नरस्याभियोगं युद्धं गुरुत्वं कथं नयसे प्रापयसि अनन्तरं ब्रूत यदत्र युक्तमिति वचनेऽत्र गौरवप्रसङ्गात् मन्यात् स्वार्थे इति खश् । दण्डो यमे मानभेदे लगुडे दमसैन्ययोः । व्यूहभेदे प्रकाण्डेऽश्वे कोणस्याख्योरपि स्मृतः । अभिमानायद्दे

निर्य्यत्स्फुलिङ्गाकुलधूमराशिं
किं ब्रूहि भूमौ पिनषाम भानुम् ।
आदन्तनिष्पीड़ितपीतमिन्दुं
ष्ठीवाम शुष्केक्षुलताश्थिकल्पम् ॥ १८ ॥
सराघवैः किं बत वानरैस्तै-
र्यैः प्रातराशोऽपि न कस्यचिन्नः ।

इक्ष्वाकुवंशोः पारिपार्श्वके इति । प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि । प्रज्ञायाञ्च प्रधानं स्यादेकत्वे च सदैव तु इति च विश्वः । प्रधाना हरितांजगा इति प्रयोगात् पुंलिङ्गोऽपि प्रधानशब्द इति श्रीपतिः ॥ १७ ॥ म०

निर्य्यदित्यादि । ब्रूहि समादिश आस्तां तावन्नराभियोगः किं भानुं क्षितौ पिनषाम चूर्णयाम प्रश्ने लोट् रुधादिभ्यः श्नम् । निर्य्यता निर्गच्छता स्फुलिङ्गेनाकुलो धूमराशिर्यस्य तं भानुम् वा इति विकल्पो वर्त्तते दन्तनिष्पीड़ितपीतम् इन्दुं वा पूर्वं दन्तैर्निष्पीड़ितं पश्चात्पीतं ष्ठीवाम निरस्याम वोरुपधाया इति दीर्घः शुष्केक्षुयष्टे-रस्थीयतत्सदृशम् ॥ १८ ॥ ज० म०

निर्य्यदित्यादि । आस्तां तावन्नराभियोगः ब्रूहि आदिश किं भूमौ भानुं पिनषाम चूर्णयाम भीपिप्पलचूर्णने विधिनिमन्त्रणेत्यादिना संप्रश्ने लोट् कीदृशं भानुं निर्य्यता निर्गच्छता स्फुलिङ्गेनाकुलो धूमराशिर्यत्र सः । किंवा इन्दुं ष्ठीवाम ष्ठिवुक्लमाचम इति दीर्घः भ्वादिष्ठ्व-हत्वादौ ष्ठिववर्जनात् न दन्त्यसकारत्वं कीदृशमिन्दुं पूर्वं दन्तैर्निष्पीड़ितं पश्चात्पीतं सुधापानात् नीरसमिक्षुयष्टेर्यदस्थि इढ़भागस्तत्तुल्यम् आ इत्यव्ययं विकल्पो वर्त्तते इति जयमङ्गला । आस्तु स्यात् कोपपीड़यो-रित्यमरः । आ सम्यक् दन्तैर्निष्पीड़ितमिति केचित् ॥ १८ ॥ म०

सराघवैरित्यादि । सस्याद्युर्यः कैलासः तस्य धर इति सः धारयतीति धरः कर्त्तर्यच् हे सस्याद्युकैलासधर ! नोऽस्माकं मध्ये

सस्थाणुकैलासधराभिधत्स्व
किं द्यौरधोऽस्तु क्षितिरन्तरीक्षे ॥ १९ ॥
चापल्ययुक्तस्य हरेः कृशानुः
समेधितो बालधिभाक् त्वदीयैः ।
शस्त्रेण बध्यस्य गलन्नधाक्षीत्
राजन् ! प्रमादेन निजेन लङ्काम् ॥ २० ॥

कस्यचिदेकस्य यैः सराघवैः प्रातराशोऽपि प्रातर्भोजनमपि न भवति तैः सराघवैर्वानरैः किं प्रयोजनं बतशब्दोऽनुशोचने अतोऽभिधत्स्व आदिश किं द्यौराकाशमधोऽस्तु भवतु क्षितिर्वा अन्तरीक्षे उपरिष्टादस्त्विति ॥ १९ ॥ ज० म०

सराघवैरित्यादि । हे सस्थाणुकैलासधर ! नोऽस्माकं मध्ये कस्यचिदेकस्यापि यैर्वानरै राघवाभ्यां सहितैः प्रातराशः प्रातर्भोजनमपि न भवति तैः किङ्कर्त्तव्यमत्रागत्येति शेषः । बतेति खेदे आमन्त्रणे वा बताभिधत्स्व आदिश किं द्यौराकाशं स्वर्गो वा अधो भवतु क्षितिरन्तरीक्षे उपरिष्टादस्तु तत्रैव कर्माणि सर्वे वयं भवद्भिर्नियोक्तुमुचिताः नत्वल्पकार्य्ये रामादिबधे इति भावः । प्रलयेऽपि तिष्ठतीति स्थाणुः शिवः नाम्न्यग्न्ये इति मूर्द्धन्यणुप्रत्ययः तेन सह वर्त्तमानं कैलासपर्वतं धरतीति पचादित्वादच् त्वमद्भुतकर्माणि किं रामभिया मन्त्रणां करोषीति भावः । अन्तरीक्ष्यते जगदस्मिन्निति अन्तरीक्षं छन्दसि ह्रस्वेकारमिति सर्वधरः शब्दभेदे त्वन्तरीक्षमिति द्वयमुक्तम् ॥ १९ ॥ भ०

यत्पुरं दग्धं तद्युष्मत्प्रमादेनैव न शत्रुशक्त्येति दर्शयन्नाह ।

चापल्येत्यादि । चपलस्य भावश्चापल्यं ब्राह्मणादित्वात् ष्यञ् युवादिष्वपि दृश्यते तत्र चापलमिति रूपं तेन युक्तस्य हरेर्मर्कटस्य हे राजन् ! शस्त्रेण बध्यस्य सतः यो बालधिः पुच्छं तद्भाक् समाश्रितः कृशानुस्त्वदीयैः भृत्यैः समेधितो वर्द्धितः तैलघृतादिभिर्न्दहाव् न्दह

अथाञ्चितोरस्कमुदीर्णदृष्टिः
कृत्वा विवक्षाप्रवणं शरीरम्।
विवृत्तपाणिर्विहितोत्तरार्थं
विभीषणोऽभाषत यातुधानान्॥ २१॥

गच्छतो गलन् पुच्छात्पतन् लङ्कामधाक्षीत् दग्धवान् एकाचोवशोभ-मित्यादिना धत्वं हलन्तलक्षणा वृद्धिः ढोढ़ः षोढ़ः कः सि। निजेन आत्मीयेन प्रमादेन ज्वालादर्शितलक्षणेन तदानीं तस्य शत्रुव्यापादनमेव युक्तमिति॥ २०॥ ज० म०

लङ्कादाहोऽप्यस्माकमनवधानादेव नतु शत्रुसामर्थ्यादिति सूचयितुमिदमुच्यते।

चापल्येत्यादि। हे राजन्! तव निजेनात्मीयेन प्रमादेनानवधानेन कृशानुरग्निर्लङ्कामधाक्षीत् दग्धवान् कीदृशः कृशानुर्हरेर्मर्कटस्य बालधिभाक् पुच्छमाश्रितः त्वदीयैर्भृत्यैः स्वयमेधितस्तैलवस्त्रादिभिर्दीपितः गलन् हरेर्गृहाद्गृहान्तरगमनेन पतन् हरेः कीदृशस्य चापल्ययुक्तस्य चञ्चलतया युक्तस्य शस्त्रेण वध्यस्य वधार्हस्य चञ्चलस्य वध्यस्य वधमकृत्वा पुच्छे अग्निदानादेव एवं तव प्रमादः चपलस्य भावश्चापल्यं विकारसंघेति ष्यञ्ः दहेरनिट्त्वात् व्रजवदेत्यादिना वृद्धौ सौ त्रिः॥ २०॥ म०

अथेत्यादि। प्रहस्तादिवचनानन्तरम् अञ्चितोरस्कं विन्यस्तहारत्वात् पूजितोरस्कम् उरःप्रभृतिभ्यः कप् अञ्चेः पूजायामितीट् नाञ्चेः पूजयामित्यनुनासिकलोपप्रतिषेधः तादृशं शरीरं विवक्षाप्रवणं वक्तुमिच्छाभिमुखं कृत्वा शरीरस्य सौष्ठवम् उत्पाद्येत्यर्थः उदीर्णदृष्टिस्तदभिमुखदृष्टिः विवृत्तपाणिस्तदभिमुखीकृतदक्षिणपाणिः विभीषणो यातुधानानभाषत विहितोत्तरार्थं विहितः प्रतिषिद्धः परैरुदितस्य वचनस्यार्थो यत्र भाषणे इति॥ २१॥ ज० म०

अथेत्यादि। प्रहस्तादिवचनान्तरं विभीषणो विहितोत्तरार्थं यथा स्यात्तथा यातुधानान् अभाषत वक्ष्यमाणप्रकारेणोक्तवान् किं

युद्धाय राज्ञा सुभृतैर्भवद्भिः सम्भावनायाः सदृशं यदुक्तम्।
तत्प्राणपण्यैर्वचनीयमेव प्रज्ञा तु मन्त्रेऽधिकृता न शौर्य्यम्॥२२
यत्रापि यत्नादृतमन्त्रवृत्तिर्गुरुत्वमायाति नराभियोगः।
वशीकृतेन्द्रस्य कृतोत्तरोऽस्मिन् विध्वंसिताशेषपुरो हनूमान्॥२३

कृत्वा शरीरं देहं वियत्प्रवणं वक्तुमिच्छया अभिमुखं कृत्वा शरीरसौष्ठवसुत्पाद्येत्यर्थः शरीरं कीदृशमञ्चितोरस्कं विन्यस्तहारत्वात् पूजितवक्षस्कं च अधसपूजार्थञ्च इति इम् नेदित् पूजार्थाञ्चेरिति नलोपाभावः अञ्चितं विस्तारितम् उरो यस्येति उरन्तात् क इति केचित् पुंवत्स्त्र्युक्तपुंस्क इति ज्ञापकात् ऋतोऽन्यस्मादपि बहुव्रीहौ क्वचित्कः स्यादिति गम्यते तेनात्र कः स्वार्थे क इत्यन्ये उरःप्रभृतिभ्यो बहुव्रीहौ नित्यं क इति परस्त्वत्र विभीषणः कीदृशः उदीर्णदृष्टिः प्रहस्तादीनाम् अभिमुखं दत्तदृष्टिर्वितर्कितः तदभिमुखीकृतदक्षिणपाणिः विहितः प्रतिविद्ध उत्तरस्य प्रतिवाक्यस्यार्थो येन भाषणेन॥ २१॥ भ०

युद्धायेत्यादि। युद्धार्थं राज्ञा भवन्तः सुभृताः संवर्द्धिताः तैः सुभृतैर्यदुक्तं भानुं पिनष्मीत्यादि कीदृशं सम्भावनायाः सदृशं तत्प्राणपण्यैर्वचनीयमेव मन्त्रे तु प्रज्ञाधिकृता न शौर्य्यम्॥ २२॥ ज० म०

युद्धायेत्यादि। राज्ञा युद्धार्थमेव सुभृतैः परिपुष्टैर्भवद्भिः सम्भावनाया अध्यवसायस्य सदृशं योग्यं यदुक्तं पिनष्मि भानुमित्यादिकं तद्वचनीयमेव वचनयोग्यमेव यतः प्राणा एव पण्या राजकृतेन भरणेन विक्रेया येषां तैः किन्त्विदं वचनं मन्त्रे नोपयुज्यते यतः प्रज्ञा बुद्धिर्मन्त्रेऽधिकृता न तु शौर्य्यम्॥ २२॥ भ०

नराभियोगं किं नयसे गुरुत्वमित्यत्रोत्तरमाह।

यत्रेत्यादि। वशीकृतेन्द्रस्य निर्जितशक्रस्य रावणस्य नराभियोगो यत्नादृतमन्त्रवृत्तिर्यत्नेनादृता मन्त्रवृत्तिर्यस्य सः तादृशो गुरुत्वमायातीति यत्राप्युक्तम् अस्मिन् वस्तुनि हनूमान् कृतोत्तरो दत्तोत्तरः यतः विध्वंसिताशेषपुरः पुरं लङ्का पुःशब्दो वा कृतसमासान्तः यत्र कपि-

**अग्निः प्रमादेन ददाह लङ्कां वध्यस्य देहे स्वयमेधितश्चेत्।**
**विमृश्य तद्देवधियाभिधत्त ब्रह्मास्त्रबन्धोऽपि यदि प्रमादः २४**

नायमत्येन ईदृशमनुष्ठितं स कथं नराभियोगो मन्त्रोन्मुखेन न निरूप्यत इति ॥ २३ ॥ ज० म०

नराभियोगं किं नयसे गुरुत्वमित्यत्रेदमुत्तरम्।

यस्येत्यादि। वशीकृतेन्द्रस्य निर्जितशक्रस्य रावणस्य यत्नेनादृता मन्त्रदृष्टिर्येन तादृशो नराभियोगो गुरुत्वमायातीति यच्चोक्तम् अस्मिन् वस्तुनि हनूमानेव कृतोत्तरः दत्तप्रतिवाक्यो यतो विध्वंसितमशेषं पुरं येन यस्य दूतमात्रेणैवं कृतं तस्य नराभियोगः कथं लघुः स्यादतस्तन्मन्त्रणा युक्तैव ॥ २३ ॥ म० ॥

प्रमादेनाग्निः लङ्कामधाक्षीदित्यत्रोत्तरमाह।

अग्निरित्यादि। वध्यस्य वधार्हस्य देहे तदेकदेशेषु पुच्छादिषु प्रमादेन स्वयं युष्माभिरग्निरेधितो दीपितः लङ्कां ददाह चेत्तथा त्वाह ब्रह्मास्त्रबन्धोऽपि यदि प्रमादः तद्देवधिया दैवबुद्ध्या देवानां सात्त्विकत्वान्निर्मला बुद्धिः तया विमृश्य निरूप्याभिधत्त ब्रूत सोऽपि प्रमाद इति यतोऽस्यावस्थोचितोऽपि विशेषितः अभिधत्तेति इयत्तयोस्त्वेऽभ्यासदकारस्य अपधातोश्च खरिचत्वम् ॥ २४ ॥ ज० म०

अग्निरित्यादि। निजेन प्रमादेन कथमनुर्लङ्कामधाक्षीदित्यत्रेदमुत्तरं वध्यस्य वधार्हस्य कपेर्देहे स्वयमेधितो दीपितोऽग्निर्लङ्कां प्रमादेन ददाहेति चेत् यदि तदा यदि ब्रह्मास्त्रबन्धोऽपि प्रमादोऽनवधानकृतो भवति तद्देवधिया देवानां सात्त्विकत्वान्निर्मला तत्त्वग्राहिणी या बुद्धिस्तादृशधिया विमृश्य निरूप्य अभिधत्स्व ब्रूहि देवेति पृथक् पदं रावणसम्बोधनं वा यदि च ब्रह्मास्त्रबन्धो न प्रमादः तदा वाग्निं दत्त्वा ब्रह्मास्त्रबन्धस्य स्थापितत्वात् कुतोऽग्निदाहप्रमादो येन च स्वयमेव तादृशबन्धनं खण्डितं तस्य किमशक्यं कुतो वा बधः स्यादिति भावः। डुधाञ्धारणे पुष्टौ दाने चाभिपूर्वो भासार्थः ह्लादीरेर्हरिति हित्वं श्नाभ्यस्तयोरिति खेर्दत्वं श्नाभ्यस्तयोरित्यालोपः अभ्यस्तस्येति छेर्घत्वं अप-

जगन्त्यमेयाद्भुतभावभाञ्जि
जिताभिमानाश्च जना विचित्राः ।
कार्ये तु यत्नं कुरुत प्रकृष्टं
मा नीतिगर्भान् सुधियोऽवमध्वम् ॥ २५ ॥

वृद्धिक्षयस्थानगतामजस्रं वृत्तिं जिगीषुः प्रसमीक्षमाणः ।

असोरिति तः अभिधत्तेति पाठे धोदधोऽन्तलोपे तथि ॥ २४ ॥ भ०

परामियोगः सर्वथा निरूप्यत इति दर्शयन्नाह ।

जगन्तीत्यादि । असंख्यविचित्रभावभाञ्जि जगन्ति तत्रत्या अपि जनाः विचित्राः शक्तिदेशकालवशात् जिताभिमानाश्च अन्यैरुत्कृष्टैर्जीयतेऽभिमानस्तेषां तेनात्मन्यभिमानो न कर्त्तव्य इति दर्शयति कार्ये तु प्रकृष्टमुत्तमं यत्नं कुरुत येन तत्तत्कार्यं सिध्यति तत्र च ये युक्तिमभिदधति तान्नीतिगर्भान् नीतिरेव षाड्गुण्यादिज्ञानं गर्भे येषाम् अतएव सुधियो मावमंध्वं मा परिभूत तदयुक्तानुष्ठानात् हनसिञ्जिति कित्वविधानसामर्थ्यात् अनुनासिकलोपाभावः धिचेति सिचो लोपः ॥ २५ ॥ ज० म०

परामियोगः सर्वथा निरूपणीय इति दर्शयितुमिदमुच्यते ।

जगन्तीत्यादि । जगन्ति भुवनानि अमेयानसंख्यान् अद्भुतानाश्चर्यान् भावान् भजन्ति तत्रत्याश्च जना अपि विचित्राः शक्तिदेशकालवशान्नानाविधा जिताभिमानाश्च भवन्ति अन्यैरुत्कृष्टैर्जनैर्जितोऽभिमानोऽहङ्कारो येषां ते तथा तस्मादभिमानो न कर्त्तव्य इति कार्येषु प्रकृष्टमुत्तमं यत्नं कुरुत तेनैव कार्यं सिध्यति नत्ववज्ञया नीतिरेव गर्भोऽन्तर्गतो येषां तान् अतएव सुधियः पण्डितान् मा अवमध्वं तदवज्ञां न कुरुत धनेर्धे सिलोपो वेति सिलोपे वनतनाद्यनिमामिति नकारलोपः ॥ २५ ॥ भ०

यथा च विजिगीषुणा वर्त्तितव्यं तथोपदिशन्नाह ।

वृद्धीत्यादि । आत्मद्रव्यप्रकृतिसम्पन्नो न यस्याधिष्ठानं विजिगीषुः

घटेत सन्ध्यादिषु यो गुणेषु लक्ष्मीर्न तं मुञ्चति चञ्चलापि २६

उपेक्षणीयैव परस्य वृद्धिः प्रनष्टनीतेरजितेन्द्रियस्य ।
मदादियुक्तस्य विरागहेतुः समूलघातं विनिहन्ति यान्ती २७

तस्य च वृद्धिक्षयस्थानानीति त्रीणि फलानि गुणाश्च सन्धिविग्रह-यानासनसंश्रयद्वैधीभावाः षट् तत्र यस्मिन् गुणे स्थितः पश्येदिह स्थः पश्यामीति दुर्गसेतुवणिक्पथशून्यनिवेशनवान् द्रव्यहस्तिवनकर्माण्या-त्मनः प्रवर्त्तयितुं परस्य चैतानि हन्तुं गुणमातिष्ठेत्सा वृद्धिः यस्मिन् गुणे स्थितस्य कर्मणामुपघातं पश्येत् नेतरस्य तांश्च न तिष्ठेत् स क्षयः स्वकर्मणां वृद्धिगुणेनाभिपश्येदेतत् स्थानमित्यनेन मार्गेण यो विजि-गीषुः वृद्धिक्षयस्थानगतामात्मनः परस्य च वृत्तिमजस्रं शश्वत् प्रत्यवे-क्षमाणो निरूपयन् सन्ध्यादिषु षड्गुणेषु घटेत यतेत तं विजिगीषुं लक्ष्मीः राज्यश्रीः चञ्चलापि न मुञ्चति गुणरज्जुबद्धत्वात् ॥२६॥ज०म०

नीतिरेव कीदृशीत्यपेक्षायामिदमुच्यते ।

वृद्धीत्यादि । यो जिगीषुः सन्धिर्ना विग्रहो यानमासनं द्वैधं संश्रय इति षड्गुणा एषु घटेत चेष्टेत तं लक्ष्मीश्चञ्चलापि न मुञ्चति गुणबद्धत्वात् चञ्चलशब्दो रूढः जिगीषुः कीदृशः अजस्रं सततं वृद्धि-क्षयस्थानगतां तत्सम्बन्धिनीमात्मनः परस्य च वृत्तिं प्रत्यवेक्षमाणः विचारयन् वृद्धिर्वर्द्धनं कोषादेः क्षयोऽपचयः परकोषादेः स्थानं स्थिति-र्निजदुर्गवणिक्पथादेः ॥ २६ ॥ म०

अस्ति स कालो यत्र विजिगीषुणा परवृद्धिरुपेक्षणीयेति दर्शयन्नाह ।

उपेत्यादि । परः शत्रुः प्रनष्टनीतित्वादजितेन्द्रियः न मदादि-षड्वर्गं त्यजति किन्तु तेनैव युज्यते तस्यैवंविधस्य या वृद्धिः सा सर्व-स्यैव लोकस्य विरागहेतुः वैमुख्यकारणमुपेक्षणीयैव न तदभावाय तेनेदृशी यान्ती अवसाने समूलघातं सर्वं सर्वेण विनिहन्ति विनाशयति ॥ २७ ॥ ज० म०

वृद्ध्यादिगतां वृत्तिमेव निरूपयितुमिदमुच्यते ।

उपेक्षणीयेत्यादि । अजितेन्द्रियस्यात एव प्रनष्टनीतेर्मदादियुक्तस्य

जनानुरागेण युतोऽवसादः फलानुबन्धः सुधियात्मनोऽपि ।
उपेक्षणीयोऽभ्युपगम्य सन्धिं कामादिषड्वर्गजिताधिपेन ॥२८

यदा विगृह्णन् च सन्दधानो वृद्धिं स्वयस्यानुगुणं प्रपश्येत् ।
आसीत राजावसरप्रतीक्षस्तदा प्रयासं वितथं न कुर्यात् ॥२९

षड्रिवर्गस्य परस्य वृद्धिरुपेक्षणीयैव यतः सा विरागहेतुः सर्वस्यैव लोकस्य वैमुख्यकारणं या वृद्धिरन्ते अवसाने समूलघातं विनिहन्ति समूलं नाशयति सैव वृद्धिः समूलं विनिहन्ति सर्वेषां विरागहेतुत्वादजितेन्द्रियत्वात् दोषवत्त्वाच्च इति सूचितम् ॥ २७ ॥ भ०

तथास्ति स कालो यत्र विजिगीषुणाप्यात्मक्षय उपेक्षणीय इत्याह ।

जनेत्यादि । आत्मनोऽप्यवसादः क्षयः जनानुरागेण युतः सम्बद्धः अनुरक्तप्रकृतिसम्बद्धत्वाद्विजिगीषोः फलानुबन्धः फलमनुबध्नाति सुधिया विदुषा अधिपेन राज्ञा कामादिषड्वर्गजिता कामक्रोधलोभमोहमदेर्ष्याणां षण्णां वर्गः तज्जिता उपेक्षणीयः तत्रापि परैः सन्धिमभ्युपगम्य ज्ञात्वा अन्यथा क्षीणोऽयमिति परोऽभियुञ्जीत ॥ २८ ॥ ज० म०

जनेत्यादि । अधिपेन राज्ञा आत्मनोऽप्यवसादः क्षयः उपेक्षणीयः किं कृत्वा सन्धिमभ्युपगम्य शत्रुणा सन्धिमनुकृत्वान्यथा क्षीणोऽयमिति परेणाभियुक्तः स्यात् अवसादः कीदृशः जनानामनुरागेण युतो बद्धोऽनुरक्तप्रकृतिसम्बद्धत्वात् फलानुबन्धः फलं वृद्धिमनुबध्नातीति कृत् सत् कीदृशेनाधिपेन कामादीनां षण्णां वर्गं जितवता अतएव सुधिया नीतिज्ञेन कामक्रोधौ लोभमोहौ मद ईर्ष्या इतीह षड्इति षड्वर्गस्तं जयतीति कर्त्तरि क्विप् ॥ २८ ॥ भ०

यदा च विजिगीषुः सन्धिविग्रहाभ्यां फलं न पश्येत् तदा स्ववृद्धिप्रार्थ्यर्थमासनं कुर्यादित्युपदिशन्नाह ।

यदेत्यादि । यदा हि राजा विजिगीषावस्थितः विगृह्णन् विग्रहं कुर्वन् आत्मनोऽनुगुणामनुकूलां वृद्धिं न पश्येत् क्षयं वा परस्यात्मनोऽनुगुणं न पश्येत् सन्दधान इति सन्धिञ्च कुर्वन्नात्मनोऽनुगुणं न पश्येत् तदा आसीत स्ववृद्ध्यर्थमासनं कुर्यात् न विग्रहं सन्धिं

सन्धौ स्थितो वा जनयेत् स्ववृद्धिं
हन्यात् परं वोपनिषत्प्रयोगैः।
आश्रावयेदस्य जनं परैर्वा
विग्राह्य कुर्य्यादवहीनसन्धिम् ॥ ३० ॥

वा अवसरः कालस्तं प्रतीक्षत इति अवसरप्रतीक्षः कर्षयन् सन्धिं विग्रहस्य वा स्वपरवृद्धिक्षयानुकूलं कालं प्रतीक्षमाणः इत्यर्थः न पुनः प्रयासं सन्धिविग्रहोद्यमं वितथं निष्फलं निष्प्रयोजनं कुर्यात् यदा तु परं विग्रहीतुमशक्तः तदा आवराहकलहं समानमुपदेक्ष्यति ॥ २९ ॥ ज० म०

यदेति। यदा राजा विगृह्णन् विग्रहं कुर्वन् सन्दधानः सन्धिं कुर्वाणोऽपि अनुगुणामनुकूलामात्मनो वृद्धिं न पश्येत् न चानुगुणमनुकूलं परस्य क्षयं पश्येत् तदा आसीत आसनं कुर्यात् जिवासङ्‌ उपरमे विधौ स्त्री अवसरप्रतीक्षः अवसरं वृद्धियोग्यकालं प्रतीक्षमाण इति क्षमीक्षाचारिभ्यो ण इति परस्त्वेण णः क्षमते पचादित्वादन् किंवा अवसरे प्रतीक्षा यस्येति समासः वितथं निष्प्रयोजनं प्रयासं सन्धिविग्रहोद्यमं न कुर्यात् ॥ २९ ॥ म०

सन्धिं कृतवतोऽपि विजिगीषोः परेण वा वियुज्यमानस्य विधिमुपदिशन्नाह।

सन्धावित्यादि। सन्धौ स्थितो वर्त्तमानः जनयेत् स्ववृद्धिं यथा त्युच्छ्रितः तामभियुञ्जीत परं वा शत्रुम् उपनिषत्प्रयोगैः रहस्यप्रयोगैः विषादिदानैः हन्यात् विनाशयेत् सन्धिना जातविश्वासत्वात् आश्रावयेदस्य जनं देशादिदानेनाकर्षयेत् बलवता अभियुज्यमानः परैः विग्राह्य कलहं कारयित्वा अवहीनसन्धिं कुर्य्यात् तस्योपतापितत्वात् ॥ ३० ॥ ज० म०

सन्धावित्यादि। सन्धिं कृत्वापि विजिगीषुर्न निश्चेष्टस्तिष्ठेत् किन्तु सन्धौ स्थितः सन् स्ववृद्धिं जनयेत् उत्पादयेत् यथा वृद्धिं प्राप्य परं हन्तुं क्षमते उपनिषत्प्रयोगैरभिचारैरहः प्रयुक्तैर्विषादिदानैर्वा

सन्दर्शितस्नेहगुणः स्वयन्तून् विद्वेषयन् मण्डलमस्य भिन्द्यात् ।
इत्येवमादि प्रविधाय सन्धिर्वृद्धेर्विधेयोऽधिगमाभ्युपायः ॥२१॥

मत्वा सहिष्णूनपरोपजप्यान्
स्वकानधिष्ठाय जलान्तदुर्गान् ।
द्रुमाद्रिदुर्लङ्घ्यजलाप्रधृष्यान्
वर्तेत राजा रिपुविग्रहेण ॥ २२ ॥

परं हन्यात् सन्धिना जातविश्वासत्वात् भवेदुपनिषद्धर्मे वेदान्ते च रहस्यपीति विश्वः । अस्य परस्य जनं वंशलोकम् आश्रावयेत् देशादि-दानेन आकर्षयेत् परैस्तदीयशत्रुभिर्वा विग्रहं कलहं कारयित्वा बल-हीनसन्धिं त्यक्तसन्धिं कुर्यात् येन सह सन्धिः प्रागासीत् तेन सह सन्धिभङ्गं कुर्यादित्यर्थः ॥ २० ॥ भ०

सन्धित्सोर्विजिगीषोः शत्रुमण्डलभेदं कुर्वतः सुकरः सन्धिरित्युप-दिशन्नाह ।

सन्दर्शितेत्यादि । असच्छत्रवोऽनेन सन्धानं मा कार्षुरिति तान्वि-द्वेषयन् विमुखानुत्पादयन् दर्शितस्नेहगुणः प्रकटीकृतानुरागगुणः अस्य शत्रोर्मण्डलममात्यादिप्रकृतिभिन्द्यात् इत्येवमादि प्रविधाय सन्दर्शितेत्येवमादिवाक्यार्थं कृत्वेत्यर्थः वृद्धेरभिगमाभ्युपायः प्राप्तिहेतुः सन्धिर्विधेयोऽनुष्ठेयः ॥ २१ ॥ ज० म०

सन्दर्शितेत्यादि । मण्डलभेदे सन्धिमुपदिशति असच्छत्रवोऽनेन सन्धिं न कुर्युरिति तान् विद्वेषयन् विमुखान् कुर्वन् सन्दर्शितस्नेह-गुणः प्रकटितानुरागः सन् अस्य शत्रोर्मण्डलं सामादिभिर्भिन्द्यात् इत्येवमादि उक्तप्रकारादि प्रविधाय कृत्वा वृद्धेरधिगमाभ्युपायः प्राप्तिहेतुभूतः सन्धिर्विधेयः ॥ २१ ॥ भ०

विग्रहोऽपि विशिष्टस्यैव विजिगीषोर्न यस्य कस्यचिदित्युपदिशन्नाह ।

मत्वेत्यादि । स्वकानात्मीयाननुजीविनः सहिष्णून् समर्थान् अप-रोपजप्यान् परैरभेद्यान् जलान्ते ये दुर्गाः प्रदेशाः तानधिष्ठाय तत्र

शक्नोति यो न द्विषतो निहन्तुं विहन्यते नाथ्यबलैर्द्विषद्भिः ।
स श्वावराहं कलहं विदध्यादासीत दुर्गादि विवर्द्धयंश्च २२

स्थापयित्वा अधिशीङिति कर्मसंज्ञा कीदृशान् द्रुमैरद्रिभिर्दुर्लङ्घ्य-जलैश्चाप्रधृष्यान् अगम्यान् वनपर्वतजलभेदात् त्रिविधं दुर्गं रिपुणा सह यो विग्रहः तेन हेतुना राजा वर्द्धेत वृद्ध्युपचितः स्यात् ॥ २२ ॥ ज० म०

सन्धेर्वृद्धिहेतुत्वमुपदर्श्य विग्रहस्य वृद्धिहेतुत्वं कथ्यते ।

सत्वेत्यादि । अपरोपजप्यान् परैरभेद्यान् सहिष्णून् समर्थान् स्वकानात्मीयान् अनुजीविनो सत्वा निश्चित्य जनान्तदुर्गान् जनान्ते लोकान्ते दुर्गप्रदेशान् अधिष्ठाय तत्र स्थित्वा राजा रिपुविग्रहेण हेतुना वर्द्धेत उपचितः स्यात् न तु सहसा विग्रहणात् वृद्धिहेतुः कीदृशान् दुर्गान् द्रुमैरद्रिभिर्दुर्लङ्घ्यजलैश्च करणभूतैरप्रधृष्यान् परैरग-म्यान् वृक्षपर्वतवारिभेदात् त्रिविधं दुर्गमुक्तं दुःखेन गम्यते यत्र तद् दुर्गं वनजनगमादेरिति आधारे डः दुर्गोऽकमाव इत्युक्तेः ॥ २२ ॥ म०

यदा अरिविजिगीषू परस्परं हन्तुं न शक्तौ तदा विजिगीषो-रासनमुपदिशन्नाह ।

शक्नोतीत्यादि । यो विजिगीषुः अबलत्वात् द्विषतः शत्रून् अभि-हन्तुं विग्रहीतुं न शक्नोति अबलैर्द्विषद्भिर्न विहन्यते स विजिगीषुः श्वावराहं कलहं विदध्यात् अनुतिष्ठेत् श्वा च वराहश्च श्वावराहं तयोरि-मिव कलहं तस्येदमित्यण् यथा चण्डाला वराहं हन्तुमशक्ताः श्वानं विसृज्य योधयन्ति यद्ययं हतोऽनेन वा अयमिति तयोर्भक्ष्यत्वादुभयथा कार्य्यसिद्धेः तद्वद्द्वयोर्विद्विषतोः कलहं विदध्यात् स्वयञ्च दुर्गादि विवर्द्धयन् दुर्गसेतुवणिक्शून्यनिवेशनद्रव्यहस्तिवनकर्माण्युपचिन्वन् आसीत तिष्ठेत् ॥ २२ ॥ ज० म०

आसनकालः कथ्यते ।

शक्नोतीत्यादि । यो जिगीषुर्द्विषतः शत्रून् न निहन्तुं शक्नोति बलरहितैर्द्विषद्भिरपि न हन्यते स च श्वावराहं कुक्कुरसूकरसम्बन्धिनं

प्रयाणमात्रेण परे प्रसाध्ये वर्त्तेत यानेन क्षताभिरक्षः ।
अशक्नुवन् कर्त्तुमरेर्विघातं स्वकर्मरक्षाञ्च परं श्रयेत ॥ २४ ॥

कलहं कुर्यात् तत्तुल्ययोर्युद्धं सम्पादयेदित्यर्थः यथा चण्डालाः स्वयं वराहं हन्तुमशक्ताः श्वानं विमुच्य योधयन्ति तत्र यदि शुना वराहो हन्यते वराहेण वा श्वा हन्यते उभयथापि तेषां कार्य्यसिद्धिर्द्वयोरपि तेषां भक्ष्यत्वात् तथोभयोर्द्विषतोः कलहैर्जिगीषोरिति भावः । स्वयं दुर्गादि अष्टवर्गं विवर्द्धयन्नासीत विग्रहञ्च त्यक्त्वा तिष्ठेत् कृषिर्वणिक्-पथोदुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरधनादानं शून्यानाञ्च निवेश-नमित्येषोऽष्टवर्गः । श्वा च वराहश्चेति द्वन्द्वे श्ववराहेवति परकृतत्वेन पूर्वपदस्य विकल्पेन दीर्घत्वं लभते विश्वराजोऽदेत्यस्य योगविभागात् पक्षे पूर्वपदस्यादन्तत्वं सिद्धम् अत्र तु तदकरणेऽपि न क्षतिः विकार-संघेत्यादिना इदमर्थे ष्णे वृद्धौ वेष्टसिद्धेः विदध्यादित्यन्तर्भूतणर्थो बोध्यः ॥ २३ ॥ भ०

यदा विजिगीषुर्यानमात्रसाध्यं शत्रुमात्मानं वा शक्तिहीनं पश्येत् तदा यायात् संश्रयेतेति गुणद्वयमुपदिशन्नाह ।

प्रयाणमात्रेत्यादि । प्रयाणमात्रेण प्रसाध्ये परे शत्रौ नापरं विग्रहमपेक्षते यानेन वर्त्तेत स्वष्टतौ यतेत क्षताभिरक्षः अभियास्यतः कर्मणां द्विविधत्वप्रतिविधानात् अरेर्विघातं दुर्गादिकर्मोपघातान् स्वक-र्मरक्षां स्वेषां दुर्गादिकर्मणां अपरेणोपहन्यमानानां रक्षां कर्त्तुमशक्नु-वन् शक्तिहीनत्वात् परं श्रयेत यमाश्रित्य क्षयस्थानात् स्थानवृद्धिमाप्नुयात् परो द्विविधः अभियोक्ता तद्विशिष्टबलोऽपरोऽन्य इति ॥२४॥ ज० म०

यानाश्रययोः कालः कथ्यते ।

प्रयाणेत्यादि । परे शत्रौ प्रयाणमात्रेण प्रसाध्येऽभिभवनीये सति राजा यानेन वर्त्तेत स्वष्टत्तौ यतेत कीदृशः सन् क्षतात्मदेशस्य क्षताभि सर्वतोभावेन रक्षा येन तादृशः अरेः शत्रोर्विघातं स्वेषां दुर्गादिकर्मणां परेरुपहन्यमानानाञ्च रक्षां कर्त्तुमशक्नुवन् असमर्थो भवन् परं श्रयेत यतो वृद्धिमाप्नोतीत्यर्थः ॥ २४ ॥ भ०

एकेन सन्धिः कलहोऽपरेण
कार्य्योऽभितो वा प्रसमीक्ष्य वृद्धिम् ।
एवं प्रयुञ्जीत जिगीषुरेताः
नीतीर्विजानन्नहितात्मसारम् ॥ २५ ॥

त्वया तु लोके जनितो विरागः
प्रकोपितं मण्डलमिन्द्रमुख्यम ।
रामे तु राजन् ! विपरीतमेतत्
पश्यामि तेनाभ्यधिकं विपक्षम् ॥ २६ ॥

यदा तु सहायसाध्यं कार्य्यं पश्येत् तदा सन्धिविग्रहासनद्वैधी-भावमाश्रयेदित्युपदिशन्नाह ।

एकेनेत्यादि । अभित उभयपार्श्वयोः सन्धिना विग्रहेण वा वृद्धिं प्रसमीक्ष्य पश्चादेकेन शत्रुणा स्वयमभियुक्तेन सन्धिः अपरेण सहायाभियुक्तेन विग्रहः कार्य्य एवमुक्तेन प्रकारेण अहितस्य शत्रोरात्मनश्च सारं बलाबलं विजिगीषुर्विजानन् एता नीतीः षाड्गुण्य-लक्षणाः प्रयुञ्जीत ॥ २५ ॥ ज० म०

द्वैधीभावप्रकारः कथ्यते ।

एकेनेत्यादि । अभित उभयपार्श्वयोः सन्धिविग्रहाभ्यां स्ववृद्धिं प्रसमीक्ष्य निरूप्य पश्चादेकेन शत्रुणा स्वयमभियुक्तेन सन्धिः अपरेणा-भियुक्तेन स्वयं विग्रहश्च कार्य्यः वाशब्दः समुच्चये पूर्वश्लोकापेक्षया पक्षान्तरे वा एवमुक्तप्रकारेणाहितस्य शत्रोरात्मनस्य सारं बलं विजा-नन् विजिगीषुरेता नीतीः षाड्गुण्यरूपाः प्रयुञ्जीत ॥ २५ ॥ भ०

त्वया पुनरेवं प्रयुक्ता इति दर्शयन्नाह ।

त्वयेत्यादि । त्वया पुनश्चतुर्वर्गोच्छेदकारिणा लोके जनितो विरागः इन्द्रमुख्यञ्च शक्रप्रधानं मण्डलं प्रकोपितं रामे तु सर्वमेतद्विप-रीतम् अनुरागेण जनितं मण्डलञ्चानुरञ्जितं तेनाभ्यधिकं विपक्षं राम पश्यामि ॥ २६ ॥ ज० म०

एकेन बाली निहतः शरेण सुहृत्तमस्ते रचितश्च राजा ।
यदैव सुग्रीवकपिः परेण तदैव कार्य्यं भवतो विनष्टम् ॥३७॥
प्राकारमात्रावरणः प्रभावः खरादिभिर्यो निहतैस्तवाभूत् ।
लङ्काप्रदाहाच्चबधद्रुभङ्गैः क्वाप्यत्वसावप्यधुनातिमात्रम् ॥३८॥

उक्तरीत्या नीतितत्त्वं प्रदर्श्य रावणे तद्विपरीत्यात् सन्धिरेव युक्त इति प्रकृतमभिधीयते ।

त्वयेत्यादि । त्वया पुनर्लोके विरागो जनितः परद्रोहित्वात् इन्द्रादिकं राजमण्डलं प्रकोपितं तेनैषं भवतो वृद्धिरपि न शुभोदर्केति भावः । हे राजन् ! रामे पुनः सर्वमिदं विपरीतं धार्मिकत्वेन सर्वजनानुरागस्य जनितत्वात् त्वद्रोहत्वेनेन्द्रादिसम्मतत्वाच्च तेन विपक्षं शत्रुं रामं त्वत्तोऽभ्यधिकं पश्यामि विरागं इति रञ्जेर्घञन्तस्य घञ्घावोदेत्यादिना निपातितम् ॥ ३६ ॥ भ०

नचेदानीम्भवतः कार्य्यं विनष्टम् अपितु प्राग्भवतीति दर्शयन्नाह ।

एकेनेत्यादि । तव सुहृत्तमो बाली यदैव परेण रामेण कर्त्रा शरेणैकेन निहतः सुग्रीवस्य कपिस्त्वच्छत्रू राजा रचितः स्थापितः तदैव विनष्टमिति ॥ ३७ ॥ ज० म०

रावणस्य मित्रक्षयं रामस्य मित्रोपचयं कर्मणामाधिक्यञ्च दर्शयितुमिदमुच्यते ।

एकेनेत्यादि । परेण शत्रुणा रामेण कर्त्रा एकेन शरेण तव सुहृत्तमो बाली यदैव निहतो मारितः सुग्रीवश्च कपिर्यदैव राजा रचितः कृतः तदैव भवतः कार्य्यं विनष्टं येन भवतो जेता बाली अल्पायासेन हतस्तेन भवज्जयस्यातिसुकरत्वात् ॥ ३७ ॥ भ०

अथ प्रतापवतो मम कथं कार्य्यं विनश्यति प्रतापादेव शत्रवो नश्यन्तीति चेदाह ।

प्राकारेत्यादि । तव त्रैलोक्यप्रमाथी प्रताप आसीत् पुनः खरादिभिर्निहतैः प्राकारमात्रावरणो जातः लङ्कायामेव समर्थत्वात् अस्या-

षड्वर्गवश्यः परिमूढबन्धुरुच्छिन्नमित्रो विगुणैरुपेतः ।
मा पादयुद्धं द्विरदेन कार्षीर्नम क्षितीन्द्रं प्रणतोपभोग्यम् २९

वयमधुना लङ्कादाहेन अक्षवधेन द्रुमभङ्गेन अशोकवनिकाभङ्गेन च अतिमात्रमत्यर्थं क्लाम्यति ग्लानिमुपगच्छति ॥ २८ ॥ ज० म०

मत्प्रतापादेव कार्य्यं सिध्यतीत्याशङ्कामपनेतुमिदमुच्यते ।

प्राकारेत्यादि । यस्तव प्रभावः निहतैः खरादिभिः प्राकारमात्रावरणोऽभूत् प्राकारमात्रमावरणं यस्य तादृशो जातः पूर्वं त्रैलोक्यव्यापिनोऽपि तस्येदानीं लङ्कामात्रे पर्याप्तत्वात् असावपि अधुनेदानीं लङ्कायाः प्रदाहेनाक्षस्य वधेन वृक्षाणां भङ्गेन चातिमात्रमत्यर्थं क्लाम्यति ग्लानिमुपयाति ॥ २८ ॥ म०

अतो रामेण सह युद्धं न घटते तदेव दर्शयन्नाह ।

षड्वर्गेत्यादि । वशङ्गतो वश्यः कामादेर्वश्यः परिमूढबन्धुः मूर्खामात्यादिपरिवारः उच्छिन्नमित्रः वर्गस्यासम्भवात् अरिगणैरुपेतः तद्विपरीतो रामः अतो द्विरदेन पादयुद्धमिव तेन ज्यायसा मा विग्रहं कार्षीः अपितु क्षितीन्द्रं रामं नम प्रणतोपभोग्यम् अनेन हीनसन्धिमाह तथाचोक्तं प्रवृत्तं मन्त्रिणाक्रान्तो राजा बलवता बलैः । सन्धिनोपनमेत्तूर्णं दण्डकोषात्मभूमिभिरिति ॥२९॥ ज० म०

रामेण सह तव युद्धमनुचितमिति दर्शयितुमिदमुच्यते ।

षड्वर्गेत्यादि । त्वं द्विरदेन हस्तिना सह पादयुद्धं पादेन विग्रहं मा कार्षीः न कुरु षड्वर्गवश्यत्वादिदोषहीनेन रामेण सह कलहो द्विरदेन युद्धस्य तुल्य इत्यर्थः द्विरदेन पादयुद्धमित्यनेन बलीयसा दुर्बलस्य युद्धमुपलक्ष्यते किन्तु क्षितीन्द्रं रामं नाम प्रणम यस्मादसौ प्रणतैरेव जनैरुपभुज्यते वशीक्रियते त्वं कीदृशः षड्वर्गस्य कामक्रोधलोभमोहमदेर्ष्यात्मकस्य वश्य आयत्तः वशं गतो वश्यः इत्येकादित य: परिमूढबन्धुर्मूर्खपरीवारः उच्छिन्नमित्रः हतबालिखरादिमित्रः मित्ररहितो वा अतएव विगुणैरुपेतः येन गुणेन दोष उत्पद्यते तेन युक्तः नमेत्यत्र विधिनिमन्त्रणेत्यादिना प्राप्तकाले लोट् ॥ २९ ॥ म०

रामोऽपि दाराहरणेन तप्तो वयं हतैर्बन्धुभिरात्मतुल्यैः ।
तप्तस्य तप्तेन यथायसो नः सन्धिः परेणास्तु विमुञ्च सीताम् ॥ ४० ॥

सन्धुक्षितं मण्डलचण्डवातै-
रमर्षतीक्ष्णं क्षितिपालतेजः ।
सामाम्भसा शान्तिमुपैतु राजन् !
प्रसीद जीवाम सबन्धुभृत्याः ॥ ४१ ॥

युवयोः सन्धानकारणमस्त्येवेति दर्शयन्नाह ।

राम इत्यादि । तथा तप्तेनायसा तप्तस्यायसः सन्धिर्घटते तद्वदस्माकं तप्तानां तप्तेन रामेण सन्धिरस्तु अतो मुञ्च सीतां सन्धिनिमित्तम् ॥ ४० ॥ ज० म०

कथमावयोर्भिन्नधर्मयोः सन्धिः स्यादित्याशङ्कायामिदमुच्यते ।

राम इत्यादि । दाराहरणेन सीतापहारेण रामस्तप्तो वयमप्यात्मतुल्यैर्हतैर्बन्धुभिरक्षादिभिस्तप्ताः यथा तप्तेन लौहेन तप्तस्य लौहस्य सन्धिर्घटना भवति तथा परेण रामेणापि नोऽस्माकं सन्धिरस्तु उभयोः सन्तप्तयोः सन्धिरिति न्यायात् अतः सीतां विमुञ्च त्यज ॥ ४० ॥ भ०

यदि च तेन तप्तेनापि सता ज्यायसा न सन्धानं तदा सर्वे वयं न जीवाम तव तेजसो विनाशकत्वादिति दर्शयन्नाह ।

सन्धुक्षितमित्यादि । क्षितिपालतेजः सीतावियोगजम् इन्द्रादिमण्डलैश्चण्डवातैरिव सन्धुक्षितं दीपितम् अमर्षतीक्ष्णम् असहिष्णुतयासह्यं सामाम्भसा साम्ना सन्धिना अम्भसेव शान्तिमुपैतु हे राजन् ! प्रसीद किं संरम्भेन अन्यथा तमारण्योऽग्निरिव दुःखामर्षजन्तेजो विक्रमयतीति ॥ ४१ ॥ ज० म०

सन्धिं विनापि जीवनं नाप्नोति दर्शयितुमिदमुच्यते ।

सन्धुक्षितमित्यादि । क्षितिपालस्य तेजः साम्ना सन्धिना अम्भसा जलेनेव शान्तिमुपैतु गच्छतु तेजःशब्देनात्र सीताविरहमन्युजोऽग्निरुच्यते कीदृशं तेजः इन्द्रादिराजमण्डलैः प्रचण्डवातैरिव सन्धु-

अपक्वकुम्भाविव भङ्गभाजौ
राजन्नियातां मरणं समानौ ।
वीर्य्ये स्थितः किन्तु कृतानुरागः
रामो भवांस्तूत्तमभूरिवैरी ॥ ४२ ॥

च्चितं दीपितम् अमर्षेण पराभवासहिष्णुतया तीक्ष्णमस्त्रं तस्मात् हे राजन् ! प्रसीद किं क्रोधेन बन्धुभिस्त्वैव सह वयं जीवाम विधिनिमन्त्रणेत्यादिना प्रार्थनायां गी ॥ ४१ ॥ म०

समानयोरपि सन्धानमेव युज्यते न विग्रहः किं पुनर्ज्यायसीत्यत्र हेतुं दर्शयन्नाह ।

अपक्वेत्यादि । हे राजन् ! यथा कुम्भावपक्वौ भङ्गभाजौ परस्पराभिहतौ विनश्यतः तद्वत् समानौ युध्यन्तौ मरणमियातां सार्वधातुकप्रकारत्वादिणो न दीर्घत्वं राजन्नियातामिति ङमोह्रस्वादचिङ्लुट् किन्तु रामो वीर्य्ये स्थितः उत्साहशक्तियुक्त इत्यर्थः विक्रमबलं चोत्साहशक्तिः कृतानुरागश्च अनुरक्तमण्डलत्वात् भवान् पुनः उत्तमभूरिवैरी उत्तमा इन्द्रादयो भूरयः प्रभूता वैरिणः शत्रवो यस्य अतस्तेन सन्धानमेव युक्तं न विग्रहः ननु च समज्यायोभ्यां सन्धीयेत हीनेनैव विगृह्णीयात् मन्त्रप्रभावोत्साहशक्तिभिर्युक्तो ज्यायानपचितो हीनः तुल्यशक्तिः समः तत्र ज्ञानबलं मन्त्रशक्तिः कोषदण्डबलं प्रभुशक्तिः विक्रमबलम् उत्साहशक्तिः ॥ ४२ ॥ ज० म०

अपक्वकुम्भावित्यादि । हे राजन् ! यथा अपक्वकुम्भौ परस्पराभिघातभङ्गभाजौ तथा समानौ युध्यमानौ मरणमियाताम् इयः स्त्री समानयोर्विग्रहः कथञ्चिद्युज्यतेऽपि किन्तु रामो वीर्य्ये स्थित उत्साहशक्तिसम्पन्नः कृतानुरागः सर्वलोकेष्विति शेषः भवान् पुनरुत्तमानां भूरीणां बहूनामिन्द्रादीनां वैरी उत्तमा भूरयो बहवो वैरिणो यस्येति वा अतो हीनाधिकयोः सन्धिरेवोचित इति भावः ॥४२॥ म०

सत्यामुत्साहशक्तौ शेषयोरभावात्तत्र हीनेन विग्रह एव युज्यत इत्याह ।

दण्डेन कोषेण च मन्यसे चेत् प्रकृष्टमात्मानमरेस्तथापि।
रिक्तस्य पूर्णेन वृथा विनाशः पूर्णस्य भङ्गे बहु हीयते तु ॥४३॥
क्लिष्टात्मभृत्यः परिमृग्यसम्पन्मानी यतेतापि स संश्रयेऽर्थे।
सन्देहमारोहति यः कृतार्थो नूनं रतिं तस्य करोति न श्रीः ॥४४॥

दण्डेनेत्यादि। दण्डेन चतुरङ्गेन बलेन कोषेण हेमरूप्यादिना यदि प्रकृष्टमात्मानमरेः सकाशान्मन्यसे तथाप्येवमपि न युक्तं यतो रिक्तस्य पूर्णेन भवता विनाशो भङ्गः वृथा निष्फलः पूर्णस्य पुनर्भवतो भङ्गे बहु हीयत इति हीनेन बलवतोऽपि सन्धानं युक्तं रिक्तस्य भङ्गो माऽभूत् ॥ ४३ ॥ ज० म०

शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजा इति कोषः। दण्डबलं प्रभुशक्तिः अधिकविक्रम उत्साहशक्तिः ज्ञानबलं मन्त्रशक्तिस्तत्र यद्यपि राम उत्साहशक्तिशाली तथापि प्रभुशक्तिहीनः अहन्तु उत्साहप्रभुमन्त्रशक्तिभिर्युक्तः अतो हीनेनाधिकस्य विग्रह एवोचितो न तु सन्धिरित्याशङ्कायामुच्यते।

दण्डेनेत्यादि। दण्डेन चतुरङ्गबलेन कोषेण च हेमरूप्यादिना चेत् यदि अरेः शत्रोः सकाशादात्मानं प्रकृष्टं मन्यसे तथापि रिक्तस्य कोषदण्डहीनस्य रामस्य पूर्णेन भवता हेतुना विनाशो वृथा निष्फलः पूर्णस्य भवतो रिक्तेन रामेण भङ्गे सति पुनर्बहु हीयते अतो यस्मिन् जिते किमपि फलं नास्ति तेन हीनेनापि सन्धिः कर्त्तुमुचितः वृथा सङ्कटप्रवेशानौचित्यात्। दण्डो यमे मानभेदे लगुडे दमसैन्ययोरिति विश्वः ॥ ४३ ॥ भ०

अन्यद्विजयफलमस्तीति चेदाह।

क्लिष्टेत्यादि। यो मानी क्लिष्टात्मभृत्यः चिरकालं क्लिष्टशरीरः क्लिष्टभृत्यश्च परिमृग्यसम्पत् प्रार्थनीया विभूतिर्येन मृगयतेः स्वार्थिकणयन्तादपो यत् संश्रयेऽर्थे स्थाने स्यादिति यतेतापि यत्नं कुर्यात् सः कृतार्थो भवादृशः त्रैलोक्यविजयित्वात् सन्देहमारोहति सन्देहे

अशक्यान्यदोषाणि महाफलानि
समारभेतोपनयन् समाप्तिम् ।
कर्माणि राजा विहितानुरागः
विपर्यये स्याद् वितथः प्रयासः ॥ ४५ ॥

प्रवर्त्तते तस्य नूनमवश्यं श्रीर्विभूतिः रतिं स्थितिं न करोति ॥ ४४ ॥
ज० म०

रिकस्य भङ्गो मा भूदन्यत् किञ्चित् फलं विजयो वैरिनिर्यातनञ्च फलमस्तीत्याशङ्क्येदमुच्यते ।

क्लिष्टात्मेत्यादि । क्लिष्टो दुःखित आत्मा शरीरं भृत्यस्य यस्य स परिक्लिष्टभृत्यस्सन् प्रार्थनीयविभूतिर्मानी संशयेऽर्थे सन्दिग्धे कार्ये यतेतापि यत्नं कुर्य्यादपि यः पुरः कृतार्थो भवाद्दशस्त्रैलोक्यविजयित्वात् स्कन्दे कुमारोऽहमिति सम्भाव्यमानविनाशे सन्दिग्धकर्मणि प्रवर्त्तते तस्य नूनमवश्यं श्रीः लक्ष्मीः रतिं स्थितिं प्रीतिं वा न करोति तस्येति क्वचित्पाठः स्वगत्कण्ठ मार्गणे तव्यानीया इति कर्मणि षः ॥ ४४ ॥ भ०

कदा तर्हि विग्रह इत्याह ।

शक्यानीत्यादि । शक्यानि यानि कर्तुं पार्यन्ते अदोषाणि शुद्धानि महाफलानि कार्याणि राजा समारभेत विग्रहेणेत्यर्थात् उपनयन् समाप्तिं नयन् विहितानुरागोऽनुरक्तप्रकृतिः विपर्यये तद्वैपरीत्ये अशक्यानि दोषाधिकानि स्वल्पफलानि राजा समारभेत समाप्तिं च न नयति स वितथः प्रयासः निष्फलो विग्रहः ॥ ४५ ॥ ज० म०

तर्हि कदा विग्रहः कर्त्तव्य इत्याशङ्क्येदमुच्यते ।

शक्यानीत्यादि । राजा समाप्तिमुपनयन् फलान्तमुपगच्छन् कर्माणि समारभेत प्रस्तुतानि कुर्य्याद्विग्रहेणेत्यर्थात् यदि विहितानुरागोऽनुरक्तप्रकृतिमण्डलो भवेत् कीदृशानि शक्यानि कर्तुमित्यर्थात् अदोषाणि पर्य्यन्तशुद्धानि महाफलानि बहुप्रयोजनानि विपर्यये एतस्य वैपरीत्ये विरक्तप्रकृतिमण्डलो राजा समाप्तिमकुर्वन् प्रयुञ्ज-

जेतुं न शक्यो नृपतिः सुनीतिः
दोषः क्षयादिः कलहे ध्रुवश्च।
फलं न किञ्चिन्न शुभा समाप्तिः
कृतानुरागं भुवि संत्यजारिम्॥ ४६॥

त्वन्मित्रनाशो निजमित्रलाभः
समेतसैन्यः स च मित्रकृत्ये।
भोग्यो वधः पश्य शरेण शत्रोः
प्रसाधितो वालिवधे न कोऽर्थः॥ ४७॥

कानि सदोषाणि निष्फलानि कर्माणि समारभेत तदा प्रयासो वितथो मिथ्या निष्फलः स्यात् समस्तपाठे वितथाः प्रयासा यस्य तादृशो राजा स्यात्॥ ४५॥ भ०

तथापि रामविग्रहेण सर्वमस्तीति चैताह।

जेतुमित्यादि। नृपती रामः जेतुं न शक्यः विग्रहेण दत्ताह-शक्तियुक्तत्वात् तेन सह कलहे दोषः क्षयादिः ध्रुवोऽवश्यम्भावी विग्रहे वा सति जयस्य प्रयासप्रत्यवाया भवन्तीत्युक्तं फलं न किञ्चित् न शुभा समाप्तिः स्वबन्धुविनाशहेतुत्वात् अतो योद्धुमरिं ज्यायांसं संत्यज भुवि कृतानुरागं त्वं पुनरकृतानुराग इति॥ ४६॥ ज० म०

तथापि रामविग्रहे सर्वमेतदस्तीत्याशङ्क्यैतदुच्यते।

जेतुमित्यादि। नृपती रामो जेतुमभिभवितुं न शक्यो यतः सुनीतिस्तेन सह कलहे विग्रहे वस्तुक्षयादिर्दोषो ध्रुवः अवश्यम्भावी फलन्तु न किञ्चिद्रत्नादिलाभशून्यत्वात् समाप्तिरपि न शुभा न साध्वी विनाशहेतुत्वात् समाप्तरक्या वा तत्सैन्यस्याप्यनेकत्वात् अतो भुवि कृतानुरागम् अरिं रामं त्यज॥ ४६॥ भ०

अन्यच्च वालिवध एव तस्यार्थसम्पज्जयायेति दर्शयन्नाह।

त्वन्मित्रेत्यादि। वालिवधे सति शरेण रामस्य कोऽर्थो न प्रसाधितः अपि तु सर्व एव पश्य तथाहि त्वन्मित्रनाशः तस्य च

लोभाद्भयाद्वाभिगतः कपीन्द्रः
न राघवं येन भवेद्विभेद्यः ।
स्थितः सतां वर्त्मनि लब्धराज्यः
प्रतिप्रियं सोऽभ्यगमच्चिकीर्षुः ॥ ४८ ॥

मित्रलाभः मित्रञ्च तल्लाभश्चेति समेतसैन्यः कृच्छ्रे सङ्कटप्राप्तौ भृतः भोग्यः उपजीव्यः वशोऽनुकूल इति ॥ ४७ ॥ ज० म०

रामस्य सुनीतित्वं दर्शयितुमिदमुच्यते ।

त्वन्मित्रेत्यादि । पश्य निरूपय शरेण वालिवधे सति शक्तो रामस्य कोऽर्थो न प्रसाधितः न सम्पादितः अपि तु सर्व एव प्रथमं त्वन्मित्रस्य वालिनो नाशः निजमित्रस्य सुग्रीवस्य लाभः प्राप्तिः स चेति बुद्धिस्थं परामृशति मित्रस्य क्लीवत्वात् किंवा लाभ इति कर्मणि घञ् मित्रञ्च तल्लाभश्चेति समासः स च मित्ररूपो लाभः मित्रस्य रामस्य कृच्छ्रे व्यसने समेतसैन्यः भोग्यः उपजीव्यः वशोऽनुकूलः॥४७॥भ०

तं विभिद्य साधयिष्यामीति चेदाह ।

लोभादित्यादि । क्रुद्धलुब्धभीतावमानितास्चत्वारो भृत्याः परस्य भेद्याः तत्र कपीन्द्रो राघवं लोभाद्भयाद्वा त्रासाद्वा नाभिगतः येन हेतुनाऽयं विभेद्यः स्यात् यस्मादसौ सतां मार्गे स्थितः सन् लब्धराज्यो लाभरतः प्रतिप्रियं चिकीर्षुः ॥ ४८ ॥ ज० म०

अनेन मित्रभेदं कृत्वा तं जेष्यामीत्याशङ्क्येदमुच्यते ।

लोभादित्यादि । क्रुद्धलुब्धभीतापमानितास्त्वारो भेद्या भवन्ति तत्र कपीन्द्रः सुग्रीवः सम्प्रति लोभाद्भयाद्वा राघवं रामं नाभिगतो येन लोभ्यमानो भीतो वा सन् विभेद्यो भेदार्हो भेत्तुं शक्यो वा भवेत् भेद्याः शक्यार्हे इति घ्यण् स कपीन्द्रः प्राप्तराज्यः साध्वाचारत्वात् सतां मार्गे धर्मे स्थितः सन् प्रतिप्रियं प्रत्युपकारं कर्त्तुमिच्छुरभ्यागमत् राममभिगतः लब्धराज्यत्वेन निर्लोभत्वं रामाभिगमेन निर्भयत्वं क्रोधोऽपमानश्चासम्भवाद्नोक्तः ॥ ४८ ॥ भ०

तदनुजीविनोऽपि न भेद्या इति दर्शयति ।

फलाशिनो निर्झरकुञ्जभाजो
दिव्याङ्गनानङ्गरसानभिज्ञाः ।
न्यग्जातयो रत्नवरैरलभ्याः
मुख्याः कपीनामपि नोपजप्याः ॥ ४९ ॥

कृताभिषेको युवराजराज्ये सुग्रीवराजेन सुताविशेषम् ।
ताराविधेयेन कथं विकारं तारासुतो यास्यति राक्षसार्थम् ५०

फलाशिन इत्यादि । कपीनामपि मुख्या नीलकुमुदादयोऽपि नोपजप्याः नोपजपितुं शक्याः यतः फलाशिनो मिष्टान्ननिरपेक्षाः निर्झरकुञ्जभाजः न रम्यप्रासादवासिनः दिव्याङ्गनानङ्गरसानभिज्ञाः दिव्याङ्गनासु योऽनङ्गरसः सुरतरसः तदनभिज्ञा न्यग्जातयः न्यञ्च्तीति ऋत्विगित्यादिना क्विन् ॥ ४९ ॥ ज० म०

तदनुजीविनोऽपि न भेद्या इति दर्शयन्नाह ।

फलाशिन इत्यादि । कपीनां मुख्याः श्रेष्ठा हनूमन्नीलकुमुदादयो न उपजप्या न भेदार्हा भेत्तुं न शक्या वा यतः फलाशिनः मिष्टान्ननिरपेक्षाः निर्झरकुञ्जभाजः न सुवासितजलप्रासादसेविनः दिव्याङ्गनासु योऽनङ्गरसः कामभोगस्तदनभिज्ञाः न्यग्जातयस्तिर्य्यग्योनयः अतएव रत्नवरैः इन्द्रनीलपद्मरागादिभिरपि न लभ्याः अपि शब्दः पूर्वश्लोकापेक्षया ॥ ४९ ॥ भ०

युवन्नितपुत्त्रोऽङ्गदोऽप्यभेद्य इति दर्शयन्नाह ।

कृतेत्यादि । सुग्रीवराजेन ताराविधेयेन ताराचित्तानुवर्त्तिना तारासुतोऽङ्गदः यौवराज्ये कृताभिषेकः सुताविशेषमिति क्रियाविशेषणं सुतनिर्विशेषं समैवायं सुतो न बालिन इति तत् कथं राक्षसार्थं विकारं भेदं यास्यति नैवेत्यर्थः ॥ ५० ॥ ज० म०

अमन्वितपुत्त्रोऽङ्गदः पितृबधामर्षात् राज्यलोभाच्च भेद्यः अन्योऽपिकपयस्तद्वचका एवेत्याशङ्क्यदमुच्यते ।

कृतेत्यादि । तारासुतोऽङ्गदः कथं राक्षसार्थं राक्षसहेतुकं राक्ष-

पश्यामि रामादधिकं समं वा नान्यं विरोधेऽप्युपाश्रयेम।
दत्त्वा वरं सानुशयः स्वयम्भूरिन्द्रादयः पूर्वतरं विरुद्धाः ॥५१॥

दुर्गाश्रितानां बहुनापि राजन्!
कालेन पार्ष्णिग्रहणादिहेतुः।

समीत्यर्थं वा विकारं भेदं यास्यति यतः सुताविशेषं यथा स्यात्तथा सुग्रीवराजेन युवराजराज्ये कृताभिषेकः कीदृशेन सुग्रीवराजेन तारा-विधेयेन ताराचित्तानुवर्त्तिना एतेन तत्स्वैश्वर्य्यत्वात् सुग्रीवायत्ततया भ्रातुरधीनत्वाद्भेद्य एवायमिति दाढर्यं प्रतिपादितं सुतोऽविशेषो यत्नेत्यभिषेकक्रियाविशेषणं समवायं युक्तो न वालिन इत्येवं कपे-र्वेत्यर्थः विधेयो विनयग्राहीत्यमरः। अर्थोऽभिधेये शब्दानां धन-कारणवस्तुषु। प्रयोजने निवृत्तौ च विषये च प्रवर्त्तते ॥ ५० ॥ म०

अन्यसमाश्रयादपि रामेण विग्रहो न युज्यत इति दर्शयन्नाह।

पश्यामीत्यादि। रामादधिकं ज्यायांसं समानं वा न पश्यामि यं विरोधे विग्रहनिमित्तमुपाश्रयेम आश्रयं गच्छेम संप्रश्ने लिङ् स्वयम्भूर्ब्रह्मा तावन्नाश्रयः यतो वरं दत्त्वा सानुशयः विप्रतीसारवान् जातः किमिदमकार्य्यमनुष्ठितं मयेति इन्द्रादयस्तु पूर्वतरं विरुद्धाः ॥ ५१ ॥ ज० म०

अन्यमाश्रित्य रामं जेष्यामीत्यत्रेदमुच्यते।

पश्यामीत्यादि। रामादधिकं श्रेष्ठं समं तुल्यं वा अन्यं न पश्यामि विरोधे विग्रहनिमित्तं यमुपाश्रयेम आश्रयं गच्छेम विधि-निमन्त्रणेत्यादिना संप्रश्ने लिङ् तर्हि देवा एवाश्रीयन्तामित्यत आह स्वयम्भूर्ब्रह्मा वरं दत्त्वा सानुशयः पश्चात्तापान्वितः किमिदमकार्य्यं मया कृतमिति अन्ये इन्द्रादयो देवाः पूर्वकालमेव विरुद्धा व्यरो-धयन्त ॥ ५१ ॥ भ०

एवं दुर्गसमाश्रयोऽपि न युज्यत इति दर्शयन्नाह।

दुर्गेत्यादि। दुर्गाश्रितानामस्माकं दुर्गोपरोधं कुर्वतः शत्रोर्बहुनापि कालेन हे राजन्! पार्ष्णिग्रहणादेः आदिशब्दादाटविकान्तपालादि-

दुर्गोपरोधं न च कुर्वतोऽस्ति
शत्रोश्चिरेणापि दशास्य हानिः ॥ ५२ ॥
शस्त्रं तरूर्वीधरमस्तु पानं
वृत्तिः फलैर्नो गजवाजिनाद्यैः ।
राष्ट्रं न पश्चाच्च जनोऽभिरक्ष्यः
किं दुःस्थमाचक्ष्व भवेत् परेषाम् ॥ ५३ ॥

प्रकोपस्य हेतुर्नास्ति यद्वशादुपरोधो न भविष्यति अत्र स्थितानां जय एव केवलं न च शत्रोरुपरोधं कुर्वतः चिरेणापि हानिः ॥५२॥ ज० म०

दुर्गमाश्रित्य रामं वञ्चयिष्यामि इत्यत्रेदमुच्यते ।

दुर्गाश्रितानामित्यादि । हे राजन् ! हे दशास्य ! दुर्गमाश्रितानामप्यस्माकं बहुनापि कालेन पार्ष्णिग्रहणमितोद्यमादिकृतो हेतुरस्ति तस्मात् दुर्गस्थितानामपि जय एव यद्वा दुर्गाश्रितानामप्यस्माकं पार्ष्णिग्रहणादिहेतुका हानिरवश्यं बहुनापि कालेन भविष्यति जगद्वैरित्वादस्माकमस्मिन्नवसरे अन्येऽपि पार्ष्णिग्राहादयो हानिं करिष्यन्तीत्यर्थः । पार्ष्णिः स्याद्गर्भस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्राहे धनेऽपि चेति कोषः । अस्मद्दुर्गोपरोधं कुर्वतस्तु शत्रोश्चिरेणापि कालेन न हानिर्नापचयो भविष्यति अस्मदतिरिक्तस्य तद्वैरिणोऽसत्त्वात् अतो दुर्गाश्रयोऽपि न युज्यते ॥ ५२ ॥ भ०

युद्धशरीरोपयोगिनां सर्वदा सम्भवात् तदेव दर्शयन्नाह ।

शस्त्रमित्यादि । तरवश्च उर्वीधराश्चेति जातिरप्राणिनामिति एकवद्भावः तच्छस्त्रं न खड्गादि पानमम्बु न मैरेयादि फलैर्वृत्तिः नौदनादिभिः नो गजवाजिनाद्यैः शरीरसात्मत्वाच्छिन्नाः राष्ट्रं देशो न पश्चात् अतएव तत्स्थो जनो नाभिरक्ष्यः एवं च सति परेषां किं दुःस्थम् इत्याचक्ष्व कथय ॥ ५३ ॥ ज० म०

परेषां युद्धोपयोगिनो वस्तुनः चयात्तेषामपि कथं न हानिरित्यत्रेदमुच्यते ।

सन्धानमेवास्तु परेण तस्मात्
नान्योऽभ्युपायोऽस्ति निरूप्यमाणः।
नूनं विसन्धौ त्वयि सर्वमेतत्
नेष्यन्ति नाशं कपयोऽचिरेण ॥ ५४ ॥

विभीषणोक्तं बहु मन्यमानः प्रोन्नम्य देहं परिणामनम्रम्।
स्खलद्वलिर्वार्द्धककम्प्रमूर्द्धा मातामहो रावणमित्युवाच ॥५५॥

शस्त्रमित्यादि। तदुर्वीवरं ऋष्यमूकपर्वतं सर्वेषां सुग्रीवादीनां शस्त्रं न खड्गादि तरवश्च उर्वीधराश्चेति समाहारद्वन्द्वः अप्राणिजातित्वात् समाहार इति परः। शस्यते हन्यते अनेनेति शस्त्रम् उणप्रत्ययः स्तासुसिति त्रः अम्बु जलं पानं पेयं न मद्यादि पीयते इदमिति कर्मणि अनट् फलैर्वृत्तिर्जीविका नौदनादिभिः हस्तिनोऽश्वाः स्त्रियश्च न सन्ति अतः शरीरमात्रत्वान्निश्चिन्ताः राष्ट्रं देशोऽपि न पश्चादस्ति अतएव अवस्थो जनोऽपि रक्षणीयो नास्ति यदर्थं देशगमनं स्यात् एवं सति परेषां सुग्रीवादीनां किं दुःखं भवेत् तदाचक्ष्व कथय एतद्विपरीतमस्माकं सर्वमिति भावः ॥ ५३ ॥ भ०

अतो रामेण ज्यायसा सन्धिरेवास्तु न विग्रह इति तदेव दर्शयन्नाह सन्धानमित्यादि। तस्मात्परेण सन्धिरेवास्तु अन्य उपायो नास्ति अन्यथा त्वयि विरुद्धबुद्धौ सर्वं कपयो विनाशयिष्यन्तीति ॥ ५४ ॥ ज० म०

सन्धानमित्यादि। तस्मात् पूर्वोक्तकारणात् परेण रामेण सह सन्धिरेव भवतु निरूप्यमाणः चिन्त्यमानोऽन्योऽभ्युपायो नास्ति त्वयि विसन्धौ सन्धिमकुर्वाणे सति एतत्सर्वं स्वाम्यादिकं कपयोऽचिरेणैव कालेन नाशं नेष्यन्ति प्रापयिष्यन्ति ॥ ५४ ॥ भ०

विभीषणोक्तमित्यादि। बहु मन्यमानः श्लाघमानो मातामहो मातुः पिता माल्यवान्नाम देहं परिणामनम्रं वयसः परिणामान्नमनशीलं प्रोन्नम्योद्धृत्य अतएव स्खलद्वलिः वार्द्धकेन वृद्धभावेन

एकः पदातिः पुरुषो धनुष्मान्
योऽनेकमायानि वियद्गतानि ।
रक्षःसहस्राणि चतुर्दशार्दीत्
का तत्र वो मानुषमात्रशङ्का ॥ ५६ ॥

कम्पनशीलादित्वात् वुञ् कम्प्रः कम्पनशीलो मूर्द्धा यस्य सः रावणमिति वक्ष्यमाणमुवाच ॥ ५५ ॥ ज० म०

विभीषणोक्तमित्यादि । विभीषणस्योक्तं वाक्यं बहु मन्यमानः श्लाघमानो मातामहो माल्यवान् देहं प्रोन्नम्य उत्क्षिप्य रावणमिति वक्ष्यमाणमुवाच कीदृशं देहं परिणामनम्रं वयसः परिणामाद्वार्द्धकाद्गमनशीलं स कीदृशः स्खलद्वलिः देहोत्क्षेपात् स्खलन्तो वलिर्जरासंगं चर्म यस्य वलिस्त्वामरदत्ते स्यात् जरसा श्लथचर्मणि । वार्द्धकेन वृद्धत्वेन कम्प्रः कम्पनशीलो मूर्द्धा मस्तको यस्य नमिकम्पिस्म्यां हिंसदीपेत्यादिना रः कम्पमूर्द्धेति पाठे कम्पते कम्प इति पचादित्वादन् वृद्धस्य भावो वार्द्धकं विकारसङ्केति कण् स्त्रित्वे त्रिरिति त्रिः मातुः पितेत्यर्थे मातृपितृभ्यां तत्पितरि डामहोऽभिधानात् ॥ ५५ ॥ भ०

एक इत्यादि । एकः असहायः पदातिः न हस्त्याद्यारूढः पुरुषो मनुष्यः धनुष्मान् धनुर्मात्रायुधः चतुर्दश रक्षःसहस्राणि अनेकमायानि वियद्गतानि प्रयातुमशक्यानि परेषामित्यर्थात् आर्दीत् हिंसितवान् का तत्र वः युष्माकं मानुषमात्रशङ्का नैवेत्यर्थः ॥५६॥ ज० म०

एक इत्यादि । यो रामो राक्षसानां चतुर्दश सहस्राण्यार्दीत् जघान तत्र वो युष्माकं का मानुषमात्रशङ्का मनुष्योऽयमिति को वितर्कः नैवेत्यर्थः कीदृशः एकः असहायः तत्रापि पदातिः न हस्त्याद्यारूढः पुरुषः मनुष्यो न देवादिः धनुष्मान् धनुर्मात्रायुधः कीदृशानि अनेकमायानि बहुकपटयुक्तानि वियद्गतानि आकाशे स्थितत्वात् हन्तुमशक्यानि सहस्रशब्दस्य संख्यामात्रवाचित्वेऽपि परम्परया गुणगुणिनोरभेदविवक्षया वा हननकर्मत्वं चतुर्दशसहस्रावच्छिन्नरक्षांसि आर्दीदित्यर्थः ॥ ५६ ॥ भ०

ब्रह्मर्षिभिर्नूनमयं सदेवैः सन्तापितैरात्रिचरक्षयाय ।
नराकृतिर्वानरसैन्यशाली जगत्यजय्यो विहितोऽभ्युपायः ५७

वज्राभिघातैरविरुग्णमूर्तेः
फेणैर्जलानामसुरस्य मूर्ध्नः ।
चकार भेदं मृदुभिर्महेन्द्रः
यथा तथैतत् किमपीति बोध्यम् ॥ ५८ ॥

किन्तु दिव्योऽसाविति तदेव दर्शयन्नाह ।

ब्रह्मेत्यादि । सदेवैर्ब्रह्मादिभिः सन्तापितैः रात्रिचरक्षयाय नूनमयं राम उपायो विहितः उत्पादितः नराकृतिः आकृत्यैव केवलं नरः वानरसैन्यशाली आद्यः अजय्यो जेतुमशक्यः ॥ ५७ ॥ ज० म०

यदि न मानुषमात्रं तर्हि कीदृशोऽयमित्यत्र भेद उच्यते ।

ब्रह्मर्षिभिरित्यादि । ब्रह्मर्षिभिर्वशिष्ठप्रभृतिभिः रात्रिचराणां राक्षसानां क्षयाय नाशाय नूनमयं रामोऽभ्युपायो विहितः कृतः कीदृशैः सदेवैर्देवतासहितैः सन्तापितैः पीडितैस्त्वयेत्यर्थात् उपायविधाने बीजमिदं कीदृशो नराकृतिः मनुष्यरूपी देवविशेषः वानरसैन्येन युक्तः शोभमान इति विद्यासागरः जगति अजय्यः जेतुं न शक्यः ॥ ५७ ॥ म०

दृष्टश्चैवम्प्रकारो देवानां मयेति दर्शयन्नाह ।

वज्रेत्यादि । असुरस्य नमुचेः वज्राभिघातैरपि अविरुग्णमूर्तेः अचूर्णितशरीरस्य सम्बन्धिनो मूर्ध्नो जलफेणैर्मृदुभिः भेदं चकार यथा तथेदमपि शमे स्थितानामपि देवानां नराकृति वस्तु किमपीति बोद्धव्यम् ॥ ५८ ॥ ज० म०

दृष्टश्चैवंविधप्रकारो देवानामिति दर्शयितुमिदमुच्यते ।

वज्रेत्यादि । वज्रस्याभिघातैरपि अविरुग्णमूर्तेरभग्नावयवस्य असुरस्य नमुचिनाम्नः सम्बन्धिनो मूर्ध्नो मस्तकस्य भेदं छेदं मृदुभिरपि

क्व स्त्रीविषह्याः करजाः क्व वक्षः
दैत्यस्य शैलेन्द्रशिलाविशालम् ।
सम्पश्यतैतत् द्युषदां सुनीतं
बिभेद तैस्तन्नरसिंहमूर्त्तिः ॥ ५९ ॥

प्रमादवांस्त्वं च्युतधर्मवर्त्मा
गतो मुनीनामपि शत्रुभावम् ।
कुलस्य शान्तिं बहु मन्यसे चेत्
कुरुष्व राजेन्द्र ! विभीषणोक्तम् ॥ ६० ॥

जलानां फेनैर्महेन्द्रश्चकार यथा तथा इदमपि नराकृति किमपि वस्तु देवानामपि बोध्यं ज्ञेयं भवद्भिरित्यर्थात् ॥ ५८ ॥ भ०

अन्यथा कथं फेनपिण्डैर्विनाश इत्याह ।

क्व स्त्रीत्यादि । स्त्रीविषह्याः स्त्रीभिः सोढुं शक्याः करजा नखाः क्व दैत्यस्य हिरण्यकशिपोः शैलेन्द्रशिलाविशालं वक्षः क्व च वक्षःकरजयोरपि दूरमन्तरं तथापि द्युषदां देवानाम् एतत्सुनीतं सुनयं सम्पश्यत यत् तैर्नखैर्नरसिंहमूर्त्तिः तद्वक्षो बिभेद ॥५९॥ ज०म०

क्व स्त्रीत्यादि । क्व स्त्रीभिरपि विशेषेणाकष्टेन सोढुं शक्याः करजा नखाः क्व दैत्यस्य हिरण्यकशिपोः शैलेन्द्रशिलावद्विशालं वक्षश्च क्व अत्यन्तासम्भवे कुद्वयं तथापि द्युषदां देवानामेतत् सुनीतं सुनयं यूयं पश्यत यतस्तैः करजैस्तद्वक्षो नरसिंहमूर्त्तिर्देवो बिभेद तद्वन्मनुष्योऽपि राक्षसान् हनिष्यतीति भावः दितेरपत्यमिति बाह्लाद्युतोऽत्यावादेरित्यादिना गर्गादित्वात् ण्यः ॥ ५९ ॥ ज०

यत्रैवमुपायेन देवैर्निहन्यते तत्र त्वं कथं प्रमादी सुखासीत्याह ।

प्रमादवानित्यादि । त्वं यतः प्रमादी अजितेन्द्रियत्वात् च्युतधर्मवर्त्मा त्यक्ताचारः अतो मुनीनामपि शमे स्थितानां शत्रुस्त्वं यतः ईदृशोऽपि कुलस्य शान्तिं बहु मन्यसे चेत् साधसे यदि हे राजेन्द्र ! कुरुष्व विभीषणोक्तम् ॥ ६० ॥ ज० म०

बोधेन तेन प्रतिलब्धसंज्ञः
निद्राविलाक्षः श्रुतकार्य्यसारः।
स्फुरद्घनः साम्बुरिवान्तरीक्षे
वाक्यं ततोऽभाषत कुम्भकर्णः॥ ६१॥

क्रियासमारम्भगतोऽभ्युपायो नृद्रव्यसम्पत्सहदेशकाला।
विपत्प्रतीकारयुतार्थसिद्धिर्मन्त्राङ्गमेतानि वदन्ति पञ्च॥६२॥

प्रमादवानित्यादि। हे राजेन्द्र! कुलस्य शान्तिं कल्याणं त्वं चेत् यदि वक्तु मन्यसे तदा विभीषणोक्तं कुरुष्व कीदृशस्त्वं प्रमादवान् असावधानस्त्यक्तधर्मपथोऽजितेन्द्रियत्वात् मुनीनां समदर्शिनामपि शत्रुत्वं प्राप्तः यदैव देवैरुपायेन हिरण्यकशिपुप्रभृतयोऽपि हन्यन्ते स तदा प्रमादिनस्ते कथं रक्षा स्यादिति भावः॥ ६०॥ भ०

बोधेनेत्यादि। प्रवृत्तविभीषणमातामहानां वदतां यो बोधः तेन प्रतिलब्धसंज्ञो विबुद्धः कुम्भकर्णो निद्राविलाक्षः निद्रया कषायितचक्षुः श्रुतकार्य्यसारः श्रुतकार्य्यशरीरः ततः कार्य्यसारश्रवणानन्तरं वाक्यमभाषत यथा घनः साम्बुः सजलोऽन्तरीक्षे वियति स्फूर्जति तद्वत् स्फूर्जन्निति॥ ६१॥ ज० म०

बोधेनेत्यादि। ततो मातामहवचनानन्तरं कुम्भकर्णो वाक्यं वक्ष्यमाणमभाषत उक्तवान् सजलो मेघ इव अन्तरीक्षे स्फुरन् अत्युच्चत्वादासनस्यान्तरीक्षस्थत्वाद्वा तेन प्रवृत्तविभीषणमातामहानां बोधेन शब्देन प्रतिलब्धसंज्ञः विबुद्धः अतएव निद्राविलाक्षः निद्रया कलुषीकृतचक्षुः श्रुतकार्य्यसारः अवगतकार्य्यसारः॥ ६१॥ भ०

कार्य्यं निश्चित्य सर्वाणि भाषणानि न पञ्चाङ्गमन्त्रं विनेति वाक्यं तं तावदुपदर्शयन्नाह।

क्रियेत्यादि। क्रियाणां दुर्गादिकर्म्मणां यः समारम्भस्तं गतः प्राप्तो योऽभ्युपायः समारम्भोपाय इत्यर्थः इदमेकमङ्गं नृद्रव्यसम्पत् पुरुषाणां द्रव्याणाञ्च सम्पदिति द्वितीयं द्वयोः एकवचनं योग-

न निश्चितार्थं समयञ्च देशं
क्रियाभ्युपायादिषु योऽतियायात् ।
स प्राप्नुयान्मन्त्रफलं न मानी
काले विपन्ने क्षणदाचरेन्द्र ! ॥ ६३ ॥

वाहित्वज्ञापनार्थं सहदेशकालेति यस्मिन् देशे काले च कार्य्यसिद्धिस्ताभ्यां सह वर्त्तत इति तृतीयम् अत्रापि सहवचनं योगादेव कर्मणामनुष्ठीयमानानां या विपत्तस्याः प्रतीकारस्तेन युक्तेति चतुर्थम् अर्थसिद्धिः कार्य्यसिद्धिरिति पञ्चमम् एतानि पञ्च मन्त्रस्याङ्गानि वदन्ति नीतिज्ञाः ॥ ६२ ॥ ज० म०

मन्त्रणां विना कथनमयुक्तमिति साङ्गं मन्त्रमुपदिशति ।

क्रियेत्यादि । एतानि पञ्च मन्त्राङ्गं वदन्ति नीतिविदः क्रियाणां दुर्गादिकर्मणां यः समारम्भस्तद्गतस्तत्सम्बन्धी योऽभ्युपायः येन कर्मारम्भो भवतीत्येकमङ्गं नृणां मनुष्याणां द्रव्याणाञ्च सम्पदिति द्वितीयं द्वयोः सहकथनं परस्परोपयोगसूचनार्थं सहदेशकाला देशकालाभ्यां सहिता सम्पदित्यन्वयः तेन यस्मिन् देशे यस्मिन् काले च सिद्धिस्तदुभयविशिष्टं तृतीयम् अत्र सहवचनं योगवाहित्वसूचनाय अनुष्ठीयमानानां कर्मणां या विपत् तस्या यः प्रतीकारः तेन युक्ता सति चतुर्थम् अस्य कार्य्यस्य सिद्धिरिति पञ्चमं मन्त्राङ्गमित्येकवचनेन मिलितानामेषामङ्गत्वं न तु प्रत्येकमिति सूच्यते सामान्यविशेषभाव इत्यन्ये ॥ ६२ ॥ म०

न निश्चितेत्यादि । विनिश्चितार्थोऽवश्यं सिध्यतीति यस्मिन् समये काले देशे च कार्य्यसिद्धिः तादृशं समयं देशं च यो विजिगीषुर्नातियायात् नातिक्रामेत् प्रतिषेध्यस्य द्वित्वात् प्रतिषेधद्वयं योज्यं समयं च देशमिति पाठान्तरे समुच्चयेनैक एव योज्यः क्रियाभ्युपायादिषु सत्सु आदिशब्दात् पुरुषद्रव्यसम्पद्विपत्प्रतीकारे च स प्राप्नुयान्मन्त्रफलं हे क्षणदाचरेन्द्र ! न पुनर्मानी भवादृशः काले विपन्ने प्राप्नोति स हि देशकालौ हापयति ॥ ६३ ॥ ज० म०

औष्ण्यं त्यजेन्मध्यगतोऽपि भानुः

शैत्यं निशायामथवा हिमांशुः ।

अनर्थमूलं भुवनावमानी

मन्ये न मानं पिशिताशिनाथ ! ॥ ६४ ॥

तथापि वक्तुं प्रसभं यतन्ते यन्मद्विधाः सिद्धिमभीप्सवस्त्वाम् ।

विलोमचेष्टं विहितावहासाः परैर्हि तत् स्नेहमयैस्तमोभिः ॥ ६५ ॥

न निश्चितार्थमित्यादि । क्रियाभ्युपायादिषु मध्ये निश्चितार्थं निश्चितोऽर्थोऽवश्यं सिध्यति यस्मिन् समये काले देशे च तादृशं समयं कालं देशञ्च यो जिगीषुर्नातियायात् नातिक्रामेत् हे राक्षसेन्द्र ! स एव मन्त्रफलमर्थसिद्धिं प्राप्नुयात् न पुनर्मानी भवादृशः काले विपन्नेऽतिक्रान्ते सति प्राप्नोति यदैव सीताहरणं कर्त्तुमिष्टं तदैव मन्त्रणा युक्ता मानित्वान्न कृता सम्प्रति किं मन्त्रेण साध्यमिति भावः ॥६३॥म०

औष्ण्यमित्यादि । हे पिशिताशिनाथ ! भानुर्मध्यगतोऽपि मध्याह्नेऽपि औष्ण्यमुष्णतां त्यजेत् सम्भावने लिङ् अथवा हिमांशुर्निशायामपि शैत्यं त्यजेत् भुवनावमानी पुनर्भुवनमवमन्तुं शीलमस्येति नास्ति मत्सम इति स भवादृशो मानं न त्यजेत् अनर्थमूलम् अनर्थस्य कारणम् एवं मन्ये जानामि ॥ ६४ ॥ ज० म०

औष्ण्यमित्यादि । हे पिशिताशिनाथ राक्षसानामीश्वर ! भानुर्नभोमध्ये गतोऽपि मध्याह्नस्थितोऽपि वा उष्णतां त्यजेत् अथवा हिमांशुश्चन्द्रो निशायामपि शीतत्वं त्यजेत् सम्भावने लिङ् कदाचिदेवमपि सम्भाव्यते न तु भुवनावमानी जगदवज्ञाशीलो भवादृशः अनर्थस्य मूलं कारणं त्यजेदित्यहं मन्ये एतेन सम्प्रत्यपि सीतासमर्पणादेव रक्षा तच्च त्वया मानिना कदापि न कार्य्यमिति भावः भुवनान्यवमन्यत इति ग्रहादित्वाणिनि भुवनान्यवमन्तुं शीलं यस्येति परः ॥ ६४ ॥ भ०

तथापीत्यादि । तथापि एवमपि सति मद्विधाः सिद्धिं कार्य्यनिष्पत्तिमभीप्सवः आप्तुमेषणशीलाः यत्त्वां विलोमचेष्टं प्रतिकूलचेष्टितं

क्रूरा: क्रिया ग्राम्यसुखेषु सङ्गः पुण्यस्य यः संक्षयहेतुरुक्तः ।
निषेवितोऽसौ भवतातिमात्रं फलत्यवश्यं ध्रुवमेव राजन् ! ६६
दत्तं न किं के विषया न भुक्ताः
स्थितोऽस्मि वा कं परिभूय नोच्चैः ।

प्रसभमाहृत्य वक्तुं यतते परैः दूतजनैः शत्रुजनैर्वा विहितावहासा एवंविधा अप्युपदिशन्तीति वाशब्दः पादपूरणे तत् स्नेहमयैः स्नेहस्वभावैस्तमोभिरज्ञानैः स्नेहतमसावृता ब्रुवन्तीत्यर्थः ॥ ६५ ॥ज० म०

तथापीत्यादि । यद्यपि त्वमेवंविधस्तथापि कार्य्यस्य सिद्धिं प्राप्नुमिच्छन्तो मद्विधा विभीषणादयः परैरस्मदुक्तावज्ञापरैः प्रहस्तादिभिः शत्रुभिर्वा विहितावहासाः कृतोपहासा अपि सन्तः विलोमचेष्टं प्रतिकूलकारिणं त्वां प्रसभं बलाद्वक्तुं यत् यतन्ते तत् स्नेहमयैः स्नेहरूपैस्तमोभिरज्ञानैर्हेतुभिरेव स्नेहादेवमपि त्वां वक्तुं यतन्ते इत्यर्थः यद्वा यतो वक्तुं यतन्ते तस्मात् स्नेहमयैस्तमोभिरुपलक्षिता इत्यर्थः हिशब्दोऽवधारणे पादपूरणे इत्यन्ये ॥ ६५ ॥ भ०

क्रूरा इत्यादि । क्रूराः क्रियाः परहिंसादयः ग्राम्यसुखेषु परदारोपभोगादिषु सङ्गः प्रसक्तिः यः पुण्यस्यार्जितस्य संक्षयहेतुरुक्तः विद्वाद्भिः असौ भवतातिमात्रं सुष्ठु निषेवितः सन् हे राजन्निदानीं फलति फलं ददाति अवश्यं असारं ध्रुवमविनाशम् ॥ ६६ ॥ ज० म०

क्रूरा इत्यादि । क्रूराः क्रिया हिंसात्मिका ग्राम्यसुखेषु परदारोपभोगादिषु सङ्ग आसक्तिरिति पुण्यस्य संक्षयहेतुर्विनाशकारणं य उक्तो वेदविद्भिः असौ भवता अतिमात्रमत्यर्थं निषेवितः सन् हे राजन् ! अवश्यं अमनोहरं कुलक्षयं ध्रुवमेव फलति अवश्यं यथा स्यात्तथा फलति फलं दास्यतीति वा भविष्यत्सामीप्ये क्तो अभिधानात् ॥ ६६ ॥ भ०

तस्माद्विलोमचेष्टस्य भवतो हितोपदेशे मम न किञ्चित् प्रयोजनं तावत्तु स्यात् त्वदर्थं मत्प्राणत्याग इति दर्शयन्नाह ।

दत्तमित्यादि । तव प्रसादादर्थिभ्यः किं न दत्तं के विषया न

इत्थं कृतार्थस्य मम ध्रुवं स्यात्
मृत्युस्त्वदर्थे यदि किन्न लब्धम् ॥ ६७ ॥
किं दुर्नयैस्त्वय्युदितैर्मृषार्थैः
वीर्य्येण वक्तास्मि रणे समाधिम् ।
तस्मिन् प्रसुप्ते पुनरित्थमुक्त्वा
विभीषणोऽभाषत राक्षसेन्द्रम् ॥ ६८ ॥

भुक्ताः सर्व एवानुभूताः कं वा परिभूय तिरस्कृत्य उच्चैर्महति पदे न स्थितोऽस्मि इत्यमनेन प्रकारेण कृतार्थस्य लब्धजन्मफलस्य मम यदि त्वदर्थे मृत्युरवश्यं स्यात् तदा किन्न लब्धं सर्वमेव जन्मफलं लब्धमित्यर्थः ॥ ६७ ॥ ज० म०

किं विलोमचेष्टस्य भवतो मन्मोपदेशेन त्वदर्थे प्राणा एव त्यक्ता इति दर्शयितुमिदमुच्यते ।

दत्तमित्यादि । किं न दत्तं बन्धुयाचकादिभ्यो मया अपि तु सर्वं दत्तं तव प्रसादादिति वाक्यशेषः किंवा त्वया मह्यं किं न दत्तमपि तु सर्वं दत्तमेव के विषयाः स्रक्चन्दनादयो मया न भुक्ता अपि तु सर्व एवोपभुक्ताः किंवा उच्चैर्महद्वस्तु परिभूय न स्थितोऽस्मि किंवा परिभूय उच्चैर्महति पदे न स्थितोऽस्मीति वा कं वेति पाठे जनमिति शेषः अपि तु सर्वमेव तिरस्कृत्य स्थितोऽस्मीत्यर्थः इत्यमनेन प्रकारेण कृतार्थस्य लब्धजन्मफलस्य मम यदि त्वदर्थे मृत्युर्ध्रुवमवश्यं स्यात्तदा किं न लब्धं सर्वमेव फलं प्राप्तमिति भावः ॥ ६७ ॥ भ०

तव पुनरद्यापि विभीषणोक्तं युक्तं न प्रहस्तमुखोक्तमिति दर्शयन्नाह ।

किं दुर्नयैरित्यादि । त्वय्यपि स्थिते किं द्यौरधोऽस्त्वित्यादिना यान्युदितान्ययुक्तानि अलीकार्थानि तैर्दुर्नयैः किं न किञ्चित् फलं कस्मादिति चेत् यस्मात्तेषां समाधिं प्रतीकारं संग्रामे रामसम्बन्धिना वीर्य्येण वक्तास्मि वदिताहं रामवीर्य्यप्रतीकाराद्भीत्यर्थः इत्यमेवं तस्मिन्

निमित्तशून्यैः स्थगिता रजोभिर्दिशो मरुद्भिर्विकृतैर्विलोलैः ।
स्वभावहीनैर्मृगपक्षिघोषैः क्रन्दन्ति भर्त्तारमिवाभिपन्नम् ६९

उत्पातजं छिद्रमसौ विवस्वान्
व्यादाय वक्त्राकृति लोकभीषम् ।

कुम्भकर्णे उक्त्वा पुनः भूयः प्रसुप्ते सति विभीषणो राक्षसेन्द्रमभाषत ॥ ६८ ॥ ज० म०

किं दुर्नयैरित्यादि । प्रहस्तादीनामुदितैर्वाक्यैः किं द्यौरधोऽस्त्वित्यादिभिस्तैः पार्थैर्व्यलीकैर्दुर्नयैर्नीतिरहितैस्त्वयि विषये किं फलं यतस्तेषां वाक्यानां समाधिं प्रतीकारं रणे रामसम्बन्धिना वीर्य्येणाहं वक्तास्मि वदितास्मि रामविक्रमेणैतद्वचनानां मिथ्यात्वं ज्ञास्यसि अतो विभीषणवचनमेवोचितं न प्रहस्तादिवचनमित्यर्थः । इत्थमेवमुक्त्वा तस्मिन् कुम्भकर्णे प्रसुप्ते निद्रिते सति विभीषणो राक्षसेन्द्रं पुनरभाषत ॥ ६८ ॥ भ०

निमित्तशून्यैरित्यादि । रजोभिर्निमित्तशून्यैः निर्निमित्तैः दिशः स्थगिताः सञ्छादिताः स्थग संवरणे मरुद्भिश्च विकृतैः परुषैर्विलोलैरनियतदिग्वर्त्तिभिः स्थगिताः मृगपक्षिणाञ्च घोषैः स्वभावहीनैर्भ्रष्टैर्भर्त्तारमिवाभिपन्नं मृतं शोकात् क्रन्दन्ति ॥ ६९ ॥ ज० म०

सम्प्रति रावणस्य भयोत्पादनार्थं दुर्निमित्तं कथ्यते ।

निमित्तेत्यादि । दिशः स्वभावाद्धीनैर्विकृतैर्मृगाणां पक्षिणाञ्च घोषैः शब्दैः अभिपन्नं मृतं भर्त्तारं शोकात् क्रन्दन्ति इव कीदृश्यो दिशः निमित्तशून्यैः प्राणिव्यापाररूपकारणशून्यैः रजोभिर्धूलिभिः स्थगिता आच्छादिताः स्थगे संवृतौ मरुद्भिश्च स्थगिताः चकारोऽत्राध्याहार्य्यः किंवा वायुभिः कर्तृभिर्धूलिभिः करणभूताभिः स्थगिताः कीदृशैर्मरुद्भिर्विकृतैः प्रचण्डैर्विलोलैरनियतदिग्वर्त्तिभिः ॥ ६९ ॥ भ०

उत्पातजमित्यादि । असौ विवस्वान् छिद्रम् उत्पतजं वक्त्राकृति लोकभीषं लोकस्य भयानकं व्यादाय प्रसार्य्य व्याङ्पूर्वस्य ददातेः

अत्तुं जनान् धूसररश्मिराशिः
सिंहो यथा कीर्णसटोऽभ्युदेति ॥ ७० ॥
मार्गं गतो गोत्रगुरुर्भृगूणाम्
अगस्तिनाध्यासितविन्ध्यशृङ्गम्।
संदृश्यते शक्रपुरोहितोऽह्नि
क्ष्मां कम्पयन्त्यो निपतन्ति चोल्काः ॥ ७१ ॥

कोऽप्यपि रूपं जनानत्तुं भक्षयितुं धूसररश्मिराशिः सन् अभ्युदेति उद्गच्छति यथा सिंहः कीर्णसटः विक्षिप्तकेसरकलापः मुखं व्यादायात्तुमुत्तिष्ठति तद्वदिति ॥ ७० ॥ ज० म०

उत्पातजमित्यादि। असौ धूसराकिरणजालो विवस्वान् सूर्य्यः छिद्रं व्यादाय प्रसार्य्य जनानत्तुं भक्षयितुमभ्युदेति यथा सिंहः कीर्णसटः प्रसारितकेसरकलापः सन् मुखं व्यादाय भक्षयितुमुत्तिष्ठति तद्वत् कीदृशं छिद्रमुत्पातजमुत्पाते अनिष्टे सति जातं वक्राकृति मुखसदृशं लोकस्य तीक्ष्णं भयजनकं भीष्ममिति क्वचित् पाठः भीममपि क्वचित् सूर्य्ये छिद्रं लोकसंक्षयाय भवतीति प्रसिद्धिः ॥ ७० ॥ भ०

मार्गमित्यादि। अगस्तिना यदध्यासितं विन्ध्यशृङ्गं तन्मार्गं भृगूणां गोत्रगुरुः शुक्रो गतः दक्षिणमार्गचारी शुक्र इत्यर्थः शुक्रपुरोहितोऽपि बृहस्पतिः अह्नि दिवसे संदृश्यते उल्काश्च क्ष्मां पृथिवीं कम्पयन्त्यः निपतन्ति ॥ ७१ ॥ ज० म०

मार्गमित्यादि। अगस्त्येन मुनिना अध्यासितमधिष्ठितं विन्ध्यपर्वतस्य शृङ्गं यत्र तदेव वर्त्म भृगूणां भृग्वपत्यानां गोत्रगुरुः कुलगुरुः शुक्रो गतः दक्षिणमार्गचारी शुक्रोऽनिष्टहेतुरिति प्रसिद्धिः नाम्न्यन्त्ये तिक्चेति अस्यतेस्तिक् अगस्यास्तिरगस्तिः मनीषादित्वादकारलोपः अगस्त्योऽगस्तिरिति शब्दभेदः भृगूणामिति भृग्वत्यङ्गिर इत्यादिना अपत्यप्रत्ययलोपः शक्रपुरोहितो बृहस्पतिरह्नि दिवसे संदृश्यते उल्काः क्ष्मां पृथिवीं कम्पयन्त्यो निपतन्ति ॥ ७१ ॥ भ०

मांसं हतानामिव राक्षसानाम्
आशंसवः क्रूरगिरो रुवन्तः ।
क्रव्याशिनो दीप्तकृशानुवक्त्राः
भ्राम्यन्त्यभीताः परितः पुरं नः ॥ ७२ ॥

पयो घटोघ्नीरपि गा दुहन्ति
मन्दं विवर्णं विरसञ्च गोपाः ।
हव्येषु कीटोपजनः सकेशः
न दीप्यतेऽग्निः सुसमिन्धनोऽपि ॥ ७३ ॥

मांसमित्यादि । राक्षसानां हतानामिव मांसमाशंसवः आशंसनशीलाः सनाशंसभिक्ष उः मांसभुजः शृगालादयः क्रूरगिराः परुषस्वनाः ज्वलनसदृशवदनाः निर्भयाः परितो भ्रमन्ति ॥ ७२ ॥ ज० म०

मांसमित्यादि । क्रव्याशिनः शृगालादयः निर्भयाः सन्तो रुवन्तो नदन्तो नोऽस्माकं पुरं लङ्कां परितः सर्वतो भ्राम्यन्ति भ्रमुजणचाले कमक्रमभ्रमेति पक्षे श्यन् शमादित्वाद्दीर्घः धिक्समयेत्यादिना परितोयोगे द्वितीया क्रव्याशिनः कीदृशाः हतानामिव राक्षसानां मांसं भक्षयितुमाशंसवः आकाङ्क्षन्तः सन् भिक्षाशंस उरित्युप्रत्ययः क्रूरगिरो भीषणनादाः दीप्तकृशानुवक्त्राः उल्कामुखाः ॥ ७२ ॥ भ०

पय इत्यादि । घोरं विवर्णं दुर्वर्णं विरसम् अस्वादु मन्दम् अल्पं पयस्विनीरपि दुहन्ति अकथितं चेति द्विकर्मकता तथा शोभनेन्धनोऽप्यग्निर्न दीप्यते हव्येषु हवनीयेषु घृतादिषु सत्सु यतो यत् उपजननमुपजनः भावे घञ् जनिवध्योश्चेति न वृद्धिः कीटानामुपजनोऽस्मिन्निति कीटोपजनः सह केशैः सकेशः दह्यमानकीटकेश इत्यर्थः ॥७३॥ ज० म०

पय इत्यादि । गोपा घटोघ्नीरपि पीवरस्तनीरपि गा मन्दम् अल्पं विवर्णं स्वाभाविकवर्णहीनं विरसमस्वादु पयो दुहन्ति मोचयन्ति घट इव ऊधस्तनो यासां स्वसोध इति ङीप् तस्य नकारस्य गवां गणाः प्रस्नुतपीवरोधस इत्यादि प्रयोगात्तु ङीप्येव तस्य नकाराभावात् सदानो-

तस्मात् कुरु त्वं प्रतिकारमस्मिन्
स्नेहान्मया रावण! भाष्यमाणः।
वदन्ति दुःखं ह्यनुजीविवृत्ते
स्थिताः पदस्थं परिणामपथ्यम् ॥ ७४ ॥

विहगणसंकीर्णविपन्नभिन्नैः प्रच्छन्नसंक्रीणग्रिताखड्गकर्णैः।
यावन्नराशैर्न रिपुः शवाशान् सन्तर्पयत्यानम तावदस्मै ॥७५॥

ऽल्लोप इति अनोऽल्लोपः गां पान्ति रक्षन्तीति गोपाः हनजनादिति डः हव्येषु हवनीयेषु घृतादिषु कीटैः सह कीटोपजनः कीटजन्म भवति वजि जनवध इति ह्रस्वः शोभनसम्यगिन्धन युक्तोऽपि अग्निर्न दीप्यते न ज्वलति केचित्तु हव्येषु सत्स्वपि अग्निर्न दीप्यते कीदृशः कीटस्योपजनो यत्रेति व्याचक्षते ॥ ७२ ॥ म०

तस्मादित्यादि। यस्मादेवं विनाशसूचकानि निमित्तानि दृश्यन्ते तस्मात् हे रावण! स्नेहान्मया त्वं भाष्यमाणः अस्मिन् वस्तुनि प्रतीकारं सीताप्रत्यर्पणेनैव सन्धानं कुरु उपसर्गस्य घञीति बहुलं दीर्घः कस्मादेवं भाष्यत इति चेत् यस्मादनुजीविवृत्तेऽत्रस्थिताः यद्वचनं दुःखं दुःखहेतु तदा कटुकत्वात् परिणामपथ्यम् आयत्यां हितं तत्पदस्थं स्वामिपदे स्थितं वदन्ति ॥ ७४ ॥ ज० म०

तस्मादित्यादि। यत एवंविधानि विनाशसूचकानि निमित्तानि दृश्यन्ते तस्मात् हे रावण! मया स्नेहाद्भाष्यमाणस्त्वम् अस्मिन् प्रकृते वस्तुनि प्रतीकारं सीताप्रत्यर्पणे सन्धिं कुरु कुत एवमप्रियं कथ्यत इत्याह हि यस्मादनुजीविवृत्ते सेवककर्मणि स्थिता जना दुःखमापातत: कटुत्वात् दुःखजनकमपि परिणामपथ्यमुत्तरकाले हितं वचः स्वामिपदे स्थितं जनं वदन्ति दुःखहेतावपि दुःखशब्दप्रयोगो दृश्यते यथा कष्टं व्याकरणं पदे तिष्ठतीति हनजनादिति डः ॥ ७४ ॥ म०

विहगणेत्यादि। यावद्रिपुः नराशैः राघवैः शवाशान् वृक्ष-शृगालादीन् शवमश्नन्तीति कर्मण्यण् न सन्तर्पयति न प्रीणयति ताव-

भ्रूभङ्गमाधाय विहाय धैर्यं
विभीषणं भीषणरक्तचक्षुः ।
गिरं जगादोग्रपदामुदग्रः
स्वं स्फावयन् शक्ररिपुः प्रभावम् ॥ ७६ ॥

दस्य रिपोः स्थानम् चरणावित्यर्थात् कीदृशैः विरुग्णैर्भिन्नाङ्गैः ओदितश्चेति निष्ठानत्वं सङ्कीर्णैः इतस्ततो विक्षिप्तैः विपन्नैर्मृतैर्भिन्नैर्विदारितदेहैः प्रक्षुण्णैः रुध्यो रदाभ्यामिति नत्वं संह्रीणैर्लज्जितैः वयमेवमवस्थां नीता इति शितेन तीक्ष्णेन अस्त्रेण वृक्णैः छिन्नैः ग्रहिज्यादिसम्प्रसारणं संयोगादिलोपः कुत्वञ्च ओदित्वान्नत्वम् ॥७५॥ज० म०

विरुग्णेत्यादि । यावत् रिपूरामो नराश्च राक्षसैः शवाशान् हतभक्षकान् शृगालादीन् सन्तर्पयति तावदस्य रिपोस्त्वमानम प्रथम अस्येति समार्थेनेत्यादिना कर्मणि षष्ठी अस्य समीपे स्थानम नञो अत्र समीपलक्षणया षष्ठीयमिति विद्यासागरः चरणावित्यध्याहरन्त्यन्ये कीदृशैर्विरुग्णैः भग्नाङ्गैः रुजो भङ्गे स्फुल्वाद्योदिदिति ओदित्त्वात् क्तस्य नत्वं सङ्कीर्णैरितस्ततो विक्षिप्तैः कॄ य विक्षेपे ॠदिरणानितीर्व्यं नञ्तयोति दीर्घः पूर्वेण रेफात् क्तस्य नत्वं विपन्नैर्मृतैः पदङ्गतौ विपूर्वो विपत्तिमाह पूर्वेण दकारात् क्तस्य नत्वं भिन्नैर्विदारितदेहैः ञभिदिर्भिदि भिदिदारणं प्रक्षुण्णैः संपिष्टैः ञक्षुदिर्क्षुदिक्षुत् संचूर्णनं संह्रीणैर्लज्जितैर्वयमपीदृशीं दशां प्राप्ता इति मत्वा ह्रीलज्जे ह्रीघ्रात्रोन्देति क्तस्य पक्षे नत्वं शितास्त्रेण वृक्णैश्छिन्नैः व्रश्च्छेदे व्रश्चेः कङ्चेति क्तस्य नत्वं कङ्चस्य कत्वे तन्निमित्तस्य शस्य सत्वे स्वादेः सो लोपः ग्रहसपाद्योरिति जि: ॥ ७५ ॥ भ०

भ्रूभङ्गमित्यादि । शक्ररिपुर्दशाननः विभीषणवचनात् क्रुद्धः भ्रूभङ्गं भ्रूकुटिमाधाय आबध्य धैर्यं विहाय त्यक्त्वा भीषणरक्तचक्षुः भयानकरूपरक्तचक्षुः उदग्रः उन्नामितदेहः स्वं प्रभावं विक्रमं स्फावयन् वर्द्धयन् स्फायीव इति णौ वत्वं विभीषणं जगाद गिरं वाचम् उग्रपदा शाभ्रडन्तानां स्वरूपतोऽर्थतश्च परुषत्वात् ॥ ७६ ॥ ज० म०

शिला तरिष्यत्युदके न पर्णं
ध्वान्तं रवेः स्रंस्यति वह्निरिन्दोः ।
जेता परोऽहं युधि जेष्यमाणः
तुल्यानि मन्यस्व पुलस्त्यनप्तः ! ॥ ७७ ॥
अनिर्वृतं भूतिषु गूढवैरं
सत्कारकालेऽपि कृताभ्यसूयम् ।

भ्रूभङ्गमित्यादि । एवं विभीषणवचनात् कोपेन भ्रूभङ्गं भ्रूकुटीं आधाय आबध्य धैर्यं विहाय त्यक्त्वा शक्ररिपू रावणः प्रभावं स्वकीयं विक्रमं स्फावयन् वर्द्धयन् विभीषणं गिरं वाचं जगाद कीदृशः भीषणं भयानकं रूपं परुषं चक्षुर्यस्य तादृश उदग्र उन्नमितदेहः गिरं कीदृशीम् उग्रपदां स्वरूपतोऽर्थतश्च कठोरत्वात् उग्राणि पदानि यत्र स्फायीङ संवृद्धौ पातिस्फायोरिरिति वङ् ॥ ७६ ॥ भ०

शिलेत्यादि । उदके शीला तरिष्यति न पुनः पर्णं रवेः सूर्य्यात् ध्वान्तमन्धकारं स्रंस्यति स्रविष्यति स्रन्दू प्रस्रवणे इत्यस्मात् न वृद्भ्यश्चतुर्भ्यः इतीट् न भवति खरि चेति चत्वं तथा वह्निरिन्दोः स्रंस्यति अहमस्येष पर उत्कृष्टः जेता युधि संग्रामे जेष्यमाण इत्येतानि चत्वारि हे पुलस्त्यनप्तः ! विभीषण ! तुल्यानि मन्यस्व अवगच्छ कोटिरूपं यदि जेताप्यहं परेण जीये शिलातरणादीन्यपि भविष्यन्ति ॥ ७७ ॥ ज० म०

शिलेत्यादि । उदके जले प्रस्तरस्तरिष्यति न तु पर्णं पत्रं तरति रवेः सकाशात् ध्वान्तं न स्रंस्यति गमिष्यति इन्दोः सकाशात् वह्निः स्रंस्यति स्रन्दूङ्वृभ्युतौ वृद्भ्यो नेमुपेस्यसनोरिति इण्निषेधः अतएव युधि परोऽन्य उत्कृष्टो वा जेता अहन्तु जेष्यमाणः हे पुलस्त्यनप्तः ! हे पुलस्त्यस्तनिपौत्र ! एतानि शिलातरणादीनि तुल्यानि मन्यस्व यदि शिलातरणादिकं भवेत् तदा मे पराजय इत्यर्थः पुलस्त्यब्राह्मणस्य भीरुत्वान्नप्तृत्वमपि तादृशमिति नप्तृसम्बोधनेन सूच्यते ॥ ७७ ॥ म०

विभिन्नकर्माशयवाक् कुले नः
मा ज्ञातिचेलं भुवि कस्यचिद् भूत् ॥ ७८ ॥
इच्छन्त्यभीक्ष्णं क्षयमात्मनोऽपि न ज्ञातयस्तुल्यकुलस्य लक्ष्मीम्
नमन्ति शत्रून्न च बन्धुवृद्धिं सन्तप्यमानैर्हृदयैः सहन्ते ७९

अनिष्टमित्यादि । भूतिषु ज्ञातिसम्बन्धिनीषु अनिष्टमसुखिनं गूढ़वैरं काले हनिष्यामीति सम्भृतापकाराशयं सत्कारकालेऽपि पूजाकालेऽपि कृतामर्षं विभिन्नाः कर्माशयवाचो यस्य तद्विभिन्नकर्माशयवाक् आशयोऽन्यो वाक्कर्मणी चान्ये यस्येति ईदृशं ज्ञातिचेलं गर्हितज्ञातिरस्माकं कुले मा भूत् कस्यचिदन्यस्य वा मा भूत् चेलशब्दो गर्हिते वर्त्तते ॥ ७८ ॥ ज० म०

अनिष्टमित्यादि । भुवि ईदृशं ज्ञातिचेलं गर्हितो ज्ञातिर्नोऽस्माकं कुले कस्यचिन्मा भूत् न भवतु अस्माकमिवान्यस्यापि कस्यचित् कुले इत्यर्थो वा कीदृशं भूतिषु ज्ञातिसम्बन्धिनीषु सम्पत्तिषु अनिष्टं तुखरहितं गूढ़वैरं काले हनिष्यामीति गुप्तद्वेषं सत्कारकालेऽपि पूजासमयेऽपि कृताभ्यसूयं कृतामर्षं गुणेऽपि दोषाविष्कारणमसूया विभिन्नाः परस्परविरोधिन्यः कर्माशयवाचो यस्य क्रूरत्वादाशयोऽन्यो वाक्कर्मणी चान्ये इत्यर्थः चेलोनीचेऽन्यवस्त्रे जनंगुके गर्हितेऽन्यवदिति विश्वप्रकाशे । यद्यपि चेलशब्दस्य गर्हिते वाच्यलिङ्गत्वमुक्तं तथापि गर्हितेऽप्यवसामे च चेलमाचक्ष्यते बुधैरित्यनुशासनादत्र क्लीवत्वं सामान्यविवक्षया नपुंसकत्वमिति विद्यासागरः । विशेषणस्य क्वचित् परनिपातोऽभिधानात् ॥ ७८ ॥ भ०

किं मया कृतं येनैवमुच्यत इति चेदाह ।

इच्छन्तीत्यादि । ज्ञातयः आत्मनः शुष्ठु क्षयं विनाशमिच्छन्ति न पुनस्तुल्यकुलस्य एकहेतुगोत्रस्य लक्ष्मीं श्रियं तथा शत्रुं कामं नमन्ति न पुनर्बन्धुवृद्धिं बन्धुसन्ततिं सहन्ते सन्तप्यमानैर्हृदयैः ईर्ष्यया दह्यमानैः ॥ ७९ ॥ ज० म०

इच्छन्तीत्यादि । ज्ञातयो वरमात्मनोऽपि क्षयमभीक्ष्णं पुनः

त्वयाद्य लङ्काभिभवेऽतिहर्षात्
हृष्टोऽतिमात्रं विवृतोऽन्तरात्मा ।
धिक् त्वां मृषा ते मयि दुस्थबुद्धिः
वदन्निदं तस्य ददौ स पार्ष्णिम् ॥ ८० ॥

ततः स कोपं क्षमया निरुन्धन्
धैर्य्येण मन्युं विनयेन गर्वम् ।
मोहं धियोत्साहवशाद्दशास्तिं
समं चतुर्भिः सचिवैरुदस्थात् ॥ ८१ ॥

पुनरिच्छन्ति न पुनः समानकुलोत्पन्नस्य भ्रातादेर्लक्ष्मीमिच्छन्ति तथा वरं शत्रून् नमन्ति न पुनर्बन्धूनां वृद्धिं सन्तप्यमानैरीर्ष्यादह्यमानैर्हृदयैः सहन्ते ॥ ७९ ॥ भ०

किं मया कृतं येनैवमुच्यत इति चेदाह ।

त्वयेत्यादि । लङ्काभिभवे लङ्कोपरोधे अतिहर्षात् हर्षेण दृष्टान्तरात्मा अतिमात्रं सुष्ठु त्वयाद्य विवृतः प्रकाशितः मयि दुस्थबुद्धिः अस्मद्विषये दुस्थोऽभियुक्तोऽयमिति बुद्धिः ते मृषा मिथ्यातस्त्वां धिगिति वदन् स दशाननः तस्य विभीषणस्य सिंहासनोपाश्रितबाहोः पार्ष्णिं पादप्रहारं शिरसि ददौ ॥ ८० ॥ जं० म०

पूर्वश्लोकद्वयार्थं विभीषणे घटयितुमिदमुच्यते ।

त्वयेत्यादि । लङ्काया अभिभवे दाहादौ सति त्वया अतिहर्षात् दृष्टोऽतिमात्रम् अतिशयेन दृष्टोऽन्तरात्मा प्रकाशित एतावन्तं कालं गुप्त आसीदिति भावः मय्यस्मद्विषये दुःस्थोऽयमरिभिरभियुक्तोऽयमिति ते तव बुद्धिर्मृषा मिथ्या अतस्त्वां धिगिति वदन् स दशाननस्य विभीषणस्य पार्ष्णिं पादप्रहारं ददौ ॥ ८० ॥ भ०

तत इत्यादि । पार्ष्णिप्रहारादनन्तरं स विभीषणः कोपं क्षमया क्षान्त्या निरुन्धन् अभिभवन् तथा धैर्य्येण मन्युं शोकं विनयेन गर्वं

उवाच चैनं चणदाचरेन्द्रं
सुखं महाराज ! विना मयास्स्व ।
मूर्खातुरः पथ्यकटूननश्नन्
यत् सामयोऽसौ भिषजां न दोषः ॥ ८२ ॥

करोति वैरं स्फुटमुच्यमानः प्रतुष्यति श्रोत्रसुखैरपथ्यैः ।
विवेकशून्यः प्रभुरात्ममानी महाननर्थः सुहृदां बतायम् ८३

मोहं वैचित्त्यं प्रज्ञया उत्थाद्ययादशक्तिमसामर्थ्यं निघ्नन् अपमानेन कोपादीनां सम्भवात् चतुर्भिः सचिवैरमात्यैः समं सार्द्धं सुदस्यात् आसनादुत्थितः ॥ ८१ ॥ ज० म०

तत इत्यादि । पार्ष्णिप्रहारादनन्तरं स विभीषणः क्षमया शान्त्या कोपं निघ्नन् अभिभवन् धैर्य्येण मन्युं शोकं निघ्नन् विनयेन गर्वं दर्पं निघ्नन् धिया बुद्ध्या मोहं वैचित्त्यं निघ्नन् उत्थाहवशादशक्तिमसामर्थ्यं निघ्नन् चतुर्भिः सचिवैरमात्यैः रुदस्यादासनादुत्थितवान् ॥ ८१ ॥ भ०

उवाचेत्यादि । उत्थितस्तानन्तरं रावणमुवाच हे महाराज ! मया विना सुखमास्स्व तिष्ठ आस्ते र्लोट् तवात्र दोषो न मच्चोपदेशः यस्मान्मूर्खातुरः मूर्खो य आतुरः पथ्यकटूननश्नन् अभक्षयन् यत्सामयः रोगवान् भिषजां वैद्यानां न दोषः किन्तु तस्यैव ॥ ८२ ॥ ज० म०

उत्थितो विभीषणो रावणं वाचमुवाच किमुवाचेत्याह ।

उवाचेति । हे महाराज ! मया विना सुखम् आस्स्व सुखेन तिष्ठेत्यर्थः किमासङ्ग उपदेशे गो तवैवात्र दोषो न ममेत्युपदिशन्नाह मूर्खं आतुरो रोगी पथ्यान् कटून् अनश्नन् अभक्षयन् सामयो रोगी अस्तित्यसौ भिषजां वैद्यानां न दोषः किन्तु तस्यैव ॥ ८२ ॥ भ०

करोतीत्यादि । प्रभुर्विवेकशून्यो निर्विवेकः आत्ममानी मत्सदृशोऽन्यो नास्तीति आत्मानं श्लाघमानम् आत्ममाने इनिः स्फुटमुच्यमानो वैरं करोति मोहं न करोति पथ्यमनेनोक्तमिति श्रोत्रसुखैः तदर्थ-

क्रीडन् भुजङ्गेन गृहानुपातं कश्चिद्यथा जीवति संशयस्थः ।
संसेवमानो नृपतिं प्रमूढ तथैव यज्जीवति सोऽस्य लाभः ८४
दत्तः स्वदोषैर्भवता प्रहारः पादेन धर्म्ये पथि मे स्थितस्य ।
स चिन्तनीयः सह मन्त्रिमुख्यैः कस्यावयोर्लाघवमादधातु ८५

मनोहारिभिः अपथ्यैस्तुष्यति तस्मादयं प्रभुः सुहृदामाश्रितानां महान-नर्थहेतुत्वात् वत शब्दः खेदे ॥ ८३ । ज० म०

करोतीत्यादि । प्रभुरीश्वरो विवेकशून्यः सदसद्विचाररहितः आत्म-मानी मत्सम्मो नास्तीत्यात्मानं श्लाघमानो वत खेदे अयमेव सुहृदां महाननर्थो दुःखहेतुः कथमित्याह तादृक् प्रभुः स्फुटं यथार्थं उच्य-मानः क्रोधं करोति ननु पथ्यमनेनोक्तमिति स्नेहं श्रोत्रसुखैः कर्ण-सुखकारिभिः अपथ्यैरर्थेऽतिदुःखजनकैः प्रहृष्यति तुष्यति अतस्तस्य विनाश एव स्यात् आत्मानमेव मन्यत इति महादित्वाश्लिन् ॥८३॥ भ०

क्रीड़न्नित्यादि । यथा कश्चित् सर्पग्राही गृहानुपातं गृहं गृहमनुपत्य विशिपतीत्यादिना णमुल् भुजङ्गेन सह क्रीड़न् जीवति संशयस्थः सन्देहे वर्त्तमानः किमयं खादिष्यति न वेति तथैव प्रमूढं मूर्खमधिपतिं संसेवमानो यज्जीवति सोऽस्य लाभः आत्मामन्यो लाभ इति ॥ ८४ ॥ ज० म०

क्रीड़न्नित्यादि । यथा कश्चिद्ग्रामग्राही गृहानुपातं गृहं गृह-मनुपत्य गत्वा भुजङ्गेन सर्पेण क्रीड़न् संशयस्थः किमयं खादिष्यति न वेति सन्देहे वर्त्तमानो जीवति तथैव प्रमूढमतिमूर्खमधिपतिं संसेव-मानो यज्जीवति अस्य सेवकस्य स एव लाभः एतेन मूर्खस्य तव सेवायां मम जीवनमेव लाभ इत्याशयः गृहानुपातमिति चर्णवेत्यस्य योग-विभागात् साकल्ये चणम् गृहा अनुपत्यन्ते यस्मिन् इति क्रीड़नविशे-षणं वा तदा कर्मण्यि घञ् ॥ ८४ ॥ भ०

दत्त इत्यादि । स्वदोषैरविवेकत्वादिभिर्भवता पादप्रहारः यो मम धर्म्ये धर्मादनपेते मार्गे स्थितस्य दत्तः स मन्त्रिमुख्यैरेतैः सह

इति वचनमसौ रजनिचरपतिं
बहुगुणमसकृत् प्रसभमभिदधत् ।
निरगमदभयः पुरुषरिपुपुरात्
नरपतिचरणौ नवितुमरिनुतौ ॥ ८६ ॥

चिन्तनीयः आवयोर्मध्ये कस्य लाघवमादधातु करोत्विति यावन्निरूप्यमाणस्तवैवेति भावः ॥ ८५ ॥ ज० म०

दत्त इत्यादि । भवता स्वदोषैरात्मनोऽविवेकत्वादिभिः पादेन प्रहारो भवता मम दत्तः मम कीदृशस्य धर्मादनपेते पथि वर्त्तमानस्य स पादप्रहारो बुद्धिमद्भिः सह त्वया चिन्तनीयो निरूप्यमाणः सन् आवयोर्मध्ये कस्य लघुत्वं करोतु निरूप्यमाणस्तवैव विवेकशून्यत्वख्यातिरूपं लाघवमुत्पादयिष्यतीति भावः ॥ ८५ ॥ भ०

इतीत्यादि । इत्येवं वचनं बहुगुणम् अर्थावगाढत्वात् असकृत् बहुत्वात् प्रसभम् आहत्य रजनिचरपतिमभिदधत् ब्रुवन् नाभ्यस्ताच्छतुरिति नुमप्रतिषेधः रजनिचरः इति ङ्यापोः संज्ञाच्छन्दसो बहुलमिति संज्ञायां ह्रस्वत्वं पुरुषरिपुपुराल्लङ्कातः निरगमत् निष्क्रान्तः अभयः सन् नरपतिचरणौ रामस्य पादौ अरिभिरपि नुतौ शूरत्वात् सक इतीट्प्रतिषेधः नवितुं प्रणामपूर्वकं स्तोतुम् अनेकार्थत्वाद्धातूनां नन्तुमित्यर्थः ॥ ८६ ॥ ज० म०

इतीत्यादि । असौ विभीषण इत्युक्तप्रकारं वचनम् असकृद्वारं वारं प्रसभं बलात् रजनिचरपतिं रावणम् अभिदधत् वदन् नरपते रामस्य चरणौ नवितुं स्तोतुं पुरुषरिपो राक्षसस्य पुरात् लङ्काया निरगमत् निर्गतवान् वचनं कीदृशं बहुगुणम् औदार्यादिगुणयुक्तम् असौ कीदृशः अभयः न विद्यते भयं यस्य रामचरणौ कीदृशौ अरिभिरपि नुतौ स्तुतौ नुतस्तुतौ वेमूदित्यादिना वेमत्वात् नेनडीश्वीदिवेम इति इमनिषेधः नुवितुमिति पाठे नूधिस्तवन इत्यस्य रूपं रजनिचर इति संज्ञाशब्दः तेन संज्ञायां बहुलं ह्रस्व इति केचित् रजनिशब्द औणादिको ह्रस्वान्त इति विद्यासागरः वस्तुतोऽप्येवमेव रजनिजनि-

अथ तमुपगतं विदितसुचरितं
पवनसुतगिरा गिरिगुरुहृदयः।
नृपतिरमदयन्मुदितपरिजनं
स्वपुरपतिकरैः सलिलसमुदयैः ॥ ८७ ॥

इति भट्टिहरिकृते भट्टिकाव्ये द्वादशः सर्गः।

तगुरुजागररागकषायितमलसनिमेषमिति जयदेवः। सखि! रजनिरद्य गतवतीति कालिदासः। दीर्घान्तता तु पाघ्राध्मेत्यादिना पक्षे ईर्विधानात्। प्रहरणकलिका नाम वृत्तं तल्लक्षणं यथा ननभनलगिति प्रहरणकलिका ॥ ८६ ॥ भ०

अथेत्यादि। अनन्तरं विभीषणमुपेतं सेतुबन्धचिन्ताकाले रामसुपगतवानिति द्रष्टव्यम् अन्यथा वक्ष्यमाणप्रभातकथनं विरुध्येत पवनसुतगिरा हनूमद्वचनेन सञ्चारितोऽर्थामिति विदितं सुचरितं येन नृपतिः रामः गिरिगुरुहृदयः गिरिवत् गुरु अप्रकम्प्यं हृदयं यस्य सलिलसमुदयैः जलपूर्णघटैः स्थितैः स्वपुरपतिकरैः लङ्काधिपतिं कुर्वन्तीति हेतौ टः अमदयत् हर्षितवान् मदीहर्षे इत्यस्य हेतुमण्यन्तस्य घटादित्वान्मित्त्वे ह्रस्वत्वं मुदितपरिजनं स्वामी लङ्काधिपत्येऽभिषिच्यत इति तस्य हृष्टा अनुजीविन इत्यर्थः ॥ ८७ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रसन्नकाण्डे
भाविकत्वप्रदर्शनं तृतीयः परिच्छेदः। काव्यस्य
विभीषणागमनो नाम द्वादशः सर्गः।

अथेत्यादि। अनन्तरम् उपगतं तं विभीषणं नृपतिः रामः सलिलसमुदयैरभिषेकजलसमूहैर्हेतुभिरमदयत् हर्षितवान् तं कीदृशं पवनसुतस्य हनूमतो गिरा वचनेन विदितं ज्ञातं शोभनचरितं यस्य मुदिता लङ्काधिपतित्वे स्वामी अभिषिक्त इति तुष्टाः परिजना अमात्यास्तत्वारो यस्य नृपतिः कीदृशः गिरिवद्गुरु निष्कम्पं हृदयं यस्य स तथा सलिलसमुदयैः कीदृशैः स्वपुरपतिकरैः लङ्काधिपत्यं कुर्वद्भिः

# त्रयोदशः सर्गः।

चारुसमीरणरमणे हरिणकलङ्ककिरणावली सविलासा।
आबद्धराममोहा वेलामूले विभावरी परिहीणा॥ १॥

सटीभिर्यञ्जि इत्यं जिः प्रेरणे घटादित्वात् ह्रस्वः सञः उत्कृष्ट इति
टः। पूर्वोक्तं वृत्तम्॥ ८७॥

इति महैव्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरत-
सेनविरचितायां सुग्धबोधिन्यां भट्टिटीकायां
विभीषणागमनो नाम द्वादशः सर्गः।

---

काव्यं संस्कृतप्राकृतापभ्रंशभेदात्त्रिविधं तत्र शब्दभवदेशीयपदयोः प्राकृतभाषयोरपभ्रंशस्य च संस्कृतभाषायां समावेशासम्भवात् शब्द-समायाः प्राकृतभाषायाः समावेशः तमार्य्यागीत्या स्कन्धकलक्षणया दर्शयन्नाह।

विभीषणागमनात् प्राक् यद् वृत्तं रामस्य तदाह।

चार्वित्यादि। रामो रात्रौ निद्रावान् पल्लवशयनमध्यष्ठादित्युक्तं तस्य नियमपूर्वं सुप्तवतः प्रभातमभूदिति कथयति वेलामूले पारसमीपे प्राकृते पुंलिङ्गनपुंसकयोराकारान्तस्य पदस्य सप्तम्या एकवचने भित्वमित्वं वा रूपं चारु समीरणरमणे रमयतीति रमणं नन्द्यादिभ्यो ल्युः समी-रणेन रमणं चारु च तत्समीरणरमणं चेति तत्र विभावरी रात्रिः परिहीणा क्षीणा हरिणकलङ्कस्य याः किरणावल्यः ताभिः सविलासा सविभ्रमा अतश्चाबद्धो रामस्य मोहो मूर्च्छा ययेति क्तदिकारादक्तिन इत्यनेन आवलिरावलीत्युभयमपि संस्कृतप्राकृतयोः प्रयुज्यते॥१॥ ज० म०

अथ भाषासमावेशः। काव्यं संस्कृतप्राकृतापभ्रंशभेदात्त्रिविधं प्राकृतोऽपि संस्कृतभवः संस्कृतसमो देशी चेत्यनेकविधः तत्र देशिसंस्कृत-

बद्धो वासरसङ्गे भीमो रामेण लवणसलिलावासे।
सहसा संरम्भरसो दूरारूढरविमण्डलसमो लोले॥ २॥

भवयोः प्राकृतयोरपभ्रंशस्य चासाधुशब्दत्वेनाधर्मजनकत्वात् उपक्रान्ते संस्कृतबन्धे समावेशासम्भवाच्च महाकविर्भट्टहरिः असामर्थ्यं बोधयन् शब्दसमायाः प्राकृतभाषायाः संस्कृतबन्धे समावेशं दर्शयति अयञ्च भाषाश्लेष एव तथाच रुद्रटः वाक्ये यत्रैकस्मिन्ननेकभाषानिबन्धनं क्रियते। अयमपरो मतिमद्भिर्भाषाश्लेषोऽत्र विज्ञेय इति प्राकृतशास्त्रे तावच्छकारो मूर्द्धन्यषकारश्च नास्ति तत्र हि शषोः स इति सूत्रम् एवं दन्त्यो नकारो नास्ति नोणः इति सूत्रम् एवं एवमन्त्यस्थयकारो नास्ति यस्य ज इति च सूत्रम् एवमादिबहुतरमुन्नेयम्। सेतुबन्धनार्थं कृतनियमेन रामेण पत्रशय्यायां रात्रिर्गमितेति ज्ञापयितुं प्रभातवर्णनामधिकरोति।

चार्वित्यादि। वेलामूले वेलायाः समुद्रजलस्य मूले तटे विभावरी रात्रिः परिहीणा विगता कीदृशे वेलामूले चारुणा मन्दशीतसुगन्धिना समीरणेन वायुना रमणे आनन्दने चारु मनोज्ञञ्च तत्समीरणरमणञ्चेति कर्मधारयो वा रमयतीति रमणं रमन्तेऽत्रेति वा कीदृशी विभावरी हरिणकलङ्कस्य चन्द्रस्य किरणावल्या रश्मिपङ्क्त्या सविलासा शोभमाना सविभ्रमा वा आबद्धो रामस्य मोहो यया प्राकृते आकारात् परस्य सप्तम्येकवचनस्य ङेस्मिन्नित्यादेशौ भवतस्तत्र ङेपक्षे संस्कृतसमत्वं स्कन्धकाच्छन्दः तल्लक्षणं यथा चौमत्ता अट्टगणा पुव्वद्धे उत्तद्धे वि होन्ति समरूआ। सो खन्धआ विआणह पिङ्गल पभणे इमुद्धिवह सम्बोआ इति॥ १॥ भ०

बद्ध इत्यादि। नियमास्थितेऽपि न्यि नाशो समुद्र उषित इति वासरसङ्गे प्रभातकाले रामेण लवणसलिलावासे समुद्र इति विषयसप्तमी सहसा तत्क्षणं संरम्भरसः क्रोधरसो वीराख्यः भीमो दुःप्रेक्ष्यः बद्धो जनितः दूरारूढरविमण्डलसमो लोल इति दूरमारूढो मध्याह्नस्थो यो रविः तस्य मण्डलं तेन समस्तुल्योऽतितीक्ष्णत्वात् लोके

गाढगुरुपुङ्खपीडा सधूमसलिलारिसम्भ्रममहाबाणे ।
आरूढा सन्देहं रामे समहीधरा मही सफणिसभा ॥ २ ॥

चञ्चले समुद्रे प्रभातवातेन क्षोभ्यमाणत्वात् ॥ २ ॥ ज० म०

बद्ध इत्यादि । वासरस्य सङ्गः सम्बन्धो यत्र प्रभाते वासरस्य दिवसस्य सङ्गे सम्बन्धे सति वा रामेण लवणसलिलावासे लवणसमुद्रे संरम्भरसः क्रोधरसः सहसा तत्क्षणात् बद्धः कृतः कृतोपवासेऽपि मयि नायं प्रकटीभूत इति मत्वा संरम्भरसः कीदृशः भीमो भयदः दूरमारूढस्य मध्याह्नस्थितस्य रवेः सूर्य्यस्य मण्डलेन समोऽतितीक्ष्णत्वात् समुद्रे कीदृशे लोले चञ्चले रामभयेन प्रभातवातेन वा क्षोभ्यमाणत्वात् प्राकृतशास्त्रे लवणशब्दस्य मध्यव्यञ्जनस्य स्वरेण सहोत्वं पक्षे विहितं तेन लोणं लवणमिति द्वयमपि स्यात् गाथावत् स्कन्धकायामपि षष्ठो गणो मध्यगुरुश्चतुर्लघुर्वा अत्र पूर्वार्द्धे चतुर्लघुः षष्ठः गणः ॥ २ ॥ भ०

गाढेत्यादि । गाढं सुष्ठु गुरोः पुङ्खस्य या पीडा पीडनम् अङ्गुष्ठाभ्यां तया हेतुभूतया सधूमसलिलारेः अग्नेः सम्भ्रमो यत्र स महाबाणो यस्य रामस्य तस्मिन् सति महासन्देहमारूढा संशयं प्राप्ता समहीधरा मही सफणिसभा सह भुजङ्गसमूहेन धारयन्तीति धराः अत्र धकारस्य पदमुखे वर्त्तमानस्य हकारो न भवति प्राकृते पदमध्यान्तयोर्विधीयमानत्वात् महीधर इति समस्तपदेऽपि न प्रवर्त्तते अत्र पूर्वपदमुत्तरं पदमिति व्यपदेशात् एवञ्च सति गोधरवज्रधरचक्रधरशङ्खधरादिषु न प्रवर्त्तते महीधरो महिहर इत्युभयमपि प्राकृते प्रयुज्यते अमहानां विकल्पेन ह्रस्वदर्शनात् ॥ २ ॥ ज० म०

गाढेत्यादि । गाढा दृढा गुरुपुङ्खस्य या पीडा अङ्गुष्ठतर्जनीभ्यामाकर्षणं यया सधूमस्य सलिलारेरग्नेः सम्भ्रमो यत्र तादृशो महान् बाणो यस्य तादृशे रामे सति मही पृथिवी सन्देहं विनाशसंशयम् आरूढा प्राप्ता कीदृशी समहीधरा पर्वतैः सह वर्त्तमाना फणिसभया सर्पसमूहेन सहिता प्राकृते महीधरपदे ह्रस्वो न भवति

घोरजलदन्तिसङ्कुलमट्टमहापङ्ककाहलजलावासम् ।
आरीणं लवणजलं समिद्धफलबाणविद्धघोरफणिवरम् ॥ ४ ॥
सभयं परिहरमाणो महाहिसञ्चारभासुरं सलिलगणम् ।
आरूढो लवणजलो जलतीरं हरिबलागमविलोलगुहम् ५

तत्र बहुलाधिकारात् खधथभामिति धकारस्य हकारो न भवति तत्र प्रायोऽधिकारात् पीडेति डोल इति लत्वं न भवति प्रायोग्रहणात् पीलेति पाठो वा संस्कृतेऽपि सनीषादित्वादैक्यस्मरणात् ॥ २ ॥ भ०

घोरेत्यादि । रामेणाग्नेये शरे क्षिप्ते सति लवणजलमारीणं समन्तात् शुष्कं रीङ्स्रवण इत्यस्मात् निष्ठातकारस्य ल्वादय ओदित इति नत्वम् अट्कुप्विति णत्वं रीणमित्यप्रयोगः प्राकृते महाराष्ट्रे तस्याप्रयोगात् घोरैः रौद्रैर्जलदन्तिभिः सङ्कुलं व्याप्तम् अट्टः शुष्को यो महापङ्कः तेन काहला विह्वला जलावासा मत्स्यादयो यत्र अट्ट अतिक्रमहिंसनयोरित्यस्य रूपं समिद्धफलेन दीप्तफलेन बाणेन विद्धाः घोराः फणिवरा महासर्पा यत्रेति ॥ ४ ॥ ज० म०

घोरेत्यादि । रामेणाग्नेयास्त्रे क्षिप्ते सति लवणजलम् आरीणं समन्तात् शुष्कम् ओरीङ्स्रवणे ल्वाद्योरिति क्तस्य नत्वं कीदृशं जलं घोरैर्भीमैर्जलहस्तिभिः सङ्कुलं व्याप्तम् अट्टः शुष्कोऽत्यर्थो वा यो महापङ्कस्तेन काहलाः शुष्का जलावासा मत्स्यादयो यत्र अट्टऽतिक्रमे वधे इत्यस्येदं रूपम्, अट्टं भक्ते च शुष्के च क्षौमेऽत्यर्थेऽट्टान्तरे । काहली तु तरुण्यां स्यात् काहलं भृशशुष्कयोरिति च विश्वः । काहलं विह्वलेऽपि स्यादित्यन्ये । प्राकृतपक्षे कातरशब्दस्य काहलमिति भवति कातरवितस्तिमातुलङ्गेष्वित्यनेन तकारस्य हादेशात् हरितादित्वेन रेफस्य लत्वाच्च दीप्तफलेन बाणेन विद्धा घोराः फणिवराः सर्पश्रेष्ठा यत्र ॥ ४ ॥ भ०

सभयमित्यादि । सलिलगणं सलिलसमूहं सभयं महाहीनां सञ्चारेण भासुरं भासनशीलं तच्छिरोमणिद्योतितत्वात् परिहरमाणः

चञ्चलतरुहरिगणं बहुकुसुमाबन्धबद्धरामावासम् ।
हरिपल्लवतरुजालं तुङ्गरुसमिद्धतरुवरहिमच्छायम् ॥ ६ ॥
वरवारणं सलिलभरेण गिरिमहीमण्डलसंवरवारणम् ।

परित्यजन् कर्त्रभिप्राये तङ् । लवणजलः समुद्रः लवणं जलमस्येति जलतीरं तटं यत्र रामस्तिष्ठति तदारूढः संप्राप्तो मूर्त्तिमान् हरिबलागमेन वानरसैन्यागमेन विलोला व्याकुला गुहा यत्रेति ॥५॥ ज० म०

समयमित्यादि । लवणं जलमस्य स लवणजलः समुद्रः जलतीरं आरूढः संप्राप्तो मूर्त्तिमान् भूत्वा किं कुर्वन् सभयं यथा स्यात्तथा सर्वजगणं जलराशिं परिहरमाणः परित्यजन् सभयमित्यत्र प्राकृते प्रायोग्रहणात् यलोपाभावः कगचजेति यलोपे अवर्णोयश्रुतिरिति यकारश्रवणमित्यन्ये । कीदृशं सलिलगणं महाहीनां महासर्पाणां सञ्चारेण भासुरं तत्र शिरोमणिभिर्दीप्रं कीदृशं जलतीरं हरिबलागमेन वानरसैन्यागमनेन विलोला व्याकुला गुहा यत्र । विलोचनतरुमिति कचित्पाठः ॥ ५ ॥ भ०

चञ्चेत्यादि । चञ्चलश्चपलः तरुहरिणानां वानराणां गणो यत्र जलतीरे बहुकुसुमानां वृक्षाणामाबन्धेन परस्परसंश्लेषेण बद्धो घटितो रामावासो यत्र हरिपल्लवानि तरुजालानि यत्र तुङ्गा उरवः परिमण्डलाः समिद्धा उज्ज्वला ये तरुवरास्तैर्हिमा शीतला छाया यत्र तज्जलतीरम् ॥ ६ ॥ ज० म०

चञ्चलेत्यादि । कीदृशं जलतीरमारूढः चञ्चलस्तरुहरिणानां वानराणां गणो यत्र बहूनि कुसुमानि येषां तेषां वृक्षाणाम् आबन्धेन परस्परसंश्लेषेण बद्धो घटितो रामस्यावासो वासस्थानं यत्र हरयः पिङ्गलाः पल्लवा यस्य तादृशं तरुजालं वृक्षसमूहो यत्र तुङ्गा उच्चा उरवोऽत्यर्थविस्तीर्णमण्डलाः समिद्धा उज्ज्वला ये तरुवरास्तैः शीतला छाया यत्र ॥ ६ ॥ भ०

वरेत्यादि । वरा उत्कृष्टा वारणा यत्र सलिलभरेण सलिलसमूहेन यो गिरीणां महीमण्डलस्य च संवरः संवरणमावरणं प्रहेत्यादिनाप्

वसुधारयं तुङ्गतरङ्गसङ्गपरिहीणलोलवसुधारयम् ॥ ७ ॥

कुलकम् ।

एतानि सप्त सङ्कीर्णानि ।

प्रणिपत्य ततो वचनं जगाद हितमायतौ पतिर्वारीणाम् ।

गङ्गावलम्बिबाहुं रामं बहलोरुहरितमालच्छायम् ॥ ८ ॥

पूर्वार्द्धं निरवद्यम् ।

तस्य वारणं निषेधकं समुद्रस्य वेलातिक्रमात् वसु द्रव्यं तस्य धारयं धारकम् अनुपसर्गादिति णिजन्ताच्छः तुङ्गाः अभ्रंलिहा ये तरङ्गास्तैः सह यः सङ्गः संश्लेषः तस्मात् परिहीणो नष्टो लोलो वसुधायां तत्सम्बन्धिन्यां रयो वेगो यत्र तज्जलतीरमाहुः गणितक्रमस्तेतत् । एतानि सप्त सङ्कीर्णानि संस्कृतप्राकृतयोरविशिष्टत्वात् ॥ ७ ॥ ज० म०

वरवारणमित्यादि । पुनः कीदृशं वरा उत्कृष्टा वारणा हस्तिनो यत्र सलिलभरेण जलातिशयेन गिरीणां महीमण्डलस्य च संवरः संवरणं तस्य वारणं निषेधकं समुद्रेण वेलाया अतिक्रमात् वसुधारयं द्रव्यस्य धारकं साहिमातीति धारे शः । तुङ्गानाम् उच्चानां तरङ्गाणां यः सङ्गः संश्लेषः तेन परिहीणो भ्रष्टो लोलो वसुधायां तत्सम्बन्धिन्यां रयो वेगो यत्र तरङ्गेण जलवेगनिरासात् । एतानि सप्त सङ्कीर्णानि संस्कृतप्राकृतयोरविशिष्टस्वरूपत्वात् ॥ ७ ॥ भ०

प्रणिपत्येत्यादि । ततस्तीरप्राप्तेरनन्तरं वारीणां पतिः समुद्रः रामं प्रणिपत्य वचनं जगाद हितमात्मनो रामस्य पथ्यमायतावागामिनि काले गङ्गावलम्बी गङ्गायलम्बनशीलः संपूर्णत्वाद्बाहुर्यस्य स गङ्गावलम्बिबाहुः संस्कृते ढ्लोपे पूर्वस्य दीर्घो नः प्राकृते तु पुंलिङ्गे उकारस्य दीर्घत्वं विभक्तिसकारस्य च लोपः । उरुर्महान् हरिः हरितो यस्तमालः बहला घना तस्येव छाया यस्य तमिति । पूर्वार्द्धं निरवद्यमिति पूर्वस्मिन्नर्द्धे प्राकृतस्याभावात् निरवद्य पश्चादर्द्धे तु संकीर्णमेव ॥ ८ ॥ ज० म०

तुङ्गा गिरिवरदेहा अगमं सलिलं समीरणो रसहारी ।
अहिमो रविकिरणगणो माया संसारकारणं ते परमा ॥ ९ ॥
आयाससम्भवारुण ! संहर संहारहिमहरसमच्छायम् ।
बाणं वारिसमूहं सङ्गच्छ पुराणचारदेहावासम् ॥ १० ॥

प्रणिपत्येत्यादि । ततस्तीरप्राप्त्यनन्तरं वारीणां पतिः समुद्रः रामं प्रणिपत्य प्रणम्य वचनं जगाद कीदृशं वचनम् आयतावत्तरकाले हितम् आत्मनो रामस्य च पथ्यं कीदृशः समुद्रः गङ्गावलम्बनौ गङ्गावलम्बनशीलौ बाहू यस्य संस्कृते रिचोऽत्रे इत्यनेन क्वतरेफस्य ढ्रोढ्रीति लोपः पूर्वस्य दीर्घत्वं प्राकृते तु पुंलिङ्गे उकारस्य दीर्घत्वं सिलोपश्च रामं कीदृशं बहला निविडा उर्वीसंहतोर्हरितमालयोरिव शुकपक्षविशेषयोरिव छाया कान्तिर्यस्य, शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिष्वित्यमरः । प्राकृते हरिच्छब्दस्य तलोपोऽन्त्यव्यञ्जनस्येत्यनेन पूर्वार्द्धं निरवद्यमिति वचनशब्दस्य दन्त्यान्तत्वात् प्राकृतस्य पूर्वार्द्धेन सम्भवः तेन केवलसंस्कृतत्वान्निरवद्यम् उत्तरार्द्धन्तु सङ्कीर्णमेव ॥ ८ ॥ भ०

तुङ्गा इत्यादि । गिरिवरदेहाः कुलपर्वतकायाः तुङ्गाः प्रांशवः अगमं सलिलम् अगम्यं ग्रहेत्यादिनाप् समीरणो रसहारी अपांशोषकः अहिम उष्णः रवेः किरणगणः एतत्सर्वं तव माया परमा महती संसारस्य कारणं सर्वथा त्वं विष्णुः त्वत्कृतेषु को दोष इति ॥ ९ ॥ ज० म०

तुङ्गा इत्यादि । गिरिश्रेष्ठानां देहास्तुङ्गा उच्चाः सलिलं समुद्रादि अगम्यं समीरणो वातो रसहारी जलशोषकः रवेः किरणगणोऽहिम उष्णः इत्यादिकं यत् सर्वं संसारस्य कारणं हेतुः तत्ते तव परमा माया महाकपटं एतेन त्वं विष्णुः स्वयं स्रष्टा मयि रोषोऽनुचित इति सूचितम् ॥ ९ ॥ भ०

आयासेत्यादि । यस्मात्संसारकारणं यदगम्यं सलिलं कृतं तस्मात्त्वं हे आयाससम्भवारुण ! रोषसम्भवेन रक्तीभूत ! संहारे प्रलये हिमहरा आदित्यास्तैः समा छाया यस्य बाणस्य तं संहर उपशमय

असुलभहरिसञ्चारं जलमूलं बहलपङ्करुदायामम् ।
भण किं जलपरिहीणं सुगमं तिमिकम्बुवारिवारणभीमम् ॥११

वारिसमूहं संग्च्छ अङ्गीकुरु सकर्मकत्वात्समोगमित्यात्मनेपदं न भवति पुराणः शाश्वतः दर्शनीयो यो देहः तस्य वासमवस्थानम् ॥१०॥ ज० म०

आयासेत्यादि । हे आयाससम्भवारुण ! आयाससम्भवेन दुःखजनितेन क्रोधेनारुण ! रक्ताङ्ग ! त्वं बाणं संहर उपशमय कीदृशं बाणं संहारे प्रलये हिमहराः सूर्या वह्नयो वा तैः समा छाया कान्तिर्यस्य तं त्वं वारिसमूहं सङ्गच्छ अङ्गीकुरु रचेति भावः समोगच्छेति न मं सकर्मकत्वात् यतः पुराणस्य पूर्वकालीनस्य चारोर्मनोज्ञस्य स्वदेहस्यावासं स्थानम् आवासमित्यत्र प्राकृते गोविन्दुरित्यनुस्वार एव भवति संस्कृते तु यद्यपि मकारस्थितिरेव स्यात् तथा श्रुतेरभेदाद्भाषासमावेश इति दृष्टा इति विद्यासागरः वा विरामे इत्यन्ये ॥ १० ॥ भ०

असुलभेत्यादि । अन्यच्च यदेतज्जलमूलं जलस्यावस्थानम् आग्नेयशरशोषितत्वाज्जलपरिहीणं सत् तत् किं सुखेन गम्यत इति भण ब्रूहि यतो बहलः सान्द्रो यः पङ्कस्तेन रुद्ध आयामो दैर्घ्यं यत्र तिमयो मत्स्याः कम्बवः शंखाः वारिवारणाः जलहस्तिनः तैर्भीमम् एवं च सति असुलभो दुर्लभः हरिसञ्चारो वानरपर्यटनं यत्रेति ॥ ११ ॥ ज० म०

असुलभेत्यादि । एतज्जलमूलम् आग्नेयास्त्रेण जलपरिहीणमपि किं सुगमं सुखेन गम्यते इति भण ब्रूहि अपितु नैव यतो बहलः सान्द्रो यः पङ्कस्तेन रुद्ध आयामो दैर्घ्यं यस्य क्वापि पङ्काभावो नास्ति तिमिभिर्मत्स्यैः कम्बुभिः शङ्खैः वारिवारणैर्जलहस्तिभिर्भीमम् एवं सति असुलभो दुर्लभो हरिसञ्चारो वानरपर्यटनं यत्र तिमिर्मीन इति हलायुधः। अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृत इत्यन्ये । असुलभेत्यत्र हकारादेशो न भवति प्राकृते मावोऽवृषाद्युक्तेः ॥ ११ ॥ भ०

गन्तुं लङ्कातीरं बद्धमहासलिलसञ्चरेण सहेलम् ।
तरुहरिणा गिरिजालं वहन्तु गिरिभारसंसहा गुरुदेहम् १२

हरहासरुद्धविगमं परकण्ठगणं महाहवसमारम्भे ।
छिन्दन्तु रामबाणा गम्भीरे मे जले महागिरिबद्धे ॥ १३ ॥

गच्छन्तु चारुहासा वीररसाबन्धरुभयसम्बन्धम् ।

गमनोपायमाह ।

गन्तुमित्यादि । सञ्चरन्त्यनेनेति सञ्चरः गोचरसञ्चरेति टच् बद्धो घटितो महासलिले यः सञ्चरः तेन सेतुना सहेलम् एकप्रवृत्त्या लङ्कातीरं लङ्कोपलक्षितं तटं गन्तुं तरुहरिणा वानरा गिरिभारस्य संसहाः क्षमाः संसहन्ते इत्यच् गिरिजालं गिरिसमूहं वहन्तु प्रापयन्तु गुरुर्देहः शरीरं यस्य गिरिजालस्य ॥ १२ ॥ ज० म०

गन्तुमित्यादि । बद्धो घटितो यो महासलिले सञ्चरः सेतुस्तेन सहेलं सकौतुकं यथा स्यात् तथा लङ्कासम्बन्धितीरं गन्तुं गुरुदेहं महाकायं गिरिजालं पर्वतसमूहं वहन्तु कीदृशाः गिरिभारसंसहाः पर्वतवहनक्षमाः सञ्चरत्यनेन लोक इति सञ्चरः करणेऽप् ॥ १२ ॥ भ०

हरेत्यादि । मम जले गम्भीरे अगाधे महागिरिभिर्बद्धे सति यो महाहवस्य समारम्भः प्रवर्त्तनं तस्मिन् परस्य शत्रोः कण्ठगणं ग्रीवासमूहं हरस्य तुष्टत्वात् यो हासः तेन रुद्धो विगमश्छेदो यस्य तं रामशराश्छिन्दन्तु आशिषि लोट् ॥ १३ ॥ ज० म०

हरेत्यादि । मम गम्भीरेऽगाधे जले महागिरिभिर्बद्धे सति महायुद्धस्य समारम्भे प्रवृत्ते परस्य दशाननस्य कण्ठसमूहं रामस्य बाणाश्छिन्दन्तु आशिषि लो । कीदृशं हरस्य हासेन रुद्धो निवारितो विगमोऽपायो यस्य रावणो महादेवस्य प्रीतये स्वशिरांसि छिन्नवान् ततस्तुष्टस्य महादेवस्य हासो जात इति प्रसिद्धिः ॥ १३ ॥ भ०

गच्छन्त्वित्यादि । बहवो वाहव एव वनं यस्य बाहूनां तरूणामिव नम्रत्वात् तं रावणं वीररसस्य शौर्य्यस्य य आबन्धः सन्ततप्रवर्त्तनं तेन रुद्धो निवारितो भयसम्बन्धस्त्राससम्पर्को यस्य तं गिरिवरो-

हन्तुं बहुबाहुबलं हरिकरिणो गिरिवरोरुदेहं सहसा १४

एतानि षट् सङ्कीर्णानि ।

जिगमिषया संयुक्ता बभूव कपिवाहिनी मते दाशरथेः ।
बुद्धजलालयचित्ता गिरिहरणारम्भसम्भवसमालोला ॥१५॥

पूर्वार्द्धं निरवद्यम् ।

गुरुगिरिवरहरणसहं संहारहिमारिपिङ्गलं रामबलम् ।

रुदेहं गिरिवन्महाकायं सहसा हन्तुं तत्क्षणं हनिष्याम इति हरि-करिणः कपिहस्तिनः चारुहासाः मम जले बद्धे सति गच्छन्तु ॥१४॥ज०म०

एतानि षट् सङ्कीर्णानि ।

गच्छन्त्वित्यादि । हरिकरिणो वानरश्रेष्ठा आयासाभावात् सकौतुकाः सन्तः बहुबाहो रावणस्य बलं सैन्यं हन्तुं सहसा विरोधेन गच्छन्तु कीदृशं बलं वीररसस्य शौर्यस्य यः आवन्धः सततप्रवर्त्तनं तेन रुद्धो निवारितो भयसम्बन्धस्त्रासस्पर्शो यस्य गिरिवरस्येव उरुर्महान् देहो यस्य ॥ १४ ॥ भ०

एतानि सङ्कीर्णानि संस्कृतप्राकृतयोस्तुल्यत्वात् ।

जिगमिषयेत्यादि । दाशरथेर्मतेऽभिप्राये सति कपिवाहिनी कपिसेना जिगमिषया गन्तुमिच्छया संयुक्ता बभूव बुद्धजलालयचित्ता विदितसमुद्राभिप्राया गिरीणां यदाहरणमानयनं तस्य यः आरम्भसम्भवः तेन समा लोला आकुला । इत्येतदर्द्धं निरवद्यम् ॥१५॥ज०म०

जिगमिषयेत्यादि । दाशरथे रामस्य मते इच्छायां सत्यां कपिसेनां जिगमिषया गन्तुमिच्छया संयुक्ता बभूव कीदृशी बुद्धम् अवगतं जलालयस्य समुद्रस्य चित्तं यया गिरीणां यत् हरणमानयनं तस्य य आरम्भसम्भवोऽनुष्ठानं तेन समा रामाज्ञानन्तरमेव चलितेति भावः लोला चञ्चला । पूर्वार्द्धं निरवद्यं संस्कृतमात्रत्वात् जिगमिषयेत्यादौ मूर्द्धन्यषादिश्रवणात् ॥ १५ ॥ भ०

गुर्वित्यादि । ततो रामबलं सहसा तत्क्षणं समादरं गुरूणां

आरूढं सहसा खं वरुणालयविमलसलिलगणगम्भीरम् १६

अवगाढं गिरिजालं

तुङ्गमहाभित्तिरुद्धसुरसञ्चारम् ।

अभयहरिरावभीमं

करिपरिमलचारुबहलकन्दरसलिलम् ॥ १७ ॥

अलिगणविलोलकुसुमं सकमलजलमत्तकुररकारण्डवगणम् ।

गिरिवराणां यदाहरणमानयनं तत्सहत इति मूलविभुजादित्वात् कः तस्य वा सहं शक्तं सहत इत्यच् संहारे प्रलये यो हिमारिरग्निः तद्वत्पिङ्गलं वरुणालयस्य समुद्रस्य या विमलसलिलगणः निर्मलजलसमूहः तद्वद्गम्भीरं खमिति ॥ १७ ॥ ज० म०

गुरुगिरीत्यादि । ततो रामबलं कर्तृ सहसा तत्क्षणं खमाकाशम् आरूढं आरोह रुहः कर्तरि क्तः कीदृशं बलं गुरूणां गिरिवराणां यत् हरणमानयनं तत्सहं सहते इति पचादित्वादच् संहारे प्रलयकाले यो हिमारिरग्निस्तद्वत् कपिलं तेजस्वित्वमपि तादृशं सूचितं खं कीदृशं वरुणालयस्य समुद्रस्य यो विमलः सलिलगणस्तद्वद्गम्भीरं दुरवगाहम् ॥ १६ ॥ भ०

अवेत्यादि । खमारुह्य रामबलेन गिरिजालमवगाढम् अवष्टब्धं तुङ्गाभिरुच्छ्रिताभिर्महतीभिः परिणाहवतीभिर्भित्तिभीरुद्धः सुराणां सञ्चारो यस्मिन् तेषामुच्चतत्वात् अभया ये हरयः सिंहास्तेषां रावेन शब्देन भीमं भयानकं करिणां यः परिमलः संमर्दस्तेन चारु शोभनं बहलं घनं कन्दरसलिलं यस्मिन् ॥ १७ ॥ ज० म०

अवगाढमित्यादि । खमारुह्य रामबलेन गिरिवृन्दमवगाढम् अवष्टब्धं तुङ्गाभिरुच्चाभिर्महतीभिः परिणाहवतीभिर्भित्तिभीरुद्धो निराकृतः सुरस्य सञ्चारो येन यत्र वा अभयना हरीणां सिंहानां रावेन शब्देन भयानकं करिपरिमलेन हस्तिसंमर्दजनितमदगन्धेन चारु शोभनं बहलं मधुरं कन्दरसलिलं यत्र ॥ १७ ॥ भ०

फणिसङ्कुलभीमगुहं करिदन्तसमूढ़सरसवसुधाखण्डम् १८

अरविन्दरेणुपिञ्जरसारसरवहारिविमलबहुचारुजलम्।
रविमणिसम्भवहिमहरसमागमाबद्धबहुलसुरतरुधूपम्॥१९॥
हरिरवविलोलवारणगम्भीरावद्धरसपुरुसंरावम्।

अलिगणेत्यादि। अलिगणैर्विलोलानि कुसुमानि यत्र सकमलेषु जलेषु मत्ताः कुरराणां कारण्डवानाञ्च गणा यत्र फणिभिः सङ्कुला व्याप्ताः सत्यो भीमा गुहा यत्र करिदन्तैः समूढं समुत्क्षिप्तं सरसं सान्द्रं वसुधायाः खण्डं यत्र॥ १८॥ ज० म०

अलिगणेत्यादि। कीदृशं गिरिजालम् अलिगणैर्भ्रमरसमूहै-र्विलोलानि कुसुमानि यत्र सकमलेषु जलेषु मत्ताः कुरराणां कारण्ड-वानाञ्च पक्षिविशेषाणां गणाः समूहा यत्र फणिभिः सर्पैः संकुला व्याप्ता अतएव भीमा गुहा यत्र करिदन्तैः समूढमुत्क्षिप्तं सरसमार्द्रं वसुधायाः खण्डं यत्र॥ १८॥ भ०

अरविन्देत्यादि। अरविन्दरेणुभिः पिञ्जराः पिङ्गला ये सारसा-स्तेषां रवेण हारि मनोहारि विमल बहु चारु जलं यत्रेति रवि-मणिसम्भवः सूर्य्यकान्तमणिसम्भवः यो हिमहरः अग्निः तेन यः समागमः संश्लेषस्तेनाबद्धो जनितो बहुलः सुरतरुधूपो यत्र॥ १९॥ ज० म०

अरविन्देत्यादि। पुनः कीदृशं गिरिजालम् अरविन्दानां रेणुभिः पिञ्जराः पिङ्गला ये सरसाः पक्षिभेदास्तेषां रवेण हारि मनोहारि निर्मलं बहु चारु जलं यत्र रविमणिसमुत्पन्नेन हिमहरेणाग्निना यः समागमस्तेनाबद्धो जनितो विपुलः सुरतरुधूपो देवदारुधूपो यत्र तादृशं पोय इति प्राकतसूत्रे बहुलाधिकाराद्व वकारादेशः॥ १९॥ भ०

हरिरवेत्यादि। हरीणां सिंहानां यो रवस्तेन विलोलास्त-स्वो ये वारणास्तैर्गम्भीरो मन्द्र आबद्धो जनितः सरसो भयानकरस-युक्तः पुरुर्महान् संरावो यत्र घोणासम्पर्कात् सम्भवो यस्य पङ्कस्य

घोणासङ्गमपङ्काविलसुबलभरसहोरुवराहम् ॥ २० ॥

एतानि पञ्च सङ्कीर्णानि ।

उच्चखनुः परिरभ्यान् कपिसंघा बाहुभिस्ततो भूमिभृतः ।
निष्पिष्टशेषमूर्धः शृङ्गविकीर्णोरुरश्मिनक्षत्रगणान् ॥ २१ ॥

सर्वं निरवद्यम् ।

घोणासमुद्भूतो यः पङ्क इत्यर्थः तेनाविलाः लिप्ताङ्गाः सुबला तत एव भरसहाः उरवश्च वराहा यत्र तद्गिरिजालमवगाढमिति ॥ २० ॥ ज० म०

एतानि पञ्च सङ्कीर्णानि ।

हरिरवेत्यादि । पुनः कीदृशं गिरिजालं हरीणां सिंहानां रवेण शब्देन विलोलाश्चञ्चला ये वारणा हस्तिनस्तैर्गम्भीरमावद्धो जनितः सरलो भयानकरसान्वितः पुरुर्महान् संरावः शब्दो यत्र घोणाया नासिकायाः सम्पर्कात् सम्भवो यस्य तेन पङ्केनाविला लिप्ताङ्गाः सुबला अतएव भरसहा उरवो महान्तो वाराहा यत्र ॥ २० ॥ भ०

एतानि सङ्कीर्णानि प्राकृततुल्यत्वात् ।

उच्चखनुरित्यादि । ततोऽवगाहादनन्तरं बाहुभिः परिरभ्यान् समाश्लिष्टान् भूमिभृतः पर्वतान् कपिसंघा उच्चखनुः उत्खातवन्तः गमहनेत्युपधालोपः निष्पिष्टशेषमूर्धः व्याप्तपातालमूलत्वात् चूर्णितनागराजमस्तकान् शृङ्गैः शिखरैर्विकीर्णा उरुरश्मिरादित्यो नक्षत्रगणश्च यैर्दिवं व्याप्य स्थितत्वात् । सर्वं निरवद्यमिति अत्र प्राकृतस्याप्रयुक्तत्वात् ॥ २१ ॥ ज० म०

उच्चखनुरित्यादि । ततोऽवगाहानन्तरं कपिसंघाः कपिसमूहा बाहुभिः परिरभ्यान् समाश्लिष्टान् भूमिभृतः पर्वतान् उच्चखनुः उत्खातवन्तः कीदृशान् निष्पिष्टाश्चूर्णिताः शेषस्यानन्तस्य मूर्धानो मस्तका

तुङ्गमहागिरिसुभरा बाहुसमारूढभिदुरटङ्का बहुधा।
लवणजलबन्धकामा आरूढा अम्बरं महापरिणाहम् ॥२२॥
बहुधवलवारिवाहं विमलायसगुरुमहासिदेहच्छायम्।
बद्धविहङ्गममालं हिमगिरिमिव मत्तकुररवसम्बद्धम् ॥२३॥

यैः पातालमूलत्वात् घट्टैः शिखरैर्विकीर्णौ विक्षिप्त उष्णरश्मिः सूर्यो नक्षत्रगणश्च यैर्दिवं व्याप्य स्थितत्वात् ॥ २१ ॥ भ०

तुङ्गेत्यादि। तुङ्गा उच्चा महान्तः परिणाहवन्तो ये गिरयस्तैः सुभरा जातभाराः कपयः बाहुभिः समारूढा भिदुराः विदारणशीलाः टङ्का उन्नतप्रदेशा यैस्ते बहुधा अनेकप्रकारं लवणजलबन्धकामाः एवमेवं बद्धव्यमिति जातेच्छाः आरूढाः अम्बरं महापरिणाहम् अप्रमेयदिग्विभागम् ॥ २२ ॥ ज० म०

तुङ्गेत्यादि। लवणजलस्य समुद्रस्य बन्धनं कामयन्तोऽभिलषन्तो वानरा अम्बरमाकाशमारूढा बहुधा अनेकप्रकारेण कीदृशाः तुङ्गैरुच्चैर्महद्भिः सपरिणाहैर्गिरिभिः सुभरा बहुभारान्विताः बाहुभिः समारूढा गृहीता भिदुरास्तेषां बाहुसम्बन्धात् स्वयमेव वा भिद्यमानाष्टङ्का उन्नतप्रदेशा यैः छिद्भिदिद इति कुरः कर्मकर्त्तर्येव कुर इति केचित् भिदुरो विदारणशील इत्यन्ये। कीदृशमम्बरं महापरिणाहम् अप्रमेयदिग्विभागं कामा आरूढा इति प्राकृते पदयोः सन्धिर्वेति पक्षे सन्ध्यभावः ॥ २२ ॥ भ०

बह्वित्यादि। बहवो धवला वारिवाहा यत्राम्बरे विमलायसः अयसो विकारः गुरुरलघुर्महान् योऽसिः खड्गः तस्य यो देहः तस्य छायेव छाया यस्य बद्धा विहङ्गानां माला पङ्क्तिर्यत्र मत्तानां कुरराणां रवेण सम्बद्धं युक्तम् अतो हिमगिरिमिवाम्बरमारूढा इति ॥ २३ ॥ ज० म०

बहुधवलेत्यादि। पुनः कीदृशमम्बरं बहवो धवला वारिवाहा मेघा यत्र विमल आयसो लोहविकारो गुरुर्महान् योऽसिः खड्गः तच्छरीरस्येव छाया शोभा यस्य बद्धा विरचिता सम्बद्धा वा विहङ्ग-

चारुकलहंससङ्कुलमचण्डसञ्चारसारसाबद्धरवम्।
सकुसुमकणगन्धवहं समयागमवारिसङ्गविमलायामम् २४
सहसा ते तरुहरिणा गिरिसुभरा लवणसलिलबन्धारम्भे।
तीरगिरिमारूढ़ा रामागमरुद्धभयपरसञ्चारम् ॥ २५ ॥

एतानि चत्वारि सङ्कीर्णानि।

मानां पक्षिणां माला पङ्क्तिर्यत्र मत्तानां कुररीणां रवेण सम्बद्धं संयुक्तं हिमगिरिमिव हिमालयमिव ॥ २३ ॥ भ०

चारुकलेत्यादि। चारुभिः कलहंसैः सङ्कुलं व्याप्तम् अचण्डसञ्चारैः शनैःसञ्चरद्भिः सारसैरावद्धो रवो यस्मिन् सकुसुमकणः सपुष्परेणुर्गन्धवहो वायुर्वलेति वहतीति वहः कर्त्तर्यच् गन्धस्य वह इति वः समयस्य प्रावृट्कालस्य य आगमः तेन यो वारिसङ्गः तेन प्रक्षालितत्वात् विमला आयामा यत्र तदम्बरमारूढ़ा इति ॥ २४ ॥ ज०म०

चारुकलेत्यादि। पुनः कीदृशमम्बरं चारुभिः कलहंसैः राजहंसैः कादम्बैर्वा सङ्कुलं व्याप्तं, कलहंसस्तु कादम्बे राजहंसे नृपोत्तम इति इति विश्वः। अचण्डसञ्चारैः शनैःशनैः सञ्चरद्भिः सारसैरावद्धो रचितो रवो यत्र सकुसुमकणः पुष्पावयवसहितो गन्धवहो वायुर्यत्र समयस्य वर्षाकालस्य आगमेन घागमनेन यो वारिसङ्गस्तेन प्रक्षालितत्वात् विमल आयामो दैर्घ्यं यस्य सम्प्रति मेघशून्यत्वात् ॥ २४ ॥ भ०

सहसेत्यादि। ते तरुहरिणाः शाखामृगाः गिरिभिः सुभराः सन्तः लवणसलिलबन्धारम्भे समुद्रबन्धनारम्भे सहसा तत्क्षणं तीरगिरिं तटस्थितं पर्वतमारूढ़ा अत्र संस्कृतपक्षे संहितायाः अविवक्षितत्वात् तीरगिरिमारूढ़ा इति नोक्तम् अन्ये चारूढ़ास्तीरमिति विपर्य्ययमस्य पठन्ति तदयुक्तं संस्कृतपक्षे अस्भावाद्यत्वं नास्ति अतो विसर्जनीयस्य सकार एव स्यात्। रामस्य य आगमस्तेन रुद्धः सभयानां रिपूणां शत्रूणां सञ्चारो यत्र तीरगिरौ राम आगत इति तत्र भयात् सञ्चारं न कुर्वन्त इति ॥ २५ ॥ ज० म०

एतानि चत्वारि सङ्कीर्णानि।

ततः प्रणीताः कपियूथमुख्यैर्न्यस्ताः क्रियानोस्त्तनयेन सम्यक्।
अकम्प्रब्रध्नाग्रनितम्बभागा महार्णवं भूमिभृतोऽवगाढ़ाः॥ २६

निराख्यातनिरवद्यम्।

सहस्रेत्यादि। ते तरुहरिणा वानरा गिरिभिः सुभरा महा-भारान्विताः सन्तो लवणसलिलस्य समुद्रस्य बन्धनारम्भे सहसा तत्-क्षणं तीरे स्थितं गिरिमारूढ़ाः कीदृशं गिरिं रामस्यागमनेन रुद्धो निरस्तः सभयानां परेषां शत्रूणां सञ्चारो यत्र तीरगिरौ राम आयात इति भयात्तत्र शत्रवो न सञ्चरन्तीत्यर्थः तीरे गिरिमारूढ़ा इति पाठो बहुप्राचीनपुस्तके दृश्यते आरूढ़ास्तीरगिरिमिति पाठे प्राकृते विसर्ग-लोपात् सङ्कीर्णत्वं न स्यात् लुप्तविसर्गपाठे संस्कृतत्वभङ्ग इति मन्य-माना: प्राञ्चस्तीरे गिरिम् आरूढ़ा इति तीरपदमसमस्तं गिरिपदेन च समासं कृत्वा विसन्धिं पठन्ति यद्यपि वेकस्यार्थेऽसे इति समासे नित्य एव सन्धिस्तथापि स्वरातोडौरिति डित्करणेन सन्धेरनित्यत्व-ज्ञापनात् मातृस्वर्गावुक्त इति दर्शनाच्च समासेऽपि क्वचित् सन्धिर्न भवतीति बोध्यं समासेऽपि क्वचिद्विसन्धिरिति पाणिनीयाः इकस्या-सवर्णे नित्यसमासवर्जमिति क्रमदीश्वरसूत्रे नित्यसमासवर्जनाद्विकल्प-समासेऽत्र पक्षे प्रकृतिभावः स्फुट एव एवं परसञ्चारमित्यत्र पर-सञ्चारे इति पठित्वा तीरविशेषणं वदन्ति तीरगिरिमारूढ़ा इति पाठो न शुद्धश्छन्दोभङ्गात्॥ २५॥ भ०

एतानि चत्वारि सङ्कीर्णानि प्राकृतसमानत्वात्।

तत इत्यादि। ततोऽनन्तरं भूमिभृतः पर्वताः कपियूथमुख्यै-र्नीलादिभिः क्रियानोस्त्तनयस्य नलस्य प्रणीताः अर्पिताः सन्तस्तेनैव क्रियाकुतनयेन सम्यक् साधु न्यस्ताः सन्तः महार्णवम् अवगाढ़ाः अव-ष्टब्धवन्तः अकम्प्राः स्थिराः ब्रध्नाग्रनितम्बानां भागा येषास्ते ब्रध्नो मूलम् इण्नशजिदी ङ्गष्यविभ्यो नगित्यधिकृत्य बन्धेर्ब्रधि बुधीचेत्यौ-णादिको नक्। इदं निराख्यातं तिङन्तपदाभावात् निरवद्यञ्च प्राकृ-ताभावात्॥ २६॥ ज० म०

तेनेऽद्रिबन्धो ववृधे पयोधिस्तुतोष रामो मुमुदे कपीन्द्रः।
तत्रास शत्रुर्ददृशे सुवेलः प्रापे जलान्तो जहृषुः प्लवङ्गाः॥२७॥

एकान्तराख्यातनिरवद्यम्।

तत इत्यादि। तदनन्तरं कपियोधमुख्यैर्नीलादिभिः प्रणीता दत्ता जगानोरम्भे स्तनयेन नलेन सम्यक् साधु न्यस्ता अर्पिता भूमिष्ठतः पर्वताः महार्णवम् अवगाढ़ाः आच्छादयामासुः कीदृशाः अकम्प्राः अकम्पनशीलाः स्थिरा ब्रध्नाद्यनितम्बभागा येषां मूलं ब्रध्नोऽङ्घ्रिर्नामक इत्यमरः। बुध्यौङ्वेदने नाम्न्यन्येतिक् चेति क्नः ष्टधुङ्लष्टघौ इत्यस्मात् क इति केचित् ब्रध्नशब्दोऽपि दृश्यते अग्रं शृङ्गं नितम्बो मध्यं निराख्यातमाख्यातप्रत्ययरहितं निरवद्यं केवलसंस्कृतत्वात् ताबव्यशादिमत्त्वात्॥२६॥ म०

तेन इत्यादि। अद्रिबन्धस्तेने शनैर्विस्तारं गतः अत एव ववृधे पयोधिर्वृद्धिं गतः गिरिभिः पूर्यमाणोदरत्वात् तीरं प्लावयतिस्म तुतोष रामस्तुष्टवान् सुकरमिदानीं शत्रुव्यापादनमिति मुमुदे कपीन्द्रः हृष्टवान् प्राप्तो मे प्रत्युपकारकाल इति तत्रास शत्रुः त्रासमुपगतः सेतुं बद्धवानिदानीमायातो राम इति ददृशे सुवेलः ढौकमानैः सर्वैर्दृष्टः जालान्तश्च प्रापे प्राप्तः ततो जहृषुः हृष्टाः प्लवङ्गाः स्वाम्यादेशः सम्पादित इति। एतदेकान्तराख्यातं सुबन्तपदैर्व्यवधानात् निरवद्यञ्च प्राकृताभावात्॥२७॥ ज० म०

तेन इत्यादि। अद्रीणां बन्धस्तेने वानरैर्विस्तारितः पयोधिर्ववृधे वृद्धिं गतः पर्वतैः पूर्यमाणत्वात् तीरं प्लावितवानित्यर्थः रामस्तुतोष तुष्टः सुकरमिदानीं शत्रुव्यापादनमिति मत्वा कपीन्द्रः सुग्रीवो मुमुदे हृष्टः प्राप्तो मे प्रत्युपकारकाल इति मत्वा शत्रुर्दशाननस्तत्रास भीतः अत्रापि राम आगत इति मत्वा सुवेलो ददृशे वानरैर्दृष्टः यतो जलसान्तोऽवसानं प्रापे प्राप्तः अतएव प्लवङ्गा वानरा जहृषुर्हृष्टाः स्वाम्यादेशः सम्पादित इति मत्वा। एतदेकान्तराख्यातं स्वाद्यन्तपदैर्व्यवधानात् निरवद्यञ्च प्राकृताभावात्॥२७॥ म०

भ्रेमुर्ववल्गुर्ननृतुर्जजक्षुर्जगुः समुत्पुप्लुविरे निषेदुः।
आस्फोटयाञ्चक्रुरभिप्रणेदू रेजुर्ननन्दुर्वियुयुः समीयुः॥ २८॥

आख्यातमाला।

गिरिपङ्कचारुदेहं कक्कोलवङ्गवद्दसुरभिपरिमलम्।

भ्रेमुरित्यादि। ते पारं प्राप्य केचित् प्रदेशदर्शनोत्सुकाः भ्रेमुः भ्रान्ताः अन्ये ववल्गुः तोषङ्गतवन्तः उख उखीत्यत्र वल्गतिर्गतौ पठते केचिदतिहर्षात् ननृतुः अन्ये रावणपराक्रमान् न्यक्कुर्वन्तो जक्षुः हसितवन्तः बुभुक्षया वा फलानि भक्षितवन्तः जक्षभक्षहसनयोः केचित् जगुः गायन्ति स्म केचित्समुत्पुप्लुविरे उत्प्लुत्योत्प्लुत्य गच्छन्ति स्म केचित् भ्रान्ता निषेदुः निषण्णाः केचिदास्फोटयाञ्चक्रुर्वयं युध्याम इति आस्फोटं कुर्वन्तीति ण्यन्तात्लिट्याम् केचित्तोषादभिप्रणेदुः सुष्ठु नादितवन्तः केचिद्रेजुः दीप्तवन्तः केचिन्ननन्दुर्वयमीदृशं कर्म कृतवन्त इति अन्ये वियुयुरितस्ततो गच्छन्तिस्म केचित्समीयुः एकत्र सङ्गताः। आख्यातमालेति तिङन्तमाला॥ २८॥ ज० म०

भ्रेमुरित्यादि। सेतुना पारं प्राप्य केचित् भ्रेमुः प्रदेशदर्शनोत्सुका इतस्ततो गताः अपरे ववल्गुः वल्गितवन्तः वल्गुव्रजे अनेकार्थत्वात् हर्षादिहेतुकप्रलापार्थेऽपि वर्त्तते अन्ये ननृतुः हर्षात् नृत्यं चक्रुः अन्ये जजक्षुः फलानि भक्षितवन्तः हर्षात् हसितवन्तो वा जक्षभक्षहसनयोः केचित् जगुः गायन्तिस्म केचित् समुत्पुप्लुविरे उत्प्लुत्य गतवन्तः केचिन्निषेदुः श्रमापनोदनार्थमुपविष्टाः केचिदास्फोटमहङ्कारं चक्रुः क्षेः कृत्याख्याने णिः अन्येऽभिप्रणेदुः पुरोसान्निध्ये शब्दं चक्रुः केचित् रेजुः पुष्पादिना शोभितवन्तः अन्ये ननन्दुः कृतकृत्यत्वात् हर्षं प्राप्ताः केचित् वियुयुः यूथादन्यत्र गताः कौतुकात् अपरे समीयुः एकत्र सम्भूय स्थिताः आख्यातमालेति पुष्पतुल्यानां क्रियापदानां ग्रथनात् उपसर्गस्य लिङ्गत्वेऽपि पृथक् स्थितत्वाभावात् क्रियाद्योतकत्वेनाख्याततुल्यतया व्यपदेशः॥ २८॥ भ०

गिरीत्यादि। गिरीणां प्रक्षिप्यमाणानां यः पङ्कः गैरिकादि-

बहुबहलोरुतरङ्गं परिसरमारूढमुद्धरं लवणजलम् ॥ २९ ॥

लोलं कूलाभिगमे खे तुङ्गामलनिबद्धपुरुपरिणाहम् ।
सुरगङ्गाभरणसहं गिरिबन्धवरेण लवणसलिलं रुद्धम् ॥३०॥

धातुकर्दम: तेन चारुदेहं कक्कोलवङ्गाभ्यां बद्धः सुरभिः परिमलो गन्धो यस्मिन् बहव: प्रभूता बहला: स्थूला उरव: उच्चास्तरङ्गा यस्य तदीदृशं लवणजलम् उद्धरम् उद्धृतं कर्दमभूतं परिसरं तटमारूढं सेतुना निवारितगतित्वात् ॥ २९ ॥ ज० म०

गिरिपङ्केत्यादि। लवणजलं कर्दमं परिसरं पर्यन्तभुवं तटमारूढं प्राप सेतुना निवारितगतित्वात् कीदृशं जलं गिरीणां मथ्यमानानां यो गैरिकादिधातुपङ्कस्तेन चारु देहं यस्य वर्णान्तरोत्पादनात् कक्कोलैर्लवङ्गैश्च गन्धद्रव्यविशेषैर्बद्धो रचितः सुरभि: परिमलो विमर्दोत्थो गन्धो यत्र बहव: प्रचुरा बहला स्थूला उरव उच्चास्तरङ्गा यस्य उद्धरं मर्य्यादामतिक्रान्तं प्राकृते कक्कोलशब्दस्य नानुस्वारविधि: कक्कोलशब्दस्यैव तत्रोल्लेखात् यत्तु कर्पूरमञ्जर्यां कङ्कोलीकुलं कुपित यति तत्रापि कक्कोलीत्येव पठनीयं लेखकप्रमादादनुस्वारपाठः वैकल्पिकोऽप्यनुस्वार इत्यन्ये ॥ २९ ॥ भ०

लोलमित्यादि। कूलाभिगमे तटगमने लोलं चञ्चलं खे आकाशे तुङ्गञ्च तदमलञ्चेति तुङ्गामलं निबद्ध: संयुक्तः पुरुर्महान् परिणाहो यस्य तुङ्गामलञ्च तन्निबद्धपुरुपरिणाहञ्चेति वियति आरोहपरिणाहाभ्यां युक्तमित्यर्थ: सुरगङ्गाया: मन्दाकिन्या: यद्भरणं पूरणं तत्र सहं सक्तं तादृशं लवणजलं गिरिबन्धवरेण सेतुना रुद्धम् ॥ ३० ॥ ज० म०

लोलमित्यादि। गिरिबन्धवरेण सेतुना लवणजलं रुद्धं कीदृशं कूलाभिगमे तटागमने लोलं चञ्चलं खे आकाशे तुङ्गञ्च तदमलञ्चेति तुङ्गामलं निबद्ध: संयुक्तः पुरुर्महान् परिणाहो विशालता यस्य तुङ्गामलञ्च तत् निबद्धपुरुपरिणाहञ्चेति विग्रह: खे आरोहपरिणाहाभ्यां युक्तमित्यर्थ: सुरगङ्गाया मन्दाकिन्या: पूरणे समर्थं विस्तृतत्वात् प्राकृते कूलाभिगमे इत्यत्र भकारस्य हकारो न भवति प्रायोग्रहणात् ॥३०॥भ०

आरूढ़श्च सुवेलं तरुमालाबन्धहारिगिरिवरजालम् ।
रावणचित्तभयङ्करमापिङ्गललोलकेसरं रामबलम् ॥ २१ ॥
लङ्कालयतुमुलारवसुभरगभीरोरुकुञ्जकन्दरविवरम् ।
वीणारवरससङ्गमसुरगणसङ्कुलमहातमालच्छायम् ॥ २२ ॥

आरूढ़मित्यादि । रामबलं तटे स्थित्वा आरूढ़श्च सुवेलं पर्वतं चकारस्य प्राकृते खरशेषता न भवति पदमध्यान्वयोरवर्त्तमानत्वात् तरुमालाया य आबन्धः तेन हारि मनस्तुष्टिकरं तादृशं गिरिवराणां पर्य्यन्तगिरीणां जालं यस्य सुवेलस्य रावणचित्तस्य भयङ्करं रामबलम् आपिङ्गलानि लोलानि केसराणि यस्य तदिति ॥ २१ ॥ ज० म०

आरूढ़मित्यादि । रामबलं समुद्रमुत्तीर्य्य सुवेलं पर्वतमारूढ़ं चकारस्य प्राकृते लोपो न भवति पदमध्यान्वयोरवर्त्तमानात् कीदृशं सुवेलं तरुमालाया आबन्धेन वेष्टनेन हारि मनोहारि पर्य्यन्तगिरिवरजालं यस्य यत्र वा रामबलं कीदृशं रावणचित्तस्य भयजनकम् आपिङ्गलानि लोलानि चञ्चलानि केसराणि यस्य केसरशब्दो दन्त्यमध्यः ॥ २१ ॥ म०

लङ्केत्यादि । लङ्कालयानां राक्षसानां यस्तुमुलो महानारवः तेन सुभराः परिपूर्णा गम्भीरोरुकुञ्जा गम्भीरमहागह्वराणि कन्दरविवराणि च यत्र सुवेले वीणारवे यो रसस्तृष्णा तेन सङ्गमः समागमो येषां सुरगणानां सुरगणाश्चेति सः तैः सङ्कुला व्याप्ता महातमालच्छाया यत्रेति ॥ २२ ॥ ज० म०

लङ्केत्यादि । कीदृशं लङ्कालयानां राक्षसानां यस्तुमुलो महानारवस्तेन सुभराणि परिपूर्णानि गम्भीराणि उरूणि महान्ति कुञ्जानि कन्दराणि विवराणि च यस्य यत्र वा वीणारवस्य रसेनेच्छया यः सङ्गमः परस्परमिलनं तेन हेतुना सुरगणैः संकुला व्याप्ता महातमालतरुच्छाया यत्र वीणारवरसेन सङ्गमो येषां सुरगणानामित्यन्ये ॥ २२ ॥ म०

सरसबहुपल्लवाविलकेसरहिन्तालबद्धवहलच्छायम् ।
ऐरावणमदपरिमलगन्धवहाबद्धदन्तिसंरम्भरसम् ॥ ३३ ॥
तुङ्गतरुच्छायारुहकोमलहरिहारिलोलपल्लवजालम् ।
हरिणभयङ्करसकुसुमदावसमच्छविविलोलदाडिमकुञ्जम् ३४

सरसेत्यादि । सरसाः सार्द्राः ये बहवः पल्लवाः तैराविला अन्धकारिता ये केसरवृक्षाः हिन्तालवृक्षाश्च तैर्बद्धा वहला घना छाया यत्र सुवेले ऐरावणस्य ऐरावतस्य हस्तिनो मदपरिमलो यस्मिन् गन्धवहे तादृशेन गन्धवहेन बद्धो दन्तिनां हस्तिनां संरम्भरसः क्रोधरसो यत्रेति ऐरावण ऐरावत इत्युभयमपि प्राकृते साधु ॥ ३३ ॥ ज० म०

सरसेत्यादि । पुनः कीदृशं सुवेलं सरसैः स्निग्धैर्बहुभिः पल्लवैराकुला व्याप्ता ये केसरा हिन्तालाश्च वृक्षास्तैर्बद्धा जनिता बहला निविड़ा छाया यत्र पल्लवाविलकेसरेति पाठे आविला अन्धकारिताः ऐरावणसम्बन्धिनो मदस्य परिमलो यत्र तादृशेन गन्धवहेन बद्धो जनितो दन्तिनां क्रोधरसो यत्र ऐरावत ऐरावण इत्युभयं प्राकृते साधु यद्यप्यैकारस्य प्राकृते नित्यमेकारादेश उक्तस्तथापि ऐदेत्ता च केषाञ्चिदित्युक्तत्वात् तन्मते नेदमुदाहृतं अधके उरस्यै अधमिति ॥ ३३ ॥ म०

तुङ्गेत्यादि । तुङ्गतरूणां या छाया तस्यां रोहन्तीति इगुपधलक्षणः कः तुङ्गतरुच्छायारुहाः विटपाः तेषां कोमलं हरिद्धरितं हारि तुष्टिकरं लोलं पल्लवजालं यत्र हरिणानां भयङ्करा दावसदृशत्वात् सकुसुमा दावसमच्छवयः दावाग्नितुल्याः लोलदाडिमकुञ्जा यत्र ॥ ३४ ॥ ज० म०

तुङ्गेत्यादि । पुनः कीदृशं सुवेलं तुङ्गानां तरूणां छायासु रुहं जातम् अतएव कोमलं मृदु हरिद्वर्णं हारि मनोहरं लोलं चञ्चलं पल्लवानां जालं समूहो यत्र हरिणानां भयङ्करो दावसादृश्याद्भयजनकः सकुसुमः पुष्पैः सह वर्त्तमानः अतएव दावेन वनाग्निना समा छविस्तुल्यकान्तिर्विलोलश्चञ्चलो दाड़िमकुञ्जो यत्र अग्निशिखापि लोला

कलहरिकण्ठविरावं सलिलमहाबन्धसङ्कुलमहासालम्।
चलकिसलयसम्बद्धं मणिजालं सलिलकणमयं विवहन्तम् ॥३५॥
तुङ्गमणिकिरणजालं गिरिजलसङ्घट्टबद्धगम्भीररवम्।
चारुगुहाविवरसभं सुरपुरसममरचारणसुसंरावम् ॥३६॥

भवति, दवौ दावौ वनारण्यवह्नी इत्यमरः। रुहेरिजुङन्त्वात् कृगृह्ना-प्रीजुङ इति कः पल्लववासमिति केचित् पठन्ति तदा संस्कृते बाल-शब्दस्य नवार्थस्य विशेषणस्य परनिपातोऽभिधानात् कर्तुं शक्यते प्राकृते तु पूर्वनियम एव तस्मात् पल्लवं बलति धारयतीति डात् पक्षिति पण् प्राकृते ळविशब्दे वकारलोपो न भवति तत्र प्रायोग्रहणात् दाडिमेत्यत्र दालिमेति कश्चित्पाठः संस्कृते डलयोरलयोरैक्यमिति परः स्मरते मनीषादित्वात्ताद्रूप्यं प्राकृते डोल इति लत्वं क्वचिन्न भवति तत्र प्रायोग्रहणात् हेमचन्द्रेण तु टवर्गस्य बाल इत्युक्त्वा दाडिमं दालिममित्युदाहृतम् ॥ ३४ ॥ भ०

कलेत्यादि। कलो मनोहरः हरीणां कण्ठविरावो यत्र सलि-लस्य यो महाबन्धस्तेन सङ्कुला महान्तः सालाः सालवृक्षा यत्र चल-किसलयेषु सम्बद्धं संलग्नं सलिलकणमयं सलिलकणरूपं मणिजालं मणिसमूहमिव विवहन्तं धारयन्तम् ॥ ३५ ॥ ज० म०

कलहेत्यादि। पुनः कीदृशं सुवेलं कलोऽव्यक्तमधुरो हरेः सिंहस्य कण्ठविरावो यत्र सलिलमहाबन्धेन सेतुना सङ्कुलाः पयोव्याप्ता महान्तः सालवृक्षा यत्र चञ्चलैः किसलयैः पल्लवैः संयुक्तं मणिजालं विवहन्तं विशेषेण धारयन्तं मणिजालं कीदृशं सलिलकणान् मिनोति अति-स्निग्धत्वात् प्रक्षिपतीति पचादित्वादन् सलिलकणाः प्रस्तुता यत्रेति वा अभिधानात् प्रस्तुतवृत्तेर्मयट् सलिलसालकिसलयशब्दा दन्त्यान्विताः ॥ ३५ ॥ भ०

तुङ्गेत्यादि। तुङ्गमणीनां किरणजालं यत्रेति गिरिजलानि निर्झरजलानि तेषां यः सङ्घट्टः परस्परसंश्लेषस्तेन बद्धो गम्भीरो रवो यत्र चारु गुहाविवरमेव सभा शाला यत्र अमरचारणानां गन्धर्वाणां

विमलमहामणिटङ्कं सिन्दूरकलङ्कपिञ्जरमहाभित्तिम् ।
वीरहरिदन्तिसङ्गमभयरुद्धविभावरीविहारसमीहम् ॥ ३७॥
समहाफणिभीमबिलं भूरिविहङ्गतुमुलोरुघोरविरावम् ।
वारणवराहहरिवरगोगणसारङ्गसङ्कुलमहासालम् ॥ ३८ ॥

गायतां शोभनः संरावो यत्र अतएवामरपुरसमम् ॥ ३६ ॥ ज० म०

तुङ्गमणीत्यादि । पुनः कीदृशं तुङ्गं मणिकिरणजालं यत्र गिरिजलानां सङ्घट्टेन मिथोऽभिघातेन बद्धो जनितो गम्भीररवो यत्र चारु गुहाविवरमेव सभा गृहं यत्र अमरचारणानां गन्धर्वाणां शोभनः संरावो यत्र अतएव अमरपुरस्य समानमिति ॥ ३६ ॥ भ०

विमलेत्यादि । विमलमहामणीनां पद्मरागादीनां टङ्काः छेदा यत्र अतश्च सिन्दूरकलङ्केन लाञ्छनेन पिञ्जरा इव महाभित्तयो यस्य वीराणां हरीणां दन्तिनाञ्च यः सङ्गमोऽन्योन्यगमनं तस्माद्भयलेन रुद्धा निवारिता विभावर्यां विहारसमीहा विहरणेच्छा यत्र ॥ ३७ ॥ ज० म०

विमलेत्यादि । पुनः कीदृशं सुवेलं विमला महामणीनां टङ्काश्छेदा यत्र अतएव सिन्दूरस्य कलङ्केन लाञ्छनेन पिञ्जरा महाभित्तयो यत्र वीराणां सिंहानां दन्तिनाञ्च यः सङ्गमो मिथः संसर्गस्तस्माद्भयेन रुद्धा निरस्ता विभावर्यां रात्रौ विहारसमीहा विहरणेच्छा यत्र विभावर्याः पुंश्चल्या विहारसमीहा यत्रेति वा विभावरी हरिद्रायां कुट्टिन्यां चन्द्रयोषितीति विश्वः । प्राकृते भकारस्य हकारो न भवति तत्र प्रायोग्रहणात् ॥ ३७ ॥ भ०

समेत्यादि । समहाफणीन्यतएव भीमानि बिलानि विवराणि यत्र भूरीणां विहङ्गमानां तुमुलोऽनेकप्रकार उरुर्महान् घोरो रौद्रो विरावो यत्र वारणादिभिः स्वस्वकपर्यायिभिः सङ्कुला महासाला यत्र ॥ ३८ ॥ ज० म०

समहाफणीत्यादि । पुनः कीदृशं सुवेलं महाफणिसहितानि अतएव भीमानि बिलानि विवराणि यत्र भूरीणां बहूनां विह-

चलकिसलयसविलासं चारुमहीकमलरेणुपिञ्जरवसुधम्।
सकुसुमकेसरबाणां लवङ्गतरुतरुणवल्लरीवरहासम् ॥ ३९ ॥
अमलमणिहेमटङ्कं तुङ्गमहाभित्तिरुद्धरुरुपङ्कगमम्।
अमरारूढ़परिसरं मेरुमिवाविरलसरसमन्दारतरुम् ॥४०॥

ङ्गानां तुमुलोऽनेकरूपो व्याकुलो वा डमर्महान् घोरो रौद्रो विरावो यत्र हस्तिभिः सूकरैः सिंहवरैर्गोगणैर्हरिणैश्च सङ्कुलाः स्कन्धकण्डूयनार्थं व्याघ्रा महान्तः सालद्रुमा यत्र नाम्नन्त्यैतिक् चेति सर्त्तरङ्गणाद्यत्ययः सारङ्गो दन्त्यादिः ॥ ३८ ॥ भ०

चलेत्यादि। चलैः किसलयैः हस्तैरिव सविलासं प्रारब्धनृत्यं चारूणां महीकमलानां स्थलजानां रेणुभिः पिञ्जरा वसुधा यत्र सकुसुमाः केसराः बाणाश्च यत्र लवङ्गतरोस्तरुणा या वल्लर्यः प्ररोहास्ता एव वरो हासो विकाशाख्यो यत्र ॥ ३९ ॥ ज० म०

चलेत्यादि। पुनः कीदृशं सुवेलं चञ्चलैः किसलयैर्हस्तैरिव सविलासं प्रारब्धनृत्यमिव चारुमहीकमलानां शोभनस्थलपद्मानां रेणुभिः पिञ्जरा वसुधा यत्र सकुसुमाः केसराः पुन्नागा बाणाभिख्यो यत्र लवङ्गतरोस्तरुण्या वल्लर्या मञ्जर्या वरः श्रेष्ठो हासो विकाशो यत्र एतेन लवङ्गतरोर्नायकत्वं मञ्जर्याश्च नायिकात्वं व्यङ्ग्यम् ॥ ३९ ॥ भ०

अमलेत्यादि। अमलमणीनां हेमादीनां टङ्काश्छेदा यत्र तुङ्गा उच्चा महती विस्तारवती या भित्तिस्तया रुद्धो रुरूणां मृगाणां पङ्कगमः पङ्केन गमनं यत्र गमेर्ग्रहेत्यादिना अप्। वङ्कगम इति पाठान्तरं तत्र वङ्कः कुटिलो गमो यत्र वक्रिकौटिल्ये इत्यस्य रूपम् अमरैरारूढ़ाः परिसरास्तटा यत्र अविरलाः सरसा मन्दारतरवो देवद्रुमा यत्र तमित्यं मेरुमिव ॥ ४० ॥ ज० म०

अमलमणीत्यादि। पुनः कीदृशं सुवेलं अमलानां निर्मलानां मणीनां हेम्नाश्च टङ्काश्छेदा यत्र पूर्वं मणिटङ्कमात्रसक्तं समस्तभयटङ्क इति भेदः किंवा अमला मणयो यत्रेति विग्रहः तुङ्गा उच्चा महती विस्तीर्णा या भित्तिस्तया रुद्धो रुरूणां मृगविशेषाणां पङ्के गमो

फलभरमन्थरतरुवरमविदूरविरूढहारिकुसुमापीडम् ।
हरिणकलङ्कमणिसम्भवबहुवारिभरसुगम्भीरगुहम् ॥ ४१ ॥
जलकामदन्तिसंकुलसहेमरसचारुधवलकन्दरदेहम् ।
अङ्कुररोहसमच्छविरुरुगणसंलीढतरलहरिमणिकिरणम् ॥ ४२

गमनं यत्र वङ्कगममिति पाठे वङ्कः कुटिलो गमो यत्र वकिङ् कौटिल्ये इत्यस्य रूपम् । अमरैराकृढः परिसरः पर्य्यन्तभूर्यस्य अविरला घन तरला मन्दारतरवो देववृक्षा यत्र अतएव मेरुमिव ॥ ४० ॥ भ०

फलेत्यादि । फलभरेण मन्थरा ईषन्नतास्तरुवरा यत्र अविदूरे विरूढा हारिणः कुसुमापीड़ा यत्र पुष्पस्तवकानां हस्तग्राह्यत्वात् हरिणकलङ्कमणिः महाचन्द्रकान्तः तस्मात् सम्भवो यस्य बहुवारिणः तेन सुभराः परिपूर्णा गम्भीरा गुहा यस्य अत्र मणिमहत्तया वारिमहत्त्वात् गम्भीरगुहापूरणमिति ॥ ४१ ॥ ज० म०

फलभरेत्यादि । पुनः कीदृशं सुवेलं फलभरेण मन्थरा ईषन्नतास्तरुवरा यत्र अविदूरे समीपे विरूढा उत्पन्ना हारिणो मनोहराः कुसुमापीड़ाः पुष्पस्तवका यत्र हरिणकलङ्कमहामणेश्चन्द्रकान्तात् सम्भवो येषां तादृशैर्बहुभिर्वारिभिः सुभरा परिपूर्णा गम्भीरगुहा यस्य मणिबाहुल्येन वारिबाहुल्यं तेन गम्भीरस्थानपूरणं प्राकृते आपीड़शब्दे पकारस्य वकारादेश ईकारस्य लोपो भवति यथा आवड इति तथापि बहुलाधिकारान्न भवति ॥ ४१ ॥ भ०

जलेत्यादि । जलमेतदित्येवं कामैर्दन्तिभिः सङ्कुलाः सहेमरसा सह हेमरसेन वर्त्तमानाः चारवः शोभनाः धवलाः कन्दरगेहा कन्दरसन्निवेशा यत्र रोहणं रोहः अङ्कुराद्रोहो यस्य शस्यस्य तेन समच्छवयस्तुल्यवर्णा रुरुगणास्तैः संलीढाः तरलाश्चञ्चलाः हरिमणिकिरणा मरकतमयूखा यत्र ॥ ४२ ॥ ज० म०

जलकामेत्यादि । पुनः कीदृशं सुवेलं जलं कामयन्ते जलकामा हस्तिनस्तैः संकुला व्याप्ताः सहेमरसाः सुवर्णपारदसहिताः चारवः शोभना धवलाः शुक्लाः कन्दरदेहा गुहासन्निवेशा यत्र अङ्कुरात्

**गाढ़समीरणसुसहं भीमरवोत्तुङ्गवारिधरसंघट्टम् ।**
**धवलजलवाहमालासम्बन्धाबद्धहिमधराधरलीलम् ॥ ४३ ॥**
**लवणजलबन्धसरसं तरुफलसम्पत्तिरुद्धदेहायासम् ।**
**लङ्कातोरणवारणमारूढं समरलालसं रामबलम् ॥ ४४ ॥**

रोहः सम्भवो यस्य शस्यस्य अङ्कुरस्य प्ररोहो वा तेन समच्छवयस्तुल्य-वर्णाः अतएव भ्रमात् रुरूणां मृगविशेषाणां गणैः संलीढ़ा जिह्वया स्पृष्टास्तरलाश्चञ्चला हरिमणीनाम् इन्द्रनीलमणीनाम् किरणा यत्र हरिशब्दो हरितपर्य्यायः ॥ ४२ ॥ भ०

गाढ़ेत्यादि। गाढ़ो महान् यः समीरणः तं सुसहत इति मूलविभुजादित्वात्कः भीमरवास्तुङ्गा ये वारिधरास्तेषां संघट्टः यत्र धवला ये जलवाहास्तेषां मालाया यत्सम्बद्धं यः सम्बन्धः सम्बन्धनं भावे क्तः तेन करणभूतेन आबद्धा अनुकृता हिमधराधरस्य हिमवतो धराधरस्य लीला विभ्रमो येन तं सुवेलम् आरूढ़म् ॥ ४३ ॥ ज० म०

गाढ़ेत्यादि । पुनः कीदृशं सुवेलं गाढ़ो महान् यः समीरणो वायुस्तस्य सुसहं पचादित्वादन् अतिस्थिरत्वात् भीमरवा उत्तुङ्गाश्च ये वारिधरा मेघास्तेषां सङ्घट्टः संश्लेषो यत्र भीमरवेति उत्तुङ्गेति सङ्घट्टविशेषणं वा वरोत्तुङ्गेत्यत्र यद्यपि प्राकृते लोपोऽच इत्यनेन अचि परे अचो लोपे रवुत्तुङ्गेति स्यात् तथापि बहुलाधिकारान्नास्ति लोपः धवलानां मेघानां मालया यत्सम्बद्धं भावे क्तः सम्बन्धेति क्वचित्-पाठः तेन करणभूतेनाबद्धा कृता हिमधराधरस्य हिमालयपर्वतस्य लीला विभ्रमो येन तं सुवेलमारूढ़ं रामबलमिति सम्बन्धः ॥ ४३ ॥ भ०

त्रयोदशश्लोकैरादिकुलकम् ।

रामबलं कीदृशमित्याह ।

लवणेत्यादि । लवणजलबन्धाद्धेतोः सरसं सहर्षं तरुफलसम्प-त्त्या रुद्धोऽपनीतः देहायासः चुत्पीड़ा यस्य लङ्कातोरणस्य वारणं निषेधकं ध्यालोलं चञ्चलं समरलालसं रणसतृष्णं रामबलं तं सुवेलमा-रूढ़मिति पूर्वेण योज्यम् ॥ ४४ ॥ ज० म०

उरुपणववेणुगुञ्जाभेरीपेरीरुझल्लरीभीमरवम् ।
ढक्काघण्टातुमुलं सन्नद्धं परबलं रणायाससहम् ॥ ४५ ॥
आरूढबाणघोरं विमलायसजालगूढपीवरदेहम् ।
चञ्चलतुरङ्गवारणसंघट्टाबद्धचारुपरिणाहगुणम् ॥ ४६ ॥

लवणेत्यादि । रामबलम् आरूढं सुवेलमिति पूर्वोक्तमिहापि योज्यं विशेषाभिधानाय पुनरुक्ताख्यादोषत्वात् आरूढमित्यत्रालोलमिति पाठे रामबलं समरलालसं जातमित्येवं साध्यं कीदृशं रामबलं लवणजलबन्धालसरसं सहर्षं तरुफलसम्पत्त्या रुद्धोऽपनीतो देहायासो बुभुक्षापीडा यस्य तरुफलसम्पत्तिबद्धदेहाभोगमिति क्वचित्पाठः तदा भोगशब्दस्य प्राकृते गकारलोपो न भवति प्रायोग्रहणात् लङ्कायास्तोरणस्य बहिर्द्वारस्य वारणं निषेधकं किंवा सुवेलमारुह्य लङ्कातोरणं वारणतुल्यं बहिर्द्वारस्थितहस्तिनं वा आरूढमित्यन्वयः समरे लालसा महतीच्छा यस्य ॥ ४४ ॥ भ०

तस्मिन्नारूढे परबलं सन्नद्धमित्यं प्रवृत्तमित्यर्थः इत्थं कथं तदाह उरुपणवेत्यादिना ।

उर्वित्यादि । उरुपणवादीनां भीमो रवो यस्मिन् परबले तत्र उरुपणवो महान् पणवः पेला वाद्यविशेषः उरुझल्लरी महती झल्लरीढक्काघण्टयोस्तुमुलः संमूर्च्छितः शब्दो यत्रेति रणायाससहं रणक्लेशसहम् ॥ ४५ ॥ ज० म०

उरुपणवेत्यादि । परस्य रावणस्य बलं सन्नद्धं युद्धायोद्यतमित्यर्थः कीदृशं उरूणां पणवादीनां उरुझल्लर्याश्च भीमो रवो यत्र समौ पणवमर्दलौ गुञ्जापि पटहे प्रोक्ता काकवल्लर्यां कलध्वनाविति विश्वः ढक्कानां घण्टानाञ्च तुमुलः संमूर्च्छितः शब्दो यत्र रणायाससहं संग्रामक्लेशसहम् ॥ ४५ ॥ भ०

आरूढेत्यादि । धनुषि आरूढबाणत्वात् घोरं परबलं विमलेनायसजालेन वर्मणा गूढश्छन्नः पीवरः स्थूलो देहो यस्य चञ्चलानां तुरङ्गाणां वारणानाञ्च यः परस्परसंघट्टः क्षोभस्तेनाबद्धश्चारुः परि-

असितोमरकुन्तमहापट्टिसभल्लवरबाणगुरुपुरुमुसलम् ।
वीररसालङ्कारं गुरुसञ्चारहयदन्तिसमहीकम्पम् ॥ ४७ ॥
ते रामेण सरभसं परितरला हरिगणा रणसमारम्भे ।
रुद्धा लङ्कापरिसरभूधरपरिभङ्गलालसा धीररवम् ॥ ४८ ॥
युग्मकम् ।

आरूढगुणः विस्तार एव गुणो यस्य तत्परबलं संनद्धम् ॥४६॥ ज० म०

आरूढेत्यादि । कीदृशं परबलम् आरूढम् अर्थाद्धनूंषि बाणा यस्य तच्च तद्घोरं रौद्रञ्चेति विग्रहः आरूढो बाणो यत्र तेन धनुषा घोरं वा विमलेनायोविकारेण वर्मणा कवचेन गूढ आच्छादितः स्थूलो देहो यस्य वर्मत्यत्र जालपटं पठित्वा विमलेनायसेन जालतुल्येन सन्नाहेनेत्यन्ये प्राहुः चञ्चलानां तुरङ्गाणां हस्तिनाञ्च यः संघट्टः संश्लेष-स्तेनाबद्धश्चारुपरिणाहगुणो यत्र ॥ ४६ ॥ भ०

असीत्यादि । अस्यादीनां वरबाणपर्य्यन्तानां द्वन्द्वः तैरस्यादिभिः गुरु अनभिभवनीयं पुरु महन्मुसलं यत्र अस्यादिगुरु च तत् पुरु मुसलं चेति सः वीररस एवालङ्कारो यस्य गुरुः सञ्चारो येषां हयदन्तिनां महाकायत्वात् तैः समहीकम्पं सह महीकम्पेन वर्त्तमानं परबलं सन्नद्धम् ॥ ४७ ॥ ज० म०

असीत्यादि । पुनः कीदृशं परबलम् असिभिः खड्गैः तोमरैः शक्तिभिः कुन्तैः प्रासैः महापट्टिसैर्लौहदण्डविशेषैः भल्लैः श्रेष्ठबाणैश्च गुरु अनभिभवनीयं पुरु महत् मुसलं यत्र वीररस एवालङ्कारो यस्य गुरुः सञ्चारो येषां तादृशैर्हयैर्दन्तिभिश्च हेतुभिर्महीकम्पसहितं तोमरो-ऽस्त्री लौहदण्डः शक्तिः कासूश्च सर्वला । पट्टिशो लौहदण्डो य-स्तीक्ष्णधारः क्षुरोपमः । मुसलशब्दो दन्त्यमध्योऽपि वस्वद्विधौ दुर्ग-टीकायां मत्युदाहृतत्वात् मुषस्तेय इत्यस्य वृषलादित्वात् मुषल इति वर्णदेशनायामुक्तत्वाच्च अत्र सङ्कीर्णत्वाद्दन्त्यमध्यः ॥ ४७ ॥ भ०

ते रामेणेत्यादि । ते हरिगणाः कपिगणाः रणसमारम्भे रण-

जलतीरतुङ्गतरुवरकन्दरगिरिभित्तिकुञ्जविवरावासम् ।
भीमं तरुहरिणबलं सुसमिद्धहिमारिकिरणमालालोलम् ॥ ४९ ॥
रावणबलमवगन्तुं जलभरगुरुसलिलवाहगणसमच्छायम् ।
अट्टतरुमञ्चमन्दिरतोरणमालासभासु समारूढम् ॥ ५० ॥

इति भट्टिकाव्ये प्रसन्नकाण्डे भाषासमावेशो नाम चतुर्थः ।

काव्यस्य त्रयोदशः सर्गः ।

नवर्त्तननिमित्तं सरभसं सम्भ्रमपूर्वकं परितरलाः स्थातुमशक्नुवन्तः बल्लाप्रसिसरे बल्लावमीपे ये तरवः तेषां परिभङ्गे चूर्णने लालसाः सतृष्णाः सन्तो रामेण रुद्धाः प्रतिषिद्धाः माभङ्क्षुरिति घोररवं घोरो रवो यस्तं प्रतिषेधनक्रियायामिति ॥ ४८ ॥ ज० म०

ते रामेणेत्यादि । ते हरिगणा वानरसमूहाः रामेण रुद्धाः प्रतिषिद्धाः कीदृशाः सरभसं सकौतुकं यथास्यात्तथा रणसमारम्भ इति तन्निमित्तं वा परितरलाश्चञ्चलाः बल्लायाः परिसरे समीपे ये पर्वतास्तेषां परिभङ्गे लालसा सतृष्णा येषां तादृशाः अतएव रुद्धाः घोरो रवो यत्रेति प्रतिषेधक्रियाविशेषणम् ॥ ४८ ॥ भ०

जलेत्यादि । तरुहरिणबलं कपिबलं निषिद्धं सत् भीमं भयानकं जलतीराद्यैरावासो यस्य तत् सुमिद्धस्य हिमारेरग्नेरादित्यस्य वा या किरणमाला तद्वलोलं समारूढमिति वक्ष्यमाणेन सम्बन्धः ॥ ४९ ॥ ज० म०

जलतीरेत्यादि । तरुहरिणबलं कपिसैन्यं रामेण निषिद्धं सत् अट्टादिषु समारूढमिति वक्ष्यमाणेन सम्बन्धः । कीदृशं जलतीरेषु तुङ्गतरुवरेषु कन्दरेषु गिरिभित्तिषु कुञ्जविवरेषु च आवासो यस्य भीमं भयानकं सुसमिद्धस्य हिमारेः सूर्य्यस्य वह्नेर्वा या किरणमाला तद्वलोलं चञ्चलम् ॥ ४९ ॥ भ०

रावणेत्यादि । रावणबलम् अवगन्तुं कीदृशमिति जलभरेण

# चतुर्दशः सर्गः ।

———oo———

ततो दशास्यः स्मरविह्वलात्मा
चारप्रकाशीकृतशत्रुशक्तिः ।
विमोह्य मायामयराममूर्ध्ना
सीतामनीकं प्रजिघाय योद्धुम् ॥ १ ॥

गुरुर्यैः सलिलवाहगणो जलधरसमूहः तेन समच्छायं तुल्यच्छायं रावणबलम् अट्टादिषु समारूढम् ॥ ५० ॥ जं० मं०

एतानि द्वाविंशतिः सङ्कीर्णानि ।

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रसन्नकाण्डे
भाषासमावेशश्चतुर्थः परिच्छेदः ।

काव्यस्य सेतुबन्धो नाम त्रयोदशः सर्गः ।

समाप्तञ्चेदं प्रसन्नकाण्डं तृतीयम् ।

रावणबलमित्यादि । रावणस्य बलं सैन्यं कीदृक् इत्यवगन्तुं शक्यं तरुहरिणबलम् अट्टादिषु समारूढम् अट्टमुपरितनं गृहं रावणबलं कपिबलं वा कीदृशं जलभरेण गुरुर्यैः सलिलवाहगणो मेघसमूहस्तेन समच्छायं तुल्यकान्ति ॥ ५० ॥ भ०

एतानि द्वाविंशतिः सङ्कीर्णकानि ।

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लिकात्मजश्रीभरत-
सेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां सेतुबन्धो
नाम त्रयोदशः सर्गः ।

———

धातुसिङ्व्युत्पत्तौ यच्चोक्तं तदपि काव्यस्याङ्गत्वम् अतः प्रसन्नकाण्डानन्तरं तिङ्काण्डं शब्दलक्षणप्रयोगार्थं कथ्यते तत्र [illegible]

कम्बूनथ समादध्मुः कोणैर्भेर्यो निजघ्निरे ।
वेणून् पुपूरिरे गुञ्जा जुगुञ्जुः करघट्टिताः ॥ २ ॥

स्थाने तिबादयः णकाराद्य नव लिटश्छन्दोविषयत्वादिति अत नवविवक्षितानि विवक्षितञ्च नानारूपता तत्र भूतार्थवतो लिटोऽधिकृत्य तद्विवक्षितमाह ।

तत इत्यादि । ततः स्वपरबलयोरणादुत्तरकालं दशास्यः स्मरविह्वलात्मा कामवशीकृतदेहः भर्त्तरि निराशा सती सीता ममानुकूला भविष्यतीति मायामयेन मायास्वभावेन राममूर्ध्ना छिन्नेन सीतां विमोह्य मोहयित्वा चारैः प्रणिधिभिः प्रकाशीकृता शत्रुशक्तिः वैरिसामर्थ्यं यस्मै योद्धुमनीकं सैन्यं प्रजिघाय प्रहितवान् हेरचिङ्गीति कुत्वं भूतानद्यतनपरोक्षे सर्वत्र लिट् ॥ १ ॥ ज० म०

त्याद्यन्तव्युत्पत्तौ यल्लोऽवं तदपि काव्यस्याङ्गत्वात् ततः प्रसन्नकाण्डादनन्तरं त्याद्यन्तकाण्डमुच्यते तत्रार्थवशात् प्रथमं ठो प्रदर्श्यते पाणिनिमते त्याद्यन्तस्य तिङन्त इति संज्ञा ठीत्यस्य लिडिति संज्ञा ।

तत इत्यादि । अनन्तरं दशास्यो रावणः स्मरविह्वलात्मा कामविह्वलचित्तः सन् भर्तृनाशे सीतानुकूल्यं यास्यतीति मत्वा मायामयेन मायास्वरूपेण रामसम्बन्धिना मस्तकेन सीतां मोहयित्वा चारैः प्रकाशीकृता शत्रूणां रामादीनां शक्तिः सामर्थ्यं येन तथाभूतः सन् योद्धुं युद्धं कर्त्तुम् अनीकं सैन्यं प्रजिघाय प्राहिणोत् हिनवर्द्धने गतौ भवद्भूतभव्ये लिश इति भूतसामान्ये ठो धुर्द्विश्च्ङीति द्वित्वं अभ्यस्यहर्षेति खेर्हस्य जत्वं हेः खेरनङ्घिरिति घिः अखित्यन्ते जुङ्गोरिति वृिः यत्रायत्रायाव इति आयः ॥ १ ॥ भ०

कम्बूनित्यादि । अथ सैन्यप्रेषणानन्तरं कम्बून् समादध्मुः शब्दितवन्तः शाङ्खिकाः कोणैर्वाद्यवादनैः काष्ठमयैः भेर्यो निजघ्निरे ताड़िताः कर्मणि लिट् वेणून् वंशान् पुपूरिरे मुखमरुता पूरितवन्तः पूरी आप्यायन इति दैवादिको ऽनुदात्तत्तेत् गुञ्जाः समवादनाः करघट्टिताः करुविघट्टाः जुगुञ्जः शब्दितवन्तः गुजि अव्यक्ते शब्दे ॥ २ ॥ ज० म०

वाद्याञ्चक्रिरे ढक्काः पणवा दध्वनुर्हताः।
काहलाः पूरयाञ्चक्रुः पूर्णाः पेराश्च सस्वनुः ॥ २ ॥

कम्बूनित्यादि। अथ प्रेषणादनन्तरं सैनिकाः कम्बून् शङ्खान् दमादध्मुः शब्दायितवन्तः ध्मा अग्निसंयुतौ ध्वनौ उस् द्वित्वं अभ्यास-ह्रस्वेति खेर्हृस्वत्वं भस्य दस्य दाद्यचो लोप इति खेर्मलोपः उस्येपीति प्रकृतेराल्लोपः केचित् भेर्यो दृहत् ढक्काः क्रोधैर्निजघ्निरे ताड़िताः हन्तेः कर्मणि ठी हनगमित्युङ्लोपः खेर्होघोऽर्पिति चेति प्रकृते-र्हस्य घत्वं हनोऽघ्न इति घ्नादेशः कोणशब्देन वाद्यवादनकाष्ठदण्डादय उच्यन्ते वेणून् वंशान् केचित् मुखमारुतैः पुपूरिरे पूरितवन्तः पूरीय-ड्पूर्तौ करणे घट्टिता अभिहता गुञ्जा वाद्यभेदा जुगुञ्जुः शब्दं चक्रुः गुञ्जिकूजने हसुङ्नलोपोऽणाविति विधीयमानो न लोपो नेदित्-पूजायाञ्चोरित्यनेन प्रतिषिध्यते अतएवेदितो नुण् लभ्यते ॥ २ ॥ भ०

वाद्येत्यादि। ढक्का वाद्याञ्चक्रिरे वादितवन्तः ढक्कावादका इत्यर्थः वदेर्हेतुकण्यन्तात् आमि अयामन्तेत्ययादेशः आम्प्रत्ययवदिति कृञो-ऽनुप्रयोगस्यात्मनेपदत्वमित्यचेति आम्प्रत्ययादात्मनेपदस्य विहितत्वात् पणवाः वाद्यविशेषाः हताः पाणविकैस्ताड़िताः दध्वनुर्ध्वनिताः काहलाः गोष्टङ्गसंस्थानाः पूरयाञ्चक्रुः पूरितवन्तः पूरि आप्यायन इति चौरादिकस्योदात्तेत्तो रूपं पेराः खरमुखाकाराः पूर्णाः मुख-मरुता सस्वनुः फणाञ्च सप्तानामिति विधि एत्वविधानस्य विकल्पित-त्वात् नैत्वम् ॥ २ ॥ ज० म०

वाद्यामित्यादि। केचित् ढक्काः वादितवन्तः वदेर्ञिः र्विजा-दीत्यादिना व्याप्तत्वादाम् भस्य च्नाम इति कृञोऽनुप्रयोगः पणवा वाद्यभेदा हतास्ताड़िताः सन्तो दध्मनुः शब्दञ्चक्रुः केचित् काहला मुखमारुतः पूरयाञ्चक्रुः चुरादेः पूरधातोरूपं पूरीयङ्पूर्तौ पुरक् चेति चकारात् पूर्तौ, हसत्वितयदीर्घः स्यात् धुस्तूरकुसुमोपमा। शुद्धता-म्रमयी मध्यशुषिरा काहला मतेति नाद्यदर्पणे। पेराः खरमुखाकाराः मुखमारुतैः पूर्णाः सन्तः सस्वनुः शब्दञ्चक्रुः स्वनमिशब्दे सनप् चका-

मृदङ्गा धीरमास्वेनुर्हतैः स्वेने च गोमुखैः ।
घण्टाः शिशिञ्जिरे दीर्घं जह्रादे पटहैर्भृशम् ॥ ४ ॥
हया जिहेषिरे हर्षाद्गम्भीरं जगजुर्गजाः ।
संत्रस्ताः करभा रेटुश्चुकुवुः पत्तिपङ्क्तयः ॥ ५ ॥

रात् शब्दे फणादिः तॄफलेत्यादिना विभाषया अत एत्वं खिलोपश्च तदभावपक्षे रूपमिदम् ॥ ३ ॥ म०

मृदङ्गा इत्यादि । मृदङ्गा मुरजाः धीरम् आस्वेनुः गम्भीरं ध्वनिताः एत्वपक्षे रूपं गोमुखैर्वाद्यविशेषैः हतैः स्वेने शब्दितं भावे लिट् घण्टाः दीर्घं शिशिञ्जिरे उच्चैः शब्दितवत्यः पटहैर्भृशमत्यर्थं जह्रादे शब्दितं भावे लिट् ॥ ४ ॥ ज० म०

मृदङ्गा इत्यादि । मृदङ्गा धीरं गम्भीरं यथा स्यात्तथा आस्वेनुः शब्दञ्चक्रुः तॄफलेत्यादिना स्वनेरत एत्वं खिलोपश्च, चर्मणा नद्धवदनो मध्ये चैव पृथुर्भवेत् । मृत्तिकानिर्मितश्चैष मृदङ्ग इति कीर्त्तित इति भरतः । हतैस्ताडितैर्गोमुखैः स्वेने शब्दितं भावे ठी घण्टा दीर्घमुच्चैः शिशिञ्जिरे शिजि न किङ् अस्फुटध्वनौ पटहैर्भृशमत्यर्थं जह्रादे शब्दितं ह्रादङ् च स्वने भावे रूपम् ॥ ४ ॥ भ०

हया इत्यादि । हया अश्वाः हर्षात् जिहेषिरे हेषितवन्तः हेष अव्यक्ते शब्दे भौवादिकोऽनुदात्तेत् अभ्यासस्य इति एत इङ्गवति । गजा गम्भीरं मन्द्रञ्जगजुः गर्जितवन्तः गजगटजीशब्दार्थौ । करभा उष्ट्राः सन्त्रस्ताः नानावादित्रश्रवणात् रेटुः शब्दं कृतवन्तः रटपरिभाषण इति शब्दार्थः । पत्तिपङ्क्तयः पदातिसंहतयः चुकुवुः शब्दितवत्यः गच्छत तिष्ठतेति कुशब्द इत्युदात्तेत् ॥ ५ ॥ ज० म०

हया इत्यादि । हया अश्वा हर्षात् जिहेषिरे शब्दं चक्रुः हेषृङ्सर्पणे ङहेषृच स्वने अश्वानामिति चकारात् हेषृङपि अश्वानां स्वने । गजा गम्भीरं यथा स्यात्तथा जगजुः गर्जनं चक्रुः माद्यन्तिस्मेति वा गजमदे गजि च स्वने इति चकारात् गजस्वने । करभा उष्ट्रा नानावाद्यश्रवणात् सन्त्रस्ताः सन्तः शब्दं चक्रुः रटे च वाचि तॄफलेत्यादिना

तुरङ्गाः पुस्फुटुर्भीताः पुस्फुरुर्वृषभाः परम्।
नार्य्यश्चुक्षुभिरे मम्लुर्मुमुहुः शुशुचुः पतीन्॥ ६॥
जगर्जुर्जहृषुः शूरा रेजुस्तुष्टुविरे परैः।
बबन्धुरङ्गुलित्राणि सन्नेहुः परिनिर्ययुः॥ ७॥

अत एत्वं खिलोपश्च। पत्तिपङ्क्तयः पदातिसमूहाः चुक्रुशुः शब्दं चक्रुः क्रुशशब्दे कुश चेति चकारात् शब्दे क्रिट्ठीढोपमिति अपिट्त्वाः कित्त्वादगुणत्वे श्रुध्वोरङवीति उव्॥ ५॥ भ०

तुरङ्गा इत्यादि। तुरङ्गा अश्वा भीता वादित्रश्रवणात् पुस्फुटुः स्फुटिताः भयादितस्ततो गताः स्फुट विसरणे। वृषभाः परं पुस्फुरुः सुष्ठु: वलिता स्फुरवलने। नार्य्यं चुक्षुभिरे अस्माकमायातो वियोग इति क्षोभमुपगताः व्यस्तचित्ता जाता इत्यर्थः। काश्चिदामम्लुः म्लैगात्रक्षये सुमुहुः काश्चिन्मोहमुपगताः। पतीन् काश्चित् शुशुचुः शोचितवत्यः हा कष्टं नियतं विनष्टा इति॥ ६॥ ज० म०

तुरङ्गा इत्यादि। गजादिदर्शनाद्भीतास्तुरङ्गाः पुस्फुटुरितस्ततो गताः स्फुटशिविकाशे। वृषभाः परमत्यर्थं पुस्फुरुश्चलिताः स्फुरणि-स्फूर्त्तौ चले। नार्य्यश्चुक्षुभिरे पतिमरणशङ्कया क्षोभं प्रापुः क्षुभलङ्-सञ्चले अतएव मम्लुः कान्तिरहिता बभूवुः म्लैकान्तिसंचये एचोऽशि-त्वेति त्या उसेचीत्यालापः। ततो मुमुहुः मोहं प्रापुः मुहस्वजि वैचित्त्ये। पतीन् शुशुचुः शोचितवत्यः शुचशोके॥ ६॥ भ०

जगर्जुरित्यादि। शूरा जगर्जुः अस्माभिर्दृष्टाः शराः क यास्य-न्तीति शब्दितवन्तः तथा जहृषुः तुष्टाः चिरमायातः समर इति हृष्टतुष्टौ अतएव रेजुः शोभन्ते स्म फणाञ्च सप्तानामित्येत्वाभ्यास-लोपौ। परैरन्यैस्तुष्टुविरे स्तुताः भवतामग्रतः समरेः के तिष्ठन्तीति अङ्गुलित्राणि बबन्धुः बध्नन्ति स्म बधबन्धने तथा परे सन्नेहुः कवचा-नि बध्नन्ति स्म णहबन्धने परिनिर्ययुः निष्क्रान्ताः॥ ७॥ ज० म०

जगर्जुरित्यादि। शूरा जगर्जुः जेष्याम इति शब्दं चक्रुः

धनूंष्यारोपयाञ्चक्रुरारुरुहू रथादिषु ।
असीनुद्ववृहुर्दीप्तान् गुर्वीरुच्चिक्षिपुर्गदाः ॥ ८ ॥

भर्जशब्दे तथा जहृषुः चिरात् प्राप्तः संग्राम इति मत्वा तुष्टाः हृषु हृष्यत्तिलुष्टौ रेजुः शुशुभिरे राजृ अटीप्तौ पित्त्वात् फणादिः नृफलेत्यादिना अत एत्वं खिलोपश्च । परैरन्यैस्तुष्टुविरे स्तुताः ष्टुञ् स्तुतौ कर्मणि ठो खेराद्यच इत्यादिना शसादिखपान्तत्वात् खेरादिलोपः श्वाद्यादिष्ण इति षस्य सत्वात् किलादिति षः । अङ्गुलित्राणि बबन्धुः बध्नन्तिस्म बन्धौग् बन्धक् बधक् बन्धे स्तात् द्यपित्किदेति कित्त्वाभावपक्षे हृलुङ्गलोपोऽणावित्यस्याप्रवृत्तेर्नलोपाभावः यद्वा स्तात् द्यपित्किदेत्यत्र वाशब्दो व्यवस्थावाची तेन मन्थादेर्विभाषया कित्त्वं बन्धादेस्तु कित्त्वाभाव एव तेन ममथुः ममन्थुः सस्वजे सस्वञ्जे इत्यादिरूपद्वयं दृश्यते बबन्धुः बभञ्जुः ददंशुरित्यादयो नित्यम् । परे तु इन्धो णिटि च स्वञ्जो वेति नकारलोपार्थं सूत्रं कुर्वन्ति इन्धधातोराम्नि न स्यात् आमोऽभावपक्षे नित्यं नलोपः सनृजस्तु वा अन्यत्र त्वां नलोपाभाव इति अङ्गुलिं त्रायत इति ह्नजनादिति डः सन्नेडः सन्नाहं कृतवन्तः सन्नद्धौ बद्धे परिनिर्ययुः निर्गताः यानगतौ ॥ ७ ॥ म०

धनूंषीत्यादि । धनूंषि आरोपयाञ्चक्रुः आरोपितगुणानि कृतवन्तः रुहः पोऽन्यतरस्यामिति णौ पादेशः आरुरुहुरारोहन्तिस्म रथादिषु द्वितीया न कृता अधिकरणत्वेन विवक्षितत्वात् दीप्तानिष्कलङ्कानसीन् ववृहुः कोशादाकृष्य उद्यतान् कृतवन्तः वृह उद्यमने गुर्वीर्गदा उच्चिक्षिपुः उत्क्षिप्तवन्तः ॥ ८ ॥ ज० म०

धनूंषीत्यादि । धनूंषि रथे हस्ते वा आरोपयाञ्चक्रुरारोपितवन्तः आरोपितगुणानि चक्रुरिति केचित् जिरुहीजन्यां जिः रुहः पङ्वेति पङ् णुधूं इति गुणः त्यान्तत्वादाम् रथादिषु आरुरुहुः आरोहन्तिस्म कर्मणोऽप्याधारविवक्षया न द्वितीया । दीप्तान् भासीन् खड्गान् उद्ववृहुरुद्यातान् चक्रुः वृहु उद्यमे ऋभवथेत्यादिना वेर्ऋकारस्य अकारः । गुर्वीर्महतीर्गदा उच्चिक्षिपुः उत्क्षिप्तवन्तः क्षिपश-

शूलानि भ्रमयाञ्चक्रुर्बाणानाददिरे शुभान् ।
भ्रेमुश्च कुर्दिरे रेसुर्ववल्गुश्च पदातयः ॥ ९ ॥
समुत्पेतुः कषाघातैरश्मराकर्षैर्ममञ्जिरे ।
अश्वाः प्रदुद्रुवुर्मोचे रक्तं निजगरुः श्रमे ॥ १० ॥

औश्विष्यो नुदि खेराद्यच इत्यादिना खेः षकारस्य लोपः भ्रमखयेत्यादिना खेः कस्य चत्वम् ॥ ८ ॥ भ०

शूलानीत्यादि । शूलानि भ्रमयाञ्चक्रुः भ्रमयन्तिस्म भान्तत्वान्मित्त्वे ह्रस्वत्वं बाणान् शुभान् युद्धयोग्यानाददिरे गृहीतवन्तः आजोदोनास्य विहरण इति तङ् पदातयश्च भ्रेमुः इतस्ततो याताः चुकुर्दिरे शस्त्रपाणयः क्रीडितवन्तः कुर्दखुर्दगुर्दक्रीडायामेव रेसुः भयकृते निनादान् कृतवन्तः रसशब्दे ववल्गुः प्लुताः वल्गतिरस्य एवौत्यत्र पठ्यते ॥ ९ ॥ ज० म०

शूलानीत्यादि । शूलानि भ्रमयाञ्चक्रुः भ्रमयन्तिस्म भ्रमुजणचावेञिः इद्धिः घटादिजनीत्यादिना चमन्तत्वात् ह्रस्वः शुभ्भान् शोभमानान् बाणान् आददिरे गृहीतवन्तः आङ्पूर्वोददातिर्ग्रहणे व्याददाजोऽस्वप्रसार इति सं पदातयो भ्रेमुः इतस्ततो गच्छन्तिस्म कुर्दिरे क्रीडन्तिस्म कुर्दङ्क्रीडायां रेसुः शब्दं चक्रुः रसशब्दे ववल्गुः धावन्तिस्म वल्गु अगिलगिव्रजे ॥ ९ ॥ भ०

समुत्पेतुरित्यादि । कषाघातैः चर्मलताप्रहारैः अश्वाः समुत्पेतुः उत्प्लुताः रश्मराकर्षैः प्रग्रहाकर्षणैः ममञ्जिरे शोभन्तेस्म सङ्कोचितघोणत्वात् मगिलखण्डने मोचे रश्मीनां प्रसारणे प्रदुद्रुवुः वेगेन गताः श्रमे सति खलीनप्रभवं रक्तं निजगरुः पीतवन्तः गृनिगरणे कृच्छ्रहृतामिति गुणः ॥ १० ॥ ज० म०

समुत्पेतुरित्यादि । अश्वादेस्ताडनी कषा तदभिघातैरश्वाः समुत्पेतुः उत्प्लुताः पतॢजमत्यां रश्मराकर्षैः प्रग्रहाकर्षणैर्ममञ्जिरे शुशुभिरे सङ्कुचितवेगत्वात् मकिङ्भूषे, किरणप्रग्रहौ रश्मी इत्यमरः । मोचे रश्मिशिथिलीकरणे प्रदुद्रुवुः धावन्तिस्म द्रुगतौ श्रमे सति

गजानां प्रददुः शारीन् कम्बलान् परितन्तरुः ।
तेनुः कक्षां ध्वजांश्चैव समुच्छिश्रियुरच्छिखान् ॥११॥
विशिश्वासयिषाञ्चक्रुरालिलिङ्गुश्च योषितः ।
आजघ्रुर्मूर्ध्नि बालांश्च चुचुम्बुश्च सुतप्रियाः ॥ १२ ॥

खलीनप्रभवं रक्तं निजगरुः पीतवन्तः उज्जगरुरिति पाठे सृक्कणीभ्यां रक्तमुद्गीर्णवन्तः गॄ निगरणे ऋतो णुः कित् णामिति गुणः ॥१०॥ भ०

गजानामित्यादि । गजानां शारीन् प्रददुः पृष्ठेषु आरोपितवन्तः हस्तिपका इत्यर्थात् तथा कम्बलान् नानावर्णविचित्रान् परितस्तरुः आस्तीर्णवन्तः कक्षां हेमादिमयीं तेनुः विस्तारितवन्तः उच्छिखान् उद्धृतशिखान् ध्वजान् समुच्छिश्रियुः उत्क्षिप्तवन्तः ॥११॥ ज०म०

गजानामित्यादि । हस्त्यारोहा गजानां शारीन् युद्धोपकरणानि प्रददुः पृष्ठे आरोपितवन्तः, शारिर्युद्धोपकरणे तथा शाकुनिकान्तरे इति विश्वः । कम्बलान् परितस्तरुः आस्तीर्णवन्तः कुथांश्चेति पाठे चित्रकम्बलानित्यर्थः कुथः स्याच्चित्रकम्बल इति विश्वः । स्तॄञ् आच्छादने इत्यस्य ऋतो णुः कित् णामिति गुणः कक्षाम् उदराद्यवस्थितां रज्जुं तेनुर्विस्तारितवन्तः तनदुञ् विस्तृतौ कक्षोद्ग्राहावकाञ्चीप्रकोष्ठगजरज्जुष्विति विश्वः । उद्गतशिखान् ध्वजदण्डान् समुच्छिश्रियुः उत्क्षिप्तवन्तः श्रिञ् सेवने उत्पूर्वोऽयमुत्क्षेपणेऽपि णु श्चोरव्यचीति इयः ॥ ११ ॥ भ०

विशिश्वासयिषाञ्चक्रुरित्यादि । योषितः आत्मीया विशिश्वासयिषाञ्चक्रुः विश्वासयितुमिष्टवन्तः भयन्यथा न भवनीयमिति वयन्त्स रूपम् आलिलिङ्गुश्च श्लिष्यन्ति स्म लिगिर्गत्यर्थः आङ्पूर्वः परिष्वङ्गे वर्त्तते बालान् शिशून् आजघ्रुः शिरसि आघ्रातवन्तः तथा चुचुम्बुश्च चुम्बितवन्तः सुतप्रियाः सुता प्रिया येषामिति ॥ १२ ॥ ज० म०

विशीत्यादि । योधा योषितः स्त्रियो विशिश्वासयिषाञ्चक्रुर्विश्वासयितुं शान्तयितुमिष्टवन्तः श्वसप्राणने ञिः सन् त्यान्तत्वादाम् तथा आलिलिङ्गुः आलिङ्गनञ्चक्रुः लिगिगतौ आङ्पूर्वं आश्लेषनाफ सुताः

गम्भीरवेदिनः संज्ञां गजा जगृहुरक्षताः।
ववृधे शुशुभे चैषां मदो हृष्टैश्च पुप्लुवे ॥ १३ ॥
मृगाः प्रदक्षिणं सस्रुः शिवाः सव्यम्ववाशिरे।
अवामैः पुस्फुरे देहैः प्रसेदे चित्तवृत्तिभिः ॥ १४ ॥

प्रिया येषां ते बालान् मूर्ध्नि: आजघ्रुः शिरसि आघ्रातवन्तः घ्रागन्ध-
पादाने भभवेत्यादिना खेर्घ्रात अत्वं ततो जत्वं चुचुम्बुश्च चुम्बित-
वन्तश्च चुविकि चुम्बने किमय चाविज्ञा बालकानाभाष्य रणाय जग्मु-
रित्यर्थः ॥ १२ ॥ भ०

गम्भीरवेदिन इत्यादि। ये गजा मत्तत्वादङ्कुशैर्दृढमाहताः
गम्भीरं विन्दन्तीति ते गम्भीरवेदिनः तस्मिन् काले संज्ञा युद्धोपयिकी-
र्जगृहुः गृहीतवन्तः अक्षतास्तोत्त्राङ्कुशैरनाहताः सन्तः हृष्टैश्च गजैः
पुप्लुवे प्लुतं भावे लिट् हर्षादेषां मदो ववृधे वर्द्धतेस्म शुशुभे च शोभते
स्म ॥ १३ ॥ ज० म०

गम्भीरेत्यादि। अङ्कुशैर्दृढमाहन्यमाना अपि ये न विषीदन्ति ते
गम्भीरवेदिनो गजा अक्षता अङ्कुशैरहता अपि संज्ञां युद्धोपयुक्तां
जगृहुः युद्धकुशलत्वात् ग्रह उपादाने व्यधग्रहेत्यादिना खेजिः ककार-
स्य भभवेत्यादिना अत्वं ग्रहस्वपाद्योरिति प्रकृतेर्जिः अक्षता इति
क्षणु हिंसायामनुजबधे क्तः वनतनाद्यनिमामिति नलोपः। त्वग्भेदाद्रुधिर-
स्रावादन्तरव्यधनादपि। संज्ञां न लभते यस्तु गजो गम्भीरवेद्यसौ ॥
एषां हस्तिनां मदो ववृधे शुशुभे च वृधङ्वृद्धौ शुभङ्दीप्तौ मत्तै-
र्गजैर्हृष्टैः पुप्लुवे वेगेन गतं प्लुङ्सर्पणे भावे रूपम् ॥ १३ ॥ भ०

मृगा इत्यादि। एवं संनह्य चलतां मृगाः दक्षिणपार्श्वेन गताः
सव्यम्ववाशिरे वामपार्श्वस्थाः शिवाः शब्दितवत्य इत्यर्थः वाशृशब्दे
अवामैर्दक्षिणैर्देहैर्भुजादिभिः पुस्फुरे स्फुरितं भावे लिट् चित्तवृत्ति-
भिर्मनोवृत्तिभिः प्रसेदे प्रसन्नं पूर्ववत्सदेर्भावे लिट् ॥ १४ ॥ ज० म०

मृगा इत्यादि। मृगाः प्रदक्षिणं सस्रुर्गमनं चक्रुः चलतो
शिवाः शृगालाः सव्यम्वामपार्श्वस्थाः सत्यो ववाशिरे शब्दं चक्रुः

प्राच्यमाजिहिषाञ्चक्रे प्रहस्तो रावणाज्ञया।
द्वारं ररङ्कतुर्याम्यं महापार्श्वमहोदरौ ॥ १५ ॥
प्रययाविन्द्रजित्प्रत्यगियाय स्वयमुत्तरम्।
समध्यासिसिषाञ्चक्रे विरूपाक्षः पुरोदरम् ॥ १६ ॥

वाक्शब्दे वाश्ब्दज्वपीति अपिशब्दात् शब्दे शिवाशब्दः पुंस्त्वगालेऽपि स्त्रीलिङ्ग एव अत्रासैर्दक्षिणैर्द्वैर्भुजादिभिः पुस्फुरे स्फुरितं चित्तवृत्तिभिरपि प्रसेदे प्रसन्नं स्फुरतिस्फूर्त्तौ चले षदलृ विशरणे गतौ प्रपूर्वः प्रसन्नतायाञ्च भावे रूपद्वयम् ॥ १४ ॥ भ०

प्राच्यमित्यादि। एवं शुभनिमित्तोत्साहितः प्रहस्तो रावणाज्ञया प्राच्यं प्राचि भवं पूर्व्वद्वारं द्युप्रागिति यत् आजिहिषाञ्चक्रे गन्तुमिष्टवान् अहिगतावित्यस्योदात्तेतः सनीट् अजादेर्द्वितीयस्येति द्विर्वचनं नन्द्रेति नकारो न द्विरुच्यते आम्प्रत्ययवदित्यात्मनेपदं तथा महापार्श्वमहोदरौ राक्षसौ याम्यं द्वारं दक्षिणं यमो देवता अस्येति दित्यदित्येत्यत्र यमाच्चेति वक्तव्यमिति उक्तं तेन प्राग्दीव्यतीयेऽर्थे ण्यप्रत्ययः ररङ्कतुः गतौ रघिगतावित्यस्य रूपम् ॥ १५ ॥ ज० म०

प्राच्यमित्यादि। एवं शुभनिमित्तं दृष्ट्वा प्रहस्तो रावणाज्ञया प्राच्यं द्वारं पूर्व्वद्वारम् आजिहिषाञ्चक्रे गन्तुमियेष अहिङ्गतौ सन् वसोऽरस्येतीम् स्यादौ नवद्रोऽये नाजन्तादेरादिर्द्विरिति वचनात् सन्यङन्तो द्विरिति हिसभागस्यैव द्वित्वं त्यान्तत्वादाम् प्राच्यां भवमिति द्युप्रागादिति ण्यः महापार्श्वमहोदरौ याम्यं दक्षिणं द्वारं ररङ्कतुः जग्मतुः रघि गत्यां यमो देवता अस्येति विकारसङ्घेत्यादिना ण्यः ॥ १५ ॥ भ०

प्रययावित्यादि। प्रत्यक् पश्चिमद्वारक् इन्द्रजित् प्रययौ गतवान् प्रतीच्यान् द्वारमिति सप्तमीत्यादिना विहितस्यास्तातेरञ्चेर्लुक् भसंज्ञाभावात् अच इत्यकारलोपो निवर्त्तते चाविति दीर्घत्वञ्च स्वयमिति रावण उत्तरद्वारमियाय गतः विरूपाक्षो राक्षसः पुरोदरं पुरमध्यं समध्यासिसिषाञ्चक्रे समध्यासितुमिष्टवान् आस्तेरनुदात्तेतः सनि इटि

शुश्राव रामस्तत्सर्वं प्रतस्थे च ससैनिकः ।
विस्फारयाञ्चकारास्त्रं बबन्धाथ च बाणधी ॥ १७ ॥
ईक्षाञ्चक्रेऽथ सौमित्रिमनुजज्ञे बलानि च ।
नमश्चकार देवेभ्यः पर्णतल्पं मुमोच च ॥ १८ ।

अजादिः पूर्ववत्तेन कृञ्चात्मनेपदम् अनुप्रयोगस्याप्यात्मनेपदम् ॥१६॥ज०म०

प्रययावित्यादि । इन्द्रजित् प्रत्यक् पश्चिमं द्वारं प्रययौ यातगतौ यवाताडौरिति डौः टेर्लोपो डितीत्यालोपः प्रतिपूर्वादञ्चतेः क्विबन्तात् दिक्शब्दात् दिग्देशकालेऽस्तादिनि सप्तम्याः स्तात् तस्य लोपः प्रतीच्यां दिशीत्यर्थः स्वयं रावण उत्तरं द्वारम् इयाय गतः इणवगतौ ज्णि-त्यल्वे तिजि इद्वो खेर्योरियुवण इतीयः । विरूपाक्षः पुरोदरं लङ्का-मध्यभागं समध्यासितुमिष्टवान् निवास उपवेशने समधिपूर्वात् सन् इम् सिपभागस्य द्वित्वं व्यान्तत्वादास् ॥ १६ ॥ म०

शुश्रावेत्यादि । अथानन्तरं रामस्तत् सर्वं रावणचेष्टितं शुश्राव श्रुतवान् प्रतस्थे च गन्तुं प्रवृत्तः समवप्रविभ्यः स्थ इति तङ् । ससै-निकः सह योधैः सेनायां समवेता इति सेनया वेति पक्षे ठक् अस्त्रं धनुर्विस्फारयाञ्चकार आरोप्याकृष्टवान् स्फुरतेश्चि स्फुरोर्णावित्यात्वं बबन्ध च बाणधी तूणीरे बध्नातिस्म बाणा धीयन्तेऽस्मिन्निति कर्म-ण्यधिकरणे वेति किः ॥ १७ ॥ ज० म०

शुश्रावेत्यादि । अथानन्तरं रामस्तत्सर्वं रावणचेष्टितं दूतद्वारा शुश्राव श्रुवगतौ श्रुतौ सैनिकैः सह प्रतस्थे प्रस्थितः स्थास्थाने प्रपूर्वो गतिमाह प्रतिज्ञानिर्णयेत्यादिना सं सेनायां समवैतीति ढघेका-दिति ण्यिकः, सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते इत्यमरः । अस्त्रं धनुर्विस्फारयाञ्चकार आरोप्य कृष्टवान् स्फुरणि स्फूर्तौ चले णिः क्रीजीङोऽस्त्राचिस्फुरेति पक्षे उकारस्यात्वं स्फुरधातो रूपं वा बाणधी तूणद्वयञ्च बबन्ध बाणा धीयन्ते यत्रेति ढाङ्गे इति किः ॥ १७ ॥ म०

ईक्षामित्यादि । सौमित्रिं लक्ष्मणं ईक्षाञ्चक्रे दृष्टवान् ईक्षेरनु-

चकासाञ्चक्रुरुत्तस्थुर्नेदुरानशिरे दिशः ।
वानरा भूधरान् रेधुर्बभञ्जुश्च ततस्तरून् ॥ १९ ॥

दात्तेत् इजादेरित्याम् बलानि च अनुजज्ञे अनुज्ञातवान् अनुपूर्वो जानातिरनुज्ञाने वर्त्तते तस्य परस्मैपदित्वात् अनुपसर्गादिति वचनादात्मनेपदम् उपसर्गेण युक्तत्वात् नमस्कार देवेभ्यः नमःशब्दयोगे चतुर्थी पर्णतल्पं पर्णशयनीयं मुमोच मुक्तवान् ॥ १८ ॥ ज० म०

ईक्षाञ्चक्र इत्यादि । रामः सौमित्रिम् ईक्षाञ्चक्रे ददर्श ईक्षङ् दर्शने इजादीत्याम् बलानि सैन्यानि च अनुजज्ञे अनुज्ञातवान् युद्धायेत्यर्थात् ज्ञानबोधने उपसर्गप्रतिरूपकोऽयमनुशब्दः तेन ञिज्ञ्जन्तेत्यादिना मं किंवा सौमित्रिं बलानि च ईक्षाञ्चक्रे अनुजज्ञे च अढाहिति सं शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यत इति कर्मविषयेऽपि कर्मानुक्तेः किंवा अनुजज्ञे अनुज्ञातो रामेण विभक्तिव्यत्ययेन भावे रूपं देवेभ्यो नमस्कार शक्तार्थेत्यादिना चतुर्थी ननु कथमत्र उपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायात् द्वितीया न स्यादिति चेन्न अत्र नमःशब्दस्य वाचकत्वं तेनैव कृञोऽन्वयान्न द्वितीयाप्राप्तिः यदा तु कृञः प्रणामार्थत्वं नमःशब्देन द्योत्यते तदा तन्न्यायात् द्वितीया यथा नारायणं नमस्कृत्येत्यादि पर्णतल्पं पल्लवरचितशय्यां मुमोच तत्याज । पर्णशालमिति क्वचित्पाठः ॥ १८ ॥ भ०

चकासाञ्चक्रुरित्यादि । ततोऽनुज्ञानानन्तरं वानरा उत्तस्थुः उत्थिताः नेदुः शब्दितवन्तः दिश आनशिरे व्याप्ताः अश्नोतेश्चेत्यभ्यासस्य लोट् अत आदेरिति दीर्घत्वं भूधरान् पर्वतान् रेधुः उन्मूलितवन्तः राधो हिंसायामित्येत्वाभ्यासलोपः तरूंश्च बभञ्जुः भग्नवन्तः एवञ्च ते चकासाञ्चक्रुः शोभन्ते स्म कास्यनेकाज्ग्रहणमित्याम् ॥ १९ ॥ ज० म०

चकासामित्यादि । ततोऽनन्तरं वानराश्चकासाञ्चक्रुः चकासृ दीप्तौ इजादीत्याम् अनेकाच्त्वात् उत्तस्थुः उत्थिताः नेदुः नदस्तिष्टोक्तौ दिश आनशिरे व्याप्नुवन्ति स्म अशूङ् व्याप्तिसंहत्योः खान्तादाटदाश्नोरिति खेरान् । भूधरान् रेधुः उन्मूलितवन्तः राध्यौषिद्धौ अस्य

ददाल भूर्नभो रक्तं गोष्पदघ्नं ववर्ष च ।
मृगाः प्रसव्यपूर्वाशं खगाश्चुकुविरेऽशुभम् ॥ २० ॥
उल्का ददृशिरे दीप्ता रुरुवुश्चाशिवं शिवाः ।
चचम्पे च मही रामः शशङ्के चाशुभागमम् ॥ २१ ॥

हिंसार्थे तृफलेत्यादिना पक्षे आत एत्वं खिलोपश्च । तस्य च बभञ्जुः भञ्जोधौ मोटने स्यात् असंयोगादिति पक्षे किल्वाभावान्नलोपाभावः ॥ १९ ॥ भ०

ददालेत्यादि । श्लोकद्वयं राघवयोर्भ्रातृवधसूचनार्थमनिमित्त-प्रदर्शनं भूर्ददाल विदीर्णा नभश्च रक्तं रुधिरं ववर्ष वृष्टवत् लिटः पित्वादिकित्त्वे धातोर्गुणः कियत्प्रमाणं गोष्पदघ्नं यावता गोष्पदं पूर-यित्वा वर्षप्रमाणे इत्यादिना णमुल् ऊलोपश्च । मृगाः प्रसव्यपूर्वाशं वामपार्श्वेन गता इत्यर्थः खगाः पक्षिणोऽशुभान् अनिष्टांश्चुकुविरे शब्दितवन्तः कुङ् शब्दे । अशुभमिति पाठान्तरं तत्र क्रियाविशेषणं वेदितव्यम् ॥ २० ॥ ज० म०

ददालेत्यादि । रामलक्ष्मणयोर्नाशप्राप्तबन्धनसूचनार्थम् अमङ्गलं श्लोकद्वयेनोच्यते भूमिर्ददाल दल विभेदे नम आकाशं गोष्पदघ्नं गोष्पदं पूरयित्वा रक्तं ववर्ष वृषु सेचने वृषु चेति चकारात् सेचने पूरी आप्याय-यने इत्यस्माद्वर्षप्रमाणे णमुल् ऊलोपश्चेति परः । स्वमते गोष्पदं प्राति पूरयतीति गोष्पदघ्नं रक्तस्य विशेषणं गोष्पदपूरणेनैव रक्तवर्ष-प्रमाणं गम्यते प्रावपूर्त्तौ हनजनादिति डः । मृगा वामं दिग्भागं प्रसव्यपूर्गताः लक्ष्मणोर्गत्याम् । अशुभाः खगा उलूकादयः चुकुविरे कुङ् शब्दे । अशुभमिति पाठे क्रियाविशेषणम् ॥ २० ॥ भ०

उल्का इत्यादि । दीप्ता उल्का ददृशिरे दृष्टाः अशिवा अनिष्टाः शिवा गोमायवः रुरुवुः शब्दितवन्तः मही च चचम्पे कम्पिता चम्पायो विधूनन इत्यनुदात्तेत् । रामश्चाशुभागममनिष्टप्राप्तिमाशशङ्के शङ्कितेस्म चेतसः पर्य्याकुलत्वात् इदमप्यनिष्टमेव ॥ २१ ॥ ज० म०

रावणः शुश्रुवान् शत्रून् राक्षसानभ्युपेयुषः ।
स्वयं युयुत्सयाञ्चक्रे प्राकाराग्रे निषेदिवान् ॥ २२ ॥
निरासू राक्षसा बाणान् प्रजह्नुः शूलपट्टिसान् ।
असींश्च वाहयाञ्चक्रुः पाशैश्चाचकृषुस्ततैः ॥ २३ ॥

उल्का इत्यादि । दीप्ता उल्का दृश्यन्ते स्म शिवाः शृगालाः अशुभं रवं चक्रुः अशुभा इति पाठे अनिष्टा इत्यर्थः अशिवमिति क्वचित्पाठः रुतध्वनौ । मही चच्माये कम्पिता च्माय्यृङ्विधूनने रामस्य अशुभस्यागमनं शशङ्के शङ्कितवान् अकुशलदर्शनेन पर्य्याकुलत्वात् शकिङ्‌शङ्कायां ॥ २१ ॥ भ०.

रावण इत्यादि । राक्षसानभ्युपेयुषोऽभिमुखमुपगतवन्तो ये शत्रवो रामादयस्तान् रावणः शुश्रुवान् स्वयञ्च प्राकाराग्रे निषेदिवान् निषस्नः सन् भाषायां सदवसेत्यादिना क्वसुः युयुत्सयाञ्चक्रे योद्धुमिच्छन्तं प्रयोजितवानित्यर्थः सनन्तण्यन्तस्य रूपम् ॥ २२ ॥ ज० म०

रावण इत्यादि । राक्षसानभ्युपेयुषोऽभिमुखमागतान् शत्रून् रामादीन् शुश्रुवान् रावणः स्वयं प्राकारस्याग्रे निषस्नः सन् राक्षसान् योद्धुमिच्छां कारयामास युध्यौङ्युद्धे सन् जिः आम् इणगतौ ठीप-सवदिति क्वसुः वसोर्घसेकाड्ड्रिणात इति इम् यिणोऽच्यणाविति यः खेः किर्तीति दीर्घः वसोर्यसेमिति इमसहितस्य वस्य उत्वं सदेः क्वसौ तृफलेत्यादिना अत एत्वं खिलोपश्च । २२ ॥ भ०

निरासुरित्यादि । रावणप्रचोदिता राक्षसा बाणान्निरासुः चिप्तवन्तः शूलपट्टिसान् शूलसहितान् पट्टिसान् शाकपार्थिवादित्वात्तत्पुरुषः द्वन्द्वे तु जातिरप्राणिनामित्येकवद्भावः स्यात् । तान् प्रजह्नुः त्यक्तवन्तः ओहाकत्यागे असींश्च खड्गान् वाहयाञ्चक्रुः व्यापारितवन्तः ण्यन्तस्य रूपं पाशैस्ततैर्विस्तृतैः आचकृषुः आकृष्टवन्तः किच्चे गुणप्रतिषेधः ॥ २३ ॥ ज० म०

निरासुरित्यादि । राक्षसा बाणान् निरासुः चिक्षिपुः असु

भल्लैश्च बिभिदुस्तीक्ष्णैर्विविधुस्तोमरैस्तथा।
गदाभिश्चूर्णयाञ्चक्रुः शितैश्चक्रैश्च चिच्छिदुः॥ २४॥
वानरा मुष्टिभिर्जघ्नुर्ददंशुर्दशनैस्तथा।
निरासुश्च गिरींस्तुङ्गान् द्रुमान् विचकरुस्तथा॥२५॥

इत्युक्षेपे स्थूलपट्टिशान् प्रजह्रुः शत्रोरुपरि त्यक्तवन्तः खोड्डाकल्याणे मूलानि च पट्टिशाश्चेति इतरेतरद्वन्द्वः। परे तु स्थूलसहिताः पट्टिशा इति शाकपार्थिवादिः द्वन्द्वे हि अप्राणिजातित्वान्नपुंसकत्वं स्यादित्याहुः। असीन् खड्गान् वाहयाञ्चक्रुः वहेर्ण्यन्ताणिच्प्रापणे णिः ततैर्वि-स्तृतैः पाशैराचकृषुराकृष्टवन्तः कृषो आकर्षे॥ २३॥ भ०

भल्लैरित्यादि। भल्लैर्विभिदुर्विदारितवन्तः तीक्ष्णैस्तथा तोमरै-र्विविधुस्ताडितवन्तः व्यधेर्ग्रहिज्यादिना सम्प्रसारणं गदाभिश्च चूर्णया-ञ्चक्रुः चूर्णितवन्तः सत्यापेत्यादिना णिच् चूर्णप्रेरणे इति चौरादिकत्वाद्वा चिच्छिदुः छिन्नवन्तः राक्षसयुद्धमेतत्॥ २४॥ ज० स०

भल्लैरित्यादि। राक्षसास्तीक्ष्णैर्भल्लैर्बिभिदुः भिदिर्जिधौ भिदि तथा तोमरैर्विविधुः व्यध्यौताड़े व्यथयह्वेति खेर्जिः ग्रहसपाद्योरिति प्रकृतेर्जिः। गदाभिश्चूर्णयाञ्चक्रुश्चूर्णितवन्तः चूर्णक्षेपे चूर्णशब्दाद्वा ले: कृत्याख्याने जिरिति जिः। शितैस्तीक्ष्णैश्चक्रैश्चिच्छिदुः छिदिरौज् च्छेदे॥ २४॥ भ०

वानरा इत्यादि। वानरा मुष्टिभिर्जघ्नुः हतवन्तः राक्षसानित्य-र्थात् दशनैर्ददंशुः दष्टवन्तः गिरीन्निरासुः क्षिप्तवन्तः द्रुमान् विचकरु-र्विक्षिप्तवन्तः कृविक्षेपे ऋच्छत्यृतामिति गुणः॥ २५॥ ज० म०

वानरा इत्यादि। एवं राक्षसेषु युध्यमानेषु वानरा मुष्टिभिर्जि-घ्नुर्हतवन्तः राक्षसानित्यर्थात् हनलौ गतौ बधे हनगमित्युङ् लोपः तथा दन्तैर्ददंशुर्दशन्तिस्म दन्शौदंशने तुङ्गान् उच्चान् निरासुः क्षिप्तवन्तः तथा द्रुमान् वृक्षान् विचकरुः विक्षिप्तवन्तः कृविक्षेपे ऋतो गुः कित्यामिति गुः॥ २५॥ भ०

लाङ्गूलैर्लोठयाञ्चक्रुस्तलैर्निन्युश्च संचयम् ।
नखैश्च चक्रतुः क्रुद्धाः पिपिषुश्च क्षितौ बलात् ॥ २६ ॥
संबभूवुः कबन्धानि प्रोहुः शोणिततोयगाः ।
तैर्भटास्यपद्मानि ध्वजैः फेनैरिवाबभे ॥ २७ ॥

लाङ्गूलैरित्यादि । लाङ्गूलैर्लोठयाञ्चक्रुः लाङ्गूलैर्व्यापादितवन्तः रुठलुठप्रतिघाते परस्मैपदिनो ण्यन्तस्य रूपं तलैर्हस्ततलैः सङ्घयं विनाशन्निन्युः नीतवन्तः नखैश्च चक्रतुरच्छिन्नवन्तः कृतीच्छेदने क्रुद्धाः वानराः बलात् हठात् क्षितौ पिपिषुश्चूर्णितवन्तः ॥ २६ ॥ ज० म०

लाङ्गूलैरित्यादि । वानराः लाङ्गूलै राक्षसान् ताड़ितवन्तः लुठ वादिर्वादित्यत्र वादिवदिति रुठधातोरर्थे प्रतीघाते उपघाते चेत्यर्थः घातो हन्ति भाषार्था अङ्किती वा चुरादय इत्युक्तेः स्वार्थे णिः तलैश्चपेटैस्स संचयं निन्युः प्रापितवन्तः णोञ्प्रापणे अध्योरित्यादिना यत्वं नखैरपि चक्रतुः कृतीशपच्छिदि क्रुद्धाः सन्तः बलात् क्षितौ पिपिषुः पीपिञ्लृचूर्णने ॥ २६ ॥ म०

संबभूवुरित्यादि । कबन्धानि संबभूवुः संभूतानि प्रतिसङ्घस्य व्यापादनात् कबन्धस्यैकस्योत्पादनात् शोणिततोयगाः शोणितनद्यः प्रोहुः प्रकर्षेण प्रवृत्ताः वहेर्यजादित्वात् सम्प्रसारणं भटास्यपद्मानि योधमुखपद्मानि तैरुः प्लुतानि तॄफलेत्यादिना एत्वाभ्यासलोपौ फेनैरिव ध्वजैः शोणितनदीषु आबभे शोभितं भावे च लिट् ।२७॥ ज० म०

संबभूवुरित्यादि । कबन्धानि संबभूवुः संभूतानि भूसत्तायां भुवो वुक् टीघचीति वुक् भुवोऽङ्धामिति खेरङ् । कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरमित्यमरः । रक्तनद्यः प्रोहुः प्रवहन्तिस्म प्रवृत्ता इत्यर्थः वहैऔप्रापणे ऐदित्वात् यजादिः व्यथग्रहेत्यादिना खेर्जिः पहस्पाद्योरिति सूत्रस्य जिः । भटानां योधानां मुखपद्मानि अत्र नद्यां तेरुः प्लवन्तेस्म तॄतरेऽभिभवे प्लुत्याम् क्तो एः तॄफलेत्यादिना एत्वं खिलोपोऽपि । पतितैर्ध्वजैस्तत्र नद्यां फेनैरिव आबभे शोभितं भाजदीप्तौ भावे रूपम् ॥ २७ ॥ म०

रक्तपङ्के गजाः सेदुर्न प्रचक्रमिरे रथाः ।
निममज्जुस्तुरङ्गाश्च गन्तुं नोत्सेहिरे भटाः ॥ २८ ॥
कोट्या कोट्या पुरद्वारमेकैकं रुरुधे द्विषाम् ।
षट्त्रिंशद्धरिकोट्यश्च निवव्रुर्वानराधिपम् ॥ २९ ॥
तस्तनुर्जज्वलुर्मम्लुर्जग्लुर्लुलुठिरे क्षताः ।
मुमूर्च्छुर्ववमू रक्तं तत्रसुश्चोभये भटाः ॥ ३० ॥

रक्तेत्यादि । रक्तपङ्के गजाः सेदुः निषण्णाः रक्तपङ्कस्य बहुलत्वात् तथा रथा न प्रचक्रमिरे न गन्तुमारब्धाः प्रोपाभ्यामित्यात्मनेपदं तुरङ्गा निममज्जुः निमग्नाः भटाश्च गन्तुं नोत्सेहिरे नोत्सहन्ते स्म ॥ २८ ॥ ज० म०

रक्तपङ्क इत्यादि । रक्तानां पङ्के गजा हस्तिनः सेदुरवसादं प्रापुः षद्लृजो विषादे शरणे गत्यां तत्र रथा अपि गन्तुं न प्रारब्धाः क्रमुगतौ प्रोपादारम्भ इति सं तुरङ्गाश्च तत्र निमग्नाः मस्जौ शब्दे स्नाने मस्जनशोरिति नस्य दत्वे स्तुश्चुभिश्चुशाल् । भटा योधा गन्तुं न उत्सहन्ते स्म सहेस्तृफलेत्यादिना एत्वं खेर्लुक् च ॥ २८ ॥ म०

कोट्येत्यादि । द्विषामेकैकं पुरद्वारं वानराणां कोट्या कोट्या रुरुधे रुधं कर्मणि लिट् षट्त्रिंशद्धरिकोट्यः वानरकोट्यो वानराधिपं सुग्रीवं निवव्रुः आवृत्य स्थिताः ॥ २९ ॥ ज० म०

कोट्येत्यादि । द्विषां राक्षसानाम् एकैकं पुरद्वारं वानराणां कोट्या कोट्या रुरुधे रुद्धं रुधिर्धौञि आवृतौ कर्मणि ठौ षट्त्रिंशद्वानरकोट्यः वानराधिपं सुग्रीवं निवव्रुरावृतवन्तः वृञवृतौ संख्यामात्रवृत्तित्वात् कोट्येत्येकवचनं वीप्सायां द्वित्वं लोकतः सिद्धम् ॥२९॥ म०

तस्तनुरित्यादि । उभये भटा रामरावणसम्बन्धिनो योधाः क्षताः सन्तस्तस्तनुः स्तनितवन्तः जज्वलुः चलिताः ज्वलज्वलचलने मम्लुः म्लानाः म्लैगात्रक्षये जग्लुः हर्षक्षयङ्गताः लुलुठिरे भूमौ लुठन्ति स्म रुठलुठतिप्रघाते तुदादावात्मनेपदी पठ्यते मुमूर्च्छुः मोहमुपगताः रक्तं

सम्पातिना प्रजङ्घस्तु युयुधेऽसौ द्रुमाहतः।
चकम्पेऽतीव चुक्रोश जीवनाशं ननाश च॥ ३१॥
उच्चखाते नलेनाक्ष्णी स्फुरत्प्रतपनाक्षिणी।
जम्बुमाली जहौ प्राणान् ग्रावणा मारुतिना हतः॥ ३२॥

ववसुः गीर्णवन्तः तत्षुः तृष्यन्तिस्म एतत् सङ्कुलयुद्धमाह॥ २०॥ ज० म०

तत्त्वनुरित्यादि। उभये भटा रामरावणसम्बन्धिनः क्षताः सन्तः स्तनन्तिस्म स्तनभिशब्दे जज्वलुः कोपेनेत्यर्थात् ज्वलचलत्विषोः मम्लुः म्लैकान्तिसंक्षये जग्लुः ग्लैक्षमे लुलुठिरे भूमौ लुठन्तिस्म मुमूर्छुः मोहं गताः मूर्छा संमोहे उच्छ्रये उत्तङ्कुरिति कचित्पाठः रक्तं ववसु- र्वमन्तिस्म टुवम् उद्गिरणे तृफलेत्यादिना विभाषया एत्वं खिलोपश्च तदभावपक्षे रूपमिदं तत्षुः तृषत्षपि तृट् पिपासा तत्रसुरिति पाठे त्रासं गताः त्रसभये उभय इति सङ्कुलयुद्धलक्तम्॥ २०॥ भ०

सम्पातिनेत्यादि। प्रजङ्घो नाम राक्षसः सम्पातिनाम्ना वानरेण सह युयुधे युध्यतेस्म असौ प्रजङ्घो द्रुमाहतश्चकम्पे कम्पतेस्म अतीव अत्यर्थं चुक्रोश क्रोशतिस्म जीवनाशं ननाश जीवेन विनष्टः कर्तोर्जीव- पुरुषयोर्नशिवहो इति णमुल्॥ २१॥ ज० म०

सम्पातिनेत्यादि। प्रजङ्घनामा राक्षसः सम्पातिनाम्ना वानरेण सह युयुधे युद्धं कृतवान् युध्यौङ् युद्धे असौ प्रजङ्घो द्रुमेणाहतः सन् चकम्पे कपिङ् चाले अतीव अत्यर्थं चुक्रोश शब्दं चकार क्रुश्जौ रोदे ह्वतौ जीवनाशं नानाश जीवन् सन्नष्टः नश्ल्यूनाशे कर्ट्रूपा- ज्जीवात्यशी गतार्थे णमिति परः स्वमते जीवनस्य नाशोऽदर्शनं यस्मा- दिति नाशक्रियाविशेषणम्॥ २१॥ भ०

उच्चखाते इत्यादि। स्फुरन् चलन् प्रतपनो नाम राक्षसः तस्याक्षिणी स्फुरतीव प्रतपनस्याक्षिणी नयने नलेन वानरेण उच्च- खाते उत्खाते कर्मणि लिट् गमहनेत्युपधालोपः मारुतिना हनू-

भिन्नघ्नस्य प्रचुचोद गदयाङ्गं विभीषणः।
सुग्रीवः प्रघसं नेभे बहून् रामस्ततर्द च॥ २३॥
वज्रमुष्टेर्विशिश्लेष मैन्देनाभिहतं शिरः।
नीलश्चकर्त चक्रेण निकुम्भस्य शिरः स्फुरत्॥ २४॥

गता ग्राव्णा पाषाणेन हतो जम्बुमाली राक्षसः प्राणान् जहौ त्यक्तवान्॥ २२॥ ज० म०

उच्चखाते इत्यादि। नलनाम्ना वानरेणाजौ युद्धे स्फुरतः प्रतपननाम्नो राक्षसस्य अक्षिणी चक्षुषी उच्चखाते उत्खाते खनुञ् विदारे कर्मणि रूपं हनगमित्युङ्लोपः जम्बुमाली राक्षसो मारुतिना हनूमता ग्राव्णा प्रस्तरेण हतः सन् प्राणान् जहौ त्यक्तवान् ओहाक्त्यागे॥ २२॥ भ०

भिन्नघ्नस्येत्यादि। भिन्नघ्नस्य राक्षसस्य अङ्गं गदया विभीषणः प्रचुचोद प्रघसनाम राक्षसं सुग्रीवो नेभे हिंसितवान् णभतुभहिंसायामित्यनुदात्तेत् रामस्य बहूनं राक्षसान् ततर्द हिंसितवान् उतर्दी-हिंसानादरयोः॥ २३॥ ज० म०

भिन्नघ्नस्येत्यादि। विभीषणो गदया भिन्नघ्नस्य राक्षसस्य अङ्गं प्रचुचोद चूर्णयामास अभीच्छदिर्चुदि ञुत् संपेषणं सुग्रीवः प्रघसं राक्षसं नेभे जघान णभतुभल्लङ् चेति चकाराद्धिंसे लङो भेरघनुबन्धो रामश्च बहून् राक्षसान् ततर्द जघान तर्द हिंसे त्वदुजघिनर्दरेत्यस्य वा रूपम्॥ २३॥ भ०

वज्रेत्यादि। वज्रमुष्टे राक्षसस्य शिरो मैन्देन वानरेण अभिहतं सत् विशिश्लेष विश्लिष्टं निकुम्भस्य शिरः स्फुरत् चलत् नीलो वानरश्चक्रेण चकर्त छिन्नवान्॥ २४॥ ज० म०

वज्रमुष्टेरित्यादि। वज्रमुष्टे राक्षसस्य शिरो मैन्देन वानरेणाभिहतं सत् विशिश्लेष विश्लिष्टं श्लिषौयत्श्लिष्लोषे विपूर्वः पृथगभावमाह नीलो वानरो निकुम्भस्य राक्षसस्य स्फुरत् शिरस्तदीयेन चक्रेण चकर्त चिच्छेद कृती छेदने॥ २४॥ भ०

विरूपाक्षो जह्रे प्राणैस्तृढः सौमित्रिपत्त्रिभिः ।
प्रमोचयाञ्चकारासून् द्विविदस्त्वशनिप्रभम् ॥ ३५ ॥
गदा शक्रजिता जिघ्ये तां प्रतीयेष वालिजः ।
रथं ममन्थ सहयं शाखिनास्य ततोऽङ्गदः ॥ ३६ ॥

विरूपाक्ष इत्यादि । विरूपाक्षो राक्षसः सौमित्रिपत्त्रिभिर्लक्ष्मणशरैः तृढः हत इत्यर्थः तृहहिंसार्थः इति तौदादिकस्योदित्वाद्विभाषामितीट्प्रतिषेधः प्राणैर्जह्रे त्यक्तः कर्मणि लिट् द्विविदो वानरः अशनिप्रभं राक्षसं प्राणान् प्रमोचयाञ्चकार त्याजितवान् मुचेर्ण्यन्तस्य लिटि रूपम् ॥ ३५ ॥ ज० म०

विरूपाक्ष इत्यादि । सौमित्रेः पत्त्रिभिर्वाणैस्तृढो हतो विरूपाक्षः प्राणैर्जह्रे त्यक्तः ओहाङ्त्यागे कर्मणि रूपं तृहधजहिंसे क्तः होढः ढभात्तयोरिति धः ष्टुभिरिति ढः ढोढ्लीति ढलुक् तत्र ऋकारवर्जनाच्च दीर्घः द्विविदो वानरः अशनिप्रभं राक्षसम् असून् प्राणान् प्रमोचयाञ्चकार त्याजितवान् मुच्लृशपत्रौ मोक्षे अन्तः अत्र मुचिर्मोचनपूर्विकायां गतौ वर्त्तमानत्वेन धोऽजौजेरित्यादिना प्रयोज्यस्य कर्मत्वं योगविभागाद्वा आपिशलिस्तु गत्यर्थादिषु कर्मैव नीखाद्यादिषु कर्तृता ॥ ३५ ॥ म०

शेषेषु कर्मकर्त्ता वा यथासम्भवमिष्यत इत्याह ।

गदेत्यादि । शक्रजिता इन्द्रजिता गदा जिघ्ये प्रहिता हिनोतेः कर्मणि लिट् हेरचङीति कुत्वं तां गदां वालिजोऽङ्गदः प्रतीयेष प्रतीष्टवान् इषेरभ्यासस्यासवर्णे इतीयङ् ततोऽनन्तरम् अस्य शक्रजितो रथं सहयं साश्वं शाखिना तरुणा ममन्थ चूर्णितवान् मथिर्हिंसासंक्लेशयोः ॥ ३६ ॥ ज० म०

गदेत्यादि । इन्द्रजिता गदा जिघ्ये प्रेषिता हिगवर्द्धने गतौ हेःखेरनङिघिः अभ्योरित्यादिना यत्वं वालिजोऽङ्गदस्तां गदां प्रतीयेष जग्राह इषेः खेर्योरिष्वर्णे इति इय् ततोऽनन्तरं शाखिना वृक्षेण अङ्गदोऽस्य शक्रजितः सहयं रथं ममन्थ चूर्णितवान् ॥ ३६ ॥ म०

तत्कर्म बालिपुत्रस्य दृष्ट्वा विश्वं विसिस्मिये ।
सत्रेसू राक्षसाः सर्वे बहु मेने च राघवः ॥ ३७ ॥
सुग्रीवो मुमुदे देवाः साध्वित्यूचुः सविस्मयाः ।
विभीषणोऽभितुष्टाव प्रशशंसुः प्लवङ्गमाः ॥ ३८ ॥
ह्री चित्रं लक्ष्मणेनोचे रावणिस्य तिरोदधे ।
विचकार ततो रामः शरान् संतत्रसुर्द्विषः ॥ ३९ ॥

तत्कर्मेत्यादि । तत्कर्म रथस्य चूर्णनं दृष्ट्वा विश्वं त्रैलोक्यं विसिस्मिये विस्मितं राक्षसाः सर्वे त्रेसुः राघवस्य बहु मेने अङ्गदं स्लाघितवानित्यर्थः ॥ ३७ ॥ ज० म०

तत्कर्मेत्यादि । बालिपुत्रस्य अङ्गदस्य तत्कर्म गदासन्ध्यनरूपं दृष्ट्वा विश्वं त्रैलोक्यं विसिस्मिये विस्मितं स्मिङोऽस्य ध्वोरितीय् सर्वे राक्षसाः संत्रेसुः संत्रस्ताः त्रस्य त्रसीषभये तृफलेत्यादिना एत्वं स्लिलो-पश्च राघवस्य बहु मेने अङ्गदं स्लाघितवान् मनदङ् बोधे मन्योङ् च ॥ ३७ ॥ म०

सुग्रीव इत्यादि । सुग्रीवो मुमुदे हृष्टवान् देवाः साध्वित्यूचुः वचिस्वपीति सम्प्रसारणं विभीषणोऽभितुष्टाव अभिष्टुतवान् स्तुञ्स्तु-स्तुतौ उपसर्गादित्यादिना षत्वं प्लवङ्गमाः प्रशशंसुः प्रशंसां कृतवन्तः ॥ ३८ ॥ ज० म०

सुग्रीव इत्यादि । तत्कर्म दृष्ट्वा सुग्रीवो मुमुदे जिमुदङ् हर्षे देवाः साध्वित्युक्तवन्तः विभीषणोऽभितुष्टाव अभिमुखीभूय स्तुतिं कृत-वान् ष्टुञस्तुतौ गोकःस्तुस्तुभेति षत्वं वानराः प्रशशंसुः शनुस्तुहिंसा-स्तुत्योः ॥ ३८ ॥ म०

ह्री चित्रमित्यादि । ह्रीति विस्मये चित्रमाश्चर्यमिति लक्ष्मणे-नोदे उक्तं वदेर्भावे लिट् यजादित्वात्सम्प्रसारणं रावणिः इन्द्रजित् रावणस्यापत्यम् अभीतद्रुञ् तिरोदधे अदृश्योऽभूत् ततः अदर्शनानन्तरं

विभिन्ना जुघुरुर्घोरं जक्षुः क्रव्याशिनो हतान् ।
चुश्च्योत व्रणिनां रक्तं छिन्नाश्चेलुः क्षणं भुजाः ॥४०॥
कृत्तैरपि दृढक्रोधो वीरवक्त्रैर्न तत्यजे ।
पलायाञ्चक्रिरे शेषा जिह्रियुः शूरमानिनः ॥ ४१ ॥

रामः शरान् विचकार विक्षिप्तवान् कॄ विक्षेपे द्विषतः संतत्रसुः संत्रस्ताः ॥ ३९ ॥ ज० म०

ह्री चित्रमित्यादि । ह्री विस्मये लक्ष्मणेन चित्रमिदं कर्मेत्युक्ते रावणपुत्र इन्द्रजित् तिरोदधे मायया अदृश्यो जातः रावणस्यापत्यमिति बाह्वाद्यत इति ञिः ततोऽनन्तरं रामः शरान् विचकार विक्षिप्तवान् कॄ विक्षेपे द्विषः संतत्रसुः सन्त्रस्ताः तॄफलेत्यादिना विभाषया एत्वविधानादत्र तदभावः ॥ ३९ ॥ भ०

विभिन्ना इत्यादि । शरैर्विभिन्ना जुघुरुः घोरं भीमशब्दं कृतवन्तः घुर भीमार्थशब्दयोः क्रव्याशिनः शृगालादयो हतान् विनष्टान् जक्षुः भक्षितवन्तः लिट्यन्यतरस्यामित्यादेर्घस्लृः उपधालोपः खरि चेति चर्त्वं व्रणिनां शरैः कृतव्रणानां रक्तं चुश्च्योत व्रणादित्यर्थात् कर्त्तरि लिटः पित्त्वादकित्त्वे गुणः भुजाश्छिन्नाः सन्तः क्षणमात्रं चेलुश्चलिताः ॥ ४० ॥ ज० म०

विभिन्ना इत्यादि । द्विषो रामबाणैर्विभिन्नाः सन्तो घोरं जुघुरुः शब्दञ्चक्रुः घुर शब्दध्वनौ भीमार्थे क्रव्याशिनः शृगालादयो हतान् द्विषो जक्षुः भक्षितवन्तः अद्लृ भक्षे घां वेति घस्लादेशः भक्तेल्वघसौ चेत्यस्य वा रूपं हनगमित्युङ्लोपः अपञ्चसोरिति षस्य कत्वे क्विवादिति षः । व्रणिनां शरैः क्षतानां द्विषां रक्तं चुश्च्योत श्च्युतिर्क्षरणे भुजाश्छिन्नाः सन्तः क्षणं चेलुः चल गमने ॥ ४० ॥ भ०

कृत्तैरित्यादि । वीरवक्त्रैः शूरमुखैः कृत्तैरपि छिन्नैरपि दृढो घनः क्रोधो न तत्यजे न त्यक्तः दष्टौष्ठभ्रूकुट्यादीनां तथावस्थानात् कर्मणि लिट् पलायाञ्चक्रिरे पलायिताः दयायासश्चेत्याम् उपसर्ग-

राघवो न दयाञ्चक्रे दधुर्धैर्य्यं न केचन।
मम्ने पतङ्गवद्वीरैर्हाहेति च विचुक्रुशे॥ ४२॥
तिरोबभूवे सूर्य्येण प्रापे च निशयासदम्।
जयसे कालरात्रीव वानरान् राक्षसांश्च सा॥ ४३॥

आयताविति त्वं शेषा ये न पलायिताः ते शूरमानिनः मन इति जिह्रियुः लज्जन्ते स्म॥ ४१॥ ज० म०

वत्तैरित्यादि। शूराणां सुखेच्छिन्नैरपि दृढ़क्रोधौ न तत्यजे न त्यक्तः सन्दष्टाधरभ्रूकुट्यादीनां तथैव विस्फारात् त्यजोहानौ कर्मणि रूपं केचित् पलायाञ्चक्रिरे पलायिताः अयङ् गतौ परापूर्वः विजादीत्याम् ढौरल इत्यत्र योगविभागात् लत्वमभिधानात् शेषा ये न पलायितास्ते शूरमानिनो जिह्रियुः ह्रीलज्जे भृञ्ह्रीरित्यादिना द्वत् शूरम् अर्यादात्मानं मन्यत इति ग्रहादित्वाणिन्॥ ४१॥ भ०

राघव इत्यादि। राघवो न दयाञ्चक्रे न दयां कृतवान् पूर्ववदाम् न केचन न केचित् धैर्य्यं दधुः धारितवन्तः सर्व एव आहमहमिकया प्रवृत्ताः यदि वा न केचन केचिद्धैर्य्यं न दधुः अपितु दधुरेव पतङ्गवत्पतङ्गैरिव वीरैर्मम्ने मतं भावे लिट् हाहेति च विचुक्रुशे रुदितम्॥ ४२॥ ज० म०

राघव इत्यादि। रामो न दयाञ्चक्रे जिदयग्रहणे गतौ लवे दानेऽवने विजादीत्याम् केचित् धैर्य्यं न दधुः धृतवन्तः सर्व एव व्याकुला इत्यर्थः डुधाञ्धारणे उसोचीत्यालोपः वीरैः पतङ्गवत् शलभैरिव मम्ने मतं मङ्गम्तौ भावे रूपं हाहेति च विचुक्रुशे रुदितं क्रुशजौरोदे कृतौ भावे रूपम्॥ ४२॥ भ०

तिर इत्यादि। सूर्य्येण तिरोबभूवे तिरोभूतम् अस्तङ्गतमित्यर्थः भावे लिट् निशा निशया च आसदं प्रतिष्ठामिति निपातर्न भावे प्राप्तं कर्मणि लिट् सा च निशा कालरात्रीव कालः कृतान्तस्तेन प्रयुक्ता रात्रिरिति शाकपार्थिवत्वात्तः रात्रेश्चाजसाविति ङीप् वानरान् राक्षसांश्च जयसे ग्रसते स्म भक्षितवतीत्यर्थः॥ ४३॥ ज० म०

चुकोपेन्द्रजिदत्युग्रं सर्पास्त्रं चाजुहाव सः।
आजुहुवे तिरोभूतः परानीकं जहास च ॥ ४४ ॥
बबाधे च बलं कृत्स्नं निजग्राह च सायकैः।
उत्ससर्ज शरांस्तेऽस्य सर्पसाच्च प्रपेदिरे ॥ ४५ ॥

तिर इत्यादि। सूर्य्येण तिरोबभूवे अस्तं गतं भावे रूपं भुवो-ऽङ्ग्यामिति पक्षे खेरङ् निशया आस्परं स्थानं प्रापे प्राप्तं कर्मणि रूपम् आङः पदे सुट् आस्पदं स्थाने प्रभुत्वे चेति परः समते मनी-षादित्वात् सा निशा कालरात्रिरिव वानरान् राक्षसांश्च जपसे भक्षि-तवती पसग्लसुङ् भक्षे कालो यमस्तेन प्रयुक्ता रात्रिः कालरात्रिः शाकपार्थिवादिरिति परः समते सम्बन्धविवक्षया षष्ठीसमासः पाक्षो-नादीत्यादिना पक्षे ईप् ॥ ४३ ॥ भ०

चुकोपेत्यादि। रामव्यापारं दृष्ट्वा इन्द्रजित् तिरोहितः सन् चुकोप कुपितवान् अत्युग्रञ्च सर्पास्त्रं सर्पमस्त्रमिव आजुहाव आहू-तवान् आह्वयते शब्दे वर्त्तमानस्य अभ्यस्तस्य चेति द्विर्वचनात् प्राक् सम्प्रसारणं ततो द्विर्वचनं परानीकञ्च रामबलम् आजुहुवे स्पर्द्धतेस्म स्पर्द्धायामाङ् इत्यात्मनेपदं पूर्ववत् सम्प्रसारणं यजादित्वाद्वा तत उवङादेशः जहास च विहसितवान् ॥ ४४ ॥ ज० म०

चुकोपेत्यादि। रामपराक्रमदर्शनात् इन्द्रजित् चुकोप कुपइर कोपे अत्युग्रं सर्परूपमस्त्रम् आजुहाव आहूतवान् तिरोभूतः सन् परानीकं शत्रुसैन्यम् आजुहुवे स्पर्द्धितवान् स्पर्द्धायामाङ इति मं ह्वेञ्स्पर्द्धे शब्दे च उभयत्र व्यथपक्षेति खेर्जिः जहास च हसितवांश्च हसे हासे ॥ ४४ ॥ भ०

बबाध इत्यादि। बबाधे च अभिभूतवान् बाध विलोडने निज-ग्राह च निगृहीतवान् सायकैः लोहयुक्तैः सर्पास्त्रैः उत्ससर्ज शरान् क्षिप्तवान् ते उत्सृष्टाः शरा अस्य बलस्य सर्पसात् कार्त्स्न्ये सातिः सम्पेदिरे सम्पद्यन्ते स्म ॥ ४५ ॥ ज० म०

आचिचाय स तैः सेनामाचिकाय च राघवौ।
बभाण च न मे मायां जिगायेन्द्रोऽपि किं नृभिः ॥४६॥
आचिक्याते च भूयोऽपि राघवौ तेन पन्नगैः।
तौ मुमुहतुरुद्विग्नौ वसुधायाञ्च पेततुः ॥ ४७॥

बबाध इत्यादि। स इन्द्रजित् सर्वं रामबलं बबाधे अभिभूतवान् बाहुङ्विहितौ सायकैः शरैर्निग्टहीतवांश्च असौ यान् शरान् उत्ससर्ज चिप्तवान् सृजोङ् विसर्गेऽथसृजौशचेति चकाराद्विसर्गे ते शराः अस्य रामबलस्य सर्पसात् सर्पाभूताः प्रपेदिरे सम्पद्यन्ते का कर्तृस्त्रायत्त्योरिति चसात् यौपदङ्गतौ लफलेति अत एत्वं खिलोपश्च ॥ ४५ ॥ भ०

आचिचायेत्यादि। स इन्द्रजित् सर्पास्त्वैर्वानराणां सेनामाचिचाय छन्नवान् विभाषा चेति अकुत्वपक्षे रूपं राघवौ च रामलक्ष्मणावाचिकाय कुत्वपक्षे रूपं बभाण च भणतिस्म मम मायामिन्द्रोऽपि न जिगाय न जितवान् सन्लिटोर्जेरिति कुत्वं किं नृभिः न किञ्चित्प्रयोजनमित्यर्थः ॥ ४६ ॥ ज० म०

आचिचायेत्यादि। स इन्द्रजित् तैः शरैः रामसेनाम् आचिचाय राघवौ रामलक्ष्मणौ चाचिकाय आच्छादितवान् चिनचिञ्चित्वा चेः किर्वासनठग्रोरिति विभाषया किः एवञ्च बभाण उक्तवान् रूभण चेति चकारात् शब्दे किं बभाणेत्याह मम मायाम् इन्द्रोऽपि न जिगाय नृभिर्मनुष्यैः किं न किञ्चित्प्रयोजनमित्यर्थः जेर्गिः सन्ठग्रोरिति ग्यादेशः ॥ ४६ ॥ भ०

आचिक्यात इत्यादि। तेनेन्द्रजिता भूयोऽपि राघवावाचिक्याते छन्नौ कर्मणि लिट् तौ पाशबद्धौ मुमुहतुः मोहं गतौ उद्विग्नौ समीहितानिष्पत्तेः वसुधायाञ्च पेततुः पतितौ बन्धपरवशीकृतत्वात् ॥ ४७ ॥ ज० म०

आचिक्याते चेत्यादि। तेन इन्द्रजिता भूयः पुनरपि पन्नगैः

ततो रामेति चक्रन्दुस्त्रेसुः परिदिदेविरे ।
निशश्वसुश्च सेनान्यः प्रोचुर्धिगिति चात्मनः ॥ ४८ ॥
मन्युं शेकुर्न ते रोद्धुं नास्रं संरुरुधुः पतत् ।
विविदुर्नेन्द्रजिन्मार्गं परीयुश्च प्लवङ्गमाः ॥ ४९ ॥

सर्पास्त्रे राघवौ आचिक्याते आच्छादितौ कर्मणि चिञो रूपं च पाद-पूरणे वक्ष्यमाणक्रियापेक्षया समुच्चये वा तौ च तत उद्विग्नौ व्याकुलौ मुमुहतुः मोहं प्रापतुः मुह्यल्लिङ्ग्यौ चक्ष्ये भूमौ च पेततुः पतॢ गत्याम् ॥ ४७ ॥ भ०

तत इत्यादि । ततः पतनादनन्तरं सेनान्यः सुग्रीवादयः एर-नेका च इति यण् रामेति नामग्राहं चक्रन्दुः रुदितवन्तः त्रेसुः भीताः परिदिदेविरे परिदेवनं कृतवन्तः देवृदेवने अनुदात्तेत् निशश्वसुः कोष्णं निश्वासानुत्ससृजुः आत्मनश्च धिगिति प्रोचुः गर्हितवन्तः । धिग्योगाद्द्वितीया ॥ ४८ ॥ ज० म०

तत इत्यादि । पतनानन्तरं सेनापतयो नीलादयो रामेति चक्रन्दुः शब्दं चक्रुः क्रदि रोदने आह्वाने त्रेसुर्भयं प्रापुः त्रसी उद्वेगे परिदिदेविरे परिदेवनं चक्रुः देवृङ् देवने अभ्यासस्य ह्रस्वे एकारस्य ह्रस्व इकारः एचोयुत्वमिति वचनात् निशश्वसुः निश्वासं त्यक्तवन्तः श्वस प्राणने आत्मनो धिगिति च प्रोचुः उक्तवन्तः धिक्-समयेति द्वितीया ॥ ४८ ॥ भ०

मन्युमित्यादि । मन्युं शोकं रोद्धुं वारितुं न शेकुः पारित-वन्तः अस्रञ्च लोचनेभ्यः पतत् न संरुरुधुः न संरुद्धवन्तः इन्द्रजितो मार्गं न विविदुः न ज्ञातवन्तः क्वासौ तिष्ठति इति प्लवङ्गमाश्च परीयुः समन्तादगतवन्तः क्वासाविति गमनादिति ॥ ४९ ॥ ज० म०

मन्युमित्यादि । ते वानरसेनान्यः मन्युं शोकं रोद्धुमावरीतुं न शेकुर्न शक्ताः शकॢ शक्तौ रुधिर्धौजिञ आवृतौ पतदस्रं रोदनजलं न संरुरुधुः न वारितवन्तः इन्द्रजितो मार्गं पन्थानं न विविदुः न

दधावाङ्गिस्ततश्चक्षुः सुग्रीवस्य विभीषणः ।
विदाञ्चकार धौताक्षः स रिपुं खे ननर्द च ॥५०॥
उज्जुगूरे ततः शैलं हन्तुमिन्द्रजितं कपिः ।
विहाय रावणिस्तस्मादानंहे चान्तिकं पितुः ॥ ५१ ॥

जानन्तिस्म कुतो गत इति विदन्समतौ प्लवङ्गमाः परीयुः सर्वतोगताः क्वासावगममर्दित इत्यगतौ ॥ ४९ ॥ भ०

दधावेत्यादि । ततोऽनन्तरं विभीषणः सुग्रीवस्य मन्त्रपूताभिरद्भिश्चक्षुर्दधाव प्रक्षालितवान् सुग्रीवः धौताक्षः प्रक्षालितचक्षुः बहुव्रीहौ सक्थ्यक्ष्णोरिति समासान्तष्टच् रिपुमिन्द्रजितं खे स्थितं विदाञ्चकार ज्ञातवान् उषविदेत्यादिना आम् ननर्द च शब्दितवान् क्वेदानीं यास्यसीति ॥ ५० ॥ ज० म०

दधावेत्यादि । ततोऽनन्तरं विभीषणः सुग्रीवस्य चक्षुरद्भिर्जलैर्दधाव प्रक्षालितवान् धावुजजवे कृजि सुग्रीवः धौताक्षः प्रक्षालितचक्षुः सन् खे आकाशे स्थितं रिपुमिन्द्रजितं विदाञ्चकार ज्ञातवान् कास्प्रत्ययामिति डाम् ननर्द च क्वेदानीं यास्यसीति नर्दशब्दे ॥५०॥भ०

उज्जुगूर इत्यादि । ततोऽनन्तरं कपिः सुग्रीव इन्द्रजितं हन्तुं शैलमुज्जगूरे उत्क्षिप्तवान् गूरहिंसागत्योरिति दैवादिकोऽनुदात्तेत् तस्य गतौ वर्त्तमानस्य रूपं रावणिरिन्द्रजित् विहाय अर्थाद्युद्धं विहाय तस्मादाकाशात्पितुरन्तिकमानंहे गतः अहिगतौ तस्मान्नुड्विहल् इति नुट् ॥ ५१ ॥ ज० म०

उज्जुगूरे इत्यादि । ततोऽनन्तरं कपिः सुग्रीवः इन्द्रजितं हन्तुं शैलम् उज्जुगूरे उत्क्षिप्तवान् गूरीयङ्बधेगत्याम् उत्पूर्वम् उत्क्षेपणेऽपि वर्त्तते गिरेरङ्कउद्यमइत्यसौ त सुखोपधः रावणपुत्रस्तस्माद्भिभाय भयं प्राप जिभीञ्भिभीत्या भीतः सन् पितुरन्तिकं समीपम् आनंहे गतः अहिकृतौ स्यान्तादादीति खेरान् विभावेत्यत्र विहायेति पाठे युद्धं त्यक्त्वा तस्मादाकाशात् पितुरन्तिकमानंहे इत्यर्थः ॥ ५१ ॥ भ०

आचचक्षे च वृत्तान्तं प्रजहर्ष च रावणः ।
गाढं चोपजुगूहैनं शिरस्युपाशिशिङ्घ च ॥ ५२ ॥
ध्वजानुद्दुधुवुस्तुङ्गान् मांसं चेमुर्जगुः पपुः ।
कामयाञ्चक्रिरे कान्तास्ततस्तुष्टा निशाचराः ॥ ५३ ॥

आचचक्ष इत्यादि । नागपाशेन राघवौ बद्धाविति वृत्तान्तमाचचक्षे आख्यातवान् रावणः प्रजहर्ष तुष्टवान् एनञ्च रावणिञ्च उपजुगूह दृढमाश्लिष्टवान् अत्र क्रियाफलस्याविवक्षितत्वात् तङ् न भवति उदुपधायागोह इत्यूत्वं शिरसि उपाशिशिङ्घ आघ्रातवान् शिघि आघ्राणे ॥ ५२ ॥ ज० म०

आचचक्ष इत्यादि । स इन्द्रजिद्रामबन्धनरूपं वृत्तान्तम् आचचक्षे पितरमित्यर्थात् चक्षिङ् व्यक्तायां वाचि वेति पक्षे क्शाङ्ख्याञादेशाभावः रावणश्च प्रजहर्ष प्रकृष्टहर्षं प्राप हृष्यति इति तुष्टौ एनं पुत्रं गाढम् उपजुगूह आलिङ्गितवांश्च गुहउपधायां उपपूर्वं आलिङ्गनमाह गुहोऽहोरिति दीर्घत्वं शिरसि उपाशिशिङ्घ च आघ्रातवांश्च स्नेहविस्फारोऽयं शिघि आघ्राणे ॥ ५२ ॥ भ०

ध्वजानित्यादि । ततो निशाचरा अपि श्रुत्वा तुष्टाः सन्तः ध्वजांस्तुङ्गानुद्दुधुवुः उत्क्षिप्तवन्तः मांसञ्चेमुः खादितवन्तः चमुच्छमु अदने जगुर्गीतवन्तः पपुः मद्यं पीतवन्तः कान्ताः कामयाञ्चक्रिरे कमेर्णिङन्तादाम् ॥ ५३ ॥ ज० म०

ध्वजानित्यादि । निशाचरा अपि रामबन्धनात् तुष्टाः सन्तः तुङ्गान् ध्वजान् उद्दुधुवुः उत्क्षिप्तवन्तः धुञ कम्पने धूञिक् कम्पने धूनगिधूञचेत्यस्य वा रूपं मांसं चेमुः भक्षितवन्तः चमूचमच्छमजमजिमभक्षुभक्षे जगुर्गानं कृतवन्तः गै गाने पपुर्मद्यादिकं पीतवन्तः पा पाने कान्ताः कामयाञ्चक्रिरे कामितवन्तः कमुकाङ् स्पृहि वाऽरे इति णिचिको ञिः त्यान्तत्वादाम् ॥ ५३ ॥ भ०

दर्शयाञ्चक्रिरे रामं सीतां राज्ञश्च शासनात्।
तस्या निमीलतुर्नेत्रे लुलुठे पुष्पकोदरे॥ ५४॥
प्राणा दध्वंसिरे गात्रं तस्तम्भे च प्रिये हते।
उच्छ्वास चिराद्दीना रुरोदासौ ररास च॥ ५५॥
लोहबन्धैर्बबन्धे नु वज्रेण किं विनिर्ममे।

दर्शयामित्यादि। तथाभूतं रामं दृष्ट्वा सीता मम विधेया स्यादित्यभिप्रायवतो राज्ञो रावणस्य आज्ञया राक्षसाः अशोकवनिकातः पुष्पकमारुह्य सीतां रामं दर्शयाञ्चक्रिरे दर्शितवन्तः अभिवादिदृशोरात्मनेपद उपसङ्ख्यानमिति विकल्पेन द्विकर्मकता तस्याः सीताया नेत्रे निमीलतुः निमीलिते मील निमेषणे पुष्पकोदरे पुष्पकमध्ये मूर्च्छया लुलुठे लुठिता॥ ५४॥ ज० म०

दर्शयामित्यादि। तादृशं पतिं दृष्ट्वा सीता ममानुकूला स्यादित्यभिप्रायं कुर्वतो राज्ञः रावणस्य शासनादाज्ञया राक्षसाः पुष्पके आरोप्य सीतां रामं दर्शितवन्तः घोऽञ्जोर्णैरित्यादिना प्रयोज्यस्य कर्मत्वं तस्याः सीतायाः नेत्रे निमीलतुः मुद्रणं प्रापतुः मील निमेषे सीता पुष्पकरथमध्ये लुलुठे पतिता लुठङ् प्रतीघाते॥ ५४॥ भ०

प्राणा इत्यादि। प्रिये रामे हते प्राणा वायवः दध्वंसिरे ध्वस्ताः गात्रञ्च तस्तम्भे काष्ठवत् निश्चलमभूत् ष्टभिस्तभि प्रतिबन्धे चिरादुच्छ्वास उच्छ्वसितवती असौ लब्धसंज्ञा दीना दुःखिता रुरोद रुदितवती ररास च वक्ष्यमाणञ्च विलापं कृतवती॥ ५५॥ ज० म०

प्राणा इत्यादि। प्रिये रामे हते सति तस्याः प्राणाः दध्वंसिरे ध्वस्ताः ध्वन्सु स्रङ् गतौ भ्रंशे गात्रञ्च तस्तम्भे काष्ठवत् निश्चलमभूत् स्तभिङ् स्तम्भे चिरादुच्छ्वास श्वासं त्यक्तवती श्वसघ्लृ प्राणने ततो दीना दुःखिता रुरोद क्रन्दितवती रुद रोदे ररास च वक्ष्यमाणं विलापं चकार रस शब्दे॥ ५५॥ भ०

लोहेत्यादि। लोहस्येमे लौहाः तैर्बन्धैर्मनो हृदयं मम बबन्धे

मनो मे न विना रामात् यत् स्फोट सहस्रधा ॥५६॥

उत्तेरिथ समुद्रं त्वं मदर्थेऽरीन् निजघ्निथ।

ममर्थं चातिघोरां मां धिग्जीवनलघूकृताम् ॥५७॥

बद्धं कर्मणि लिट् नुशब्दो वितर्के उत वज्रेण विनिर्ममे निर्मितं माङ् मान इत्यस्मात् कर्मणि लिट् आतो लोपस्य द्विर्वचने चेति स्थानिवद्भावात् द्विर्वचने ह्रस्वत्वे च रूपं यद्यस्मात् विना रामात् रामेण विना पृथग्विनेति पञ्चमी न पुस्फोट न स्फुटितं सहस्रधा सङ्ख्याया विधार्थे धा ॥ ५६ ॥ ज० म०

लौहबन्धैरित्यादि। लौहविकारैर्बन्धैर्मम मनः किं बबन्धे बद्धम् अर्थात् विधात्रा बन्धौगबन्धकृबधक् बन्धे नु वितर्के किंवा वज्रेण तन्निर्मितं माङ माने कर्मणि रूपद्वयं यस्माद्रामेण विना सहस्रप्रकारेण न स्फुटितं स्फुटिर्विसरणे विशब्दो रहितार्थः अन्यारभ्येति पञ्चमी संख्याया धाच् प्रकारे इति धाच् ॥ ५६ ॥ भ०

उत्तेरिथेत्यादि। मदर्थे मन्निमित्तं समुद्रमुत्तेरिथ उत्तीर्णोऽसि तृफलेत्यादिना एत्वाभ्यासलोपौ तथा अरीन्निजघ्निथ निहतवानसि थलि रूपं यतो मदर्थे ममार्थं मरणावस्थाकृतोऽसि अतोऽतिघोराम् अतिरौद्रां मां धिक् जीवनलघूकृतां जीवत्याजितमङ्गत्वात् ॥५७॥ज०म०

उत्तेरिथेत्यादि। हे प्रिय! मदर्थे मत्प्रयोजननिमित्तं त्वं समुद्रं उत्तीर्णवान् तृ तरेऽभिभवे नु त्वां तृफलेति अत एत्वं खिलोपश्च वृतोवेम इत्यत्र अठोठोपसेरित्युक्तेरिमो दीर्घाभावः अरीन् निजघ्निथ हतवानसि हनलो गतौ बधे स्वजहशच पाठात्त्वत इति पक्षे इम् हनगमित्यादौ अणावित्यस्य क्वचिद्व्यभिचारादुङो लोपः जिहिंसिषेति पाठे हिंसधकि हिंसे इत्यस्य रूपं ममर्थं च स्तोऽस्यबि स्वङ्स्तो स्वङ्षीष्ठमिमित नियमादस्यत पं नेमृतस्यपोऽवृस्कुरित्यनेन नेमसुमित्यादिना प्राप्त इम् प्रतिषेध्यते मदर्थे इति सर्वत्र योज्यम् अतोऽतिघोरां स्वामिघातकत्वेन मां धिक् जीवनेन लघूकृतां स्वामिनाशेऽपि जीवनात्क्षुद्रत्वम् ॥ ५७ ॥ भ०

न जिजीवासुखी तातः प्राणता रहितस्त्वया ।
मृतेऽपि त्वयि जीवन्त्या किं मयानकभार्य्यया ॥ ५८ ॥
सा जुगुप्सांप्रचक्रेऽसून् जगर्हे लक्षणानि च ।
देहभाञ्जि ततः केशान् लुलुञ्च लुलुठे मुहुः ॥ ५९ ॥

न जिजीवेत्यादि । त्वया प्राणता जीवता अन प्राणने रहितो वियुक्तस्तातो दशरथो न जिजीव न जीवितः त्वयि मृतेऽपि जीवन्त्या मया न किञ्चित्प्रयोजनम् अनकभार्य्यता पापाणक इति सः ॥ ५८ ॥ ज० म०

न जिजीवेत्यादि । हे प्रिय ! प्राणता जीवतापि त्वया रहितः सन् वियुक्तः सन् तव तातो दुःखितो न जीवितवान् जीवप्राणने त्वयि मृतेऽपि जीवन्त्या अनकभार्य्यया कुत्सितभार्य्यया मया किं प्रयोजनमित्येवं ररास चेति पूर्वेण सम्बन्धः कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समा इत्यमरः ॥ ५८ ॥ भ०

सा जुगुप्साभित्यादि । सा सीता पूर्वोक्तकारणादेव असून् प्राणान् जुगुप्सांप्रचक्रे निन्दितान् कृतवती जुगुप्सत्रन्त इति सन् तदन्तस्य सनि रूपम् आमि प्रत्यये तु प्रचक्रइत्यनुप्रयोगो न घटते देहभाञ्जि शरीरस्थानि लक्षणानि अवैधव्यसूचकानि च जगर्हे गर्हतेस्म गर्हगल्भ कुत्सने मुहुः केशान् लुलुञ्च अपनीतवती तथा लुलुठे पतिता ॥ ५९ ॥ ज० म०

सेत्यादि । सा सीता प्राणान् निनिन्द प्रियेण विनावस्थानात् गुपुङ् गोपनकुत्सयोः कित्तिजगुप इति सन् इमोऽभायस्य आमादेतेऽल्लेत्यादिना व्यर्थनिन्दार्थनियमः त्यान्तत्वादाम् सोपसर्गस्य कृञोऽनुप्रयोगः किंवा जुगुप्सामात्मनो निन्दां प्रचक्रे संस्याद इति वा: असून् लक्षणानि च जगर्हे इत्यनेनान्वयः देहस्थितानि अवैधव्यचिह्नानि निन्दितवतो गर्हङ् कुत्सने मुहुर्वारंवारं केशानुत्पाटितवती लुञ्चापनयने गतो तया लुलुठे पतिता ॥ ५९ ॥ भ०

जग्लौ दध्यौ वितस्तान चणं प्राण न विव्यथे ।
दैवं निनिन्द चक्रन्द देहे चातीव मन्युना ॥ ६० ॥
आश्वासयाञ्चकाराथ त्रिजटा तां निनाय च ।
ततः प्रजागराञ्चक्रुर्वानराः सविभीषणाः ॥ ६१ ॥

जग्लावित्यादि । शोकभारात् जग्लौ ग्लानिङ्गता दध्यौ ध्यातवती पुनः किं मया द्रष्टव्योऽसीति तस्तान पीड़या शब्दं कृतवती स्तन शब्दे न प्राण न मूर्च्छिता न जिजीव निःसंज्ञत्वात् अन प्राणने अन आदेरिति दीर्घत्वं विव्यथे लब्धसंज्ञा पीड़िता व्यथो लिटीत्यभ्यासस्य सम्प्रसारणं दैवं निनिन्द निन्दितवती दैवविरूपमाचरितं त्वयेति चक्रन्द रुदिता पुनर्मन्युना शोकेन अतीव देहे दग्धा कर्मणि लिट् ॥६०॥ ज० म०

जग्लावित्यादि । सा जग्लौ ग्लानिं प्राप ग्लै क्षमे दध्यौ चिन्तितवती ध्यै चिन्तने नितस्तान शब्दं चक्रे स्तनमि शब्दे चणं न प्राण मूर्च्छया निष्पन्दत्वान्न जीवितवती अनघ्लु प्राणने प्राग्वन्तो ण इत्यादिना पाचिकं णत्वं विव्यथे लब्धसंज्ञा सती दुःखं प्राप व्यथषमङ् दुःखे चाले व्यथयद्धेति खेर्जिः दैवं निनिन्द निन्दितवती निदिकुत्सने चक्रन्द रुरोद मन्युना शोकेन अत्यर्थं देहे दग्धा दहौ दाहे कर्मणि रूपम् ॥ ६० ॥ भ०

आश्वासयामित्यादि । अथानन्तरं त्रिजटा रावणभगिनी तां सीतामाश्वासयाञ्चकार आश्वासितवती विष्णुरसौ दाशरथिः कथमस्य विरूपं भविष्यतीति निनाय च तस्मात् पुष्पकान्नीतवती तत उत्तरकालं वानरा विभीषणेन सह प्रजागराञ्चक्रुः आलोचनां कृतवन्तः अतानुप्रयोगेनात्मनेपदं पूर्वस्यानात्मनेपदित्वात् ॥ ६१ ॥ ज० म०

आश्वासयामित्यादि । अथानन्तरं रावणस्य भगिनी त्रिजटा राक्षसी तां सीताम् आश्वासयाञ्चकार तव प्रियो न मृत इति अशोकवनिकां नीतवती च ततोऽनन्तरं विभीषणेन सह वानरा जाग्रतिस्म राघवयो रक्षार्थमालोकयाञ्चक्रुरित्यन्ये जागृ जागरे दरिद्राजागृकासजागृप इति पाचिक आम् ॥ ६१ ॥ भ०

चिचेत रामस्तत्कृच्छ्रमोषाञ्चक्रे शुचाथ सः ।
मन्युश्चास्य समाप्यिप्ये विरुराव च लक्ष्मणम् ॥६२॥
समीहे मर्त्तुमानर्च्चे तेन वाचाखिलं बलम् ।
आपप्रच्छे च सुग्रीवं स्वं देशं विससर्ज च ॥ ६३ ॥

चिचेतेत्यादि । तत्कृच्छ्रं शरबन्धदुःखं रामश्चिचेत ज्ञातवान् चिती संज्ञाने इत्युदात्तेत् शुचा शोकेन ओषाञ्चक्रे कर्मणि लिट् उषविदेत्याम् स च मन्युः शोकः अस्य रामस्य समाप्यिप्ये वृद्धिं गतः ओप्यायी वृद्धौ तस्य लिटि प्यायः पीति पीभावः एरनेकाच इति यण् लक्ष्मणञ्च विरुराव शब्दितवान् वत्स ! जीवसोति ॥ ६२ ॥ ज० म०

चिचेतेत्यादि । रामस्तत्कृच्छ्रं नागपाशबन्धनरूपं चिचेत ज्ञातवान् चिती संज्ञाने अथानन्तरं शुचा शोकेन स रामः ओषाञ्चक्रे दग्धः उषु दाहे दरिद्राकाशकासेत्याम् अस्य रामस्य मन्युः शोकः समाप्यिप्ये संवृद्धः ओप्यायीङ् वृद्धौ प्यायः पीर्यङ्लोः लक्ष्मणञ्च विरुराव आहूतवान् रुङ ध्वनौ ॥ ६२ ॥ भ०

समीह इत्यादि । मर्त्तुं प्राणांस्त्यक्तुं समीहे इच्छतिस्म तेन रामेणाखिलं समस्तं बलं वाचा आनर्च्चे पूजितं भवद्भिः साध्वनुष्ठितम् अस्मद्भाग्यमतापराध्यतीति कर्मणि लिट् तस्मान्नुट् द्विहल इति नुट् सुग्रीवञ्चापप्रच्छे अपृच्छतिस्म आमन्त्रितवानित्यर्थः एहि तावद्दर्शनं मे देहि परिष्वजस्वेति आङिनुप्रच्छ्योरुपसंख्यानमिति तङ् । स्वञ्च देशं किष्किन्ध्यां विससर्ज प्रहितवान् ॥ ६३ ॥ ज० म०

समीहे इत्यादि । तेन रामेण मर्त्तुं समीहे समीहितम् ईहङ् चेष्टे भावे रूपं कर्त्तरीत्यन्ये गुर्विजादेरामोऽनित्यत्वं ये वदन्ति तन्मते रूपमिदं समीहे ईहिषे समीहिरे इत्यादयश्चिन्त्या इति केचित् ऋषिवचनादिति केचित् । न्यासकृदादयोऽपि गुर्विजादेरामोऽनित्यत्वमाहुः समीषे इति पाठे इषुवधाञ्छे तेन रामेण वाचा अखिलं बलम् आनर्च्चे 'पूजितं सत्कृते भवद्भिः किं न कृतं मद्भाग्यात्तु सर्वं निष्फलमभूदिति अर्च कपूजेञचर्चेति चकारात् पूजे स्वान्वादादीति खेरान् कर्मणि रूपं

आदिदेश स किष्किन्ध्यां राघवौ नेतुमङ्गदम् ।
प्रतिजज्ञे स्वयञ्चैव सुग्रीवो रक्षसां वधम् ॥ ६४ ॥
नागास्त्रमिदमेतस्य विपक्षस्तार्क्ष्यसंस्मृतिः ।
विभीषणादिति श्रुत्वा तं निदध्यौ रघूत्तमः ॥ ६५ ॥
ततो विजघटे शैलकूलं पुप्लुवेऽम्बुधिः ।
वृक्षेभ्यश्चुच्युते पुष्पैर्विरेजुर्भासुरा दिशः ॥ ६६ ॥

रामः सुग्रीवम् आपप्रच्छे आमन्त्रितवान् एहि मित्र ! मां परिष्वजस्वेति प्रच्छौश धीमे विपराजोति सं यां नवेप्रच्छामिति जिनिषेधः । स्वदेशं किष्किन्ध्यां विससर्ज सुग्रीवं प्रस्थापयितुमारेभे इत्यर्थः सृजौशचविसर्गे ॥ ६२ ॥ भ०

आदिदेशेत्यादि । सुग्रीवो राघवौ किष्किन्ध्यां नेतुमङ्गदमादिदेश स्वयं च रक्षसां विनाशं प्रतिजज्ञे अहमेव व्यापादयामीति सम्प्रतिज्ञामिति तङ् सकर्मकार्थं वचनम् ॥ ६४ ॥ ज० म०

आदिदेशेत्यादि । स सुग्रीवो राघवौ किष्किन्ध्यां नेतुम् अङ्गदम् आदिदेश उक्तवान् दिशङ् शोचे चकाराह्वाने वर्त्तते आङ्पूर्वः कथनार्थः मनोरमाकृत्त, दिश अतिसर्जने इति पठित्वा व्याचष्टे अतिसर्जनं दानं विज्ञानं कथनं वेति स्वयञ्च रक्षसां बधं प्रतिज्ञातवान् ज्ञा अवबोधने सम्प्रतेरस्मृताविति सं ॥ ६४ ॥ भ०

नागास्त्रमित्यादि । नागास्त्रमिदं न शराः एतस्य च विपक्षः शत्रुस्तार्क्ष्यसंस्मृतिः गरुडसंस्मरणं यत्संस्मरणादेवास्य शरा न्यरिति एवं विभीषणात् श्रुत्वा राघवस्तार्क्ष्यं दध्यौ ज्ञातवान् ॥ ६५ ॥ ज० म०

नागास्त्रमित्यादि । इदं नागास्त्रम् एतस्य नागास्त्रस्य शत्रुर्गरुडस्मरणम् इति विभीषणात् श्रुत्वा राघवस्तं गरुडं प्रदध्यौ चिन्तितवान् ॥ ६५ ॥ भ०

तत इत्यादि । ततो ध्यानानन्तरं तदागमनवायुवेगाच्छैलैर्विजघटे विघटितं भावे लिट् । अम्बुधिरुद्वेलं वेलामतिक्रम्य पुप्लुवे गतः

जगाहिरेऽम्बुधिं नागा ववौ वायुर्मनोरमः ।
तेजांसि शमयाञ्चक्रुः शरबन्धा विशिश्लिषुः ॥ ६७ ॥
भेजिरेऽक्षतवद्योधा लेभे संज्ञाञ्च लक्ष्मणः ।
विभीषणोऽपि बभ्राजे गरुत्मान् प्राप चान्तिकम् ॥ ६८ ॥

वृक्षेभ्यः सकाशात् पुष्पैश्चुच्युते च्युतं दिशश्च भासुराः सुपर्णपक्षप्रभाभिः प्रभासनशीलाः सत्यो रराजुः शोभन्ते स्म फणाञ्च सम्नानामित्येत्वपक्षे रूपं तत्र वेत्यनुवर्त्तते ॥ ६६ ॥ ज० म०

तत इत्यादि । ततो ध्यानानन्तरं तत्पक्षवायुवेगात् शैलैर्विजघटे विघटितं घटिषङ्गस चेष्टे विपूर्वो विश्लेषमाह भावे रूपम् अम्बुधिः समुद्रो वेलामतिक्रम्य पुप्लुवे गतः प्लुङ् च सर्पणे वृक्षेभ्यः पुष्पैश्चुच्युते स्खलितं च्युतच्युतिरक्षरे भावे रूपं स्वर्णपक्षप्रभाभिर्भासनशीला दिशो राजन्ते स्म राजृजबदीप्तौ तृफलेति पक्षे एत्वाभावः ॥ ६६ ॥ भ०

जगाहिरे इत्यादि । नागा भयादम्बुधिं जगाहिरे प्रविष्टाः वायुस्तत्प्रभवो ववौ वाति स्म तेजांसि रत्नादीनां शमयाञ्चक्रुः अत्यर्थं प्रशान्तानि शमेर्यङ् लुगन्तस्य रूपम् एवञ्च कृत्वा अनुप्रयोगे परस्मैपदं शरबन्धा विशिश्लिषुः विविष्टाः दूरत एव तत्प्रभावात् ॥ ६७ ॥ ज० म०

जगाहिरे इत्यादि । नागा भयादम्बुधिं जगाहिरे प्रविष्टाः गाहू विलोडे मनोरमो वायुस्तत्प्रभवः शुभसूचकः स्वाभाविको वा वाति स्म वासगमनसिंह्यो रत्नादीनां तेजांसि ततजला स्त्रशं शान्तानि शमुभ्यदूर्गमे भूतस्तदन्ति यङ् यङो लुक् द्वित्वं अमजमेति सेनुण् त्वान्तत्वादाम् । शमयाञ्चक्रुरिति पाठे गरुड़स्य तेजांसि नागाञ्चिवारयन्तित्यर्थः शराणां बन्धा विश्लिष्टाः तत्प्रभावात् ॥ ६७ ॥ भ०

भेजिर इत्यादि । अक्षतवत् अक्षता इव योधा भेजिरे दीप्यन्ते स्म फणाञ्च सम्नानामित्येत्वपक्षे रूपं संज्ञाञ्चेतनां लक्ष्मणो लेभे प्राप्तवान् विभीषणोऽपि बभ्राजे सम्पन्ना मे मनोरथा इति अनेत्वपक्षे रूपम् अन्तिकञ्च रामलक्ष्मणयोर्गरुत्मान् प्राप गतः पक्षिपक्षोऽनु-

संपस्पर्शाथ काकुत्स्थौ जज्ञाते तौ गतव्यथौ ।
तयोरात्मानमाचख्यौ ययौ चाथ यथागतम् ॥ ६९ ॥
स्वेनुस्तित्विषुरुच्चेमुरुच्चक्रुः पर्वतांस्तरून् ।
वानरा दद्रुवुश्चाथ संग्रामं चाशशंसिरे ॥ ७० ॥

जीवितयाश्च सन्तीति मतुप् यवादेराकृतिगणत्वात् मस्य इति वत्वं न भवति ॥ ६८ ॥ ज० म०

भ्रेजिरे इत्यादि । योधा वयचता इव भ्रेजिरे शोभन्ते स्म भ्राजृजस्टुच चकाराद्भासि तृफलेत्यादिना पाक्षिकमेत्वं खिन्नोपस्य संज्ञां चेतनां लब्धवान् लभहोङ्घप्राप्तौ विभीषणोऽपि बभ्राजे समी-क्षितं मे सम्पन्नमिति एत्वाभावपक्षे रूपं गरुत्मान् गरुड़ो राघवस्या-न्तिकं समीपं प्राप । गरुतः पक्षिणोऽनुजीविनः प्रशस्ता वा पक्षाः सन्त्यस्येति गरुत्मान् क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् मोङमकुपाद्वतुरित्यस्य विषयेऽपि मतुरस्यर्थं इत्यस्याभिनिवेशः वसोर्वः क्षेमप्युमतुपोरिति ज्ञापकात् मोङमकुपाद्वतुरित्यस्य क्वचिद्व्य-भिचार इति देवीदासचक्रवर्त्तिनोक्तम् । यवादिभ्यो मतुरिति परः । नदन्तसाविति पदत्वनिषेधात् न नत्वम् ॥ ६८ ॥ भ०

संपस्पर्शेत्यादि । अनन्तरं गरुत्मान् काकुत्स्थौ राघवौ संपस्पर्श स्पृष्टवान् तौ च स्पृष्टौ गतव्यथौ जज्ञाते जातौ तयोः काकुत्स्थयोरा-त्मानमाचख्यौ गरुत्मानहमिति कथितवान् वा ल्बिटीति चक्षिङः ख्याङ् ययौ चापि यथागतं तथा गतवान् ॥ ६९ ॥ ज० म०

संपस्पर्शेत्यादि । अथानन्तरं स गरुत्मान् काकुत्स्थौ संपस्पर्श स्पृशयौ स्पृशितौ च स्पृष्टौ गतव्यथौ जज्ञाते जातौ जनीप्रादुर्भावे जनने हनगमित्युङलोपः खुसुभिः स्वसादिति नस्य जः तयोः काकुत्स्थयोः स्थाने आत्मानम् आचख्यौ कथितवान् अहं गरुड़ इति ख्यातः गतौ चक्षिङः ख्याञादेशो वा यथागतं तथा ययौ गतः ॥ ६९ ॥ भ०

स्वेनुरित्यादि । अथानन्तरं वानराः हृष्टाः स्वेनुः शब्दितवन्तः तित्विषुः शोभिताः त्विषदीप्तौ उच्चेमुः उद्योगं चक्रुः पर्वतान्

डुढौकिरे पुनर्लङ्कांबुबुधे तान् दशाननः ।
जीवतश्च विवेदारीन् बभ्रंशेऽसौ धृतेस्ततः ॥ ७१ ॥
सस्रंसे शरबन्धेन दिव्येनेति वुवुन्द सः ।
बभाजाथ परं मोहमूहाञ्चक्रे जयं न च ॥ ७२ ॥

चख्नुः उत्प्राचिन्नवन्तः दद्रुः इतस्ततो भ्रान्ताः द्रुमहृमयोर्गतौ संग्रामञ्च आशशंसिरे अभीष्टवन्तः आङः शसि इच्छायाम् आदादिको- ऽनुदात्तेत् ॥ ७० ॥ ज० म०

खेनुरित्यादि । अथानन्तरं वानराः खेनुर्जयशब्दं चक्रुः खनश- चेति चकारात् शब्दे तृफलेति पच्चे एत्वं तित्विषुः दीप्यन्ते स्म त्विषोऽभासे उद्येमुः उद्यमं चक्रुः यमोऽविरतौ पर्वतान् तहृंस उच्चख्नुः खनुञ्‌विदारणे हनगमित्युङ्‌लोपः दद्रुः शत्रून् प्रतिजग्मुः द्रुसुगतौ संग्रामञ्च आशशंसिरे इच्छन्तिस्म शनुस हिंसास्तुत्योः आङ्- पूर्वं इच्छामाह यदुक्तम् आशंसतिः स्यादिच्छायां शंसतीति स्तुतौ पद- मिति ॥ ७० ॥ भ०

डुढौकिर इत्यादि । पुनर्भूयो लङ्कां डुढौकिरे जग्मुः तान् वान- रान् ढौकितान् दशाननो बुबुधे बुद्धवान् जीवितश्चारीन् रामादीन् विवेद ज्ञातवान् अन्यथा कथं वानरा ढौकिता इति ततश्च धृतेः सकाशाद्बभ्रंशे भ्रष्टः ॥ ७१ ॥ ज० म०

डुढौकिर इत्यादि । वानराः पुनर्लङ्कां डुढौकिरे जग्मुः ढौकृगतौ- कटिकङ्‌ गत्यां खेरौकारस्य ह्रस्व उकारः दशाननस्तान् बुबुधे ज्ञातवान् बुध्यौङ्‌वेदने अरींश्च रामादीन् जीवतो विवेद जानातिस्म विदज्ञतौ ङाम्वाशामित्यस्याभावपक्षे रूपं ततः धृतेः सकाशात् असौ भ्रष्टः स्त्रंभ्रंश्यचेति चकारादधःपाते ॥ ७१ ॥ भ०

सस्रंस इत्यादि । दिव्येन शरबन्धेन सस्रंसे स्रस्तं भावे लिट् इत्येनं दशाननो वुवन्द स्तुतवान् वुदि निशामने अथानन्तरं महामोहं मूर्छाकरं बभाज सेवतेस्म न च जयमूहाञ्चक्रे वितर्कितवान् ॥ ७२ ॥ ज० म०

धूम्राचोऽथ प्रतिष्ठासाञ्चक्रे रावणसम्मतः ।
सिंहास्यैर्युयुजे तस्य वृकास्यैश्च रथः खगैः ॥ ७३ ॥
त्वक्त्रैः संविव्ययुर्देहान् वाहनान्यधिशिश्यिरे ।
आनर्जुर्भुजोऽस्त्राणि वव्रजुश्चाहवक्षितिम् ॥ ७४ ॥

सस्रंसे इत्यादि । दिव्येन शरवर्षेण सस्रंसे स्रस्तमिति स दशाननो वुबुन्द ज्ञातवान् लस्रन्तुङ्भ्रंशे वुन्दिर्निशामने अथानन्तरं परं मोहं मूर्च्छां बभाज भज औ भागसेवयोः अकोयञ्च जयं न जहाञ्चक्रे जहङ् वितर्के विजादीत्याम् ॥ ७२ ॥ भ०

धूम्राच इत्यादि । अथ धूम्राचो रावणसम्मतो रावणेनानुज्ञातः सन् भूते निष्ठात दृष्ट्वा प्रतिष्ठासाञ्चक्रे गन्तुमिच्छां कृतवान् अपूर्वाचिष्ठतेः समवप्रविभ्यः स्थ इति तङ् उपसर्गादित्यादिना षत्वं तस्य च गन्तुमिच्छतो रथः खगैः आकाशगामिभिर्यानैः सिंहमुखैर्वृकमुखैश्च युयुजे युक्तः कर्मणि लिट् ॥ ७३ ॥ ज० म०

धूम्राच इत्यादि । अथानन्तरं धूम्राचो राचसो रावणेन सम्मतोऽनुज्ञातः सन् प्रस्थातुमिच्छां चक्रे प्रतिज्ञानिर्णयेत्यादिना प्रपूर्वस्याघातोर्मं क्विबादिति षत्वं सनः षत्वाभावात् जिघ्नोः खेः सः ष इति न नियमः त्यान्तत्वादाम् तस्य रथः सिंहमुखैर्वृकमुखैश्च खगैराकाशगामिभिर्युयुजे युक्तः युजिर्यौजे च युतौ कर्मणि रूपम् कोक ईहामृगो वृक इत्यमरः ॥ ७३ ॥ भ०

त्वक्त्रैरित्यादि । धूम्राचसम्बन्धिनो न्भुजो राचसाः त्वक्त्रैः सन्नाहैः त्वचं त्रायन्त इति देहान् संविव्ययुः छादितवन्तः व्येञ् संवरण इत्यस्य न व्योलिटीत्यात्वप्रतिषेधः लिट्यभ्यासस्योभयेषामिति सम्प्रसारणं वाहनान्यधिशिश्यिरे आरूढ़वन्तः एरनेकाचोयण् अधिशीङिति कर्मसंज्ञा अस्त्राण्यानर्जुः गृहीतवन्तः अर्जप्रतियत्ने अत आदेरिति दीर्घः तस्मान्नुट्द्विहलः । आनर्चुरिति पाठान्तरं पूजितवन्तः आहवक्षितिञ्च रणभूमिं वव्रजुर्गताः वज्रु गतौ ॥ ७४ ॥ ज० म०

अध्युवास रथं तस्थे पुराच्चुचाव चाशुभम् ।
संश्रावयाञ्चकाराख्यां धूम्राक्षस्तत्वरे तथा ॥ ७५ ॥
निलिल्ये मूर्ध्नि गृध्रोऽस्य क्रूरा ध्वाङ्क्षा ववाशिरे ।

त्वक्षैरित्यादि । न्यक्षुजो राक्षसा धूम्राक्षसम्बन्धिनः त्वक्षैः सन्नाहैर्देहान् संविव्ययुराच्छादितवन्तः व्येञौष्टतौ व्याथग्रहेति खेर्जिः जिवान्त्यः कितीति पक्षे जेरभावः नाव्येञ्छाभिति आनिषेधः तेन एचोऽशित्या इत्यस्य न प्रवृत्तिः यङ्गायवायाव इत्ययादेशः त्वचं तायत इति कृनजनादिति डः एचोऽशित्या इत्यत्र अशितीति विषयसप्तमी तेनादन्तत्वात् वाहनानि अश्वादीनि अधिशिश्रियिरे आरूढवन्तः शीङ्-स्थित्वन्ने अधिपूर्व आरोहणेऽपि सुध्योरित्यादिना यत्वं कर्मक्रिये-त्यादिना क्रियाव्याप्यत्वेन ढत्वे द्वितीया आरोहणार्थस्य सकर्मकत्वात् शीङोऽभिप्रेतेऽद्रिमित्यादौ आरोहणार्थे तात्पर्याभावादाधारस्य कर्मत्वम् अस्त्राणि आनर्जुः जगृहुः अर्ज अर्जने स्वान्तादादीति खेरान् । आन-र्चुरिति पाठे अर्चधातो रूपम् । आहवक्षितिं रणभूमिं ववञ्चुर्गतवन्तः वञ्चु गत्याम् ॥ ७४ ॥ भ०

अध्युवासेत्यादि । धूम्राक्षो रथमध्युवास आरूढः उपान्वध्याङ्-वस इति कर्मसंज्ञा पुरात् लङ्कातः तस्थे निष्क्रान्तः अयपयतयेत्यादिषु तयिरनुदात्तेत् चुचाव च शब्दं कृतवान् अशुभं भयानकं चुशब्दे आख्याम् आत्मीयं नाम संश्रावयाञ्चकार श्रावितवान् तथा तत्वरे त्वरते स्म युद्धाय ॥ ७५ ॥ ज० म०

अध्युवासेत्यादि । धूम्राक्षो रथमध्युवास आरूढः वसे ऐनिवासे व्यथग्रहेति खेर्जिः कर्मक्रियेत्यादिना आधारस्य कर्मत्वं पुराल्लङ्कायास्तस्थे गतः तयङ् गतिरक्षयोः तृफलेत्यादिना एत्वं खिलोपश्च अशुभमशोभनं चुचाव चुतं चु शब्दच्युते आख्यां स्वनाम श्रावितवान् वानरानित्यर्थात् श्रुलगतौ श्रुतौ ञिः त्वान्तत्वादाम् तथा युद्धाय त्वरां चक्रे ञित्वरांस-म्भ्रमे ॥ ७५ ॥ भ०

निलिल्य इत्यादि । अस्य धूम्राक्षस्य गच्छतो मूर्ध्नि गृध्रो निलिल्ये

शिशीके शोणितं व्योम चचाल क्ष्मातलं तथा ॥ ७६ ॥
ततः प्रजघटे युद्धं शस्त्राण्यासुः परस्परम् ।
वव्रश्चुराजुघूर्णुश्च स्येमुश्चुकूर्दिरे तथा ॥ ७७ ॥
रुरुजुर्बभञ्जिरे फेणुर्बहुधा हरिराक्षसाः ।
वीरा न विभयाञ्चक्रुर्भीषयाञ्चक्रिरे परान् ॥ ७८ ॥

निलीनः एरनेकाचो यण् ध्वाङ्क्षाः क्रूराः अशुभशंसिनः ववाशिरे वाशन्ते स्म व्योम कर्तृ शोणितं शिशीके चरितवत् शीकृ सेचने इत्यनुदात्तेत् तथा क्ष्मातलं पृथ्वीतलं चचाल चलितम् ॥ ७६ ॥ ज० म०

निलिल्ये इत्यादि । अस्य धूम्राक्षस्य गच्छतो मूर्ध्नि श्येनो निलीनः लीङ्य श्लेषणे इति यत्वं क्रूरा अशुभशंसिनो ध्वाङ्क्षाः काका ववाशिरे वाशृङ्शब्दे अपिशब्दात् शब्दे व्योम आकाशं कर्तृ शोणितं शिशीके ववर्ष शीकृङ् सेके क्ष्मातलं तथा चचाल चलतिस्म चलगतौ ॥ ७६ ॥ म०

तत इत्यादि । ततो निमित्तादनन्तरं युद्धं प्रजघटे घटितं ते हरिराक्षसाः वक्ष्यमाणाः शस्त्राण्यासुः क्षिप्तवन्तः परस्परं वव्रश्चुः छिन्नवन्तः आजुघूर्णुः चक्रवद्भ्रान्ताः घूर्णतिरनुदात्तेत् स्येमुः शब्दं कृतवन्तः स्यमेः फणादित्वादेत्वं चुकूर्दिरे क्रीडितवन्तः ॥७७॥ ज० म०

तत इत्यादि । अनन्तरं युद्धं प्रजघटे प्रवृत्तं घटङ्चेष्टे परस्परं शस्त्राणि आसुः क्षिप्तुः हरिराक्षसा इत्यग्रिमश्लोकेनान्वयः असु क्षेपे परस्परं वव्रश्चुः ओव्रश्चू छेदने शां नवेप्रच्छामिति जिनिषेधः आजुघूर्णुः चक्रवद्भ्रमन्तिस्म घूर्णघूर्ण भ्रमणे जुघूर्णिरे च वव्रश्चुरिति क्वचित्पाठः स्येमुः शब्दं चक्रुः स्यमुणशब्दननेशित्वात् फणादिः तृफलेत्यादिना पाक्षिकमेत्वं खिलोपश्च चुकूर्दिरे क्रीडितवन्तः कूर्दच० क्रीड़ायाम् ॥ ७७ ॥ म०

रुरुजुरित्यादि । रुरुजुर्भग्नवन्तः बभञ्जिरे शोभिताः बहुधा बहुप्रकारं फेणुर्गताः फणगतौ वीराः सात्त्विका न विभयाञ्चक्रुः नं

रक्तं प्रचुस्रुतुः क्षुण्णाः शिश्रियुर्बाणविक्षताः ।
अस्यतां शुशुवुर्बाणान् भुजाः साङ्गुष्ठमुष्टयः ॥ ७९ ॥
रणे चिक्रीड धूम्राक्षस्तं ततर्जानिलात्मजः ।
आददे च शिलां साश्वं पिपेषास्य रथं तया ॥ ८० ॥

बिभ्यतिस्म भीह्रीभृहुवांश्लुवच्चेत्याम् बिभेतेः परस्मैपदित्वात् अनुप्रयोगे परस्मैपदं परान् शत्रून् शौर्य्यगुणयुक्ताः प्रयोजकाः भीषयाञ्चक्रिरे भीषयन्तेस्म अत भीस्म्योर्हेतुभय इति तङ् अनुप्रयोगेऽपि ॥७८॥ ज०म०

रुरुजुरित्यादि । हरयो वानरा राक्षसाश्च परस्परं रुरुजुः भग्नवन्तः रुजोधौभङ्गे भेजिरे शुशुभिरे भ्राजृभ्यटुचेति चकारा-न्नासि नृफलेति पाक्षिकमेत्वं खिलोपश्च बहुभिः प्रकारैः फेणुः फण-मिणगतौ वीराः शक्नान् विभयाञ्चक्रुः बिभ्यतिस्म ञिभीभिभीत्यर्थे पक्षे वाभीह्रीति पाक्षिकः पक्षास् लोत्वात् ह्रादीरेहिः गुर्भूङ इति गुणः परान् शत्रून् भीषयन्तेस्म भोर्भीष्वेति भीषादेशो मस्य त्वान्त-त्वादाम् ॥ ७८ ॥ भ०

रक्तमित्यादि । केचित् क्षुण्णाः खण्डिताः सन्तो रक्तं प्रचुस्रुतुः प्रक्षरिताः केचित् शिश्रियुः विभाषाश्वेरित्यसम्प्रसारणपक्षे रूपं बाणा-नस्यतां क्षिपतां योधानां भुजाः साङ्गुष्ठमुष्टयः अङ्गुष्ठमुष्टिसहिताः शरविक्षताः शरभिन्नाः शुशुवुः गताः गत्यर्थे द्रष्टव्यं सम्प्रसारणपक्षे रूपम् ॥ ७९ ॥ ज० म०

रक्तमित्यादि । केचित् क्षुण्णाः खण्डिताः सन्तो रक्तं क्षरन्तिस्म स्रुतिरक्षरे केचित् विच्छिन्नाः सन्तः शिश्रियुः शोथयुक्ता बभूवुः ह्रायो-श्विर्गतिवृद्ध्योः बाणान् अस्यतां क्षिपतां योधानाम् अङ्गुष्ठमुष्टिना सहिता भुजाः शरविक्षताः सन्तः शुशुवुः गताः पतिता इत्यर्थः श्वेर्जि-र्लीयङ्योरिति पाक्षिको जिः ॥ ७९ ॥ भ०

रण इत्यादि । धूम्राक्षो रणे चिक्रीड़ क्रीड़तिस्म तमनिलात्मजो हनूमान् ततर्ज भर्त्सितवान् शिलामाददे च गृहीतवान् तया शिलया अस्य धूम्राक्षस्य साश्वं रथं पिपेष चूर्णितवान् ॥ ८० ॥ ज० म०

पपात राक्षसो भूमौ रराट च भयङ्करम् ।
तुतोद गदया चारिं तं दुद्रावाऽद्रिणा कपिः ॥ ८१ ॥
अकम्पनस्ततो योद्धुं चकमे रावणाज्ञया ।
स रथेनाभिदुद्राव जुघुरे चातिभैरवम् ॥ ८२ ॥

रण इत्यादि । धूम्राक्षो रणे क्रीडितवान् क्रीडृ खेले अनिलात्मजो हनूमान् तं धूम्राक्षं ततर्ज तर्जभर्त्से शिलामाददे जग्राह च आङ्पूर्वो दाञ्ग्रहणे तया शिलया अस्य धूम्राक्षस्य अश्वेन सहितं रथं पिपेष धौपिषल्लचूर्णने ॥ ८० ॥ भ०

पपातेत्यादि । राक्षसो धूम्राक्षो भूमौ पपात पतितः सन् भयङ्करं रराट राटितवान् ततोऽरिं हनूमन्तं गदया तुतोद आहतवान् तं राक्षसं स कपिः अद्रिणा दुद्राव व्यापादितवान् ॥८१॥ ज०म०

पपातेत्यादि । धूम्राक्षो राक्षसो भूमौ पपात पतल्लजगत्याञ्च रराट शब्दं चक्रे रट वाचि ततः उत्थितः सन् गदया च अरिं हनूमन्तं तुतोद पीडितवान् तुदव्यथे कपिर्हनूमान् पर्वतेन तं राक्षसं दुद्राव मारितवान् द्रुशिकम्पे अनेकार्थत्वाद्धिंसायामपि जघानेति क्वचित्पाठः दुद्रावेति क्वचित् ॥ ८१ ॥ भ०

अकम्पन इत्यादि । ततो धूम्राक्षविनाशानन्तरम् अकम्पनो राक्षसः रावणाज्ञया युध्यस्वेति युद्धं चकमे इष्टवान् आयादय आर्द्धधातुके वेति णिङभावपक्षे रूपं सोऽकम्पनः रथेनाभिदुद्राव अभिमुखं गतः जुघुरे च शब्दं कृतवान् अतिभैरवम् अतिभयानकं घुरभीमार्थशब्दयोरित्यनुदात्तेत् ॥ ८२ ॥ ज० म०

अकम्पन इत्यादि । ततोऽनन्तरम् अकम्पनो राक्षसो रावणस्याज्ञया योद्धुं चकमे इष्टवान् कमु कङ् स्पृहि वारे इत्यनेन णिङोऽभावपक्षे रूपं सोऽकम्पनो रथेनाभिदुद्राव अभिमुखं गतः द्रु स्रु तौ गतौ अतिभैरवम् अतिभयङ्करं जुघुरे शब्दञ्चकार घुर्णङोहिंसाख्यान्योः अनेकार्थत्वात् शब्देऽपि घुरशब्ध्वनौ भीमार्थ इत्यस्य भावे रूपं वा तेनेति विभक्तिव्यत्ययेन सम्बन्धः क्वचित्परस्मैपदिनोऽप्यात्मनेपदित्वात्

पस्पन्दे तस्य वामाक्षि सस्वनुश्चाशिवाः खगाः।
तान् वव्राजावमत्यासौ बभासे च रणे शरैः॥ ८३॥
खमूयुर्वसुधामूवुः सायका रज्जुवत्तताः।
तस्माद् बलैरपलेपे पुप्रोथास्मै न कश्चन॥ ८४॥

कर्त्तरि रूपं वा शब्दार्थघुरधातुरप्यात्मनेपदीति जयमङ्गला। जुघोरेति केचित्पठन्ति। ८२॥ भ०

पस्पन्द इत्यादि। तस्याकम्पनस्यानिमित्तत्वसूचकं वामाक्षि पस्पन्दे स्पन्दितम् अशुभाश्च अशिवसूचकाः खगाः सस्वनुः शब्दं कृतवन्तः कर्न्तृत्वपक्षे रूपम् तान् खगान् अवमत्यावज्ञायासौ वव्राज गतः रणे शरैश्च बभासे शोभितम्॥ ८३॥ ज० म०

पस्पन्द इत्यादि। अकुशलमुच्यते तस्याकम्पनस्य वामं चक्षुः स्पन्दते स्म स्पदिञ् ईषत्कम्पे अशुभसूचकाः खगाः पक्षिणः सस्वनुः शब्दं चक्रुः स्वनशब्दध्वनने तृफलेत्यादेरप्रवृत्तिपक्षे रूपम् असावकम्पनस्तान् खगान् अवमत्य अवज्ञाय वव्राज व्रजगतौ रणे शरैश्च बभासे भाङ्ङ् दीप्तौ॥ ८३॥ भ०

खमित्यादि। तेन सायका रज्जुवत्तता विस्तृताः सन्तः खमाकाशमूयुराच्छादितवन्तः वसुधाञ्च ऊवुश्छादितवन्तः वेञ् तन्तुसन्ताने तस्य लिटि वयिरादेशः वश्चास्यान्यतरस्यामिति यकारस्य वकारादेशः तस्मादिति तमकम्पनं वीक्ष्य ल्यप्लोपे पञ्चमी लपे लज्जितं भावे लिट् तृफलेत्यादिना एत्वाभ्यासलोपौ अस्मै अकम्पनाय न कश्चिन् पुप्रोथ न प्रभवति स्म प्रोथपर्य्याप्ताविति स्वरितेत् अत्र कर्त्तुः क्रियाफलायोगाच्चात्मनेपदं नमस्स्वस्तीत्यत्र अलंशब्दस्य पर्य्याप्तार्थग्रहणात् तदर्थयोगे चतुर्थी॥ ८४॥ ज० म०

खमूयुरित्यादि। तेन रज्जुवत्तता विस्तृताः सायकाः खमाकाशमूयुः वसुधाञ्च ऊवुः आच्छादितवन्तः वेञ्तन्तुसन्ताने इति पाक्षिको वयादेशः व्ययग्रहेत्यादौ वयग्रहणात् ग्रां नवेग्रच्छामित्यस्याप्रवृत्तिः

स भस्मसाच्चकारारीन् दुदाव च कृतान्तवत् ।
चुक्रोध मारुतिस्तालमुच्चखने च महाशिखम् ॥ ८५ ॥
यमायाकम्पनं तेन निरुवाप महापशुम् ।
बभञ्ज निहते तस्मिन् शोको रावणमग्निवत् ॥ ८६ ॥

तेन व्ययप इत्यादिना खेर्जिः यदृच्छपाद्योरिति प्रकृतेर्जि यवः क्तिती-त्यस्य पद्यद्वये रूपं तस्मात्तमकम्पनं वीक्ष्य वानरसैन्यैरपलायिते लज्जितं तपूर्वमिङ्ह्लिय न्यृफलेत्यादिना एत्वं खिलोपश्च भावे रूपं तस्मादिति अन्यारभ्येत्यादिना ययर्थे पञ्चमी । अस्मै अकम्पनाय कश्चन वीरो न शुशोय न समर्थः प्रोर्णुञ् पर्य्यापणे खेरोकारस्य ह्रस्व उकारः शक्तार्थे-त्यादिना चतुर्थी ॥ ८४ ॥ भ०

स भस्मसादित्यादि । सोऽकम्पनः अरीन् भस्मसाच्चकार कात्स्न्येन भस्मभूतान् कृतवान् कृतान्तवत् यम इव दुदाव दुदु उपतापे तं दृष्ट्वा मारुतिश्चुक्रोध क्रुद्धः तालञ्च वृक्षं महाशिखमत्युच्चायम् उच्चखने उत्खातवान् अत्र क्रियाफलयोगात् तङ् ॥ ८५ ॥ ज० म०

स भस्मसादित्यादि । सोऽकम्पनोऽरीन् कात्स्न्येन भस्मीभूतांश्चकार कात्स्न्र्यायत्त्योरित्यादिना षसात् कृतान्तवत् यम इव दुदाव पीड़ितवान् टुदु उपतापे तं दृष्ट्वा मारुतिर्हनूमान् चुक्रोध क्रुद्धः क्रुधक्ष्यौकोपे महाशिखमतिदीर्घं तालवृक्षञ्च उत्खातवान् खनुञ् विदारणे हनगमित्युङ्लोपः ॥ ८५ ॥ भ०

यमायेत्यादि । तेन तालेन स चाकम्पनं महापशुमिव यमाय निरुवाप दत्तवान् निष्पूर्वो वपिर्दाने वर्त्तते तत्र धातोर्यजादित्वात् सम्प्रसारणं न भवति अकित्त्वात् अभ्यासस्य लिटि भवत्येव तस्मिन्नि-हते शोकोऽग्निरिव रावणं बभञ्ज दग्धवान् ॥ ८६ ॥ ज० म०

यमायेत्यादि । तेन तालवृक्षेण हनूमान् अकम्पनं महापशुमिव यमाय निरुवाप दत्तवान् वपौञ् डुबुवञ्तन्तुवीजोप्योः निष्पूर्वो दाने

स विभ्रेष प्रचुचोद दन्तैरोष्ठं चखाद च ।
प्रगोपयाञ्चकाराशु यत्नेन परितः पुरम् ॥ ८७ ॥
प्रहस्तमर्थयाञ्चक्रे योद्धुमद्भुतविक्रमम् ।
किं विचारेण राजेन्द्र ! युद्धार्थी वयमित्यसौ ॥ ८८॥

वर्त्तते व्यथपहेति खेर्जिः तस्मिन्नकम्पने निहते सति शोकोऽग्निरिव रावणं बभञ्ज ददाह भ्रस्जज्जौषपाके भ्रप्भ्रसोरिति सस्य दत्वे स्तुश्चुभिश्च श्चादिति जः भ्रस्जोऽरेणौ भर्जवत्यस्यामद्रत्तिपक्षे रूपम् ॥ ८६ ॥ भ०

स विभ्रेत्यादि । स राजा विभ्रेष चलितः भ्रेष चलने स्खलितेत् प्रचुचोद क्रोधाल्लोष्टादीन् चूर्णितवान् ओष्ठञ्च दन्तैश्चखाद दष्टवान् पुरं लङ्कां समन्तात् यत्नेन प्रगोपयाञ्चकार रक्षितवान् गुपू रक्षणे इत्युदात्तेत् आयप्रत्ययान्तत्वादाम् ॥ ८७ ॥ ज० म०

स विभ्रेषेत्यादि । स रावणो विभ्रेष चलितः धैर्य्यादित्यर्थात् भ्रेष्टजचलने क्रोधात् प्रचुचोद लोष्टादीन् चूर्णितवान् जघौचुदि- रचुदि दन्तैरोष्ठं चखाद दष्टवान् खादृभक्षणे खद स्थैर्य्ये वधे वा पुरं लङ्कां परितः समन्तात् आशु शीघ्रं यत्नेन प्रोगोपयाञ्चकार रक्षितवान् गुपूरक्षे वाऽरे इति पाक्षिक आयः त्यान्तत्वादाम् ॥ ८७ ॥ भ०

प्रहस्तमित्यादि । अद्भुतविक्रमं प्रहस्तं रावणो योद्धुं युध्यस्वे- त्यर्थयाञ्चक्रे प्रार्थितवान् अर्थ उपयाच्ञायामिति चौरादिक आत्मने- पदी वचनात् । असौ प्रहस्तः प्रार्थितश्चकारेण बभाणेति वक्ष्यमाणेन सम्बन्धः हे राजेन्द्र ! युद्धार्थी वयं युद्धप्रयोजनाः ततश्च किं विचारे- णेति ॥ ८८ ॥ ज० म०

प्रहस्तमित्यादि । रावणः अद्भुतविक्रमं प्रहस्तं योद्धुं प्रार्थित- वान् अर्थत्वङ्याचने असौ प्रहस्त इति चकाणेति वक्ष्यमाणेन सम्बन्धः किं चकाणेत्याह हे राजेन्द्र ! किं विचारेण यतो वयं युद्धप्रयोजना एव ॥ ८८ ॥ भ०

चक्राणाशङ्कितो योद्धुमुत्सेहे च महारथः ।
नियेमिरेऽस्य योद्धारश्चक्लृपे चाश्वकुञ्जरम् ॥ ८९ ॥
युयुजुः स्यन्दनानश्वैरीजुर्देवान् पुरोहिताः ।
आनर्चुर्ब्राह्मणान् सम्यगाशिषश्चाशशंसिरे ॥ ९० ॥

चक्राणेत्यादि । उक्त्वा च स महारथो योद्धा अशङ्कितो निर्भयः सन् योद्धुमुत्सेहे उत्साहं कृतवान् अस्य योद्धारो रावणेन नियेमिरे नियमिता अन्येन सह एतावद्भिर्योद्धव्यमिति कर्मणि लिट् अश्वकुञ्जरं चक्लृपे सज्जीकृतं पशुद्वन्द्वैकवद्भावः कृपेरोलः ॥ ८९ ॥ ज० म०

चक्राणेत्यादि । पूर्वोक्तं चक्राण उक्तवान् कण च शब्दे उक्त्वा महारथोऽसौ निःशङ्कः सन् योद्धुमुत्सहते स्म अस्य प्रहस्तस्य अनुजीविनो योद्धारो रावणेन नियेमिरे नियमिताः प्रहस्तेनैव सह एतावद्भिर्योद्धव्यमिति यमो उपरतौ निपूर्वो नियममाह कर्मणि रूपम् अश्वकुञ्जरं चक्लृपे सज्जीकृतं कृपूङ् च कल्पने कृपः लृपोऽकृपादौ अश्वाश्च कुञ्जराश्चेति समाहारद्वन्द्वः सेनाङ्गत्वात् समाहार इति परः । महान् रथो यस्य स तथा महारथशब्दः पारिभाषिकोऽप्यस्ति । तथाच, रथेनैकेन यो वीरः शास्ति शत्रुकुलं महत् । महारथः स विज्ञेयः संग्रामेषु परायण इति ॥ ८९ ॥ भ०

युयुजुरित्यादि । स्यन्दनान् रथान् अश्वैर्युयुजुः युञ्जन्ति स्म पुरोहिताः देवानीजुः पूजितवन्तः यजादित्वात्सम्प्रसारणं ब्राह्मणानानर्चुः पूजितवन्तः ते च पूजिताः आशिषः आशशंसिरे उदितवन्तः आङ्शासु इच्छायामनुदात्तेत् शास इत्वे आङ्शासोः क्वावुपसंख्यानमित्याशीः ॥ ९० ॥ ज० म०

युयुजुरित्यादि । अश्वैः स्यन्दनान् रथान् युयुजुः सङ्घट्टयन्ति स्म सारथय इत्यर्थात् युजिर्यौज्यचयुतौ युजक्रिसंयमे इत्यस्य श्वादिपक्षे वा रूपं पुरोहिता देवान् ईजुः यजन्ति स्म यजैज्ञौ देवार्चादानसङ्गतिकृतौ कर्त्तुः फलवत्त्वाभावात् पं व्यधयहेति खेर्जिः यहस्वपाद्योरिति मूलस्य जिः ब्राह्मणांश्च पूजयन्ति स्म स्नात्वादादीति अर्चः खेरान् ते ब्राह्मणा

जह्रिरे मूर्ध्नि सिद्धार्था गावश्चालेभिरे भटैः ।
प्रचुक्षुणुर्महास्त्राणि जिज्ञासाञ्चक्रिरे हयान् ॥ ८१ ॥
ललुः खड्गान् ममार्जुश्च मम्रजुश्च परश्वधान् ।
अलञ्चक्रे समालेभे ववसे बुभुजे पपे ॥ ८२ ॥

अर्चिताः सन्तः आशिषश्च आशशंसिरे इच्छन्तिस्म आङः शसु इच्छायाम् आशशासिरे इति पाठे आङः शास इच्छायामपि ॥ ८० ॥ भ०

जह्रिरे इत्यादि । भटैर्योधैः सिद्धार्थाः सर्षपाः मूर्ध्नि जह्रिरे जह्राः गावश्चालेभिरे स्पृष्टाः कर्मणि लिट् महास्त्राणि प्रचुक्षुणुः तेजितवन्तः तथा तैर्योद्धुं पार्य्यत इति क्षणु तेजने भटाः हयान् जिज्ञासाञ्चक्रिरे ज्ञातुमिच्छां कृतवन्तः किमेते योद्धुं क्षमा नेति ज्ञाश्रुस्मृदृशां सन् इत्यात्मनेपदित्वादनुप्रयोगेऽपि तङ् ॥ ८१ ॥ ज० म०

जह्रिरे इत्यादि । भटैर्योधैर्मूर्ध्नि सिद्धार्थाः श्वेतसर्षपा जह्रिरे धृता मङ्गलार्थं वहेर्णौमापणे व्ययपहेति खेर्जिः प्रहृस्वप्राद्योरिति प्रकृतेर्जिः गावश्च आलेभिरे स्पृष्टाः लभडौङ्प्राप्तौ आङ्पूर्वः स्पर्शनेऽपि कर्मणि रूपं महास्त्राणि प्रचुक्षुणुः तेजितवन्तः भटा इति विभक्तिव्यत्ययेनानुषज्यते क्षणु तेजने हयान् ज्ञातुमिच्छां चक्रुः किमेते युद्धकुशला न वेति ज्ञा अवबोधने स्मृदृशनतुश्रोति सम् ॥ ८१ ॥ भ०

ललुरित्यादि । खड्गान् ललुर्गृहीतवन्तः ला आदाने ममार्जुश्च विशुद्धान् कृतवन्तः तथा परश्वधान् परश्वून् शोधितवन्तः मृजेरजादौ संक्रमे विभाषा वृद्धिः योद्धृभिर्वक्ष्यमाणैः अलञ्चक्रे अहङ्कृतं समालेभे समालब्धं ववसे छादितं वस आच्छादने बुभुजे भुक्तं पपे पीतं भावे लिट् ॥ ८२ ॥ ज० म०

ललुरित्यादि । भटाः खड्खान् गृहीतवन्तः लल ग्रहे ममार्जुः खड्गान् शुद्धान् चक्रुः तथा परश्वधान् परश्वून् मम्रजुः शोधितवन्तः मृजजग्रुद्धौ मृजोऽकङिति वृद्धिरिति रूपद्वयम् अलञ्चक्रे योद्धृभिरिति वक्ष्यमाणेन सम्बन्धः समालेभे अनुलेपनं कृतं ववसे आच्छादनं कृतं

जहृषे च क्षणं यानैर्निर्जग्मे योद्धृभिस्ततः ।
विप्रान् प्रहस्त आनर्च जुहाव च विभावसुम् ॥९३॥
संवर्गयाञ्चकाराप्तान् चन्दनेन लिलेप च ।
चचाम मधु माध्वीकं त्वक्त्राञ्चाचकचे वरम् ॥ ९४ ॥
उष्णीषं मुमुचे चारु रथञ्च जुजुषे शुभम् ।
आललम्बे महास्त्राणि गन्तुं प्रववृते ततः ॥९५॥

ववलस्तृतौ बुभुजे भुक्तं भुजधोलाणे भक्षे पपे पीतं पापाने वर्वत भावे ठौ ॥ ९२ ॥ भ०

जहृष इत्यादि । क्षणं जहृषे हृषितं यानैः करणभूतैः निर्जग्मे निर्गतं ततः प्रहस्तः विप्रान् गोसुवर्णादिदानेन आनर्च पूजितवान् विभावसुं चाग्निम् आज्यादिना जुहाव प्रीणितवान् ॥९३॥ ज० म०

जहृषे इत्यादि । योद्धृभिः क्षणं जहृषे हृषितं याने रथादिभिर्निर्जग्मे योद्धुं निर्गतं ततोऽनन्तरं प्रहस्तो विप्रान् आनर्च पूजितवान् विभावसुम् अग्निं जुहाव प्रीणितवान् हुधिहोमेऽदने च इहानेकार्थत्वात् प्रीणनेऽपि ॥ ९३ ॥ भ०

संवर्गयामित्यादि । आप्तान् विश्वासिनः संवर्गयाञ्चकार कटकादिप्रदानेन संवर्गितवान् संवर्गं करोतीति णयन्तस्य रूपं चन्दनेन लिलेप लेपाबद्धवान् मृद्वीका द्राक्षा तस्या विकारः माद्वीकं मधु चचाम त्वक्त्राञ्च सन्नहनं परं श्रेष्ठम् आचकचे बद्धवान् कच बन्धन इत्यनुदात्तेत् ॥ ९४ ॥ ज० म०

संवर्गयामित्यादि । प्रहस्तः आप्तान् जनान् संवर्गयाञ्चकार सम्भावितवान् सजातीयसमुदायो वर्गः दक्षिणहस्तादिदानेन शपथपूर्वकं संवर्गितवान् समन्वीकृतवानित्यर्थो वा संवर्गं करोतीति णिः चन्दनेन लिलेप लेपनं कृतवान् लिपिपौशपञ्लेपे मधु माध्वीकं मद्यं चचाम वरं श्रेष्ठं त्वक्त्रं कवचम् आचकचे बद्धवान् कचङ्बन्धने इति शेषः ॥९४॥ भ०

उष्णीषमित्यादि । उष्णीषं शिरस्त्राणं मुमुचे रथञ्च जुजुषे

आजघ्नुस्तूर्य्यजातानि तुष्टुवुश्चानुजीविनः।
रजः प्रववृधे घोरं घोषश्च व्यानशे दिशः॥ ९६॥
तं यान्तं दद्रुसुर्गृध्राः क्रव्यादश्च सिषेविरे।
आववुर्वायवो घोराः खादुल्काश्च प्रचक्षरुः॥९७॥

जुषिरनुदात्तेत् महास्त्राणि आललम्बे गृहीतवान् ध्वंसि अवस्रंसन इत्यनुदात्तेत् तत उत्तरकाले गन्तुं प्रवृत्ते प्रवृत्तः॥ ९५॥ ज॰ म॰

उष्णीषमित्यादि। चारु उष्णीषं शिरस्त्राणं मुकुटं वा मुमुचे परिदधे मुच्लृशपजौ मोचे परिधानेऽपि दृश्यते उष्णीषश्च शिरोवेष्टे किरीटे लक्षणान्तर इति विश्वः। शुभं शोभमानं रथं जुजुषे सेवितवान् आरूढ़ इत्यर्थः शङ्कीत्यि जुषसुदिसेवे महास्त्राणि आललम्बे जग्राह ववितुम्रंसने च ततोऽनन्तरं गन्तुं प्रवृत्तः प्रवृत्तश्च वर्त्तते॥ ९५॥ भ॰

आजघ्नुरित्यादि। तूर्य्यजातानि वाद्यसमूहान् आजघ्नुः ताड़ितवन्तः तन्नियुक्ता इत्यर्थात् आङो यमहन इति तङ् न भवति सकर्मकत्वात् अनुजीविनश्च तुष्टुवुः जय जीवेति स्तुवन्तिस्म पदघोभाद्घोरं रजः प्रववृधे वर्द्धतेस्म घोषस्य कलकलशब्दः दिशो व्यानशे व्याप्तवान्॥ ९६॥ ज॰ म॰

आजघ्नुरित्यादि। तूर्य्यसमूहान् आजघ्नुः वाद्यकारास्ताड़ितवन्तः आत्माङ्गढादित्यस्याविषयः आत्माङ्गकर्मकत्वाभावात् हनगमित्युङ्लोपः। अनुजीविनो जय जयेति स्तुवन्तिस्म स्तुवस्तुतौ किवादिति पत्ने ष्टुभिरिति टः। घोरं भीषणं रजो वर्त्ततेस्म प्रवृत्त इति कचित्पाठः। घोषः कोलाहलश्च दिशो व्याप्तवान् अशूङ्व्याप्तिसंहत्योः स्वान्नादादीति खेरान्॥ ९६॥ भ॰

तं यान्तमित्यादि। तं प्रहस्तं यान्तम् अशुभसूचकाः दद्रुवुर्गतवन्तः क्रव्यादश्च प्रगाला: सिषेविरे सेवितवन्तः वायवो घोराः पांशुवाहिणः आववुः समन्ताद्वान्तिस्म उल्काश्च तदा तस्मिन् काले खादाकाशात् प्रचक्षरुः पतिताः क्षर सञ्चलन इत्यकर्मकः॥ ९७॥ ज॰ म॰

सस्यन्दे शोणितं व्योम रथाङ्गानि प्रजज्वलुः ।
रथाः प्रचस्खलुः साश्वा न ररंहाश्वकुञ्जरम् ॥९८॥
प्रतोदा जगलुर्वाममानञ्चुर्यज्ञिया मृगाः ।
दद्दाल भूः पुपूरे द्यौः कपीनामपि निःस्वनैः ॥९९॥

तं यान्तमित्यादि । रभसा अशुभसूचकाः पक्षिणस्तं यान्तं गच्छन्तं प्रहस्तं दुद्रुवुर्गतवन्तः दुद्रुवुरिति पाठे द्रु स्रु गतौ क्रव्यादः शृगालाः सेवितवन्तः सेटङ् सेवने खेरेकारस्य ह्रस्व इकारः घोराः प्रतिकूला वायवः सर्वतो वान्ति स्म वा गमनहिंसयोः तदा तस्मिन् काले उल्काः प्रचचरुः आकाशात् पतन्ति स्म चर सञ्चलने ॥ ९७ ॥ भ०

सस्यन्द इत्यादि । व्योम कर्तृ शोणितं सस्यन्दे सिञ्चति स्म स्यन्दिः सकर्मकः । रथाङ्गानि खड्गादीनि जज्वलुः ज्वलन्ति स्म साश्वाः सहाश्वैः रथाः प्रचस्खलुः स्खलन्ति स्म अश्वकुञ्जरं न ररंह न गतम् ॥ ९८ ॥ ज० म०

सस्यन्द इत्यादि । व्योम आकाशं कर्तृ शोणितं स्रवति स्म स्यन्दृङ् स्रुतौ रथाङ्गानि खड्गादीनि ज्वलन्ति स्म ज्वलज्वलचलत्विषोः अश्वैः सह रथाः स्खलन्ति स्म स्खलसञ्चये चले अश्वकुञ्जरं कर्तृ न ररंह न जगाम रहिगत्यां नेहाश्चक्रे इति पाठे न चेष्टते स्मेत्यर्थः ॥ ९८ ॥ ज० म०

प्रतोदा इत्यादि । प्रतोदाः जगलुः हस्तेभ्यो गलिताः गल अदने अनेकार्थत्वात्पतनेऽपि । मृगाः यज्ञियाः यज्ञार्हाः कृष्णसाराः यज्ञर्त्विग्भ्यां घखञौ वाममङ्गमानञ्चुः गतवन्तः अत आदेरिति दीर्घः तस्मान्नुट् दिद्दल: भूर्द्दाल विदीर्णा जज्वालेति पाठान्तरं चचालेत्यर्थः कपिनिःस्वनैर्द्यौराकाशं पुपूरे पूर्णं दिवः पूरणनिमित्तं यतः कपयो हर्षात्तद्विनाशसूचका एवमाचरन्ति ॥ ९९॥ ज० म०

प्रतोदा इत्यादि । सारथिहस्तात् प्रतोदास्ताडनदण्डाः गलिताः गलभक्षे अनेकार्थत्वात् पतनेऽपि यज्ञार्हा मृगाः कृष्णसारादयो वामं भागं गताः अञ्चु व्रिष्टोरौ गतौ आनञ्जुरिति पाठे अनजूधजिव्यक्ति-

**मिमेह रक्तं हस्त्यश्वं राक्षसाश्च नितिष्ठिवुः।**

**ततः शुशुभतुः सेने निर्दयञ्च प्रजघ्नतुः॥ १००॥**

**दिद्विषुर्दुद्युवुश्चच्छुश्चक्लमुः सुषुपुर्हताः।**

**चखादिरे चखादुश्च विलेपुश्च रणे भटाः॥ १०१॥**

गतिप्रचयेण भूमिर्ददाल विदीर्णा दलनिभेदे जह्लादेति पाठे ह्लादमचाले कपीनां निःस्वनैः द्यौराकाशं पुपूरे पूर्णा तथाशुभं इष्टा कपीनां हर्ष-निःस्वनो जात इति भावः पूरीङ् पूर्त्तौ॥ ९९॥ भ०

मिमेहेत्यादि। हस्त्यश्वं कर्त्तृ रक्तं मिमेह मूत्रितवदित्यर्थः मिह सेचने राक्षसाश्च स्वरक्तं नितिष्ठिवुः निरस्तवन्तः ततो दुर्निमित्ता-दनन्तरं ते सेने सन्नद्धे शुशुभतुः शोभितवत्यौ निर्दयं प्रजघ्नतुः प्रहृत-वत्यौ॥ १००॥ ज० म०

मिमेहेत्यादि। हस्त्यश्वं कर्त्तृ रक्तं मिमेह मूत्रितवत् मिहौ सिचि राक्षसाश्च रक्तं निष्ठीवन्तिस्म ष्ठिवु निरसने ष्ठिवजाद्योरिति पाक्षिकः खेत्कारः तत ईदृशामङ्गलनिमित्तानन्तरं द्वे सेने शुशुभतुः शुभशुनुभदीपनहिंसयोरित्यस्य रूपं शुभल्ङ् दीप्तौ कचिदात्मनेपदि-नोऽपि परस्मैपदित्वमिति केचित्। निर्दयञ्च प्रहारं चक्रतुः हन् हत्याम्॥ १००॥ भ०

दिद्विषुरित्यादि। रणे भटाः दिद्विषुः परस्परं द्विष्टवन्तः द्विष अप्रीतौ दुद्युवुः अभिमुखं गतवन्तः द्यु अभिगमने चच्छुः छिन्नवन्तः छो छेदने हताश्चक्लमुः मूर्च्छां गतवन्तः सुषुपुः भूमौ पतिताः वच्या-दिना सम्प्रसारणं चखादिरे खादिताः कर्मणि लिट् चखादुः खादित-वन्तः विलेपुश्च विलेपं कृतवन्तः अत एकहल्मध्येत्वम्॥ १०१॥ ज० म०

दिद्विषुरित्यादि। भटा रणे द्वेषं चक्रुः द्विषौजवैरे दुद्युवुः अभिमुखं जग्मुः द्यु लभिसर्पणे चच्छुश्छिन्नवन्तः छो लूनौ हताः सन्तश्चक्लमुर्मोहं गताः जिक्लिम्यक्लमुभिग्लानौ सुषुपुर्भूमौ पतिताः स्वपौ जिशये अनेन पतनं लक्ष्यते व्यथप्रहेति खेर्जिः यहस्वपाद्योरिति प्रकृतेर्जिः चखादिरे अन्यैः खादिताः चिखिदिरे इति पाठे दैन्यं

प्रहस्तस्य पुरोऽमात्यान् जिहिंसुर्दंदृषुस्तथा।
वानराः कर्म सेनानी रक्षसां चक्षमे न तत् ॥१०२॥
ऊर्णुनाव स शस्त्रौघैर्वानराणामनीकिनीम्।
शशास च बहून् योधान् जीवितेन विवेच च ॥१०३॥
आससञ्ज भयं तेषां दिद्युते च यथा रविः।
नाययास द्विषां देहैर्जगाहे च दिशो दश ॥१०४॥

गताः खिदङ्‌ दैन्ये चखादुश्च अन्यान् खादितवन्तः खादृङ् भक्षणे विवेपुर्विलापं चक्रुः कुलपभावे विपूर्वः परिदेवने ॥ १०१ ॥ भ०

प्रहस्तस्येत्यादि। अमात्यान् सचिवान् प्रहस्तस्य पुरोऽग्रतः वानरा जिहिंसुर्हतवन्तः तथा दधृषुः परिभूतवन्तः ञिधृषाप्रागल्भ्ये तच्च कर्म वानरैर्यत् कृतं रक्षसां सेनानीः प्रहस्तः न चक्षमे न क्षमते स्म ॥ १०२ ॥ ज० म०

प्रहस्तस्येत्यादि। वानराः प्रहस्तस्य पुरोऽग्रतोऽमात्यान् हिंसन्ति स्म हिसधिकिहिंसे अमा सहार्थे त्यब्नाह्यचिरेत्यादिना त्यः तथा दधृषुः ञिधृषान प्रागल्भ्ये तद्वानरैः कृतं कर्म रक्षसां सेनानीः प्रहस्तो न क्षमते स्म क्षमूङ् ञिमर्षे ॥ १०२ ॥ भ०

ऊर्णुनावेत्यादि। स सेनानीर्वानराणामनीकिनीः सेनाः शस्त्रैरूर्णुनाव छादितवान् ऊर्णोतेर्णुवद्भावादितीजादेरित्याम् न भवति शशास च योधान् शसु हिंसायां जीवितेन च विवेच च पृथक्कृतवान् विचिर-पृथग्भावे इति रुधादौ स्वरितेत् ॥ १०३ ॥ ज० म०

ऊर्णुनावेत्यादि। स प्रहस्तो वानराणामनीकिनीं सेनां शस्त्रसमूहैः प्रोर्णुनाव आच्छादितवान् ऊर्णुञ् आच्छादने ञिजादीत्यादौ ऊर्णुवर्जनाज्ञाम् वाजन्तादेरादिर्द्विः स्वादौ नवद्रोय इति वचनात् वोरेव द्वित्वम्। बहून् योधान् शशास जघान शसुसवधे जीवितेन च विवेच पृथक्कृतवान् विचिर्लिभौजपृथक्त्वे ॥ २०३ ॥ भ०

आससञ्जेत्यादि। तेषां योधानां युयुत्सूनां भयमाससञ्ज आसक्तं

केचित् सञ्चुकुटुर्भीता लेजिरेऽन्ये पराजिताः।
संग्रामाद् बभ्रंशुः केचित् ययाचुश्चापरेऽभयम् ॥ १०५ ॥
एवं विजिग्ये तां सेनां प्रहस्तोऽतिदर्पं च।
शशाम न च संक्रुद्धो निर्जुगोप निशाचरान् ॥१०६॥

सञ्जसङ्ग इत्यकर्मकः प्रहस्तश्च रविरिव दिद्युते द्योततेश्च द्युतिश्वाप्योः सम्प्रसारणमित्यभ्यासस्य सम्प्रसारणं नायथास युध्यमानो नायस्यतिश्च यत्नप्रयत्ने द्विषद्देहैश्च शत्रुकायैः करणभूतैः दश दिशो जगाहे अवष्टब्धवान् ॥ १०४ ॥ ज० म०

आससञ्जेत्यादि। प्रहस्तस्तेषां वानराणां भयम् आससञ्ज आरोपितवान् सन्जौञ्जिसङ्गे अन्तर्भूतण्यर्थोऽत्र बोध्यः सन्जेरकर्मकत्वात् किंवा भयं कर्तृ आससञ्ज आसक्तवत् प्रहस्तो रविरिव द्योततेश्च द्युतलृङर्पि च्पिशब्दात् द्युत्यां द्युत्वाप्योः खेर्जिरिति जिः बध्यमानोऽपि नायथास नायासं प्राप ईर्यस्य यतने आङ्पूर्वः असे द्विषां देहैः कपिशरीरैः करणभूतैः दश दिशो जगाहे विष्टब्धवान् ङगाह्न-विलोडने ॥ १०४ ॥ भ०

केचिदित्यादि। केचिद्भीताः सन्तः सञ्चुकुटुः सङ्कुटिताः निष्प्रयत्नाः स्थिता इत्यर्थः कुटकौटिल्ये अन्ये पराजिताः सन्तः लेजिरे भर्त्सिताः प्रहस्तेन मृगा इव कातरा यूयमिति लजलाजिभर्त्सने कर्मणि लिट् केचित् संग्रामाद् बभ्रंशुः पलायिताः भ्रंशुभ्रंशु अधःपतने अपरे चाभयं ययाचुः याचितवन्तः ॥ १०५ ॥ ज० म०

केचिदित्यादि। केचन भीताः सन्तः सञ्चुकुटुः कौटिल्यं प्रापुः कुटिलयुद्धाश्रयणात् कुटशिकौटिल्ये अन्ये पराजिताः लेजिरे प्रहस्तेन भर्त्सिताः लजभर्त्सने कर्मणि रूपं केचित् संग्रामाद् बभ्रंशुः पलायिताः भ्रंशुभ्रंशु च चकारादधःपाते अपरे चाभयं देहीति याचितवन्तः टुडुयाचृञ याचने ॥ १०५ ॥ भ०

एवमित्यादि। एवमुक्तेन प्रकारेण प्रहस्तस्तां सेनां विजिग्ये जितवान् विपराभ्यां जेरिति तङ् सन्लिटो जेरिति कुत्वम् अतिदर्प

चुक्रुधे तत्र नीलेन तरुर्योच्चिक्षिपे महान्।
प्रहस्तोऽभिहतस्तेन बाणान् विससृजे बहून् ॥१०७॥
सेहे कपीरथाश्वांश्च रिपोस्ततर्द शाखिना।
धरित्रीं मुषली तेये प्रहस्तश्चिखिदे न च ॥ १०८ ॥

च तुष्ट, हृष्टवान् टपहर्षविमोचनयोः न च शशाम न च शमनं गतः निशाचरान् स्वीयानमात्यान् निजुगोप रक्षितवान् व्यायाभावपक्षे रूपम् ॥ १०६ ॥ ज० म०

एवमित्यादि। उक्तप्रकारेण प्रहस्तस्तां कपिसेनां विजितवान् जिजये विपराजीति सं जेर्गिः सन्योः धात्वर्थं हृष्टोऽपि जातः हृष्यङ्हर्षगर्वयोः टपकिसन्दीपन इत्यस्य वा जेरभावपक्षे रूपम् संक्रुद्धः सन् न शान्तो बभूव शमु दूर्गमे निशाचरान् निर्जुगोप गुपूरक्षे वाऽरे इति पक्षे व्यायस्याभावः ॥ १०६ ॥ भ०

चुक्रुध इत्यादि। तत्र तस्मिन् संग्रामे नीलेन चुक्रुधे क्रुद्धं भावे लिट् तरुर्योच्चिक्षिपे उत्क्षिप्तः कर्मणि लिट् तेन तरुणा उन्मूलितेनाभिहतः सन् प्रहस्तो बाणान् विससृजे क्षिप्तवान् सृज विसर्गे इति दैवादिकोऽनुदात्तेत् ॥ १०७ ॥ ज० म०

चुक्रुधे इत्यादि। तत्र प्रहस्तविषये नीलेन चुक्रुधे क्रोधः कृतः क्रुध्लृत्रौ कोपे भावे रूपं महान् तरुश्च तस्योपरि उच्चिक्षिपे उत्क्षिप्तः क्षिपशजौ क्षिपि कर्मणि रूपं तेन नीलेन तरुणा वा अभिहतः प्रहस्तो बहून् बाणान् विससृजे त्यक्तवान् सृज्यौङ्विसर्गे ॥ १०७ ॥ भ०

सेहे कपिरित्यादि। कपिर्नीलो बाणान् सेहे सोढ़वान् रथानश्वांश्च रिपोः प्रहस्तस्य शाखिना तरुणा ततर्द हतवान् टर्हहिंसि हिंसायां हतरथाश्वश्च प्रहस्तो मुषली गृहीतमुषलः धरित्रीं तेये गतवान् अयपयेतत तयिरनुदात्तेत् न च चिखिदे खिन्नः खिददैन्य इत्यनुदात्तेत् ॥ १०८ ॥ ज० म०

सेहे इत्यादि। कपिर्नीलः सेहे सोढ़वान् तद्बाणघट्टिमित्यर्थात्

संदुधुचे तयोः कोपः पस्फाये शस्त्रलाघवम् ।
नुनोद शाखिनं नील आवव्रे मुषली तरुम् ॥१०९॥
वियत्यानञ्जतुर्भूमौ मण्डलानि विचेरतुः ।
प्रदुद्रुवतुरन्योन्यं वीरौ शश्रमतुर्न च ॥ ११० ॥
समीरयाञ्चकाराथ राक्षसस्य कपिः शिलाम् ।
चतस्तया ममारासावाशिश्राय च भूतलम् ॥१११॥

---

रिपोः प्रहस्तस्य रथस्त्वांश्च शाखिना ततर्द तर्दहिंसे ततः प्रहस्तो मुषलान्वितः सन् धरित्रीं तेरे गतः तयङ्गतिरक्षयोः न च चिखिदे खेदं प्राप्तः खिदङ्ध्यौदैन्यके ॥ १०८ ॥ म०

संदुधुचे इत्यादि । तयोर्नीलप्रहस्तयोः कोपः संदुधुचे वृद्धिं गतः शस्त्रलाघवमस्त्रकौशलं पस्फाये वृद्धिं गतः नुनोद शाखिनं प्रेरितवान् मुषली प्रहस्तः तरुमावव्रे मुषलेनाहतवान् ॥१०९॥ ज० म०

संदुधुचे इत्यादि । तयोर्नीलप्रहस्तयोः कोपः संदुधुचे संप्रदीप्तः धिक्षधुक्षङ्सन्दीपने क्लेशे जीवे । शस्त्रविषये लाघवं शीघ्रता वर्द्धतेस्म स्फायीङ्संवृद्धौ । नीलः शाखिनं नुनोद नुदव्प्रेरणे । मुषली प्रहस्तस्तरुं निवारितवान् वृञ्गहजवृतौ ॥ १०९ ॥ म०

वियतीत्यादि । वीरौ तौ वियति आकाशे आनञ्जतुः गतौ अञ्जवर्जति गत्यर्थः वियतोऽधिकरणत्वेन विवक्षितत्वात् द्वितीया न कृता । भूमौ च मण्डलानि तिर्य्यग्भ्रमणानि विचेरतुः आचरितवन्तौ । अन्योन्यं प्रदुद्रुवतुः उपतापितवन्तौ न च शश्रमतुः श्रान्तौ ॥ ११० ॥ ज० म०

वियतीत्यादि । तौ नीलप्रहस्तौ वीरौ वियति आकाशे गतौ अञ्जगत्यां आन्तादादीति खेरान् । भूमौ मण्डलानि तिर्य्यग्भ्रमणानि विचेरतुर्विहितवन्तौ अन्योन्यं प्रदुद्रुवतुः उपतापितौ द्रुघोपतापे द्रुदुगतौ नतु शश्रमतुः श्रान्तौ श्रमुश्यजिदर् तपःखेदयोः ॥११०॥ म०

समीरयामित्यादि । अथानन्तरं कपिः राक्षसस्य शिलां समीर-

तुतुषुर्वानराः सर्वे नेशुश्चित्रा निशाचराः ।
जेरुराशा दशास्यस्य सैन्यं नीलं नुनाव च ॥ ११२ ॥
यदा न फेलुः क्षणदाचराणां मनोरथा रामबलाभियोगे ।
लङ्कां तदा भेजुरदीर्घदैन्या व्याचख्युरस्मै च हतं प्रहस्तम् ११३

इति भट्टिकाव्ये तिङ्काण्डे लिड्विलसितो नाम
प्रथमः । काव्यस्य चतुर्दशः सर्गः ॥

——॰॰——

याञ्चकार चिक्षिप्तवान् ईरक्षेप इति चौरादिक उदात्तेत् । असौ राक्षसस्तया शिलया हतः सन् ममार हतवान् भूतलञ्च शिश्राय आश्रितवान् पतित इत्यर्थः ॥ १११ ॥ ज० म०

समीत्यादि । अथानन्तरं कपिर्नीलो राक्षसस्य प्रहस्तस्य शिलां समीरयाञ्चकार विचिक्षिप्तवान् ईर्किंगतौ तुदि । तया शिलया क्षतस्ताड़ितोऽसौ प्रहस्तो मृतः मृङ्लुङ्लिङ्क्ष्विति नियमात् पं भूतलञ्च आश्रितवान् श्रिञसेवने ॥ १११ ॥ भ०

तुतुषुरित्यादि । वानराः सर्वे तुतुषुः तुष्टाः । निशाचरा नेशुः पलायिताः । चित्राः नानाप्रकाराः दशास्यस्य आशाः मनोरथा जेरुः जीर्णाः वा जृम्भसु इत्येतस् । सैन्यञ्च कर्तृ नीलं नुनाव स्तौतिस्म ॥ ११२ ॥ ज० म०

तुतुषुरित्यादि । ततः सर्वे वानरास्तुष्टाः तुष्लृयौत्रिच चकारात्तुष्टौ तुष्टुवुरिति पाठे नीलमिति योज्यं चित्रा नानाप्रकारा निशाचरा नेशुः पलायिताः णशल्यूनाशे । दशास्यस्य आशा मनोरथा जीर्णाः जृगिकिज्यानौ ऋतोगुः कित्यां तृफलेत्यादिना पात्विकमेत्वं खिलोपश्च गेलुरिति पाठे गलभक्षे अनेकार्थत्वात् गतावपि । सर्वमेव सैन्यं कर्तृ नीलं नुनाव तुवस्तुतौ नूशिस्तवने वा ॥ ११२ ॥ भ०

यदेत्यादि । क्षणदाचराणां रामबलाभियोगे मनोरथा वाञ्छितानि यदा न फेलुः न फलिताः प्रहस्तस्य व्यापादितत्वात् तदा लङ्कां

भेजुः सेवितवन्तः उदीर्णदैन्याः उदीर्णं महद्दैन्यं दीनभावो येषामिति प्रहस्तश्च हतं स्फुतमुच्चैराचख्युः आख्यातवन्तः रावणायेत्यर्थात् ॥११२॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लिड्विलसितो नाम प्रथमः परिच्छेदः। काव्यस्य चतुर्दशः सर्गः।

यदा नेत्यादि। रामबलस्य हनने क्षणदाचराणां राक्षसानां मनोरथा यदा न फेलुः फलनिष्पत्तौ तृफलेति एत्वं खिन्नोपश्च तदा निशाचरा लङ्कां भेजुः सेवितवन्तः भजञ्भागसेवयोः हतं प्रहस्तमुच्चैराख्यातवन्तश्च रावणमित्यर्थात् ख्याख्यातौ चक्षिङः ख्याञ् वा उदीर्णं महद्दैन्यं येषाम् कर्तृगगत्यां क्तः ॥ ११२ ॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेन-विरचितायां मुग्धबोधिन्यां भट्टिटीकायां शरबन्धो नाम चतुर्दशः सर्गः।

# पञ्चदशः सर्गः।



राक्षसेन्द्रस्ततोऽभैषीद्दैक्षिष्ट परितः पुरम्।
प्रातिष्ठिपच्च बोधार्थं कुम्भकर्णस्य राक्षसान् ॥ १ ॥

---

इतः प्रभृति लुङमधिकृत्य तद्विलसितमाह तत्र भूतसामान्ये लुङ् ततोऽन्यत्रापि दर्शयिष्यति।

राक्षसेत्यादि। ततः प्रहस्तवधश्रवणानन्तरम् ईदृशोऽपि व्यापादित इति अभैषीत् ञिभी भये सिचि वृद्धिः परितः समन्तात् पुरं लङ्कामैक्षिष्ट दृष्टवान् किमत्र शक्यते स्थातुं न वेति कुम्भकर्णस्य सुप्तस्य बोधनार्थं राक्षसान् प्रातिष्ठिपत् प्रस्थापितवान् तिष्ठतेर्लुङ् परे णावुपधाह्रस्वः

तेऽभ्यगुर्भवनं तस्य सुप्तं चैक्षिषताथ तम्।
व्याहार्षुस्तुमुलान् शब्दान् दण्डैश्चावधिषुद्रुतम् ॥ २ ॥

---

स्यापवादः तिष्ठतेरिदितीत्वं द्विर्वचनमभ्यासकार्यं धातोरादेशः षत्वं ष्टुत्वञ्च ॥ १ ॥ ज० म०

अथ टीमधिकृत्य तद्विलक्षितमुच्यते पाणिनिमते लुङिति संज्ञा।

राक्षसेन्द्र इत्यादि। राक्षसेन्द्रो रावणः ततः प्रहस्तवधादभैषीत् भीतः जिभीञ्जिभीत्यां भवद्भूतभव्ये लिशः इति भूतसामान्ये टो षीटीयीव्वमिति धातोरादौ मित्त्वादम् च्यां सिः नेमेकाजादिति इमोऽभावः व्रजवदेत्यादिना व्रिः रुदाद्यस्तिसेरिति ईम् क्विशादिति षः। परितः समन्तात् पुरं लङ्कां वीक्षितवान् किमत्र स्यातुं शक्यते न वेति ईक्षङ्दर्शने भूयोऽमजादेरिति चमि कृते पुनरम् व्यादिगेचोरिति सन्धिः वधोऽरक्षेतीम् षत्वं ष्टुभिरिति तस्य टः। राक्षसान् कुम्भकर्णस्य बोधार्थं प्रस्थापितवांश्च ष्ठा स्थाने जिः प्रेरणे ह्रीव्लीत्यादिना व्यादन्तत्वात्पुन् जिश्रिद्रुस्रुकम इति चङ् स्योजोजरङीरितीत्वं धुद्विच्छङि जेर्लोपः ॥ १ ॥ भ०

तेऽभ्यगुरित्यादि। ते राक्षसास्तस्य कुम्भकर्णस्य भवनं गृहम् अभ्यगुः गताः इणो गेति लुङि विषयभूते गादेशः गातिस्थेति सिचो लुक् तस्य पदान्तादिति पररूपत्वं ते च सुप्तमैक्षिषत दृष्टवन्तः अथानन्तरं प्रबोधार्थं तुमुलान्महतो ध्वनीन् व्याहार्षुः व्याहृतवन्तः नेटीति वृद्धिप्रतिषेधः हल्समुदायपरिग्रहणाद्वृद्धेः प्राप्तत्वात् ॥ २ ॥ ज० म०

तेऽभ्यगुरित्यादि। ते राक्षसास्तस्य कुम्भकर्णस्य भवनं गृहम् अभ्यगुर्गतवन्तः इणोगतौ गा व्यामिति इणो गादेशः अनुस्विहे: भूस्थापिवदेश इति सेर्लुक् उस्येचीत्यालोपः सुप्तं तं कुम्भकर्णम् ऐक्षिषत दृष्टवन्तः सान्तोऽदनतः अथानन्तरं प्रबोधार्थं तुमुलान् महतः शब्दान् व्याहार्षुः व्याहृतवन्तः चक्रुरित्यर्थः हृञ् हृत्यां नेमेकाजादिति इमनिषेधः व्रजवदेत्यादिना व्रिः अनुस्विहेः दण्डैश्च द्रुतमावधिषुः हन-

 ॥ भ०

केशानलुञ्चिषुस्तस्य गजान् गात्रेष्वविभ्रमन् ।
शीतैरभ्यषिचंस्तोयैरलातैश्चाप्यदम्भिषुः ॥ ३ ॥
नखैरकर्त्तिषुस्तीक्ष्णैरदाङ्क्षुर्दशनैस्तथा ।
शितैरतौत्सुः शूलैश्च भेरीश्चावीवदन् शुभाः ॥ ४ ॥

केशानित्यादि । तस्य केशानलुञ्चिषुः उत्पाटितवन्तः गात्रेषु गजानचिक्रमन् क्रमयन्ति स्म क्रमेर्णन्तात्स्थितत्वं ञायां ह्रस्वत्वं चङिल-ल्वद्भावादभ्यासस्य सन्वत इति इत्वं शीतैस्तोयैरभ्यषिचन् सिञ्चन्ति स्म अत सिचिरभ्युपसर्गे वर्त्तते तेनोदकस्य करणत्वं षिपिसिचिवद्भ्येत्यड्-व्याक् सितादद्भ्यवायेऽपीति षत्वम् अलातैरङ्गारैश्चाप्यदम्भिषुः दग्धवन्तः अनेकार्थत्वाद्धातूनाम् ॥ २ ॥ ज० म०

केशानित्यादि । ते राक्षसास्तस्य कुम्भकर्णस्य केशान् अलुञ्चिषुः उत्पाटितवन्तः लुञ्चापनयने गात्रेषु हस्तिनो भ्रमयन्ति स्म अनुजग्-माते ञिः अङ् द्वित्वं अत्रङुरङ् इति स्वः घटादीत्यादिना वा खेः कन्वत् स्वच्छेलनि अचिक्रमन्निति पाठे क्रमुगतौ शीतैस्तोयैरभिषि-ञ्चन्ति स्म षिचपणौज्ञचरणे अभिपूर्वः प्रोक्षणमाह तेन तोयानां कर-णत्वं वक्तास्येत्यादिना ङः लोपोतोदेचोः गीक इत्यादिना षत्वम् । अलातैरङ्गारैरपि अदम्भिषुर्दग्धवन्तः दम्भु न, दम्भे अनेकार्थत्वा-द्धातूनामर्थः ॥ २ ॥ भ०

नखैरित्यादि । तीक्ष्णैर्नखैरकर्त्तिषुश्छिन्नवन्तः तथा दशनैस्तीक्ष्णै-रदाङ्क्षुः दशन्ति स्म दंशेरनिटो हलन्तलक्षणा वृद्धिः व्रश्चेत्यादिना षत्वं षढोः कः से शीतैस्तीक्ष्णैः शूलैरतौत्सुः व्यथयन्ति स्म तुदोर-निटो हलन्तलक्षणा वृद्धिः भेरीश्च शुभाः उच्चैःशब्दा अवीवदन् वादि-तवन्तः सन्वल्लघुनीति सन्वद्भावादभ्यासस्येत्वं दीर्घो लघोरिति दीर्घत्वम् ॥ ४ ॥ ज० म०

नखैरित्यादि । तीक्ष्णैर्नखैश्छिच्छिदुः अतीवपच्छिदि तथा तीक्ष्णै-र्दन्तैर्दशन्ति स्म दन्शो दशने च्लां सिः औदित्त्वाद्वेम् अनिमृत्वात् व्रजवदे-त्यादिना व्रिः शच्छ्रानिति षड् षढोः कः ग्नोर्ढं : जस् ोः क्रियादिवि

स तान्नाजीगणत् सर्वानिच्छयावुद्ध च स्वयम् ।
अबूबुधत कस्मान्मामप्राक्षीच्च निशाचरान् ॥ ५ ॥
तेऽभाषिषत राजा त्वां दिदृक्षुः क्षणदाचर ! ।
सोऽस्नासीद् व्यलिपन्मांसमप्सासीद्दारुणीमपात् ॥ ६ ॥

यः अनुस्निग्धैः शितैस्तीक्ष्णैः मूलैरपि व्यथयन्तिस्म तद्दशऔव्यये अनि-सृत्वाट्ठिनिः झपझसोरिति दस्य तः शुभाः शोभनाः उच्चैःशब्दा भेरी-वादितवन्तः वदेर्णिः कर्त्तुः फलवत्त्वाविवक्षायां पं वदक् वाक्सन्देश-योरित्यस्मात् चुरादेर्ण्यन्ताद्वाजिरङ् द्वित्वं अरङुरङः स्वः सन्वत् जे-र्लोपः ॥ ४ ॥ भ०

स तानित्यादि । कुम्भकर्णः तान् सर्वान् उपद्रुतान् नाजीगणत् न गणयतिस्म न वेदितवानित्यर्थः । गणेः स्वार्थिकण्यन्तस्यादन्तस्या-भ्यासस्य ईचगण इतीत्वं स्वयं चात्मन इच्छयावुद्ध बुध्यतेस्म झलो-झलीति सिचो लोपः निशाचरांस्त्वाप्राक्षीत् दृष्टवान् हलन्तलक्षणा वृद्धिः व्रश्चेत्यादिना षत्वं षढोः कः सि कस्मान्मामबूबुधत यूयं प्रबो-धितवन्तः बुधेर्ण्यन्तस्य मध्यमपुरुषबहुवचने णौ चङ्युपधाया ह्रस्व-त्वम् अभ्यासस्य दीर्घो लघोरिति दीर्घत्वम् ॥ ५ ॥ ज० म०

स तानित्यादि । स कुम्भकर्णस्तान् तुमुलशब्दादीन् न गणयतिस्म गणत्कसंख्याने चुर्य्योणिः अदन्तत्वात् ञ्णित्यन्तेजुङतोरित्यस्य न विषयः हसान्नोपोऽशित्ययोरित्यकारलोपः वेङ्गणकथेति पाक्षिकः खेरीङ् स्वयमिच्छया च प्रबुद्ध बुध्योङ्वेदने पदस्तनीण्धेप्यायेत्यस्या-प्रष्टत्तिपक्षे सिः तस्य इगुङुर्मढोस्यनिमिति किच्चात् गुणाभावः झस-न्नादिति सेर्लोपः ढभात्तयोरिति धः झपझसोरिति भस्य दः खेः स-न्विदिति दीर्घः प्रच्छौगशीप्सें अनिसृत्वाट्ठिनि षढोः कः ॥ ५ ॥ भ०

त इत्यादि । ते राक्षसा यथोक्ताः सन्तः अभाषिषत भाषित-वन्तः हे क्षणदाचर ! राजा रावणस्त्वां दिदृक्षुः द्रष्टुमेषणशील इति न लोकेति षष्ठीप्रतिषेधः स कुम्भकर्णः श्रुत्वा अस्नासीत् स्नात-वान् यमरमेत्यादिना सगिटौ व्यलिपत् समालिप्तवान् लिपिसिची-

न्यवसिष्ट ततो द्रष्टुं रावणं प्रावृतत् गृहात्।
राजायान्तं तमद्राचीदुदस्थाच्चैषदासनात्॥ ७॥

त्यङ् मांसमघासीत् घ्माभक्षणे वारुणीमपाव् पीतवान् गातिस्थेति सिचो लुङ्॥ ६॥ ज० म०

तेऽभाषिषतेत्यादि। ते दृष्टा निशाचरा भाषितवन्तः भाषङ् वाचि मान्तोऽदनतः। किमित्याह हे चण्डाचर! राजा रावणस्त्वां द्रष्टुमिच्छुः टघेक्षतीत्यादौ उदन्तकर्ज्जनाव् न कर्मणः षष्ठी स कुम्भ-कर्णः स्नातवान् ष्णालशोधने श्वाद्यादीति षस्य सत्वं तन्निमित्तस्य णस्य नत्वं च्यां सिः स्ट्राद्यस्तीति दम् यमरमेति इमृषनौ असत्वाज् झसीति सेर्लोपः ष्टै वेष्टे अनेकार्थत्वात् स्नानमप्याहेत्यन्ये, स्नातः सन् व्यबिपत् चन्दनानुलेपनं कृतवान् जिविपौशपलेपे वक्रस्येत्यादिना ङः मांशम् अप्सासोत् भक्षितवान् घ्मावभक्षणे वारुणीं मदिरामपात् पापाने भूस्थापिबेति सेर्लुक्॥ ६॥ भ०

न्यवसिष्टेत्यादि। ततो रावणं द्रष्टुं न्यवसिष्ट पूर्वनिवसितं वसनं त्यक्त्वा अन्यद्वस्त्रं परिदधातिस्म गृहात् स्वस्मात्प्रावृतत् प्रवृत्तः द्युभ्योलु-ङीति परस्मैपदं पुषादित्वादङ् तमायान्तं राजाद्राचीत् दृष्टवान् स्वजिदृशोरित्यम् हलन्तलक्षणा वृद्धिः आसनाच्च ईषदुदस्थात् उत्थितः जर्द्धकर्मकत्वादात्मनेपदं न भवति॥ ७॥ ज० म०

न्यवेत्यादि। कुम्भकर्णो न्यवसिष्ट राजदर्शनोचितवस्त्रं परि-हितवान् वसवङ् स्तृतौ ततोऽनन्तरं स्वकीयाद् गृहात् रावणं द्रष्टुं प्रवृत्तः वृतङ्वल्वर्त्तने शासलिद्युदिति द्युतादित्वात् ङः तेनैव पं राजा रावणस्तमागच्छन्तमद्राचीत् दृष्टवान् दृदृशौ प्रेक्षे इरित्त्वात् पाक्षिको ङः तदभावे च्यां सिः कृशसोऽनिमिजुङ् इत्यादौ इत्वर्जनान्न सक् वर्द्रोऽकिति छ्रट्रः अनिमृत्वाद्वृजवदेति त्रिः शच्छ्राजिति षङ् षढोः कः किवादिति षः दृष्टा आसनादीषदुत्थितः उत्पूर्वतिष्ठतेरूर्द्ध-चेष्टायां पं उदोऽनुर्द्धे हे इत्युक्तेः भूस्थापिबेति सेर्लुक्॥ ७॥ भ०

अतुषत् पीठमासन्ने निरदिक्षच्च काञ्चनम् ।
अस्मेष्ट कुम्भकर्णोऽल्पमुपाविक्षदथान्तिके ॥ ८ ॥
अवादीत्मां किमित्याह्वो राज्ञा च प्रत्यवादि सः ।
मा ज्ञासीस्त्वं सुखी रामो यदकार्षीत् स रक्षसाम् ॥९॥

अतुषदित्यादि । दृष्ट्वा चातुषत् तुष्टः पुषादित्वात् ङः आसन्ने चात्मनः काञ्चनं पीठं निरदिक्षत् आदिष्टवान् दिशेः शल इगुपधादनिटः क्स इति क्सः । अथानन्तरं कुम्भकर्णः अस्मेष्ट ईषद्धसितवान् स चार्थो येनायमादर इति अन्तिके चास्य काञ्चनं पीठमध्यास्य पीठे उपाविक्षत् उपविष्टः पूर्ववत् क्सः ॥ ८ ॥ ज० म०

अतुषदित्यादि । दृष्ट्वा अतुषत् तुष्टोऽभूत् तुष् तुष्टयोजि च चकारात् तुष्टो पुषादित्वात् ङः क्षितोङष्टी पे इरितस्तु वेत्यनेनैवेष्टसिद्धौ पूर्वाचार्य्यक्रमदर्शनात् शासलिट्द्युतुपुषादेरित्यादिसूत्रस्य तथाकरणे मुग्धबोधस्य कविकल्पद्रुमात्माक् कृतत्वात् गौरवं न वाच्यम् एतमन्यत्राप्यवधेयम् आसन्ने आत्मन आसन्ने समीपदेशे काञ्चनं पीठमादिष्टवान् दिशेः हशसोऽनिमिजुङ् इति सक् षढोः कः से काञ्चनस्य विकार इति विकारसंघेति ष्णः अनन्तरं कुम्भकर्णोऽल्पमस्मेष्ट स्मितं चकार स्मिङ् स्मिते यद्यपि स्मितमीषद्धसनं तथापि राजसान्निध्ये स्मितस्याप्यनौचित्यादल्पलभ्यमानहसनायाल्पमित्युक्तं हास्यमात्रेऽपि स्मितमिति केचित् । स्मितोत्पत्तिः काव्यवशात्तादृशादरदर्शनात् नेमेकाजादिति इम्निषेधः अन्तिके रावणसमीपे उपविष्टवान् । अथात् काञ्चनपीठे विद्यासागरस्तु अल्पं रावणपीठापेक्षया स्वल्पं काञ्चनपीठमुपाविक्षदित्याह तन्न साधु आधारप्रसङ्गात् शीविशप्रवेशे उपपूर्व आसने ॥ ८ ॥ भ०

अवादीदित्यादि । तत उपविश्य तमवादीदुक्तवान् अजेत्यादिना दृष्टिः किमिति कस्मात् कारणात् मामाह्वः आहूतवान् लिपिसिचिह्वेत्यङ् आतो लोपः राज्ञा च स कुम्भकर्णः प्रत्यवादि प्रत्युक्तः

उदतारीदुदन्वन्तं पुरं नः परितोऽरुधत्।
व्यद्योतिष्ट रणे शस्त्रैरनैषीद्राक्षसान् क्षयम्॥ १०॥

कर्मणि लुङ् चिण्भावकर्मणोरिति चिण् चिणो लुगिति तलोपः। सुखी त्वं येन रामो रक्षसां यदकार्षीत् तत्त्वं नाज्ञासीः न ज्ञातवानसि यमरमेति सगिटौ॥ ९॥ ज० म०

अवादीदित्यादि। उपविश्य कुम्भकर्णो रावणमवादीत् उक्तवान् वदैवाचि व्रजवदेति वृद्धिः किमवादीदित्याह किमिति कस्मात् कारणात् त्वं माम् आह्वः आहूतवान् ह्वेञ्स्पर्द्धे वक्तव्य इति ङः एणोऽस्मित्या उच्चीत्यालोपः। रावणेन च स कुम्भकर्णः प्रत्यवादि प्रत्युक्तः स्नोर्यगिणाविती इण् उ इत्यन्ते जुङ्त इति वृद्धिः इणस्तनलोपः स नरात्मा रामो रक्षसां यत् कृतवान् भयमित्यर्थात् तत्सर्वं सुखी त्वं न ज्ञातवान् ज्ञावबोधने यमरमेति इमसनौ कज्जतो कजदङ्कतौ वा नेमेकाजिति इम्निषेधः व्रजवदेत्यादिना वृद्धिः॥ ९॥ म०

उदतारीदित्यादि। स उदन्वन्तं समुद्रमुदतारीत् उत्तीर्णः सिचि वृद्धिः नोऽस्माकं पुरं परितः समन्तादरुधत् आवृतवान् इरितो वेत्यङ् रणे शस्त्रैर्व्यद्योतिष्ट द्योतितवान् द्युतादेर्लुङीति विकल्पेन परस्मैपदविधानादात्मनेपदं राक्षसान् क्षयं विनाशमनैषीत् नीतवान्॥ १०॥ ज० म०

उदतारीदित्यादि। रामः उदन्वन्तं समुद्रम् उत्तीर्णवान् तृ तरेऽभिभवे मुत्वां क्वां सिः इदाद्यस्तीति ईम् वसोरस्य तीम् व्रजवदेति वृद्धिः कसस्वादिति सेर्लोपः। उदकं विद्यतेऽस्येत्युदन्वान् मनीषादित्वात् कस्य नत्वम् अस्माकं पुरं परितः समन्तात् रुद्धवान् रुधिरोज् आवृतौ इरित्त्वात् शासलिट्द्युदित्यादिना पाक्षिको ङः रणे शस्त्रैर्विद्योतितवान् द्युतस्ङ्ङपि अपिशब्दात् द्युत्वां द्युतादेर्दीपे ङविधानात् पं गम्यते ङित्त्वान्मं भवत्येव तेन क्वां द्युतादेरुभयपदित्वं मे सिरेव। राक्षसान् क्षयं नीतवान् णीञ प्रापणे तत्त्वं नाज्ञासीरिति सम्बन्धः॥ १०॥ म०

न प्रावोचमहं किञ्चित्प्रियं यावदजीविषम् ।
बन्धुस्त्वमर्थितः स्नेहान्मा द्विषो न वधीर्मम ॥ ११ ॥
वीर्यं मा न दद्दर्शस्त्वं मा न त्रास्थाः क्षतां पुरम् ।
त्वत्तोऽद्राक्ष्म वयं वीर्यं त्वमजैषीः पुरा सुरान् ॥ १२ ॥

न प्रावोचमित्यादि । यावदजीविषं यावन्तं कालं जीवितः तावन्तं कालं कस्यचित्प्रियं किञ्चिन्न प्रावोचं नोक्तवानहमिति तव विदितमेव किन्तु बन्धुस्त्वं स्नेहादर्थितः सन् मम सम्बन्धिनो द्विषः शत्रून् मा न वधीः मा न मारयेति किन्तु मारयेति माङि लुङ् सर्वलकारापवादः प्रावोचमिति वच उम् ॥ ११ ॥ ज० म०

न प्रावोचमित्यादि । यावन्तं कालमहं जीवितवान् तावन्तं कालं किञ्चित् प्रियं न प्रावोचं नोक्तवानस्मि प्रार्थयामित्वेति भावः सम्प्रति बन्धुस्त्वमिति कृत्वा स्नेहात्प्रार्थितोऽसि मम द्विषः शत्रून् त्वं मा न वधीः किन्तु मारय वचोवाचि वक्तुरस्त्वेत्यादिना ङः वच्यस्थिपतामिति वोचादेशः जीवप्राणे हनत्रौ गतौ बधे माटो वेति टो घीटीर्थीत्थिति मायोगेऽमोऽभावः हनबधष्टीति बधादेशः ॥ ११ ॥ भ०

वीर्यमित्यादि । त्वं वीर्यं मा न दद्दर्शः किन्तु दर्शय शयन्तस्य चङि रूपं क्षतां परैरवसादितां पुरं मा न त्रास्थाः किन्तु त्रायस्व त्रैङ्पालने न च त्वमशक्तः यतस्तव वीर्यमद्राक्ष्म दृष्टवन्तो वयं न दृश इति क्सादेशो न भवति इरितो वेति विकल्पेनाङ्विधानात्तदभावपक्षे रूपं पुरा पूर्वं त्वं सुरान् देवानजैषीः जितवानसि ॥ १२ ॥ ज० म०

वीर्यमित्यादि । त्वं वीर्यं स्वसामर्थ्यं मा न दद्दर्शः किन्तु दर्शय दृशेर्ण्यन्तादङ् क्षतां शरैः पीड़ितां पुरं लङ्कां मा न त्रास्थाः किन्तु त्रायस्व त्रैङ्पालने न त्वमसमर्थः यतस्तव वीर्यं वयं दृष्टवन्तः दृष्टशोमप्रेक्षे इरित्त्वात् ङस्याप्रदृष्टिपक्षे सिः वद्रोऽकिदिति क्वतोरः अनिमित्तात् व्रजवदेति ञिः षङ् षढोः कः से त्वं पुरा पूर्वस्मिन् काले सुरान् जितवान् जिजये च ॥ १२ ॥ भ०

अवोचत् कुम्भकर्णस्तं वयं मन्त्रेऽभ्यधाम यत् ।
न त्वं सर्वं तदश्रौषीः फलं तस्येदमागमत् ॥ १२ ॥
प्राज्ञवाक्यान्यवामंस्था मूर्खवाक्येष्ववास्थिथाः ।
अध्यगीष्ठाश्च शास्त्राणि प्रत्यपत्था हितन्न च ॥ १४ ॥

अवोचदित्यादि । इत्युक्तवन्तं तं रावणं कुम्भकर्णोऽवोचत् उक्तवान् मन्त्रे मन्त्रणासमये क्रियासमारम्भगतोऽभ्युपाय इत्यादिना यद्वयमभ्यधाम अभिहितवन्तः धाधातोर्गातिस्थेति सिचो लुक् तत्सर्वं त्वं नाश्रौषीः न श्रुतवानसि तस्याश्रवणस्येदं फलं विनाशरूपमागमत् आगतं गमेर्लृदित्वादङ् ॥ १२ ॥ ज० म०

अवोचदित्यादि । इत्युक्तवन्तं तं रावणं कुम्भकर्ण उक्तवान् वचः पूर्ववत् ङः वोचादेशश्च मन्त्रे मन्त्रणायां वयं यदुक्तवन्तः तत्सर्वं त्वं न श्रुतवान् तस्याश्रवणस्य इदं फलं विनाशरूपमागतं डुधाञ् धारणे पुष्टौ दानेऽभिपूर्वो भाषणे वर्त्तते भूस्थापिवदेन इति सेर्लुक् देत्यनेन दा धादेति दासंज्ञकस्य ग्रहणात् श्रुगतौ श्रुतौ नेमेकाजिति इण्निषेधः गम्लृगत्यां लृदित्त्वात् ङः ॥ १२ ॥ भ०

प्राज्ञवाक्यानीत्यादि । प्राज्ञानां विभीषणादीनां वाक्यान्यवामंस्थाः अवज्ञातवानसि मनज्ञाने मूर्खवाक्येषु प्रहस्तादिवाक्येषु अवास्थिथाः अवस्थितोऽसि समवप्रविभ्यः स्थ इति तङ् स्थाघ्वोरिश्चात्वञ्च शास्त्राण्यध्यगीष्ठा अधीतवानसि विभाषालुङ्लृङोरिति इङो ग्यादेशः न च हितं प्रत्यपत्थाः प्रतिपन्नवानसि पदगतौ झलो झलीति सिचो लोप ॥ १४ ॥ ज० म०

प्राज्ञवाक्यानीत्यादि । त्वं प्राज्ञानां विभीषणादीनां वाक्यानि अवामंस्थाः अवज्ञातवान् मनदुङ्बोधे मूर्खाणां प्रहस्तादीनां वाक्येषु अवस्थितोऽसि प्रतिज्ञानिर्णयेत्यादिना अवपूर्व तिष्ठतेर्मं स्थाघोर्ङिरिति ङिः गुणाभावश्च झस्खाजझसीति सेर्लोपः शास्त्राणि अधीतवानसि किन्तु हितं न प्रतिपन्नवानसि अधीङ्ल अध्ययने अध्युपसर्गोपादानं सहप्रयोगनियमार्थं गोङ्टीय्योर्वेति ग्यादेशः दीर्घादेशो गुणाभाव-

मूर्खास्त्वामववञ्चन्त ये विग्रहमचीकरन् ।
अभाक्षीन्माल्यवान् युक्तमचंस्थास्त्वन्न तन्मदात् ॥ १५ ॥
राघवस्यामुषः कान्तामाप्तैरुक्तो न चार्पिपः ।
मा नानुभूः स्वकान् दोषान् मा मुहो मा रुषोऽधुना ॥१६

स्पष्टार्थः धेत्वान्नणुरित्युक्तश्च यौपदङ्गतौ कम् स्वाज् कमीति सेर्लोपः ॥ १४ ॥ भ०

मूर्खा इत्यादि । मूर्खाः सर्व एवैते त्वामववञ्चन्त विप्रलब्धवन्तः वन्चुप्रलम्भने स्यन्तस्य ण्यधिवञ्चीत्यादिना तङि चङि रूपं ये विग्रहम-चीकरन् कारितवन्तो भवन्तम् एष मातामहो माल्यवान् युक्तमभा-क्षीत् भणितवान भणशब्दे इटईटीति सिचो लोपः तत् त्वं मदान्ना-चंस्था न सोढवानसि चमू सहने ॥ १५ ॥ ज० म०

मूर्खास्त्वामित्यादि । ये प्रहस्तादयो विग्रहं कारितवन्तस्ते मू-र्खास्त्वां वञ्चितवन्तः माल्यवान् यद्युक्तं न्याय्यमुक्तवान् त्वं मदान्न सोढ-वान् वन्चङ्कवञ्चने प्रतारे वञ्चिगर्द्धेरिति सं जिम्भीत्यङ्कलो अग्रन्त-दाङ् अङ्ग्रङः स इति ह्रस्वत्वे सेः सन्वद्दद्धाविति सन्वत् स्यस्येत्वनीति इत्वं हसादेर्घस्येति दीर्घत्वं भण च चकारात् शब्दे हसादेः सेम इति पक्षे त्रिः चमूङ् जिमच चकारान्मर्षे जदित्त्वाद्वेमूदित्स्वरेत्यस्या-प्रवृत्तिपक्षे म्नोर्नुः ॥ १५ ॥ भ०

राघवस्येत्यादि । प्रमादित्वमपि तेऽस्ति यतो राघवस्य कान्ताम् अमुषः खण्डितवानसि खण्डनञ्चास्या इदं यद्भर्त्रा वियोजनं मुषखण्डने मुषादित्वादङ् मुषादयश्च गणान्ता गृहीताः आप्तैर्विभीषणादिभिरुक्तो चार्पिपः नार्पितवानसि कान्ताम् ऋर्त्तेर्णौ अर्त्ति ह्रीत्यादिना पुगन्त-गुणः चङि द्विर्वचने चीति स्थानिवद्भावादजादेर्द्वितीयस्येति पिशब्दो द्विरुच्यते रेफस्य नन्द्रा इति प्रतिषेधः तदधुना स्वकानात्मीयान्दोषान् दुश्चरितानि मा नानुभूः अपितु त्वमनुभव माङि लुङ् गातिस्येति सिचो लुक् मा मुहः मोहं मा गमः मा रुषः रोषं मा कार्षीः मुहिरुषिभ्यां पुषादित्वादङ् ॥ १६ ॥ ज० म०

तस्याप्यत्यक्रमीत् कालो यत्तदाहमवादिषम् ।
अघानिषत रक्षांसि परैः कोषांस्त्वमव्ययीः ॥ १७ ॥

राघवस्येत्यादि । प्रमादित्वमपि तवास्ति यतस्त्वं राघवस्य कान्ता-मनुपः अपहृतवान् मुष्य इच्छिदि अनेकार्थत्वादपहारार्थः कान्तावियो-जनमेव वास्य छेदः शासविद्युदित्यादिना यत्र ङः आप्तैर्विभीषणा-दिभिरुक्तोऽपि त्वं तां न चार्पितवानसि कथं गत्यां अप्रापणे च हीवृ क्षीवीत्यादिना यत्र बुच नाजन्तादेरादिहिः स्यादौ नवद्रोऽये इति वचनात् पीत्यस्य द्वित्वं जेर्लोपः अधुना स्वीयान् दोषान् आत्मीयचेष्टि-तानि मा न अन्वभूः किन्तु अनुभव अनुपूर्वभवतेर्भूस्थापिबेति सेर्लुक् त्वं मा मुहः मोहं मा गमः मा रुषः रोषं मा कार्षीः मुहिञ्जि वैचित्त्ये रुषिञ्जिक्रुधि आभ्यां शासविद्युदिति ङः ॥ १६ ॥ भ०

तस्येत्यादि । यत्तदा तस्मिन् कालेऽहमवादिषम् अभिहितवानस्मि रामः सन्धीयतामिति तस्यापि सन्धेः कालोऽत्यक्रमीदतिक्रान्तः स्नुक्रमो-रनात्मनेपदनिमित्त इतीट् मान्तत्वाद्वृद्धिप्रतिषेधः यतः परैः शत्रु-भिः रक्षांस्यघानिषत हतानि चिण्वद्भावाद्वृद्धित्वं त्वञ्च कोषमव्ययीः त्यक्तवानसि लङ्काटाहे तस्यारचितत्वात् व्ययवित्तसमुत्सर्गे इति चुरादौ पठ्यते यदा आष्टयादेति णिज् नास्ति तदा रूपं अन्तत्वाद्वृद्धिप्रति-षेधः व्ययगताविव्यस्यापि रूपम् अनेकार्थत्वाद्धातूनामुत्सर्जनेऽपि द्रष्ट-व्यम् ॥ १७ ॥ ज० म०

तस्येत्यादि । तस्मिन् काले तव यदहम् अवादिषं रामेण सह सन्धिः क्रियतामित्युक्तवानस्मि तस्यापि सन्धेः कालोऽतिक्रान्तः यतः परैः शत्रुभिः रक्षांसि हतानि त्वं कोषद्रव्यं व्ययितवानसि लङ्का-दाहे तस्यारचनात् वीरेभ्यः प्रदानाच्च क्रम्यक्रमुगतौ हसादेः सेम इत्यादौ मान्तवर्जनाच्च त्रिः वदेर्व्रजवदेति त्रिः हन्तेः कर्मणि हनयह-इयच इति मिण् हनस्तङित्यादौ इणवर्जनाच्च तङ् खेर्णीवोर्ण्णिति वेति षः मान्तोऽदनत इत्यत् व्ययञ्च गत्याम् अनेकार्थत्वात् व्ययार्थेऽपि यान्तत्वान्न त्रिः ॥ १७ ॥ भ०

सन्धानकारणं तेजो न्यगभूत्तेऽकथास्तथा ।
यत्त्वं वैराणि कोषञ्च सहदण्डमजिग्लपः ॥ १८ ॥
अक्रुधच्चाभ्यधाद्वाक्यं कुम्भकर्णं दशाननः ।
किं त्वं मामजुगुप्सिष्ठा नैदिधः स्वपराक्रमम् ॥ १९ ॥

सन्धानेत्यादि । तथा त्वमकथाः कृतवानसि तनादिभ्यस्तथासो-रिति सिचो लुक् यथा सन्धानकारणं सन्धानहेतुकं यत्तव तेजः प्रच-ण्डत्वं तत् न्यगभूत् न्यग्भूतं गातिस्थेति सिचो लुक् । कुत इत्याह यत्त्वं वैराणि शत्रुभावान् कोषञ्च सहदण्डं ससैन्यमजिग्लपः ग्लपि-तवानसि ग्लायतेर्णौपुकि ग्लास्नावनुपमाञ्चेति मित्त्वात् ह्रस्वत्वं ग्लपयतेश्चङि रूपं यदि हि तेजो भवेत् सर्वं तथावस्थितमेव स्यात् ततश्च तेजसोऽभावात् कथं सन्धानं द्वयोः परस्परानुपतापात् यथोक्तं यावन्मात्रमुपकुर्य्यात् तावन्मात्रमेवास्य प्रत्युपकुर्य्यात् तेजो हि सन्धान-कारणं तप्तं लोहं तप्तेन लोहेन सन्धत्त इति ॥ १८ ॥ ज० म०

सन्धेत्यादि । त्वं तथाकथाः कृतवानसि यथा सन्धानकारणं तव तेजो न्यग्भूतं को हि तेजस्विना सन्धिं करोति कृञ इगुङुर्भढोति से: क्ङित्त्वाद् गुणाभाव: ह्रस्वादिति सिलोपः यद्यस्मात् त्वं वैराणि वीरभावान् वीरयोग्यानि दुर्गाणि वा शत्रुत्वानि वा सह दण्डं सैन्येन सह कोषञ्च ग्लपितवानसि ग्लै क्षमे ञिः ह्रीव्लीति पन् ॥ १८ ॥ भ०

अक्रुधदित्यादि । अथैवमुक्तो दशाननः अक्रुधत् क्रुद्धवान् पुषादि-त्वादङ् क्रुद्धश्च कुम्भकर्णमभ्यधात् अभिहितवान् गातिस्थेति सिचो लुक् किमिति त्वं माम् अजुगुप्सिष्ठाः निन्दितवानसि स्वविक्रमं नैदिधः न वर्द्धितवानसि एधधातोर्ण्यन्तस्य चुङि स्थानिवद्भावादजादेर्द्वितीय-स्येति धिशब्दो द्विरुच्यते ॥ १९ ॥ ज० म०

अक्रुधदित्यादि । एवमुक्तो दशाननोऽक्रुधत् क्रुधल्ट्यौ कोपे पुषादित्वात् ङः कुम्भकर्णञ्च उक्तवान् डुधाञ्ल्धारणे पुष्टौ दाने टौ भूस्थापिबेति सेर्लुक् किमभ्यधादित्याह किं त्वं मां निन्दितवानसि

मोज्जिघ्रहः सुनीतानि मास्म क्रंस्था न संयुगे।
मोपलब्धाः कृतैर्दोषैर्मा न वाचीर्हितं परम् ॥ २० ॥
कुम्भकर्णस्ततोऽगर्जीद् भटांश्चान्यान् न्यवीवृतत्।
उपायंस्त महास्त्राणि निरगाच्च द्रुतं पुरः ॥ २१ ॥

गुपुङ् गोपनकुत्सनयोः कित्तिजगुप इति सन् निन्दायां निशानार्जव-निन्दाखित्युक्तं स्वपराक्रमं किं न वर्द्धितवानसि एधङ् वृद्धौ अग्न्ता॰ दङ् द्वित्वञ्च ॥ १९ ॥ भ॰

मोज्जिघ्रह इत्यादि। सुनीतानि सुनयान् मा उज्जिघ्रहः मा उद्गृहाण ग्रहेर्ण्यन्तस्य यङि रूपं संयुगे युद्धे विषयभूते मा क्रंस्था मोत्साहं न कार्षीः अपिनृत्सहस्य सोत्तरे लुङ् चेति चकाराल्लुङ् वृत्ति-सर्गत्यादिना क्रमेः सर्गे उत्साहे तङ् दोषैः असत्कृतैः मोपालब्धाः मोपालभस्व झलो झलीति सिचो लोपः झषस्तथोर्धोधः झलाञ्जशि हितं परं कार्य्यस्य मा न वाचीः मा न वह किन्तु वह वहेरनिटो हलन्तलक्षणा वृद्धिः ढत्वकत्वषत्वानि ॥ २० ॥ ज॰ म॰

मोज्जिघ्रह इत्यादि। शोभनानि नीतानि न उद्गृहाण ग्रहे-र्ण्यन्तादङ् प्रस्तुतमुपन्यस्यन्नाह संयुगे युद्धविषये मास्म न क्रंस्थाः किन्त्ववश्यमुत्साहं कुरु मास्मेन योगौ इति सर्वकाले टी वृत्त्युत्साह-तायने क्रम इति मं नुक्रमोऽमे इति सवर्जनादिमोऽभावः कृतैर्दोषैर्मा उपालब्धाः नोपलभस्व न भर्त्सयेत्यर्थः। लभङ्लौङ् प्राप्तौ झसस्ता-ज्झसीति सिलोपः। हितं युक्तं परं मा न वाचीः अपित्ववश्यं वहेति भावः वहेर्ञौप्रापणे अनिमृत्वाद्वृद्धिः ढोढः षढोः कः ॥२०॥ भ॰

कुम्भकर्ण इत्यादि। ततस्तद्वचनानन्तरं कुम्भकर्णोऽगर्जीत् गर्जि-तवान् अन्यांश्च भटान् पृष्ठतो गच्छतो न्यवीवृतत् निवर्त्तितवान् वृते-र्ण्यन्ताच्चङ् परे चावुपधाया ऋदित्यपवाद ऋकारादेशः महास्त्राणि उपा-यंस्त स्वीकृतवान् औपचारिकमत स्वीकरणं तेन तङ् यदि वा उपा-ङ् पूर्वाद्यमेः समुदाङ्भ्यो यमो ग्रन्थ इति तङ् पुरश्च वह्वात: द्रुतं निरगात् निर्गतः इणो गादेशः गातीति सिचो लुक् ॥ २१ ॥ ज॰ म॰

मूर्ध्ना दिवमिवालेखीत् खं व्यापद्वपुषोरुणा ।
पादाभ्यां क्ष्मामिवाभैत्सीत् दृष्ट्याधाक्षीदिव द्विषः ॥२२॥
दग्धशैल इवाभासीत् प्राक्रंस्त चयमेघवत् ।
प्राचकम्पदुदन्वन्तं राक्षसानप्यतित्रसत् ॥ २३ ॥

कुम्भकर्ण इत्यादि । ततो रावणवाक्यानन्तरं कुम्भकर्णो गर्जित-यान् गर्जोर्जशब्दे अन्यान् भटान् योद्धुमुद्यतान् निवर्त्तयामास इते-र्ग्रन्थादङ् महास्त्राणि उपायंस्त स्वीचकार यमौ विरतौ उपयमो विवाहे इति गं विवाहः स्वीकार इति व्याख्यातं यमः सूचने वाढ-हाहे इति पक्षे सिः कित्त्वाभावात् मलोपाभावः किंवा आङ्पूर्वस्य यमो जिघ्रन्तेत्यादिना गं पुरो लङ्कायाः सकाशात् शीघ्रं निर्गतः इणो गा भूस्थापिबेति सेर्लुक् ॥ २१ ॥ भ०

मूर्ध्नेत्यादि । निर्गच्छन् मूर्ध्ना दिवमलेखीदिव लिखितवानिव उरुणा महता वपुषा खं व्यापत् व्याप्तवान् लृदित्त्वादङ् क्ष्मां पृथ्वीं पादाभ्यामभैत्सीदिव विदारितवानिव द्विषः शत्रून् दृष्ट्याधाक्षीदिव भस्मसात् कृतवानिव दहभस्मीकरणे ॥ २२ ॥ ज० भ०

मूर्ध्नेत्यादि । स गच्छन् मूर्ध्ना दिवमाकाशं स्पृष्टवानिव लिख स्पर्शने उरुणा महता वपुषा शरीरेण खमाकाशं व्याप्तवानिव आप्लृ लोकि व्यापने लृदित्त्वात् ङः चरणाभ्यां क्ष्मां भूमिं भिन्नवानिव अभै-त्सीदिति भिदि ङाभावपक्षे सिः अनिमत्वाद्वृद्धिः दर्शनमात्रेणैव शत्रून् दग्धवानिव दहौ दाहे दादेर्घः अभान्तस्यादिजवामिति धः अपभस्यो-रिति कः ॥ २२ ॥ भ०

दग्धेत्यादि । महत्त्वात् कृष्णत्वाच्च दग्धशैलवदभासीत् भातिस्म भादीप्तौ यमरमेति सगिटौ चयमेघवत्प्राक्रंस्त प्रस्थितः प्रोपाभ्यां समर्था-भ्यामिति तङ् प्रतिष्ठमानस्य उदन्वन्तमचकम्पत् कम्पितवान् कपिच-लने इदितो यमन्तस्य चङि रूपं राक्षसानपि अतित्रसत् त्रासितवान् त्रसेरयं न्तस्य चङि रूपम् ॥ २२ ॥ ज० भ०

दग्धेत्यादि । अतिकृष्णत्वात् महत्त्वाच्च दग्धपर्वत इव स भाति

सपक्षोऽद्रिरिवाचालीत्यश्वसीत् कल्पवायुवत्।
अभाषीद् ध्वनिना लोकानभ्राजिष्ट चयाग्निवत् ॥२४॥
अनंसीत् भूर्भरेणास्य रंहसा शाखिनोऽलुठन्।
सिंहाः प्राद्रुद्रुवन् भीताः प्राक्षुभन् कुलपर्वताः ॥२५॥

स भावपदीप्तौ यमरमेति इमृसनौ प्रलयसम्बन्धिमेघ इव प्रक्रमतेश्च प्रोपादारम्भे इति सं गच्छन् समुद्रमपि कम्पितवान् कपिङ् पिचाले अत्रबादङ् न केवलं कपीन् राक्षसानपि त्रासयामास वसेर्जनना-दङ् ॥ २३ ॥ भ०

सपक्ष इत्यादि। सपक्ष इवाद्रिः बालोः पक्षानुकारित्वात् अचा-लीत् चलितः चालन्तात्सिचि इडिः क्रोधात्कल्पान्तवायुवन्त्यवसीत् निःश्वसितवान् ह्मन्तेति इडिप्रतिषेधः ध्वनिना लोकानभाषीत् पूरित-वान् भ्रजभरणे ईडन्तस्य सिचि इडिः अभ्राजिष्ट भ्राजतेश्च चयाग्नि-वत् पिङ्गलकेशत्वात् लोकविनाशहेतुत्वाच्च ॥ २४ ॥ ज० म०

सपक्ष इत्यादि। स पक्षयुक्तः पर्वत इव चलितः बालोः पक्षव-त्त्वात् चलेर्व जवदेत्यादिना व्रिः प्रलयवायुरिव निःश्वासं चकार हसा-देः सेम इत्यादौ श्वसवर्जनात् न व्रिः। ध्वनिना लोकत्रयं पूरितवान् भ्लटिटुडुज् भ्रतिपुच्छोः नेमिकाजिति अनिम् प्रलयाग्निरिव भ्राजतेश्च लोकविनाशकत्वात् पिङ्गलकेशाच्च भ्राजृङ्णटुभ्राराङ्गाधि ॥ २४ ॥ भ०

अनंसीदित्यादि। अस्य भरेण भूरनंसीत् नता यमरमेति सगिटौ रंहसा वेगेन शाखिनो वृक्षा अलुठन् पतिताः रुठलुठप्रतिघाते द्युता-दित्वादङ् द्युतादीनामनुदात्तेत्त्वात्तङ् द्युभ्योलुङीति परस्मैपदविकल्पः सिंहाः भीताः सन्तः प्राद्रुद्रुवन् पलायिताः णिश्रीत्यादिना चङ् कुल-पर्वताः प्राक्षुभन् सञ्चलिताः द्युतादित्वादङ् पूर्ववत्परस्मैपदं ॥ २५ ॥ ज० म०

अनंसीदित्यादि। अस्य भरेण भूर्नमतिश्च यमरमेति इमृसनौ अस्य रंहसा वेगेन शाखिनो वृक्षाः पतिताः लुठविलोठविलोडयोः लृदित्त्वात् ङः ठान्तपाठे द्युतादित्वात् ङः तेनैव पं सिंहाः भीताः

उत्पाताः प्रावृतंस्तस्य द्यौरश्चोतिष्ट शोणितम् ।
वायवोऽवासिषुर्भीमाः क्रूराश्चाकूषत द्विजाः ॥ २६ ॥
असन्दिष्टाचि वामश्च घोराश्चाराटिषुः शिवाः ।
न्यपप्तन् मुषले ध्वांक्षा दीप्तयापाति चोल्कया ॥ २७ ॥

प्रश्चोतिताः ष्टु श्चुतगतौ जिष्विदा स्रुकम इति अङ् । कुलपर्वताः क्षोभं प्रापुः चुभङ् मञ्चले द्युतादित्वात् ङः ॥ २५ ॥ भ०

उत्पाता इत्यादि । तस्य गच्छत उत्पाताः प्रावृतन् प्रवृत्ताः वृत वर्त्तने द्युतादिः द्यौः शोणितमश्चोतिष्ट विच्युतिस्म श्चोतक्षेचने अनुदात्तेत् । वायवो भीमाः प्रचण्डा अवासिषुर्वान्तिस्म यमरमेति सगिटौ क्रूराश्चाशुभसूचका द्विजाः पक्षिणोऽकूषत शब्दिताः कुषिङ् शब्द इत्यनिट् कुटादित्वात् सिचः कित्त्वे न गुणः ॥ २६ ॥ ज० म०

उत्पाता इत्यादि । गच्छतस्तस्य उत्पाता विनाशसूचकाः प्रवृत्ताः द्युतादित्वात् ङः द्यौराकाशं शोणितं चरतिस्म श्चोतङ् सेके भीमाः प्रचण्डा वायवो वान्तिस्म वाङ्गमनहिंसयोः यमरमेति इट्सको अनुस्वादेः क्रूरा भयदा द्विजाः पक्षिणश्च शब्दं चक्रुः कूषिङ् आर्त्तस्वरे कुटां गुणोऽपि णोति नियमाद्गुणाभावः नेसेकाजिति अनिट् ॥२६॥ भ०

असन्दिष्टेत्यादि । वामश्चाक्षाचि असन्दिष्ट स्यन्दतेस्म घोराः अनिष्टार्थसिन्ध्यः शिवाः अराटिषूरटन्तिस्म अतो हलादेरिति वृद्धिर्निषेधः । ध्वांक्षो मुषले न्यपप्तन् उपविष्टवान् लृदित्त्वादङ् पतः पुमिति पुमागमश्च दीप्तया उल्कया अपाति पतितं भावे चिणादेशः ॥ २७ ॥ ज० म०

असन्दिष्टेत्यादि । अस्य वाममक्षि स्यन्दतेस्म स्यदिङ् इषत्कम्पे क्रूरा भीमाः शृगालाः शब्दं चक्रुः रटवाचि हसादेः सेम इति वृिः मुषले ध्वांक्षाः पतिताः पतृल्लजमत्यां लृदित्त्वात् ङः वच्यसत्रिपतामिति पमादेशः दीप्तया उल्कया च पतितं रतनोर्थ्यंगिणाविति भावे इण् इनस्तनलोपः ॥ २७ ॥ भ०

आहिंष्ट तानसंमान्य दर्पात्स प्रधनक्षितिम्।
ततोऽनर्दीदनन्दीच्च शत्रूनाह्वास्त चाहवे॥ २८॥
प्राशीन्न चात्यपत् क्रूरः क्षुधाखादद्यदश्नतः।
अधाद् वसामधासीच्च रुधिरं वनवासिनाम्॥ २९॥

आहिंष्टेत्यादि। तान् उत्पातान् कुम्भकर्णोऽसंमान्य दर्पादवज्ञाय प्रधनक्षितिं युद्धभूमिमाहिंष्ट गतवान् तत उत्तरकालं अनर्दीत् गर्जितवान् क्व यास्यतेदानीमिति अनन्दीच्च जयश्रियं श्लाघितवानित्यर्थः आहवे संग्रामे शत्रूनाह्वास्त आहूतवान् आगच्छत युध्यध्वमिति स्पर्द्धायामाङिति तङ् आत्मनेपदेष्वन्यतरस्यामिति अङभावपक्षे रूपम् ॥ २८॥ ज० म०

आहिंष्टेत्यादि। स कुम्भकर्णस्तान् उत्पातान् दर्पादसंमान्य प्रधनक्षितिं रणस्थलीम् आहिंष्ट गतः अहिङगतौ भ्वादिकपाठे इत्यस्मात् लाच्, ततोऽनर्दीत् सिंहनादं चकार नर्दशब्दे अनन्दीत् आनन्दयुक्तो बभूव आहवे युद्धे शत्रूनाहूतवान् स्पर्द्धायामाङ् इति सं. वक्तव्यर्थेति प्राप्तको ङस्तदभावे सिः॥ २८॥ भ०

प्राशीदित्यादि। प्राशीत् भक्षितवान् वनवासिन इत्यर्थात् न चासौ क्रूरः दुष्टचेता अत्यपत् तृप्तवान् पुषादित्वादङ् अश्नतोऽप्यस्य खादतः क्षुत् बुभुक्षा अवृधत् वर्द्धतेस्म द्युद्भ्यो लुङि द्युतादिः वनवासिनां वानराणां वसामधात् पीतवान् विभाषाघ्राधेट्शाच्छासः इति सिचो लुक्पक्षे रूपम्। रुधिरञ्चाधासीत् विभाषाधेट्श्व्योरिति चङभावपक्षे रूपम् ॥ २९॥ ज० म०

प्राशीदित्यादि। प्राशीत् भक्षितवान् कपीनित्यर्थात् अशभोजने असौ क्रूरो दुष्टाशयो न तृप्तः जित्वादिच्छुरकारात् प्रीणने पुषादित्वात्। ङः अश्नतः खादतोऽप्यस्य क्षुत् बुभुक्षा वर्द्धतेस्म द्युत्लृदित्वात् द्युतादित्वात् ङः। असौ वनवासिनां वानराणां वसां पपौ रुधिरञ्च अधासीत् पपौ धेट्पाने घ्राधेट्शाच्छासश्च इति पक्षे सिलुक् तदभावपक्षे यमरमेति इट्सगौ अस्तसादिति सिचो लोपः॥ २९॥ भ०

मांसेनास्याश्वतां कुक्षी जठरं चाप्यशिश्वियत् ।
बहूनामग्लुचत् प्राणानग्लोचीच्च रणे यशः ॥ ३० ॥
सामर्थ्यञ्चापि सोऽस्तम्भीद् विक्रमञ्चास्य नास्तभन् ।
शाखिनः केचिदध्यष्ठुर्न्यमाङ्क्षुरपरेऽम्बुधौ ॥ ३१ ॥

मांसेनेत्यादि । वनवासिनां मांसेनास्य कुम्भकर्णस्य कुक्षी उदरपार्श्वौ अश्वतां स्फीतौ जृस्तम्भित्यादिना अङ् श्वयतेर ह्रस्वत्वं जठरञ्चोदरमशिश्वियत् स्फीतं विभाषाधेट्श्व्योरिति चङ् इयाजादेशः बहूनां वनवासिनां प्राणानग्लुचत् हृतवान् ग्लुचुग्लुञ्चुग्लुचु स्तेयकरणे जृस्तम्भित्यादिना अङ्विकल्पनादङभावपक्षे रूपं यशश्च बहूनां रणे अग्लोचीत् अपनीतवान् चक्षुवश्चित्यादौ ग्लुचिर्गत्यर्थः अङभावपक्षे रूपम् ॥ ३० ॥ ज० म०

मांसेनेत्यादि । अस्य कुम्भकर्णस्य कुक्षी उदरपार्श्वौ वानरादीनां मांसेन अश्वतां स्फीतौ ट्वाओश्वि गतिवृद्ध्योः शासिद्युदित्यादिना पक्षे ङः वच्यस्यश्विपतामिति श्वादेशः । अस्य जठरमुदरञ्च अशिश्वियत् वर्द्धते जिश्रीत्यादिना पक्षेऽङ् । असौ बहूनां प्राणान् अग्लुचत् जहार रणे बहूनां यशोऽग्लोचीत् ग्लुचुङ् चौर्य्ये शासिद्युदित्यादिना पाक्षिको ङस्तदभावपक्षे सिः अम्लोचीदिति पाठे म्लुचुङ् गत्यां यशः प्रापेत्यर्थः ॥ ३० ॥ भ०

सामर्थ्यमित्यादि । स कुम्भकर्णः केषाञ्चिद्बलवतामपि वनवासिनां सामर्थ्यमस्तम्भीत् नियमितवान् अङभावपक्षे रूपं विक्रमञ्च केचिदस्य नास्तभन् न नियमितवन्तः अङ्पक्षे रूपं क्ङिदित्यनुनासिकलोपः केचिद्भयाद्दृक्षानध्यष्टुः अधिष्ठितवन्तः तिष्ठतेर्गातिस्थेति सिचो लुक् आदेशसकारस्य षत्वं ष्टुत्वञ्च अपरेऽम्बुधौ न्यमाङ्क्षुः निमग्नाः मस्जिनशोर्झलीति नुम् मस्जेरन्त्यात् पूर्वं नुममिच्छन्ति अनुषङ्गसंयोगादिलोपार्थम् ॥ ३१ ॥ ज० म०

सामर्थ्यञ्चापीत्यादि । स कुम्भकर्णः एतेषां सामर्थ्यमस्तम्भीत् निवारितवान् अस्य विक्रमं केचिदपि नास्तभन् न निवारितवन्तः स्तन्-

अन्ये त्वलङ्घिषुः शैलान् गुहास्वन्ये न्यलेषत ।
केचिदासिषत स्तब्धा भयात् केचिदघूर्णिषुः ॥ २२ ॥
उदतारिषुरम्भोधिं वानराः सेतुनापरे ।
अलज्जिष्टाङ्गदस्तत्र प्रत्यवास्थित चोर्जितम् ॥ २३ ॥

भस्तुन्भस्तन्भ रोधने सौत्रः पूर्ववत्तच्चो ङस्तदभावे सिः ङेः ह्रस्वाङ्गे लोपोऽस्याविति नस्य लोपः केचित् भयात् इत्यान् अधितिष्ठन्तिस्म भूस्येति सेर्लुक् भीकः स्तुस्तुभेति षत्वम् अपरेऽम्बुधौ निमग्नाः मस्जौशट् वैस्नानेऽनिस्त्वादुत्रिः नुनरधोत्तुचामित्यादिना हन् स्वादेः सोलोपः शच्छ्राजिति षङ् षढोकः स्नोर्गुर्जयेजमूनोः क्विवादिति षः अस्तुम् ॥ २१ ॥ भ०

अन्ये त्वित्यादि । अन्ये शैलानलङ्घिषुः भयादारूढा इत्यर्थः । अन्ये गुहासु न्यलेषत लीङ् श्लेषणे । केचित् स्तब्धाः स्थाणुवदासिषत आसतेस्म । अपरे भीत्या भयात् अघूर्णिषुः घूर्णन्ते स्म ॥२२॥ ज० म०

अन्ये इत्यादि । अन्ये कपयः शैलान् अलङ्घिषुः तद्भयाकुलत्वात् लघिशोषे अनेकार्थत्वाद्गतावपि लघिङ् अक्गत्योरित्यस्य कचिदात्मनेपदिनोऽपि परस्मैपदित्वाद्वा रूपम् । अन्ये गुहासु लीनाः लीङ्यलीश्लेषणे नैकाजिति अनिम् । केचित् स्तब्धाः सन्तः स्थाणुवद्भासन्ते स्म जिलासङ् उपवेशे । केचित् भयात् घूर्णन्ते स्म घूर्णङ् भ्रमणे ॥ २२ ॥ भ०

उदतारिषुरित्यादि । अपरे वानराः सेतुना अम्भोधिमुदतारिषुः उत्तीर्णाः तत्र तेषु तथाभूतेष्वङ्गदोऽलज्जिष्ट लज्जते स्म ऊर्जितञ्च पराक्रमं प्रत्यवास्थित प्रतिपन्नवान् समवप्रविभ्यस्थ इति तङ् ह्रस्वादङ्गादिति सिचो लोपः ॥ २३ ॥ ज० म०

उदतारिषुरित्यादि । अपरे वानराः सेतुना समुद्रमुत्तीर्णाः तृतरेऽभिभवे तुत्याम् अजन्तत्वादुत्रजवदेति त्रिः वानरेष्वेवंभूतेषु सत्सु तत्राङ्गदो लज्जते स्म लस्जि ओङ्लजङ्वीड़े ऊर्जितं पराक्रमञ्च

सत्वं समदुधुत्त्च वानराणामयुद्ध च ।
ततः शैलानुदचैप्सुरुदगूरिषत द्रुमान् ॥ २४ ॥
अनर्दिषुः कपिव्याघ्राः सम्यक् चायुत्सताहवे ।
तानमर्दीदखादीच निरास्यच तलाहतान् ॥ २५ ॥

प्रत्यवास्थित प्रतिपन्नवान् प्रतिज्ञानिर्वयेत्यादिना सं स्थादोर्डिः झस-
लादिति सिज्लोपः ॥ २३ ॥ भ०

सत्वमित्यादि । वानराणां सत्वं समदुधुक्षत् सन्दीपितवान् धुचेः
सन्दीपनार्थात् ण्यन्तात्मि चङ् स्वयमयुद्ध च युध्यतेस झलो झलीति
सिचो लोपः । ततः सत्वधुक्षणानन्तरं वानराः शैलानुदचैप्सुः उत्-
चिप्तवन्तः हलन्तलक्षणा वृद्धिः द्रुमांश्चोदगूरिषत उत्थापितवन्तः गुरी
उद्यमे ॥ २४ ॥ ज० म०

सत्वमित्यादि । अङ्गदो वानराणां सत्वं बलं संधुक्षयामास धुक्षङ्
सन्दीपे अन्तादङ् स्वयञ्च युध्यतेस युध्यौङ् युद्धे झसलादिति सि-
लोपः । ततः संधुक्षणानन्तरं शैलान् उत्चिप्तवन्तः कपिव्याघ्रा इत्य-
ग्रिमश्लोकेनान्वयः चिपशजौ चिप्यौ वृद्धि अनिसत्वात् व्रजवदेति व्रिः
द्रुमांश्च उद्गूर्णवन्तः गूरणक् उद्यमे चूर्ष्योङिर्वेति ञेरभावपक्षे रूपं
गूरीयङवधे गत्यामित्यस्य रूपं वा गूरीङपि उद्यमे इत्यस्य तु नायं
प्रयोगो ह्रस्वोङ्त्वात् ॥ २४ ॥ भ०

अनर्दिषुरित्यादि । उत्चिप्तशैलद्रुमाः कपिव्याघ्रा अनर्दिषुः
नर्दितवन्तः दृष्टोऽस्माभिः क यास्यसीति सम्यक् निर्भयमाहवे अयुत्सत
युध्यन्तेस्म हलन्ताच्चेति सिचः कित्वे गुणाभावः । तान् प्लवङ्गमान्
युध्यमानान् कुम्भकर्णोऽमर्दीत् मर्दितवान् मर्देर्लघूपधगुणः अखादीच
भक्षितवान् हस्ततलेनाहतान् निरास्यत् इतस्ततः चिप्तवान् अस्यती-
त्यादिना अङ् अस्यतेः स्थुक् ॥ २५ ॥ ज० म०

अनर्दिषुरित्यादि । कपिश्रेष्ठा नर्दितवन्तः मारय मारयेति शब्दं
चक्रुः नर्दशब्दे सम्यक् निर्भयं संग्रामे युध्यन्ति स्म इयुङ्मर्दीति
कित्वात् गुणाभावः । तान् वानरान् मर्दितवान् कुम्भकर्ण इत्यग्रिम-

प्राचुचूर्णच्च पादाभ्यामविभीषत च द्रुतम्।
अतर्दीच्चैव शूलेन कुम्भकर्णः प्लवङ्गमान्॥ ३६॥
अतौत्सीत् गदया गाढमपिपच्चोपगूहनैः।
जानुभ्यामदमीच्चान्यान् हस्तवर्त्तमवीवृतत्॥ ३७॥

श्लोकेनान्वयः म्रदगचुदि अखादीत् खाद भक्षणे तलेन हस्ताघातेन आहतान् निरास्यच्च द्रुतस्ततश्चिक्षेप च अस्य, इ इर्ये वच्यस्थिपता-मिति अस्यादेशः॥ ३५॥ भ०

प्राचुचूर्णदित्यादि। पादाभ्यां प्राचुचूर्णत् पिष्टवान् चूर्णप्रेरणे इति चुरादिः एवं चूर्णयन् द्रुतमविभीषत भीषयतेश्च भियो हेतुभये षुक् भीस्म्योर्हेतुभय इति तङ्। शूलेन प्रहरणेन अतर्दीच्च विद्धवान् तर्दि हिंसायां ह्मन्तक्षणत्वान्न वृद्धिः॥ ३६॥ ज० म०

प्राचुचूर्णदित्यादि। पादाभ्यां चूर्णयामास चूर्णक् पेषे चुरादि-र्णेरन्तादङ्। द्रुतं भीषयतेश्च भीस्म्योर्हेति जौ मात्रिको भीषा-देशो मश्च कर्त्तृकुम्भकर्णत एव भयस्योत्पत्तेः शूलेन च अतर्दीत् तर्द हिंसे। अतर्दीदिति पाठे तर्दहधतन्यूष हिंसे इत्यस्य रूपम्॥३६॥ भ०

अतौत्सीदित्यादि। कांश्चिद्गदया गाढमतौत्सीत् व्यथितवान् उप-गूहनैरपिपत् चूर्णितवान् लृदित्त्वादङ् अन्यांश्च जानुभ्याम् अदमीत् शासितवान् अवष्टभ्य नियमितवानित्यर्थः ह्मन्तत्वान्न वृद्धिः हस्ते वर्त्तिग्रहोरिति णमुल् कषादिषु यथाविध्यनुप्रयोगः॥ ३७॥ ज०म०

अतौत्सीदित्यादि। गदया कांश्चित् प्लवङ्गमान् गाढमत्यर्थमतौत्सीत् तुदशजौव्यथेऽनिस्त्वादृद्धिः। अन्यान् उपगूहनैरालिङ्गनैः पिष्टवान् धौपिष्लृ चूर्णने लृदित्त्वात् ङः। अन्यान् जानुभ्यां दमितवान् दमुङ चूर्णने मान्तत्वान्न वृिः अन्यान् हस्तवर्त्तमवीवृतत् हस्ताभ्यां पीडयित्वा चूर्णितवानित्यर्थः वृतेर्णेरन्तादङ् वर्द्धङोर्धुरिति पक्षे गुणाभावः। हस्तवर्त्तमिति हस्तार्थाद्गृह्यवर्त्तिश्चितां गतार्थत्वे णम् तदनुप्रयोग-श्चेति परः समते चणम् वेत्यस्य योगविभागात्॥ ३७॥ भ०

अदालिषुः शिला देहे चूर्ण्यंभूवन्महाद्रुमाः।
छिन्नास्तस्य न चाचेतीत्तानसौ नापि चाक्षुभत् ॥ ३८॥
अद्राष्टां तं रघुव्याघ्रो आख्यच्चैनं विभीषणः।
एष व्यजेष्ट देवेन्द्रं नाशङ्किष्ट विवस्वतः ॥ ३९ ॥
यदिन्द्रशक्तिमच्छासीन्नाप्रोथीदस्य कश्चन।

अदालिषुरित्यादि। वानरैस्तस्य देहे क्षिप्ताः शिला अदालिषुर्विशीर्णाः दलविशरणे भौवादिकः लान्तत्वादृद्धिः महाद्रुमाश्चूर्ण्यंभूवन् चूर्णीभूताः न च तान् छिन्नानसौ कुम्भकर्णो नाचेतीत् न चेतितवान् चिती संज्ञाने नापि चाक्षुभत् क्षुभितः क्षुभ सञ्चलने दिवादिः ॥ ३८ ॥ ज० म०

अदालिषुरित्यादि। कपिभिः क्षिप्ताः शिलास्तस्य कुम्भकर्णस्य देहे अदालिषुर्विदीर्णाः दलमिभेदे ह्रजवदेति विः महाद्रुमाश्चूर्णीभूताः भुवो वन् टीद्यचि। तान् इचान् असौ कुम्भकर्णो न अचेतीत् चिती ज्ञाने नापि क्षुभितः क्षुभङ् सञ्चले द्युतादिः ॥ ३८ ॥ भ०

अद्राष्टामित्यादि। तं तादृशो रघुव्याघ्रौ रामलक्ष्मणावद्राष्टां दृष्टवन्तौ विभीषणश्चैनमाख्यत् कथितवान् कुम्भकर्णोऽयमिति अस्यतीत्यादिनाऽङ्। प्रभावश्चास्य कथयन्नाह देवेन्द्रमेष व्यजेष्ट विजितवान् विपराभ्याञ्जेरिति तङ्, विवस्वतः सूर्यात् नाशङ्किष्ट न शङ्कितस्य ॥ ३९ ॥ ज० म०

अद्राष्टामित्यादि। रघुव्याघ्रौ तं कुम्भकर्णं दृष्टवन्तौ दृशे शो प्रेच्छे वर्द्रोऽकिदिति वृद्धः झलस्वाज्झलीति सेर्लोपः शच्छाजिति षङ् दुभिरिति टः। विभीषण एनमाख्यातवान् ख्याल ख्याती कथने वक्तव्यस्येति ङः ख्यस्यालोपः केन। प्रकारेणाख्यदित्याह एष देवेन्द्रं जितवान् विपराजीति मं, विवस्वतः सूर्यादपि नायं शङ्कितवान् शकिङ् लाशङ्कयोः ॥ ३९ ॥ भ०

यच्चेत्यादि। यच्चेन्द्रस्य कुबेरस्य शक्तिं प्रहरणमच्छासीत् छविङ्-

कुम्भकर्णान्न भैष्टं मा युवामस्मान्नृपात्मजौ ॥ ४० ॥
घ्नन्तं मोपेक्षिषाथाञ्च मा न कार्ष्टमिहादरम् ।
अमुं मा न वधिष्टेति रामोऽवादीत्ततः कपीन् ॥ ४१ ॥

तवान् छो छेदने । अस्य तु कश्चन कश्चित् नाम्नोषीत् न प्रभवतिस्म शक्तेत्र प्रहरणायेत्यर्थात् मोषपर्य्याप्तौ पर्य्याप्तियोगे चतुर्थी न भविष्यति पर्य्याप्तेरविवक्षितत्वात् अतोऽस्मादेवंविधात् कुम्भकर्णात् युवां नृपात्मजौ मा न भैष्टं किन्तु बिभीतंस्म माङि लुङ् मध्यमपुरुषद्विवचने रूपं माशब्दः प्रतिषेधे ॥ ४० ॥ ज० म०

यक्षेन्द्रेत्यादि । यक्षेन्द्रस्य कुबेरस्य शक्तिमस्त्रविशेषं सामर्थ्यं वा अच्छासीत् छिन्नवान् छिदिर् छोयत्नौ घेगाच्छासाम इत्यस्यामर्द्धत्तिपक्षे यमरमेति इमसनौ अस्यास्यान्भक्षीमदभीति सेलोपः । अस्य कुम्भकर्णस्य कश्चित् नाम्नोषीत् न शक्तः प्रोषृञ् पर्य्याप्तौ पर्य्याप्तं सामर्थ्यं शक्तार्थेत्यादिना चतुर्थीप्राप्तौ सम्बन्धविवक्षया षष्ठीशक्तार्थैः षष्ठ्यपीस्यत इत्यन्ये । अस्य शक्तिं कश्चन नाम्नोषीत्र हिंसितवान् अनेकार्थत्वात् हिंसार्थत्वमपीति भट्टभास्करः । हे नृपात्मजौ ! अस्मात् कुम्भकर्णात् युवां मा भैष्टमिति न जिभीविभीत्यां च्ल्यां सिः नेमेकाजिति इट्निषेधः वृनवदेति वृिः ॥ ४० ॥ भ०

घ्नन्तमित्यादि । तस्मात् घ्नन्तमेनं युवां मोपेक्षिषाथां मोपेक्षकौ भूतमित्यर्थः । इह च कुम्भकर्णे आदरं मा न कार्ष्टम् अपितु कुरुतं ततो विभीषणवचनानन्तरं रामः कपीनवादीत् उक्तवान् अमुं कुम्भकर्णं मा न वधिष्टेति किन्तु हतेति हनोवधर्लुङि ॥ ४१ ॥ ज० म०

घ्नन्तमित्यादि । घ्नन्तं प्रहरन्तमेतं युवां मा उपेक्षिषाथाम् ईक्षङ् दर्शने उपपूर्वोऽयमनादरे वर्त्तते इह कुम्भकर्णे आदरं मा कार्ष्टं किन्त्वयत्नं कुरुतं अञ्छ्यां सिः वृनवदेति वृिः इत्येवं विभीषण आख्यात इत्यर्थः । ततोऽनन्तरं रामो वानरान् अवादीत् उक्तवान् किमित्याह अमुं कुम्भकर्णं यूयं मा न वधिष्ट किन्त्ववश्यं हतेति हनवधइति वधादेशः ॥ ४१ ॥ भ०

ते व्यरासिषुराह्वन्त राक्षसं चाप्यपिप्लवन् ।
अवभासन् स्वकाः शक्तीर्द्रुमशैलं व्यकारिषुः ॥ ४२ ॥
ते तं व्याशिषताचीक्षुः पादैर्दन्तैस्तथाच्छिदन् ।
आर्जिजत् शरभो वृक्षं नीलस्त्वाददित पर्वतम् ॥ ४३ ॥

त इत्यादि । ते वानराः व्यराविषुः किलिकिलाशब्दं कृतवन्तः अतो ल्रान्तस्येति वृद्धिः । राक्षसञ्च कुम्भकर्णमाह्वन्त स्पर्द्धमानाः आहूतवन्तः आत्मनेपदेष्वन्यतरस्यामिति ह्वेञः पक्षे अङ् अपिप्लवन् प्लावितवन्तः अपि शब्दार्थे तथा कृतवन्तः यथासौ स्तुतिं कर्त्तुमारब्धः प्लवतेर्ण्यन्तस्य चाङि ह्रस्वत् कार्य्यमिति सन्वत्ति स्रवतिशृणोतीत्यादिना अभ्यासस्येत्वं स्वकाः आत्मीयाः शक्तीरवभासन् प्रकाशयन्तिस्म भासेर्ण्यन्तस्य चङि भ्राजभासेत्यादिना उपधाह्रस्वविकल्पः । द्रुमाश्च शैलाश्च द्रुमशैलं जातिरप्राणिनामित्येकवद्भावः व्यकारिषुः तदुपरि क्षिप्तवन्तः कॄ विक्षेपे ॥ ४२ ॥ ज० म०

ते व्यरासिषुरित्यादि । ते वानराः व्यरासिषुः किलकिलाशब्दञ्चक्रुः रसशब्दे ह्मयान्तक्षणेति न वृद्धिः, राक्षसं कुम्भकर्णं स्पर्द्धमानाः आहूतवन्तः स्पर्द्धायामाङ इति मं वक्ष्यत्यादिना ङः तमेवापिप्लवन् लुङ्च सर्पणे अयन्तादङि खेः सन्वत् स्रुसृशृद्रुप्रुप्लुच्युवां वेति पक्षे खेरुकारस्य इकारः स्वकाः आत्मीयाः शक्तीः सामर्थ्यानि प्रकाशितवन्तः भासृङ् दीप्तौ अयन्तादङ् भ्राजभासभाषेत्यादिना पक्षे उङो ह्रस्वः तदभावपक्षे खेः सन्वल्लघुनीत्यस्याविषयः परे लघ्वक्षराभावात् द्रुमशैलं तदुपरि क्षिप्तवन्तः कॄञ विक्षेपे ॠवर्णेति ञिः द्रुमाश्च शैलाश्चेति समाहारः ॥ ४२ ॥ भ०

ते तमित्यादि । ते वानरास्तं राक्षसं व्याशिषत व्याप्तवन्तः अशूव्याप्तौ पादैश्चाचीक्षुः पिष्टवन्तः क्षुदिर सम्पेषणे दन्तैरच्छिदन् छिन्दन्ति स्म इरितो वेत्यङ् । शरभो नाम कपिर्वृक्षमार्जिजत् गृहीतं यततेस्म अर्जप्रतियत्न इति स्वार्थिकण्यन्ताच्चङि द्विर्वचनेऽचीति स्थानिवद्भावाद्-

ऋषभोऽद्रीनुदच्चैषीत् ते तैरसिमतर्दिषुः ।
अस्फूर्जीद्गिरिश्रृङ्गञ्च व्यस्राक्षीद्गन्धमादनः ॥ ४४ ॥
अक्रूर्दिष्ट व्यकारीच्च गवाक्षो भूधरान् बहून् ।
स तानाजोगणद्वीरः कुम्भकर्णोऽव्यथिष्ट न ॥ ४५ ॥

जादेर्द्वितीयस्येति द्विर्वचनं रेफस्य नन्द्रा इति प्रतिषेधः। नीव: पर्वतमादित गृहीतवान् स्याद्वोरिच ॥ ४२ ॥ ज० म०

ते तमित्यादि। ते वानरास्तं कुम्भकर्णं व्याप्नवन्तः अश्नूङ् व्याप्तिसंहत्योः वेमूदिति पक्षे इम् पादैः चुखुरन्तः अथौचुदिर्चु दिरित्त्वात् पाक्षिकङाभावे सिः अनिमृत्वाद्वृद्धिः तथा दन्तैरच्छिदन् छिदिरधौज छेदे इरित्त्वात् पक्षे ङः। शरभनामा कपिर्ष्टवमर्जिजत् गृहीतं यततेस्म अर्जक् संस्कारे युद्धे दृषसंस्कारो ग्रहणप्रेरणानुकूलव्यापारः चुरादित्र्यन्तादङ्। नीवः पर्वतमादित जग्राह आङ्पूर्वाद्दाङ् ग्रहणे स्याद्वोर्ङिः ॥ ४२ ॥ म०

ऋषभ इत्यादि। ऋषभो नाम कपिरद्रीनुदच्चैषीत् उत्क्षिप्तवान्। ते शरभादयस्तैर्वृक्षादिभिररिमतर्दिषुः हतवन्तः तर्दहिंसायां गन्धमादनो नाम कपिरस्फूर्जीत् वज्रमिव गिरिश्रृङ्गञ्च व्यस्राक्षीत् विसृष्टवान् सृजस्तोदादिक उदात्तेत् ॥ ४४ ॥ ज० म०

ऋषभ इत्यादि। ऋषभो नाम कपिः पर्वतानुत्क्षिप्तवान् क्षिप् अजौक्षिपौ तुदि अनिमृत्वाद्वृद्धिः। ते शरभादयस्तैर्वृक्षादिभिररिं कुम्भकर्णम् अतर्दिषुः तर्दहिंसे। गन्धमादनः कपिरस्फूर्जीत् वज्रवत् शब्दञ्चकार टुओस्फूर्जावज्रनिर्घोषे, गिरिश्रृङ्गञ्च क्षिप्तवान् सृजोऽश्च चकाराद्विसर्गे वर्द्धोऽकिदिति अद्ङ्ः अनिमृत्वाद्वृद्धिः षड् षढोः कः ॥ ४४ ॥ म०

अक्रूर्दिष्टेत्यादि। गवाक्षो नाम कपिः अक्रूर्दिष्ट क्रीड़ापूर्वकं चेष्टतेस्म बहून् महीधरांश्च व्यकारीत् विक्षिप्तवान् वीरः कुम्भकर्णस्तान् शरभादीन् नाजोगणत् न गणयामास। अजगणदिति पाठान्तरं तत्र चकारेणावसथ्यनुवर्त्तते। न चाव्यथिष्ट व्यथितोऽभूत् ॥ ४५ ॥ ज० म०

ममन्थोच्च परानीकमक्षोष्ट च निरङ्कुशः।
निहन्तुं चात्वरिष्टारीनजक्षीचाङ्कमागतान्॥ ४६॥
व्यक्रुक्षद्वानरानीकं सम्पलायिष्ट चायति।
हस्ताभ्यां नश्यदक्राक्षीद्भीमे चोपाधितानने॥ ४७॥

अकूर्दिष्टेत्यादि। गवाक्षो नाम कपिरकूर्दिष्ट क्रीड़ापूर्वकं चेष्टते स्म कूर्द कूर्दक्रीड़ायां, बहून् पर्वतांश्च चिक्षिप्तवान् क्षिप विक्षेपे। स कुम्भकर्णस्तान् शरभादीन् न गणयामास गणतृकसंख्याने चुरादिरत्र-न्तादङ् वेङ्गणकश्च इति पाक्षिकः खेरीङ् नच व्यथितो बभूव यतो वीरः व्यथपमङ् दुःखे चाले॥ ४५॥ भ०

अमन्थीदित्यादि। परानीकं शत्रु सैन्यममन्थीत् क्षोभितवान् मन्थ विलोड़ने निरङ्कुशश्चाप्रतिहतशक्तिः अक्षोष्ट भ्रान्तवान् क्षुङ् गतौ। अरींश्च वानरान्निहन्तुमत्वरिष्ट त्वरतेस्म ञित्वरा संभ्रमे अङ्कञ्च समी-पमागतानजक्षीत् भक्षितवान् जक्ष भक्षहसनयोरिति भक्षणे जक्षिः॥ ४६॥ ज० म०

अमन्थीदित्यादि। कुम्भकर्णः परानीकं शत्रुसैन्यञ्च क्षोभितवान् मन्थगाहे, निरङ्कुशोऽप्रतिहतः सन् गतिं चकार क्षुङ् च सर्पणे नेमैकाजिति अनिम्, अरीन् निहन्तुं त्वराञ्चक्रे, अङ्कमागतान् क्रोड़-प्रविष्टान् भक्षितवान् जक्षल्लु भक्षहासयोः॥ ४६॥ म०

व्यक्रुक्षदित्यादि। तस्मिन्नायत्यागच्छति सति आङ्पूर्वस्येणः शतरि रूपं, वानरानीकं व्यक्रुक्षत् विक्रोशतिस्म शल इगुपधादनिटः क्सः, सम्पलायिष्ट पलायतेस्म। तत्र नश्यत्पलायमानं हस्ताभ्यामक्रा-क्षीत् आकृष्टवान् कुम्भकर्णः कर्षविलेखने अनुदात्तस्य चेत्यम् हलन्त-लक्षणा वृद्धिः आकृष्टं चातिभीमेऽतिभयङ्करे विवृते आनने वक्त्रे उपाधित न्यस्तवान् धाञ् स्थाघ्वोरिच्च॥ ४७॥ ज० म०

व्यक्रुक्षदित्यादि। आयति समागच्छति सति वानरसैन्यं विक्रोशतिस्म क्रुशौञ रोदे इतौ इगमतोऽनिमिजुङ् सक् सम्पलायतेस्म अयङ्गतौ परापूर्वः मनीषादित्वाल्लकारः। कुम्भकर्णो नश्यत् पलाय-

रक्तेनाचिक्लिदद्भूमिं सैन्यैश्चातस्तरद्धतैः ।
नातर्पीन्निघ्नयन् क्रूरो नाश्रमद् घ्नन् प्लवङ्गमान् ॥ ४८ ॥
न योद्धुमशकन् केचिन्नाढौकिषत केचन ।
प्राणशन् नासिकाभ्याञ्च वक्त्रेण च वनौकसः ॥ ४९ ॥

भानं वानरसैन्यं हस्ताभ्यामाक्षिप्तवान् क्षपक्षशस्पृशेत्यादिना पाक्षिकसिः वर्द्धोऽकिदिति पाक्षिककारस्य रः अनिस्वाद्दिः पठोः कः । भीमे आनने उपाधित न्यस्तवान् डुधाञ्धारणे पुष्टौ दाने स्यादोर्ङि- रिति ङिः गुणाभावश्च दासंज्ञकस्य ग्रहणात् ॥ ४७ ॥ भ०

रक्तेनेत्यादि । वानरानीकस्य रक्तेन भूमिमचिक्लिदत् क्लेदितवान् क्लिद आर्द्रीभावे तस्य श्यन्तस्य चङि रूपं सैन्यैश्च हतैर्भूमिमतस्तरत् आदितवान् स्तृणातेर्णौ चङि रूपम् अतृश्चहत्वरेतादिना अत्त्वं तांश्च भक्षयन्नपि क्रूरः नातर्पीत् न तृप्तः तृपप्रीणने पुषादिः स्पृशमृशकृष- तृपदृपां सिज्वेति पक्षे सिच् प्लवङ्गमांश्च घ्नन् हिंसन् नाश्रमत् न श्रान्तवान् श्रमुतपसि खेदे चेति खेदे पुषादित्वादङ् ॥ ४८ ॥ ज० म०

रक्तेनेत्यादि । स कपिसैन्यस्य रक्तेन भूमिमार्द्रतां नीतवान् क्लिद्यूदर्क्लेदे जरन्तादङ् हतैः सैन्यैर्भूमिमाच्छादितवान् स्तृस्तृतौ स्तृञगिच्छादने वा जरन्तादङ् । क्रूरोऽसौ तान् भक्षयन्नपि न तृप्तो बभूव जिल्ह तृपू च चकारात् प्रीणने क्षपक्षशस्पृशेत्यादिना पक्षे सिः वर्द्धोऽकिदित्यस्य पक्षेऽप्रवृत्तिः रधादित्वात् पक्षे इमोऽभावः तेन व्रजन- वदेत्यादिना वृिः । प्लवङ्गमान् घ्नन् श्रान्तो न जातः श्रमुष्यङि दर्पः- खेदयोः पुषादित्वात् ङः इरत्वबन्धेन कस्यचिन्मते विभाषा दर्शिता ॥ ४८ ॥ भ०

न योद्धुमित्यादि । तेषां मध्ये केचिद्वनौकसो वानरा योद्धुं नाशकन् न शक्ता अभवन् लृदित्त्वादङ् केचिन्नाढौकिषत न ढौकन्ते स्म ये तु तेन पदेन चिप्तास्ते नासिकाभ्यां नासिकाविवराभ्यां वक्त्रेण च प्राणशन् प्रनष्टाः निःसृता इत्यर्थः नशेः पुषादित्वादङ् उपसर्गादि- त्यादिना णत्वम् ॥ ४९ ॥ ज० म०

उदरे चाजरन्नन्ये तस्य पातालसन्निभे ।
आक्रन्दिषुः सखीनाह्वन् प्रपलायिषताखिदन् ॥५०॥
रक्तमश्च्योतिषुः क्षुण्णाः क्षताश्च कपयोऽत्वषन् ।
उपाख्यायि नृपो भग्नैरसौ सुग्रीवमैजिहत् ॥ ५१ ॥

न योद्धुमित्यादि । केचिद्वनौकसो वानरा योद्धुं न शक्ताः शकन् शकॢ शक्तौ पुषादिः केचन वानरा न अढौकिषत समीपं न जग्मुः ढौकृङ् गत्यां ये च तेन मुखे क्षिप्तास्ते नासाविवराभ्यां वक्त्रेण च प्राणशन् पलायिताः नशॢ नाशे पुषादिः प्राग्वन्तो ण इत्यादिना णत्वं नशनेशवाङ इत्यस्याप्रवृत्तिपक्षे रूपम् ॥ ४९ ॥ भ०

उदरे चेत्यादि । अन्ये च तस्योदरे पातालसदृशे अजरन् जीर्णाः जॄस्तम्भ्वित्यादिनाऽङ् ऋदृशोऽङि गुणः, आक्रन्दिषुः आक्रन्दितवन्तः सखीन् मित्राणि आह्वन् आहूतवन्तः लिपिसिचीत्यादिनाङ् प्रपला-यिषुः प्रपलायन्त स्म पलायमानास्ताखिदन् प्रखिन्नाः पुषादित्वादङ् ॥ ५० ॥ ज० म०

उदर इत्यादि । पातालतुल्ये तस्य उदरे केचित् कपयो जीर्णाः जॄगिकिव्यानौ शासविद्युदित्यादिना पक्षे ङः ऋदृशोऽङीति गुणः । अपरे आक्रन्दितवन्तः । अन्ये सखीन् मित्राणि आहूतवन्तः वक्तव्ये-त्यादिना ङः । अन्ये प्रपलायन्त स्म अन्ये प्रखिन्नाः ञिमिदा स्नेहने च चकारात् स्निह्य स्नेहयुक्ता बभूवुरित्यर्थः ञिमिदा गात्रप्रक्षरणे इति पठन्त्यन्ये पुषादिः । अस्विदन्निति पाठे स एवार्थः ॥ ५० ॥ भ०

रक्तमित्यादि । अन्ये क्षुण्णाः सन्तः रक्तमश्च्योतिषुः च्योतन्ति स्म इरितो वेत्यङभावपक्षे रूपं क्षताश्च खण्डिता अत्वषन् तृष्यन्ति स्म ञितृष पिपासायां पुषादित्वादङ् । नृपो रामस्तैर्भग्नैरुपाख्यायि उप-ख्यापितः अन्तर्भावितो ण्यर्थः कर्मणि चिण् असौ रामः सुग्रीवमैजि-हत् योद्धुमीहाङ्कारितवान् ईहतेर्ण्यन्ताच्चङि द्विर्वचने चेति स्थानि-वद्भावात् द्वितीयस्य द्विर्वचनम् आद्वृद्धिः योद्धुमिति वचनार्थेन योज्यम् ॥ ५१ ॥ ज० म०

योद्धुं सोऽप्यद्रवच्छत्रोरैरिरच्च महाद्रुमम् ।
तं प्राप्तं प्रासहिष्टारिः शक्तिं चोग्रामुदग्रहीत् ॥ ५२ ॥
स तामविभ्रमद्भीमां वानरेन्द्रस्य चामुचत् ।
प्रापप्तन्मारुतिस्तत्र ताञ्चालासीद्वियद्गताम् ॥ ५३ ॥

रक्षमित्यादि । अन्ये कपयः क्षुण्णाः खण्डिताः सन्तो रक्षं चरन्ति स्म सुग्रतिरच्चरे पच्चे ञिः च्यताः सन्तोऽलपन् ह्रर्यजिलपदपि लट् पिपासा क्षुधादिः भग्नैः रुग्णैः पलायमानैर्वा कपयो राम उपाख्यायि आराधितः रतनोर्यगिण्यात्विति कर्मणि लुङ् यनञ्पिदिति यन् असौ रामः सुग्रीवमीहाञ्चकारितवान् योद्धुमिति वच्यमाणेन सम्बन्धः ईहङ्‑ चेष्टे अग्रन्तादङ् ॥ ५१ ॥ भ०

योद्धुमित्यादि । सोऽपि सुग्रीवः अद्रवत् क्रुध्यतिस्म द्रुपरोषे क्षुधादिः शत्रोश्च महाद्रुममैरिरत् चिप्तवान् ईरच्चेप इति स्वार्थिक‑ ण्यन्तस्य रूपम् । तं द्रुमं प्राप्तमरिः कुम्भकर्णः प्रासहिष्ट मर्षहतेस्म शक्तिञ्चोग्रां प्राणहरामुदग्रहीत् उद्गृहीतवान् ॥ ५२ ॥ ज० म०

योद्धुमित्यादि । तत्प्रेरणया सुग्रीवो रुष्टः रुष्यिर्जिक्रुधि क्षुधादिः शत्रोः कृते समीपे वा महाद्रुमं प्रेरयामास ईरकिंगतौ नुद्ि चुरादिः अग्रन्तादङ् । अरिः कुम्भकर्णः प्राप्तं तं द्रुमं सोढवान् उग्रां शक्तिमस्त्रं जग्राह चालत्वान्न त्रिः ॥ ५२ ॥ भ०

स तामित्यादि । तां गृहीतां शक्तिं स कुम्भकर्णः अविभ्रमत् भ्रमयतिस्म भ्रमेर्ण्यन्ताच्चुङ्कि रूपं वानरेन्द्रस्य सुग्रीवस्योपरि अमुचत् मुक्तवान् लृदित्त्वादङ् तत्र तस्यां मुक्तायां मारुतिर्हनूमान् प्रापप्तत् अभ्युपस्थितः लृदित्त्वादङीति पतः पुमिति पुमागमः ताञ्च वियद्गता‑ मजासीत् चाप्तवान् ला आदाने यमरमेति सगिटौ ॥ ५२ ॥ ज० म०

स तामित्यादि । स कुम्भकर्णस्तां भीमां शक्तिं भ्रमयामास भ्रमे‑ र्ण्यन्तादङ् सुग्रीवस्य कृते त्यक्तवान् मुच्लृमपच्मौ मोचे लृदित्त्वात् ङः तत्र तस्यां मुक्तायां सत्यां तद्देशे मारुतिर्हनूमानुपस्थितः पतत्गगनगतां

अशोभिष्टाचखण्डच्च शक्तिं वीरो न चायसत् ।
लौहभारसहस्रेण निर्मिता निरकारि मे ॥ ५४ ॥
शक्तिरत्यकुपद्धन्तो गिरिञ्चोदखनीद्गुरुम् ।
व्यसृष्ट तं कपीन्द्रस्य तेनामूर्च्छीदसौ हतः ॥ ५५ ॥

ऌदित्वात् ङः वक्ष्यश्विपतामिति पप्ताद्देशः तां शक्तिञ्च वियद्गतां जग्राह यमरमेति द्रुमसनौ ॥ ५२ ॥ भ०

अशोभिष्टेत्यादि । असौ गृहीतशक्तिर्वीरः अशोभिष्ट शोभतेस्म शक्तिमचखण्डच्च भग्नवान् खण्डखडिभेदने चौरादिकः ताञ्च खण्डयन्नायसत् नायस्यतिस्म यसुयत्ने पुषादिः लौहभारसहस्रेण निर्मिता घटिता मम शक्तिर्निरकारि भग्ना अनेनेति रुच्चः कुम्भकर्णोऽकुपदिति वक्ष्यमाणेन सम्बन्धः ॥ ५४ ॥ ज० म०

अशोभिष्टेत्यादि । गृहीतशक्तिर्मारुतिर्वीरोऽशोभिष्ट शुभलृङ दीप्तौ मे ङाभावात् सिः शक्तिञ्च खण्डयामास खडिखण्डक् भेदे चुरादिः अग्लन्तादङ् तां खण्डयन् नचायासं प्राप दुर्यस्य, यत्ने पुषादिः लौहभारसहस्रेण निर्मिता मे मम शक्तिरनेन निरकारि भग्ना इति रुच्चः कुम्भकर्णोऽकुपदिति वक्ष्यमाणश्लोकेनान्वयः कञ्जनवधे दृण तुला स्त्रियां पलशतं भारः स्याद् विंशतिस्तुला इत्यमरः ॥ ५४ ॥ भ०

शक्तिरित्यादि । अकुपत् कुपितः कुपक्रोधे पुषादिः गिरिञ्च गुरुमुदखनीत् उत्खातवान् अतो हलादेर्लघोरिति वृद्ध्यभावपक्षे रूपं कपीन्द्रस्य सुग्रीवस्योपरि तञ्च गिरिं व्यसृष्ट विसृष्टवान् सृजविसर्गेऽनुदात्तेत् तस्माद्धलन्तादात्मनेपदे सिचः कित्त्वे गुणाभावः । असौ कपीन्द्रस्तेन हतः सन् अमूर्च्छीत् मोहमुपगतः ॥ ५५ ॥ ज० म०

शक्तिरित्यादि । अकुपत् कुपितः कुप्य इर कोपे पुषादिः गुरुं महान्तं गिरिम् उत्खातवान् खनुञ् विदारे इमादेः क्षेम इति वृद्धेः पाक्षिकत्वादभावः तं पर्वतं कपीन्द्रस्य हते विसृष्टवान् सृज्योङ्विसर्गे झलञ्झलीति सिलोपः शब्द्राजिति षङ् । तेन गिरिणा हतोऽसौ कपीन्द्रो मूर्च्छां प्राप मूर्च्छा सम्मोहे उच्छ्रये ॥ ५५ ॥ भ०

अलोठिष्ट च भूपृष्ठे शोणितञ्चाप्यसुस्रुवत् ।
तमादायापलायिष्ट व्यरोचिष्ट च राक्षसः ॥ ५६ ॥
अभैषुः कपयोऽन्वारत् कुम्भकर्णं मरुत्सुतः ।
शनैरबोधि सुग्रीवः सोऽलुञ्चीत् कर्णनासिकम् ॥ ५७ ॥
राक्षसस्य न चात्रासीत् प्रनष्टुमयतिष्ट च ।
अक्रोधि कुम्भकर्णेन पेष्टुमारम्भि च क्षितौ ॥ ५८ ॥

अलोठिष्टेत्यादि । मूर्च्छितश्च भूपृष्ठे अलोठिष्ट लुठतेस्म रुठलुठ-प्रतिघात इति द्युतादिः द्युद्भ्यो लुङीति परस्मैपदविकल्पे नात्मनेपदम् असृ शोणितञ्च व्यसुस्रुवत् स्रु तं णिश्रीत्यादिना चङ् तं सुग्रीवमादाय राक्षसः कुम्भकर्णः अपलायिष्ट पलायतेस्म व्यरोचिष्ट रोचतेस्म रुच-दीप्तौ ॥ ५६ ॥ ज० म०

अलोठिष्टेत्यादि । स कपीन्द्रो मूर्च्छितः सन् भूपृष्ठे अलोठिष्ट लुठतेस्म लुठङ प्रतीघाते असृ शोणितमपि स्रवतिस्म णिश्रीत्यङ् अशुश्रोरित्युव् राक्षसः कुम्भकर्णस्तं सुग्रीवमादाय गृहीत्वा पलायितः शुशुभे च हर्षात् ॥ ५६ ॥ भ०

अभैषुरित्यादि । तस्मिन्नीते कपयोऽभैषुः भीताः मरुत्सुतः कुम्भ-कर्णमन्वारत् अनुगतः अर्त्तेः शर्त्तिशास्त्यर्त्तिभ्यश्चेत्यङ् ऋदृशोऽङि गुणः सुग्रीवः शनैर्मनागबोधि लब्धसंज्ञो बभूव दीपजनेत्यादिना बुधेः कर्त्तरि चिण् स बुद्धः कर्णनासिकं प्राण्यङ्गत्वादेकवद्भावः अलुञ्चीत् कृत्तवान् राक्षसस्येति वक्ष्यमाणेन सम्बन्धः ॥ ५७ ॥ ज० म०

अभैषुरित्यादि । अस्मिन् गृहीते कपयो भीताः ञिभी भये त्रिः सन्त्यादिना प्रस्वरात् ... । सुग्रीवः शनैर्मनाक् प्रबुद्धः वृधोऽण्-सत्यादिना पचे ङः कर्मणोर्णुः । सुग्रीवः शनैर्मनाक् प्रबुद्धः बुध्यो-वेदने पद्दलनोणित्यादिना पाक्षिक इण् । स प्रबुद्धः सन् तस्य कर्णौ नासिकाञ्च चिच्छेद राक्षसस्येति वक्ष्यमाणेनान्वयः लुञ्चापनयने ॥ ५७ ॥ भ०

राक्षसस्येत्यादि । राक्षसस्य कुम्भकर्णस्य सम्बन्धे स सुग्रीवो न

सुग्रीवोऽस्याभ्रशद्धस्तात् समगाहिष्ट चाम्बरम् ।
तूर्णमन्वस्रपद्रामममनन्दच्च वानरान् ॥ ५९ ॥
अतत्वरच्च तान् योद्धुमचिचेष्टच्च राघवौ ।
कुम्भकर्णो न्यवर्त्तिष्ट रणेऽयुत्सत वानराः ॥ ६० ॥

चाशासीत् न त्रस्तः राक्षसात् प्रनष्टुं पलायितुं मस्जिनशोर्झलीति नुम् अद्वातिष्ट च यततेस्म कुम्भकर्णेनात्मनो,वस्थां दृष्ट्वा अक्रोधि क्रुधं भावे लुङ् चितौ च पेष्टुं चूर्णयितुं सुग्रीव आरम्भि आरब्धः कर्मणि लुङ् रभेरशब्लिटोरिति नुम् ॥ ५८ ॥ ज० म०

राक्षसस्येत्यादि । सुग्रीवो न च तस्मात् त्रस्तः त्रसयीभवे इत्यादेः क्षेम् इति त्रिः पलायितुं यततेस्म यतीङ् यत्ने नशेर्नुण् रधोमुचामिति लुण् अशान्तत्वान्न सः आत्मावस्थां दृष्ट्वा कुम्भकर्णेन अक्रोधि भावे इण् चितौ पेष्टुं सुग्रीवं चूर्णयितुम् आरब्धं रभौङ्रामस्ये पूर्ववन्नुण् ॥ ५८ ॥ भ०

सुग्रीव इत्यादि । अस्य कुम्भकर्णस्य हस्तात् सुग्रीवः अभ्रशत् भ्रष्टः भ्रशभ्रंश अधःपतने पुषादिः स चाम्बरमाकाशमगाहिष्ट आक्रान्तवान् गाहू विलोड़ने अनुदात्तेत् तूर्णञ्च राममन्वस्रपत् अनुगतः लृदित्त्वादङ् वानरांश्च कर्णनासिककर्त्तनेनाननन्दत् तोषितवान् नन्देर्ण्यन्तस्य रूपम् ॥ ५९ ॥ ज०म०

सुग्रीव इत्यादि । अस्य कुम्भकर्णस्य हस्तात् सुग्रीवो भ्रष्टः लृभ्रनुदुङश्च चकाराद्धःपाते पुषादिः इत्यङ्गलोपोऽणो अम्बरमाकाशम् आक्रान्तवान् ङगाहू प्रतिष्ठालिप्सयोः अगाहिष्टेति पाठे ङगाहू विलोड़े ऊदित्त्वादिम् ततः शीघ्रं राममनुजगाम सृस्रपौ गत्यां लृदित्त्वात् ङः वानरांश्च नन्दयामास टुनदिसंवृटिञत्वादङ् ॥ ५९ ॥ भ०

अतत्वरदित्यादि । तांश्च वानरान् योद्धुमतत्वरत् त्वरयन्तिस्म मा विलम्बध्वमिति त्वरेर्ण्यन्तात्त्रुङ् अत्स्मृदृत्वरेति अभ्यासस्य अत्वं राघवौ च योद्धुमचचेष्टत् व्यापारयतिस्म विभाषा चेष्टेश्चोरित्यभ्यासस्यात्वपक्षे रूपम् । स कुम्भकर्णो योद्धुं न्यवर्त्तिष्ट निवृत्तः इतिर्द्युतादिः युद्ध्य

अविविेष्टन् नृपादेशादारुक्षंश्चाशु राक्षसम् ।
तानधावीत् समारूढांस्तेऽप्यस्रंसिषताकुलाः ॥ ६१ ॥
अग्रसिष्ट व्यधाविष्ट समाश्लिक्षच्च निर्दयम् ।
ते चाप्यधोरिषुर्घोरं रक्षश्चावमिषुर्मुखैः ॥ ६२ ॥

इत्यादिनात्मनेपदेनाङ् वानराश्चायुत्सत युध्यन्ते स्म ॥ ६० ॥ ज० म०

अतत्वरदित्यादि । सुग्रीवस्तान् वानरान् योद्धुं त्वरयति स्म ञित्वरा सम्भ्रमे अग्रन्तादङ् स्मृदृत्वरप्रथेत्यादिना चेरङ् । स राघवौ च योद्धुं चेष्टयामास चेष्टङ् चेष्टायां अग्रन्तादङ् पूर्ववत् पक्षे चेरङ् । कुम्भकर्णो युद्धे निवृत्तः वृतङ् वर्त्तने से ङाभावात् सिः । वानरा युध्यन्ते स्म युधङ् युद्धे इगुङुधडीति सेः कित्त्वान्न गुः ॥ ६० ॥ म०

अविवेष्टन्नित्यादि । वानरा राक्षसमविवेष्टन् वेष्टयन्ति स्म अत्र राम इत्यर्थाद्द्रष्टव्यं यतस्तदादेशादाशु ते राक्षसमारुक्षन् आरूढाः रुहः शलेत्यादिना क्सः वानरा एव नृपादेशादविवेष्टन्निति व्याख्याने स्वातन्त्र्येण तेषां कर्तृत्वात्प्रयोजकत्वं न घटते तांश्च वानरानारूढान् कुम्भकर्णोऽधावीत् धूतवान् स्वरतीत्यादिना इट् हयन्तक्षणेटीति प्रतिषेधः । ते व्याकुलाः सन्तोऽस्रंसिषत स्रस्ताः पतिता इत्यर्थः स्रंसु भ्रंसु च स्रंसने द्युतादिः परस्मैपदाभावान्नाङ् ॥ ६१ ॥ ज० म०

अविवेष्टन्नित्यादि । वानराः राक्षसं वेष्टयामासुः राम इत्यध्याहृत्य वानरांश्चेष्टयामास इत्यर्थो वा चुर्योर्णिचेर्यस्य योगविभागात् कचिच्चुरादेरन्यस्मादपि ञिरित्यन्ये स्मृदृत्वर इत्यस्याप्रवृत्तिपक्षे रूपम् । अववेष्टन्निति पाठे वेष्टङ् वेष्टने राक्षसं वेष्टितवन्तः पूर्ववत् चेरङ् वा नृपादेशात् रामाज्ञया वानराः शीघ्रं राक्षसमारूढाः ञिजरुहौ जन्मनि हशसोऽनिमिजुङ् इति सक् । कुम्भकर्णः समारूढान् धूतवान् धूञ कम्पे स्वस्तुधोः सेरिस् पे इति इस् स्वरत्याद्यूलदेति ञिः । ते कपयो व्याकुलाः स्रस्ताः स्रंसु स्रुङ् भ्रंशे से ञिः ॥ ६१ ॥ म०

अग्रसिष्टेत्यादि । कुम्भकर्णः कांश्चिदग्रसिष्ट ग्रसते स्म कांश्चिद् व्यधाविष्ट धावति स्म कांश्चिन्निर्दयं समाश्लिक्षत् श्लिष आलिङ्गने शत

स चापि रुधिरैर्मत्तः स्वेषामप्यदयिष्ट न ।
अग्रहीच्चायुरन्येषामरुह च पराक्रमम् ॥ ६२ ॥
सत्वस्तानामपाहारि सत्वच्च वनवासिनाम् ।

इति क्तः ते चाक्षिप्ताः महाघोरं श्रुतिकटुकम् अघोरिषुः शब्दमुक्त-वन्तः घुर भीमार्थशब्दयोरिति तदादिरनुदात्तेत् मुखैरक्तं चावमिषुः उद्गीर्णवन्तः ॥ ६२ ॥ ज० म०

अयमिष्टेत्यादि । कुम्भकर्णः कांश्चित् पततस्य पतुकन्मचे कांश्चित् धावतिश्च धावुञ्जवे स्जि । व्यवाधिष्टेति पाठे कांश्चित् प्रवाधतेश्च बाष्टङ् विहतौ कांश्चिन्निर्दयं समाश्लिचत् आलिङ्ग्य हतवानित्यर्थः श्लिषो यल्भिसञ्ज्ञे कृमसोऽनिमिजुक्त इति श्चालिङ्गने क्षापवादः तक् ते वानरास्तेन कृताः सन्तः घोरं शब्दं चक्रुः घुरशब्दनौ भीमार्थौ रक्तञ्च मुखैरवमिषुः टुवम उद्गिरि मान्तत्वान्न वृद्धिः ॥ ६२ ॥ भ०

स चेत्यादि । स चापि कुम्भकर्णः रुधिरैर्मत्तः स्वेषामपि नादयिष्ट न दयां कृतवान् किमपरेषाम् अधीगर्थेति षष्ठी अन्येषां वानराणाम् आयुर्जीवितमग्रहीत् गृहीतवान् ह्मन्तत्वान्न वृद्धिः । अदोहीवायुरिति पाठान्तरं तत्र तथाभूतं कुम्भकर्णं दृष्टवतामन्येषामायुरदोहीव स्वयं गतमिव दुहुर्येति कर्मकर्त्तरि चिण् पराक्रमञ्चान्येषामरुह च आहृत-वान् रुधेः कर्त्रभिप्राये तङ् झलो झलीति सिचो लोपः झषस्तथो-र्धोधः झलाञ्जरयि ॥ ६२ ॥ ज० म०

स चेत्यादि । सोऽपि कुम्भकर्णः शोणितैर्मत्तः सन् स्वेषां राक्षसा-नामपि न दयां चक्रे किं पुनः परेषां कर्मणि सम्बन्धविवक्षया वा षष्ठी अिदयङ् ग्रहणे गतौ वधे दानेऽवने अन्येषां वानराणाम् आ-युर्गृहीतवान् ह्मन्तत्वान्न वृद्धिः अदोहीवायुरिति पाठे तादृशं कुम्भकर्णं दृष्ट्वा अन्येषामायुः स्वयमेवादोहीव दुहवजौ दुहि ढवड्ढघोऽढे इति ढर्वादित्युक्तेः ढभावे बसिति मं वेणजदुह इति इण् अन्येषां पराक्रमञ्च रुद्धवान् रुधिरोऽभिज आवृतौ झलसाक्कलीति सिचो लोपः ॥ ६२ ॥ भ०

सत्वस्तानामित्यादि । तेन सत्वमपाहारि अपहृतं सर्वेषां त्रस्त-

अच्छेदि लक्ष्मणेनास्य किरीटं कवचं तथा ॥ ६४ ॥

अभेदि च शरैर्देहः प्राशंसीत्तं निशाचरः ।

अस्पर्द्धिष्ट च रामेण तेनाक्षाचिप्सतेषवः ॥ ६५ ॥

यैरघानि खरो वाली मारीचो दूषणस्तथा ।

अवामंस्त स तान् दर्पात् प्रोदयंसीच मुद्गरम् ॥ ६६ ॥

वायव्यास्त्रेण तं पाणिं रामोऽच्छैत्सीत् सहायुधम् ।

अटीपि तद्धस्तोऽसावधावीच्चारिसंमुखम् ॥ ६७ ॥

त्वात् कर्मणि लुङ् । लक्ष्मणेन तस्य किरीटं मुकुटं तथा कवचमच्छेदि छिन्नं कर्मणि लुङ् ॥ ६४ ॥ ज० म०

सन्त्रस्तानामित्यादि । सन्त्रस्तानां वानराणां सत्वं बलं तेनापहृतं हृङः कर्मणीण् । लक्ष्मणेन चास्य किरीटं मुकुटं कवचञ्च छिन्नम् ॥६४॥ भ०

अभेदीत्यादि । देहश्चास्य शरैः करणभूतैरभेदि छिन्नः निशाचरश्च तं लक्ष्मणं प्राशंसीत् स्तुतवान् साधु भवता युद्धमिति रामेण सहास्पर्द्धिष्ट योद्धुं स्पर्द्धतेस्म तेन रामेणास्य इषवः अचिप्सत चिप्ताः कर्मणि लुङ् ञ्यन्तादात्मनेपदे सिचः कित्त्वाद्गुणाभावः ॥६५॥ज०म०

अभेदीत्यादि । लक्ष्मणेनास्य देहः शरैर्भिन्नः । ततो निशाचरः कुम्भकर्णस्तं लक्ष्मणं प्रशशंस शत्रुस्तु हिंशाखल्पोः रामेण सह योद्धुं स्पर्द्धतेस्म स्पर्द्धङ् संघर्षे तेन रामेणास्य राक्षसस्य शते इषवः चिप्ताः क्षिप्यौ लुटि कर्मणि टी ॥ ६५ ॥ भ०

यैरित्यादि । यैः शरैश्च खरादिरघानि व्यापादितः कर्मणि लुङ् ते अचिप्सतेति योज्यं स कुम्भकर्णस्तान् मनु दर्पादवामंस्त अवमन्यते स्म मुद्गरं प्रोदयंसीत् उद्गूर्णवान् यमरमेति समिटौ ॥ ६६ ॥ ज०म०

यैरित्यादि । यैः शरैः खरादिर्हतः स कुम्भकर्णस्तान् चिप्तान् अवमन्यतेस्म दर्पादहङ्कारात् मन्योङ च बोधे मुद्गरम् उत्थापितवान् यमौ उपरतौ यमरमेतोमृषनौ ॥ ६६ ॥ भ०

वायव्यास्त्रेणेत्यादि । येन पाणिना मुद्गरमुदयंसीत् तं पाणिं

सवृत्तमच्छिदत्तस्य शक्रास्त्रेण करं नृपः ।
जङ्घे चाशीशतद् बाणैरपासीदिषुभिर्मुखम् ॥ ९८ ॥
ऐन्द्रेण हृदयेऽव्यात्सीत् सोऽध्यवात्सीच्च गां हतः ।

सहायुधं रामो वायव्यास्त्रेण मरुद्देवतादस्त्रेन अच्छैत्सीत् छिन्नपाणिश्चासौ तरुहस्तः तरुर्हस्ते यस्येति तरोः प्रहरणत्वात् सप्तम्यन्तस्य परनिपातः अटोऽपि दीप्यतेस्त्र दीपजनेत्यादिना कर्त्तरि चिण् अरिसमुखञ्च रामाभिमुखमधावीत् वेगेन गतवान् ॥ ९७ ॥ ज० म०

वायव्यास्त्रेणेत्यादि । येन पाणिना मुद्गरमुदयंसीत् तं पाणिम् आयुधेन मुद्गरेण सहितं वायव्यास्त्रेण रामश्छिन्नवान् छिदिरधीज छेदे अनिट्त्वाद्वृद्धिः । वायुर्देवता यस्येति विकारसङ्घेत्यादिना ण्यः ओर्गुणो तौतेऽच्ये इति ओकारः ओदौतोऽववदिति अववद्भावः यलायवायाव इति अव् असौ छिन्नहस्तो राक्षसस्तरुहस्तः सन् दीप्यतेस्त्र पदस्तनीण् घे इत्यादिना कर्त्तरि इण् तरुर्हस्ते यस्य तरुयुक्तो हस्तो यस्येति वा समासः अरिसमुखं रामाभिमुखम् अधावीत् वेगेन गतः धावु जवे इति ॥ ९७ ॥ भ०

सवृत्तमित्यादि । तस्य सवृत्तमपि करं नृपः शक्रास्त्रेणाच्छिदत् इरितो वेत्यङ् जङ्घे चान्यैर्बाणैरशीशतत् गमनासमर्थे कृतवान् शदेरगताविति तत्वं मुखञ्चेषुभिरपासीत् पूरितवान् प्रापूरणे ॥ ९८ ॥ ज० म०

सवृत्तमित्यादि । नृपो रामस्तस्य कुम्भकर्णस्य वृत्तसहितं हस्तान्तरं शक्रास्त्रेण छिन्नवान् इरित्वादङः वाणैः प्रयोजककर्तृभिस्तस्य जङ्घे च अचीलवत् छेदितवान् लुञ्गिच्छिदि णिः प्रेरणे चङ् ह्रित्वं द्विः उरदत्वम्‌ खः खेः सन्वत् लयलोपः स्लोर्ष्ये इति खेरुकारस्य इकारः तस्य घोर्ह्रसादेर्घस्येति दीर्घत्वम् । अशीशतदिति पाठे शदोऽगतौ तङ् गत्यसमर्थे च जङ्घे कृतवानित्यर्थः अस्य मुखं शरैः पूरितवान् प्रापूर्त्तौ यमरमेतीसृसनौ ॥ ९८ ॥ भ०

ऐन्द्रेणेत्यादि । ऐन्द्रेण शरेण हृदयेऽव्यात्सीत् विद्धवान् स तथा

अपिष्टातां सहस्रे द्वे तद्देहेन वनौकसाम् ॥६९॥
अस्ताविषुः सुरा रामं दिशः प्रापन्निशाचराः ।
भूरकम्पिष्ट साद्रीन्द्रा व्यचालीदम्भसां पतिः ॥ ७० ॥
हतं रक्षांसि राजानं कुम्भकर्णमशिश्रवन् ।
अरोदीद्रावणोऽशोचीन्मोहच्चाशिश्रियत् परम् ॥७१॥

हतो गामध्यवात्सीत् भूमिमध्युषितवान् तस्य पततो देहेन वनौकसां वानराणां द्वे सहस्रे अपिष्टातां चूर्णिते पिष्लृ संचूर्णने कर्मणि लुङ् ॥ ६९ ॥ ज० म०

ऐन्द्रेणेत्यादि । इन्द्रदैवतेनास्त्रेण हृदये तं विद्धवान् व्यधौ ताडने अनिसृत्वादिः । व्यचालीदिति पाठे व्येजे इतौ निरुद्धवानित्यर्थः । स कुम्भकर्णो हतः सन् गां भूमिम् अध्युषितवान् वसे वौ निवासे अनिसृत्वादिः शस्रमरे इति सस्य तः । पततस्तस्य देहेन वानराणां द्वे सहस्रे अपिष्टातां चूर्णिते चौपिष्लृ चूर्णने कर्मणि द्विवचनं इयसोऽनिमिजुङ इति सक् मढोः कः सकोल्लोपः तेन यायातोऽत इत्यस्याविषयः ॥ ६९ ॥ भ०

अस्ताविषुरित्यादि । तस्मिन् हते सुरा देवा राममस्ताविषुः स्तुवन्ति स्म स्तुधूभ्यः परस्मैपदेष्विति इट् । निशाचरास्तद्भयाद्दिशः प्रापन् प्राप्तवन्तः आप्लृव्याप्तौ साद्रीन्द्रा सकुलपर्वता भूमिरकम्पिष्ट चलति स्म अम्भसां पतिः समुद्रो व्यचालीत् प्रक्षुभितवान् ॥ ७० ॥ ज० म०

अस्ताविषुरित्यादि । तस्मिन् हते सुरा रामं स्तुवन्ति स्म स्तुधोः शेरिसृपे अजन्तादिः । राक्षसा भयाद्दिशः प्रापुः आप्लृणोवि व्यापने व्यापने लृदित्त्वात् अद्रीन्द्रैः कुलपर्वतैः सहिता भूमिः कम्पिता कपिचाले । अम्भसां पतिः समुद्रो विचलतिस्म तद्देहपातात् अलन्तत्वात् ज्वलवदेति वृिः ॥ ७० ॥ भ०

हतमित्यादि । हतं व्यापादितं कुम्भकर्णं रक्षांसि राजानं रावणमशिश्रवन् श्रावितवन्तः श्रृणोतेर्ण्यन्तात् सनीव कार्यमिति भवति श्रृणोतीत्यादिना अभ्यासस्य विकल्पेनेट् एवञ्च तथा अमूमु-

अपप्रथद् गुणान् भ्रातुरचिकीर्त्तच्च विक्रमम् ।
क्रुद्धेन कुम्भकर्णेन येऽदर्घिषत शत्रवः ॥ ७२ ॥
कथं न्वजीविषुस्ते च स चामृत महाबलः ।
प्रयुयुत्सिषताश्वास्य कुमारा रावणं ततः ॥ ७३ ॥

वेत्तीति पाठान्तरं द्विकर्मकता तु बुद्ध्यर्थत्वात् । श्रुत्वा च रावणोऽरोदीत् अश्रूणि मुमोच अशोचीत् शोचतिस्म तेनापि त्यक्तोऽस्मीति परञ्च मोहं मूर्च्छामशिश्रियत् श्रिञ सेवायां श्रीत्यादिना चङ् ॥७१॥ ज०म०

हतमित्यादि । हतं कुम्भकर्णं राक्षसा राजानं आवितथन्वः शुनगतौ श्रुतौ अन्तत्वादङ् द्वित्वं श्रिः अरङ्गरङः स्नः खेः सन्वत् श्रुश्रूषुट् इति खेरुकारस्य पाक्षिक इकारः णोऽजौञेरिति प्रयोज्यस्य राज्ञः कर्मत्वम् । श्रुत्वा च रावणोऽरोदीत् रुधिरस्रुदरोदे अशोचीत् शोचतिस्म शुच शोके परस्तृतहष्व मोहमाश्रितः श्रिञ सेवने णिश्रीत्यङ् श्रुध्वोरितीयः ॥ ७१ ॥ भ०

अपप्रथदित्यादि । भ्रातुर्गुणान् बुद्धिमत्त्वादीनपप्रथत् प्रख्यापितवान् प्रथ प्रख्याने घटादिः तस्मात् ण्यन्ताच्चङि अत्स्मृदृत्वरेत्यादिनात्वं विक्रमञ्च शौर्य्यमचिकीर्त्तत् उदीरितवान् कृतसंशब्दन इति चौरादिकः जिघ्रतेर्वेत्यदृत्त इदिति इकाराभावपक्षे रूपम् उपधायाश्चेतीत्वं विक्रमकीर्त्तनश्चाह क्रोधकर्त्रा कुम्भकर्णेन ये शत्रवोऽदर्घिषत हष्टाः कर्मणि लुङ् स्यसिङित्यादिना दृशेश्चिण्वदिट् ॥ ७२ ॥ ज० म०

अपप्रथदित्यादि । रावणो भ्रातुः कुम्भकर्णस्य गुणान् प्रथयति स्म प्रथक्चख्याते अन्तादङ् स्मृदृत्वरप्रथेति खेरङ् इत्त्वाधकः तस्य विक्रमं कीर्त्तयति स्म कृतकसंशब्दे अन्तादङ् । विक्रमकीर्त्तनमेवाह कुम्भकर्णेन क्रुद्धेन सता ये शत्रवो हष्टाः ते च कथं नु अजीविषुः जीवन्तिस्मेत्युत्तरश्लोकेनान्वयः दृशेः कर्मणि बहुवचनं हन्यदृट्शच इति पक्षे सिच् ॥ ७२ ॥ भ०

कथमित्यादि । तेऽस्याः कथन्नाम अजीविषुः जीविताः स च कुम्भकर्णो महाबलः अमृत मृतः म्रियतेर्लुङ् लिङ्गोश्चेति तङ् हस्वा-

देवान्तकोऽतिकायश्च त्रिशिराः स नरान्तकः।
ते चांहिषत संग्रामं बलिनो रावणात्मजाः ॥७४॥
युद्धोन्मत्तञ्च मत्तञ्च राजा रक्षार्थमाञ्जिहत्।
सुतानां निरगातां तौ राक्षसौ रणपण्डितौ ॥७५॥
तैरजेषत सैन्यानि द्विषोऽकारिषताकुलाः।

दङ्गादिति सिचो लोपः। अनन्तरं कुमाराः राजपुत्रा देवान्तकादयो रावणं शोचन्तमाश्वास्य अपनीतशोकं कृत्वा प्रायुयुत्सिषत योद्धुमिष्टवन्तः हलन्ताच्चेति सनः कित्त्वं पूर्ववत्सन इति तङ् ॥ ७३ ॥ ज० म०

कथमित्यादि। शुशब्दः प्रश्ने स च महाबलो कृतः कृशङ् कृतौ कृङ्टीद्यमं इगुङुर्मढीति सेः कित्त्वाद्गुणाभावः झस्वादिति सेर्लोपः ततोऽनन्तरं कुमारा रावणपुत्रा देवान्तकादयो रावणमाश्वास्यापनीतशोकं कृत्वा योद्धुमिष्टवन्तः युध्यौङ् युद्धे सन्निच्छायां णुर्नानिमि सनि ॥ ७३ ॥ भ०

देवान्तक इत्यादि। ते च रावणात्मजाः संग्राममांहिषत गतवन्तः अहि गतौ। किंनामानः देवान्तकः अतिकायः त्रिशिराः नरान्तक इति ॥ ७४ ॥ ज० म०

देवान्तक इत्यादि। के ते कुमारा इत्यत्रोक्तं देवान्तक इत्यादि ते च बलिनो रावणपुत्राः संग्राममांहिषत गताः अहिङ् गतौ ॥ ७४ ॥ भ०

युद्धेत्यादि। सुतानां रक्षार्थं राजा युद्धोन्मत्तं मत्तञ्च राक्षसम् आञ्जिहत् प्रस्थापितवान् ओं हतेर्णौ चङ्परे द्वितीयाद्विर्वचनम्। तौ राक्षसौ रणपण्डितौ निरगातां निर्गतौ इणो गा लुङि ॥७५॥ज०म०

युद्धेत्यादि। राजा रावणः सुतानां तेषां रक्षार्थं युद्धोन्मत्तं मत्तञ्च राक्षसद्वयम् आञ्जिहत् प्रस्थापितवान् ओहिङ्गतौ अग्रन्तादङ्। तौ रणपण्डितौ राक्षसौ पुरान्निर्गतौ इणगतौ ण्यां भूस्थापिवद्देवेति सेर्लुक् ॥ ७५ ॥ भ०

तैरित्यादि। तैः राक्षसैः सैन्यानि अजेषत जितानि कर्मणि लुङ्

पर्वतानिव ते भूमावचैषुर्वानरोत्तमान् ॥ ७६ ॥
अङ्गदेन समं योद्धुमघटिष्ट नरान्तकः ।
प्रैषिषद्राक्षसः प्रासं सोऽस्फोटीदङ्गदोरसि ॥ ७७ ॥
अश्वान् बालिसुतोऽहिंसीदतताड़च्च मुष्टिना ।
रावणिश्चाव्यथो योद्धुमारब्ध च महीं गतः ॥ ७८ ॥

ण्यन्तिण्भावपक्षे रूपं द्विषः आकुला अकारिषत । ते राक्षसा वानरोत्तमान् वानराणां प्रधानभूतान् पर्वतानिव भूमौ अचैषुः पुञ्जीकृतवन्तः चिञ् चयने ॥ ७६ ॥ ज० म०

तैरित्यादि । तैर्देवान्तकादिभिः सैन्यानि जितानि जिजये च कर्मणि बहुवचनं, शत्रवश्चाकुलाः कृताः कर्मणि हनग्रहदृश च इति चिण् । ते राक्षसा वानरोत्तमान् पर्वततुल्यान् भूमौ चितवन्तः पुञ्जीचक्रुः चिञ् चित्यां अजवदेति वृिः ॥ ७६ ॥ भ०

अङ्गदेनेत्यादि । नरान्तकः कुमारः अङ्गदेन सह योद्धुमघटिष्ट घटतेस्म । राक्षसः प्रासं कुन्तं प्रैषिषत् इषुगताविल्यस्य ण्यन्तस्य चाङि रूपम् । स प्रासोऽङ्गदोरसि अस्फोटीत् विशीर्णः ॥ ७७ ॥ ज० म०

अङ्गदेनेत्यादि । नरान्तकः कुमारः अङ्गदेन सह योद्धुं चेष्टितवान् घटघङ्मचेष्टे स राक्षसः प्रासं कुन्तं प्रेषितवान् इष्य सर्पणे अन्तादङ् इषङ्दानेत्यहिंसे चेत्यस्य रूपं वा अयञ्च चकारात् सर्पणेऽपि स प्रासः अङ्गदस्य वक्षसि अस्फोटीद्विदीर्णः स्फुटिर्विसरणे ॥ ७७ ॥ भ०

अश्वानित्यादि । बालिसुतोऽश्वान् रथयुक्तानहिंसीत् व्यापादितवान् तहिहिंसि हिंसायां मुष्टिना पाणिना अतताडत् आहतवान् ताड आघाते ताड़नं ताडः भावे घञ् ताड़ङ्करोतीति णिचणाविष्टवदिति टिलोपः णौचङ्युपधाया नाग्लोपिशास्वृदितामिति ह्रस्वप्रतिषेधः स च रावणिरव्यथो व्यथारहितः इताश्वाद्रथादवतीर्य्य महीं गतः सन् योद्धुमारब्ध आरभतेस्म झलो झलीति सिचो लोपः धत्वञ्च ॥ ७८ ॥ ज० म०

अश्वानित्यादि । बालिसुतोऽङ्गदो नरान्तकस्याश्वान् हिंसितवान्

तस्याहारिषत प्राणा मुष्टिना वालिसूनुना ।
प्रादुद्रुवंस्ततः क्रुद्धाः सर्वे रावणयोऽङ्गदम् ॥ ७९ ॥
ततो नीलहनूमन्तौ रावणीनववेष्टताम् ।
अकारिष्टां गिरींस्तुङ्गानरौत्सीत्त्रिशिराः शरैः ॥ ८० ॥
परिघेणाबधिष्टाथ रणे देवान्तको बली ।

ल्हिसिभ्यांक्ङिति सुष्टिना राचसं ताडितवांश्च तं ङक्ङिधीत्यस्मात् भावे यञ् तं करोतीति अयन्तादङ् अग्लोपित्वात् उक्तो ह्रस्वाभावः स च रावणपुत्त्रो व्यथारहितः हताश्वत्वाद्रथादवतीर्य्य मही गतः सन् योद्धुम् आरब्धवान् रभोऽङ्स्यात्तु रामस्ये अस्स्त्यात् अस्मीति सेर्लोपः रावणस्यापत्यमिति बाह्वाद्यत इति थिञः ॥ ७८ ॥ म०

तस्येत्यादि । तस्य प्राणाः वालिपुत्रेण अहारिषत हृताः कर्मणि लुङ् चिण्वद्भावः । ततोऽनन्तरं सर्वे रावणयः रावणस्यापत्यानि देवान्तकादयः क्रुद्धाः सन्तोऽङ्गदं प्रादुद्रुवन् गतवन्तः णिश्रीत्यादिना चङ् ॥ ७९ ॥ ज० म०

तस्येत्यादि । वालिसूनुना अङ्गदेन तस्य प्राणा मुष्टिना करणेन हृताः हृञः कर्मणि हनश्च इट्यच इति सिण् । ततोऽनन्तरं सर्वे रावणपुत्त्राः क्रुद्धाः सन्तः अङ्गदं प्रद्रुतवन्तः जग्मुरित्यर्थः णिश्रीत्यङ् ॥ ७९ ॥ भ०

तत इत्यादि । ततो रावणीनङ्गदाभिमुखानागच्छतो नीलो हनूमांश्चाववेष्टतां वेष्टितवन्तौ विभाषा वेष्टिचेष्ट्योरित्यभ्यासस्यात्वं गिरींश्चाकारिष्टां विक्षिप्तवन्तौ कॄ विक्षेपे सिचि वृद्धिः तांश्च गिरींश्छिन्नान् त्रिशिराः शरैस्तुङ्गानरौत्सीत् आवृतवान् रुधिरावरणे ॥ ८० ॥ ज० म०

तत इत्यादि । अनन्तरम् अङ्गदं प्रति गच्छतो रावणपुत्त्रान् नीलहनूमन्तौ वेष्टितवन्तौ गिरींश्च विक्षिप्तवन्तौ कॄश विक्षेपे अजन्तत्वाद्वृद्धिः तान् क्षिप्तान् गिरीन् त्रिशिराः शरैर्निरुद्धवान् रुधिर्भौञ्जि आवृतौ ङाभावपक्षे सिः ॥ ८० ॥ भ०

परिघेणेत्यादि । अथ देवान्तको बली परिघेणावधिष्ट हतवान्

मुष्टिनाददरत्तस्य मूर्द्धानं मारुतात्मजः ॥ ८१ ॥
अदीदिपत्ततो वीर्य्यं नीलञ्चापीपिड़च्छरैः ।
युद्धोन्मत्तस्तु नीलेन गिरिणानायि संचयम् ॥ ८२ ॥
अवभ्राजत्ततः शक्तिं त्रिशिराः पवनात्मजे ।
हनूमता हतास्तस्य रणेऽभ्रषत वाजिनः ॥ ८३ ॥

आङो यम हन इति तङ् अविवक्षितकर्मकत्वादात्मनेपदेष्वन्यतरस्यामिति हनो बधादेशः तस्य घ्नतो मूर्द्धानं मारुतात्मजः मुष्टिना अददरत् दारितवान् दृ विदारणे ण्यन्तस्य चङ्परे णौ ऋत् स्मृदृत्वरेत्यादिनाभ्यासस्यात्वम् ॥ ८१ ॥ ज० म०

परिघेणेत्यादि । अथ बली देवान्तको रणे परिघेणाहतवान् आत्माङ्गुलादहाञ्चेति मं अविवक्षितकर्मत्वादकर्मकत्वं हनबधष्टीति पक्षे बधादेशः तस्य मूर्द्धानं पवनात्मजो हनूमान् मुष्टिना दारयामास दृ यगिविदारे स्मृदृत्वरप्रथेति खेरङ् ॥ ८१ ॥ भ०

अदीदिपदित्यादि । ततो देवान्तकविनाशादनन्तरं युद्धोन्मत्तः सुतानां रक्षार्थं यः प्रेषितः स वीर्य्यमदीदिपत् भ्राजभासेत्यादिना ह्रस्वाभावपक्षे रूपं नीलञ्च शरैरपीपिड़त् पीड़ितवान् ह्रस्वाभावपक्षे रूपम् अपीपरदिति पाठान्तरं पूरितवानित्यर्थः पृ पूरण इति चुरादिः स तु नीलेन क्षयं गिरिणा अनायि नीतः कर्मणि लुङ् ॥ ८२ ॥ ज० म०

अदीदिपदित्यादि । ततो देवान्तकबधानन्तरं युद्धोन्मत्तो नाम राक्षसः स्ववीर्य्यं दीपयामास भ्राजभासभाषदीपेत्यादिना पाक्षिक उङो ह्रस्वः खेः सन्वल्लघुनिति दीर्घः शरैश्च नीलं पीड़यामास पूर्ववदुङो ह्रस्वः । अपीपरदिति पाठे पृक पूर्त्तौ स तु नीलेन गिरिणा संक्षयं नीतः कर्मणि रतनोरितीण् ॥ ८२ ॥ भ०

अवभ्राजदित्यादि । ततोऽनन्तरं त्रिशिराः कुमारः पवनात्मजविषये शक्तिं वीर्य्यमवभ्राजत् दीपयतिस्म भ्राजेत्यादिना ह्रस्वाभावपक्षे रूपं तस्य वाजिनो रथयुक्ता रणे हनूमता हताः सन्तः अभ्रषत हताः भ्रियतेर्लुङिति तङ् ॥ ८३ ॥ ज० म०

अस्रसच्चाहतो मूर्ध्नि खड्गं चाजीहरद् द्विधा ।
प्राणानौज्झीच्च खड्गेन छिन्नैस्तेनैव मूर्द्धभिः ॥ ८४ ॥
मत्तेनामारि संप्राप्य शरभास्तां महागदाम् ।
सहस्रहरिणाक्रीडीदतिकायस्ततो रणे ॥ ८५ ॥

अबभ्राजदित्यादि । तदनन्तरं त्रिशिराः कुमारो हनूमद्विषये शक्तिं दीपयतिस्म भ्राजृङ् षटुच चकाराङ्गासि उङो ह्रस्वाभावपक्षे रूपमिदं तस्य वाजिनो रथाश्वाः हनूमता चतास्ताड़िताः सन्तो मृताः मृङ्प्राणत्यागे दगुडुर्मठीति कित्वात् गुणाभावः ॥ ८३ ॥ भ०

अस्रेत्यादि । त्रिशिराश्च हनूमता मूर्ध्नि हतः सन् रथाद् भूमौ अस्रसत् रथाद्भूमौ स्रस्तः ध्वंसु स्रंसु अवस्रंसने लुङीति परस्मैपदं द्युतादित्वादङ् क्ङितीत्यनुनासिकलोपः स्रस्तश्च स खड्गं हस्तस्थं द्विधा हनूमता अजीहरत् हारितवान् तेनैव च खड्गेन छिन्नैर्मूर्द्धभिर्हेतुभूतैः प्राणानौज्झीत् त्यक्तवान् उज्झ उत्सर्गे ॥ ८४ ॥ ज० म०

अस्रसदित्यादि । हनूमता मूर्ध्नि आहतश्च त्रिशिरा रथात् भ्रष्टः स्रंसन्नुङ्भ्रंशे द्युतादित्वात् ङः तेनैव पं हलङ्गलोपः स्रस्तः सन् स्वहस्तस्थितं खड्गं द्विधा हनूमता हारितवान् तद्व्याकुलत्वेन हनूमता खड्गो हृत इत्यर्थः हृञ हरणे अन्तादङ् घोऽजौजे- रित्यादिना प्रयोज्यस्य न कर्मत्वं पाक्षिकत्वात् तेनैव खड्गेन छिन्नै- र्मूर्द्धभिर्हेतुभूतैः स त्रिशिराः प्राणान् त्यक्तवान् उज्झच त्यागे ॥ ८४ ॥ भ०

मत्तेत्यादि । शरभेण वानरेणास्तां क्षिप्तां महागदां संप्राप्य मत्तेन सुतानां रक्षार्थं प्रेषितेन राक्षसेनामारि मृतं भावे लुङ् । ततो- ऽनन्तरम् अतिकायो राजपुत्रो रणे अक्रीड़ीत् विहरतिस्म रथेनेति वक्ष्यति सहस्रं हरयोऽश्वा यस्य रथस्य ॥ ८५ ॥ ज० म०

मत्तेत्यादि । शरभेण कपिना क्षिप्तां महागदां समाप्य मत्तेन रक्षसा मृतं भावे लुङ् मत्तेन या गदा शरभाय क्षिप्ता तयैव शरभस्तं मारयामासेत्यर्थः । तदनन्तरम् अतिकायः कुमारो रणे क्रीड़तिस्म

रथेनाविव्यथच्चारीन् व्यचारीच्च निरङ्कुशः।
विभीषणेन सोऽख्यायि राघवस्य महारथः॥ ८६॥
अतस्तम्भदयं वज्रं स्वयम्भुवमतूतुषत्।
अशिश्रिष्ट महास्त्राणि रणेऽरक्षीच्च राक्षसान्॥ ८७॥
अध्यगीष्टार्थशास्त्राणि यमस्याक्रीष्ट विक्रमम्।

क्रीड़ खेले। केन सहस्रहरिणा सहस्राश्वयुक्तेन रथेनेत्यग्रिमश्लोकेन सम्बन्धः॥ ८५॥ भ०

रथेनेत्यादि। अरींश्चाविव्यथत् पीड़ितवान् व्यथेरण्यन्तस्य चङि रूपं निरङ्कुशश्चाप्रतिहतशक्तिर्व्यचारीत् भ्राम्यतिस्म रान्तत्वाद्वृद्धिः। स विचरन्महारथः विभीषणेन राघवस्य आख्यायि कथितः कर्मणि लुङ्॥ ८६॥ ज० म०

रथेनेत्यादि। चकारः समुच्चये अरीन् शत्रूनविव्यथत् पीड़यामास व्यथेर्ण्यन्तस्य णिश्रिद्रुस्रु इत्यादिना चङ् निरङ्कुशश्चाव्याहतगतिः सन् व्यचारीत् बभ्राम राघवस्य रामस्य सम्बन्धे विभीषणेन महारथोऽख्यायि सोऽयमागत इति निर्दिष्ट इत्यर्थः॥ ८६॥ भ०

कीदृशः कथित इत्याह।

अतस्तम्भदित्यादि। अयं स्वशक्त्या वज्रम् अतस्तम्भत् स्तम्भितवान् स्तभिस्तम्भिप्रतिस्तम्भे ण्यन्तस्य णिश्रीत्यादिना चङ्, स्वयम्भुवमतूतुषत् उग्रेण तपसा आराधनात् तोषितवान् तुष प्रीतौ ण्यन्तः, महास्त्राणि दिव्यानि चाशिश्रिष्ट शिक्षतेस्म शिक्षविद्यापादाने रणे च राक्षसानरक्षीत् रक्षतिस्म॥ ८७॥ ज० म०

अतस्तम्भदित्यादि। अयं वज्रं स्तम्भयामास निवारितवान् ष्टभिस्तभिङ् स्तम्भे अग्लादङ्, स्वयम्भुवं ब्रह्माणं तोषितवान् तपसेत्यर्थात् स्वयमात्मना भुवं पालनेन तोषितवानित्यन्ये तुष तुष्टौ अग्लादङ् उङो ह्रस्वत्वे रोः सन्वदिति दीर्घः, महास्त्राणि अशिश्रिष्ट शिक्षतेस्म शिक्षङ् शिक्षणे, राक्षसान् रक्षितवांश्च॥ ८७॥ भ०

अध्यगीष्टेत्यादि। अर्थशास्त्राणि पराभिसन्धानार्थानि अध्यगीष्ट

देवाहवेष्वदीपिष्ट नाजनिष्टास्य साध्वसम् ॥ ८८ ॥
एष रावणिरापादि वानराणां भयङ्करः ।
आह्वताथ स काकुत्स्थं धनुश्चापुस्फुरद्गुरु ॥ ८९ ॥
सौमित्रिः सर्पवत् सिंहमार्दिदत्तं महाहवे ।
तौ प्राबीवृततां जेतुं शरजालान्यनेकशः ॥ ९० ॥

अधीतवान् विभाषा लुङ्लृङोरिति इङो गाङादेशः यमस्याप्ययं विक्रमसमक्नोष्ट अपनीतवान् क्नुङ् अपनयने अहृदन्तत्वात्सिचो न किच्चं देवाहवेष्वदीपिष्ट शोभितः अस्य च साध्वसं भयं नाजनिष्ट न जातं दीपजनेत्यादिना चिण्वद्भावपक्षे रूपम् ॥ ८८ ॥ ज० म०

अध्यगीष्टेत्यादि । अर्थोपयुक्तानि शास्त्राणि असौ अधीतवान् गीङष्टीध्योर्वा, यमस्य विक्रमसमपक्नुतवान् क्नुङ् चौर्य्ये, देवाहवेषु असौ दीप्यतेस्म, अस्य साध्वसं भयं कुत्रापि न जातं पदस्तनीण् घे इत्यादेरप्रवृत्तिपक्षे सिः ॥ ८८ ॥ भ०

एष इत्यादि । य एवं स एष रावणिः आपादि अस्माकं समीपमागतः पद गतौ चिण् ते पद इति चिण् यतो रावणिर्वानराणां भयङ्करः अथ सोऽतिकायः समीपमागतः काकुत्स्थमाह्वत युद्धायाह्वतवान् आत्मनेपदेष्वन्यतरस्यामित्यङ् धनुश्च गुरु महदपुस्फुरत् स्फारितवान् चिस्फुरोर्णावित्यात्वम् ॥ ८९ ॥ ज० म०

एष इत्यादि । य एवंभूतः स एव रावणपुत्रोऽतिकाय आपादि आगतः चौपदङ् गतौ पदस्तण् घे यतो यस्माद्वानराणां भयमुत्पन्नमिति विभीषणेनाख्यायीति सम्बन्धः भयङ्कर इति क्वचित् पाठः सोऽतिकायो रामम् आह्वत स्पर्द्धायामाङ इति सं वक्तास्येति ङः गुरु महद्धनुः स्फारितवान् स्फुरणि स्फूर्त्तौ अग्लादङ् क्रीजीङ इत्यादिना पाक्षिक उकारस्याकारः ॥ ८९ ॥ भ०

सौमित्रिरित्यादि । यथा सर्पः सिंहं गच्छति तद्वत्तमतिकायमार्दिदत् गतवान् अर्द गतौ अर्दनमर्दः तत्करोतीति णिच् तदन्ताच्चङि रूपम् अर्द हिंसायामिति चौरादिको वा तौ सौमित्र्यतिकायौ जेतुं

अच्छैत्तान्च महात्मानौ चिरमश्रमतां न च ।
तथा तावास्यतां बाणानतानिष्टां तमो यथा ॥९१॥
सौर्य्याग्नेये व्यकारिष्टामस्त्रे राक्षसलक्ष्मणौ ।
ते चोपागमतां नाशं समासाद्य परस्परम् ॥ ९२ ॥

शरजालानि प्रावीवृततां बहूनि प्रवर्त्तितवन्तौ उर्ऋदिति णौचङ्युप-धाया अपवाद ऋकारः ॥ ९० ॥ ज० म०

सौमित्रिरित्यादि । लक्ष्मणस्तं महाहवे आर्दिदत् पीड़ितवान् सिंहं सर्प एव एकगुहास्थतया तयोर्विरोधात् अर्दक् च चकाराद्वधे चुरादिः अग्लादङ् अर्द्द यातनागतियाचन इत्यस्मात् चुर्य्योजिर्वेत्यस्य योगविभागाद्वा जिः षजन्तात् जिरिति केचित् । तौ लक्ष्मणाति-कायौ जेतुम् अनेकशो बहूनि शरजालानि प्रवर्त्तितवन्तौ वृतङ्वृ-त्त्यवर्त्तने अग्लादङ् वर्द्दु ङोधुरिति पक्षे गुणाभावः ॥ ९० ॥ भ०

अच्छैत्तामित्यादि । तौ च महात्मानौ परस्परस्य शरजालानि अच्छैत्तां छिन्नवन्तौ इरितो वेत्यङभावपक्षे रूपं झलो झलीति सिचो लोपः, चिरं चिरेणापि नाश्रमतां न श्रान्तौ श्रमिः पुषादिः । तौ तथा बाणानास्यतां चिप्तवन्तौ असति वक्तीत्यङ् असतेस्थुक् यथा अन्धकारमतानिष्टां विस्तारितवन्तौ अतो हलादेर्लघोरिति दृद्धिविकल्पः ॥ ९१ ॥ ज० म०

अच्छैत्तामित्यादि । तौ च महात्मानौ महायत्नौ परस्परं शर-जालानि छिन्नवन्तौ छिदिरधोञ्च्छेदे ङाभावपक्षे सिः अनिसत्वाद्वि, झसस्थाज्झसीति सिलोपः । आत्मा यत्नौ धृतिर्बुद्धिरित्यमरः । चिरं बहुनापि कालेन न श्रान्तौ श्रमुतपःखेदयोः । तथा तौ बाणान् चिप्त-वन्तौ यथा तमोऽन्धकारं विस्तारितवन्तौ असु क्षेपे वक्तास्येति ङः वच्यसुशिपतामित्यस्यादेशः तनदुञ् विस्तृतौ हसादेः सेम इति पक्षे वृद्धिः ॥ ९१ ॥ भ०

सौर्य्याग्नेये इत्यादि । राक्षसः सौर्य्यमस्त्रं व्यकारीत् विक्षिप्त-वान् कृ विक्षेपे लक्ष्मणोऽप्याग्नेयम् इत्येवं तौ व्यकारिष्टां ते चास्त्रे

अविभ्रजत्ततः शस्त्रमैषीकं राक्षसो रणे ।
तदप्यध्वसदासाद्य माहेन्द्रं लक्ष्मणेरितम् ॥ ९३ ॥
ततः सौमित्रिरस्यार्षीददेविष्ट च दुर्जयम् ।
ब्रह्मास्त्रं तेन मूर्द्धानमदध्वंसन्नरद्विषः ॥ ९४ ॥

परस्परमासाद्य प्राप्य नाशमुपागमतां लृदित्त्वादङ् ॥ ९२ ॥ ज० म०

सौर्य्येत्यादि । राक्षसलक्ष्मणौ सौर्य्याग्नेये अस्त्रे यथाक्रमं व्यकारिष्टां कृञ् विक्षेपे सूर्य्यो देवताऽस्येति विकारसङ्घेत्यादिना ण्यः । सौम्येति क्वचित्पाठः । अग्निर्देवता अस्येति पूर्व्वेण ण्येयः ते चास्त्रे परस्परं समासाद्य प्राप्य नाशमुपागमतां प्रापतुः लृदित्त्वाद्दमेङः ॥ ९२ ॥ म०

अविभ्रजदित्यादि । ततोऽनन्तरं रावणिः ऐषीकमस्त्रम् इषीकाया इदं तत्सर्वस्रोतःसु प्रविशत् जीवितमपहरति रणे अविभ्रजत् दीपितवान् भ्राजभासेत्यादिना उपधाया ह्रस्वत्वं तदपि अध्वसत् ध्वस्तं ध्वसिद्युतादिः लक्ष्मणेरितं लक्ष्मणप्रेरितं माहेन्द्रमस्त्रमासाद्य तद्गतिरोधं कृत्वा ध्वंसयति ॥ ९३ ॥ ज० म०

अबिभ्रजदित्यादि । तदनन्तरं रावणपुत्त्र ऐषीकमस्त्रं रणे भ्राजयामास भ्राजभासेति पाक्षिक उङो ह्रस्वः । लक्ष्मणेरितं क्षिप्तं माहेन्द्रमस्त्रमासाद्य तदपि ऐषीकमस्त्र ध्वस्तं, महेन्द्रो देवतास्येति ण्यः ॥ ९३ ॥ भ०

तत इत्यादि । अनन्तरं सौमित्रिः दुर्जयम् अनभिभवनीयं ब्रह्मास्त्रमस्रार्षीत् सरतिस्र सिचि वृद्धिः, तच्च स्मरणादुपस्थितम् अदेविष्ट द्योततेस्म तेष्टदेष्टृदेवन इति अनुदात्तेत् द्योतने द्रष्टव्यः देवनस्यानेकार्थत्वात्, तेन च ब्रह्मास्त्रेण प्रयोजककर्त्रा नरद्विषो राक्षसस्य मूर्द्धानमदध्वंसत् पातितवात् सौमित्रिः हेतुमण्ण्यन्ताच्चङि रूपम् ॥ ९४ ॥ ज० म०

तत इत्यादि । तदनन्तरं सौमित्रिर्दुर्जयं ब्रह्मास्त्रं सृष्टवान् सृज सृष्टौ, स्मरणादुपस्थितं तत् अदेविष्ट शोभतेस्म किंवा स्मरणादुप-

ततोऽक्रन्दीद्दशग्रीवस्तमाश्विश्वसदिन्द्रजित् ।
निरयासीच्च संक्रुद्धः प्रार्चिचच्च स्वयम्भुवम् ॥ ९५ ॥
अहौषीत् कृष्णवर्त्मानं समयष्टास्त्रमण्डलम् ।
सोऽलब्ध ब्रह्मणः शस्त्रं स्यन्दनञ्च जयावहम् ॥ ९६ ॥

स्थिते ब्रह्मास्त्रे सौमित्रिर्हर्षात् शोभतेस्म जेतुमिच्छतिस्मेत्याद्यर्थो वा देवृङ्देवने देवनशब्देन दिवधातोरर्था जिगीषाद्या उच्यन्ते तेन ब्रह्मास्त्रेण प्रयोज्यकर्त्तृणा नरद्विषो राक्षसस्य मूर्द्धानं लक्ष्मणो ध्वंसयामास ध्वंसु लृङ् गतौ भ्रंशे अन्नन्तादङ् ॥ ९४ ॥ म०

तत इत्यादि । ततः सुतमरणानन्तरं दशग्रीवः अक्रन्दीत् रोदिति स्म तञ्च क्रन्दन्तमिन्द्रजिदाश्विश्वसत् आश्वासितवान् मयि जीवति किं पृथग्जनवद्रोदिषीति हेतुमण्ण्यन्तस्य चङि रूपं संक्रुद्धश्च निरयासीत् रावणस्थानान्निर्गतः याप्रापणे निर्गत्य च स्वगृहे स्वयम्भुवं ब्रह्माणं प्रार्चिचत् पूजितवान् अर्च पूजायामिति चुरादिः चङि अजादेर्द्विर्वचनम् ॥ ९५ ॥ ज० म०

तत इत्यादि । पुत्रवधानन्तरं दशग्रीवः क्रन्दतिस्म तं रुदन्तम् इन्द्रजिदाश्वासितवान् मयि स्थिते का चिन्तेति श्वस प्राणने अन्नन्तादङ् स च संक्रुद्धः सन् निर्गतः यमरमनमात इति यातेरिम्सन्तौ सोऽन्तः स्वगृहान्निर्यातः सन् स्वयम्भुवं ब्रह्माणम् अर्चितवान् अर्चक् पूजे चुरादिजन्नन्तादङ् ॥ ९५ ॥ म०

अहौषीदित्यादि । कृष्णवर्त्मानमग्निमहौषीत् हव्येन प्रीणितवानित्यर्थः, अस्त्रमण्डलम् आयुधग्रामं समयष्ट पूजितवान् स इन्द्रजित् ब्रह्मणः सकाशात् जयावहमस्त्रं स्यन्दनं चालब्ध लब्धवान् भलो भलीति सिचो लोपः ॥ ९६ ॥ ज० म०

अहौषीदित्यादि । इन्द्रजित् कृष्णवर्त्मानमग्निं हुतवान् हुवि होमेऽदने अस्त्रमण्डलं समयष्ट पूजितवान् यजैज्यौ देवार्चादानसङ्गतिषुतौ स ब्रह्मणः सकाशात् जयावहं जयजनकम् अस्त्रं रथञ्च लब्धवान् लभडौङ्प्राप्तौ झलस्वादिति सिलोपः ॥ ९६ ॥ म०

तमध्यासिष्ट दीप्राग्रममोदिष्ट च रावणिः ।
छन्नरूपस्ततोऽकर्त्तीद्देहान्रावणविद्विषाम् ॥ ९७ ॥
सप्तषष्टिं प्लवङ्गानां कोटीर्बाणैरसूषुपत् ।
निशान्ते रावणिः क्रुद्धो राघवौ च व्यमूमुहत् ॥ ९८ ॥
अपिस्फवत् स्वसामर्थ्यमगूहीच्छायकैर्दिशः ।
अघोरीच्च महाघोरं गत्वा प्रैषीच्च रावणम् ॥ ९९ ॥

तमित्यादि । तं स्यन्दनं दीप्राग्रम् उपरिभागस्य रत्नप्रत्युप्तत्वात् अध्यासिष्ट अध्यासितवान् अधिशीङिति कर्मसंज्ञा तत्रस्थश्च रावणिरिन्द्रजित् अमोदिष्ट हृष्टवान् ततोऽसौ छन्नरूपः अदृश्यः सन् रावणविद्विषां वानराणां देहानकर्त्तीत् छिन्नवान् कृतो छेदने सेसिचीत्यादिना सिचोऽन्यतरेड्विकल्पः । रावणिद्विषामिति पाठान्तरं तत्र देवान्तकादिविद्विषामित्यर्थः ॥ ९७ ॥ ज० म०

तमित्यादि । रावणपुत्त्र इन्द्रजित् तं स्यन्दनं दीप्राग्रमुपरिभागस्य रत्नमयत्वात् अध्यासितवान् शिजासङ् उपवेशे कर्मक्रियेत्यादिना ङस्य ढत्वम् अमोदिष्ट च हर्षं प्राप च शिमुदङ् हर्षे असौ छन्नरूपोऽदृश्यः सन् रावणविद्विषां वानराणां देहान् कर्त्तितस्म कृतीशपच्छिदि रावणिविद्विषामिति पाठे देवान्तकादिशत्रूणामित्यर्थः ॥ ९७ ॥ भ०

सप्तषष्टिमित्यादि । वानराणां कोटिं सप्तषष्टिं बाणैरसूषुपत् स्वापितवान् व्यापादितवानित्यर्थः स्वापेश्चङीति सम्प्रसारणं निशान्ते च निशावसाने रावणिः क्रुद्धः सन् राघवौ व्यमूमुहत् मोहितवान् मुह वैचित्त्ये णौ चङि रूपम् ॥ ९८ ॥ ज० म०

सप्तषष्टिमित्यादि । प्लवङ्गानां सप्ताधिकषष्टिं कोटीर्बाणैरिन्द्रजित् स्वापयामास स्वपौवलुञिशये अग्रन्तादङ् स्वपोजिरिति जिः निशाया अन्ते रावणपुत्त्रः क्रुद्धः सन् राघवावपि मोहयामास मुह जिलृ वैचित्त्ये अग्रन्तादङ् ॥ ९८ ॥ भ०

अपिस्फवदित्यादि । तौ मोहयित्वा आत्मीयं सामर्थ्यमपिस्फवत्

विभीषणस्ततोऽबोधि सस्फुरौ रामलक्ष्मणौ ।
अपारीत् स गृहीतोल्को हतशेषान् प्लवङ्गमान् ॥१००॥

वर्द्धयतिस्म इदृशस्तादृशोऽहमिति स्फायी व इति णौ वत्वं दिशः शायकैरगूहीत् छादितवान् नेटीति इड्विप्रतिषेधः ह्रन्तत्वाद्वा महाघोरञ्चातिरौद्रं शब्दमघोरीत् मुक्तवान् गत्वा च लङ्कां रावणं प्रैषीत् प्रेषितवान् गच्छ तात ! ममाद्भुतपराक्रमं द्रष्टुमिति, इषु गतौ ॥ ९९ ॥ ज० म०

अपीत्यादि । इन्द्रजिदात्मीयं सामर्थ्यं वर्द्धयामास स्फायीङ् संहतौ णिः पातिस्फायोरिति वङ् शायकैर्बाणैः शत्रून् अगूहीत् आच्छादितवान् गुहूञ संवृतौ ऊदित्त्वादिम् गुहोणोरूः महारौद्रम् अघोरीत् शब्दं चक्रे घुरशब्दनौ भीमार्थे लङ्कां गत्वा रावणं प्रीणातिस्म प्रीञ तर्पणे प्रीगञकान्तो चेत्यस्य वा रूपम् अयमपि चकारात्तर्पणे किंवा रावणं प्रेरयामास जितशत्रून् द्रष्टुमित्यर्थात् इष्य तर्पणे ॥ ९९ ॥ भ०

विभीषण इत्यादि । ततस्तस्मिन् काले विभीषणः रामलक्ष्मणौ सस्फुरौ चलन्तौ अबोधि बुद्धवान् जीवितादिति दीपजनेत्यादिना कर्त्तरि चिण् स्फुरणं स्फुरः घञर्थे कविधानं यदुक्तं स्थास्नागाव्यधिहनियुध्यर्थमिति तदुपलक्षणं न परिगणनं स विभीषणः अन्धकारात् गृहीतोल्कः सन् हतशेषान् प्लवङ्गमानपारीत् मा भैष्टेति प्रीणितवान् ॥ १०० ॥ ज० म०

विभीषण इत्यादि । तदनन्तरं स विभीषणो रामलक्ष्मणौ सस्फुरौ स्फुरन्तौ अबोधि ज्ञातवान् पदस्तनीषण्मे इत्यादिना इण् स्फुरशि स्फूर्त्तौ पचादित्वादन् कुटां णुश्रीञ्णितीति नियमात् गुणाभावः इजुङत्वात् कृमृङ्गा प्रीजुङ इति कप्रत्ययो वा अन्ये तु भावेऽपि कप्रत्ययः स्यादित्युक्त्वा सस्फुरावित्यत्र सहशब्देन समासं कुर्वन्ति । स विभीषणोऽन्धकारात् गृहीतोल्को हतशेषान् वानरान् अपारीत् अभयदानेन पालयामास पृ लि पालने ॥ १०० ॥ भ०

मा शोचिष्ट रघुव्याघ्रौ नाम्लघातामिति ब्रुवन्।
अवाबुद्ध स नीलादीन् निहतान् कपियूथपान् ॥१०१॥
तत्रेषज्जाम्बवान् प्राणीदुदमीलच्च लोचने।
पौलस्त्यञ्चागदीत् कच्चिदजीवीन्मारुतात्मजः ॥ १०२ ॥

मा शोचिष्टेत्यादि। यूयं मा शोचिष्ट शोकं मा कुरुत माङि लुङ् यस्माद्रघुव्याघ्रौ नाम्लघातां न म्लतौ इत्येवं ब्रुवन् अपारीदिति योज्यं ये च निहतास्तान्नीलादीन् कपियूथपान् स विभीषणः परिभ्रमन् अवाबुद्ध अवबुद्धवान् एते हता इति दीपेत्यादिना चिणो विकल्पितत्वादभावपक्षे रूपम् ॥ १०१ ॥ ज० म०

मा शोचिष्टेत्यादि। यूयं मा शोकं कुरुत शुच शोके रघुश्रेष्ठौ रामलक्ष्मणौ नाम्लघातां न म्लतौ इति ब्रुवन् अपारीदिति पूर्वश्लोकेन सम्बन्धः अथ नीलादीन् कपियूथपान् निहतान् बुद्धवान् पदस्तनोध्र्वे इत्यस्याप्रवृत्तिपक्षे सिः झलझलादिति सिलोपः ॥ १०१ ॥ भ०

तत्रेत्यादि। तत्र तेषु जाम्बवान् ईषन्मनाक् प्राणीत् उच्छ्वसिति स्म अन प्राणने अनितेरिति णत्वं लोचने च उदमीलत् उन्मीलितवान् मीलच्मीलनिमेषणे पौलस्त्यञ्च विभीषणमगदीत् गदितवान् अतो हलादेरुद्धौ रूपं कच्चित् किं हनूमान् अजीवीत् जीवितवान् न मृत इति ॥ १०२ ॥ ज० म०

तत्रेत्यादि। तेषु मध्ये जाम्बवान् ईषत् प्राणीत् उच्छ्वसितिस्म अनप्लुप्राणने प्राग्वन्नोण इत्यादिना पाक्षिकं णत्वं लोचने अमीमिलत् मीलयामास मील्हनिमेषे जग्न्तादङ् भ्राजभासेति पाक्षिक उङो ह्रस्वः। उदमीलीच्चेति पाठे सिः ईसिमौ उदमीलच्चेति पाठोऽशुद्ध एव ङविषयाभावात् न च शप् छ्यधिकारात् न च पञ्चरः शिच्चेति ख्यारत्वेऽपि कचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति शप् वक्तुं शक्यः कुत्रचित् केनचिदयुक्तत्वात् पुषादिपाठः स्वीकर्त्तव्य इत्यन्ये। पौलस्त्यं विभीषणञ्च गदितवान् गद भाषे हलादेः सेम इति पक्षे व्रिः। किमगदीदित्याह मारुतात्मजो हनूमान् जीवितवान् कच्चित् काममवेदने

तस्य क्षेमे महाराज ! नाभूमह्यखिला वयम् ।
पौलस्त्योऽपिप्रवत्तञ्च जीवन्तं पवनात्मजम् ॥ १०३ ॥
आयिष्ट मारुतिस्तत्र तौ चाप्यहृषतां ततः ।
प्राहैष्टां हिमवत्पृष्ठे सर्वौषधिगिरिं ततः ॥ १०४ ॥

जीवक्रमात्रे आशंसायां टी अभिधानात् माटोवेत्यत योगविभागाद्वा ॥ १०२ ॥ भ०

तस्येत्यादि । तस्य हनूमतः क्षेमे जीवितत्वे सति हे महाराज ! अखिलाः सर्व एव वयं नाभूमहि न मृता इति आशंसायां भूतवद्वेति लुङ् एवमुक्तः पौलस्त्यो जीवन्तं पवनात्मजं तमशिश्रवत् आविततवान् श्रृणोतेर्ण्यन्ताच्चङि सन्वद्भावे अभ्यासे वर्णस्य स्रवति शृणोतीत्यादिना इत्वपक्षे रूपम् ॥ १०२ ॥ ज० म०

तस्येत्यादि । हे महाराज ! विभीषण ! हनूमतः क्षेमे कुशले सति सर्व एव वयं न मृताः म्रङोऽलोप्ये लमे इगुङुर्मठौति कित्वाद्गुणाभावः अत्राशंसायां ङीत्यन्ये । एवमुक्तः पौलस्त्यो विभीषणो जीवन्तं पवनात्मजं तं जाम्बवन्तं श्रावयामास श्रोर्ण्यन्तादङ् स्रुसुद्रु इत्यादिना वेत्वतः पाक्षिकमित्वं वोओजेरिति प्रयोज्यस्य कर्मत्वम् ॥ १०३ ॥ भ०

आयिष्टेत्यादि । तत्र पौलस्त्याद्धतो मारुतिरायिष्ट आगतवान् अयगताविङ्पूर्वः ततोऽनन्तरं तौ जाम्बवद्विभीषणौ अहृषातां हृष्टवन्तौ हृष तुष्टौ पुषादिः ततस्तौ हृष्टौ हनूमन्तमिति वक्ष्यमाणेन सम्बन्धः प्राहैष्टां प्रहितवन्तौ सिचि वृद्धिः हि गतौ हिमवतः पृष्ठे सर्वौषधिगिरिं सर्वा ओषधयो यस्मिन्निति ॥ १०४ ॥ ज० म०

आयिष्टेत्यादि । तत्र देशे पौलस्त्येनाहूतो मारुतिरांहिष्ट आगतः अहिङ गतौ आयिष्टेति पाठे अयङ् गतौ ततोऽनन्तरं तौ च जाम्बवद्विभीषणौ हर्षं प्रापतः हृषज्ञ तुष्टौ पुषादिः ततस्तौ हिमालयस्य पृष्ठभागे सर्वा ओषधयो यत्र तं गिरिं प्राहैष्टां प्रस्थापितवन्तौ हनूमन्तमित्युत्तरश्लोकेनान्वयः हिन वर्द्धने गतौ ॥१०४॥ भ०

तौ हनूमन्तमानेतुमोषधीं मृतजीविनीम्।
सन्धानकरणीं चान्यां विशल्यकरणीं तथा॥ १०५॥
प्रोदपाति नभस्तेन स च प्रापि महागिरिः।
यस्मिन्नज्वलिषू रात्रौ महौषध्यः सहस्रशः॥ १०६॥
निरचायि यदा भेदो नौषधीनां हनूमता।
सर्व एव समाहारि तदा शैलः सहौषधिः॥ १०७॥

तावित्यादि। या मृतं जीवयति या च क्षतस्य सन्धानं करोति तथा विशल्यञ्च या करोति तत्ल्युटौ बहुलं तामोषधिमानेतुं प्राहैष्टामिति योज्यम्। ओषधेः विभक्तावप्रथमायामिति दीर्घत्वम्॥ १०५॥ वा० सं०

तावित्यादि। या मृतं जीवयति या च क्षतस्य सन्धानं करोति या च विशल्यं करोति तामोषधिमानेतुं हनूमन्तं तौ प्राहैष्टामिति पूर्वेणान्वयः करणेऽस्मी इति कर्त्तरि ल्युट् नन्द्यादित्वात्॥ १०५॥ भ०

प्रोदपातीत्यादि। तेन हनूमता नभः प्रोदपाति उत्पतितं स च महागिरिस्तेन प्रापि प्राप्तः कर्मणि लुङ् यस्मिन् गिरौ महौषध्यः सहस्रशोऽनेकधा रात्रावज्वलिषुः दीप्यन्ते स्म ज्वलतो वान्तस्येति वृद्धिः॥ १०६॥ ज० म०

प्रोदपातीत्यादि। तेन हनूमता नभ आकाशमुत्पतितं स च महागिरिः प्राप्तः उभयत्र कर्मणि लुङ् यस्मिन्महागिरौ सहस्रशो महौषधयो रात्रौ ज्वलन्ति स्म ज्वलदेति वृद्धिः॥ १०६॥ भ०

निरचायीत्यादि। यदा हनूमता ओषधीनां भेदो न निरचायि विशेषतो न निश्चितः तदा तत्स्थ एव शैलः महौषधिरोषधिसहितः समाहारि समानीतः॥ १०७॥ ज० म०

निरचायीत्यादि। यदा हनूमता ओषधीनां प्रागुक्तानां भेदो न निश्चितः तदा ओषधिसहितः समस्त एव शैलः समाहृतः समानीतः उभयत्र कर्मणि लुङ् सहः सो वेति पक्षे सादेशाभावः॥ १०७॥ भ०

प्राणिषुर्निहताः केचित् केचित्तु प्रोदमीलिषुः ।
तमोऽन्येऽहासिषुर्योधा व्यजृम्भिषत चापरे ॥ १०८ ॥
अजिघ्रपंस्तथैवान्यानोषधीरालिपंस्तथा ।
एवं तेऽचेतिषुः सर्वे वीर्य्यञ्चाधिषताधिकम् ॥ १०९ ॥

प्राणिषुरित्यादि । तदा ओषधिसन्निधानात् ते निहताः केचिद्योधाः प्राणिषुः उच्छ्वसितवन्तः केचित्तु प्रोदमीलिषुः उन्मीलितलोचना बभूवुः अन्ये तमो मोहमहासिषुः त्यक्तवन्तः यमरमेति सगिटौ तथान्येऽहासिषुरिति पाठान्तरं ते तथाभूतमात्मानं दृष्ट्वा सविलासं हसितवन्तः अपरे व्यजृम्भिषत जृम्भिकां कृतवन्तः जृम्भ-जृभि गात्रविनामे इत्यात्मनेपदी ॥ १०८ ॥ ज० म०

प्राणिषुरित्यादि । प्रभावान्निहताः केचिद्योधाः प्राणिषुरुच्छ्वसिताः केचिच्च उन्मीलितनेत्रा अभूवन् अन्ये तमो मोहमहासिषुस्त्यक्तवन्तः ओहाक् त्यागे यमरमेति इमसनौ ततोऽन्येऽहसिषुरिति पाठे अनन्तरम् आत्मानं दृष्ट्वा हसितवन्त इत्यर्थः हस हासे अपरे जृम्भां कृतवन्तः जृभिङ च चकारात् जृम्भे ॥ १०८ ॥ भ०

अजिघ्रपन्नित्यादि । तथान्यान् लब्धसंज्ञानोषधीरजिघ्रपन् घ्रापितवन्तः नासिकयाभ्यवहृतवन्तः इत्यर्थः गतिबुद्धीत्यादिना प्रत्यवसाने कर्मसंज्ञा जिघ्रतेर्वेति णौचङ्युपधाया इत्यकारः तथालिपन् लिप्तवन्तः अन्यानोषधीभिरित्यर्थात् लिपिसिचीत्यङ् एवमनेन प्रकारेण सर्वेऽचेतिषुः संज्ञां लब्धवन्तः चितीसंज्ञाने अधिकञ्च वीर्य्यमोषधिबलादधिषत दधतिस्म स्थाध्वोरिच्च ॥ १०९ ॥ ज० म०

अजिघ्रपन्नित्यादि । अन्ये लब्धसंज्ञाः सन्तः अन्यान् ओषधीर्घ्रापितवन्तः घ्रागन्धोपादाने तच्च नासिकया भोजनं ज्ञानविशेषो वेति घोऔजेत्यादिना प्रयोज्यस्य कर्मत्वं घोरिति पाक्षिकलुङ् इत्वम् अन्ये अलिपन् लिप्तवन्तः शरीरमोषधीभिरित्यर्थात् वक्तव्यस्येति ङः एवमनेन प्रकारेण ते सर्वेऽचेतिषुः संज्ञां प्रापुः चितीसंज्ञाने अधिकञ्च वीर्य्यं किञ्च दधतिस्म स्थादोर्ङिच्चीमे न घुः ॥ १०९ ॥ भ०

अजिह्लदत् स काकुत्स्थौ शेषांश्चाजीजिवत् कपीन् ।
हनूमानथ ते लङ्कामग्निनादीदिपन् द्रुतम् ॥११०॥
समनात्सीत्ततः सैन्यममार्जीद्भग्नतोमरम् ।
अमार्क्षीचासिपत्रादीनवभासत् परश्वधान् ॥१११॥
कुम्भकर्णसुतौ तत्र समनह्यां महाबलौ ।

अजिह्लददित्यादि । एवञ्च सति हनूमान् काकुत्स्थावजिह्लदत् ह्लादितवान् ह्लादी सुखे ण्यन्तः शेषांश्च कपीनजीजिवत् जीवयतिस्म । अथ ते जीविताः सन्तः लङ्कां द्रुतमदीदिपन् दीपितवन्तः भ्राजेत्यादिना ह्रस्वपक्षे रूपम् ॥ ११० ॥ ज० म०

अजिह्लददित्यादि । स हनूमान् रामलक्ष्मणौ ह्लादयामास ह्लादीङ् मोदने अग्लोपादङ् शेषांश्च कपीन् जीवयतिस्म भ्राजभासेत्यादिना पक्षे उङो ह्रस्वः । अथ जीविताः सन्तः ते द्रुतं लङ्कां वह्निना दीपयन्तिस्म पूर्ववदुङो ह्रस्वः ॥ ११० ॥ भ०

समनात्सीदित्यादि । ततः सैन्यं समनात्सीत् सन्नद्धं नह्योध इति धत्वं हलन्तलक्षणा वृद्धिः भग्नतोमरममार्जीत् शोधितवत् मृजेर्वृद्धित्वात् पक्षे रूपम् असिपत्रादीनमार्क्षीत् इडभावे रूपम् उभयत्रापि मृजेर्वृद्धिः परश्वधानवभासत् दीपितवान् भ्राजभासेति ह्रस्वपक्षे रूपम् अभासीच्चेति पाठान्तरं तत्रान्तर्भावितो ण्यर्थः ॥ १११ ॥ ज० म०

समनात्सीदित्यादि । ततोऽनन्तरं रावणस्य सैन्यं समनात्सीत् सन्नद्धं चक्रजौ वर्म्मेऽनिस्त्वात् नह्योधङ् भौ भग्नं तोमरञ्चास्त्रम् अमार्जीत् शोधितवत् मृजलूष शुद्धौ ऊदित्त्वादेस मृजोऽकङितीति वृद्धिः असिपत्रादीन् खड्गादींश्च अमार्क्षीत् इमोऽभावपक्षे रूपं षच्छ्राजिति षड् षढोः कः परश्वधान् अवभासत् भासृङ् दीप्तौ अग्लोपादङ् भ्राजभासेति ह्रस्वाभावपक्षे रूपम् । अभासीच्चेति पाठे भातेरन्तर्भूतण्यर्थत्वम् ॥ १११ ॥ भ०

कुम्भकर्णेत्यादि । कुम्भश्चैव निकुम्भश्च कुम्भकर्णसुतौ महाबलौ

निकुम्भश्चैव कुम्भश्च प्रापतां तौ प्लवङ्गमान् ॥११२॥
अगोपिष्टां पुरीं लङ्कामगोप्तां रक्षसां बलम् ।
अत्याक्तामायुधानीकमनैष्टाञ्च क्षयं द्विषः ॥११३॥
अकोकूयिष्ट तत् सैन्यं प्रपलायिष्ट चाकुलम् ।
अच्युतच्च क्षतं रक्तं हतञ्चाध्यशयिष्ट गाम् ॥ ११४ ॥

तत्र सैन्ये समनद्धां सनद्धौ तौ च प्लवङ्गमान् प्रापतां प्राप्तवन्तौ लृदित्वादङ् ॥ ११२ ॥ ज० म०

कुम्भकर्णेत्यादि । निकुम्भकुम्भौ कुम्भकर्णसुतौ महाबलौ सन्नद्धौ नद्धेः पूर्ववत् ध्यङ् तौ वानरान् प्राप्तौ आप्लृव्याप्तौ व्यापने लृदित्वात् ङः ॥ ११२ ॥ भ०

अगोपिष्टामित्यादि । लङ्काञ्च पुरीम् अगोपिष्टां रक्षितवन्तौ गुपेरुदित्वादिट् पक्षे रूपम् अगोप्तामितीडभावपक्षे रूपं हलन्तलक्षणा वृद्धिः झलो झलीति सिचो लोपः आयुधानीकम् आयुधसमूहमत्याक्तां त्यक्तवन्तौ विसृष्टवन्तौ त्यजहानौ पूर्ववद्वृद्धिः सिचो लोपः द्विषः शत्रून् क्षयमनैष्टां नीतवन्तौ सिचिवृद्धिः ॥११३॥ ज० म०

अगोपिष्टामित्यादि । तौ लङ्कां पुरीमगोपिष्टां रक्षितवन्तौ रक्षसां सैन्यञ्च अगोप्तां गुपूरक्षणे वाऽऽर इति आयाभावपक्षे ऊदित्वादिम् अनिट्पक्षे वदव्रजेति वृद्धिः झलझलादिति सिलोपः आयुधानीकमस्त्रसमूहं त्यक्तवन्तौ कपीनामुपरीत्यर्थात् त्यजौ हानौ द्विषः शत्रून् क्षयं नीतवन्तौ णीञ्प्रापणे सौ वृद्धिः ॥ ११३ ॥ भ०

अकोकूयिष्टेत्यादि । तत् सैन्यं प्लवङ्गमानां भयादकोकूयिष्ट भृशं शब्दं कृतवत् कुङ्शब्दे इत्यस्मात् यङ्न्भ्यासस्य न कवतेर्यङीति कुङश्चुत्वप्रतिषेधः ततो यङन्तात् लङ् प्रपलायिष्ट पलायतेश्च अनादेरकुश आङ्जादीनां परयोरनङ्गत्वाञ्च उपसर्गस्यायताविति लत्वं क्षतञ्च खण्डितञ्च तत् रक्तमच्युतत् क्षरतिस्म इरितो वेत्यङ् हतञ्च निहतं सत् गामध्यशयिष्ट भूमौ पतितम् अधिशीङिति कर्मसंज्ञा ॥ ११४ ॥ ज० म०

अङ्गदेनाहसातां तौ युध्यकम्पनकम्पनौ ।
अत्यार्दीद् बालिनः पुत्रं प्रजङ्घोऽपि समत्सरः ॥११५॥
तस्याप्यवेभिदिष्टासौ मूर्द्धानं मुष्टिनाङ्गदः ।
प्रहार्षीच्च शिरः चिप्रं यूपाक्षस्य निराकुलः ॥११६॥

अकोकूयिष्टेत्यादि । तत् सैन्यं भयादकोकूयिष्ट भृशं शब्दं चकार कुङ् शब्दे सूत्रसूत्रेत्यादिना यङ् कोसुर्वीति खेः पाक्षिकं गुत्वं तत्र तदभावः खेर्गुः घोऽजय्यरे आकुलं तत् सैन्यं पलायितञ्च यतः खण्डितं तत् सैन्यं रक्तम् अच्युत तत् चरतिस्म दूरित्त्वात् ङः हतं सत् गाम् अध्यशयिष्ट भूमौ पतितं कर्मक्रियेति अधिशीङ आधारस्य कर्मत्वम् ॥ ११४ ॥ भ०

अङ्गदेनेत्यादि । अकम्पनः कम्पनश्च तौ ज्येष्ठत्वात् पूर्वनिपातः युधि संग्रामे अङ्गदेन अहसातां कर्मणि लुङ् आत्मनेपदेष्वन्यतरस्यामिति बधादेशाभावपक्षे रूपं प्रजङ्घो नाम राक्षसः समत्सरः सक्रोधः बालिनः पुत्रमत्यार्दीत् प्रहृतवान् अर्द हिंसायाम् ॥ ११५ ॥ ज० म०

अङ्गदेनेत्यादि । तावकम्पनकम्पनौ युधि संग्रामे अङ्गदेन हतौ हन्तेः कर्मणि द्विवचनं हनबधष्टीति मे पक्षे बधादेशाभावः वनतनादीनिमामिति नस्य लोपः । अनन्तरं प्रजङ्घो राक्षसो मात्सर्यान्वितः सन् बालिनः पुत्रम् अत्यार्दीत् जघान अर्द ज बधे आभिमुख्येन जगाम इति वा अर्द यातनागतियाचने अथ मत्सरः अपरसम्पत्तौ मात्सर्य्ये कृपणे क्रुधीति विश्वः ॥ ११५ ॥ भ०

तस्येत्यादि । प्रजङ्घस्यापि मूर्द्धानमसावङ्गदो मुष्टिनावेभिदिष्ट अत्यर्थं भिन्नवान् भिदेर्यङन्तस्य अतो लोपः यस्य हल इति यलोपे रूपम् । निराकुलस्य नाम वानरः यूपाक्षस्य राक्षसस्य शिरः चिप्रमहार्षीत् छिन्नवान् ॥ ११६ ॥ ज० म०

तस्येत्यादि । असौ अङ्गदस्तस्यापि प्रजङ्घस्यापि मूर्द्धानं मुष्टिना अत्यर्थं भिनत्तिस्म भिदेर्यङ्लुकि लिः । निराकुलो नाम वानरो यूपा-

शरीरं लोहिताक्षस्य न्यभाङ्क्षीद् द्विविदस्तदा ।
क्रुद्धः कुम्भस्ततोऽभैत्सीत् मैन्दं सद्विविदं शरैः ॥ ११७॥
आघूर्णिष्टां क्षतौ क्ष्माञ्च तावाशिश्रियतामुभौ ।
मातुलौ विह्वलौ दृष्ट्वा कुम्भं वालिसुतो नगैः ॥ ११८॥
प्रौर्णावीच्छरवर्षेण तानपीहीन्निशाचरः ।

क्षस्य शिरः क्षिप्रं शीघ्रं हृतवान् । निराकुल इति यज्ञदस्य विशेषणं केचिदाहुः ॥ ११६ ॥ भ०

शरीरमित्यादि । द्विविदो नाम वानरो लोहिताक्षस्य शरीरं न्यभाङ्क्षीत् चूर्णितवान् भञ्ज आमर्दने । ततोऽनन्तरं कुम्भकर्णसुतः मैन्दं वानरं सद्विविदं द्विविदेन सह शरैरभैत्सीत् भिन्नवान् ॥ ११७ ॥ ज० म०

शरीरमित्यादि । द्विविदो नाम वानरो लोहिताक्षस्य शरीरं क्षितौ न्यभाङ्क्षीत् भनक्तेर्धो मोटने ततोऽनन्तरं कुम्भो राक्षसः कुपितः सन् द्विविदेन सह मैन्दं कपिं शरैर्बिभेद भौभिदिर्भिदि ॥ ११७ ॥ भ०

आघूर्णिष्टामित्यादि । तावुभौ क्षतौ आघूर्णिष्टां चक्रवद्भ्रान्तौ क्ष्माञ्च भूतलमाशिश्रियतां श्रितवन्तौ भूमौ पतिताविल्यर्थः निश्रीत्यादिना चङ् तौ च ताराभ्रातृत्वात् मातुलौ विह्वलौ दृष्ट्वा वालिसुतो नगैर्वृक्षैः कुम्भं प्रौर्णावीदिति वक्ष्यमाणेन सम्बन्धः ॥ ११८ ॥ ज० म०

आघूर्णिष्टामित्यादि । तावुभौ वानरौ क्षतौ खण्डितौ सन्तौ घूर्णितौ घूर्णभ्रमणे क्ष्मां भूमिमाश्रितवन्तौ च श्रिञ सेवने णिश्रीत्यङ् । तावात्ममातुलौ व्याकुलौ दृष्ट्वा वालिसुतोऽङ्गदः नगैः कुम्भं प्रौर्णावीदित्यग्रिमश्लोकेनान्वयः ऊर्णुञ् आच्छादने णूर्णविष्यामिति द्विः न गच्छतीति नगः डनजनादिति डः नञोऽनौवाज्भसोरिति पक्षे आदेशाभावः, शैलवृक्षौ नगावगावित्यमरः । मातुर्भ्राता मातुलो निपातनात् ॥ ११८ ॥ भ०

प्रौर्णावीदित्यादि । प्रौर्णावीत् छादितवानित्यर्थः विभाषोर्णोरिक्कित्वपक्षे रूपं स च निशाचरस्तान्वानान् शरवर्षेणापीहीत् निरस्-

वानरानैजिहद्रामस्तूर्णं रचितुमङ्गदम् ॥ ११९ ॥
द्रुतमन्तास्त सुग्रीवो भ्रातृव्यं मृतुसङ्कटात् ।
मुष्टिना कौम्भकर्णिंच्च क्रुद्धः प्राणैरतित्यजत् ॥१२०॥
निकुम्भो वानरेन्द्रस्य प्राहैषीत् परिघं ततः ।
हनूमांश्चापतन्तं तमभाङ्क्षीद्भोगिभीषणम् ॥१२१॥

वान् उपसर्गादस्यत्यूह्योर्वा वचनमित्यात्मनेपदविकल्पः रामश्च तदनुकौशलं दृष्ट्वा अङ्गदं रचितुं तूर्णं वानरानैजिहत् व्यापारितवान् ईह-तिर्ण्यन्तः ॥ ११९ ॥ ज० म०

मौर्णावीदित्यादि । निशाचरः कुम्भस्तान् बाणदृष्ट्या अपौर्हीत् निरस्तवान् ऊइङ् तर्के अपपूर्वनिवारणेऽपि गेर्वाश्चोह्योढे चेति अस्य पाचिकत्वात् पं रामश्चाङ्गदं रचितुं तूर्णं वानरान् प्रेरयामास ईहङ चेष्टे अग्रन्तादङ् ॥ ११९ ॥ भ०

द्रुतमित्यादि । सुग्रीवस्तस्माच्छत्रुसङ्कटात् भ्रातृव्यं भ्रातुरपत्यं भ्रातुर्व्यश्च द्रुतमन्तास्त रचितवान् अयतो भूत्वा तैङ् पालने कौम्भकर्णिं कुम्भं क्रुद्धः सन् मुष्टिना प्राणैरतित्यजत् त्याजितवान् त्यजि-णर्यन्तः ॥ १२० ॥ ज० म०

द्रुतमित्यादि । सुग्रीवस्तस्मात् शत्रुसङ्कटात् भ्रातृव्यम् अङ्गदं द्रुतमन्तास्त रचितवान् तैङ् पालने भ्रातुरपत्यं भ्रातृव्यो निपातनात् क्रुद्धः सन् कुम्भकर्णापत्यं कुम्भं मुष्टिना प्राणान् त्याजयामास त्यजौ हानौ अग्रन्तादङ् अत्र त्यजिस्त्यागपूर्विकायां गतौ वर्त्तते तेन यो-ऽजौजेरित्यादिना प्रयोज्यानां प्राणानां कर्मत्वम् आपिशलीयमते शब्दार्थादिभ्योऽन्यस्य योगे प्रयोज्यस्य पक्षे कर्मत्वमिष्यते प्राणैरिति काचिदिति ॥ १२० ॥ भ०

निकुम्भ इत्यादि । ततो भ्रातृवधात् निकुम्भो वानरेन्द्रस्य सुग्रीवस्य परिघं प्राहैषीत् प्रहितवान् हि गतौ परिघमापतन्तं निकुम्भात् भोगिभीषणम् अहिवत् भीषणं हनूमानभाङ्क्षीत् भग्नवान् ॥ १२१ ॥ ज० म०

प्रौर्णुवीत् तेजसारातिमरासीच्च भयङ्करम् ।
ग्रीवाञ्चास्य तथाक्राक्षीदजिजीवद्यथा न तम् ॥१२२॥
समगत कपिसैन्यं सम्मदेनातिमात्रं
विटपहरिणनाथः सिद्धिमैहिष्ट नित्याम् ।
नृपतिमतिररंस्त प्राप्तकामेव हर्षात्
रजनिचरपतीनां सन्ततोऽतायि शोकः ॥ १२३ ॥

इति भट्टिकाव्ये तिङ्काण्डे लुङ्विलसितो नाम
पञ्चदशः सर्गः ।

---

निकुम्भ इत्यादि । ततो भ्रातृवधात् निकुम्भः सुग्रीवस्य कृते परिघं प्रहितवान् हि वर्द्धने गतौ तमापतन्तं भोगिभीषणं सर्पवद्भयङ्करं परिघं हनूमान् बभञ्ज भञ्जेरनिट्त्वाद्वृद्धिः ॥ १२१ ॥ भ०

प्रौर्णुवीदित्यादि । परिघञ्च हनूमान् तेजसा प्रौर्णुवीत् अभिभूतवान् कित्त्वादद्विपक्षे रूपं भयङ्करं चारासीत् शब्दितवान् अस्य च निकुम्भस्य ग्रीवां तथाक्राक्षीत् आकृष्टवान् अमागमपक्षे रूपं यथा तं नाजिजीवत् न जीवयति स्म ग्रीवामाकृष्यैव व्यापादितवानित्यर्थः भ्राजभासेत्यह्रस्वपक्षः ॥ १२२ ॥ ज० म०

प्रौर्णुवीदित्यादि । हनूमान् तेजसा अरिं निकुम्भं प्रौर्णुवीत् अभिभूतवान् ऊर्णोतेर्विभाषेति इट् क्वचिद्गुणवान् पाठः भयङ्करं यथा स्यात्तथा शब्दं कृतवान् रसशब्दे अस्य निकुम्भस्य ग्रीवां तथाकृष्टवान् यथा तं न जीवयामास ग्रीवामाकृष्य जघानेत्यर्थः कृषौ आकर्षि कृषस्पृशमृशेति पाक्षिकः सिः वद्व्रौऽकिदिति ऋदः अनिट्त्वाद्वृद्धिः जीव प्राणधारणे ण्यन्ताच्चङ् भ्राजभाषभासेति पक्षे ह्रस्वः ॥ १२२ ॥ भ०

समगतेत्यादि । प्रधानयोधा निहता इति सम्मदेन हर्षेणातिमात्रमत्यर्थं समगत सङ्गतं कपिसैन्यं समोगमृच्छीति तङ् वागम

इति सिचः किन्त्वेऽनुनासिकलोपः ह्रस्वादङ्गादिति सिचो लोपः । विटपहरिणनाथः शाखामृगाणां नाथः नित्यां सिद्धिमवश्यम्भाविनी-मौहिष्ट तर्कितवान् । न्यपतितमतिः रामस्य बुद्धिः प्राप्तकामेव सम्पन्ने-च्छेव रावणवधसीतालाभयोः सिद्धिरूपत्वात् हर्षादरंस्त रमतेश्च । रजनिचरपतीनां मेघनादादीनां शोकः सन्ततोऽविच्छिन्नः अतायि वर्द्धतेश्च दीपजनेत्यादिना कर्त्तरि चिण् ॥ १२२ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङ्काण्डे लुङ्-विलसितो द्वितीयः परिच्छेदः ।

काव्यस्य कुम्भकर्णवधो नाम पञ्चदशः सर्गः ।

समगतेत्यादि । कपिसैन्यं सम्मदेन हर्षेण अतिमात्रमत्यर्थं सङ्गतं वैरिनाशात् समोगमृच्छेति मं इगुङ्गुर्मठीति पक्षे सेः किच्चे वनतना-द्यनिमाम्निति मलोपे भस्स्वादिति सिलोपः । विटपहरिणानां वान-राणां नाथः सुग्रीवः नित्यामवश्यम्भाविनीं कार्य्यसिद्धिं ज्ञातवान् ऊहङ् तर्के न्यपते रामस्य मतिः प्राप्तकामेव शत्रुवधं सीताञ्च प्राप्त-वती हर्षात् रमतेश्च रमुङ् जौ क्रीड़े । रजनिचरपतीनां रावणेन्द्र-जितादीनां शोको वर्द्धतेश्च तायङ्पालनसन्तत्योः पदस्तनीण्घे इति आदिना माञ्चिक इण् । अप्यायीति पाठे तु प्यायीङ्वृद्धौ ॥१२२॥ भ०

इति हरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां कुम्भकर्णादिवधो नाम पञ्चदशः सर्गः ।

# षोड़शः सर्गः।

—०◌०—

ततः प्ररुदितो राजा रक्षसां हतबान्धवः।
किं करिष्यामि राज्येन सीतया किं करिष्यते ॥ १ ॥
अतिकाये हते वीरे प्रोत्सहिष्ये न जीवितुम्।
क्षपयिष्यति कः शत्रून् केन जायिष्यते यमः ॥ २ ॥

इतः प्रभृति लृटमधिकृत्य विलसितमाह तत्र लृट्शेषे चेति लृट् ततोऽन्यत्रापि दर्शयिष्यति।

तत इत्यादि। ततोऽनन्तरं रक्षसां राजा रावणः हतबान्धवः व्यापादितभ्रातृत्वात् शोकाभिभूतः सन् प्ररुदितः क्रन्दितुमारब्धः किं करिष्यामीत्यादिना आदिकर्मणि क्तः राज्येन किञ्चित् कृञनोः स्य इतीट् सीतया च किं करिष्यते ॥ १ ॥ ज॰ म॰

अथ तौ प्रदर्श्यते तस्याः पाणिनिमते लृट्संज्ञा।

तत इत्यादि। तदनन्तरं हतबान्धवो रक्षसां राजा रावणः प्ररुदितः क्रन्दितुमारब्धवान् आदिहे क्तः। रोदनमेवाह अहं राज्येन किं करिष्यामि अहं सीतया च किं करिष्ये बान्धवनाशात् सर्वं निष्फलमेव कृञ उभयपदित्वं ञित्त्वात् स्यसद्धेन इति इम् सीतायां किं करिष्यते इति पाठे मयेति शेषः सीतया कर्त्री वा ॥ १ ॥ भ॰

अतीत्यादि। युगन्तगुणः केन यमः जायिष्यते जिजये कर्मणि लृट् स्यसिजित्यादिना चिण्वदिट् च ॥ २ ॥ ज॰ म॰

अतिकाय इत्यादि। अतिकाये हते सति जीवितुमहमुत्साहं न करिष्यामि तेन विना कः शत्रून् लज्जयिष्यति ह्रीलिलज्जे ह्रीब्रीति पण् केन यमो जेतव्यः जिजये च हनपहहश च इति पाचिको णिच् ॥ २ ॥ भ॰

अतिकायाद् विना पाशं को वा छेत्स्यति वारुणम्।
रावणं मंस्यते को वा स्वयम्भूः कस्य तोक्ष्यति॥ ३॥
श्लाघिष्ये केन को बन्धून् नेष्यत्युन्नतिमुन्नतः।
कः प्रेष्यति पितॄन् काले कृत्वा कत्थिष्यते न कः॥ ४॥
उद्यंस्यति हरिर्वज्रं विचरिष्यति निर्भयः।
भोक्ष्यते यज्ञभागांश्च शूरमानञ्च वक्ष्यति॥ ५॥

अतीत्यादि। पृथक् विनेति पञ्चमी अतिकायाद्विना वारुणं पाशं को वा छेत्स्यति द्विधा करिष्यति को वा रावणं मंस्यते पूजयिष्यति स्वयम्भूर्ब्रह्मा कस्य तोक्ष्यति प्रीतिं जनयिष्यति तुष प्रीतौ पठोः कः सि॥ ३॥ ज० म०

अतिकायादित्यादि। अतिकायेन विना को वा वरुणपाशं छेत्स्यति छिदिरधौजच्छेदे अन्यारभ्यार्थेत्यादिना विनायोगे पञ्चमी को वा रावणं पूजयिष्यति मन्यौङ् च चकाराद्बधे अनेकार्थत्वात् पूजायामपि स्वयम्भूः कस्य प्रीतिं जनयिष्यति तुषयौञि च चकारात् तुष्टौ षढोः कः॥ ३॥ भ०

श्लाघिष्ये इत्यादि। केनाहं श्लाघिष्ये श्लाघां करिष्यामि ममेदृशः पुत्त्र इति कः स्वगुणैरुन्नतः सन् बन्धूनुन्नतिं परां कोटिं नेष्यति काले पितृक्रियोचिते कः पितॄन् प्रेष्यति तर्पयिष्यति प्रीञ् तर्पणे कृत्वा किञ्चित्कार्य्यं को न कत्थिष्यते कत्थनं न करिष्यति अहमेवंविध इति अतिकायाद्विनेति सर्वत्र योज्यम्॥ ४॥ ज० म०

श्लाघिष्य इत्यादि। केन पुत्त्रेणाहं श्लाघ्यो भविष्यामि कर्मणि रूपं केनात्मानं श्लाघ्यं कथयिष्यामीत्यर्थः कर्त्तरि रूपमित्यन्ये। क उन्नतः सन् बन्धून् उन्नतिं प्रापयिष्यति कः काले पितॄन् तर्पयिष्यति प्रीञ तर्पणे सकृदपि कार्य्यं कृत्वा आत्मानं श्लाघां न करिष्यति अतिकायाद्विनेति सर्वत्र योज्यं कत्थङ् श्लाघे॥ ४॥ भ०

उद्यंसतीत्यादि। तथा हरिरिन्द्रः हन्तुं वज्रमुद्यंसति उद्धार-

रविस्तप्स्यति निःशङ्कं वास्यत्यनियतं मरुत् ।
निर्वर्त्स्यत्यृतुसङ्घातः स्वेच्छयेन्दुरुदेष्यति ॥ ६ ॥
तीव्रं स्यन्दिष्यते मेघैरुग्रं वर्त्तिष्यते यमः ।
अतिकायस्य मरणे किं भविष्यति नान्यथा ॥ ७ ॥

यिष्यति उत्पूर्वाद्यमेरूपं निर्भयश्चेतस्ततो विचरिष्यति यज्ञभागांश्चा॰त्मीयान् भोक्ष्यते भक्षयिष्यति भुजोऽनवन इति तङ् शूरमानञ्च शूरोऽस्मीति वक्ष्यति धारयिष्यति वहेर्हो ढः षढोः कः सि ॥ ५ ॥ ज॰म॰

उद्यंस्यतीत्यादि । हरिरिन्द्रो मां प्रति वज्रम् उत्थापयिष्यति अतिकायस्य मरणे किं भविष्यति नान्यथेति वक्ष्यमाणेनान्वयः यमो उपरतौ निर्भयं विचरिष्यति इतस्ततो गमिष्यति आत्मीयान् यज्ञभागांश्च भक्षयिष्यति भुजोऽशने इति सं शूरमानं शूरोऽहमिति अहङ्कारं धारयिष्यति वहे औ प्रापणे हो ढः षढोः कः पूर्वं सर्वमिदमतिकायेन निराकृतमिति भावः ॥ ५ ॥ भ॰

रविरित्यादि । रविः निःशङ्कं शङ्कां विना तप्स्यति द्योतिष्यते मरुच्चानियतं स्वच्छन्दो वास्यति वा गतिगन्धनयोः ऋतुसङ्घातः षड्तवः निर्वर्त्स्यति सर्वदा न भविष्यति वृद्भ्यः स्यसनोरिति पो विकल्पः न वृद्भ्यश्चतुर्भ्यः इतीट्प्रतिषेधः स्वेच्छयेन्दुरुदेष्यति सदा पूर्णमण्डलो नोद्गमिष्यति इण् गतौ ॥ ६ ॥ ज॰ म॰

रविरित्यादि । रविः सूर्यो निःशङ्कं यथा स्यात्तथा तप्स्यति द्योतिष्यते वायुः सततं गमनं करिष्यति वाव गमनहिंसयोः ऋतुसङ्घातः षण्णामृतूनां मेलनं ममोद्याने निवृत्तो भविष्यति वृतङ्वर्त्तने वृद्भ्यो नेम् पे इति इम्निषेधः अतएव पं चन्द्र उदयं करिष्यति स्वेच्छया न तु मदिच्छया इण् गतौ ॥ ६ ॥ भ॰

तीव्रमित्यादि । मेघैस्तीव्रम् अतिशयेन स्यन्दिष्यते पूर्वं रजःप्रशमनमात्रं वृष्टम् भावे लृट् न वृद्भ्य इतीट्प्रतिषेधो न भवति तत्र परस्मैपदग्रहणमनुवर्त्तते यमः उग्रं वर्त्तिष्यते रौद्रं चरिष्यति आत्मनेपदे नेट्प्रतिषेधः अतिकायस्य मरणे सति इन्द्रादयः किमन्यथा

उन्मीलिष्यति चक्षुर्मे वृथा यद्विनयागतम्।
आज्ञालाभोन्मुखं नम्रं न द्रक्ष्यति नरान्तकम्॥ ८॥
धिङ्मां त्रिशिरसा नाहं सन्दर्शिष्येऽद्य यत् पुनः।
यानिष्यन्ते द्विषः केन तस्मिन् पञ्चत्वमागते॥ ९॥
शत्रुभिर्निहते मत्ते द्रक्ष्येऽहं संयुगे सुखम्।
युद्धोन्मत्ताद्विना शत्रून् समाक्रंस्यति को रणे॥१०॥

विपर्य्ययं न करिष्यन्ति किन्तु करिष्यन्तीति। किं भविष्यति नान्यथेति पाठान्तरं तत्र सर्वमेतद्भविष्यतीत्यर्थः॥ ७॥ ज० म०

तीव्रमित्यादि। मेघैस्तीव्रमतिशयं स्यन्दिष्यते वर्षिष्यते पूर्वं हि धूलिप्रशमनं यावदेव मत्पुरे दृष्टिरासीदिति भावः स्यन्दूङ् स्रुतौ भावे रूपम्। यम उग्रं वर्त्तिष्यते अतिकायस्य मरणे सर्वमिदं विपरीतं किं न भविष्यति। किं करिष्यन्तीति पाठे इन्द्रादय इति शेषः॥ ७॥ भ०

उन्मीलिष्यतीत्यादि। मे मम चक्षुर्वृथा निष्फलमुन्मीलिष्यति यद्यस्मात् विनयागतं विनीतम् आज्ञालाभोन्मुखं नम्रं नमनशीलं नरान्तकं पुत्रं न द्रक्ष्यति॥ ८॥ ज० म०

उन्मीलिष्यतीत्यादि। मम नेत्रं वृथा उन्मीलिष्यति मील निमेषे यद्यस्माद्विनयेनागतम् आज्ञालाभाय उन्मुखं नम्रं नरान्तकं न द्रक्ष्यति दृशिरौप्रेक्षणे वर्द्धोऽकिदिति क्रुद्गः षश्चाजिति षङ् षढोः कः॥८॥ भ०

धिङ्मामित्यादि। यत् त्रिशिरसा अद्य पुनरपि नाहं सन्दर्शिष्ये न दृष्टो भविष्यामि कर्मणि लृट् चिण्वदिट् च। तस्मिन् त्रिशिरसि पञ्चत्वमागते मृते द्विषः शत्रवः केन यानिष्यन्ते अत्रापि चिण्वदिट् च॥ ९॥ ज० म०

धिङ्मामित्यादि। मां धिक् यस्मात् अद्य पुनरहं त्रिशिरसा दृष्टो न भविष्यामि हनयहदृशश्च इति कर्मणि सिण्। तस्मिन् त्रिशिरसि पञ्चत्वमागते मृते सति द्विषः केन हन्तव्याः पूर्ववन्मिण् पञ्चानां पृथक्त्वं पञ्चत्वम्॥ ९॥ भ०

शत्रुभिरित्यादि। मत्ते मत्तनाम्नि शत्रुभिर्निहते तैरेव शत्रुभिः

आह्वास्यते विशङ्की मां योत्स्यमानः शतक्रतुः ।
प्रकल्प्स्यति च तस्यार्थो निकुम्भे दुर्हने हते ॥ ११ ॥
कल्पिष्यते हरेः प्रीतिर्लङ्का चोपहनिष्यते ।
देवान्तक ! त्वया त्यक्तो रिपोर्यास्यामि वश्यताम् ॥१२॥

संयुगे सुखमहं द्रष्टव्यो द्रष्टव्योऽस्मि पूर्वं मयाद्दृष्टः अचिखद्भावपचे रूपम् । तस्य च भ्रातुर्युद्धोन्मत्तादिना रणे शत्रून् कः समास्कन्त्स्यति अभियास्यति स्कन्दिरगतिशोषणयोः खरि चेति चर्त्वम् ॥१०॥ ज०म०

शत्रुभिरित्यादि । मत्तनाम्नि राक्षसे शत्रुभिर्निहते सति तैरेव शत्रुभिः संग्रामे सुखं यथा स्यात्तथाहं द्रष्टव्यः पूर्वं तस्माच्चिभ्याद्द अहं दुर्दर्श इति भावः । युद्धोन्मत्तं राक्षसञ्च विना रणे कः शत्रून् समास्कन्त्स्यति शोषयिष्यति अभिभविष्यतीत्यर्थः स्कन्दिरौ शोषणमन्योः ॥ १० ॥ भ०

आह्वास्यत इत्यादि । शतक्रतुरिन्द्रः योत्स्यमानः युद्धं करिष्यन् विशङ्को निर्भयः मां युद्धायाह्वास्यते स्पर्द्धायामाङ् इत्यात्मनेपदम् । निकुम्भे दुर्हने दुःखेन हन्यत इति ईषदित्यादिना खल् तस्मिन् हते तस्य शतक्रतोरर्थः निष्कण्टकराज्यलक्षणः प्रकल्प्स्यति सम्पत्स्यते ॥ ११ ॥ ज० म०

आह्वास्यत इत्यादि । शतक्रतुरिन्द्रो युद्धं करिष्यन् निःशङ्कं यथा स्यात्तथा मां युद्धार्थम् आह्वास्यते स्पर्द्धायामाङ इति सं युधेस्तोपमवत्स्यरत्स्यमानाविति स्यमानः । दुर्हने निकुम्भे हते सति तस्य शतक्रतोरर्थो निष्कण्टकराज्यलाभः प्रकल्प्स्यति सम्पत्स्यते कृपूङ्क्लृ च कल्पने वृतादित्वात् पे इमोऽभावः कृपक्लृपोऽक्रमादौ दुःखेन हन्यते इति ईषद्दुःसोरिति खल् प्राक्चो ण इत्यादौ दुर्वर्जनाच्च णत्वं केचित् णत्वमाहुस्तन्न साधु परेषामपि दुर इति णत्वप्रतिषेधकस्तत्र दर्शनात् ॥ ११ ॥ भ०

कल्पिष्यत इत्यादि । शत्रुभिः कुम्भञ्च निपातितं श्रुत्वा हरेरिन्द्रस्य प्रीतिः कल्पिष्यते भविष्यति लुटि च क्लृप इति चकारात्तस्यनो-

मरिष्यामि विजेष्ये वा हतास्चेत्तनया मम।
हनिष्यामि रिपून् तूर्णं न जीविष्यामि दुःखितः ॥१३॥
क्षेष्यन्ते मुनयो देवाः कथयिष्यन्ति चानिशम्।
दशग्रीवस्य दुर्नीतेर्विनष्टं रक्षसां कुलम् ॥१४॥

रपि परस्मैपदविकल्पः आत्मनेपदे च नेट्प्रतिषेधः। लङ्का च शत्रुभि-रुपहनिष्यते विलोप्स्यते कर्मणि लृट् अचिण्वद्भावपक्षः ऋद्धनोः स्य इतीट् इह हरैरागंस्यते भावे लृट् ॥ १२ ॥ ज० म०

कल्पिष्यते इत्यादि। शत्रुभिर्निपातितं कुम्भं श्रुत्वा हरेरिन्द्रस्य प्रीतिः कल्पिष्यते भविष्यति वृतादित्वात् से नेम्निषेधः शत्रुभिर्लङ्का च उपहनिष्यते भिषोऽभावपक्षे स्यश्चेन इति इम् कर्मणि रूपम्। इह लङ्कायां देवैरपि आगन्तव्यं गमरस्मनमातः से स इत्यस्य परि-विषयत्वान्नेम् भावे रूपम् ॥ १२ ॥ भ०

मरिष्यामीत्यादि। यदि मम तनयाः हताः तदा मरिष्यामि शत्रून् वा विजेष्ये म्रियतेर्लुङ्लिङोरिति नियमात्तङ् न भवति उत्त-रत्र विपराभ्यां जेरिति तङ्। ततो रिपून् तूर्णं हनिष्यामि पुनर्बन्धु-विनाशकत्वात् दुःखितः सन् न जीविष्यामि ॥ १३ ॥ ज० म०

मरिष्यामीत्यादि। यदि तनया हतास्तदाहं मरिष्यामि लृङ्ष्टी-श्चेममिति नियमादन्यत्र परस्मैपदं स्यश्चेन इति इम् शत्रून् वा जेष्यामि विपराजिरिति मं तूर्णं रिपुं हनिष्यामि अथवा बन्धु-नाशात् दुःखितोऽहं न जीविष्यामि ॥ १३ ॥ भ०

क्षेष्यन्त इत्यादि। मुनयो हर्षात् क्षेष्यन्ते हसिष्यन्ति क्ष्विदा-त्तङ्। देवाः अनिशं कथयिष्यन्ति यथा दशग्रीवस्य दुर्नीतैर्दुर्नयै रक्षसां कुलं विनष्टम् ॥ १४ ॥ ज० म०

क्षेष्यन्त इत्यादि। मुनयो हर्षात् क्षेष्यन्ते ञिक्ष्विदा स्नेहने। देवाः सततं कथयिष्यन्ति किमित्याह दशग्रीवस्य दुर्नयैः रक्षसां कुलं नष्ट-मिति प्राण्वचो ण इत्यादौ दुर्वर्जनान्न णत्वम् ॥ १४ ॥ भ०

केन सम्भावितं तात ! कुम्भकर्णस्य राघवः ।
रणे कर्त्स्यति गात्राणि मर्माणि च वितर्त्स्यति ॥१५॥
पतिष्यति क्षितौ भानुः पृथिवी तोलयिष्यते ।
नभस्वान् भङ्क्ष्यते व्योम मुष्टिभिस्ताडयिष्यते ॥१६॥
इन्दोः स्यन्दिष्यते वह्निः समुच्छोक्ष्यति सागरः ।
जलं धक्ष्यति तिग्मांशोः स्रंस्यन्ति तमसाश्रयाः ॥१७॥

केनेत्यादि । हे तातेति शोकात् बुद्धिस्थं पितरमभिमुखीकरोति केनैतत्सम्भावितं निश्चितं यत् कुम्भकर्णस्य गात्राणि रणे राघवः कर्त्स्यति छेत्स्यति कृती छेदने मर्माणि वितर्त्स्यति अपनेष्यति तृतृह-हिंसानादरयोः सिजित्यादिना इड्विकल्पः ॥ १५ ॥ ज० म०

केनेत्यादि । तातेति बुद्धिस्थं पितरं शोकान् सम्मुखीकरोति लोकोक्तिरियं केनैवं सम्भावितं यत् कुम्भकर्णस्य गात्राणि रणे राघवः कर्त्स्यति कृतीरुपच्छिदि व्रतृकादिति पक्षेऽनिम् मर्माणि च तर्त्स्यति तृदुरुधिर्नादरे च चकारात् हिंसे पूर्ववत् पक्षे अनिम् ॥ १५ ॥ भ०

पतिष्यतीत्यादि । क्षितौ भूमौ भानुरादित्यः पतिष्यति अधो गमिष्यति पृथ्वी तोलयिष्यते ऊर्द्धं क्षिप्यते तुल उन्माने चुरादावदन्तेषु च पठ्यते कर्मणि लृट् । नभस्वान् वायुः काष्ठवद्भङ्क्ष्यते कर्मणि लृट् । मुष्टिभिर्व्योम ताड़यिष्यते हनिष्यते ॥ १६ ॥ ज० म०

पतिष्यतीत्यादि । भानुः सूर्यः क्षितौ पतिष्यति पृथिवी तोलयिष्यते तुलकयुन्मितौ कर्मणि रूपं नभस्वान् वायुः काष्ठवत् भङ्क्ष्यते भनुजोपौ मोटने कर्मणि रूपं मुष्टिभिर्व्योम आकाशं ताड़यिष्यते-ऽन्ये तड़कित्विषि सम्भावितानि नैतानीत्यग्रिमवाक्येन सम्बन्धः यथैतदसम्भाव्यं तथा कुम्भकर्णस्य रामेण हननमिति भावः ॥१६॥ भ०

इन्दोरित्यादि । इन्दोः वह्निः स्यन्दिष्यते प्रस्रविष्यति स्यन्द्रः स्रवनोरिति परस्मैपदविकल्पः सागरः समुच्छोक्ष्यति शोषं यास्यति जलं धक्ष्यति भस्मसात् करिष्यति दह भस्मीकरणे होढः एकाचोवशो-

कुम्भकर्णो रणे पुंसा क्रुद्धः परिभविष्यते।
सम्भावितानि नैतानि कदाचित् केनचिज्जने ॥ १८ ॥
कुम्भकर्णे हते लङ्कामारोक्ष्यन्ति प्लवङ्गमाः।
दङ्क्ष्यन्ति राक्षसान् दृप्ता भङ्क्ष्यन्ति च ममाश्रमान् ॥१९॥

भर्षिति तिग्मांशोरादित्यात्तमसां चयाः तमःसङ्घाः संत्स्यन्ति स्यन्दैः पूर्ववत्परस्मैपदविकल्पः न वृद्भ्य इतीट्प्रतिषेधः ॥ १७ ॥ ज० म०

इन्दोरित्यादि। चन्द्रादग्निः स्यन्दिष्यते स्यन्दूङ्‌ स्रवणे लृट् तौ विच्चावृतादिः शोषं गमिष्यति शुष्यै लृट् शोषे सस्तत्पूर्वः जलं कर्तृ धक्ष्यति दाहं करिष्यति दहौ दाहे दादेर्घः भभान्तस्येति धः तिग्मांशोः सूर्यात् अन्धकारचयाः संत्स्यन्ति चरिष्यन्ति वृतादित्वात् मे नेस्सम्भावितानि नैतानीत्यन्वयः ॥ १७ ॥ भ०

कुम्भकर्ण इत्यादि। कुम्भकर्णो रणे क्रुद्धः सन् पुंसा परिभविष्यते कर्मणि लृट् एतानि भानुपतनादीनि कुम्भकर्णपरिभवान्तानि जने लोके कदाचिदपि केनचित् न सम्भावितानि न चिन्तितानि ॥ १८ ॥ ज० म०

कुम्भकर्ण इत्यादि। रणे क्रुद्धः कुम्भकर्णः अन्येन पुंसा परिभविष्यते जेतव्यः एतानि भानुपतनादीनि लोके कदाचिदपि केनचिच्च सम्भावितानि ॥ १८ ॥ भ०

कुम्भकर्ण इत्यादि। कुम्भकर्णे इत्यं हते सति प्लवङ्गमाः लङ्कामारोक्ष्यन्ति आक्रमिष्यन्ति रुहवीजजन्मनि राक्षसान् दङ्क्ष्यन्ति दशनैः छेत्स्यन्ति दृप्ताश्च ममाश्रमान् गृहान् भङ्क्ष्यन्ति चूर्णयिष्यन्ति ॥ १९ ॥ ज० म०

कुम्भकर्ण इत्यादि। कुम्भकर्णे हते नष्टे सति प्लवङ्गमाः कपयः लङ्कामारोक्ष्यन्ति लङ्कारूढ़ा भविष्यन्ति आङ्पूर्वस्य रुहजन्मनि प्रादुर्भावे इत्यस्य रूपं हो ढः षढोः कः सि इत्यादिना षस्य कः। ते दृप्ताः सन्तो राक्षसान् दङ्क्ष्यन्ति दन्श दंशने ममाश्रमांश्च भङ्क्ष्यन्ति भन्ज भङ्गे ॥ १९ ॥ भ०

चर्त्स्यन्ति बालवृद्धांश्च नर्त्स्यन्ति च मुदा युताः ।
तेन राक्षसमुख्येन विना तान् को निरोत्स्यति ॥२०॥
अमर्षो मे परः सीतां राघवः कामयिष्यते ।
च्युतराज्यात् सुखं तस्मात् किं किलासाववाप्स्यति ॥२१॥
मारयिष्यामि वैदेहीं खादयिष्यामि राक्षसैः ।
भूमौ वा निखनिष्यामि विध्वंसस्यास्य कारणम् ॥२२॥

चर्त्स्यन्तीत्यादि । बालान् वृद्धांश्च चर्त्स्यन्ति व्यापादयिष्यन्ति चृती हिंसाग्रन्थयोरिति तौदादिकः मुदा हर्षेण युताः सन्तः नर्त्स्यन्ति नृतो गात्रविक्षेपे सेसिचीत्यादिना विकल्पे नेट् तेन च राक्षसमुख्येन विना तान् को निरोत्स्यति निवारयिष्यति ॥ २० ॥ ज० म०

चर्त्स्यन्तीत्यादि । प्लवङ्गमा बालान् वृद्धांश्च चर्त्स्यन्ति चृतश्च हिंसे न्वृतच्चृदिति पक्षे नेम् तर्त्स्यन्तीति पाठे तृदधातो रूपं मुदा हर्षेण युताः सन्तो नृत्यं करिष्यन्ति नृत्य नर्त्तने पूर्ववत् नेम् । तेन राक्षसश्रेष्ठेन कुम्भकर्णेन विना कस्तान् वानरान् निवारयिष्यति रुधिरौ अपि आहतौ ॥ २० ॥ भ०

अमर्ष इत्यादि । अमर्षः क्रोधः पर उत्कृष्टः मम यद्राघवः सीतां कामयिष्यते कर्मणि लृट् तदन्तादनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपीति अमर्षे क्रोधे लृट् अन्यच्च च्युतराज्यात्तस्मात् रामादसौ सीता किञ्चिन्नाम सुखमवाप्स्यति तन्न सम्भावयामि किङ्किलास्त्यर्थेषु लृडिति अनवक्लृप्त्यावसम्भावनायां लृट् ॥ २१ ॥ ज० म०

अमर्ष इत्यादि । मम अयम् अपरोऽमर्षः कोपः राघवोऽपि सीतां कामयिष्यते कमुकङ् स्पृहि कम इत इति णिङ् अन्यैस्त्वा-महामर्षे इति तौ । च्युतराज्यात्तस्माद्रामात् असौ सीता किं सुखमवाप्स्यति न सम्भावयामि किङ्किलास्त्यर्थयोर्ध्यां तौ ॥ २१ ॥ भ०

मारयिष्यामीत्यादि । अथवा अस्य सर्वस्य विध्वंसस्य विनाशस्य कारणं वैदेहीं मारयिष्यामि, व्यापादयिष्यामि एतैर्वा राक्षसैः खाद-

नानुरोत्स्ये जगल्लक्ष्मीं घटिष्ये जीवितुं न वा ।
न रंस्ये विषयैः शून्ये भवने बान्धवैरहम् ॥ २३ ॥
मोदिष्ये कस्य सौख्येऽहं को मे मोदिष्यते सुखे ।
आदेयाः किं कृते भोगाः कुम्भकर्ण ! त्वया विना ॥२४॥

यिष्यामि भोजयिष्यामि गतिबुद्धीत्यादिना प्रत्यवसानार्थे कर्मसंज्ञायां प्राप्तायामदिखाद्योः प्रतिषेध इति कर्तृसंज्ञैव भवति भूमौ वा निखनिष्यामि ॥ २२ ॥ ज० म०

मारयिष्यामीत्यादि । अथवा अस्य विध्वंसस्य बन्धुनाशस्य कारणं सीतामेव मारयिष्यामि राक्षसैर्वा तां खादयिष्यामि योऽजौर्ञेरित्यादौ अखादनीत्युक्तेर्न प्रयोज्यस्य कर्मत्वं, भूमौ वा निखनिष्यामि गर्त्ते वा स्थापयिष्यामि ॥ २२ ॥ भ०

नानुरोत्स्य इत्यादि । जगल्लक्ष्मीं नानुरोत्स्ये न कामयिष्ये अनो रुधिः कामे जीवितुं वा न घटिष्ये प्रयत्नं न करिष्यामि तस्माद् भवने बान्धवैः शून्ये विषयैः शब्दादिभिर्न रंस्ये न क्रीड़ां करिष्ये ॥२३॥ ज० म०

नानुरोत्स्य इत्यादि । जगल्लक्ष्मीं नाहम् अनुरोत्स्ये न वाञ्छिष्यामि अनोरुधङ् यौ कामे न वा जीवितुं घटिष्ये बान्धवैः शून्ये रहिते भवने गृहे विषयैरूपरसादिभिरहं न रंस्ये न क्रीड़िष्यामि रमुङ्जौ क्रीड़े ॥ २३ ॥ भ०

मोदिष्य इत्यादि । हे कुम्भकर्ण ! त्वया विना कस्य सौख्ये अहं मोदिष्ये हर्षिष्ये न कस्यचित् मम वा सुखे सति को मोदिष्यते हृष्टो भविष्यति न कश्चिदपि, किं कृते किं निमित्तं मरभोगा आदेयाः आदातव्याः ॥ २४ ॥ ज० म०

मोदिष्य इत्यादि । हे कुम्भकर्ण ! त्वया विना कस्य सौख्ये अहं हर्षं करिष्यामि मे मम वा सुखे को हृष्टो भविष्यति किं कृते कस्य निमित्तं परसम्बन्धिनो भोगा मया आदेया ग्राह्याः ॥ २४ ॥ भ०

तदेव दर्शयन्नाह ।

या: सुहृत्सु विपन्नेषु मामुपैष्यन्ति सम्पद:।
ता: किं मन्युचता भोगा न विपत्सु विपत्तय: ॥२५॥
विनङ्क्ष्यति पुरी क्षिप्रं तूर्णमेष्यन्ति वानरा:।
असन्धित्सोस्तवेत्येतद्विभीषणसुभाषितम् ॥ २६ ॥
अर्थेन संभृता राज्ञा न भाविष्यामहे वयम्।
संयोत्स्यामह इत्येतत्प्रहस्तेन च भाषितम् ॥ २७ ॥

या इत्यादि। सुहृत्सु स्निग्धेषु विपन्नेषु या: सम्पदो विभूतय: समुपैष्यन्ति निष्पत्स्यन्ते ता: मन्युचता भोगा: शोकै: खण्डिता भोगा: किं विपत्सु न विपत्तय: शतचारसंस्थानीया भवन्तीति ॥२५॥ ज० म०

या इत्यादि। सुहृत्सु विपन्नेषु हतेषु या: सम्पदो मामुपैष्यन्ति उपागमिष्यन्ति ता: सम्पद: किं विपत्सु मध्ये विपत्तितुल्या न भवन्ति अपितु भवन्त्येव मन्युना शोकेन चता: खण्डिता आभोगा विस्तारा यासाम् ॥ २५ ॥ भ०

विनङ्क्ष्यतीत्यादि। असन्धित्सो: रामेण सन्धानमनिच्छो: क्षिप्रमेषा पुरी लङ्का विनङ्क्ष्यति मस्जिनशोरिति नुम् तत: तूर्णं वानरास्तां समेष्यन्ति उभयत्रापि क्षिप्रवचने लृट्। तदेतद्विभीषणभाषितं सर्वमुपपन्नं मन्त्रं निर्णीयते नोक्तं सन्धानमेवास्तु परैरित्यादिना ॥ २६ ॥ ज० म०

विनङ्क्ष्यतीत्यादि। असन्धित्सो रामेण सह सन्धिं कर्तुमनिच्छोस्तव पुरी लङ्का क्षिप्रं विनङ्क्ष्यति नुम् रधोसुचां नशेति नुम् विनङ्क्ष्यन्ति पुरीमिति पाठे अन्तर्भूतणर्थात् वानरा विनाशयन्तीत्यर्थ:। वानरास्तां तूर्णं गमिष्यन्ति इत्येतत् विभीषणस्य वचनं शोभनमेव मन्त्रनिर्णये तेनोक्तं सन्धानमेवास्तु परैरेत्यादि ॥ २६ ॥ भ०

अर्थेनेत्यादि। राज्ञा वयमर्थेन भृता: ततो न भाविष्यामहे किमत्र युक्तमिति एतत्प्रहस्तेन भाषितं तच्च तथैव सम्पादितं च शब्दोऽत्र निपात:। यद्यपीदृशं मन्त्रनिर्णये प्रहस्तेन नोक्तं सन्धान-

मानुषो नाम पत्काषी राजानं पुरुषाशिनाम्।
योधयिष्यति संग्रामे दिव्यास्त्ररथदुर्जयम्॥ २८॥
संनत्स्याम्यथवा योद्धुं न कोप्ये हीनसत्ववत्।
अद्य तर्प्संयन्ति मांसादा भूः पास्यत्यरिशोणितम्॥२९॥

सैवाखु परैरित्यादिना तथापि विभीषणवचनादनुमीयते तेनाप्ययमर्थोऽभ्युपगत इति रावण एवमाह तथाच विभीषणवचनं युद्धाय राज्ञा सृष्टैरित्यादि॥ २७॥ ज० म०

अर्थेनेत्यादि। अर्थेन धनेन संभृताः पोषिताः अतो न वत्स्यामः सन्निमित्यर्थात् परं किन्तु युद्धं करिष्याम इत्येतत् प्रहस्तेनाप्युक्तं युद्धाय राज्ञा सृष्टैर्भवद्भिरिति विभीषणवचनस्य प्रागुपदर्शितत्वात् प्रहस्तेनापि विभीषणवचनमङ्गीकृतमिति भावः परमिति किन्त्वर्थेऽव्ययम्॥ २७॥ भ०

मानुष इत्यादि। मामेवं दुर्जयं मानुषो नाम पत्काषी पादाभ्यां गमनशीलः पदातिः सन् हिमकाषिहतिषु चेति पादस्य पदादेशः पुरुषाशिनां रक्षसां राजानं दिव्यास्त्ररथतया दुर्जयं दुरभिभवनीयं योधयिष्यति॥ २८॥ ज० म०

मानुष इत्यादि। पत्काषी पदातिः सन् मानुषो रामः संग्रामे दिव्यास्त्रेण रथेन च दुर्जयं दुर्गमं राक्षसानां राजानं योधयिष्यतीति नाम कुत्सितमित्यर्थः। नामेति प्राकाश्यसम्भावनाक्रोधाभ्युपगमकुत्सनेष्वव्ययं पादाभ्यां कषितुं गन्तुं शीलमस्येति णिन् पादस्य पदादेश इति परः स्मृते पञ्चव्ङात् कर्तर्य्यु हादित्वाण्णिन् युधेर्जन्तात् कम्याद्यार्थोङित्यादिना रूपम्॥ २८॥ भ०

एवं बहुधा विलप्य जातामर्षः पुनराह।

सन्नत्स्यामीत्यादि। सत्वहीनवत् सत्वेन हीन इव योद्धुं सन्नत्स्यामि सन्नाहं करिष्येऽहमिति वाशब्दोऽत्र किं हत्तेऽप्यमर्षे लिङ्पवादो लट् नह्योधः खरिचर्त्वं तत्राद्यास्मिन्नहनि मांसादाः क्रव्यादाः तर्प्स्यन्ति हृप्ता भविष्यन्ति अदोऽन्न इति विटि प्राप्ते वासरूपविधिना

आकर्ष्यामि यशः शत्रूनपनेष्यामि कर्मणा ।
अनुभाविष्यते शोको मैथिल्याद्य पतिक्षयात् ॥ ३० ॥
मन्तूयिष्यति यक्षेन्द्रो वल्गूयिष्यति नो यमः ।
ग्लास्यन्त्यपतिपुत्राश्च वने वानरयोषितः ॥ ३१ ॥

ऽपि भवति भूमावाहतानामरीणां शोणितं पास्यति शेषे लृट् ॥ २९ ॥ ज० म०

संनत्स्यामीत्यादि । अथवा योद्धुमहं सन्नाहं करिष्यामि नह्यो धङ् हीनसत्ववत् न कोष्ये कुङ्शब्दे नेमेकाजिति नेम् अद्य मांसादा रक्षादयस्तृप्ता भविष्यन्ति जिलृत्पय च चकारात् प्रीणने रधादित्वात् नेम् भूमावरीणां रक्तं पास्यति ॥ २९ ॥ भ०

आकर्ष्यामीत्यादि । सर्वयोद्धृणां यश आकर्ष्यामि आहरिष्यामि शत्रूंश्च कर्मणा युद्धाख्येनापनेष्यामि न्यूनयिष्यामि अद्य पतिक्षयात् पतिविनाशात् शोको मैथिल्या सीतया अनुभाविष्यते संवेदयिष्यते कर्मणि लृट् चिण्वदिट् ॥ ३० ॥ ज० म०

आकर्ष्यामीत्यादि । शत्रूणां यश आकर्ष्यामि हरिष्यामि कृषौ त्वात्कृषि वद्रोऽकिदिति रम्य पाक्षिकत्वं कर्मणा युद्धेन शत्रून् अपनेष्यामि अपचेष्यामीति पाठे न्यूनीकरिष्यामीत्यर्थः । अद्य पतिनाशात् सीतया शोकोऽनुभवितव्यः हनघहृदृश च इति णिच् ॥ ३० ॥ भ०

मन्तूयिष्यतीत्यादि । यक्षेन्द्रो धनदः दाशरथिमापन्नं श्रुत्वा मन्तूयिष्यति दुर्मना भविष्यति यमश्च न वल्गूयिष्यति हृष्टमना न भविष्यति मन्तुवल्गुशब्दाभ्यां कण्ड्वादिभ्यो युक् तदन्तात् लृट् वने वानरयोषितः अपतिपुत्राः सत्यः ग्लास्यन्ति ग्लानिं यास्यन्ति ॥ २१ ॥ ज० म०

मन्तूयिष्यतीत्यादि । यक्षेन्द्रः कुबेरो मन्तूयिष्यति मन्तुश्च रोषवैमनस्ययोः अपराधे चेति चन्द्रादयः तं करोतीति कण्ड्वादित्वात् यः कण्ड्वादीनां लिङ्गत्वं धातुत्वञ्चेति टीकाकृद्भिरुक्तं धातुपक्षे स्वार्थे य इति च यमो वल्गूयिष्यति शोभनो नो भविष्यति दौर्मनस्यमिति

सुखं स्वप्स्यन्ति रक्षांसि भ्रमिष्यन्ति च निर्भयम् ।
न विक्रोक्ष्यन्ति राक्षस्यो नरांश्चात्स्यन्ति हर्षिताः ॥ २२ ॥
प्राङ्मूहूर्त्तात् प्रभातेऽहं भविष्यामि ध्रुवं सुखी ।
आगामिनि ततः काले यो द्वितीयः क्षणोऽपरः ॥२३॥

वल्गु पूजामाधुर्य्ययोः कण्ड्वादिः । वानराणां योषितश्च प्रतिपुरुषरहिताः सत्यो वने ग्लास्यन्ति ग्लै क्षये ॥ २१ ॥ भ०

सुखमित्यादि । रक्षांसि चैतानि सुखं स्वप्स्यन्ति निर्भयञ्च भ्रमिष्यन्ति राक्षस्यश्च न विक्रोक्ष्यन्ति न क्रन्दिष्यन्ति क्रुश आह्वाने रोदने च हर्षिताश्च सत्यो नरानत्स्यन्ति भक्षयिष्यन्ति ॥ २२ ॥ ज० म०

सुखमित्यादि । ततो रक्षांसि सुखं शयिष्यन्ते ञिष्वप् शये निर्भयञ्च भ्रमिष्यन्ति भ्रम्युजश्च चाले । क्रमिष्यन्तीति क्वचित्पाठः । राक्षस्यो न क्रन्दिष्यन्ति क्रुशजौ रोदने ह्रुतौ हृष्टाः सत्यो नरांश्च भक्षयिष्यन्ति अद्लृ भोक्षे हृषुहृष्यत्रि इरहृष्टौ क्तः वारुणानहृषेति पाक्षिक इम् पूर्षीष्टमेत्यादौ सेमोर्गुरित्यस्य योगविभागात् हर्षार्थे गुणः किंवा हर्षो जात आसामिति इतोऽस्य जाते इति इतः । अन्ये तु क्लानत्वोर्हृ षधोर्नाम्नि विस्मये प्रतिघाते च रोमहर्षार्थे गुणश्चेत्याहुः । हर्षिता अल्पपाक्रमेण विस्मिता इत्यर्थ इति विद्यासागरस्तन्न साधु तत्र गुणाभावात् ॥ २२ ॥ भ०

प्रागित्यादि । योऽयमागामी प्रभातकालः मुहूर्त्तद्वयसम्मितः तस्मिंस्तस्येति षष्ठीसप्तम्योरभेदात् यो द्वितीयो मुहूर्त्तः तस्मात् प्राक् प्रथमे मुहूर्त्ते अहमवश्यं सुखी भविष्यामि तदानीं हतशत्रुत्वात् ततः प्रभातादागामी यः कालः क्षणद्वयसम्मितः तस्मिन्नागामिनि काले यो द्वितीयः तस्माद्यदपरक्षणः पूर्वः तत्रेति वक्ष्यमाणेन सम्बन्धः ॥ २३ ॥ ज० म०

प्राङ्मुहूर्त्तादित्यादि । प्रभाते प्रातःकाले मुहूर्त्तत्रयात्मके तृतीयमुहूर्त्तात् प्राक् प्रथममुहूर्त्तद्वये अहमवश्यं सुखी भविष्यामि तदानीमेव शत्रुहननात् ततः प्रभातादागामिनि काले क्षणद्वयात्मक-

तत्र जेतुं गमिष्यामि त्रिदशेन्द्रं सहामरम् ।
ततः परेण भूयोऽपि लङ्कामेष्याम्यमत्सरः ॥३४॥ (युग्मकम्) ।
तमेवंवादिनं मूढमिन्द्रजित् समुपागतः ।
युयुत्सिष्येऽहमित्येवं वदन् रिपुभयङ्करः ॥ ३५ ॥

द्वितीयचरणान्तरः पूर्वचरणस्तत्र जेतुं गमिष्यामीति वाक्यनाशेन सम्बन्धः ॥ ३३ ॥ भ०

तत्रेत्यादि । तत्र क्षणे त्रिदशेन्द्रं सहामरं देवैः सहितं जेतुं द्रुतं गमिष्यामि प्राक् मुहूर्त्तात् सुखी भविष्यामि क्षणाद्यदपरं तत्र जेतुं गमिष्यामीति कालविभागे वा अहोरात्राणामिति अनद्यतनवत् प्रत्ययप्रतिषेधे लृट् तत्र हि नानद्यतनवदिति मर्य्यादावचने परस्मिन्निति चानुवर्त्तते तत्र जेतुं कालमर्य्यादाविभागे सति योऽपर आद्यप्रविभागः तत्र भविष्यति काले अनद्यतनवत्प्रत्ययविधिर्न भवति ततो लुट् प्रतिषेधाल्लृङ्‌व भवति ततः परेणेति यस्मिन्नागामिनि काले शक्रं जेतुं गमिष्यामि तत्र द्वितीयो यः क्षणस्तस्मात् परतेणोपरिष्टात्तं शक्रं जित्वा भूयोऽपि लङ्कामेष्यामि आङ्पूर्वस्येणो रूपम् । अमत्सरो विगतक्रोधः सन् अपरस्मिन् विभाषेत्यनेन विभाषालुट्प्रतिषेधाल्लृट् तत्र हि कालविभागे सति भविष्यति काले परस्मिन् विभाषा अनद्यतनवत्प्रत्ययविधिर्न भवतीत्युक्तम् ॥ ३४ ॥ ज० म०

तत्रेत्यादि । तस्मिन् क्षणे सहामरं देवैः सहितं त्रिदशेन्द्रं शक्रं जेतुं गमिष्यामि गेर्धोरणेष्विन इनि इणवर्जनात् आदिगेचोरिति त्रिः ॥ ३४ ॥ भ०

तमित्यादि । तं रावणं मूढत्वादेवंवादिनम् एवंभाषणशीलम् इन्द्रजित् रिपोर्भयङ्करः समुपागतः युयुत्सिष्येऽहं योद्धुमिच्छां करिष्यामीति ब्रुवन् ॥ ३५ ॥ ज० म०

तमित्यादि । एवंवादिनं शोकात् मूढं रावणं रिपूणां भयङ्कर इन्द्रजित् समुपागतः किं कुर्वन् इत्येवं वदन् । किं वदन्नित्याह अहं योद्धुमिच्छां करिष्यामि युधधोः सन् ॥ ३५ ॥ भ०

नाभिज्ञा ते महाराज! जेष्याव: शक्रपालितम् ।
दृप्तदेवगणाकीर्णमावां सह सुरालयम् ॥ २६ ॥
नाभिज्ञा ते सयचेन्द्रं भङ्क्ष्यावो यद् यमं बलात् ।
रत्नानि चाहरिष्याव: प्राप्स्यावश्च पुरीमिमाम् ॥२७॥
एष पेक्ष्याम्यरीन् भूयो न मोक्ष्यसि रावण!।
जगद्द्रक्ष्यसि नीराममवगाहिष्यसे दिशः ॥ २८ ॥

तेन सह योद्धुमिच्छामीति चेदाह ।

नाभिज्ञेत्यादि । हे महाराज! ते तव नाभिज्ञा स्मृतिः सुरालयं शक्रेण पालितं दृप्तैश्च देवगणैराकीर्णं व्याप्तम् आवां द्वावपि सह सम्भूय जेष्यावः जितवन्तौ अभिज्ञावचने लृट् तत्र भूतानद्यतन इति वर्त्तते ॥ २६ ॥ ज० म०

नाभिज्ञा त इत्यादि । हे महाराज! नवाभिज्ञा स्मृतिर्नास्ति आवां त्वञ्च अहञ्च सम्भूय इन्द्रेण पालितं दृप्तेन देवगणेन व्याप्तं सुरालयं स्वर्गं जितवन्तौ अ, यैस्त्वयदित्वतीत इति तौ ॥ २६ ॥ भ०

नाभिज्ञेत्यादि । न चेत्यभिज्ञास्ति सयचेन्द्रं धनदसहितं यमं बलात् सामर्थ्येन आवां भङ्क्ष्यावः भग्नवन्तौ, रत्नानि च ताभ्यां बलादाहरिष्यावः, इमाञ्च पुरीं लङ्कां प्राप्स्याव: विभाषासाकाङ्क्ष इति लृट् लक्षणयोः सम्बन्धे प्रयोक्तुराकाङ्क्षा तत्र भञ्जनं लक्षणं रत्नाद्याहरणञ्च लक्ष्यम् ॥ २७ ॥ ज० म०

नाभिज्ञा त इत्यादि । तव नाभिज्ञा स्मृतिर्नास्ति यत् सयचेन्द्रं कुवेरसहितं यमं बलादावां भग्नवन्तौ भञ्जोभौ मोटने, तत्सम्बन्धीनि रत्नानि च हृतवन्तौ, इमां लङ्कापुरीं प्राप्तवन्तौ च वानेकस्मार्य्ये इति भूते तौ ॥ २७ ॥ भ०

एष इत्यादि । एषोऽहं भूयः पुनररीन् पेक्ष्यामि चूर्णयिष्यामि वर्त्तमानसामीप्ये वर्त्तमानिकप्रत्ययस्य विकल्पेन विधानात् लृडेव भवति येन हे रावण! न मोक्ष्यसि शोकं न करिष्यसि भविष्यति

सहभृत्यः सुरावासे भयं भूयो विधास्यसि ।
प्रणंस्यत्यद्य देवेन्द्रस्त्वां वक्ष्यति स सन्नतिम् ॥ ३९ ॥
भेष्यते मुनिभिस्त्वत्तस्त्वमधिष्ठास्यसि द्विषः ।
ज्ञास्येऽहमद्य संग्रामे समस्तैः शूरमानिभिः ॥ ४० ॥

लृट्, जगत् नीरामं रामरहितं द्रक्ष्यसि, दिशश्च सर्वा अवगाहिष्यसे व्याप्स्यसि ॥ ३८ ॥ ज० म०

एष इत्यादि । एषोऽहं तव अरीन् चूर्णयिष्यामि शौपिष्ल चूर्णने वर्त्तमानसामीप्यविवक्षयात् तौ । हे रावण ! भूयस्त्वं न शोकं करिष्यसि शुच शोके, जगद्रामशून्यं द्रक्ष्यसि निर्भयः सन् दिशोऽव-गाहिष्यसे ॥ ३८ ॥ भ०

सहेत्यादि । भृत्यैः सह सुरावासे स्वर्गे भूयो भयं विधास्यसि करिष्यसि, देवेन्द्रश्च त्वां प्रणंस्यति त्वदीयोऽहमिति निवेदयिष्यति, वक्ष्यति च सन्नतिं भणिष्यति च नमस्कारम् ॥ ३९ ॥ ज० म०

सहभृत्य इत्यादि । भृत्यैः सहितस्त्वं सुराणामावासे स्वर्गे भूयः पुनरपि भयं जनयिष्यसि, शक्रोऽपि त्वां भूयो नमस्करिष्यति भवद्भ-यात् सन्नतिं निरहङ्कारतां वक्ष्यति वहेर्ञौ प्रापणे धारणेऽपि दृश्यत इति श्रीपतिः । नतिं नमस्कारं वक्ष्यति वदिष्यति वदो रूपमिति केचित् ॥ ३९ ॥ भ०

भेष्यत इत्यादि । मुनिभिस्त्वत्तो भेष्यते भीतैर्भवितव्यं भावे लृट् त्वमधिष्ठास्यसि द्विषः शत्रून् परिभविष्यसि अधिशीङिति कर्मसंज्ञा यादृशश्चाहं तादृशः संग्रामे ज्ञास्ये ज्ञातो भविष्यामि कर्मणि लृट्, कैः समस्तैः शूरमानिभिः वयं शूरा इत्यात्मानं मन्यमानैः आत्ममाने खश्च ॥ ४० ॥ ज० म०

भेष्यत इत्यादि । त्वत्तो मुनिभिर्भयं प्राप्स्यते ञिभीलि भीत्यां भावे रूपम् । त्वं द्विषः शत्रून् अधिष्ठास्यसि तेषु प्रभुर्भविष्यसीत्यर्थः अर्मक्रियेत्यादिना कर्म ठत्वं गोक इति षत्वम् । अद्य संग्रामे समस्तैः

त्रायिष्यन्ते मया चाद्य वीरम्मन्या द्विषद्गणाः ।
गूहिष्यामि चितिं क्लृप्तैरद्य गात्रैर्वनौकसाम् ॥ ४१ ॥
आरोच्यामि युगान्तवारिदघटासङ्घट्टधीरध्वनिं
निर्यास्यन् रथमुच्छ्रितध्वजधनुः खड्गप्रभाभासुरम् ।

शूरम्मन्यैरहं त्रातो भविष्यामि कर्मणि तौ आत्मानं शूरं मन्यत इति खिशिति परमते तु यच्छादित्वात् णिन् अयं मननार्थोऽभिधानात् किंवा शूरसम्बन्धिमानो विद्यते येषामिति नैकाजादितीन् ॥ ४० ॥ म०

त्रायिष्यन्त इत्यादि । एते च द्विषां गणाः शत्रुसंघाः वीरम्मन्याः अद्य मया त्रायिष्यन्ते परिच्छेत्स्यन्ते यादृशा इति कर्मणि ऌट् चिण्वदिट् । वनौकसां कपीनां गात्रैः छिन्नैरद्य चितिं गूहिष्यामि ॥ ४१ ॥ ज० म०

त्रायिष्यन्त इत्यादि । मयापि वीरमात्मानं मन्यमाना द्विषद्गणाः त्रातव्याः हनग्रहदृश इति णिच् यनञ्गिदिति यन् मन्यात्खार्थे इति मन् । क्लृप्तैश्छिन्नैः कपीनां गात्रैरद्य भूमिश्चाच्छादयिष्यामि गुहूजसंवृतौ गुहोणौ रुः ॥ ४१ ॥ म०

आरोच्यामीत्यादि । अतोऽहं रथमारोच्यामि निर्यास्यन् इतो निर्गच्छन् आरोच्यामीति क्रियायां क्रियार्थायामुपपदे निर्यास्यन्निति ऌट् शेषे वेति चकाराल्लृट् । कीदृशं रथं युगान्ते प्रलयकाले या वारिदघटास्तासां यः संघट्टः परस्परसंमर्दः तस्येव धीरो गम्भीरो ध्वनिर्यस्य रथस्य उच्छ्रिता ध्वजाः धनूंषि च यत्र खड्गप्रभाभिस्च भासनशीलो यः पश्चाद्विशेषणसमासः उच्छ्रितानां वा ध्वजादीनां प्रभाभिर्भासुर इति योज्यम् । विकीर्णा इतस्ततो विक्षिप्ताः रुक्णाः छिन्नाः विमुखाः छिन्नमस्तकाः पराङ्मुखा व्यापन्ना मृताः शत्रवो यस्मिन् रणे क्रव्याशिनः शृगालादीन् क्रोशतः फूत्कुर्वतः अद्य श्रोष्यसि कीदृशान् हृष्टान् शोणितमांसोपयोगात् शोणितेन शोणानि

श्रोष्यस्यद्य विकीर्णहक्णविमुखव्यापन्नशत्रौ रणे
हतांश्छोणितशोणभीषणमुखान् क्रव्याशिनः क्रोशतः ॥४२॥

इति भट्टिकाव्ये तिङन्तकाण्डे लड्विलसितो नाम
षोड़शः सर्गः।

लोहितानि तत एव भीषणानि भयङ्कराणि मुखानि येषामिति
हणोरोदितो निष्ठान्तस्याशिद्धत्वात् चोः कुत्वे हक्ण इति ॥
४२ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लड्विल-
सितस्तृतीयः परिच्छेदः।

काव्यस्य रावणविलापो नाम षोड़शः सर्गः।

आरोच्यामीत्यादि। इतो निर्यास्यन् निर्गमिष्यन्नहं रथमारो-
च्यामि रुद्धौ जन्यां, कीदृशं रथं युगान्ते प्रलये या वारिदघटा मेघ-
पङ्क्तयस्तासां संघट्टः परस्परसम्बन्धस्तस्येव धीरो गम्भीरो ध्वनिर्यस्य
उच्छ्रितानां ध्वजादीनां प्रभाभिर्भासनशीलं त्वमपि अद्य क्रोशतः
शब्दं कुर्वाणान् क्रव्याशिनः शृगालादीन् श्रोष्यसि कीदृशान् रणे
हतान् शोणितेन शोणानि रक्तानि अतएव भीषणानि भयङ्कराणि
मुखानि येषां रणे कीदृशे विकीर्णा विक्षिप्ता हक्णाश्छिन्ना विमुखाः
पराङ्मुखाः व्यापन्ना हताश्च शत्रवो यत्र इत्येवं वदन्निति सम्बन्धः
॥ ४२ ॥ भ०

इति वद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेन-
कृतायां मुग्धबोधिन्यां भट्टिटीकायां रावणविलापो नाम
षोड़शः सर्गः।

---

## सप्तदशः सर्गः ।

आशासत ततः शान्तिमस्नुरग्नीनहावयन् ।
विप्रानवाचयन् योधाः प्राकुर्वन् मङ्गलानि च ॥ १ ॥

इतः प्रभृति लङमधिकृत्य विवक्षितमाह तत्र भूतानद्यतने लङ् ततोऽन्यत्र दर्शयिष्यति ।

आशासतेत्यादि । ततः प्रतिज्ञानन्तरं योधाः इन्द्रजित्सम्बन्धिन इत्यर्थात् उपद्रवपरिहारार्थं शान्तिमाशासत अभीष्टवन्तः आङः शासु इच्छायामित्यनुदात्तेत् आत्मनेपदेष्वन्यतरस्यामित्यदादेशः शान्तिश्च दर्शयन्नाह अस्नुः स्नाताः स्नाशौचे आत इत्यधिकृत्य लङः शाकटायनस्यैवेति झेर्जुस् अस्य पदान्तादिति पररूपम् अग्नीनहावयन् अग्निकर्म कारितवन्तः विप्रानवाचयन् स्वस्तिवाचनं कारितवन्तः मङ्गलानि मङ्गलयुक्तानि कर्माणि कृतवन्तः ॥ १ ॥ ज० म०

अथ षोडशधिकृत्योच्यते पाणिनिना अद्य लङिति संज्ञितो लङ् भूतानद्यतन इत्युक्त्वा अन्यत्रापि प्रयोगत इति तद्व्यभिचारमाहुरन्ये । स्मते भवद्भूतभव्ये लिश इति भूतकालान्ये ष्यादय उक्ताः किञ्च अथैकस्यायदित्वतीते इत्यत्र ष्यपवादोऽयमित्युक्तवतां परेषां भूतानद्यतनपरोक्षत्वादौ लङादिविधानमप्युद्भङ्कितम् ।

आशासतेत्यादि । तत इन्द्रजित्प्रतिज्ञानन्तरं योधाः कुशलार्थं शान्तिमभीष्टवन्तः आङ्पूर्वास्तु शसिङ्शासुनङ्ङशि स्मृता शासूलङ् अनेकार्थत्वादिच्छायामपि लुगद्भ्योऽपः सान्तोऽदनतः शान्तिं दर्शयति अस्नुः स्नानं चक्रुः ष्णाशौधने द्विषविदातोऽनुस्वा उस्येचीत्यालोपः अग्नीन् अहावयन् होमं कारितवन्तः हुवि होमेऽदने जिः विप्रान् अवाचयन् स्वस्तिवाचनं कारितवन्तः मङ्गलानि दध्यक्षतानि प्राकुर्वन् प्रस्तुतानि चक्रुः तनूभ्यः गुणगुणः कृञोऽद्दणोरे ॥ १ ॥ भ०

अपूजयन् कुलश्रेष्ठाननुपागूहन्त बालकान् ।
स्त्रीः समावर्द्धयन् सास्राः कार्य्याणि प्रादिशंस्तथा ॥२॥
आच्छादयन् व्यलिम्पंश्च प्राश्नन्नथ सुरामिषम् ।
प्रापिबन् मधुमाध्वीकं भक्ष्यांश्चादन् यथेप्सितान् ॥ ३ ॥

अपूजयन्नित्यादि । कुलश्रेष्ठान् वृद्धानपूजयन् पूजितवन्तः पाद-पतनादिना बालकाननुपागूहन्त आश्लिष्टवन्तः गतानां किं भविष्यतीति सास्राः स्त्रीः योषितः वाम्शसोरितीयङ्भावपक्षे रूपं समावर्द्धयन् ताम्बूलादिना संवर्द्धितवन्तः प्रातिपदिकाद्धात्वर्थे इति णिच् तथा कार्य्याणि गृहकार्य्याणि प्रादिशन् निर्दिष्टवन्तः इदमिदं कार्य्यमिति ॥ २ ॥ ज० म०

अपूजयन्नित्यादि । योधाः कुलश्रेष्ठान् वृद्धान् पूजितवन्तः पूजक् पूजे बालकानाश्लिष्टवन्तः पतिना शङ्कया सास्रा रोदनान्विताः स्त्रियः समवर्द्धयन् आश्वासितवन्तः इदं कर्त्तव्यमिति कार्य्याणि प्रदिष्टवन्तः दिशेस्तुदादित्वात् दिवस्तुदेति शः अपित्त्वस्य ङित्त्वाद्गुणाभावः ॥२॥भ०

आच्छादयन्नित्यादि । आच्छादयन् वस्त्राणि पिनद्धवन्तः छद संवरणे चुरादिः व्यलिम्पंश्च समालिप्तवन्तः लिप उपदेहे शेमुचादीनामिति नुम् न कव्यप्रगानिति नुत्वं पूर्वस्यानुनासिकः । अथानन्तरं सुरामिषं प्राश्नन् अभ्यवहृतवन्तः मधुना माध्वीकं मध्वासवं प्रापिबन् सुष्ठु पीतवन्तः भक्ष्यांश्च खण्डपायसादीन् यथेप्सितमदन् भक्षितवन्तः अदित्यनुवृत्तौ अदः सर्वेषामित्यप्रत्ययः ॥ ३ ॥ ज० म०

आच्छादयन्नित्यादि । योधा आच्छादयन् वस्त्राणि परिहितवन्तः छदकिञ्संवृतौ व्यलिम्पन् अङ्गरागं चक्रुः लिलिपौ शपञ्लेपे मुचादित्वान्नुम् । अनन्तरं सुराणामामिषञ्च भक्षितवन्तः अशगभोजने क्र्यादित्वात् आद्योरालोप्योऽणौ मधु माध्वीकं मद्यविशेषं पीतवन्तः पा पाने घे शप्रे स्यादानेति पिब लोपोऽतोऽदेचोः । यथेप्सितान् भक्ष्यान् खण्डादीन् भक्षितवन्तः अदृलौ भक्षे ॥ ३ ॥ भ०

न्यश्यन् शस्त्राण्यभीष्टानि समनह्यंश्च वर्मभिः ।
अध्यासत सुयानानि द्विषद्भ्यश्चाशपंस्तथा ॥ ४ ॥
अपूजयंश्चतुर्वक्त्रं विप्रानर्चंस्तथास्तुवन् ।
समालिपत शक्रारिर्यानञ्चाभ्यलषद्वरम् ॥ ५ ॥
आमुञ्चद्वर्म रत्नाढ्यमबध्नात् खड्गमुज्ज्वलम् ।

न्यश्यन्नित्यादि । अभीष्टानि यथानुभावितानि शस्त्राणि न्यश्यन् तेजितवन्तः शोतनूकरणे ओतः श्यनीत्योकारलोपः वर्मभिश्च कवचैः समनह्यन् संनद्धाः शरीराण्याच्छादितवन्त इत्यर्थः सुयानानि शोभनयानानि अध्यासत आरूढाः अधिशीङिति कर्मसंज्ञा तथा द्विषद्भ्योऽशपन् आक्रुष्टवन्तः पापाः ! क यास्यथेति श्लाघह्नुङित्यादिना सम्प्रदानसंज्ञा ॥ ४ ॥ ज० म०

न्यश्यन्नित्यादि । योधा अभीष्टानि शस्त्राणि न्यश्यन् शितानि चक्रुः शोतनिशाने दिवादित्वात् श्यन् यन्योतृशमादीति ओकारलोपः वर्मभिः करणैः सन्नहनं शरीराच्छादनं चक्रुः नह्याजी बन्धे दिवादिः शोभनानि यानानि अध्यासत कर्मक्रियेत्यादिना डस्य हत्वं द्विषद्भ्योऽशपन् शपञ् क्रोशे यस्मै दित्सेति सम्प्रदानत्वम् ॥ ४ ॥ भ०

अपूजयन्नित्यादि । चतुर्वक्त्रं ब्रह्माणमपूजयन् अर्चितवन्तः विप्रानर्चन् दाननमस्कारादिना पूजितवन्तः तथा अस्तुवन् परस्परं स्तुतवन्तः शक्रारिश्च इन्द्रजित् समालिपत समालिप्तवान् यानं वरमुत्कृष्टमभ्यलषत् अभीष्टवान् वाभ्राश्येत्यादिना श्यनो विकल्पितत्वात् पक्षे शप् ॥ ५ ॥ ज० म०

अपूजयन्नित्यादि । योधाश्चतुर्वक्त्रं ब्रह्माणं पूजितवन्तः विप्रान् अर्चितवन्तः अर्च च चकारात् पूजे तथास्तुवन्तः ष्टुञ स्तुतौ शुध्योरित्युव शक्रारिरिन्द्रजिदङ्गानि लिप्तवान् वरमुत्कृष्टं यानमिच्छतिस्म लषजलसजस्पृहि क्रमक्लमेत्यादिना श्यनो विभाषितत्वात् पक्षे शप् ॥ ५ ॥ भ०

आमुञ्चदित्यादि । रत्नाढ्यं रत्नप्रत्युप्तं वर्म कवचमामुञ्चत् शरीरे

अध्यास्त स्यन्दनं घोरं प्रावर्त्तत ततः पुरः ॥ ६ ॥
आघ्नन् भेरीर्महास्वानाः कम्बूंश्चाप्यधमन् शुभान् ।
अताडयन् मृदङ्गांश्च पेराश्चापूरयन् कलाः ॥ ७ ॥
अस्तुवन् वन्दिनः शब्दानन्योन्यश्चोदभावयन् ।
अनदन् सिंहनादांश्च प्राद्रेकत हयद्विपम् ॥ ८ ॥

आमुक्तवान् पिनद्धवानित्यर्थः, खड्गञ्चोज्ज्वलमवभात् कचपार्श्वाश्रितं कृतवान्, घोरं भीषणं स्यन्दनमध्यास्त आरूढ़ः, ततोऽनन्तरं पुरः पुरतः प्रावर्त्तत प्रवृत्तः ॥ ६ ॥ ज० म०

आमुञ्चदित्यादि । इन्द्रजिद्रत्नव्याप्तं वर्म कवचम् आमुञ्चत् पिहितवान् मुच्लृषपञ्जौ मोचे आङ्पूर्वः परिधाने वर्त्तते मुण्राधौ मुचामिति मुण्, उत्तमं खड्गं पार्श्वे बद्धवान् बन्धौगन्धक् बन्धे क्रादित्वात् श्ना अपिद्गस्य ङित्त्वात् हलुङ्नलोपः, घोरं भीषणं रथमध्यास्त आरूढ़ः, इतोऽनन्तरं शत्रूणां पुरः प्रवृत्तः ॥ ६ ॥ भ०

आघ्नन्नित्यादि । तस्मात् प्रवृत्ताः महास्वानाः महानादाः स्वनहसोर्वेत्यप् भेरीः आघ्नन् ताड़ितवन्तः वादका इत्यर्थात् शुभान् सुस्वरान् कम्बून् शङ्खानधमन् शब्दितवन्तः पाघ्रेत्यादिना धमादेशः मृदङ्गांश्चाताड़यन् आहतवन्तः ताड़ आघात इति चुरादिः कला अव्यक्तमधुरस्वराः पेरा वाद्यविशेषाश्च अपूरयन् पूरितवन्तः ॥ ७ ॥ ज० म०

आघ्नन्नित्यादि । तस्मिन् प्रवृत्ते वाद्यकारा महानादा भेरीराहतवन्तः हन्लौ वधे गतौ आङ्पूर्वत्वादाघाते शोभनान् शङ्खान् अधमन् वादितवन्तः ध्मा अग्नियुतौ ध्वनौ स्यादानपेति धमादेशः मृदङ्गांस्ताड़ितवन्तः तडकद्विषि आहताः कला अव्यक्तमधुरस्वराः पेरा वाद्यविशेषाः पूरितवन्तः पूरकृच चकारात् पूर्त्तौ ॥ ७ ॥ भ०

अस्तुवन्नित्यादि । वन्दिनः स्तुतिपाठका अस्तुवन् जय जीवेत्यादिना स्तुतिं कृतवन्तः अन्योन्यम् अन्यस्य अन्यस्य च शब्दात् संग्रामे नामानि उदभावयन् उद्घाटितवन्तः सैनिका इत्यर्थात् सिंहनादांश्चा-

अनिमित्तान्यथापश्यन्स्फुटद्रविमण्डलम् ।
श्रौचन् शोणितमम्भोदा वायवोऽवान् सुदुःसहाः ॥९॥
आर्च्छन् वामं मृगाः क्रूणाः शस्त्राणां व्यस्मरन् भटाः ।
रक्तं न्यष्ठीवदक्लाम्यदखिद्यद्वाजिकुञ्जरम् ॥ १० ॥

नदन् शब्दितवन्तः हयद्विपं पशुद्वन्द्वस्य विभागेकवत् प्राद्रेकत शब्दितवत् द्रेकशब्दोत्साह इत्यनुदात्तेत् ॥ ८ ॥ ज० म०

अस्तुवन्नित्यादि । वन्दिनः स्तुतिपाठका इन्द्रजितमस्तुवन् जयशब्दं चक्रुः अन्योन्यं नामानि उद्घोषितवन्तः अमुकस्त्वमीदृगित्युक्तवन्तः इत्यर्थः सिंहनादं चक्रुः सैनिका इत्यर्थात् हयद्विपं गतिं चक्रे हयाश्च द्विपाश्चेति समाहारः द्रेकृङ् शब्दे पाणिनीयास्तु रेकृ शब्दोत्साह इति धातुरनेकार्थत्वादव्यक्तशब्देऽपि तेन प्राद्रेकत अव्यक्तं शब्दं चकारेत्याहुः प्राद्रेकतेति पाठे द्रेक्भ्रेकङ्स्वनोत्साहे औज्ज्वल्यमिति क्षीरस्वामी । उत्साहो वृद्धिरिति चन्द्रः ॥ ८ ॥ भ०

अनिमित्तानीत्यादि । अनिमित्तानि कुत्सितनिमित्तानि नञत्र कुत्सायां गच्छन्तोऽपश्यन् दृष्टवन्तः । तानि दर्शयति रविमण्डलमस्फुटत् स्फुटितम् अम्भोदाः शोणितमौक्षन् दृष्टाः उक्षसेचने वायवः सुदुःसहाः प्रचण्डा अवान् वान्तिस्म शाकटायनमतादन्यत्र उसादेशः ॥ ९ ॥ ज० म०

अनिमित्तानीत्यादि । अथानन्तरम् इन्द्रजित्प्रभृतयो निन्दितानि निमित्तानि अपश्यन् लङादावेति दृशेः पश्य कुत्सायामत्र नञ् । यदुक्तं, तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिता इति । अनिमित्तानि दर्शयति, रविमण्डलं स्फुटितं विदीर्णं स्फुटश्च विकाशे मेघा रक्तं वर्षन्तिस्म उक्षसिबालगमनहिंसयोः द्विषविदातोऽनुवर्तेत्यस्याप्रवृत्तिपक्षे रूपम् ॥ ९ ॥ भ०

आर्च्छन्नित्यादि । निर्गच्छतां वामपार्श्वं कृष्णमृगा आर्च्छन् गताः अर्त्तेः पाघ्रेति ऋच्छादेशः ऋच्छगताविन्द्रियस्य वा रूपं भटाश्च शस्त्राणां व्यस्मरन् विस्मृतवन्तः अधीगर्थेति कर्मणि षष्ठी वाजिकुञ्जरमखिद्यदक्लाम्यदपि रक्तं न्यष्ठीवत् ष्ठिवु निरसन इति भौवादिकस्य

न तानगणयन् सर्वानास्कन्दंश्च रिपून् द्विषः ।
अच्छिन्दन्नसिभिस्तीक्ष्णैरभिन्दंस्तोमरैस्तथा ॥ ११ ॥
न्यकृन्तंश्चक्रधाराभिरतुदन् शक्तिभिर्दृढम् ।
भल्लैरविध्यन्नुग्रैरतृंहंस्तोमरैरलम् ॥ १२ ॥

अतृषं ष्ठिवुक्लमाचमां ष्ठितीति दीर्घः अक्लाम्यत् क्लान्तश्च ॥ १० ॥ ज० म०

वामेष्वित्यादि । क्रष्णा मृगा वामं पार्श्वं गताः ऋ प्रापणे च चकारान्गत्यां स्यादानपाञ्चेति ऋच्छादेशः ऋच्छ मूर्त्तौ गमन्मोहयोरित्यस्य वा रूपं भटा योधाः शस्त्राणां विसृतवन्तः कर्मणि षष्ठी वाजिनश्च कुञ्जराश्च वाजिकुञ्जरं रक्तं न्यष्ठीवत् प्रच्छादितवत् ष्ठिवुष्ठिव्यष्ठीवनिरासे श्वाद्यादिष्ण इत्यादौ ष्ठिवर्जनाच्च षत्वं ष्ठिवुक्लमाचम इति दीर्घः अक्लाम्यत् क्लान्तश्चाभवत् ञिक्लिम्यक्लमुभिग्लानौ शमादित्वात् दीर्घः अखिद्यत् खिन्नश्चाभवत् खिदजध्यौ दैन्यके अखिद्यदपि अश्रान्तमपि रक्तं न्यष्ठीवदक्लाम्यच्चेति वा योज्यम् ॥ १० ॥ भ०

न तानित्यादि । तान् सर्वानशुभान्नागणयन् नादृतवन्तः किमेतैरिति अपितु रिपूनास्कन्दन् अभिगतवन्तः द्विषो राक्षसास्तीक्ष्णैरसिभिररीनच्छिन्दन् छिन्नवन्तः तथा तोमरैस्तीक्ष्णैरभिन्दन् विदारितवन्तः ॥ ११ ॥ ज० म०

न तानित्यादि । द्विषो राक्षसास्तान् सर्वान् पूर्वोक्तान् रविमण्डलविदारणादीनशुभान् नागणयन् अवज्ञातवन्तः किमेभिः कार्य्यमिति भावः यत्नभिगतवन्तश्च पुनरसिभिश्छिन्नवन्तः रिपूनित्यर्थात् छिदेरुधादित्वात् श्नम् नशो न्ऽणाविति आकाररहितत्वं तथा तोमरैर्विदारितवन्तः भिदेः पूर्ववत् श्नम् ॥ ११ ॥ भ०

न्यकृन्तन्नित्यादि । चक्रधाराभिः न्यकृन्तन् छिन्नवन्तः मुचादित्वान्नुम् शक्तिभिश्च दृढमत्यर्थमतुदन् व्यथितवन्तः भल्लैरविध्यन् ताडितवन्तः ग्रहिज्येति सम्प्रसारणम् उग्राग्रैस्तीक्ष्णाग्रैस्तोमरैरलं पर्य्याप्तमतृंहन् हतवन्तः तृह हिंसायां रुधादित्वात् श्नम् श्नसोरल्लोपादनुस्वारौ ॥ १२ ॥ ज० म०

आस्यन् प्लवङ्गमा वृक्षानधून्वन् भूधरैर्भृशम् ।
अहिंसन् मुष्टिभिः क्रोधाददशन् दशनैरपि ॥ १३ ॥
प्रादुन्वन् जानुभिस्तूर्णमतुदंस्तलकूर्परैः ।
प्राहिण्वन्नरिमुक्तानि शस्त्राणि विविधानि च ॥ १४ ॥

न्यकृन्तन्नित्यादि । राक्षसाश्चक्रधाराभिर्न्यकृन्तन् कृतीच्छेदने मुचादित्वात् नुम् शक्तिभिर्दृढं व्यथयामासुः तुदशजौ व्यथे उपायैर्भल्लैरविध्यन् व्यधौ ताड़ने दिवादित्वात् श्यन् अपित्त्वस्य ङित्त्वात् ग्रहस्यपाद्योरिति जिः अनमत्यर्थं तोमरैर्हिंसितवन्तः तृहधतृभूय-हिंसे रुधादित्वात् नण् नशोऽनुंऽशौ अतृंहन् शूलपट्टिशैरिति क्वचित् पाठः । पट्टिशो लौहदण्डो यस्तीक्ष्णधारः क्षुरोपम इति वैजयन्ती ॥ १२ ॥ भ०

आस्यन्नित्यादि । प्लवङ्गमा अपि वृक्षानास्यन् क्षिप्तवन्तः असु क्षेपणे तथा भूधरैः पर्वतैरधून्वन् हतवन्तः उपधायाश्चेति दीर्घः क्रोधान्मुष्टिभिरहिंसन् ताड़ितवन्तः दशनैर्दन्तैरदशन् खादितवन्तः दन्शसञ्जस्वञ्जांशपीत्यनुनासिकलोपः ॥ १३ ॥ ज० म०

आस्यन्नित्यादि । वानरा वृक्षान् आस्यन् क्षिप्तवन्तः असु क्षेपे पर्वतैर्हिंसितवन्तः धुर्निर्हिंसेर्व्यनचतयोति दीर्घः क्रोधात् मुष्टिभिरहिंसन् हिसि हिंसे रुधादित्वात् श्नम् नशो नलोप इति इदनुबन्धजातनकारस्य लोपः ततो नश्चोऽनुस्वारः दन्तैः खादितवन्तः दन्शौ दंशने सनुजदनुशस्वनजस्तनुजोऽपि न लोपः ॥ १३ ॥ भ०

प्रादुन्वन्नित्यादि । जानुभिस्तूर्णं प्रादुन्वन् पीड़ितवन्तः टुदु उपतापे स्वादिः तलकूर्परैः हस्ततलैः प्रकोष्ठैश्चातुदन् व्यथितवन्तः अरिभिर्मुक्तानि विविधानि यानि शस्त्राणि तानि प्राहिण्वन् प्रहितवन्तः ॥ १४ ॥ ज० म०

प्रादुन्वन्नित्यादि । जानुभिः प्रादुन्वन् पीड़ितवन्तः टुदु उपतापे स्वादित्वात् श्नु ह्वौरिति वत्वं तलैश्चपेटैः कूर्परैः कफोणिभिश्चातुदन् तुदशजौ व्यथे अतुदंश्चेति पाठे तुदशजौ प्रेरणे, तत्रश्चार्थः

अटणेट् शक्रजिच्छत्रूनभ्राम्यच्च समन्ततः ।
अध्वनच्च महाघोरं न च काञ्चन नादुनोत् ॥ १५ ॥
नाजानन् सन्दधानन्तं धनुर्नैचन्त बिभ्रतम् ।
नैषूनचेतन्नस्यन्तं हतास्ते नाविदुर्द्विषः ॥ १६ ॥

खड्गे च खड्गमुष्टिचपेटयोरिति विश्वः । स्यात् कफोणिस्तु कूर्पर इत्यमरः । अरिभिर्निशाचरैर्यानि शस्त्राणि मुक्तानि तानि पुनस्तेभ्य एव प्रहितवन्तः छिन्नवर्द्धने गतौ प्राग्वन्नोण इति णत्वम् ॥ १४ ॥ भ०

अटणेडित्यादि । ततः शक्रजिदिन्द्रजित् शत्रूनटणेट् हिंसितवान् टहेः अम् तस्य टणह इम् हलङ्यादिलोपः हकारस्य ढत्वजश्त्वचर्त्वानि समन्ततश्चाभ्राम्यत् भ्रान्तवान् महाघोरञ्च भीषणं स्वनम् अध्वनत् नादितवान् नच काञ्चन नादुनोत् काञ्चिदपि न नोपतापितवान् अपितु सर्वानपि पीड़ितवानित्यर्थः ॥ १५ ॥ ज० म०

अटणेडित्यादि । इन्द्रजित् अरीन् हिंसितवान् टह घुटनृभुश० हिंसे रुधादित्वाच्नम् टह इणपिङ्क्ष इति इन हसङ्ग्यादिसेरिति दिलोपः ढोढः समन्तात् सर्वतो भ्राम्यतिस्म भ्रामः शमादित्वात् दीर्घः महाघोरं ध्वनिञ्च ध्वनतिस्म काञ्चिदपि न नादुनोदिति न किन्तु पीड़ितवान् ॥ १५ ॥ भ०

नाजानन्नित्यादि । धनुषि शरं सन्दधानमारोपयन्तं तमिन्द्रजितं नाजानन् न ज्ञातवन्तः धनुर्बिभ्रतं नैचन्त धनुर्धारयन्तं न दृष्टवन्तः इषून् शरानस्यन्तं क्षिपन्तं नाचेतन् हस्तलाघवात् न ज्ञातवन्तः चिती संज्ञाने ङमी मुस्रादिति ङमुट् तेन हताः सन्तो द्विषः आविदुः ज्ञातवन्तः पूर्वोक्तं विजभ्यस्तस्तादिभ्यस्चेति रोर्जुस् ॥ १६ ॥ ज० म०

नाजानन्नित्यादि । धनुषि शरं सन्दधानमारोपयन्तं तमिन्द्रजितं योधा न ज्ञातवन्तः ज्ञागबोधने स्थादानपाज्ञेति जादेशः धनुर्बिभ्रतं धारयन्तं तं न ददृशुः इषून् बाणान् अस्यन्तं क्षिपन्तम् अज्ञातवन्तः चितो ज्ञाने सर्वत्र हस्तलाघवं हेतुः केवलं तेन हताः सन्तो द्विषः कपयः पूर्वोक्तं ज्ञातवन्तः विदज्ञतो द्विषविदात इति अन् उसः ॥१६॥ भ०

अशृण्वन्नन्यतः शब्दं प्रपलायन्त चान्यतः ।
आक्रन्दमन्यतोऽकुर्वंस्तेनाहन्यन्त चान्यतः ॥ १७ ॥
प्रालोठन्त व्यभिद्यन्त परितो रक्तमस्रवन् ।
पर्य्यश्राम्यन्नतृष्यंश्च हतास्तेनाम्रियन्त च ॥ १८ ॥

अशृण्वन्नित्यादि । अन्यतः अन्यस्मिन् प्रदेशे केचिद्द्विषः आक्रन्दन् शब्दमशृण्वन् श्रुवः शृचेति शृभावः श्नुप्रत्ययश्च अन्यत्र स्थिताः प्रपलायन्त पलायिताः अन्यतोऽन्यत्र प्रदेशे स्थिताः आक्रन्दम् अकुर्वन् रोदनं कृतवन्तः अन्यतोऽन्यत्र तेनेन्द्रजिता अहन्यन्त व्यापादिताः कर्म्मणि लङ् सर्वत्राद्यादित्वाच्च त्रिः ॥ १७ ॥ ज० म०

अशृण्वन्नित्यादि । केचित् द्विषोऽन्यतोऽन्यस्मिन् देशे तस्य शब्दं श्रुतवन्तः श्रोश्नु शृ इति श्रुर्जिश्नोरिति सामान्योक्तत्वात् श्रुगताविति भौवादिकस्य श्रुन गतौ श्रुताविति स्वादिपठितस्य च ग्रहणं श्रवणार्थकोऽपि पाणिनिप्रभृतिभिर्भ्वादौ पठ्यते भ्वादिपाठवचनात् भवतीत्यपि स्यादिति टीकाकृतः । अन्यत्र च पलायिताः अन्यत्र स्थिता रोदनञ्चक्रुः तेनेन्द्रजिता चान्यत्र हताः तसन्तोरिति सप्तम्यां तस् ॥ १७ ॥ भ०

प्रालोठन्तेत्यादि । तेन हताः सन्तः केचिद्भूमौ प्रालोठन्त लुठ लोठने भुवीतस्ततो व्यभिद्यन्त व्यनीयन्त हताः सन्त इतस्ततो नीताः कर्म्मणि लङ् परितः समन्ताद्रक्तमस्रवन् मुक्तवन्तः पर्य्यश्राम्यन् खिन्नाः अतृष्यन् पिपासिताः दिवादित्वात् श्यन् केचिदम्रियन्त म्रियतेर्लुङ्लिङोश्चेति तङ् ॥ १८ ॥ ज० म०

प्रालोठन्तेत्यादि । तेनेन्द्रजिता हताः केचित् भूमौ प्रालोठन्त अलुठङ् प्रतिघाते व्यभिद्यन्त भिदेः कर्म्मणि रूपं परितः समन्तात् रक्तञ्च मुक्तवन्तः पर्य्यश्राम्यन् परिश्रान्ताः श्रमुभ्यजि इत्तपःखेदयोः शमादित्वाद्दीर्घः अतृष्यन् पिपासिताः अम्रियन्त मृताः म्रङ्ङ्प्राणत्यागे मम् ॥ १८ ॥ भ०

सौमित्रिराकुलस्तस्मिन् ब्रह्मास्त्रं सर्वरक्षसाम् ।
निधनायाजुहूषन्तं व्यष्टम्भाद्रघुनन्दनः ॥ १९ ॥
ततो मायामयीं सीतां घ्नन् खड्गेन वियद्गतः ।
अदृश्यतेन्द्रजिद्वाक्यमवदत्तं मरुत्सुतः ॥ २० ॥
मापराध्नोदियं किञ्चिदभ्रश्यत् पत्युरन्तिकात् ।
सीतां राक्षस ! मास्मैनां निग्रहीः पाप ! दुःखिताम् ॥२१॥

सौमित्रिरित्यादि । तस्मिन् इन्द्रजिति तथाभूते सति सौमित्रिराकुलो व्यस्तचित्तः सर्वरक्षसां निधनाय ब्रह्मास्त्रमाजुहूषत् आह्वातुमैच्छत् अभ्यस्तस्य चेति अभ्यस्ताकारस्य ह्वयतेः प्रागेव द्विर्वचनात् सम्प्रसारणं तञ्च सौमित्रिं रघुनन्दनो रामः व्यष्टम्भात् निवारितवान् मा भूद्विभीषणस्यापि नाश इति स्तन्भु स्तन्भित्यादिना श्नाप्रत्ययः स्तम्भेरिति मूर्द्धन्यः ॥ १९ ॥ ज० म०

सौमित्रिरित्यादि । तस्मिन्निन्द्रजिति अर्थात्तथाभूते सति सौमित्रिर्लक्ष्मण आकुलः सन् सर्वेषां रक्षसां निधनाय ब्रह्मास्त्रम् आह्वातुमैच्छत् ह्वो वे र्जिः घोऽज्भनिङ्क्षमां तं सौमित्रिं रामो निवारितवान् विभीषणनाशभयात् स्तम्भु : सौत्रः स्तादिः गीक इत्यादिना षत्वम् ॥ १९ ॥ म०

तत इत्यादि । ततोऽनन्तरम् इन्द्रजित् वियद्गतः आकाशगतः सीतां मायामयीं मायानिर्मितां खड्गेन घ्नन् व्यापादयन्नदृश्यत दृष्टः कर्मणि लङ् तथाभूतं राक्षसं मरुत्सुतो हनूमान् वाक्यमवदत् भाषितवान् ॥ २० ॥ ज० म०

तत इत्यादि । तदनन्तरमाकाशगतो मायानिर्मितां सीतां खड्गेन मारयन्निन्द्रजिद्दृष्टो हनूमतेत्यर्थात् कर्मणि लङ् तं तथाभूतं मरुत्सुतो हनूमान् वाक्यमवदत् ॥ २० ॥ म०

मापराध्नोदित्यादि । हे पाप ! राक्षस ! सीता पत्युरन्तिकादभ्रंशत् अपगता इयं भवतो नापराध्नोत् नापराद्धा राधसाधसंसिद्धा-

पीड़ाकरममित्राणां कर्त्तव्यमिति शक्रजित्।
अब्रवीत् खड्गकृष्टश्च तस्या मूर्द्धानमच्छिनत्॥ २२॥
यत्कृतेऽरीन् व्यग्रहीष्म समुद्रमतराम च।
सा हतेति वदन् राममुपातिष्ठन्मरुत्सुतः॥ २३॥

विति स्यादौ तस्मादेनां दुःखितां मास्म निग्रहीः मा वधीः स्मोत्तरे लङ् चेति वर्त्तमाने लङ्॥ २१॥ ज० म०

मापराश्नीदित्यादि। हे पाप! राक्षस! इयं सीता पत्युरन्तिकात् अभ्रश्यत् अपगता न किञ्चिदपराधं चकार राश्नौयसिद्धौ भ्रंशु शिश्युं अधःपाते तस्मादेनां दुःखितां मास्म निग्रहीः मा वधीः मास्मेन योगौ॥ २१॥ भ०

पीड़ाकरमित्यादि। इयमपराद्धा भवतु न वा सर्वथा यदमित्राणां पीड़ाकरं तदवश्यं कर्त्तव्यमिति शक्रजिदब्रवीत् उक्तवान् खड्गकृष्टश्च कृष्टः खड्गो येन प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः तस्या मूर्द्धानमच्छिनत् छिन्नवान् तियोऽहलन्त्यादिलोपः दकारस्य चर्त्वम्॥ २२॥ ज० म०

पीड़ाकरमित्यादि। अमित्राणां पीड़ाकरं कर्म अवश्यं कर्त्तव्यमित्यनपराधाया अप्यस्या बधो युक्त इत्यर्थः इति इन्द्रजिदब्रवीत् ब्रुवन्नुक्तौ पित्रस्याम ब्रुव इतीम् सुकृष्टः खड्गो येन तादृशः सन् तस्या मूर्द्धानं छिन्नवान् प्रहरणस्योभयथेति परनिपातः स्मतेऽभिधानं नियामकम्॥ २२॥ भ०

यत्कृत इत्यादि। यस्याः कृते यन्निमित्तं परान् अशोकवनिकास्थितान् व्यग्रहीष्म विग्रहीतवन्तः नित्यङित इति सडि उत्तमस्य लोपः समुद्रं चातराम तीर्णवन्तः अतो दीर्घोयञीति दीर्घः सा सीता हतेति वदन्मरुत्सुतः राममुपातिष्ठत् ढौकितवान् अत्र यमुना गङ्गामुपतिष्ठत इत्येवं सङ्गतकरणम् उपश्लेषो नास्तीति उपाद्देवपूजेत्यादिना तङ् न भवति॥ २३॥ ज० म०

यत्कृत इत्यादि। यस्याः सीतायाः कृते निमित्तं वयं परान्

ततः प्रामुह्यतां वीरौ राघवावारुतां तथा ।
उष्णञ्च प्राणितां दीर्घमुच्चैर्व्याक्रोशतां तथा ॥ २४ ॥
तावभाषत पौलस्त्यो मास्म प्ररुदितं युवाम् ।
ध्रुवं मोहयित्वास्मान् पापोऽगच्छन्निकुम्भिलाम् ॥ २५ ॥

निगृहीतवन्तः समुद्रमुत्तीर्णवन्तश्च सा सीता हता इति वदन् मरुत्सुतो रामम् उपस्थितवान् सैनाध्वसङ्खाराघे इत्यत्र सङ्ग उपश्लेषः स बास्तीति न समः ॥ २३ ॥ भ०

तत इत्यादि । ततो हनूमद्वचनानन्तरं राघवौ वीरौ प्रामुह्यतां मोहं गतौ तथारुतां क्रन्दितवन्तौ रुधव्दे ततो वृद्धिर्न भवति ततापि सार्वधातुक इत्यनुवर्त्तते तथा दीर्घमुष्णञ्च प्राणितां निःश्वसितवन्तौ अन प्राणने रुदादिभ्यः सार्वधातुक इतीट् तथा उच्चैराक्रोशतां हा सीतेति आहूतवन्तौ ॥ २४ ॥ ज० म०

तत इत्यादि । हनूमतो वचनानन्तरं वीरौ रामलक्ष्मणौ मोहं जग्मतुः मुह्यल्लजि वैचित्ते तथा अरुतां क्रन्दितवन्तौ रुधध्वनौ दीर्घमुष्णञ्च प्राणितां निःश्वसितवन्तौ अनश्लु प्राणने रुद्भ्यो योऽहृस्यसेम् मागवतो षः उच्चैर्व्याक्रोशतां हा सीतेत्याहूतवन्तौ क्रुशजौ वादे इतौ ॥ २४ ॥ भ०

ताविव्यादि । पौलस्त्यो विभीषण आमन्त्य तौ तथाभूतावभाषत् उक्तवान् युवां मास्म प्ररुदितं मा रोदिष्टं स्मोत्तरे लङ् चेति लङ् यतो ध्रुवमसंवध्यं स इन्द्रजित्पापः अस्मान् मोहयित्वा मायया विमोह्य सुहेरकर्मकत्वाद्गतिबुद्धीत्यादिना कर्मसंज्ञा निकुम्भिलामग्निगृहमगच्छत् गतवान् तत भूतानद्यतन एव लङ् ॥ २५ ॥ ज० म०

ताविव्यादि । पौलस्त्यो विभीषणस्तौ राघवावुक्तवान् युवां रोदनं न कुरुतं स पाप इन्द्रजित् निश्चितम् अस्मान् मोहयित्वा निकुम्भिलां यज्ञस्थानविशेषं गतवान् मुहेरकर्मकत्वात्प्रयोज्यस्य कर्मत्वम् ॥ २५ ॥ भ०

माऽस्म तिष्ठत तत्रस्थो बध्योऽसावहुतानलः ।
अस्त्रे ब्रह्मशिरस्युग्रे स्यन्दने चानुपार्जिते ॥ २६ ॥
ब्रह्मादधाद्वधं तस्य तस्मिन् कर्मण्यसंस्थिते ।
प्रायच्छदाज्ञां सौमित्रेर्यूथपानाञ्च राघवः ॥ २७ ॥
तां प्रत्यैच्छन् सुसंप्रीतास्ततस्ते सविभीषणाः ।

माऽस्मेत्यादि । माऽस्म तिष्ठत मा विलम्बध्वं गच्छत स्मोत्तरे लङ् यतस्तत्रस्थो निकुम्भिलास्थोऽसावहुतानलः अकृताग्निकार्य्यो बध्यः शक्यो हन्तुं शकि लिङ् चेति चकारात् लङ्कृताश्चेति वचनात् लङ् कृत्याश्चेति वचनात् हनो वधश्चेति उपसंख्यानाद्यत् । कथमहुतानलो बध्य इति चेत् अस्त्रे ब्रह्मशिरसि ब्रह्मशिरोनाम्नि उग्रे दुष्प्रयोगे स्यन्दने च अनुपार्जितेऽप्राप्ते सति ॥ २६ ॥ ज० म०

माऽस्मेत्यादि । यूयं मा तिष्ठत न विलम्बध्वं यतस्तत्रस्थोऽसौ इन्द्रजित् अहुतानलोऽकृतयज्ञ एव बध्यः । कथमित्याह ब्रह्मशिरो-नाम्नि उग्रे दुःसहे अस्त्रे स्यन्दने रथे च अनुपार्जिते अप्राप्ते सति तदुभयप्राप्तेरबध्यः स्यादिति भावः ॥ २६ ॥ म०

कथमुभयं तेनोपार्ज्यत इत्याह ।

ब्रह्मेत्यादि । यतस्तस्यां निकुम्भिलायां कर्मण्यसंस्थिते असमाप्ते ब्रह्मा बधं तस्मादधात् धारितवान् उक्तवानित्यर्थः लौट्टिर्वचनम् एवं विभीषणवचः श्रुत्वा राघवः सौमित्रेर्यूथपानाञ्च गन्तुमाज्ञां प्रायच्छत् दत्तवान् दानदाने पाघ्रादिना यच्छादेशः ॥ २७ ॥ ज० म०

ब्रह्मेत्यादि । तस्यान्निकुम्भिलायां तस्मिन् होमकर्मणि असंस्थिते असमाप्ते सति तस्य मेघनादस्य बधं ब्रह्मा आहितवानुक्तवानित्यर्थः सुधाञ्जिधारणे पुष्टौ ह्लादीरेडिः इति विभीषणवचः श्रुत्वा इन्द्रजिद्-बधार्थं रामो लक्ष्मणस्य कपियूथपानाञ्च सुग्रीवादीनाञ्चाज्ञां दत्तवान् सम्बन्धे षष्ठी दानदाने स्यादानञ्चेति यच्छादेशः दानोनुहोत्यादिनिरा-सार्थं नानुबन्धस्य पूर्वाचार्य्यकृतत्वात् स्मृते तथा गृहीतम् ॥२७॥ म०

तामित्यादि । ततस्ते सविभीषणाः सुसंप्रीतास्तामाज्ञां प्रत्यैच्छन्

निकुम्भिलां समभ्यायन्नरुध्यन्त च राक्षसैः ॥ २८ ॥
दिक्पालैः कदनं तत्र सेने प्राकुरुतां महत् ।
एतां रक्षांसि निर्जित्य दूरं पौलस्त्यलक्ष्मणौ ॥ २९ ॥
तत्रेन्द्रजितमैक्षेतां कृतधिष्ण्यं समाहितम् ।
सोऽजुहोत् कृष्णवर्त्मानमासनन्मन्त्रमुत्तमम् ॥ ३० ॥

प्रतीष्टवन्तः प्रतिग्रहीतवन्तः इषु इच्छायाम् इषुगमियमां छः । ते च निकुम्भिलां समभ्यायन् समभिगताः अयगतौ । तत्र च ये दिक्पालाः राक्षसाः तैररुध्यन्त रुद्धाः प्रवेष्टुं पन्थानं न लब्धवन्तः कर्मणि लङ् ॥ २८ ॥ ज० म०

तामित्यादि । ततोऽनन्तरं विभीषणसहितास्ते लक्ष्मणादयः प्रसन्नीताः सन्तः तामाज्ञां प्रत्यैच्छन् जगृहुः इषुगमयमां छे स्यादानयेति इच्छादेशः । ततस्ते निकुम्भिलां समाजग्मुः । ते च राक्षसैर्दिक्पालैश्च निरुद्धाः निकुम्भिलाप्रवेशे निवारिताः कर्मणि रूपम् ॥ २८ ॥ भ०

दिक्पालैरित्यादि । तत्र निकुम्भिलोद्देशे उभे अपि सेने महत् कदनं विनाशनं युद्धं वा प्राकुरुतां कृतवन्तौ तानि रक्षांसि निर्जित्य पौलस्त्यलक्ष्मणौ दूरं तमैतां गतवन्तौ इणगतौ अणि द्विः॥२९॥ज०म०

दिक्पालैरित्यादि । दिक्पालैरिति पूर्वश्लोकेनान्वयः तत्र निकुम्भिलायां द्वे सैन्ये महत् कदनं चक्रतुः कदनं युद्धमाहव इति कोषः । तानि रक्षांसि निर्जित्य विभीषणलक्ष्मणौ दूरं तमैतां जग्मतुः इणो भूयोऽस् ॥ २९ ॥ भ०

तत्रेत्यादि । निकुम्भिलायां तावैक्षेतां दृष्टवन्तौ इन्द्रजितं कृतधिष्ण्यं कृताग्न्यगारं समाहितम् एकाग्रमानसं स इन्द्रजित् कृष्णवर्त्मानमजुहोत् हुतवान् मन्त्रमुत्तममासनन् आवर्त्तयन् म्ना आवर्त्तने कर्तरि पाघ्रादिना मनादेशः ॥ ३० ॥ ज० म०

तत्रेत्यादि । निकुम्भिलायां कृतधिष्ण्यं कृताग्निस्थं कृतासनं वा समाहितमेकाग्रचित्तम् इन्द्रजितं तावैक्षेतां दृष्टवन्तौ ईक्षङ् दर्शने च

अध्यायच्छक्रजिद्ब्रह्म समाधेरचलन्न च ।
तमाह्वयत सौमित्रिरवर्जञ्च भयङ्करम् ॥ २१ ॥
अकुप्यदिन्द्रजित्तत्र पितृव्यञ्चागदद्वचः ।
त्वमत्राजायथा देहमिहापुष्यः सुरामिषैः ॥ २२ ॥

इन्द्रजित् कृष्णवर्त्मानमग्निं हुतवान् उत्तमं मन्त्रं जपन् न्याय्यादिस्यादानेति मनादेशः । धिष्ण्यं स्थाने गृहे भेऽग्नावित्यमरः ॥२०॥ भ०

अध्यायदित्यादि । शक्रजिदिन्द्रजित्परं ब्रह्माध्यायत् चिन्तितवान् ध्यै चिन्तायाम् आत्वं शिति न भवति न च समाधेश्चित्तवृत्तिनिरोधादचलत् चलितवान् तं तथाभूतमिन्द्रजितं सौमित्रिर्युद्धायाह्वयत आहूतवान् भयङ्करं चागर्जत् शब्दितवान् ॥ २१ ॥ ज० म०

अध्यायदित्यादि । इन्द्रजित् ब्रह्म वेदमात्मानं वा अध्यायत् ध्यैङ् चिन्तने समाधेश्चित्तनिरोधान्न चलितः तं तथाभूतमिन्द्रजितं लक्ष्मणो युद्धायाहूतवान् भयङ्करं गर्जनं कृतवांश्च ॥ २१ ॥ भ०

अकुप्यदित्यादि । तत्र तस्मिन्नाह्वाने कृतवति गर्जिते च सति अकुप्यत् क्रुद्धः कुपक्रोधे दैवादिकः पितृव्यञ्च पितृभ्रातरं विभीषणं पितृशब्दाद्भ्रातरि व्यन्निपातितं वचो वक्ष्यमाणमगदत् उक्तवान् अत्रास्मिन् राक्षसकुले त्वमजायथाः जातोऽसि जनी प्रादुर्भावे दैवादिकोऽनुदात्तेत् इह च देहः सुरामिषैरपुष्यद् वृद्धिं गतः पुषिर्दैवादिकः देहमपुष्य इति पाठान्तरं तत्र देहं पोषितवानसि अन्तर्भावितण्यर्थो द्रष्टव्यः ॥ २२ ॥ ज० म०

अकुप्यदित्यादि । तत्र निकुम्भिलायां लक्ष्मणे गर्जिते सति इन्द्रजित् अकुप्यत् कुप्य इकोपे पितुर्भ्रातरं विभीषणं वाचा जगदे च पितुर्भ्राता पितृव्यो निपातनात् अत्र राक्षसकुले त्वं जातः जनीप्यङ् जनने स्यादानपेति जादेशः इह त्वं सुराभिरामिषैश्च सुरामिषैर्वा देहं वर्द्धितवानसि त्वपुष्यौ वृद्धौ चकारात् पुष्णौ सकर्मकोऽयं पुष्यतिकाभिक्षामित्यादिप्रयोगात् जयमङ्गलायामकर्मकत्वं भ्रान्त्योक्तम् ॥२२॥ भ०

इहाजीव इहैव त्वं क्रूरमारभथाः कथम्।
नापश्यः पाणिमार्द्रं त्वं बन्धुत्वं नाप्यपैक्षथाः॥ ३३॥
अधर्मान्नात्रसः पाप ! लोकवादान्न चाबिभेः।
धर्मदूषण ! नूनं त्वं नाजाना नाशृणोरिदम्॥ ३४॥

इहेत्यादि। इहाजीवः जीवितोऽसि कथमिहैव त्वं क्रूरं कर्म आरभथाः आरब्धवानसि आर्द्रं पाणिञ्च नापश्यस्त्वं न दृष्टवानसि यावता कालेन भुक्ता पाणिः शुष्यति तावन्तमपि कालं नापेक्षितवानसीत्यर्थः। आस्तां तावदेतत् बन्धुत्वमपि एकगोत्रत्वमपि नापैक्षथाः॥ ३३॥ ज० म०

इहाजीवेत्यादि। यस्मिन् वंशे त्वं जीवितोऽसि जीवस्य जीष्टमाये तत् कथमिहैव त्वं क्रूरं कर्म आरब्धवानसि रभोऽङ्ख्यात्तु राभस्ये कथमार्द्रं पाणिं न दृष्टवानसि भोजनानन्तरं यावन्न शुष्कः तावदेव हतवानसीति लोकोक्तिस्थापनायेदमुक्तं तव स्नेहात् क्लार्द्रं हिंसाशून्यं पाणिं कुतो न दृष्टवानसीत्यन्ये। आस्तां तावदन्यत् बन्धुत्वमेकगोत्रत्वमपि कुतो नापेक्षितवानसि॥ ३३॥ भ०

अधर्मादित्यादि। हे पाप ! अधर्मादपि नात्रसः न त्रस्तोऽसि त्रसी उद्वेगे दिवादौ वाभ्राशेत्यादिना पक्षे शप् लोकवादात् जनापवादात् न चाबिभेः न भीतोऽसि श्लौ द्विर्वचनं धातोर्गुणः भीत्रार्थानामित्यपादानसंज्ञा, हे धर्मदूषण ! धर्मस्य दूषण ! धर्मोच्छेदक ! अतिविपरीते स्थितत्वात् दुषवैकृत्ये दोषो णावित्युपधाया ऊत्वम् दूषयतीति दूषणः कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् नतु नन्द्यादिपाठे ल्युः तत्र हि न दिवाभिसदिदूषिसाधिपचिशोभिरोचिभ्यो ण्यन्तेभ्यः पूजायामित्युक्तं न चात्र पूजा गम्यत इति नूनम् अवश्यं त्वं नाजानाः स्वयमिदं न ज्ञातवानसि ज्ञा अवबोधने क्रियादावुदात्तेत् ज्ञाजनोर्जा इदमन्यतोऽपि नाशृणोः द्विषद्भ्यो न श्रुतवानसि श्रुवः श्नुच्॥ ३४॥ ज० म०

अधर्मादित्यादि। हे पाप ! अधर्मादपि न त्रस्तोऽसि त्रस त्रसी-

निराकृत्य यथा बन्धून् लघुत्वं यात्यसंशयम् ।
पितृव्येण ततो वाक्यमभ्यधीयत शक्रजित् ॥ २५ ॥
मिथ्या मास्म व्यतिक्रामो मच्छीलं मा न बुध्यथाः ।
सत्यं समभवं वंशे पापानां रक्षसामहम् ॥ २६ ॥

स्वभये क्रमुक्लमभ्रमेत्यादिना श्यनः पाक्षिकत्वात् शप् लोकापवादादपि न भीतोऽसि जिभीविभीत्यां हे धर्मदूषण ! धर्मच्छेदक ! कुलोच्छेदकत्वात् नूनं निश्चितं त्वमिदं वक्ष्यमाणं न ज्ञातवान् न श्रुतवानसि ॥ २४ ॥ भ०

किन्त्वित्यादि ।

निराकृत्येत्यादि । यथा बन्धून् निराकृत्य परित्यज्य लघुतां यात्यसंशयमसन्देहं ततः पुत्त्रोक्तेरनन्तरं पितृव्येण विभीषणेन शक्रजिद्वाक्यमभ्यधीयत अभिहितः कर्मणि लङ् घुमेतीत्वम् ॥२५॥ ज०म०

निराकृत्येत्यादि । यथा बन्धून् निराकृत्य परित्यज्य असंशयं निश्चितं लघुत्वं लोको याति गच्छति इदं नाजाना इति पूर्वेणान्वयः लोकप्रकरणे यातीति लोप्रवेशो लोविषयेऽपि भूतसामान्ये क्वचित् लो स्यादिति सूचनाय वस्तुतस्तु प्रतिज्ञातस्यैकस्य सिद्धार्थमसार्पणं न दोषावहं ततस्तद्वचनानन्तरं पितृव्येण विभीषणेन शक्रजित् वक्ष्यमाणवाक्यमुक्तम् अभिपूर्वधाङ् कर्मणि यक् दामागेहागिति ङीः ॥२५॥ भ०

मिथ्येत्यादि । मिथ्या मृषा मास्म व्यतिक्रामः मा परिभूः शिति क्रमित्यादिना दीर्घः शीलं स्वभावः मा न बुध्यथाः मा न बुद्धास्त्वम् अपितु ज्ञातवानसि स्मोत्तरे लङ् वा पापानां रक्षसां वंशेऽहं सत्यं समभवं सम्भूत इति ॥ २६ ॥ ज० म०

मिथ्येत्यादि । मिथ्या व्यतिक्रामः न कुरु क्रमः पेऽपिर्घः मम शीलं स्वभावं न बुद्धवानसि न किञ्चित् ज्ञातवानस्येव बुध्यीङ् वेदने पापानां रक्षसां वंशे सत्यमहं सम्भूतोऽस्मि किन्तु तादृक् न शीलमिति वक्ष्यमाणेनान्वयः ॥ २६ ॥ भ०

न त्वजायत मे शीलं तादृग्यादृक् पितुस्तव ।
क्षयावहेषु दोषेषु वार्य्यमाणो मयारमत् ॥ २७ ॥
दशग्रीवोऽहमेतस्मादत्यजं न तु विद्विषन् ।
परस्वान्यार्जयन्नारीरन्यदीयाः परामृशत् ॥ २८ ॥

न त्वित्यादि । यद्यप्यहं राक्षसकुले जातस्तथापि तव पितुर्यादृक् शीलं स्वभावस्तादृक् मे न त्वजायत नैवाभूत् यतोऽसौ क्षयमावहन्तीति क्षयावहाः पचाद्यच् तेषु दोषेषु परस्त्रीहरणादिषु मया वार्य्यमाणोऽपि दशग्रीव इति सम्बन्धः अरमत् रतिं कृतवान् व्याङ्परिभ्यो रम इति परस्मैपदम् ॥ २७ ॥ ज० म०

न त्वजायतेत्यादि । यादृशं तव पितुः शीलं जातं न मम तादृशं शीलं जातं स्यादानेति जनी जा स हि क्षयावहेषु दोषेषु परस्त्रीहरणादिषु मया वार्य्यमाणोऽपि रतिं कृतवान् रमङ्नौ क्रीड़े व्याङ्पूर्वः वे मं परेत्यादिना पं क्षयं नाशमावहन्ति कुर्वन्तीति पचादित्वादच् ॥ २७ ॥ म०

दशग्रीव इत्यादि । एतस्मात् कारणादहं रावणमत्यजं त्यक्तवानस्मि पुनर्विद्विषन् अमित्रीभवन् द्विषोऽमित्र इति शतृप्रत्ययः । तान् दोषानाह परस्वानि परवित्तानि आर्जयत् अन्यैर्ग्राहितवान् अर्जषर्जन इति भ्वादौ अर्जप्रतियत्न इति चौरादिकस्य वा रूपम् अन्यदीयाः नारीश्च परामृशत् स्पृष्टवान् मृश आमर्षन इति तुदादावनुदात्ते कृ ॥ २८ ॥ ज० म०

दशग्रीव इत्यादि । तस्मात् कारणादहं दशग्रीवं त्यक्तवान् नतु शत्रुर्भवन् परमते द्विषः शतौ शतृ स्मृते न विभीषणेन विद्वेषं वैरं कुर्वन्नित्यर्थः शतु वाचित्वे वृद्धिः । तान् दोषानाह परधनानि आर्जयत् आनीय संस्कृतवान् हृतवानित्यर्थः अर्जक् संस्कारे किंवा अर्जं अर्जने जिः प्रेरणे अन्यदीया नारीः परामृशत् अपहृतवान् मृश, शोऽन्यपि अन्येषामिमा इति यिकारसङ्क्त्यादिना ईयः दकारागमो निपातनात् किंवा अन्येषां प्रतिवस्तुरादीनां दा ग्रुद्धियांस्यस्त

व्यजिघृक्षत् सुरान्नित्यं प्रामाद्यन्गुणिनां हिते ।
आशङ्कत सुहृद्बन्धूनबद्धान् बह्वमन्यत ॥ ३९ ॥
दोषैरेरमतैभिस्ते पिताऽत्यज्यत येर्मया ।
ततोऽरुध्यदनर्दञ्च द्विविंशतिभिरेव च ॥ ४० ॥
शरैरताडयद्बन्धुं पञ्चविंशतिभिर्नृपम् ।

अन्यदाः साध्वीरित्यर्थः । दैपशोधने क्विप् ततः स्वार्थे ईयः ॥३८॥ भ०

व्यजिघृक्षदित्यादि । सुरान् नित्यं व्यजिघृक्षत् विग्रहीतुमैच्छत् गुणिनां माल्यवत्प्रभृतीनां यदुक्तं हितं तस्मिन् विषये प्रामाद्यत् प्रमादं गतः मदी हर्षे शमामष्टानामिति दीर्घः सुहृदो बन्धूंश्च सुहृद्बन्धून् आशङ्कत विकल्पितवान् अदृष्टवान् अविदुषः प्रहस्तादीन् बह्वमन्यत श्लाघितवान् ॥ ३९ ॥ ज० म०

व्यजिघृक्षदित्यादि । नित्यं देवान् विग्रहीतुं योधयितुम् इष्टवान् ग्रहेः सन् ग्रहस्वपप्रच्छांजिः नेत्गुहपहः पुनर्निमि होढः अभान्तस्येति षः षढोः कः गुणिनां मातामहादीनां सम्बन्धे हिते सल्लोकानां हिते वा प्रामाद्यत् अनयहितोऽभवत्, प्रमादोऽनवधानतेति कोषः । मदीभिर्यजि हर्षे शमादित्वाद्दीर्घः सुहृदो बन्धून् ज्ञातींश्च शङ्कितवान् शकिङ्ताससशङ्कयोः अदृष्टान् अपरिक्षितान् प्रहस्तादीन् बहु व्यमन्यत वह श्लाघितवान् ॥ ३९ ॥ भ०

दोषैरित्यादि । एभिर्दोषैस्तव पिता रावणः अरमत क्रीडितवान् यैर्दोषैर्मया अत्यज्यत कर्मणि लङ् । ततः पितुर्दोषप्रकाशनवचनादनन्तरं रावणेरिति वक्ष्यमाणेन सम्बन्धः अरुध्यत् रुष्टः रुष रुष्टौ अनर्दञ्च स्फूर्जितवांश्च ॥ ४० ॥ ज० म०

दोषैरित्यादि । एभिर्दोषैस्तव पिता रावणो रमतेस्म यैर्दोषैर्मया त्यक्तः कर्मणि लृपम् । ततः पितृदोषश्रवणात् रावणिरिति वक्ष्यमाणेन सम्बन्धः अरुष्यत् रुष्येर्ङिङ्क्रुधि अनर्दत् शब्दं चकार द्विविंशतिभिरिति उत्तरश्लोकेनान्वयः ॥ ४० ॥ भ०

शरैरित्यादि । बन्धुं विभीषणं द्विविंशतिभिरताड़यत् चत्वारिंश-

रावणिस्तस्य सौमित्रिरमथ्नाच्चतुरो हयान् ॥ ४१ ॥
सारथिञ्चालुनाद्बाणैरभनक् स्यन्दनन्तथा ।
सौमित्रिमकिरद्बाणैः परितो रावणिस्ततः ॥ ४२ ॥
तावस्फावयतां शक्तीर्बाणांश्चाकिरतां मुहुः ।
वारुणं लक्ष्मणोऽक्षिप्यद्क्षिपद्रौद्रमिन्द्रजित् ॥ ४३ ॥

तेत्यर्थः द्वे विंशती येषां शराणामिति बहुव्रीहिः एवञ्च द्व्यष्टनः संख्यायामित्यात्वं न तथा पञ्चविंशतिभिः शरैर्न्द्र यं लक्ष्मणम् अता-ड़यत् शतेनेत्यर्थः द्वौ च विंशतिश्च पञ्चविंशतिश्चेत्यस्मिन् व्याख्याने द्वाविंशत्या पञ्चविंशत्येति च प्राप्नोति सौमित्रिस्तु तस्य रावणेश्चतु-र्हयान् बाणैरमथ्नात् मथ विलोड़न इति क्रियादौ ॥ ४१ ॥ ज० म०

शरैरित्यादि । बन्धुं विभीषणं द्विविंशतिभिः शरैः रावणिरता-ड़यत् न्टपं लक्ष्मणं पञ्चविंशतिभिः शरैरताड़यत् द्वे विंशती संख्या येषामिति बहुव्रीहिः सौमित्रिस्तस्येन्द्रजितोऽश्वान् बाणैर्हिंसितवान् मन्थगताड़े ॥ ४१ ॥ भ०

सारथिमित्यादि । तस्य रावणेः सारथिं चालुनात् छिन्नवान् प्वादीनां ह्रस्वः तथा स्यन्दनमभनक् भग्नवान् भञ्जो मर्दन इति रुधादिः । ततोऽनन्तरं रावणिः सौमित्रिं परितः समन्तात् बाणैर-किरत् छादितवान् ॥ ४२ ॥ ज० म०

सारथिञ्चेत्यादि । लक्ष्मणो रावणिं सारथिञ्च बाणैश्छिन्नवान् लूञ्गिच्छिदि धादेः ल्वोने इति ह्रस्वः तथा स्यन्दनं रथं भग्नवान् भञ्जोऽधौमोटने नशोनलोप्यः श्नसदङ्ग्रां दिग्रेरिति दिलोपः चङिति कङ् । ततोऽनन्तरं रावणिः सौमित्रिं परितः समन्तात् बाणैराच्छा-दितवान् कृषविच्छेपे च्छदिरणाविति इट् ॥ ४२ ॥ भ०

तावित्यादि । ताविन्द्रजिल्लक्ष्मणौ शक्तिं सामर्थ्यमस्फावयतां वर्द्धितवन्तौ स्फायोवः बाणांश्च मुहुरकिरतां विक्षिप्तवन्तौ वारुणमस्त्रं लक्ष्मणोऽक्षिप्यत् दैवादिकस्य रूपम् । इन्द्रजिद्रौद्रं पाशुपतमक्षिपव क्षिप्तवान् तौदादिकस्य रूपम् ॥ ४३ ॥ ज० म०

ते परस्परमासाद्य शस्त्रे नाशमगच्छताम्।
आसुरं राक्षसः शस्त्रं ततो घोरं व्यसर्जयत्॥ ४४॥
तस्मान्निरपतद् भूरि शिलाशूलर्ष्टिमुद्गरम्।
माहेश्वरेण सौमित्रिस्तस्तम्भास्त्रात् सुदुर्जयम्॥ ४५॥
ततो रौद्रसमायुक्तं माहेन्द्रं लक्ष्मणोऽस्मरत्।
तेनागम्यत घोरेण शिरश्चाछिद्यत द्विषः॥ ४६॥

तावस्फावयतामित्यादि। तौ इन्द्रजिल्लक्ष्मणौ शक्तिं स्वसामर्थ्यं वर्द्धितवन्तौ शक्तीरिति पाठे शस्त्रविशेषानित्यर्थः स्फायीङ् वृद्धौ णिः पातिस्फायोरिति वङ् मुहुर्वारंवारं बाणानकिरतां क्षिप्तवन्तौ लक्ष्मणो वरुणदेवताकमस्त्रं प्रेरितवान् इन्द्रजिद् रुद्रदैवतमस्त्रं प्रेरितवान् क्षिपशत्रौ क्षिपो तुदि॥ ४३॥ भ०

ते परस्परमित्यादि। ते शस्त्रे परस्परमासाद्य प्राप्य नाशमगच्छतां गते। ततस्तन्नाशादनन्तरं राक्षसो रावणिः आसुरम् असुरदैवतं शस्त्रं घोरं भीषणं व्यसर्जयत् क्षिप्तवान्॥ ४४॥ ज० म०

ते परस्परमित्यादि। ते इन्द्रजिल्लक्ष्मणसम्बन्धिनी शस्त्रे परस्परं प्राप्य नाशं जग्मतुः। तदनन्तरं राक्षस इन्द्रजित् घोरम् असुरसम्बन्धि शस्त्रं विसर्जितवान्॥ ४४॥ भ०

तस्मादित्यादि। तस्मादासुरादस्त्रात् शिलाशूलेष्टिमुद्गरं निरपतत् ऋष्टिः प्रहरणविशेषः तच्चासुरं सुदुर्जयं सौमित्रिः माहेश्वरेण अस्त्रात् स्तम्भितवान् स्तन्भित्यादिना श्ना चकारात् श्नश्च॥४५॥ ज०म०

तस्मादित्यादि। तस्मादासुरास्त्रात् भूरि प्रचुरं शिलादिकं निरपतत् निर्गतम् ऋष्टिः खड्गः प्रसारोऽसिर्धर्मपालः प्रजाकर इति वैजयन्ती। सौमित्रिस्तत् सुदुर्जयमासुरास्त्रं महेश्वरदैवतेन शस्त्रेण स्तम्भितवान् स्तन्भुस्तुन्भुस्कन्भुस्कुन्भ स्तु रोधने॥ ४५॥ भ०

तत इत्यादि। ततोऽनन्तरं रौद्रसमायुक्तं रौद्रास्त्रेण सहितं माहेन्द्रमस्त्रं लक्ष्मणोऽस्मरत् चिन्तितवान् तेन स्मरणादेवागम्यत भावे लङ् घोरेण तस्य द्विषः शत्रोः शिरश्चाछिद्यत छिन्नं कर्मणि लङ्॥४६॥ज०म०

अतुष्यन्नमरा सर्वे प्राहृष्यन् कपियूथपाः ।
पर्य्यष्वजत सौमित्रिं मूर्ध्न्यजिघ्रच्च राघवः ॥ ४७ ॥
अरोदीद्राक्षसानीकमरोदन्नृभुजां पतिः ।
मैथिल्यै चाशपज्जन्तुं तां प्राक्रमत चातुरः ॥ ४८ ॥

तत इत्यादि । तदनन्तरं रुद्रदैवतेनास्त्रेण संयुक्तं महेन्द्रदैवतमस्त्रं लक्ष्मणः सस्मार तेनास्त्रेण स्मरणात् आगतं भावे यक् घोरेण द्विष इन्द्रजितः शिरो हृतं छिन्नमित्यर्थः कर्मणि यक् ॥ ४६ ॥ भ०

अतुष्यन्नित्यादि । तस्मिन् हृते अमरा देवाः अतुष्यन् तुष्टाः कपियूथपाः प्राहृष्यन् प्रहृष्टाः राघवश्च सौमित्रिं पर्य्यष्वजत आश्लिष्टवान् दन्शसन्जेत्यनुनासिकलोपः प्राक् सितादड्व्यवायेऽपीति वचनात् परिनिविभ्य इत्यादिना षत्वं मूर्ध्नि जिघ्रच्च आघ्रातवान् ॥४७॥ ज० म०

अतुष्यन्नित्यादि । तस्मिन् हृते सति सर्वे देवास्तुष्टाः तुष्लयौङिच चकारात् तुष्टौ कपियूथपाः सुग्रीवादयः सर्वे हृष्टाः हृष्यन्तितुष्टौ रामः सौमित्रिम् आलिङ्गितवान् ष्वन्जौ सङ्गे सन्जदन्शस्वन्जोऽपि नलोपः गोक इत्यादिना षत्वं मूर्ध्नि तमाघ्रातवांश्च घ्रा गन्धग्रहणे स्वादानेत्यादिना जिघ्रः ॥ ४७ ॥ भ०

अरोदीदित्यादि । राक्षसानीकं राक्षसरैन्यमरोदीत् रुदितं रुदश्च पञ्चभ्य इतीट् नृभुजां पतिः रावणः अरोदत् रुदितः अड्गार्ग्य गालवयोरित्यडागमः मैथिल्यै चाशपत् आक्रुष्टवान् सर्वदोषस्य मूलमिति श्लाघह्नुङित्यादिना कर्मणि सम्प्रदानसंज्ञा तां च हन्तुम् आतुरो मन्युग्रस्तः प्राक्रमत प्रारब्धवान् प्रोपाभ्यामिति तङ् ॥ ४८ ॥ ज० म०

अरोदीदित्यादि । राक्षसरैन्यम् अरोदीत् रुविरुदरोदे रुदाद्यस्ति सेरिति दिप ईम् रक्षसां पती रावणश्च अरोदत् दिखोरस्वेति दिपः पक्षेऽम् सीतायै चाशपत् आक्रुष्टवान् शपौञ् क्रोशे यस्मै दित्सेत्यादिना सम्प्रदानत्वं क्रोधेनातुरः सन् तां हन्तुं प्रारब्धवान् प्रोपाभ्यामारम्भ इति सम् ॥ ४८ ॥ भ०

अयुक्तमिदमित्यन्ये तमाप्ताः प्रत्यवारयन् ।
व्यरुन्धंश्चास्य पन्थानं बन्धुता शुचमारुणत् ॥ ४९ ॥
आस्फायतास्य वीरत्वममर्षश्चाप्यतायत ।
रावणस्य ततः सैन्यं समस्तमयुयुत्सयत् ॥ ५० ॥
अग्नीनवरिवस्यंश्च तेऽनमस्यंश्च शङ्करम् ।
द्विजानप्रीणयन् शान्त्यै यातुधाना भवद्विषः ॥ ५१ ॥

अयुक्तमित्यादि । अन्ये आप्ताः राक्षसाः अयुक्तमेतदिति मन्यमानाः तं तथाविधं प्रत्यवारयन् आवार्य्य स्थिताः वृञ् वरण इति चुरादिः व्यरुन्धंश्च हस्तपादादिग्रहणेन रुद्धवन्तः बन्धुता बन्धुसमूहः अस्य शोकमारुणत् अपनीतवती रुधङ्गादित्वाल्लोपः धकारस्य जश्त्वम् ॥ ४९ ॥ ज० म०

अयुक्तमित्यादि । अन्ये आप्ता एतद्विधा राक्षसा अयुक्तमेतत् स्त्रीहननमित्युक्त्वा तं निवारितवन्तः शनैः पादादिग्रहणैश्च रुद्धवन्तः बन्धुता बन्धुसमूहश्चास्य शोकमारुणत् अपनीतवान् ॥ ४९ ॥ भ०

आस्फायतेत्यादि । अथ निरुद्धशोकस्य रावणस्य वीरत्वं शौर्य्यम् आस्फायत वृद्धिं गतम् अमर्षश्च क्रोधः अतायत विस्तारं गतः । ततः स रावणः समस्तं सैन्यम् अयुयुत्सयत् युयुत्समानं प्रयोजितवान् ॥ ५० ॥ ज० म०

आस्फायतेत्यादि । अथ शोकापनयनानन्तरं रावणस्य वीरत्वं शौर्य्यं वर्द्धते स्म स्फायीङ् वृद्धौ अमर्षः क्रोधश्च विस्तीर्णः तायृङ् पालनसन्तत्योः । तदनन्तरं स रावणः समस्तं सैन्यं योद्धुमिच्छां कारयतिस्म युधेः सन्नन्तात् णिः ॥ ५० ॥ भ०

अग्नीनित्यादि । ते यातुधानाः भवद्विषः जगद्द्रुमानभीतयः अग्नीनवरिवस्यन् परिचारितवन्तः नमोवरिव चित्रङः क्यजिति वरिवसः परिचर्य्यायामिति क्यच् तदन्ताल्लङ् शङ्करञ्च महादेवमनमस्यन् पूजितवन्तः अत नमसः पूजायां क्यच् द्विजांश्च शान्त्यै शान्त्यर्थमप्रीणयन् प्रीणितवन्तः धूञ्प्रीञोर्नुग्वक्तव्यः ॥ ५१ ॥ ज० म०

परितः पर्य्यवाद्वायुराज्यगन्धिर्मनोरमः ।
अश्रूयत सपुण्याहः स्वस्तिघोषः समुच्चरन् ॥ ५२ ॥
योद्धारोऽबिभरुः शान्त्यै साक्षतं वारि मूर्द्धभिः ।
रत्नानि चाददुर्गाश्च समवाञ्छन्नथाशिषः ॥ ५३ ॥
अदिहंश्चन्दनैः शुभ्रैर्विचित्रं समवस्तयन् ।

अग्नीनित्यादि । भवन्ती उत्पद्यमाना भीर्भयं येषां ते राक्षसा अग्नीन् सेवितवन्तः नमस्तपोवरिव इति क्यः शङ्करं प्रयेतुः पूर्ववत् क्यः शान्त्यै कल्याणाय द्विजान् प्रीणितवन्तः प्रीधूञोर्नग्वा ॥५१॥ भ०

परित इत्यादि । अग्निसन्तर्पणादाज्यगन्धिः आज्यस्य गन्धो यस्मिन्वायौ स वायुर्मनोरमः परितः सर्वः वेश्मसु पर्य्यवात् वातिश्च स्वस्तिघोषश्च सपुण्याहः पुण्याहशब्देन सह समुच्चरन्नश्रूयत श्रूयतेश्च कर्मणि लङ् ॥ ५२ ॥ ज० म०

परित इत्यादि । परितः सर्वतः आज्यस्य घृतस्य गन्धो यस्मिन् स मनोहरो वायुः प्रकृष्टं वातिश्च गन्धशब्दात् स्वार्थे ष्णिः आगन्तोर्वेति समासान्त इति परः गन्ध इति क्वचित्पाठः पुण्याहसहितः स्वस्तिघोषः समुच्चरन् जनैः श्रूयतेश्च ॥ ५२ ॥ भ०

योद्धार इत्यादि । योद्धारः शान्त्यै शान्त्यर्थं साक्षतम् अक्षततण्डुलैर्युक्तं सलाजञ्च वारि जलं मूर्द्धभिरबिभरुः दधतिश्च सिजभ्यस्तेति टर्जुस् ल्टञ्भिदितीत्वं रत्नानि गाश्चाददुः दत्तवन्तः आशिषश्चैभ्यः समावाञ्छन् काङ्क्षितवन्तः वाञ्छ इच्छायाम् ॥ ५२ ॥ ज० म०

योद्धार इत्यादि । योद्धारः शान्त्यर्थं मूर्द्धभिर्लाक्षितं तण्डुलादिसहितं वारि दधतिश्च टुडुभृञ्धारणपोषणयोः ह्वादीरेद्विः ष्टभ्वादेर्द्विर्भेरे अनुसर्त्तिवदेः गुरुस्यां रत्नानि गाश्च द्विजेभ्योऽददुः उश्चेचीत्यालोपः अपि आशीर्वादांश्च तेभ्यो वाञ्छितवन्तः स्तजोऽकङिति त्रिरिति पक्षे त्रिः गजादीन् समारूढाः अथ त्वरान्विताः प्रस्थिताः ॥५३॥ भ०

अदिहन्नित्यादि । शुभ्रैः शुक्लवर्णैश्चन्दनैः अदिहन् गात्राणि लिप्तवन्तः दिह उपचये विचित्रं शोभनं समवस्तयन् आच्छादितवन्तः

अधारयन् स्रजः कान्ता वर्म चान्येऽदधुर्द्रुतम् ॥५४॥
समश्नुवत शस्त्राणि प्रामृजन् खड्गसंहतीः ।
गजादीनि समारोहन् प्रातिष्ठन्ताथ सत्वराः ॥५५॥
अपूरयन्नभः शब्दो बलसंवर्त्तसम्भवः ।
अपूर्य्यन्त च दिग्भागास्तुमुलैस्तूर्य्यनिस्वनैः ॥ ५६ ॥

चुरादिनिम्भेत्यादिना वस्त्रात्समाच्छादने णिच् कान्ताः शुभ्राः स्रजः अधारयन् धारितवन्तः धृञ् धारणे अयमन्तस्य प्रयोग एव नास्ति। अन्ये च वर्माणि कवचानि द्रुतमदधुः धारितवन्तः ॥५४॥ ज० म०

अदिहन्नित्यादि। शुक्लैश्चन्दनैर्गात्राणि लिप्तवन्तः दिहन्नौ लिपि विचित्रं वस्त्रं परिहितवन्तः विचित्रं शोभनं समाच्छादयन्तित्यर्थो वा वस्त्रात् समाच्छादने परिधाने वा ञिः कल्यादेरिति ञिः। कान्ताः शोभनाः स्रजो धारितवन्तः धृञ्च चकारात् धृत्याम्। अन्ये कवचं धृतवन्तः ॥ ५४ ॥ भ०

समश्नुवतेत्यादि। शस्त्राणि समश्नुवत श्णु तेजने समः श्णुप इति तङ् खड्गसंहतीः प्रामृजन् शोधितवन्तः मृजेरजादौ विभाषा वृद्धिः गजादीनि यानानि समारोहन् आरूढ़ाः। गजादिष्विति पाठान्तरं तत्राधिकरणत्वं विवक्षितम्। अथानन्तरमारूढ़ाः सत्वराः प्रातिष्ठन्त प्रस्थिताः समवप्रविभ्य स्थ इति तङ् ॥ ५५ ॥ ज० म०

समश्नुवतेत्यादि। योधाः शस्त्राणि निशितानि चक्रुः श्णुव तेजने संश्णोरिति मं खड्गसमूहान् शोधितवन्तः मृजोऽकङिञ्चिरिति पक्षे ञिः गजादीन् समारूढाः। अथ त्वरान्विताः प्रस्थिताः ॥ ५५ ॥ भ०

अपूरयदित्यादि। बलानां संवर्त्तः एकीभावः तस्मात् सम्भवो यस्य स शब्दः नभ आकाशमपूरयत् पूरितवान् तस्तुलैस्तूर्य्यनिस्वनैः महद्भिर्घोषैर्दिग्भागा अपूर्य्यन्त पूर्णाः कर्मणि लङ् ॥ ५६ ॥ ज० म०

अपूरयदित्यादि। शब्दो नभः पूरितवान् पूरकृच चकारात् पूर्त्तौ कीदृशः बालानां संवर्त्तः एकीभावस्तस्मात् सम्भवो यस्य सम्भवदि

आसीद्द्वारेषु सङ्घट्टो रथाश्वद्विपरक्षसाम् ।
सुमहाननिमित्तैश्च समभूयत भीषणैः ॥ ५७ ॥
कपयोऽबिभयुस्तस्मिन्नभञ्जंश्च महाद्रुमान् ।
प्रोदखायन् गिरींस्तूर्णमगृह्णंश्च महाशिलाः ॥ ५८ ॥
ततः समभवद्युद्धं प्राहरन् कपिराक्षसाः ।
अन्योन्येनाभ्यभूयन्त विमर्दमसहन्त च ॥ ५९ ॥

यस्मादिति व्युत्पत्त्या स एव सम्भवो यस्येति वा तूर्याणां वतुलैः संकुलैः शब्दैर्दिग्भागाः पूरिताः कर्मणि रूपम् ॥ ५६ ॥ भ०

आसीदित्यादि । रथादीनां निर्गच्छतां लङ्काद्वारेषु सङ्घट्टः सुमहानासीत् जनभूयस्तया सङ्घर्षोऽभूत् अस्तिसिचोऽपृक्त इतीट् अनिमित्तैः सुभीषणैर्भयङ्करैर्संहद्भिः समभूयत भयकरैर्निमित्तैर्भूतं भावे लङ् ॥ ५७ ॥ ज० म०

आसीद्द्वारेष्वित्यादि । लङ्काद्वारेषु रथादीनां निर्गच्छतां सुमहान् सङ्घट्ट आसीत् रुदाद्यस्तीति ईट् भीषणैर्भयानकैरनिमित्तैरनाकुलैः सम्भूतं भावे यक् ॥ ५७ ॥ भ०

कपय इत्यादि । तस्मिन्निर्गते कपयोऽबिभयुः भीतवन्तः महाद्रुमांश्च योद्धुमभञ्जन् भग्नवन्तः गिरीन् प्रोदखायन् उत्खातवन्तः खे खनने शिति आत्वं न भवति महाशिला अगृह्णन् गृहीतवन्तः ॥ ५८ ॥ ज० म०

कपय इत्यादि । तस्मिन् रावणे निर्गते सति वानरा भीताः ञिभी भिभीत्याम् अनुस्मिद्वैः गुरुस्वध्यां महाद्रुमान् योद्धुं भग्नवन्तः तुङ्गान् पर्वतान् उत्खातवन्तः खैतृथ्यैँ खननहिंसयोः महाशिलाः गृहीतवन्तः ॥ ५८ ॥ भ०

तत इत्यादि । ततोऽनन्तरं युद्धं समभवत् प्रवृत्तं कपिराक्षसाः प्राहरन् प्रहृतवन्तः अन्योन्येनाभ्यभूयन्त कपयो राक्षसैः राक्षसाश्च कपिभिरिति कर्मणि लङ् विमर्दमसहन्त च सोढवन्तः ॥ ५९ ॥ ज० म०

प्रावर्त्तत रजो भौमं तद् व्याश्नुत दिशो दश ।
परात्मीयविवेकश्च प्रामुष्णात् कपिरक्षसाम् ॥ ६० ॥
ततोऽद्विषुर्निरालोके स्वेभ्योऽन्येभ्यश्च राक्षसाः ।
अद्विषन् वानराश्चैवं वानरेभ्योऽपि निर्दयाः ॥ ६१ ॥
क्षुभुरंस्ते महाघोरमस्रोतश्च शोणितम् ।
समपद्यत रक्तेन समन्तात् तेन कर्दमः ॥ ६२ ॥

तत इत्यादि । तदनन्तरं युद्धं विस्तृतं कपयो राक्षसाश्च प्रहारं चक्रुः अन्योन्यम् अभ्यभूयन्त कपयो राक्षसैस्ते च कपिभिरभिभूताः कर्माणि वक् ते विमर्दं सोढवन्तः ॥ ५९ ॥ भ०

प्रावर्त्तत इत्यादि । बलद्वयप्रक्षोभात् भौमं रजः प्रावर्त्तत प्रवृत्तं तद्रजो दश दिशो व्याश्नुत व्याप्नोत् अयं परोऽयं चात्मीय इति यो विवेकस्तञ्च प्रामुष्णात् अपनीतवत् मुषस्तेये क्र्यादिः ॥ ६० ॥ ज० म०

प्रावर्त्तत इत्यादि । भूमिसम्बन्धि रजः प्रवृत्तं सैन्यक्षोभात् तद्रजो दश दिशो व्याश्नुवत् अशूङ्व्याप्तिसंहत्योः अयं परः अयमात्मीय इति यः कपिरक्षसां विवेकस्तञ्च प्रामुष्णात् अपनिनाय मुषश-मुषन्लुटने ॥ ६० ॥ भ०

तत इत्यादि । ततोऽनन्तरं निरालोके समरे राक्षसाः स्वेभ्योऽन्येभ्यश्चाद्विषुः क्रुध्यन्तिस्म वानरा अपि वानरेभ्योऽद्विषन् निर्दयाः सन्तः अपिशब्दात् राक्षसेभ्योऽपि द्विषस्वेत्यनेन शाकटायनमते झेर्जुस् अन्येषामद्विषन् क्रुधद्रुहेत्यादिना सम्प्रदानसंज्ञा ॥ ६१ ॥ ज० म०

तत इत्यादि । रजोबाहुल्यात् निरालोके रणे राक्षसाः स्वेभ्यो राक्षसेभ्यो अन्येभ्यो वानरेभ्यश्च द्वेषं चक्रुः वानरा वानरेभ्योऽपिशब्दात् राक्षसेभ्यश्च द्वेषं चक्रुः लद्विषोऽजवैरे द्विषविदातोऽनुस्वा यश्चैटित्से त्यादिना चतुर्थी ॥ ६१ ॥ भ०

क्षुभुरचित्यादि । अथानन्तरं ते हताः क्षुभुरन् घोरं रौद्रं शब्दितवन्तः घुरभीमार्थशब्दयोः शोणितं चास्रवोतत् चरतिस्म तेन च

गम्भीराः प्रावहन्नद्यः समजायन्त च ह्रदाः ।
प्रशश्च तद्रजोऽशाम्यत् समवेदन्त च द्विषः ॥ ६२ ॥
ततोऽचिचीयताश्चौघैर्धनुश्चाधूनयन्महत् ।
रामः समीहितं तस्य नाचेतन् स्वे न चापरे ॥ ६४ ॥

रक्तस्तु तेन समन्तात् सर्वतः कर्दमः समपद्यत सम्पन्नः कर्मणि लङ् ॥ ६२ ॥ ज० म०

अशुरन्नित्यादि । ते हताः कपिराक्षसा महाघोरं शब्दं चक्रुः स्फुरध्वनौ भीमार्थे अनन्तरं शोणितम् अस्रोतत् क्षरति स्म तेन रक्तेन समन्तात् कर्दमः सम्पन्नः यौपदकृतौ ॥ ६२ ॥ भ०

गम्भीरा इत्यादि । तेन रक्तेन वर्द्धिष्णुना गम्भीरा अगाधाः नद्यः प्रावहन् प्रवृत्ताः ह्रदास्तड़ागाः समजायन्त सञ्जाताः तच्च रजः प्रवृद्धमशाम्यत् शान्तम् उद्गमाभावात् उत्पन्नस्य च पतनात् रजःशमनात् द्विषश्च समवेद्यन्त संवेद्यन्ते स्म विदवेदनाख्यानिवासनेष्विति चौरादिकः कर्मणि लङ् ॥ ६२ ॥ ज० म०

गम्भीरा इत्यादि । तेन रक्तेन गम्भीरा नद्यः प्रवहन्ति स्म गम्भीरा ह्रदाश्च सञ्जाताः ततः प्रवृद्धं तत्र रजः शान्तमभवत् ततश्च द्विषः शत्रवो ज्ञाता विदकञ्चेताख्यानिवासे कर्मणि यक् ॥ ६२ ॥ भ०

तत इत्यादि । ततोऽनन्तरं रामः शस्त्रौघैरचितीयत आश्चर्यीभूतः नमोऽवरिव इति चितङ् आश्चर्ये ङित्त्वात्तङ् धनुश्च महदधूनयत् विधूनितवान् धूञ्प्रीञोर्नुग्वक्तव्यः तस्य रामस्य समीहितमभिप्रेतं स्वे आत्मीयाः वानराः न च अपरे परकीया नाचेतन् न ज्ञातवन्तः ॥ ६४ ॥ ज० म०

तत इत्यादि । तदनन्तरम् अस्त्रसमूहैरास्चर्य्यरूपैर्जातं चितीच आश्चर्ये कण्ड्वादिः रामस्य महद्धनुराधूनितवान् धूनगिधुञच चकारात् कम्पे प्रीधूञोर्णनुवा तस्य रामस्य समीहितम् अभिप्रेतं स्वे वानरा अपरे राक्षसाश्च न ज्ञातवन्तः शीघ्रकारित्वात् चितो ज्ञाने ॥ ६४ ॥ भ०

छिन्नानैचन्त भिन्नांश्च समन्ताद्रामसायकैः ।
क्रुष्टं हाहेति चाशृखन् न च रामं न्यरूपयन् ॥ ६५ ॥
अभिनच्छत्रुसंघातानक्षुणद्वाजिकुञ्जरम् ।
अपिनट् च रथानीकं न चाज्ञायत सञ्चरन् ॥ ६६ ॥
दश दन्तिसहस्राणि रथिनाञ्च महात्मनाम् ।
चतुर्दशसहस्राणि सारोहाणाञ्च वाजिनाम् ॥ ६७ ॥

छिन्नानित्यादि । रामसायकैश्छिन्नान् भिन्नांश्च समन्तादैचन्त हाहेति च क्रुष्टं शब्दमन्योन्यस्य चाशृखन् न च नैव रामं न्यरूपयन् राम इति च न निश्चितवन्तः रूपव्याक्रियायामिति चौरादिकः ॥ ६५ ॥ ज० म०

छिन्नानित्यादि । संग्रामस्थाः कांश्चित् रामस्य सायकैर्बाणैश्छिन्नान् खण्डितान् कांश्चिद्भिन्नान् विदारितान् ऐचन्त ऐक्षन्त समन्तात् सर्वतः हाहेति क्रुष्टं शब्दं श्रुतवन्तः अत्र रामोऽस्ति न वेति नैवेति निश्चितवन्तः शीघ्रभ्रमणात् रूपत्कतत्कतौ ॥ ६५ ॥ भ०

अभिनदित्यादि । शत्रुसङ्घातानभिनत् भिन्नवान् वाजिकुञ्जरमक्षुणत् सम्पिष्टवान् क्षुदि सम्पेषणे रथानीकं रथसमूहमपिनट् पिष्टवान् पिष्लृ संचूर्णने सर्वे रौधादिकाः न च सञ्चरन् रामः अज्ञायत न ज्ञातः स्वैः परैर्वेत्यर्थात् कर्मणि लङ् ॥ ६६ ॥ ज० म०

अभिनदित्यादि । रामः शत्रुसमूहान् बिभेद जघौ भिदिर्भिदि वाजिनः कुञ्जरांश्च चूर्णितवान् जघौर्क्षुदिर्क्षुदि रथस्यानीकं समूहञ्च पिष्टवान् शौपिष्लृचूर्णने सञ्चरन् रामः परैर्न ज्ञातः ॥ ६६ ॥ भ०

दशेत्यादि । अनेन श्लोकद्वयेन राघवेण धनुर्भृता दिवसस्याष्टमे भागे अर्द्धप्रहरे दन्तिनां दशसहस्राणि रथिनाञ्च महात्मनां चतुर्दशसहस्राणि सारोहाणाञ्च वाजिनां तावन्त्येव पदातीनां द्वे लक्षे परिचयं विनाशमनीयन्त नीताः कर्मणि लङ् अनीयतेति पाठान्तरं तत्र सर्वमेतदनीयतेति योज्यम् ॥ ६७ ॥ ६८ ॥ ज० म०

लक्षे च द्वे पदातीनां राघवेण धनुर्भृता ।
अनीयन्ताष्टमे भागे दिवसस्य परिक्षयम् ॥ ६८ ॥
यमलोकमिवाग्रन्थीद्रुद्राक्रीडमिवाकरोत् ।
शैलैरिवाचिनोद्भूमिं दृप्तैर्यो राक्षसैर्हतैः ॥ ६९ ॥
अस्तुवन् देवगन्धर्वा व्यस्मयन्त प्लवङ्गमाः ।
कपीन्द्रेऽतन्यत प्रीतिः पौलस्त्योऽमन्यताद्भुतम् ॥७०॥

दशेत्यादि । अपिमश्लोकेनान्वयः धनुर्भृता रामेण दिवसस्याष्टमे भागे प्रहरार्द्धमध्ये दन्तिनां दशसहस्राणि महात्मनां रथिनाञ्च चतुर्दशसहस्राणि सारोहाणां वाजिनाञ्च चतुर्दशसहस्राणि पदातीनां लक्षद्वयञ्च परिक्षयं विनाशं नीतानि अनीयतेति पाठे सर्वमेतत्तु परिक्षयं नीतं भावे वा प्रत्ययः कर्मोपादानेऽपि भावे इति परवचनात् समतेऽपि कर्मोपादाने भावप्रत्ययस्य न निषेधः ॥ ६७ ॥ ६८ ॥ भ०

यमेत्यादि । स राघवः तैः राक्षसैः दृप्तैः यमलोकमिवाग्रन्थात् सन्दर्भितवान् ग्रन्थग्रन्थसन्दर्भे इति क्र्यादिः रुद्राक्रीडमिव रुद्रस्य क्रीड़ास्थानं श्मशानमिवाकरोत् भूमिं शैलैरिवाचिनोत् छादितवान् ॥ ६९ ॥ ज० म०

यमलोकमित्यादि । दृप्तैर्हतै राक्षसै रामो यमलोकमिव सन्दर्भितवान् चकारेत्यर्थः ग्रन्थिकिदर्भे रुद्रस्याक्रोड़ं क्रोड़ास्थानं श्मशानमिव अकरोत् अतनोदिति क्वचित्पाठः भूमिं शैलैरिव अचिनोत् आच्छादितवान् रक्षसां दृप्तत्वात् चिनचिञ्चचित्याम् ॥ ६९ ॥ भ०

अस्तुवन्नित्यादि । तमद्भुतकर्मकारिणं देवा अस्तुवन् स्तुवन्तिस्म प्लवङ्गमाः कपयः व्यस्मयन्त विस्मिताः ङित्वात्तङ् कपीन्द्रे सुग्रीवे प्रीतिरतन्यत तन्यतेस्म कर्मकर्त्तरि यङ् पौलस्त्यो विभीषणः आश्चर्यं ज्ञातवान् ॥ ७० ॥ ज० म०

अस्तुवन्नित्यादि । देवा गन्धर्वाश्च अर्थात् तमस्तुवन् स्तुवन्तिस्म कपयो विस्मयं प्राप्ताः सुग्रीवे प्रीतिर्विस्तृता विभीषणश्चाश्चर्य्यं ज्ञातवानित्यर्थः ॥ ७० ॥ भ०

राक्षस्यः प्रारुदन्नुच्चैः प्राजुगुप्सन्त रावणम् ।
अमुह्यद्बालवृद्धञ्च समरौदितरो जनः ॥ ७१ ॥
सर्वतश्चाभयं प्राप्नोन्नैच्छन्नृभ्यस्तु रावणः ।
फलं तस्येदमभ्यायाद्दुरुक्तस्येति चाब्रुवन् ॥ ७२ ॥
ततोऽधावन्महाघोरं रथमास्थाय रावणः ।

राक्षस्य इत्यादि । राक्षस्यो भर्त्रादिवधदुःखिता उच्चैः प्रारुदन् रुदितवत्यः रुदादिभ्य इतीण् न भवति अचबादित्वात् रावणं प्राजुगुप्सन्त निन्दितवत्यः एतद्दुर्णयात् सर्वमिति बाला वृद्धाश्च तद्वयम् अमुह्यत् भयान्मोहं गतम् इतरो जनः राक्षसीबालवृद्धेभ्योऽन्यः समरौत् आक्रुष्टवान् नुशब्दे उतो वृद्धिर्लुकि ॥ ७१ ॥ ज० म०

राक्षस्य इत्यादि । पत्यादिवधात् राक्षस्यो रोदनञ्चक्रुः उच्चै रावणं निन्दन्तिस्म गुपेः कित्तिजगुप इति निन्दायां सन् इम्निषेधश्च । बालवृद्धं कर्त्त भयात् अमुह्यत् मोहं प्राप बालाश्च वृद्धाश्चेति समाहारः । इतरो राक्षसीबालवृद्धेभ्योऽन्यो जनः संरावं चकार रुशब्दनौ संपूर्वः रपिद्धस्तुतोऽद्वेर्म्रिः ॥ ७१ ॥ भ०

सर्वत इत्यादि । सर्वतो देवादिभ्यः अभयं रावणः प्राप्नोत् प्राप्तवान् यतो ब्रह्माणि वरं दातुमुद्यते देवादीनामवध्यो भूयासमित्युक्तवान् नृभ्यस्तु सकाशादभयं नैच्छन्नेष्टवान् के मम मानुषा इति तस्य दुरुक्तस्य फलमभ्यायात् उपागतम् इत्येवमपरे अब्रुवन् उक्तवन्तः ॥७२॥ ज०म०

सर्वतश्चेत्यादि । रावणः सर्वेभ्यो देवगन्धर्वादिभ्योऽभयं प्राप्तवान् ब्रह्मसेवयेत्यर्थात् नृभ्यो मनुष्येभ्यस्त्वभयमसौ नेष्टवान् ब्रह्माणं न मार्थितवान् तेषां भक्ष्यत्वात् तस्य दुरुक्तस्य दुष्टभषितस्य वरप्रार्थनाकाले मनुष्यावज्ञासूचकस्य फलमिदम् अभ्यायात् उपगतमित्येवं केचिदुक्तवन्तः पूर्वश्लोकात् समरौदित्यस्य विभक्तिव्यत्ययेनानुषङ्गः ॥ ७२ ॥ भ०

तत इत्यादि । ततोऽनन्तरं महाघोरं रथमास्थायारुह्य रावणः योद्धुं वेगेन गतवान् तस्य च धावतो मही अच्छायत कम्पिता च्छायी

अध्मायत मही गृध्रास्तमारार्य्यन्त भीषणाः ॥ ७३ ॥
मेघाः सविद्युतोऽवर्षंश्चेलक्नोपञ्च शोणितम् ।
अवान् भीमा नभस्वन्तः प्राववन्नशिवाः शिवाः ॥७४॥

विधूनने ध्मात्र भीषणाः समरार्य्यन्त अत्यर्थं गतवन्तः सूचिसूत्रि-मूत्रिभ्यो यङ् सुर्णोतीनां ग्रहणं यङ्धावनेकाजहलाद्यर्थमित्युप-संख्यानात् अर्त्तेर्यङ् गुणोर्त्तिसंयोगाद्योरित्यधिकृत्य यङि चेति गुणः ७३ ॥ ज० म०

तत इत्यादि । तदनन्तरं महाघोरं रथमारुह्य रावणोऽधावत् वेगेन योद्धुं गतः धावुङ्जवे हलि परे तु सर्त्तेर्धावो वेगेशितोति सूत्रं कृत्वा सृगतावित्यस्य रूपं वदन्ति तत्, व्यर्थं फलतो विशेषाभा-वात् दुर्निमित्तान्याह भूमिरचलतिस्म ध्मायीङ्विधूनने भीषणा गृध्रा-स्तमत्यर्थं कुटिलञ्च गताः ऋप्रापणे च चकारात् गत्यर्थाद्दिति यङ् मूत्रसूत्रेत्यादिना वा पृथग्ग्रहणात् स्याद्यर्त्तृतोणुर्यङिति गुणः स्याद्दौ नवद्रोऽये इति यसंयोगविषये द्वित्वस्य निषेधाभावः घोऽनित इति खेर्दीर्घः ॥ ७३ ॥ भ०

मेघा इत्यादि । सविद्युतो मेघाश्चेलक्नोपं शोणितं रक्तम् अव-र्षन् वर्षितवन्तः यावता रक्तेन चेलं वासः क्नोपयते सिच्यते तावत्प्र-माणं दृष्टवन्तः क्नुयीशब्द इत्यस्य णयन्तस्य अर्त्तिह्रीत्यादिना पुकि यलोपः चेले क्नोपेरिति णमुल् । भीमाः नभस्वन्तः वायवः अवान् वान्तिस्म बहुः शाकटायनस्यैवेति नियमादन्यमतेन तु सु न भवति । शिवाः सृगाल्यः अशुभाः अनिष्टशंसिन्यः प्रारुवन् शब्दितवत्यः ॥ ७४ ॥ ज० म०

मेघा इत्यादि । सविद्युतो मेघाश्चेलक्नोपं वस्त्रक्लेदनप्रमाणं शोणितं वर्षन्तिस्म यावता रुधिरेण वस्त्रं सिच्यते तावत्प्रमाणमि-त्यर्थः क्नुयीङ् दुर्गन्धि स्यार्द्रत्वे शब्दे दीर्घकारवानयं क्नुयीस्फायति ते विदेवयदृमे सेविशासवित्तयेति च जेः स्वः ह्रीव्लीरीक्नुयीति पण् गुणस्य हसाल्लोप इति यलोपः चेलं क्नोपयति क्लेदयतीति दाव् पण्

अटाट्यतावमत्यासौ दुर्निमित्तानि संयुगे ।
अधुनोद्धनुरस्त्रौघैः प्रोर्णोनूयत विद्विषः ॥ ७५ ॥
व्यनाशयंस्ततः शत्रून् सुग्रीवास्ता महीभृतः ।
ततो व्यरसदग्लायदध्यशेत महीतलम् ॥ ७६ ॥

वर्षणक्रियाविशेषणम् एतद्विशेषणादेतन्मानं गम्यते अन्यथा एतद्विशेषणस्य वैयर्थ्यं स्यात् परे तु वस्त्रार्थाद्दृष्टिमाने क्नोपयतेः त्काचमित्याहुः स्वमतेऽपि चत्यस्य वेत्यस्य योगविभागात्तत चत्वम् स्यादेव तदा चैवं क्नोपयन्नित्यर्थः। भीमा वायवो वान्ति स्म द्विषविदात इत्यस्य पाक्षिकत्वान्नात ङम्। शिवाः शृगालाः अशुभसूचकं रवं चक्रुः ॥ ७४ ॥ भ०

अटाट्यतेत्यादि। असौ रावणः दुर्निमित्तान्यवमत्य युद्धार्थमटाट्यत अत्यर्थमाटत् सूचिसूत्रीत्यादिना यङ् संयुगे युद्धे धनुरधुनोत् कम्पितवान् अस्त्रौघैर्विद्विषः शत्रून् प्रोर्णोनूयत भृशं छादितवान् ऊर्णुञ् आच्छादने ऊर्णोतेर्णुवद्भावात् सूचिसूत्रीत्यादिना वा यङ् अजादेर्द्वितीयस्येति द्विर्वचने नन्द्रा इति रेफो न द्विरुच्यते णुशब्दस्य द्विर्वचनं गुणो यङ्लुकोरिति गुणः अकृत्सार्वधातुकयोरिति दीर्घः ॥ ७५ ॥ ज० म०

अटाट्यतेत्यादि। एतानि दुर्निमित्तानि अवमत्य अवज्ञाय असौ रावणो भृशं कुटिलञ्च अगच्छत् अट गतौ सूचसूत्रेति यङ् गत्यर्थादित्यादिना च संयुगे युद्धे धनुरधुनोत् कम्पितवान् धूञ्कम्पे अस्त्रौघैर्द्विषः शत्रून् भृशं पुनः पुनर्वा आच्छादितवान् ऊर्णुञ्आच्छादने सूचसूत्रेति यङ् स्यादौ नवद्रौऽय इति निषेधात् रेफं विश्लिष्य नोर्यौ द्वित्वम् चय इत्यनेन यसंयोगादिस्थितस्य निषेधाभावः ॥ ७५ ॥ भ०

व्यनाशयन्नित्यादि। ततोऽनन्तरं सुग्रीवास्ताः सुग्रीवेण क्षिप्ता महीभृतः पर्वताः शत्रुसैन्यं व्यनाशयन् मारितवन्तः ततो मांसादां रक्षसां बलं सुग्रीवबाधितं पीडितमित्युत्तरश्लोकेन सम्बन्धः व्यरसत्

अस्रप्रोतद्रुधिरं तोयमलसच्चातिविह्वलम् ।
अघ्नीयत नृमांसादां बलं सुग्रीवबाधितम् ॥ ७७ ॥
विरूपाक्षस्ततोऽक्रीडत् संग्रामे मत्तहस्तिना ।
मुष्टिनादालयत्तस्य मूर्द्धानं वानराधिपः ॥ ७८ ॥
अचूर्णयच्च यूपाक्षं शिलया तदनन्तरम् ।

आक्रान्दितवत् अग्लायत् ग्लानिं गतं महीतलमध्यशेत महीतले पतितं शीङः सार्वधातुके गुणः ॥ ७६ ॥ ज० म०

व्यनाशयन्नित्यादि । तदनन्तरं सुग्रीवेणास्ताः क्षिप्ता महीभृतः पर्वताः शत्रून् नाशितवन्तः ततो न्टमांसादां रक्षसां बलं सुग्रीवेण बाधितं सत् व्यरसत् आक्रन्दं चकार इत्युरस्तोकेनान्वयः रसशब्दे ग्लैकान्तिसंक्षये भूतलमधिशेतेस्म निपतितमित्यर्थः शीङो रे गुः ॥ ७६ ॥ म०

अस्रप्रोतदित्यादि । रुधिरमस्रप्रोतत् अस्रवत् विह्वलञ्च सत् तोयमलसत् अभिलषितवत् वाभ्राशेत्यादिना विकल्पेन श्यप् अघ्नीयत च अवसन्नं शदेः शित इति तङ् पाघ्नेत्यादिना शीयादेशः मांसमदन्तीति अदोनन्न इति विट् ॥ ७७ ॥ ज० म०

अस्रप्रोतदित्यादि । रुधिरं रक्तमक्षरत् पानार्थं तोयं जलमति-विह्वलम् अतिकातरं यथा स्यात्तथा याचतेस्म अशीयत च अवसादं प्राप्तमित्यर्थः स्यादानेत्यादिना शीयादेशः अदोऽपि नमित्यादिना नम् ॥ ७७ ॥ म०

विरूपाक्ष इत्यादि । ततो विरूपाक्षो नाम राक्षसः मत्तहस्तिना संग्रामे अक्रीड़त् भ्रान्तवान् । तस्य मूर्द्धानं वानराधिपः सुग्रीवः मुष्टिना अदालयत् दलितवान् दल विदारणे चुरादिः ॥ ७८ ॥ ज० म०

विरूपाक्ष इत्यादि । ततो विरूपाक्षनामा राक्षसः सङ्गरे युद्धे मत्तहस्तिना क्रीड़ातिस्म । तस्य मूर्द्धानं सुग्रीवो मुष्टिना विदारितवान् दलमिभेदे ॥ ७८ ॥ म०

अचूर्णयदित्यादि । तदनन्तरं वानराधिपः यूपाक्षं नाम राक्षसं

संक्रुद्धो मुष्टिनातुभ्नादङ्गदोऽलं महोदरम् ॥ ७९ ॥
ततोऽकुष्णाद्दशग्रीवः क्रुद्धः प्राणान् वनौकसाम् ।
अगोपायच्च रक्षांसि द्विषश्चारीनभाजयत् ॥ ८० ॥
आलोकयत् स काकुत्स्थमघृष्णोद्धीरमध्वनत् ।
धनुरभ्रमयद्भीममभीषयत विद्विषः ॥ ८१ ॥

शिलया अचूर्णयत् चूर्णितवान् तत्करोतीति णिच् अङ्गदोऽपि संक्रुद्धः मुष्टिना महोदरम् अलं पर्य्याप्तमतुभ्नात् व्यापादितवान् नभतुभ हिंसायां क्रग्रादिः ॥ ७९ ॥ ज० म०

अचूर्णयच्चेत्यादि । विद्युपाक्षबधानन्तरं वानराधिपः शिलया यूपाक्षं राक्षसं चूर्णितवान् संक्रुद्धोऽङ्गदोऽपि मुष्टिना महोदरमत्यर्थम् अतुभ्नात् जघान तुभ्यगच चकारात् हिंसे ॥ ७९ ॥ भ०

तत इत्यादि । ततो दशग्रीवः क्रुद्धः वनौकसां वानराणां प्राणानकुष्णात् कुष्टवान् कुष निष्कर्षे रक्षांसि च राक्षसांश्चागोपायत् रक्षितवान् गुपूधूपेत्यादिना आयप्रत्ययः अरींश्च द्विषोऽभाजयत् प्रहितवान् ॥ ८० ॥ ज० म०

तत इत्यादि । अनन्तरं क्रुद्धो रावणो वानराणां प्राणानकुष्णात् देहेभ्यो बहिश्चकार कुषग निष्कर्षे रक्षांसि रक्षितवान् गुपू रक्षे कम-कृतो गुपूधूपेत्यायः अरींश्च द्विषः प्रापितवान् भजेर्णिः प्रेरणे ॥ ८० ॥ भ०

आलोकयदित्यादि । स दशग्रीवः काकुत्स्थमालोकयत् दृष्टवान् घोरदर्शनमघृष्णोत् धृष्टवान् जिधृषाप्रागल्भ्य इति स्वादिः ताननुचरन् घोरमध्वनत् ध्वनितवान् रामं मारयामीति भीमं धनुरभ्रमयत् भ्रमितवान् मितां ह्रस्वः मान्तत्वान्मित्त्वं ये विद्विषो न पलायिताः तानभीषयत त्रासितवान् भियो हेतुभये षुक् भात्मनेपदं हेतुभय इति तङ् ॥ ८१ ॥ ज० म०

आलोकयदित्यादि । स रावणः काकुत्स्थं दृष्टवान् लोकृ

आक्रन्दल्लक्ष्मणं बाणैरत्यक्रामच्च तं द्रुतम् ।
राममभ्यद्रवज्जिष्णुरस्कुनाच्चेषुवृष्टिभिः ॥ ८२ ॥
अपौहद्बाणवर्षं तद्भल्लै रामो निराकुलः ।
प्रत्यस्कुनोद्दशग्रीवं शरैराशीविषोपमैः ॥ ८३ ॥

दीप्तौ आङ्पूर्वो दर्शने तमालोक्य प्रगल्भ्यतेश्च जिष्टषा न प्रागल्भ्ये घोरमध्वनत् सिंहनादं चकार भीमं धनुर्भ्रामयामास घटादिजनी-त्यादिना अमन्तत्वात् ह्रस्वः तान् द्विषः शत्रून् त्रासितवान् भीभी-षेति भीषादेशो मत्त्वं ॥ ८१ ॥ भ०

आक्रन्दित्यादि जिष्णुर्जयशीलो दशग्रीवः लक्ष्मणं बाणैरा-क्रन्दत् बाधितवान् स्कन्दगतिशोषणयोः तञ्च लक्ष्मणं द्रुतमत्यक्रामत् तिष्ठत्याक्रान्तवान् शिति दीर्घः अतिक्रम्य च राममभ्यद्रवत् अभिमुखं गतवान् द्रु गतौ इषुवृष्टिभिरस्कुनात् छादितवान् स्कुञ् आवरणे स्तन्भुस्तुन्भ्वित्यादिना चकारात् नात् ॥ ८२ ॥ ज० म०

आस्कन्दित्यादि । जिष्णुर्जयशीलो रावणो बाणैर्लक्ष्मणम् आस्कन्दत् पीडितवान् स्कन्दिरौ शोषणे गत्यां तञ्च लक्ष्मणं द्रुत-मतिक्रान्तवान् क्रमः पेपिषः राममभिमुखेन ययौ द्रु स्रुतौ गतौ बाण-वृष्टिभिः तमाच्छादितवान् स्कुन्नञ आप्लुतौ ॥ ८२ ॥ भ०

अपौहदित्यादि । तद् बाणवर्षं रामो निराकुलः सन् भल्लैरपौ-हत् अपनीतवान् उपसर्गादस्यत्यूह्योर्वा वचनमिति पक्षे तिप् दशग्रीवं बाणैराशीविषोपमैः दुःसहत्वात्प्रत्यस्कुनोत् प्रतीपं छादितवान् व्यत्य-स्त प्रत्ययः ॥ ८३ ॥ ज० म०

अपौहदित्यादि । निराकुलो रामस्तां बाणवृष्टिं भल्लैर्बाण-विशेषैरपनीतवान् ऊहङ् तर्के गेर्वाऽस्योहो ढे चेति मस्य पाक्षिक-त्वादलं पं आशीविषोपमैर्दुःसहत्वात् सर्पतुल्यैर्बाणैर्दशग्रीवं प्रत्यस्कुनोत् आच्छादितवांश्च आशीः स्यादहिदंष्ट्रेऽपि तत्र विषमस्येति मनीषादिः आशीमिव कलामिन्दोरिति दर्शनात् ईकारान्तमपि प्रत्यन्तरम् ॥ ८३ ॥ भ०

मण्डलान्याटतां चित्रमच्छित्तां शस्त्रसंहतीः ।
जगद्विस्मापयेतां तौ न च वीरावसीदताम् ॥ ८४ ॥
व्योम प्राचिनुतां बाणैः क्ष्मामक्ष्मापयतां गतैः ।
अभित्तां तूर्णमन्योन्यं शिक्षाश्चातनुतां मुहुः ॥ ८५ ॥
समाधत्तासुरं शस्त्रं राक्षसः क्रूरविक्रमः ।
तदुच्चरन्महासर्पान् व्याघ्रसिंहांश्च भीषणान् ॥ ८६ ॥

मण्डलानीत्यादि । चित्रमाश्चर्यं मण्डलान्याटतां चक्रवद्भ्रान्तौ शस्त्रसंहतीः अच्छित्तां छिन्नवन्तौ जगत् विस्मापयेतां विस्मापितवन्तौ विस्मयतेरित्यात्वं न च तौ वीरौ असीदताम् अवसन्नौ पाघ्रेति सीदादेशः ॥ ८४ ॥ ज० म०

मण्डलानीत्यादि । तौ युध्यमानौ रामरावणौ मण्डलानि आटतां चक्रवद्भ्रान्तौ अट गतौ अन्योन्यम् अस्त्रसमूहान् छिन्नवन्तौ जगद्विस्मितं चक्रतुः स्मिङोर्णादिति आ मन्न ह्रीव्लीति पक् नच खिन्नौ यतो वीरौ स्थादानेति सदेः सीदः ॥ ८४ ॥ भ०

व्योमेत्यादि । बाणैर्व्योम प्राचिनुतां छादितवन्तौ क्ष्मां पृथिवीम् अक्ष्मापयतां कम्पितवन्तौ क्ष्मायी विधूनने अर्त्तिह्रीत्यादिना पुक् अन्योन्यमभित्तां विदारितवन्तौ झलोर्झलोपः चर्त्वेन च तकारः तूर्णं शिक्षा धनुषि कौशलानि मुहुरतनुतां विस्तारितवन्तौ ॥ ८५ ॥ ज०म०

व्योमेत्यादि । तौ बाणैर्व्योम आकाशं प्राचिनुतां छादितवन्तौ चिञ्चिञ् चित्वां प्राष्टणुतामिति पाठे पाठे ष्टुञ्गट्ञ ष्टतौ गतैर्गमनैः क्ष्मां कम्पितवन्तौ क्ष्मायीङ् विधूनने णिः ह्रीव्लीति पक् हलाल्लोप इति यलोपः तूर्णमन्योन्यं भिन्नवन्तौ जभौभिदिरुभिदि मनीषादित्वात् सवर्णात् सवर्णस्य सवर्णे वा लोप इति बोध्यं तेन एकतकारवानपि पाठः शिक्षाश्च धनुषि कौशलानि मुहुरातनुतां तनदुञ विस्तारे ॥ ८५ ॥ भ०

समाधत्तेत्यादि । राक्षसः आसुरं शस्त्रं समाधत्त सन्धवारो-

न्यषेधत् पावकास्त्रेण रामस्तद्राचसस्ततः ।
अदीव्यद्रौद्रमत्युग्रं सुषलाद्यगलत्ततः ॥ ८७ ॥
गान्धर्वेण न्यविध्यत्तत् चितीन्द्रोऽथ नराशनः ।
सर्वमर्मसु काकुत्स्थमीभत्तीक्ष्णैः शिलीमुखैः ॥ ८८ ॥

पितवान् स्नौ द्विर्वचनमभ्यासकार्यं आभ्यस्तयोरित्याकारलोपः दधस्त-योश्चेति भष्भावः झषस्तयोर्धोध इति प्रतिषेधात् तकारस्य धत्वं न भवति तत्संहितं सर्पादीन् प्राचरत् सृप्तवत् ॥ ८६ ॥ ज० म०

समाधत्तेत्यादि । क्रूरविग्रहो भीमविग्रहो राचसः धनुषि असुरदैवतं अस्त्रं समाधत्त आरोपितवान् डुधाञ्धारणे पुष्टौ दाने सम्पूर्वः तस्माने ह्लादेरेडिः आद्योराबोप इत्यालोपो धीदधो-ऽन्तलोप इति खेर्धत्वं तत् अस्त्रं संहितं भीषणान् सर्पादीन् चरतिस्म ॥ ८६ ॥ भ०

न्यषेधदित्यादि । तदासुरं अस्त्रं रामः पावकास्त्रेण न्यषेधत् निषिद्धवान् । ततो राचसो रौद्रमस्त्रमत्युग्रमदीव्यत् चिप्तवान् अत्यादिविर्गतौ वर्त्तते ततो रौद्रात् चिप्तात् सुषलादि प्रहरणमगलत् निर्गतवत् गल अदने अनेकार्थत्वाद्धातूनां गलिरत्र निर्गमे वर्त्तते ॥ ८७ ॥ ज० म०

न्यषेधदित्यादि । रामस्तदासुरास्त्रं पावकास्त्रेण विनिवारित-वान् षिधुगत्यां निपूर्वो निवारणे णीक इति षत्वं ततो राचसो रुद्र-दैवतमत्युग्रमदीव्यत् तेन जिगीषाञ्चकार दिवो षेवेति करणे द्वी दिव्यु जिगीषेच्छापणिद्युतौ क्रीड़ागत्योः गताविह दिविरिति जय-मङ्गला व्यंनच् तयीति दीर्घः ततो रौद्रास्त्रात् सुषलादि प्रहरणं गलितम् ॥ ८७ ॥ भ०

गान्धर्वेणेत्यादि । चितीन्द्रो रामः तद्रौद्रमस्त्रं गान्धर्वेणास्त्रेण न्यविध्यत् ताड़ितवान् । अथ नराशनो राचसः शिलीमुखैर्बाणैः सर्व-मर्मसु काकुत्स्थमौभ्भत् पूरितवान् उम्भ पूरणे तुदादौ ॥८८॥ ज०म०

गान्धर्वेणेत्यादि । चितीन्द्रो रामो गन्धर्वदैवतेनास्त्रेण तत्

ततस्त्रिशिरसं तस्य प्राच्छिनल्लक्ष्मणो ध्वजम्।
अमथ्नात् सारथिञ्चाशु भूरिभिश्चातुदच्छरैः॥ ८९॥
अश्वान् विभीषणोऽतुभ्नात्स्यन्दनञ्चाचिणोत् द्रुतम्।
नाक्षुभ्नाद्राक्षसो भ्रातुः शक्तिञ्चोदवहद्गुरुम्॥ ९०॥

रौद्रास्त्रं विव्याध व्यध्यो ताडे यङ्खपाद्योरिति जिः चथ नराशनौ रावणस्तीक्ष्णैः शिलीमुखैर्बाणैः सर्वत्र मर्मस्थाने काकुत्स्थं पूरितवान् छनुभयुभयपूर्तौ छन्पां न लुग्वाशणार्मिति पच्चे नलोपाभावः॥ ८८॥ भ०

तत इत्यादि। ततोऽनन्तरं लक्ष्मणस्तस्य रावणस्य ध्वजं त्रिशिरसं त्रिशूलाग्रं प्राच्छिनत् छिन्नवान् च्योत्रसूच्छेदने तुदादौ सारथिं चामथ्नात् ध्वस्तवान् मथ विलोड़ने क्र्यादिः भूरिभिञ्च प्रभूतैः शरैरतुदत् व्यथितवान्॥ ८९॥ ज० म०

तत इत्यादि। ततस्तदनन्तरं लक्ष्मणस्तस्य त्रिशिरसं त्रिलेखं ध्वजं छिन्नवान् ञ्चछ्दे यङ्खपाद्योरिति जिः सारथिञ्च हतवान् गमन्य च गाहे भूरिभिर्बहुभिः शरैस्ताड़ितवान् तमित्यर्थात्॥ ८९॥ भ०

अश्वानित्यादि। विभीषणश्चाश्वानतुभ्नात् हतवान् नभतुभ हिंसायां स्यन्दनं चाचिणोत् भग्नवान् चिणु हिंसायां तनादौ राक्षसो रावणः नाक्षुभ्नात् न क्षोभं गतः चुभ सञ्चलने क्र्यादौ व्यद्यते न दिवादौ भ्रातुर्विभीषणस्य कृते गुरुं शक्तिमुदवहत् उद्यतवान् वह उद्यमने तुदादौ गुरुमिति वोतो गुणवचनादिति विकल्पेन ङीष्॥ ९०॥ ज० म०

अश्वानित्यादि। तस्याश्वान् विभीषणो हतवान् तुभ्यगच चकारात् हिंसे शीघ्रं स्यन्दनं चाचिणोत् चणचिणुउवधे नोपडो णुरिति गुणाभावः एतावत्यपि राक्षसो न चोभं प्राप चुभग च चकारात् सञ्चलने मनीषादित्वात् भकारतवर्गयुक्तस्य नत्वमिति बोध्यं भ्रातुर्विभीषणस्य कृते गुर्वीं शक्तिम् अस्त्रविशेषम् उत्थापितवान्

तामापतन्तीं सौमित्रिस्त्रिधाकृन्तच्छिलीमुखैः ।
अशब्दायन्त पश्यन्तस्ततः क्रुद्धो निशाचरः ॥ ८१ ॥
अष्टघण्टां महाशक्तिमुदयच्छन्महत्तराम् ।
रामानुजं तयाविध्यत् स महीं व्यसुराश्रयत् ॥ ८२ ॥

स्पृहेङ्ग उद्यमे भ्रातुरुपरि नाच्युतात् शत्, पश्चस्थितत्वादित्यन्ये योजयन्ति ॥ ८० ॥ भ०

तामित्यादि । तस्योपरि शक्तिमापतन्तीं सौमित्रिः शिलीमुखैस्त्रिधा त्रिप्रकारम् अकृन्तत् छिन्नवान् कृती छेदने तुदादौ यत्र प्रेक्षकाः पश्यन्तः ते अशब्दायन्त शब्दं कृतवन्तः वीर लक्ष्मण ! साधु कृतमिति शब्दवैरेत्यादिना करोत्यर्थे यङ् ततोऽनन्तरं निशाचरः क्रुद्धः क्रोधं कृतवान् ॥ ८१ ॥ ज० म०

तामापतन्तीमित्यादि । विभीषणोपरि आपतन्तीं तां शक्तिं लक्ष्मणो बाणैः प्रकारत्रयेण कृन्तति स्म कृतीशपच्छिदि पश्यन्तः समरप्रेक्षका देवादयः शब्दञ्चक्रुः शब्दसुखकष्टादेरिति ङ्यः तत इत्यादिकमुत्तरश्लोकेन सम्बध्यते ॥ ८१ ॥ भ०

क्रुद्धो निशाचरः किं कृतवानित्याह ।

अष्टेत्यादि । अष्टौ घण्टा यस्यां महाशक्तौ तां शक्तिं प्रभावेण महत्तरां महतीम् अतिशयेन महाप्रमाणाम् उदयच्छत् उद्यतवान् समुदङ्भ्यो यमोऽग्रन्थ इति तङ् भवति अकर्त्रभिप्रायत्वात् तया च करणभूतया रामानुजं लक्ष्मणमविध्यत् विद्धवान् राममनुजातवानिति अनोकर्मणीति डः स च लक्ष्मणो विद्धः व्यसुः विगतप्राणः महीमाश्रयत् आश्रितवान् भुवि पतित इत्यर्थः ॥ ज० म०

अष्टघण्टामित्यादि । तदनन्तरं क्रुद्धो रावणो महाप्रमाणां शक्तिम् उदयच्छत् उत्थापितवान् कीदृशीम् अष्टौ घण्टा यस्यास्तां प्रभावेण महत्तरां महतीशब्दात्तरप्रत्यये सति पुंवत् स्यादानेति यमेर्यच्छः । तया शक्त्या रामानुजं लक्ष्मणमविध्यत् ताडितवान् । स लक्ष्मणो व्यसुर्विगतप्राणः सन् भूमिमाश्रितवान् ॥ ८२ ॥ भ०

राघवस्याशवस्याशवायन्त सायकास्तैरुपद्रुतः ।
ततस्तूर्णं दशग्रीवो रणक्ष्मां पर्य्यशेषयत् ॥ ९३ ॥
सस्फुरस्योदकर्षच्च सौमित्रेः शक्तिमग्रजः ।
अशिश्वदोषधीस्ता याः समानीता हनूमता ॥ ९४ ॥
उदजीवत् सुमित्राभूर्भ्रातास्लिष्यत्तमायतम् ।
सम्यगमूर्द्धन्युपाशिङ्घदपृच्छच्च निरामयम् ॥ ९५ ॥

राघवस्येत्यादि । तस्मिन् पतिते राघवस्य सम्बन्धिनो बाणाः अश्वशायन्त अश्वशा भृशा अभवन् शीघ्रगतयो जाता इत्यर्थः ततस्तैरुपद्रुतो दशग्रीवः तूर्णीभूत्वा रणक्ष्मां रणभूमिं पर्य्यशेषयत् त्यक्तवान् शिष असर्वोपयोगे चुरादिः ॥ ९३ ॥ ज० म०

राघवस्येत्यादि । कुम्भाणे पतिते सति राघवस्य शराः पूर्वमश्वशास्तदानीं भृशा अभवन् शीघ्रगतयो जाता इत्यर्थः भृशादेश्चार्थे इति ङः तदनन्तरं तैः सायकैरुपद्रुतो दशग्रीवस्तूर्णं शीघ्रं रणभूमिं पर्य्यशेषयत् त्यक्तवान् शिषकि असर्वोपयोगे ॥ ९३ ॥ भ०

सस्फुरस्येत्यादि । अग्रजश्च रामः सौमित्रेः सस्फुरस्य उच्छ्वसतः शक्तिं हृदयलग्नामुदकर्षत् उत्कृष्टवान् याश्च हनूमतौषध्यः समानीतास्ता अशिश्वत् व्रणदेशेषु चारितवान् ॥ ९४ ॥ ज० म०

सस्फुरस्येत्यादि । सोऽग्रजो रामः सस्फुरस्य उच्छ्वसतः सौमित्रेः शक्तिं हृदि लग्नाम् उदकर्षत् आकृष्टवान् स्फुरणि स्फुर्त्तौ चले पचादित्वादन् कुटादित्वात् कुटांगुणोञ्णितीति निषेधान्न गुणः या ओषधयो हनूमता समानीतास्ता ओषधीरशिश्वत् व्रणदेशे इत्यर्थात् शिचपशौञ् चरणे ॥ ९४ ॥ भ०

उदजीवदित्यादि । ततः सुमित्राभूर्लक्ष्मणः उदजीवत् प्रत्युज्जीवितवान् तञ्च जीवितं भ्राता रामः आयतं दीर्घकालमश्लिष्यत् आलिङ्गितवान् मूर्द्धनि च सम्यगुपाशिङ्घत् आघ्रातवान् शिघि आघ्राणे निरामयञ्च कुशलमपृच्छत् पृष्टवान् किं व्यपगता पीडेति ॥ ९५ ॥ ज० म०

ततः प्रोदसहन् सर्वे योद्धुमभ्यद्रवत् परान् ।
अकृच्छ्रायत च प्राप्तो रथेनान्येन रावणः ॥ ९६ ॥
भूमिष्ठस्यासमं युद्धं रथस्थेनेति मातलिः ।
आहरद्रथमत्युग्रं सशस्त्रं मघवाज्ञया ॥ ९७ ॥

उदजीवदित्यादि । सुमित्राभूर्लक्ष्मण उज्जीवितवान् नाटनामसङ्कीर्त्तनं पराजितत्वेनापकर्षात् भ्राता राम आयतं दीर्घकालं तं लक्ष्मणमालिङ्गितवान् श्लिषौ वल्गि आलिङ्गने मूर्द्धनि च सम्यगाघ्रातवान् शिरस्याघ्राणे स्नेहाभिव्यञ्जकमिदं निरामयं पीड़ाया अभावञ्च दृष्टवान् आमयस्याभाव इत्यव्ययीभावः ॥ ९५ ॥ भ०

तत इत्यादि । पुनः सर्व एव रामादयो योद्धुं प्रोदसहन् प्रोत्साहितवन्तः सह मर्षणे इति चौरादिकः परस्मैपदी आधृषाद्वेति णिज् भवति न तु भौवादिकः तस्यात्मनेपदित्वात् रावणश्चान्येन रथेन प्राप्तः सन् परानुत्सहतोऽभ्यद्रवत् अभिमुखं गतवान् अकृच्छ्रायत च कृच्छ्राय पापाय कर्मणे क्रमितवान् सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यमिति क्यङ् कण्वचिकीर्षा पापचिकीर्षा ॥ ९६ ॥ ज० म०

तत इत्यादि । पुनः सर्व एव रामादयो योद्धुं प्रोत्सहन्ते स्म सह्याकिशक्तौ क्यन्तुबन्धत्वाद्वा चुरादिः रावणोऽपि अन्येन रथेन समाप्तः सन् परान् शत्रून् अभ्यद्रवत् अभिमुखं गतः आत्मनश्च कृच्छ्रम् इन्द्रजिद्वधादिजन्यं वेदितवान् सुखादित्वात् शब्दसुखकष्टादेरिति ङ्यः कृच्छ्रं कर्म करोतीति कष्टादिरित्यन्ये तन्मते कूटयुद्धादिना पापवृत्तिः प्रवृत्त्यन्तरमिति कालापाः कृच्छ्रशब्दस्य तद्वति पुरुषे वर्त्तमानत्वात् कृच्छ्रानिवाचरतिस्मेति धातुङ्यकौ इति ङ्य इति केचित् ॥ ९६ ॥ भ०

भूमिष्ठस्येत्यादि । भूमिष्ठस्य रामस्य अम्बाम्बेति मूर्द्धन्यः रथस्थेन रावणेन सह योद्धुमसममतुल्यमयुक्तमिति निरूपितवतो मघवतः इन्द्रस्य आज्ञया मातलिः सशस्त्रं रथमत्युग्रमाहरत् आनीतवान् ॥ ९७ ॥ ज० म०

भूमिष्ठस्येत्यादि । भूमिस्थितस्य रामस्य रथस्थितेन रावणेन सह

सोऽध्यष्ठीयत रामेण शस्त्रं पाशुपतं ततः ।
निरास्यत दशास्येन तच्छक्रास्त्रेणाजयन्नृपः ॥ ९८ ॥
ततः शतसहस्रेण रामः शौर्णोन्निशाचरम् ।
बाणानामचिणोद्धुर्य्यान् सारथिञ्चादुनोद्द्रुतम् ॥ ९९ ॥
अदृश्यन्तानिमित्तानि प्राज्वलत् क्षितिमण्डलम् ।

युद्धसमसमतुल्यमयुक्तमिति विचारयतो मघोन इन्द्रस्याज्ञया मातलि-स्तस्य सारथिः शस्त्रम् अत्युग्रं रथम् आहरत् आनीतवान् भूमौ तिष्ठतीति ह्नजनादिति डः मनीषादित्वात् षत्वम् ॥ ९७ ॥ भ०

सोऽध्यष्ठीयतेत्यादि । स रथो रामेणाध्यष्ठीयत अध्यासितः कर्मणि लङ् घुमास्थेतीत्वं गुणोष्टक इत्यादिना षत्वम् अड्व्यवायेऽपि । ततोऽनन्तरं दशास्यः पाशुपतमस्त्रं निरास्यत क्षिप्तवान् उपसर्गा-दस्यत्यूह्योर्वा वचनमिति तङ् । तत्पाशुपतं नृपो रामः शक्रास्त्रेणा-जयत् जितवान् ॥ ९८ ॥ ज० म०

सोऽध्यष्ठीयतेत्यादि । स रथो रामेणाधिष्ठितः कर्मणि यक् दाभागेहागित्यादिना ङीः गोक इति षत्वम् । ततो दशास्यः पशुपति-दैवतं शस्त्रं क्षिप्तवान् गेर्वास्योह इति पक्षे मं । नृपो रामस्तत् पाशु-पतशस्त्रं शक्रास्त्रेण जितवान् ॥ ९८ ॥ भ०

तत इत्यादि । ततोऽनन्तरं रामः निशाचरं बाणानां शतसह-स्रेण वर्षेण शौर्णोत् छादितवान् गुणोष्टक इति गुणः द्रुतं धुर्य्या-नश्वान् धुरोयड्ढाविति यत् अचिणोत् हतवान् सारथिं चादुनोत् उपतापितवान् ॥ ९९ ॥ ज० म०

तत इत्यादि । तदनन्तरं रामो बाणानां शतसहस्रेण वर्षेण निशाचरं रावणं शौर्णोदाच्छादितवान् ऊर्णुञाच्छादने ध्यामिति गुणः । द्रुतं धुर्य्यान् रथाश्वान् अचिणोत् हिंसितवान् चणचिणहुन् वधे धुरं वहतीति ढघेकादिति यः व्यंनचूतयोत्युक्तेन दीर्घः सार-थिञ्च पीड़ितवान् ॥ ९९ ॥ भ०

अदृश्यन्तेत्यादि । रावणस्यानिमित्तानि अदृश्यन्त दृष्टानि कर्मणि

रावणः प्राहिणोच्छूलं शक्तिमैन्द्रीं महीपतिः ॥१००॥
ताभ्यामन्योन्यमासाद्य समवाप्यत संशमः ।
लवेन पत्त्रिणां रक्षः क्रुद्धो रामस्य राक्षसः ॥ १०१ ॥
अस्तृणादधिकं रामस्ततोऽदेवत सायकैः ।
अक्लाम्यद्रावणस्तस्य सूतो रथमनाशयत् ॥ १०२ ॥

लङ् । क्षितिमण्डलं प्राप्लवत् चलितं इत्यचलने रावणश्चानिमित्तानि दृष्ट्वा वज्रदत्तम्शूलं प्राहिणोत् क्षिप्तवान् । महीपतिः स रामः ऐन्द्रीं शक्तिं प्राहिणोत् हिगतौ स्वादिः ॥ १०० ॥ ज० म०

अदृश्यन्तेत्यादि । रावणेन चानिमित्तानि दुर्निमित्तानि दृष्टानि कर्मणि यक् । क्षितिमण्डलं प्राप्लवत् चचाल इत्यप्लुघ चाले । रावणः शूलं प्राहिणोत् क्षिप्तवान् । महीपती राम ऐन्द्रीं शक्तिं प्राहिणोत् हिम् वर्द्धने गतौ ॥ १०० ॥ म०

ताभ्यामित्यादि । ताभ्यां शूलशक्तिभ्यामन्योन्यमासाद्य संश्लिष्य संशमः संशमनं घञि नोदात्तेति वृद्धिप्रतिषेधः समवाप्यत प्राप्तः कर्मणि लङ् । अनन्तरं क्रुद्धो राक्षसः पत्त्रिणां शराणां शतसहस्रेण लवेन रामस्य वचः अस्तृणादिति वक्ष्यमाणेन सम्बन्धः छादितवान् शादीनां ह्रस्वः ॥ १०१ ॥ ज० म०

ताभ्यामित्यादि । ताभ्यां शूलशक्तिभ्याम् अन्योन्यमासाद्य आश्लिष्य संशमः क्षयः प्राप्तः कर्मणि यक् संशमनं संशमः घञि जनवधः सेन इति ह्रस्वः । ततो रावणः क्रोधात् पत्त्रिणां बाणानां लक्षेण रामस्य वक्षो हृदयम् अस्तृणादित्युत्तरश्लोकेनान्वयः स्तृञ् आच्छादने शादेः श्नौ इति ह्रस्वः ॥ १०१ ॥ म०

अस्तृणादित्यादि । ततोऽनन्तरं रामो रामः सायकैः राक्षसा०० दधिकम् आदेवत क्रीडितवान् तुदादेवन इति भ्वादावनुदात्तेत् स तथा देवमानेनाहतो रावणः अक्लाम्यत् ग्लानिमुपगतः तस्य तथाभूतस्य रावणस्य सूतः सारथिः स्वामिजीवितेच्छया रथमनाशयत् दूरम् अपनीतवान् ॥ १०२ ॥ ज० म०

राक्षसोऽतर्जयत् सूतं पुनश्चाढौकयद्रथम् ।
निरास्येतामुभौ बाणानुभौ धुर्य्यानविध्यताम् ॥१०३॥
उभावकृन्ततां केतूनव्यथेतामुभौ न तौ ।
अदीप्येतामुभौ धृष्णू प्रायुञ्जाताञ्च नैपुणम् ॥१०४॥

ऋक्षणादित्यादि । ततो रामो रावणसायकाधिकसायकैरदेवयत् क्रीडितवान् देवृङ्देवने रामेण हतो रावणोऽक्लाम्यत् क्लमु ग्लानौ तस्य तादृशस्य रावणस्य सूतः सारथी रथम् अनाययत् स्वामिजीवनेच्छया दूरमपनीतवान् नसूयूनाशे ञिः ॥ १०२ ॥ भ०

राक्षस इत्यादि । राक्षसो रावणः सूतमतर्जयत् भर्त्सितवान् हा पाप ! किं मम समीपात्त्वं पराङ्मुखयसीति इत्थं संतर्जितः सूतः पुनरपि रथमढौकयत् ढौकितवान् रामसमीपमित्यर्थात् उभौ रामरावणौ बाणान्निरास्येतां क्षिप्तवन्तौ असु क्षेपणे इति तङ् धुर्य्यानश्वानविध्यतां ताडितवन्तौ ॥ १०३ ॥ ज० म०

राक्षस इत्यादि । रावणः सूतं तर्जितवान् रथापसरणेन वञ्चोपादानात् तर्जकङ् तर्जभर्त्सने चुरादित्वात् आत्मनेपदित्वं चुर्ण्यौ ञिर्वैति ञिः पाक्षिकत्वात्तदभावपक्षे ङनुबन्धादात्मनेपदं कानुबन्धाच्चित्वमग्रन्तर्गेति चेत् कश्चिदात्मनेपदिनोऽपि परस्मैपदित्वं परिभजति पाञ्चालो मध्यमं पाण्डुनन्दनमित्यादिप्रयोगदर्शनात् भौवादिकात् प्रेरणाभावर्थात्प्रकृतिः कर्मकर्तृत्वविवक्षया पुनः प्रेरणे ञिरिति केचित् पुनश्च रथम् अढौकयत् रामान्तिकं प्रापितवान् ढौकृ ढौकृ गतौ ङ् मत्यां प्रेरणे ञिः उभौ रामरावणौ बाणान् क्षिप्तवन्तौ गैवादिकोऽह इति यं ततो धुर्य्यानश्वान् अविध्यताम् ॥ १०२ ॥ भ०

उभावित्यादि । तावुभौ रामरावणौ केतून् ध्वजानकृन्ततां छिन्नवन्तौ तावुभौ नाव्यथेतां न व्यथितवन्तौ उभावदीप्येतां शोभितवन्तौ धृष्णू च प्रगल्भौ नैपुणं कौशलं प्रायुञ्जातां प्रयुक्तवन्तौ ॥ १०४ ॥ ज० म०

उभावित्यादि । तत उभौ रामरावणौ केतून् ध्वजान् अकृन्ततां

उभौ मायां व्यतायेतां वीरौ नाश्राम्यतामुभौ ।
मण्डलानि विचित्राणि क्षिप्रमाक्रामतामुभौ ॥१०५॥
न चोभावप्यलक्ष्येतां यन्तारावाहतामुभौ ।
स्यन्दनौ समपृच्येतामुभयोर्दीप्तवाजिनौ ॥ १०६ ॥

नतौपपच्छिदि । तावुभौ न व्यथेतां न भीतौ व्यथष्ड् दुःखे चालेभये उभौ अदीप्येतां शोभितवन्तौ दीपीङ्‌ऽदीपने दृष्णा प्रगल्भौ नैपुणं युद्धकौशलं प्रयुक्तवन्तौ युजिर्योगे च युतौ युजिरोगश्च इति सं निपुणाद्भावे विचारसंघेति ष्णः ॥ १०४ ॥ भ०

उभौ मायामित्यादि । तावुभौ मायां व्यतायेतां विस्तारितवन्तौ तायृसन्तानपालनयोः भ्वादौ । उभौ वीरौ नाश्राम्यतां न श्रान्तौ । युद्ध्यमानौ च तावुभौ मण्डलानि विचित्राणि मतिवैचित्र्यात् क्षिप्रमाक्रामतां भ्रान्तौ वाभ्राशेति शप् ॥ १०५ ॥ ज० म०

उभौ मायामित्यादि । उभौ मायां व्यतायेतां विस्तारितवन्तौ तायृङ्पालनसन्तत्योः नाश्राम्यतां न श्रान्तौ यतो वीरौ युध्यमानावुभौ विचित्राणि मण्डलानि क्षिप्रमाक्रामतां भ्रान्तौ क्रमः परस्मैपदेषु ॥ १०५ ॥ भ०

न चेत्यादि । तावुभौ नाप्यलक्ष्येतां प्रेक्षकैर्न ज्ञातौ अयं रामः अयञ्च रावण इति कर्मणि लङ् । यन्तारौ सूतौ कर्मपदमेतत् उभौ परस्परमाहतवन्तौ अनुदात्तोपदेशेत्यादिनानुनासिकलोपः स्यन्दनौ रथौ उभयोः रामरावणयोः दीप्तवाजिनौ चामरादिमण्डनात् दीप्ता उज्ज्वला वाजिनो ययोः तयोः स्यन्दनौ समपृच्येतां संपृक्तौ पृची सम्पर्के कर्मणि लङ् ॥ १०६ ॥ ज० म०

न चेत्यादि । तावुभौ न चालक्ष्येतां प्रेक्षकैर्न दृष्टौ लक्षआ दर्शनेऽङ्के कर्मणि यक् । तावुभौ यन्तारौ सारथी सकर्मकत्वाच्च सं हन्तेरनिमित्त्वात् वनतनाद्यनिमामिति नलोपः । उभयोस्तयोः स्यन्दनौ संपृक्तौ पृचधीसम्पर्के कर्मणि कर्मकर्त्तरि वा यक् चामरादिना दीप्ता वाजिनोऽश्वाः ययोः स्यन्दनयोः ॥ १०६ ॥ भ०

ततो मायामयान् मूर्ध्नो राक्षसोऽप्रथयद्रणे ।
रामेणैकशतं तेषां प्राविध्यत शिलीमुखैः ॥ १०७ ॥
समक्षुभन्नुदन्वन्तः प्राकम्पन्त महीभृतः ।
सन्त्रासमबिभः शक्रः प्रैङ्खच्च क्षुभिता क्षितिः ॥ १०८ ॥

तत इत्यादि । ततोऽनन्तरं राक्षसः मायामयान् मायास्वभावान् मूर्ध्नः शिरांसि अप्रथयत् प्रदर्शितवान् प्रथ प्रख्याने इति घटादौ । तेषाञ्च शिरसाम् एकशतम् एकाधिकं शतं रामेण शिलीमुखैः शरैः प्राविध्यत छिन्नं कर्म्मणि लङ् ॥ १०७ ॥ ज० म०

तत इत्यादि । तदनन्तरं रावणो मायामयान् मायास्वभावान् मूर्ध्नः शिरांसि अप्रथयत् विस्तारितवान् स्वाभाविकमस्तकानां रक्षायै बहिर्वर्त्तीन्यन्यानि शिरांसि कृतवानिति भावः प्रथप्रख्यातौ घटादित्वात् ह्रस्वः सयट् तद्रूपे । तेषां शिरसामेकाधिकं शतं रामेण प्राविध्यत छिन्नं कर्म्मणि यक् ॥ १०७ ॥ म०

समक्षुभन्नित्यादि । छिन्नानाञ्च पततां क्षोभादुदन्वन्तः सागराः समक्षुभन् सञ्चलिताः क्षुभ सञ्चलने इति क्र्यादिः महीभृतः प्राकम्पन्त कम्पिताः शक्र इन्द्रः संत्रासमबिभः भृतवान् पततां शिरसां पुनः पुनरुदयात् मायया विमोह्यायं राममजैषीदिति बिभर्त्तेः श्लौ द्विर्वचनं भृञामित् धातोर्गुणः पररूपत्वमिति लोपविसर्जनीयौ प्रैङ्खत् क्षुभितश्च स शक्र इखेत्यादौ इखिरिति पठ्यते क्षितिश्च क्षुभिता चलिता ॥ १०८ ॥ ज० म०

समक्षुभन्नित्यादि । छिन्नानां मूर्ध्नां पतनादुदन्वन्तः समुद्राः संक्षोभिताः क्षुभ्यन्ति च चकारात् सञ्चले अनीषादित्वाणभावः पर्वताः कम्पिताः शक्रः सन्त्रासं बभार छिन्नानां शिरसां खड्गेनाप्युत्क्षेपणात् डुभृञ्भृतिपुष्ट्योः ह्वादेरेद्धिः पूर्वादेर्ङिः गुर्भुङ इति गुणः हल्ङ्याभ्यामिति दिपलोपः मस्तकभारात् प्रक्षुभिता क्षितिः प्रैङ्खत् कम्पिता इखि ईखि गतौ शक्रः प्रैङ्खत् क्षितिः प्रक्षुभितेत्यन्ये ॥ १०८ ॥ म०

ततो मातलिना शस्त्रमस्मार्यत महीपतिः ।
वधाय रावणस्योग्रं स्वयम्भूर्यदकल्पयत् ॥ १०९ ॥
नभस्वान् यस्य वाजेषु फले तिग्मांशुपावकौ ।
गुरुत्वं मेरुसङ्काशं देहः सूक्ष्मो वियन्मयः ॥ ११० ॥
राजितं गारुडैः पक्षैर्विश्वेषां धाम तेजसाम् ।
स्मृतं तद्रावणं भित्त्वा सुघोरं भुव्यशाययत् ॥ १११ ॥

तत इत्यादि । रावणस्य वधाय स्वयम्भूर्यदस्त्रमकल्पयत् कल्पितवान् कर्मणो गुणः कर्मत्वेन तदस्त्रं मातलिना अस्मार्यत स्मारितं स्मरतेर्ण्यन्तात् कर्मणि लङ् मित्त्वाद्ध्रस्वत्वं महीपतेरित्यधीगर्थेति षष्ठी ॥ १०९ ॥ ज० म०

तत इत्यादि । तदनन्तरं रावणस्य वधाय स्वयम्भूर्ब्रह्मा यदुग्रं शस्त्रम् अकल्पयत् तत् शस्त्रं मातलिना महीपतौ रामोऽस्मार्य्यत स्मारितः स्मृ स्मृतौ अन्तात् कर्मणि यक् महीपतेरिति पाठे भावे यक् कर्मणि सम्बन्धविवक्षया वा षष्ठी ॥ १०९ ॥ भ०

कीदृशं तदित्याह ।

नभस्वानित्यादि । यस्य शस्त्रस्य वाजेषु नभस्वान् वायुः सन्निहित इत्यर्थात् फले तिग्मांशुरादित्यः पावकश्च यस्य गुरुत्वं मेरुवत् मेरोरिव दृढत्वं मेरुसङ्काशमिति पाठान्तरं तत्र मेरुस्थगौरवसदृशमित्यर्थः सूक्ष्मो देहो दिव्यचक्षुर्गम्यः वियन्मय आकाशस्वभावः ॥ ११० ॥ ज० म०

नभस्वानित्यादि । यस्यास्त्रस्य वाजेषु पक्षेषु नभस्वान् वायुः सन्निहित इत्यर्थात् यस्य फलेऽग्रे तिग्मांशुपावकौ सूर्योऽग्निश्च यस्य गुरुत्वं मेरुवत् मेरोरिव मेरुसङ्काशमिति पाठे मेरोर्यद्गुरुत्वं तत्तुल्यमित्यर्थः यस्य देहः सूक्ष्मः दिव्यदृष्टिदृश्यः अथच वियन्मय आकाशस्वभावः स्मृतमिति वक्ष्यमाणेनान्वयः ॥ ११० ॥ भ०

राजितमित्यादि । गारुडैः पक्षैराजितं शोभितं तेजसां विश्वेषां अनेकप्रकाराणां धाम स्थानं तदस्त्रं रामेण स्मृतं स्मृतिमागत्य सुघोरं

आबध्नन् कपिवदनानि संप्रहासं
प्राशंसत् सुरसमितिर्नृपं जितारिम्।
अन्येषां विगतपरिप्लवा दिगन्ताः
पौलस्त्योऽजुषत शुचं विपन्नबन्धुः॥ ११२॥

इति भट्टिकाव्ये तिङन्तकाण्डे लङ्विलसितो नाम
सप्तदशः सर्गः।

---

रावणं भित्त्वा भुवि अशाययत् शायितवान् रावणसोदरं भित्त्वा भूमौ पातितवानित्यर्थः॥ १११॥ ज० म०

राजितमित्यादि। गरुड़सम्बन्धिभिः पत्त्रै राजितं दीप्तं विश्वेषां तेजसां धाम स्थानं तदस्त्रं रामेण सृष्टं सुघोरम् अतिभीषणं रावणं हत्वा भुवि शायितवान् पातयामासेत्यर्थः शीङ् निशाने णिः शेरते शाच्छासाह्वेति यन्॥ १११॥ म०

आबध्नन्नित्यादि। तस्मिन् हते कपिवदनानि कर्तृभूतानि तोषात् प्रोत्साहमावध्नन् सेवितवन्ति सुरसमितिः सुरसमूहः नृपं जितारिं प्राशंसत् स्तुतवती अन्येषाम् अन्यजनानां दिगन्ताः रावणबधाद्विगतपरिप्लवा निरुपद्रवा जाता इत्यर्थात् पौलस्त्यो विभीषणः विपन्नबन्धुः मृतभ्रातृकः शुचं शोकमजुषत् सेवितवान् जुषिरुदादावनुदात्तेत्॥ ११२॥ ज० म०

इति भट्टिकाव्यटीकायां तिङ्काण्डे लङ्विलसितश्चतुर्थः
परिच्छेदः काव्यस्य रावणवधो नाम
सप्तदशः सर्गः।

आबध्नन्नित्यादि। तस्मिन् हते सति कपीनां वदनानि सम्प्रहासं प्रसन्नतामाबबन्धुः सम्प्रकाशमिति क्वचित् पाठः सम्प्रहासमिति केचित् सुरसमितिः देवानां सभा जितारिं नृपं प्राशंसत् अन्येषां जनानां दिगन्ता रावणबधाद्विगतपरिप्लवा निरुपद्रवा अभवन् पौलस्त्यो विभी-

# अष्टादशः सर्गः ।

——०○——

व्यश्नुतेस्म ततः शोको नाभिसम्बन्धसम्भवः ।
विभीषणमसावुच्चै रोदितिस्म दशाननम् ॥ १ ॥
भूमौ शेते दशग्रीवो महार्हशयनोचितः ।

यथः विपन्नबन्धु र्हतभ्रातृकः शुचं शोकं जुषतेस्म सेवितवान् शक्रो-
ऽजिजुषच्चुदिशेवे । मह्रर्षिशोच्छन्दः बच्चर्य यथा व्याख्याभिर्मनजरगाः
मह्रर्षिचीयम् ॥ ११२ ॥ म०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्कमल्लीकामल-
श्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां
रावणवधो नाम सप्तदशः सर्गः ।

——

ततः प्रभृति लटमधिकृत्य लङ्विवक्षितमाह तत्र वर्त्तमाने
लट् ततोऽन्यत्रापि दर्शयिष्यति ।

व्यश्नुत इत्यादि । ततो वधादनन्तरं शोको विभीषणं व्यश्नुतेस्म
व्याप्तवान् लङ् स इति भूतानद्यतन परोक्षे लट् नाभिसम्बन्धेन
एकोदरसम्बन्धेन सम्भवो यस्य शोकस्य असौ भ्रष्टशोको विभीषणः
उच्चैर्महता शब्देन दशाननं नामग्राहं रोदितिस्म रुदितवान् ॥१॥ज०म०

अथ किमधिकृत्याह अस्याः परमते लङिति संज्ञा ।

व्यश्नुतेत्यादि । ततो रावणवधानन्तरं शोको विभीषणं व्यश्नुते
स्म व्याप्तवान् अम्शूङ्व्याप्तिसंहत्योः कीर्त्तनातीत इति भूते की ।
कीदृशः शोकः नाभिसम्बन्धेन गोत्रसम्बन्धेन सम्भवः उत्पत्तिर्यस्य असौ
शोकार्त्तो विभीषण उच्चैर्महाशब्देन दशाननं रोदितिस्म बधिरवदरोद
पूर्वकव्रूते की स्वस्रोऽय इतीम् ॥ १ ॥ म०

तदेव दर्शयन्नाह ।

भूमावित्यादि । महार्हशयने उचितो यः स भूमौ शेते शोका-

नेक्षते विह्वलं माञ्च न मे वाचं प्रयच्छति ॥ २ ॥
विपाकोऽयं दशग्रीव ! संदृष्टोऽनागतो मया ।
त्वं तेनाभिहितः पथ्यं किं कोपं न नियच्छसि ॥ ३ ॥
भजन्ति विपदस्तूर्णमतिक्रामन्ति सम्पदः ।
तान्मदान्नावतिष्ठन्ते ये मते न्यायवादिनाम् ॥ ४ ॥

विह्वलञ्च मां नेक्षते मे वाचं प्रतिवचनं न प्रयच्छति न ददाति दाण दाने पाघ्रेत्यादिना यच्छादेशः ॥ २ ॥ ज० म०

भूमावित्यादि । दिव्यशय्याशायी दशग्रीवो भूमौ शेते शीङ् स्वप्ने भवद्भूतभव्ये इति वर्त्तमाने की शीङोरेषुः विह्वलं शोकव्याकुलं मां न ईक्षते न पश्यति ईक्षङ् दर्शने मह्यं वाचं न प्रयच्छति न ददाति दा दाने स्यादानपेति यच्छादेशः ॥ २ ॥ भ०

विपाक इत्यादि । हे दशग्रीव ! अयं विपाको मरणलक्षणं फलम् अनागतो भविष्यन्नेव मया संदृष्टः सम्यगुपलब्धः इदानीं पश्यसि तेन कारणेन योऽभिहितोऽसि सीतां मुञ्चेति अतः किमिति कोपं न नियच्छसि नापनयसि नास्त्येव मम दोषः निपूर्वो यमिरपनयने वर्त्तते ॥ ३ ॥ ज० म०

विपाक इत्यादि । हे दशग्रीव ! अयमनागतो भविष्यन् विपाको मरणरूपो मया संदृष्टः सम्यगुपलब्धः तेन कारणेन पथ्यं सीतां मुञ्चेति हितं त्वमभिहित उक्तोऽसि लोपोऽस्त्यसोरिति सलोपः इदानीं हत एव किं कोपं न नियच्छसि नापनयसि मम दोषो नास्त्येव यमोऽवरतौ निपूर्वोऽपनयने स्यादानपेति यच्छादेशः ॥ ३ ॥ भ०

भजन्तीत्यादि । अन्यच्च ये स्वामिनो मदादवलेपात् न्यायवादिनां माल्यवत्प्रभृतीनां मते नावतिष्ठन्ते समवप्रविभ्य स्थ इति तङ् ते पुरुषाः विपदस्तूर्णं भजन्ति अवसादं सेवन्ते भजिरभयपरी सम्पदश्चातिक्रामन्ति त्यजन्ति ॥ ४ ॥ ज० म०

भजन्तीत्यादि । ये स्वामिनो न्यायवादिनां मते मदादहङ्कारात् नावतिष्ठन्ते प्रतिज्ञानिर्णयेत्यादिना अवपूर्वात् स्थो मं तान् विपदस्तूर्णं

अपथ्यमायतौ लोभादामनन्त्यनुजीविनः।
प्रियं शृणोति यस्तेभ्यस्तमृच्छन्ति न सम्पदः॥ ५॥
प्राज्ञास्तेजस्विनः सम्यक् पश्यन्ति च वदन्ति च।
तेऽवज्ञाता महाराज! क्लाम्यन्ति विरमन्ति च॥ ६॥

भजन्ति सेवन्ते भजञ्भौभागसेवनयोः सम्पदस्तान् व्यतिक्रामन्ति त्यजन्ति क्रमः मेऽपि छः न्यायवादिनां माल्यवदादीनां यन्मतं त्वया नादृतं तेनेयं विपत् सम्पञ्च गतेति भावः॥ ४॥ भ०

अपथ्यमित्यादि। प्रायेण ह्यनुजीविनः प्रहस्तादिसदृशाः आयतावागामिनि काले इष्टावस्थायामपथ्यमनिष्टं फलं लोभेन तृष्णया वा प्रियमामनन्ति उपदिशन्ति साध्विदमिति तेभ्यो यः शृणोति तं सम्पदो न ऋच्छन्ति यान्ति ऋच्छादेशः॥ ५॥ ज० म०

अपथ्यमित्यादि। अनुजीविनः प्रहस्तादिसदृशाः प्रायेण लोभात् तृष्णया आयतौ उत्तरकाले अपथ्यमनिष्टफलम् आपाततः सुखश्राव्यत्वात् प्रियं भर्त्तृषु आमनन्ति उपदिशन्ति म्ना अभ्यासे म्नादानेति मनादेशः। यस्तेभ्यः प्रियं साधूक्तमिदमिति शृणोति श्रोः शृणुर्वेत्यिच सम्पदस्तं न ऋच्छन्ति गच्छन्ति ऋप्रापणे च पूर्ववत् ऋच्छादेशः ऋच्छधातोरूपं वा॥ ५॥ भ०

प्राज्ञा इत्यादि। ये प्राज्ञाः तेजस्विनः अस्मद्विधाः सम्यगविपरीतं शास्त्रचक्षुषा पश्यन्ति वदन्ति च सम्यक् हे महाराज! अवज्ञातास्ते तिरस्कृताः क्लाम्यन्ति खिद्यन्ते विरमन्ति च विमुखा भवन्ति तदवज्ञानफलमेतदिति भावः॥ ६॥ ज० म०

प्राज्ञा इत्यादि। ये प्राज्ञास्तेजस्विनोऽस्मद्विधाः सम्यक् अविपरीतं शास्त्रदृष्ट्या पश्यन्ति दृशेः पूर्ववत् पश्यादेशः ज्ञातिहितार्थं वदन्ति च हे महाराज! ते युष्मदहङ्कारोऽस्मद्विधास्त्वयावज्ञाताः तिरस्कृताः सन्तः क्लाम्यन्ति खिद्यन्ति क्लमुभिर्जिग्लानौ यन्योतृषमादीति घः विरमन्ति मौनमाचरन्ति च घे पं पराङ्मुखमतीत्यादिना विपूर्वरमः पं तदवज्ञाफलमिदमिति भावः॥ ६॥ भ०

लेढि भेषजवन्नित्यं यः पथ्यानि कटून्यपि ।
तदर्थं सेवते चाप्तान् कदाचिन्न स सीदति ॥ ७ ॥
सर्वस्य जायते मानः स्वहिताच्च प्रमाद्यति ।
वृद्धो भजति चापथ्यं नरो येन विनश्यति ॥ ८ ॥
द्वेष्टि प्रायो गुणिभ्योऽपि न च स्निह्यति कस्यचित् ।
वैरायते महद्भिश्च मीयते वृद्धिमानपि ॥ ९ ॥

लेढीत्यादि । यस्तु स्वामी व्यादौ कटून्यपि पथ्यानि परिणामसुखानि भेषजवदौषधमिव नित्यं लेढि श्रोत्रेन्द्रियेणानुभवति तदर्थं चाप्तानविसंवादिनः सेवते स कदाचिन्नावसीदति इह च परत्र चावसन्नो न भवति ॥ ७ ॥ ज० म०

लेढीत्यादि । यः स्वामी पथ्यानि सर्वदा हितानि कटून्यपि लेढि अभिलष्यति भेषजवत् तिक्तौषधमिव पिबति लिहो लक्षास्वादे ह्रोढः ढभात्तयोर्धः दुभिरिति ढः तदर्थं पथ्यार्थम् आप्तान् अविसंवादिनः सेवते स कदाचित् न अवसीदति नावसन्नो भवति स्वादानेति सदेः सीदः ॥ ७ ॥ म०

सर्वस्येत्यादि । प्रायेण वृद्धौ सत्यां सर्वो जनो मानी सञ्जायते वृद्धेश्चित्तविकारित्वात् स्वहिताच्च प्रमाद्यति हिताद्भ्रष्टो भवति अपथ्यञ्च भजति सेवते येनापथ्येन सेवितेन नरो विनश्यति ॥ ८ ॥ ज० म०

सर्वस्येत्यादि । प्रायेण वृद्धौ सत्यां सर्वस्य जनस्य मानो गर्वो जायते जनीध्यङ्जनने स्वहितात् प्रमाद्यति वृद्ध्या प्रमत्तमनस्त्वात् स्वीयमुपकारं न जानाति मदेः शमादित्वात् दीर्घः अपथ्यञ्च भजति सेवते येनापथ्येन विनाशं गच्छति णशलृ नाशे ॥ ८ ॥ म०

द्वेष्टीत्यादि । यद्यपि वृद्धौ सत्यां प्रायेण गुणिभ्यः हजसेवित्वादिभ्यः प्रभुर्द्वेष्टि क्रुधद्रुहेति सम्प्रदानसंज्ञा न च कस्यचित् स्निह्यति मीयते महद्भिश्च सह वैरायते वैरं करोति शब्दवैरेति क्यङ् तत्कारणात्

समाश्वसिमि केनाहं कथं प्राणिमि दुर्गतः।
लोकत्रयपतिर्भ्राता यस्य मे स्वपिति क्षितौ॥ १०॥
अहो जागर्त्ति कृच्छ्रेषु दैवं यद्वलभिज्जितः।
लुठ्यन्ति भूमौ क्लिद्यन्ति बान्धवा मे स्वपन्ति च॥११॥

बुद्धिमानपि शीयते विनश्यति शदेः शिति शीयादेशः शदेः शित इति तङ्॥ ९॥ ज० म०

द्वेष्टीत्यादि। यः प्रभुः प्रायो गुणिभ्यो वृद्धपण्डितादिभ्यो द्वेष्टि बद्धिषौअवैरे यस्मै दित्सेत्यादिना चतुर्थी न च न कस्यचित् स्निह्यति प्रीयते सम्बन्धविवक्षया षष्ठी ष्णिह्यत्यजिप्रीतौ महद्भिः सह वैरं करोति शब्दसुखकष्टादेरिति क्यः तस्मात्कारणात् बुद्धियुक्तोऽपि शीयते विनश्यति स्यादानेति शदेः शीयादेशः॥ ९॥ भ०

समाश्वसिमीत्यादि। यस्य मम भ्राता लोकत्रयपतिः क्षितौ स्वपिति सोऽहं केनोपायेन समाश्वसिमि शोकं त्यजामि रुदादिभ्य इतीड् दुर्गतो दुःखितः कथं केन प्रकारेण प्राणिमि जीवामि॥ १०॥ ज० म०

समाश्वसिमीत्यादि। केन प्रकारेणाहं समाश्वसिमि रुदादित्वात् रुदन्तोऽय इति इम् दुःखी अहं केन प्रकारेण प्राणिमि जीवामि पूर्ववदिम् प्राग्वन्तौ ण इत्यादिना णत्वं यस्य मे मम त्रैलोक्यस्य शासिता भ्राता रावणः क्षितौ स्वपिति शेते पूर्ववदिम् सोऽहमिति योज्यम्॥ १०॥ भ०

अहो इत्यादि। अहो इति विस्मये कृच्छ्रेषु दुःखेषु दैवं जागर्त्ति अवहितमित्यर्थः नित्यं दुःखोत्पादनात् यद्यस्मात्कारणादपरमपि मम बान्धवाः वलभिज्जितः वलं भिनत्तीति वलभिदिन्द्रः तं जयन्तीति क्विप् भूमौ लुठ्यन्ति लुटलुठलोटने दिवादौ तथा क्लिद्यन्ति पूतीभवन्ति स्वपन्ति दीर्घनिन्द्रां प्रवेशिताः॥ ११॥ ज० म०

अहो इत्यादि। अहो आश्चर्यं कृच्छ्रेषु कष्टेषु विषयेषु दैवं किं जागर्त्ति चेष्टते सदा देहिनां कष्टं जनयतीत्यर्थः यद्यस्मात्

शिवाः कुष्णन्ति मांसानि भूमिः पिबति शोणितम् ।
दशग्रीवसनाभीनां समदन्त्यामिषं खगाः ॥ १२ ॥
येन पूतक्रतोर्मूर्ध्नि क्षीयते स्म महाहवे ।
तस्यापीन्द्रजितो दैवात् ध्वाङ्क्षैः शिरसि क्षीयते ॥१३॥
स्वर्भानुर्भास्करं ग्रस्तं निष्ठीवति कृताह्निकः ।

बलभिज्जितः शक्रपराभवकारिणोऽपि मम बान्धवा रावणादयो लुठन्ति भूमौ लुठिता भवन्ति क्लिद्यन्ति क्लेदयुक्ता भवन्ति स्वपन्ति च महानिद्रां प्रविशन्तीत्यर्थः ॥ ११ ॥ भ०

शिवा इत्यादि । दशग्रीवसनाभीनां दशग्रीवेण तुल्यगोत्राणां ज्योतिर्जनपदेत्यादिना समानस्य सभावः मांसानि शिवाः शृगालाः कुष्णन्ति कुष निष्कर्षे भूमिः शोणितं पिबति खगाः पक्षिणः मांसशोणितव्यतिरिक्तं वसामज्जादिकं समदन्ति भक्षयन्ति ॥ १२ ॥ ज०म०

शिवा इत्यादि । दशग्रीवसनाभीनां रावणसजातीयानां मांसानि शिवाः शृगालाः कुष्णन्ति भूमिः पृथिवी च तेषां रक्तं पिबति खगाः पक्षिणस्तेषामामिषं मांसशोणितातिरिक्तं वसामज्जादिकं समदन्ति भक्षयन्ति कुष निष्कर्षे ॥ १२ ॥ भ०

येनेत्यादि । येनेन्द्रजिता पूतक्रतोरिन्द्रस्य महाहवे महासमरे मूर्ध्नि अग्रतः क्षीयते स्म स्थितम् अपरोक्षे चेति लट् विभीषणस्य अपरोक्षभूतानद्यतनत्वादर्थस्य तस्यापीन्द्रजितः शिरसि दैवाद्भाग्यहेतुभूतात् ध्वाङ्क्षैः काकैर्क्षीयते वर्त्तमान एव भावे लट् ॥ १३ ॥ ज०म०

येनेत्यादि । येन इन्द्रजिता पूतक्रतोरिन्द्रस्य महाहवे महायुद्धे मूर्ध्नि अग्रतः क्षीयते स्म दाणागैहागिति ङीः तस्यापि इन्द्रजितः शिरसि मस्तके दैवात् ध्वाङ्क्षैः काकैर्क्षीयते क्षीङ्‌य ओस्थिषि उभयत्र भावे क्तो ॥ १३ ॥ भ०

स्वर्भानुरित्यादि । स्वर्भानुः राहुः भास्करं ग्रस्तं ग्रासीकृतं कृताह्निकः कृताहारः निष्ठीवति मुखाद्बहिरस्यति रामपक्षो रामा-

अभ्युपैति पुनर्भूतिं राहुग्रस्तो न कश्चन ॥ १४ ॥

त्वमजानन्निदं राजन्नीडिषे स्म स्वविक्रमम् ।
दातुं नेच्छसि सीतां स्म विषयाणाञ्च नेशिषे ॥ १५ ॥

मन्त्रे जातु वदन्त्यज्ञास्त्वं तानप्यनुमन्यसे ।
कथं नाम भवांस्तत्र नावैति हितमात्मनः ॥ १६ ॥

भिभूतः पुनर्भूतिं नाभ्युपैति कश्चन कश्चिदपि भूतिं न प्राप्नोति एतत्र्य धत्यूट्स्थिति वृद्धिः। अभ्यमीति पाठान्तरं तदयुक्तं छान्दसत्वात् यतः यसो बहुलं छन्दसि इत्यादावनन्तरे सार्वधातुके तरुस्तुशम्यमः सार्वधातुके इतीट् ॥ १४ ॥ ज० म०

स्वर्भानुरित्यादि। स्वर्भानू राहुर्ग्रस्तं ग्रासीकृतं सूर्य्यं कृताह्निकः कृताहारः सन् निष्ठीवति निरस्यति ष्ठिवुक्लमाचम इति दीर्घः आद्यादि ष्ण इत्यादौ ष्ठिववर्जनाच्चादौ षस्य सत्वं राहोव ग्रस्तोऽभिभूतः कश्चित् पुनर्भूतिं वृद्धिं नाभ्युपैति न प्राप्नोति गेधौरनेधिष इति इणवर्जनात् आदिगेचोरिति त्रिः ॥ १४ ॥ भ०

त्वमित्यादि। हे राजन्! त्वमिदं यथोदितमजानन् स्वविक्रमभीड़िषे स्म स्तुतवानसि ईडजनोर्ध्वे चेति चकारात् सेशब्दस्यापीट् एवञ्च कृत्वा त्वं सीतां दातुं नेच्छसि स्म नेष्टवानसि विषयाणां शब्दादीनां नेशिषे स्म विषयाश्च जितवानसि ईशस इतीट् अधीगर्थेति कर्मषष्ठी सर्वत्रापरोक्षे चेति लट् ॥ १५ ॥ ज० म०

त्वमित्यादि। हे राजन्! त्वमिदं यथोक्तम् अजानन् अहमेव शूर इति स्वविक्रमम् ईड़िषे स्म स्तुतवान् ईडजनोस्तुतौ सध्वोरसेमिति इम् स्वपराक्रमाहङ्कारात् सीतां रामाय दातुमर्पयितुं नेच्छसि स्म इषुगमयमां छे स्यादानेत्यादिना इच्छादेशः विषयाणाञ्च न ईशिषे स्म न यथेष्टं विनियुङ्क्ते स्म सध्वोरसेतीम् कर्मणि षष्ठी ॥ १५ ॥ भ०

मन्त्र इत्यादि। मन्त्रविषये अपण्डिताः मूर्खाः सन्तः जातु कदाचिदपि वदन्ति गर्हितमेतत् तानपि त्वमनुमन्यसे अनुमतवान् इद-

अपृष्टोऽनुब्रवीति त्वां मन्त्रे मातामहो हितम्।
न करोमीति पौलस्त्य! तदा मोहात्त्वमुक्तवान् ॥१७॥
त्वं स्म वेत्थ महाराज! यत् स्माह न विभीषणः।
पुरा त्यजसि यत् क्रुद्धो मां निराकृत्य संसदि ॥१८॥

अथ्यतिगर्हितं गर्हायां लडपि जात्वोरिति अपिजात्वोरुपपदयोः कालसामान्ये लट् कथमेतत् न्याय्यं यत्तत्र भवान् रावणः विद्वानपि नात्मनो हितमवैति न विदितवान् विभाषाकथमिति लङ् चेति कथं-शब्द उपपदे चकारात् गर्हायां लट् तत्र भवानिति इतराभ्योऽपि दृश्यन्त इति भवदादियोगे प्रथमान्तात् तल्प्रत्ययः ॥ १६ ॥ ज० म०

मन्त्र इत्यादि। मन्त्रणाविषये अज्ञा मूर्खा जातु कदाचिद्वदन्ति वक्ष्यन्ति गर्हितमेतत् अनधिकारात् तानपि त्वम् अनुमन्यसे अनुमत-वानसि एतदपि गर्हितं जात्वपिभ्यां सर्वाचेष इति कौ अज्ञा अपि वदन्तु तत्र भवान् रावणो विद्वानपि आत्मनो हितं नावैति नाबो-चितवान् कथन्नाम कथमेतदन्याय्यं कथमाखीच वेति कौ ॥ १६ ॥ म०

अपृष्ट इत्यादि। किमस्मिन् काले युज्यत इति मन्त्रे मातामहो माल्यवान् अपृष्टः सन् हितं तु ब्रवीमि हे पौलस्त्य! त्वं पुनर्हित-मकार्षीरिति माल्यवता पृष्टं तदा तस्मिन् काले न करोमीति मोहा-दज्ञानादुक्तवान् अत्र नुशब्दे नशब्दे चोपपदे ननौ पृष्टप्रतिवचन इति भूते धात्वर्थे नन्वोर्विभाषेति विभाषा लट् ॥ १७ ॥ ज० म०

अपृष्ट इत्यादि। त्वया मन्त्रविषये प्रश्ने अपृष्टोऽपि मातामहो माल्यवान् स्वयमुपेत्य त्वां हितं ब्रवीति उक्तवान् अभिधानाद्वर्त्तमान-सामीप्ये कौ पित्रसस्येम् ब्रुव इति इम् हे पौलस्त्य! रावण! न करोमीति मोहादज्ञानात् त्वम् उक्तवान् ॥ १७ ॥ म०

त्वमित्यादि। हे महाराज! विभीषणो यदाह स्म उक्तवान् तत् त्वं न वेत्थ स्म न विदितवानसि किमेतेन हितमुक्तं न वेति उभयत्रापरोक्षे चेति लट् तत्र पूर्वस्मिन् विदो लटो वेति सिपस्थादेशः अपरस्य ब्रुवः पञ्चानामिति तिपो णलादेशः यद्यस्मात्त्वं क्रुद्धः सन् मां संसदि

हविर्जक्षिति निःशङ्को मखेषु मघवानसौ।
प्रवाति स्वेच्छया वायुरुद्गच्छति च भास्करः॥ १९॥
धनानामीशते यक्षा यमो दाम्यति राक्षसान्।
तनोति वरुणः पाशमिन्दुर्नोदीयतेऽधुना॥ २०॥

सभायां निराकृत्य पादप्रहारेण पुरा पूर्वं त्यजसि त्यक्तवानसि पुरि-लुङ् चास्म इति चकाराल्लट्॥ १८॥ ज० म०

त्वमित्यादि। हे महाराज! विभीषणो यदाह स उक्तवान् पक्ष पिप्पलूनवचाहवेति नुवस्तिपस्थाने पक्षे आ चादेशस्य तत्त्वं न वेत्स० न ज्ञातवान् श्रुतवानित्यर्थः वेत्तेः कीपं ठोपं वेति सिपस्थय् यद्यस्मात् क्रुद्धः सन् त्वं सदसि सभायां मां पादप्रहारेण निराकृत्य पुरा पूर्वं त्यजसि त्यक्तवान् यावत्पुरायोर्भव्य इत्यत्र चकाराध्याहा-रात् कौ ओ नातीत इत्यस्मात् अतीत इत्यनुवर्त्तत इति बोध्यं तेनात्र पुरायोगे भूते कौ॥ १८॥ भ०

हविरित्यादि। असौ मघवान् इन्द्रः निःशङ्कः सन् मखेषु यज्ञेषु हविराज्यादिकमधुना जक्षिति भक्षयति रुदादिभ्य इतीट् वायुश्च स्वेच्छया प्रवाति गच्छति प्रवतीति पाठान्तरं पवित्रीकरोतीत्यर्थः भास्करश्च यथेष्टमुद्गच्छति उदेति॥ १९॥ ज० म०

हविरित्यादि। असौ मघवानिन्द्रो निर्भयः सन् मखेषु यज्ञेषु हविर्हवनीयं घृतादिकं जक्षिति भक्षयति रुदादित्वादिम् वायुः स्वे-च्छया वाति गच्छति भास्करः स्वेच्छया उद्गच्छति न वेद तं न यस्मास्ति ऋते त्वयि विपर्ययः इति चतुर्थश्लोकेनान्वयः त्वयि सति एवं नासीदिति भावः॥ १९॥ भ०

धनानामित्यादि। यक्षेन्द्रो धनानामीष्टे स्वयमेव धनस्येशो भवति ईश ऐश्वर्ये यमोऽपि राक्षसान् दाम्यति वशीकरोति वरुणः पाशन्तनोति विस्तारयति इन्दुर्नोदीयतेऽधुना भावे लट् अधुनेति सर्वत्र योज्यम् अरुणेति पाठान्तरम् असंपूर्णत्वात्॥ २०॥ ज० म०

धनानामित्यादि। यक्षा धनानामीशते पालयन्ति ईश्वरङ

श्राम्यत्यृतुसमाहारस्तपस्यन्ति वनौकसः।
नो नमस्यन्ति ते बन्धून् वरिवस्यन्ति नामराः॥ २१॥
श्रीर्न हृष्यति लङ्कायां विरज्यन्ति सहृदयः।
न वेद तन्न यस्यास्ति सुते त्वयि विपर्य्ययः॥ २२॥

ऐश्वर्य्ये मात्तोऽद्रनतः यमो राक्षसान् दास्यति वशीकरोतीति शमा-दित्वाद्दीर्घः वरुणः पाशं तनोति विस्तारयति अधुना इदानीं शशिना ऊदीयते भावे कौ अधुनेति सर्वत्र योज्यं पूर्व्वमेवं नासीदिति भावः ॥ २०॥ भ०

श्राम्यतीत्यादि। ऋतूनां समाहारः सर्व्वा यावस्थानं श्राम्यति अपैति वनौकसो वनवासिनो मुनयः तपस्यन्ति तपश्चरन्ति कर्म्मणो रोमन्थेत्यादिना क्यङ् तपसः परस्मैपदञ्च ते त्वद्बन्धूनमरा नो नम-स्यन्ति न प्रणमन्ति न वरिवस्यन्ति नाप्रतिप्रेषेण परिचरन्ति नमोवरि-वश्चित्रङः क्यच्। यथास्वं हे न्दभुजां पते! ज्योतींषि नक्षत्राणि यथास्वं यथाप्रधानमाक्रमन्ते अधुना इदानीमैरावतो वज्रञ्च न पराजीयते तयोश्च वीर्य्यं वर्द्धते स्म ॥ २१॥ ज० म०

श्राम्यतीत्यादि। ऋतूनां वसन्तादीनां समाहारः सर्व्वा यावस्थानं श्राम्यति वनौकसो मुनयस्तपस्यन्ति तपः कुर्व्वन्ति नमस्तपोवरिव इति क्यः अमरास्तव बन्धून् नो नमस्यन्ति न प्रणमन्ति पूर्व्ववत् क्यः नच वरिवस्यन्ति न परिचरन्ति तव बन्धूनां परिचर्य्यां न कुर्व्वन्तीत्यर्थः पूर्व्ववत् क्यः ॥ २१॥ भ०

श्रीरित्यादि। लङ्कायां पुर्य्याम् अधुना श्रीर्न कुप्यति कुप रोषे कुपिरञ्जोः प्राचां श्यन् परस्मैपदञ्च सहृदयश्च विरज्यन्ति सर्व्वथा तदस्तु न वेद न वेदृमि विदो लटो वेति सिपो णल् यस्य त्वयि स्नुते न विपर्य्ययः नान्यथाभावः ॥ २२॥ ज० म०

श्रीरित्यादि। लङ्कायां श्रीर्न हृष्यति न हृष्टा भवति सहृदयो विभूतयो विरज्यन्ति विरक्ता भवन्ति रञ्ज्यरञ्जसौज्रागे दिवादि-त्वात् श्यन् अपिदृस्य ङित्वात् हृदनलोपोऽयो त्वयि स्नुते सति यस्य

शचीं संस्वजते शक्रो गोपायति हरिः श्रियम् ।
देववन्द्याः प्रमोदन्ते चिन्नीयन्ते घनोदयाः ॥ २३ ॥
बिभ्रत्यस्त्राणि सामर्षा रणकाम्यन्ति चामराः ।
चकासति च मांसादास्तथा रन्ध्रेषु जाग्रति ॥ २४ ॥

विपर्य्ययो नास्ति यस्त्वत्कृतां मर्य्यादां न लङ्घते तमहं न वेद्मि वेत्तेः कीपमिति मिपो णप् ॥ २२ ॥ म०

शक्रमित्यादि । शक्रः शक्रिं प्रहरणमधुना संस्वजते ष्टह्नाति दनृशधनृजस्वजां शपीत्यनुनासिकलोपः हरिर्विष्णुः श्रियं गोपायति आत्मन्येव कृत्वा रक्षति देवदन्द्यः प्रमोदन्ते हृष्यन्ति घनोदयाश्चित्रीयन्ते नानारूपेणाद्भुतायन्ते कृते त्वयीति सर्वत्र योज्यम् ॥ २२ ॥ ज० म०

अन्यमपि विपर्य्ययमाह ।

शचीमित्यादि । शक्रः शचीं संस्वजते सम्यगालिङ्गते चिरं तदकरणात् त्वद्वधहर्षाच्च स्वनृजौञ्जिडालिङ्गे पनृजदनृशस्वनृजोऽपि नलोपः हरिर्विष्णुः श्रियं लक्ष्मीं गोपायति रक्षति एतावन्तं कालं त्वद्गृहे सम्पद्रूपासीति भावः कमङ्कतौ गुपू इति आयः देवानां वन्द्यो हठस्त्रियः प्रमोदन्ते प्रहृष्यन्ति घनोदया मेघाश्चित्रीयन्ते नानाविधा भवन्ति चित्रङ्गाश्चर्य्ये कण्ड्वादि ॥ २३ ॥ म०

बिभ्रतीत्यादि । अमराः सामर्षाः सकोपाः अस्त्राणि बिभ्रति धारयन्ति रणकाम्यन्ति च आत्मनो रणमिच्छन्ति आत्मेच्छायां काम्यच् चकासति चादीप्यन्ते च जक्षित्यादित्वादभ्यस्तसंज्ञायां झेरदादेशः तथा मांसादा राक्षसानाम् अदोऽनन्न इति विट् रन्ध्रेषु व्यसनेषु जाग्रति सावधाना भवन्ति वा ॥ २४ ॥ ज० म०

बिभ्रतीत्यादि । अमराः सामर्षाः सकोपाः सन्तः अस्त्राणि बिभ्रति धारयन्ति बिट्डुभृञ् भृतिपुष्ट्योः ह्वादेरेद्विः पृभ्रादेर्ङिः बिरे आत्मनो रणमिच्छन्ति च तेः काम्यक् स्वेच्छायां चकासति दीप्यन्ते च चकास्ट्चलु दीप्तौ अन्तोऽदेः तथा मांसादा राक्षसानां

चञ्चूर्य्यन्तेऽभितो लङ्कामस्मांश्चाप्यतिशेरते।
भूमयन्ति स्वसामर्थ्यं कीर्त्तिं नः कनयन्ति च ॥२५॥

रन्ध्रेषु जाग्रति सावधाना भवन्ति, जागृ खलु जागरे ॥ २४ ॥ म०

चञ्चूर्य्यन्त इत्यादि। लङ्कामभितः वाह्यतोऽभ्यन्तरतश्च पर्य्यभिभ्यां सर्वोभयार्थे तसिः चञ्चूर्य्यन्ते गर्हितं चरन्ति लुपसदेति भावगर्हायां यङ् चरफलोश्चेत्यभ्यासस्य नुक् उत्परस्यात इत्युत्वम् अतिशेरते च अतिशयिता भवन्ति च स्वसामर्थ्यं भूमयन्ति बहूनां भाव इति पृथ्वादिभ्य इमनिच् बहोर्लोपो भू च बहोरिति बहोर्भू बादेशः इमनि हादिलोपश्च भूमानं कुर्वतीति णिचि णाविष्ठवत्प्रातिपदिकस्येतीष्ठवद्भावात् टिलोपयणादिपरलोपः चिण्मतोर्लुगर्थमिति वचनाद्वा टिलोपः किञ्च नोऽस्माकं कीर्त्तिं कनयन्ति अल्पां कुर्वन्ति अमरा इति योज्यम् अल्पां कुर्वन्तीति णिचि णाविष्ठवद्भावाद्युवाल्पयोः कनन्यतरस्यामिति कनादेशः ॥ २५ ॥ ज० म०

चञ्चूर्य्यन्त इत्यादि। अमरा इत्यनुषज्यते लङ्काम् अभितः उभयतो वाह्यतोऽभ्यन्तरतश्च चञ्चूर्य्यन्ते गर्हितं चरन्ति परिभ्रमन्तीत्यर्थः गत्यर्थाद्धृगलुपसदचरेति यङ् चरफलोरुच्चोङ् इति सेर्नुण् उङ उकारस्य लङ्कामिति धिकसमयेति द्वी तथा अस्मानपि अतिशेरते अतिक्रामन्ति शिङोरेणुः मान्तोरम् मान्तोऽदनतः स्वसामर्थ्यं स्वशक्तिं भूमयन्ति वर्द्धयन्ति बहोर्भावे भूमादेशः भूयो भूमन्भूयिष्ठा इति निपातनात् बहुशब्दस्य इमनप्रत्ययान्तस्य रूपं तं करोतीति वेः तत्वाख्यानेञिः ञीसंश्चेति ङितः टेर्लोपः भावयन्तीति क्वचित्पाठः तदा बहुशब्दस्य ञौ भ्वादेशः स्यादिति परः स्वमते भूधातोर्ञ्यन्तस्य रूपम्। एतावन्त कालमनवस्थितत्वादुज्ज्वलयन्तीत्यर्थः भूययन्तीति क्वचित्पाठः तदा बहुशब्दस्य ञौ भूयादेशो वेति परः स्वमते बहुशब्दस्य ईयसौ भूय इति रूपं तस्मात् ञिः बहुतरं कुर्वन्तीत्यर्थः तथा नोऽस्माकं कीर्त्तिं कनयन्ति अल्पयन्ति अल्पशब्दात् पूर्ववत् ञिः युवाल्पौकन्वेति कनादेशः ॥ २५ ॥ म०

दिशोऽत्यश्नुवते दृप्तास्त्वत्कृतां जहति स्थितिम् ।
चोदयन्ति च नः क्षुद्राः हसन्तस्त्वां विपन्नतम् ॥२६॥
शमं शमं नभस्वन्तः पुनन्ति परितो जगत् ।
उज्जिहीषे महाराज ! त्वं प्रशान्तो न किं पुनः ॥२७॥
प्रोर्णोति शोकचित्तं मे सत्त्वं संशाम्यतीव मे ।

दिश इत्यादि । दृप्ताः सन्तः दिशो व्यश्नुवते व्याप्नुवन्ति स्थितिं व्यवस्थां त्वत्कृतां प्रत्ययोत्तरपदयोश्चेति त्वदादेशः जहति त्यजन्ति विपन्नतश्च त्वां हसन्ति क्षुद्राः अल्पकायाः चोदयन्तीव क्षुद्रमिवाचक्षत इति भुवने यो हि न्यक्कृतलिलोकः स कथं क्षुद्र उच्यते स्थूलदूरेत्यादिना चोयणादिपरलोपः पूर्वस्य च गुणः ॥ २६ ॥ ज० म०

दिश इत्यादि । चलाप्सरा इत्यनुषज्यते दृप्ताः सन्तो दिशो व्यश्नुवते व्याप्नुवन्ति अशूङ् व्याप्तिसंहत्योः श्नुध्वोरित्युवः आत्मोऽदनतः त्वया कृतां स्थितिं व्यवस्थां जहति त्यजन्ति ओहाक् त्यागे श्नाद्योरालोपः अत्तोऽदुक्तेः क्षुद्रा अल्पा अपि विपन्नतं त्वां हसन्तो नोऽस्मान् क्षुद्रान् कुर्वन्त्याचक्षते वा क्षुद्रशब्दात् पूर्ववत् णिः वाढ़ान्तिकेत्यादिना चोदादेशः दृप्ता दुष्टलोकाः क्षुद्राः क्षुद्रलोका इत्यन्ये ॥२६॥ भ०

शममित्यादि । नभस्वन्तो वायवः शमं शमं शान्त्वा शान्त्वा आभीक्ष्ण्ये णमुल् नोदात्तेति वृद्धिप्रतिषेधः आभीक्ष्ण्ये द्वे भवतः परितः सर्वतो जगत् पुनन्ति पवित्रयन्ति प्रशान्ता अपि पुनर्भूत्वा जगत् पुनन्ति, हे महाराज ! त्वं पुनः प्रशान्तोऽपि किन्नोज्जिहीषे नोत्तिष्ठसि ओहाङ्गतावित्यस्यासस्य श्नाभित् पुनाश्यादिन ईत्वम् ॥ २७ ॥ज०म०

शममित्यादि । नभस्वन्तो वायवः शमं शमं शान्त्वा शान्त्वा परितो सर्वतो जगत् पुनन्ति पवित्रयन्ति पूञ्शिच चकारात् शोधे त्वादेः लोने इति हुस्वः चणंवाभीक्ष्ण्ये इति शमेश्चणम् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धं हे महाराज ! त्वं पुनः प्रशान्तः सन् किं न उज्जिहीषे न उद्गच्छसि ओहांङ् गतौ श्नाद्योरालोप इति ईः ॥२७॥ भ०

प्रोर्णोतीत्यादि । हे महाराज ! त्वया विना शोको मम चित्तं

प्रमार्ष्टि दुःखमालोकं मुञ्चाम्यूर्जं त्वया विना ॥२८॥
के न संविद्रते नान्यस्त्वत्तो बान्धववत्सलः ।
विरौमि शून्ये प्रोर्णौमि कथं मन्युसमुद्भवम् ॥ २९ ॥
रोदिम्यनाथमात्मानं बन्धुना रहितस्त्वया ।
प्रमाणं नोपकाराणामवगच्छामि यस्य ते ॥ ३० ॥

प्रोर्णौति आच्छादयति स त्वम् अवष्टब्धः संशाम्यतीव अपगच्छतीव मां त्यजतीत्यर्थः दुःखञ्च कर्तृ आलोकं प्रज्ञानं प्रमार्ष्टि अपनयति अतस्त्वया विना ऊर्जं बलं मुञ्चामि अलसो भवामीत्यर्थः ॥२८॥ ज० म०

प्रोर्णौतीत्यादि । हे महाराज ! शोको मे मम चित्तं प्रोर्णौति योर्णोः पिद्वत्त्वे णुरिति पक्षे णुः प्रोर्णौतीति पाठे गुणाभावपक्षेऽ-पिद्वस्तुत इति त्रिः सत्त्वं शाम्यतीव शान्तमिव दुःखं कर्तृ आलोक-मालोचनं प्रमार्ष्टि निबोधयति ऊर्णोऽकङिति त्रिः ऊर्जम् ऊर्ज-स्वलत्वं मुञ्चामि मुचॢशपज्जोमोच्चे तुण् न त्वया विनेति सर्वत्र योज्यम् ॥ २८ ॥ भ०

के नेत्यादि । त्वत्तोऽन्यो बान्धववत्सलो नेति के न संविद्रते न जानते समोगमिति तङ् वेत्तेर्विभाषेति रुट् बन्धुरेव बान्धवः प्रज्ञा-दित्वादण् अतोऽहं शून्ये बन्धुविरहिते विरौमि फुत्करोमि कथं केन प्रकारेण मन्युसमुद्भवं शोकोत्पादं प्रोर्णौमि आच्छादयामि ॥ २९ ॥ ज० म०

के नेत्यादि । त्वत्तोऽन्यो बान्धवेषु वत्सलः स्नेहवान् नास्ति इति के जना न जानन्ति समोगमृच्छेत्यादिना वेत्तेर्न भान्तोरम् विदस्तु वेति पाक्षिको रम् अहं शून्ये बन्धुरहितप्रदेशे विरौमि शब्दं करोमि रुशब्दनौ रपिद्वस्तुत इति त्रिः कथं केन प्रकारेण मन्युसमु-द्भवं शोकोन्मादं प्रोर्णौमि आच्छादयामि वोर्णोःपिदित्यस्याप्रवृत्तिपक्षे पूर्ववद्वृद्धिः ॥ २९ ॥ भ०

रोदिमीत्यादि । त्वया बन्धुना रहितत्वादनाथोऽस्मीति आत्मा-

नेदानीं शक्रयचेन्द्रौ विभीतो न दरिद्रितः ।
न गर्वं जहितो दृप्तौ न क्लिश्नीतो दशानन ! ॥ २१ ॥
त्वयापि नाम रहिताः कार्य्याणि तनुमो वयम् ।
कुर्मश्च जीविते बुद्धिं धिक् तृष्णां क्षतनाशिनीम् ॥ २२ ॥

नमेव रोदिमि न त्वां कृतकार्यं यस्य ते उपकाराणां प्रमाणमियत्तां नावगच्छामि ॥ २० ॥ ज० म०

रोदिमीत्यादि । बन्धुना त्वया रहितोऽहम् अतएव नाथहीनमात्मानं रोदिमि त्वामुपकृत्य सशब्दक्रन्दनेन युक्तं करोमि रुद्नोऽश्र इति इम् यस्य ते तव उपकाराणां प्रमाणं संख्यां नावगच्छामि न जानामि अपरिमितत्वात् संख्यां कर्त्तुं न शक्नोमीत्यर्थः ॥ २० ॥ म०

नेदानीमित्यादि । इदानीं त्वय्येवंभूते शक्रयचेन्द्रौ न विभीतः न भयं कुरुतः भियोऽन्यतरस्यामिति इत्वभावपक्षे रूपं न दरिद्रितः दरिद्रौ न भवतः इद्दरिद्रस्येति इत्वादौ क्ङिति सार्वधातुक इत् दृप्तौ न गर्वं जहितः परित्यजतः जहातेश्चेतीत्वं न क्लिश्नीतः क्लेशं नानुभवतः ईहल्यघोरितीत्वम् ॥ २१ ॥ ज० म०

नेदानीमित्यादि । हे दशानन ! इदानीं त्वयि मृते इन्द्रकुबेरौ न भयं कुरुतः ञिभीञ्भियाऽ न दरिद्रितः न दीनतां गच्छतः दरिद्राच्लुदुर्गत्यां दरिद्रो ङिर्हसे णाविति ङिः दृप्तौ मत्तौ नाहङ्कारं परित्यजतः ओहाक् त्यागे पूर्वेण पक्षे ङिः न क्लेशमनुभवतः क्लिश्नूग विबाधे आद्योरिति ईः ॥ २१ ॥ भ०

त्वयेत्यादि । यद्वयं त्वया विना कार्य्याणि राज्याङ्गानि तनुमः प्रसारयिष्यामः जीविते च बुद्धिं कुर्मः तदिमां कार्य्यं जीविते च तृष्णां क्षतनाशिनीं धिक् गर्हणीयां वदपि ज्ञात्वोरिति भविष्यति लट् ॥ २२ ॥ ज० म०

त्वयापीत्यादि । त्वयापि रहितास्त्यक्ता वयं कार्य्याणि तनुमः विस्तारयामः तनुञ् विस्तृतौ नूपोऽस्यस्येत्यस्याप्रवृत्तिपक्षे रूपं नाम

त्वयेच्छि देहमात्मीयं त्वं वाचं न ददासि चेत्।
द्राघयन्ति हि मे शोकं स्मर्य्यमाणा गुणास्तव ॥२३॥
उन्मुच्य स्रजमात्मीयां मां स्रजयति को हसन्।
नेदयत्यासनं को मे को हि मे वदति प्रियम् ॥२४॥

प्रकाशे तथा जीविते बुद्धिमायां कुर्मः कुरङ्गोपोभ्वत्र इति लुपो लोपः व्यं नचतयीत्यादौ कुर्वर्जनात्न दीर्घः तस्मात् सततनाशिनीं सतघ्नीं तृष्णां धिगस्तु ॥ २२ ॥ भ०

त्वयेच्छीत्यादि। मम प्रतिवचनं न ददासि चेत् यदि त्वं तर्हि आत्मीयं देहं त्वयेच्छि हन्मि त्वचङ इम् हि यस्मात् स्मर्य्यमाणास्तव गुणाः मम शोकं द्राघयन्ति दीर्घं कुर्वन्ति णाविष्ठवद्भावेन प्रियस्थिरे-त्यादिना दीर्घशब्दस्य द्राघादेशः ॥ २३ ॥ ज० म०

त्वयेच्छीत्यादि। चेद्यदि त्वं वाचं न ददासि तदात्मीयं देहं त्वयेच्छि छिनद्मि त्वहशत्नभूशहिंसे त्वह इन् पिद्वत्से हि यस्मात् तव गुणाः स्मर्य्यमाणाः सन्तः नोऽस्माकं शोकान् द्राघयन्ति दीर्घान् कुर्वन्ति दीर्घशब्दात् णेः सत्याख्याने इति ञिः वाढान्तिकेति द्राघा-देशः ॥ २२ ॥ भ०

उन्मुच्येत्यादि। आत्मीयां स्रजं मालामुन्मुच्यापनीय देहात् हसन् परितोषात् को मां स्रजयति स्रग्विणं करोति णाविष्ठवद्भावात् विन्मतोर्लुगिति विनो लुक् प्रकृत्यैकाजिति टिलोपाभावः को वा ममा-सनं नेदयति अन्तिकं करोति अत्रापि णौ इष्ठवद्भावादन्तिकवाढयो-र्नेदसाधाविति अन्तिकशब्दस्य नेदादेशः कर्हि कदा को मे प्रियं वदति वदिष्यति विभाषाकदाकर्ह्योरिति भविष्यति लट् ॥ २४ ॥ ज० म०

उन्मुच्येत्यादि। आत्मीयां मालाम् उन्मुच्य अपनीय परि-तोषात् हसन् को मां स्रजयति स्रग्विणं करोति पूर्ववन्ञिः लुङ्-मद्वदिनामिति विन्लुक् को वा मे मम आसनं नेदयति अन्तिकं करोति पूर्ववन्ञिः नेदादेशश्च कर्हि कदा को वा मह्यं प्रियं वदति वदिष्यति त्वया विनेति शेषः कदाकर्ह्योर्वेति भव्ये कौ ॥ २४ ॥ भ०

न गच्छामि पुरा लङ्कामायुर्यावद्धाम्यहम् ।
कदा भवति मे प्रीतिस्त्वां पश्यामि न चेदहम् ॥३५॥
ऊर्द्ध्वं म्रिये मुहूर्त्तादि विह्वलः च्युतबान्धवः ।
मन्त्रे स्म हितमाख्यामि न करोमि तवाप्रियम् ॥३६॥

न गच्छामीत्यादि । यावदहमायुर्दधामि धारयिष्यामि यावत् पुरानिपातयोर्लडिति भविष्यति लट् पुराशब्दोऽत्र भविष्यदासत्तिमाह प्रीतेर्हि लङ्काप्रवेशः इति दर्शयन्नाह चेद्यद्यहं त्वां जीवन्तं न पश्यामि वर्त्तमाने लट् कदा कस्मिन् काले मे मम प्रीतिर्भवति भविष्यति विभाषाकदाकर्ह्योरिति भविष्यति लट् ॥ २५ ॥ ज० म०

न गच्छामीत्यादि । यावदहमायुर्दधामि धारयिष्यामि तावत् पुरा लङ्कां न गच्छामि यावत्पुराभ्यां भव्य इति की पुराशब्दो भविष्यदासत्तिमाह लङ्काप्रवेशस्य कारणं प्रीतिस्ततोच्यते कदा मम प्रीतिर्भवति कदाकर्हिभ्यां वेति चेद्यदि त्वां जीवन्तं न पश्यामि ॥ २५ ॥ भ०

ऊर्द्ध्वमित्यादि । मुहूर्त्तादूर्द्ध्वम् उपरि अहं म्रिये मरिष्यामि च्युतबान्धवत्वात् विह्वलः सन् अनेन मरणस्य निमित्तभूतं प्राप्तकालं लोडर्थं दर्शयति तेन लिडोर्द्ध्वं मौहूर्त्तिक इति लोडर्थलक्षणे भविष्यति लट् लोडर्थस्य प्रैषादिकः म्रियतेर्लुङ्लिङोश्चेति चकारात् शितश्चात्मनेपदम् अन्यच्च मन्त्रे मन्त्रविषये हितमाख्यामि स्म आख्यातवानहम् अपरोक्षे वेति लट् ममाप्रियं मा कार्षीरिति पृष्टः सन्नहं न करोमि तवाप्रियमिति न कृतवानस्मि नन्वोर्विभाषेति पृष्टप्रतिवचने लट् ॥ २६ ॥ ज० म०

ऊर्द्ध्वमित्यादि । च्युतबान्धवत्वाद्विह्वलो व्याकुलोऽहं मुहूर्त्तादूर्द्ध्वं म्रिये मरिष्यामि प्राप्तकालोऽहमित्यर्थः । अभिधानाद्वर्त्तमानप्राये लो लडन्टीयं मन्त्रविषये हितमाख्यामि स्म उक्तवान् स्याख्यातो कथने तवाप्रियं न करोमि स्म न कृतवान् स्मेत्यनुपज्यते की स्मे नातीत इति लरस्माख्याभ्यां भूते कीति परः ॥ २६ ॥ भ०

अन्तःपुराणि पौलस्त्यं पौराश्च भृशदुःखिताः।
संश्रुत्य स्माभिधावन्ति हतं रामेण संयुगे ॥ २७ ॥
मूर्द्धजान् स्म विलुञ्चन्ति क्रोशन्ति स्मातिविह्वलाः।
आध्यायन्त्युपकाराणां मुहुर्भर्त्तुः प्रमन्यवः ॥२८॥
रावणस्य नमन्ति स्म पौराः साम्रा रुदन्ति च।
भाषते स्म ततो रामो वचः पौलस्त्यमाकुलम् ॥२९॥

अन्तःपुराणीत्यादि। अनन्तरं पौलस्त्यं रामेण हतं संश्रुत्य अन्तःपुराणि पौराश्च दुःखिताः अभिधावन्ति स्म ढौकन्ते स्म लट् स्म इति भूतानद्यतनपरोक्षे लट् ॥ २७ ॥ ज० म०

अन्तःपुराणीत्यादि। अथ अन्तःपुराणि पौराश्च संयुगे युद्धे रामेण हतं पौलस्त्यं रावणं संश्रुत्य श्रुत्वा अत्यर्थं दुःखिताः सन्तः अभिधावन्ति स्म वेगेनाभिमुख्यं गच्छन्ति स्म ॥ २७ ॥ भ०

मूर्द्धजानित्यादि। केशान्विलुञ्चन्ति अपनयन्ति स्म अतिविह्वलम् अतिवैक्लव्यं गुणप्रधानो निर्देशः क्रोशन्ति स्म फुत्कारं कुर्वन्ति स्म अन्तःपुराणीत्यर्थः। भर्त्तुश्चोपकाराणां मुहुरध्यायन्ति स्म इकस्मरणे अधीगर्थेति कर्मणि षष्ठी प्रमन्यु चेति क्रियाविशेषणं सकष्टशोकमित्यर्थः। प्रमन्यव इति पाठान्तरं सकष्टशोका इत्यर्थः ॥ २८ ॥ ज० म०

मूर्द्धजानित्यादि। अन्तःपुराणि पौराश्चेत्यनुषज्यते मूर्द्धजान् केशान् विलुञ्चन्ति स्म अपनयन्ति स्म लुञ्चापनयने अतिव्याकुलाः सन्तः क्रोशन्ति स्म रोदनं कुर्वन्ति स्म क्रुशआरोदे इतौ भर्त्तुरुपकाराणां मुहुर्वारंवारं ध्यायन्ति स्म कर्मणि षष्ठी पादाविल्यध्याहरन्त्यन्ये ॥२८॥ भ०

रावणस्येत्यादि। पौराश्च रावणस्य नमन्ति स्म नमस्यन्ति पादाविलर्थात् तत्रावस्थितास्तास्तास्त सन्तः रुदन्ति च स्म ततोऽनन्तरं रामः पौलस्त्यं विभीषणम् आकुलं वचो भाषते स्म उक्तवान् ॥२९॥ ज० म०

रावणस्येत्यादि। पौरा रावणस्य नमन्ति स्म नमस्यन्ति स्म कर्मणि षष्ठी पादाविल्यध्याहरन्त्यन्ये। ततः साम्राः सन्तो रुदन्ति स्म अश्रुदितन-

दातुः स्नातुर्द्विषां मूर्ध्नि यष्टुस्तर्पयितुः पितॄन्।
युद्धाभग्नाविपन्नस्य किं दशास्यस्य शोचसि ॥ ४० ॥
बोभवीति न सम्मोहो व्यसनेषु स्म भवादृशाम्।
किं न पश्यसि सर्वोऽयं जनस्त्वामवलम्बते ॥ ४१ ॥
त्वमर्हसि भ्रातुरनन्तराणि
कर्त्तुं जनस्यास्य च शोकभङ्गम्।

वन्तः हनध्वनौ। ततोऽनन्तरं रामः व्याकुलं पौलस्त्यं विभीषणं वचो वक्ष्यमाणं भाषते स्म उक्तवान् ॥ ३९ ॥ भ०

दातुरित्यादि। दशास्यो दाता द्विषां मूर्ध्नि स्नाता यष्टा यज्ञानां पितॄन् तर्पयिता तृप तृप्तौ चुरादिः युधि देवादीनां संग्रामेऽभग्नः अविपन्नः तस्यैवंविधस्य किं शोचसि शोच्यमेव नास्ति वर्त्तमाने लट् ॥ ४० ॥ ज० म०

दातुरित्यादि। हे विभीषण! दशास्यस्य किं शोचसि अस्य शोच्यमेव नास्तीत्यर्थः। कीदृशस्य दातुर्धनादीनां द्विषां शत्रूणां मूर्ध्नि स्नातुः यष्टुर्यज्ञानां पितॄन् तर्पयितुस्तर्पणशीलस्य युधि देवानां संग्रामे अभग्नाविपन्नस्य अपलायनकृतस्य ॥ ४० ॥ भ०

बोभवीतीत्यादि। भवादृशां युष्मद्विधानां व्यसनेषु दुःखेषु सम्मोहः अज्ञानं न बोभवीति अत्यर्थं न भवति यङ्लुकि रूपम् एवञ्च सति स्वार्थो न हीयते यतः किं न पश्यसि अयं सर्वो जनः त्वामवलम्बते त्वमेव स्वामीति प्रतीच्छते ॥ ४१ ॥ ज० म०

बोभवीतीत्यादि। भवादृशां भवद्विधानां ज्ञानिनां कृच्छ्रेषु व्यसनेष्वपि सम्मोहोऽज्ञानं न बोभवीति नात्यर्थं भवति यङो लुकि पिच्चस्सेमिति इम् अयं सर्वो जनो रावणानुगतस्त्वाम् अवलम्बते आश्रयति एतत् किं न पश्यसि ॥ ४१ ॥ भ०

त्वमर्हसीत्यादि। तस्मात् भ्रातुरनन्तराण्यग्निसात्कारादीनि कर्त्तुं त्वमर्हसि युज्यसे अस्य च जनस्य शोकभङ्गं शोकापनयनं कर्त्तुञ्च

धुर्य्ये विपन्ने त्वयि राज्यभारो
मज्जत्यनूढ़ः क्षणदाचरेन्द्र ! ॥ ४२ ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लड्विलसितो
नामाष्टादशः सर्गः ।

---

अन्यथा त्वयि धुर्य्ये धुरं वहति विपन्ने विनष्टे सति हे क्षणदाचरेन्द्र ! राज्यभारो अनूढ़ो अन्यैरनधिष्ठितः सन् मज्जति अधोयाति शत्रुभिर्विनश्यति तस्मात् त्वया समाहितेन राज्यभारो वोढव्य इति ॥ ४२ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लड्विलसितो नाम पञ्चमः परिच्छेदः ।

काव्यस्य विभीषणप्रलापो नाम अष्टादशः सर्गः ।

त्वमर्हसीत्यादि । तथा त्वं भ्रातुरनन्तराणि अग्निकार्य्यादीनि कर्त्तुमस्य त्वामाश्रयतः सर्वस्य जनस्य शोकभङ्गं शोकापनयनञ्च कर्त्तुं त्वम् अर्हसि अन्यथा हे क्षणदाचरेन्द्र ! त्वयि धुर्य्ये धुर्वहे विपन्ने नष्टे सति अयं राज्यभारोऽनूढ़ोऽधृतः सन् मज्जति अधोगच्छति ॥४२॥ म०

इति महैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां विभीषणविलापो नामाष्टादशः सर्गः ।

---

# ऊनविंशः सर्गः ।

अपमन्युस्ततो वाक्यं पौलस्त्यो राममुक्तवान् ।
अशोच्योऽपि व्रजन्नस्तं सनाभिर्दुनुयान्न किम् ॥ १ ॥
ततो दैवाविधेयास्युर्येन रावणवद्वयम् ।
सपत्नांश्चाधिजीयास्म संग्रामे च मृषीमहि ॥ २ ॥

इतः प्रभृति लिङमधिकृत्य विलसितमाह तत्र विध्यादिषु लिङ् ततोऽन्यत्रापि दर्शयिष्यति ।

उपमन्युरित्यादि । ततोऽनन्तरं पौलस्त्यो विभीषण उपगतशोक उपगतो मन्युर्यस्य प्रादिभ्यो धातुजस्य बहुव्रीहिर्वा चोत्तरपदे लोपश्च रामं वाक्यमुक्तवान् देव ! किमेवमभिधत्से अशोच्य इति यतः सनाभिः सगोत्रोऽस्तं व्रजन् विनाशं गच्छन्नशोच्योऽपि सन् किं न दुनुयात् नियोगेन अवश्यतया किं नोपतापयेत् निमन्त्रणे नियोगकरणे लिङ् ॥ १ ॥ ज० म०

अथ श्लोकावधिकृत्योच्यते तयोः परमते लिङिति संज्ञा ।

अपमन्युरित्यादि । ततोऽनन्तरम् अपगतशोकः पौलस्त्यो विभीषणो रामं वाक्यमुक्तवान् किं तदित्याह अशोच्योऽपि सनाभिः सगोत्रः अस्तं विनाशं व्रजन् किं न दुनुयात् अपितु तापयत्येव श्लोकेन अनुतापे विधिनिमन्त्रणेत्यादिना नियोगकरणे लो ॥ १ ॥ भ०

तत इत्यादि । युष्मद्वचनादात्मा मया स्थिरीकृतः किन्त्विदमाशंसे तमुपायं नोऽस्माकं दैवाविधेयास्तुः घुमास्थेत्यनुवृत्तौ एलिंङीत्येकारादेशः येनोपायेन रावणवत् सपत्नान् वयमधिजीयास्म उपसर्गेण धात्वर्थो बलादन्यत्र नीयत इति सकर्मकता संग्रामे च मृषीमहि

क्रियेरन् दशास्येन यथान्येनापि नः कुले ।
देवद्र्यञ्चो नराहारा न्यञ्चश्च द्विषतां गणाः ॥ ३ ॥
स एव धारयेत्प्राणानीदृशे बन्धुविप्लवे ।
भवेदाश्वासको यस्य सुहृच्छक्तो भवादृशः ॥ ४ ॥

लिङन्तेति लिङः कित्त्वान्न गुणः आर्द्धधातुकत्वान्न सलोपः सर्वत्रै-
वाशिषि लिङ् ॥ २ ॥ ज० म०

तत्र इत्यादि । देवा नोऽस्माकं तद्विधेयास्तु कुर्वन्तु आशिषि
दाभागेह्वागिति धाञो दासंज्ञत्वात् ङेः येन रावणवत् सपत्नान् वैरि-
णो वयम् अधिजीयास्म मारयामः पूर्ववदाशिषि ठौ यौऽज्वरे युद्धे
भूषीमहि प्राणान् त्यजामः अनाप्याशिषि ठौ इणुङर्नंदौति कित्त्वाद्
गुणाभावः एतेन युष्मद्वचनात् मया स्थिरीकृतोऽन्तरात्मा किन्तु युष्म-
त्प्रसादादेवमेवं भवत्विति भावः ॥ २ ॥ भ०

क्रियेरन्नित्यादि । यथा दशास्येन नराहाराः राक्षसाः देव-
द्र्यञ्चः देवैः सहाञ्चतो गच्छन्तः क्रियेरन् कृताः विष्वग्देवयोश्चेत्यादिना
देवशब्दाकारस्याद्र्यादेशः द्विषताञ्च गणाः न्यञ्चः नीचैरञ्चन्तः कृताः
तिरस्कृताः तथा नोऽस्माकं कुले अन्येनापि क्रियेरन् आशंसायां कर्मणि
लिङ् कृषीरन्निति वा पाठः आशिषि कर्मणि लिङ् ॥ २ ॥ ज० म०

क्रियेरन्नित्यादि । यथा दशास्येन नराहारा राक्षसा देवद्र्यञ्चो
देवानञ्चन्तो गच्छन्तः कृताः द्विषतां शत्रूणां गणाश्च न्यञ्चो निकृष्टम-
ञ्चन्तो गच्छन्तः कृताः तिरस्कृता इत्यर्थः तथा नोऽस्माकं कुलेऽन्ये-
नापि क्रियेरन् इत्यहमाशंसे विधिनिमन्त्रणेति आदिशब्दात् पर-
क्रियाशंसायां स्त्री सम्भ्रमे वा कर्मणि यक् अद्रिः देवानञ्चतीति क्विप्
श्चिविष्वग्देवस्य टेरिति टेरद्रिः ॥ २ ॥ भ०

स एवेत्यादि । ईदृशे बन्धुविप्लवे बन्धुविनाशेऽपि स एव प्राणान्
धारयेत् नियोगतो बिभृयात् निमन्त्रणे नियोगकरणे लिङ् यस्य भवा-
दृशः सुहृन्मित्रं यस्त आश्वासकः सान्त्वयिता भवेत् सम्भाव्येत सम्भाव-
नायां लिङ् ॥ ४ ॥ ज० म०

म्रियेयोर्द्ध्वं मुहूर्त्तादि न स्यास्त्वं यदि मे गतिः ।
आशंसा न हि नः प्रेते जीवेम दशमूर्द्धनि ॥ ५ ॥
प्रकुर्य्याम वयं देशे गर्ह्यां तत्र कथं रतिम् ।
यत्र विंशतिहस्तस्य न सोदर्य्यस्य सम्भवः ॥ ६ ॥

स एवेत्यादि । ईदृशे बन्धूनां विघ्ने विनाशे स एव प्राणान् धारयेत् नियोगतः धारयेत् विधिनिमन्त्रणेति आदिशब्दात् नियोगकरणे लिङ् यस्य भवादृशः शक्तः समर्थः सुहृन्मित्रम् आश्वासकः सान्त्वयिता भवेत् सम्भवति प्रोच्यासम्भावन इति लिङ् ॥ ४ ॥ भ०

म्रियेयेत्यादि । यदि मे मम गतिः शरणं त्वं न स्याः न भवेः लिङ् तदा यस्मिन्मुहूर्त्ते रावणोऽपि नष्टः तस्मान्मुहूर्त्तादूर्द्ध्वं म्रियेय नियोगतः प्राप्तकालः प्राणांस्त्यक्तवानहम् अत्र प्राप्तकाले गम्यमाने चार्द्धमौहूर्त्तिक इति भूते लिङ् तत्र हि मैषादयोऽनुवर्त्तन्ते म्रियतेर्लुङ् लिङश्चेति लङ् ततः सार्वधातुकत्वात् शः हि यस्मान्नोऽस्माकं मेयमाशंसा यद्दशमूर्द्धनि दशानने प्रेते मृते त्वयि वा शरणे जीवेम प्राणान् धारयिष्याम इति अत्राशंसावचनस्योपपदत्वात् लिङ् ॥ ५ ॥ ज० म०

म्रियेयोर्द्ध्वमित्यादि । यदि त्वं मे मम गतिस्तारको न स्याः न भवेः तदा यस्मिन् मुहूर्त्ते रावणो मृतस्तस्मान्मुहूर्त्तादूर्द्ध्वमहं म्रियेय प्राप्तकालः सन् प्राणांस्त्यक्ष्यानहं विधिनिमन्त्रणेति लिङ् हि यस्मान्नोऽस्माकमियमाशङ्का इष्टाशंसनं दशमूर्द्धनि रावणे प्रेते मृते सति वयं न जीवेम प्राणान्न धारयामेति शीचेच्छार्थैरिति कामोक्तौ लिङ् ॥ ५ ॥ भ०

प्रकुर्य्यामित्यादि । यत्र देशे सोदर्य्यस्य भ्रातुर्विंशतिहस्तस्य न सम्भवोऽस्ति तत्र कथं वयं गर्ह्यां निन्द्यां रतिं प्रकुर्य्याम करिष्यामः नैवेत्यर्थः अत्र गर्हायामित्यधिकृत्य विभाषाकथमिति लिङ् चेति कथमित्युपपदे भविष्यति लिङ् ॥ ६ ॥ ज० म०

प्रकुर्य्यामित्यादि । यत्र देशे सोदर्य्यस्य सहोदरस्य विंशतिहस्तस्य

आमन्त्रयेत तान् प्रह्वान् मन्त्रिणोऽथ विभीषणः।
गच्छेत त्वरितं लङ्कां राजवेश्म विशेत च ॥ ७ ॥
आददीध्वं महार्हाणि तत्र वासांसि सत्वराः।
उद्धुनीयात सत्केतून् निर्हरेतागुरुचन्दनम् ॥ ८ ॥
मुञ्चेताकाशधूपांश्च ग्रथ्नीयात स्रजः शुभाः।
आनयेतामितं दारु कर्पूरागुरुकुङ्कुमम् ॥ ९ ॥

रावणस्य सम्प्रयो नास्ति दुर्लभत्वात् तत्र देशे कथं गर्हां निन्दां रतिं वयं प्रकुर्य्याम करिष्यामः नैवेत्यर्थः कथमाख्यी च वेति ख्यौ ॥ ६ ॥ भ०

आमन्त्रयेतेत्यादि। अथानन्तरं विभीषणः सदसि यैर्मन्त्रिभिः सह वर्त्तितः तान्मन्त्रिणः प्रह्वानामन्त्रयेत कर्मसु नियोगतः संविहितवानित्यर्थः निमन्त्रणे नियोगकरणे लिङ्। तदेव दर्शयति लङ्कां त्वरितं यूयङ्गच्छेत यात गताश्च राजवेश्म विशेत च अत्र विधौ प्रेषणे लिङ् स हि सर्वलकाराणामपवादः ॥ ७ ॥ ज० म०

आमन्त्रयेतेत्यादि। अथानन्तरं प्रह्वान् प्रणतान् मन्त्रिणो विभीषण आमन्त्रयेत सम्बोधितवान् सम्बोधनार्थस्यामन्त्रणं विधिनिमन्त्रणेति प्रेषणे ख्यौ अध्येषणे विधौ वा ॥ ७ ॥ भ०

आददीध्वमित्यादि। तत्र राजवेश्मनि वासांसि महार्हाणि महामूल्यानि सत्वरा आददीध्वं गृह्णीत आश्वस्तयोरात इत्याकारलोपः सत्केतून् शोभनध्वजान् उद्धुनीयात ऊर्द्ध्वीकरिष्यथ पवदीनां ह्रस्वः ईहल्यघोः अगुरुचन्दनं सच्चन्दनकाष्ठानि निर्हरेत निर्गमयत ॥ ८ ॥ ज० म०

आददीध्वमित्यादि। तत्र राजवेश्मनि स्थितानि महामूल्यानि वासांसि यूयं सत्वराः सन्तः आददीध्वं ग्रहीष्यथ सत्केतून् शोभनध्वजान् उद्धुनीयात ऊर्द्ध्वं करिष्यथ धूनगिधूञकम्पे अगुरुचन्दनं शोभनचन्दनं निर्हरेत निर्हरिष्यथ ॥ ८ ॥ भ०

मुञ्चेतेत्यादि। धूपघटिकाभिराकाशधूपांश्च मुञ्चेत प्रवर्त्तयत

उह्येरन् यज्ञपात्राणि क्रियेत च विभावसुः ।
भ्रियेत चाज्यमृत्विग्भिः कल्प्येत च समित्कुशम् ॥ १० ॥
स्नानीयैः स्नापयेताशु रम्यैर्लिम्पेत वर्णकैः ।
अलङ्कुर्यात रत्नैश्च रावणार्हैर्दशाननम् ॥ ११ ॥

स्रजः पुष्पमालाः शुभाः ग्रथ्नीयात गुम्फिष्यथ ग्रन्थग्रन्थसन्दर्भे इति क्र्यादिः दारुकाष्ठम् अमितं प्रभूतं कर्पूरागुरुकुङ्कुमञ्च आनयेत सर्वत्र विधौ लिङ् पुषादिप्रयोगश्च ॥ ९ ॥ ज० म०

कुर्वतेत्यादि । यूयमाकाशधूपान् कुर्वेत प्रवर्त्तयिष्यथ अञ्चु-गतिपूजनयोः शुभाः शोभनाः स्रजो माला ग्रथ्नीयात ग्रथ्निष्यथ ग्रथकिगर्भे आद्योरिति इः अमितं प्रचुरं दारु काष्ठं कर्पूरादि च आनयेत आनेष्यथ सर्वत्र विधौ स्त्री ॥ ९ ॥ भ०

उह्येरन्नित्यादि । यज्ञपात्राणि स्रुगादीनि उह्येरन् आनीयन्तां विभावसुरग्निः क्रियेत ऋत्विग्भिः आज्यमपि भ्रियते समित्कुशं कल्प्येत च कल्प्यतां सर्वत्र विधौ कर्मणि लिङ् ॥ १० ॥ ज० म०

उह्येरन्नित्यादि । ऋत्विग्भिरेव नान्यैर्यज्ञपात्राणि उह्येरन् आनेष्यन्ते वहौञे प्रापणे यक्स्वपाद्योरिति जिः विभावसुरग्नि-र्ह्रियेत आनेष्यते आज्यं हविर्भ्रियेत भरिष्यते समित्कुशं कल्प्येत कल्पयिष्यते सर्वत्र कर्मणि विधौ स्त्री ॥ १० ॥ भ०

स्नानीयैरित्यादि । यथा स्वविहितञ्च कृत्वा रम्यैः स्नानीयैर्दशा-ननं राक्षसाधिपं स्नापयेत स्नापयिष्यथ ग्लास्नावुच मञ्चेति विकल्पेन मित्त्वं तत्र ज्वलह्वलनमामनुपसर्गाद्वेति वाग्रहणमनुवर्त्तते वर्णकै-श्चन्दनादिभिः रम्यैर्लिम्पेत विलेपयथ रत्नैश्च रावणार्हैर्नित्यनैमित्तिकै-रलङ्कुर्यात अलङ्करिष्यथ ॥ ११ ॥ ज० म०

स्नानीयैरित्यादि । यूयं दशाननं स्नानीयैः स्नानार्हैर्जलैः स्नाप-येत स्नापयिष्यथ ज्वलह्वलेत्यादिना ह्रस्वस्य विभाषितत्वादत्र न ह्रस्वः वर्णकैश्चन्दनादिभिः लिम्पेत विलेपयथ मुचादित्वान्नुम् नानाकारै-

वासयेत सुवासोभ्यां मेध्याभ्यां राक्षसाधिपम् ।
ऋत्विक् स्रग्विणमादध्यात् प्राङ्मूर्धानं मृगाजिने ॥१२॥
यज्ञपात्राणि गात्रेषु चिनुयाच्च यथाविधि ।
जुहुयाच्च हविर्वह्नौ गायेयुः साम सामगाः ॥ १३॥
गत्वाथ ते पुरीं लङ्कां कृत्वा सर्वं यथोदितम् ।
समीपेऽन्त्याहुतेः सास्राः प्रोक्तवन्तो विभीषणम् ॥१४॥

नानाविधैरत्नैरलंकुर्यात अलङ्करिष्यथ । रावणाङ्गैरिति क्वचित्पाठः । सर्वत्र विधौ लो ॥ ११ ॥ भ०

वासयेतेत्यादि । वासोभ्यां मेध्याभ्यां पूताभ्यां वासयेत च आच्छादयिष्यथ । ऋत्विक् यज्वा स्रग्विणं कृत्वा मालाभूषितं कृत्वा मृगाजिने प्राङ्मूर्द्धानं प्राच्यां मूर्द्धा यस्य पूर्वशिरसमादध्यात् स्थापयेत् । १२ ॥ ज० म०

वासयेतेत्यादि । यूयं मेध्याभ्यां पवित्राभ्यां सुवासोभ्यां शोभनवस्त्राभ्यां राक्षसाधिपं रावणं वासयेत आच्छादयिष्यथ वसवङ्स्तृतौ । ऋतिक् यजनशीलः स्रग्विणं मालावन्तं राक्षसाधिपं मृगाजिने प्राङ्मूर्द्धानं पूर्वशिरसम् आदध्यात् स्थापयिष्यति आद्योरित्याबोपः व्यद् इत्युक्तेर्न दे उभयत्र विधौ लो ॥ १२ ॥ भ०

यज्ञपात्राणीत्यादि । स एव यथाविधि यथाक्रमं यज्ञस्य पात्राणि स्रुगादीनि गात्रेषु विचिनुयात् हविराज्यं वह्नौ जुहुयात् सामगः छान्दोगः साम च गायेत सर्वत्र विधौ लिङ् ॥ १३ ॥ ज० म०

यज्ञपात्राणीत्यादि । ऋत्विक् यथाविधि विधेरनतिक्रमेण यज्ञपात्राणि स्रुगादीनि रावणस्य गात्रेषु चिनुयात् स्थापयिष्यति चन्चिञ्चित्यां वह्नौ हविराज्यं जुहुयात् होष्यति सामगाः साम गायेयुः आवर्त्तयिष्यन्ति गै गाने सर्वत्र विधौ लो ॥ १३ ॥ भ०

गत्वेत्यादि । अथानन्तरं ते मन्त्रिणः लङ्कां गत्वा यथोदितञ्च कृत्वा अन्त्याहुतेर्न्त्याहुतेः समीपे अनन्तरं सास्राः सभ्याः विभीषणं प्रोक्तवन्तः ॥ १४ ॥ ज० म०

कृतं सर्वं यथादिष्टं कर्त्तुं वह्निजलक्रियाम् ।
प्रयतेथा महाराज ! सह सर्वैः स्वबन्धुभिः ॥ १५ ॥
अप्रवन्नोत्सहेथास्त्वं धेया धीरत्वमच्युतम् ।
स्येयाः कार्य्येषु बन्धूनां हेयाः शोकोद्भवं तमः ॥ १६ ॥

गत्वायेत्यादि । अथानन्तरं ते मन्त्रिणो लङ्कां पुरीं गत्वा यथोदितं सर्वं कृत्वा अन्त्याहुतेः समीपे अन्त्याहुतिकर्मसामीप्ये सान्ना विद्यमानात्मा विभीषणं प्रोक्तवन्तः ॥ १४ ॥ भ०

कृतमित्यादि । यथोद्दिष्टं यथाविहितं सर्वमस्माभिः कृतं त्वमिदानीं भ्रातुर्वह्निक्रियां जलक्रियाञ्च कर्त्तुं स्वबन्धुभिः सर्वैः सह प्रयतेथाः प्रार्थनायां लिङ् ॥ १५ ॥ ज० म०

कृतं सर्वमित्यादि । हे महाराज ! यथादिष्टं सर्वमस्माभिः कृतं सम्प्रति वह्निक्रियां जलक्रियाञ्च कर्त्तुं सर्वैः स्वबन्धुभिः सह प्रयतेथाः यत्नं कुरु विधिनिमन्त्रणेति प्रार्थनायां लो ॥ १५ ॥ भ०

अप्रवदित्यादि । शोकादप्रवर्त्तमानं पुनराहुः अप्रवत् किं नोत्सहेथाः किमवसीदसि गर्हितमेतत् किं वृत्ते लिङ्लुटाविति गर्हायां लिङ् इयं चात्माकमाशंसा यत्तु धीरत्वं धैर्य्यम् अच्युतमपि नाम धेयाः धास्यसि बन्धूनाञ्च कार्य्ये स्थेयाः स्थास्यसि शोकोद्भवञ्च तमो हेयास्त्यक्ष्यसि सर्वत्राशिषि लिङ् आर्द्धधातुकत्वादेर्लिङीत्यसंयोगादेरेत्वम् ॥ १६ ॥ ज० म०

अप्रवदित्यादि । अभिधीयमानस्य कर्मणोऽतिशोकादप्रवृत्तेः पुनः प्रवृत्त्यर्थमुच्यते अप्रवन्नमूर्ख इव किं न उत्सहेथाः किमवसीदसि गर्हितमेतत् किम्भिः लौट्याविति लो इयमस्माकमाशंसा यत्त्वम् अच्युतम् अविनाशं धीरत्वं धैर्य्यं धेया धास्यसि धाशिषि दामागेहाशिति धाञोदासंज्ञकत्वात् ङेः बन्धूनां कार्य्येषु स्थेयाः स्थास्यसि पूर्ववत् ढी ङेच बन्धुशोकोद्भवं तमो हेयास्त्यक्ष्यसि ओहाक् त्यागे पूर्ववत् ढी ङेच ॥ १६ ॥ भ०

नावकल्प्यमिदं ग्लायेयत्कृच्छ्रेषु भवानपि।
न पृथग्जनवज्जातु प्रमुह्येत्पण्डितो जनः॥ १७॥
यच्च यत्र भवांस्तिष्ठेत्तत्रान्यो रावणस्य न।
यच्च यत्र भवान् सीदेन्महद्भिस्तद्विगर्हितम्॥ १८॥

नावकल्प्रमित्यादि। अन्यच्च नावकल्प्रमिदं न सम्भाव्यमेतत् येन कृच्छ्रेषु दुःखेषु भवानपि ग्लायेत् ग्लानिं याति अनवक्लृप्तौ असम्भावनायाम् अनवक्लृप्त्यमर्षेत्यादिना लिङ् सार्वधातुकत्वाद्दाप्यसेत्येत्वं न विकल्प्यते यस्मात्पण्डितो जनः पृथग्जनवत् अपण्डितवत् जातु कदाचिदपि न प्रमुह्येत् न मोहं यातीति सम्भावयाव जातुयदो-र्लिङित्यनवक्लृप्तौ लिङ्॥ १७॥ ज॰ म॰

नावकल्प्रमित्यादि। अन्यच्च नावकल्प्रमिदं न सम्भाव्यमेतत् यद्भवानपि कृच्छ्रेषु दुःखविषयेषु ग्लायेत् ग्लानिं यास्यति विधिनिम-न्त्रणेति आदिशब्दात् सम्भावनायां लो कथमेतदुच्यते इत्याह यस्मात् पण्डितो जनः पृथग्जनवत् मूर्खवत् जातु कदाचिन्न प्रमुह्येत् न मोहं गच्छति जातुयद्यदायदिभिः लो॥ १७॥ भ॰

यच्चेत्यादि। यत्र देशे काले वा भवांस्तिष्ठेत् तत्र यच्च अन्यो रावणस्य कस्तिष्ठेत् अवस्थानं कः करिष्यति नैतत्सम्भावयामः तस्य तत्र न्यूनत्वात् अन्यस्मिन्नवक्लृप्तिः यच्छब्देनोपपदेन योगात् यच्च-यत्रयोरित्यनवक्लृप्तौ भविष्यति लिङ् यच्चेति निपातसमुदायो यच्छब्द-स्यार्थे वर्त्तते किञ्च यत्र देशे वा यच्च भवान् सीदेत् अवसादं करोतीति महद्भिः पण्डितैः विगर्हितं निन्दितं गर्हायां चेति सर्वलकारापवादो लिङ् यच्चयत्रयोरित्यनुवर्त्तते अनवक्लृप्ताविति निष्टत्तम्॥ १८॥ ज॰ म॰

यच्च यत्रेत्यादि। यत्र देशे काले वा भवान् यच्च तिष्ठेत् अव-स्थानं करिष्यति तत्र रावणस्य अन्यो न तिष्ठेत् नावस्थानं करिष्यति यत्र देशे काले वा भवान् सीदेत् अवसादं गमिष्यति तन्महद्भिर्विग-र्हितं यच्चयत्राभ्यां चोपचिते चेति लो॥ १८॥ भ॰

आश्चर्यं यत्र यत्र त्वां प्रब्रूयाम वयं हितम् ।
अपि साक्षात् प्रशिष्यास्त्वं कृच्छ्रे चेन्द्रपुरोहितम् ॥ १९ ॥
कामो जनस्य जह्यास्त्वं प्रमादं नैर्ऋताधिप !
उत द्विषोऽनुशोचेयुर्विप्लवे किमु बान्धवाः ॥ २० ॥
स भवान् भ्रातृवद्वेदयथावदखिलं जनम् ।

आश्चर्यमित्यादि । यत्र देशे काले वा यत्र यद्द्वयमपि त्वां हितं प्रब्रूयाम तदाश्चर्यं विचित्रमेतत् चित्रीकरणे चेति लिङ् यत्रयत्रयो-रिति वर्त्तते त्वामित्यकथितं कर्म अतस्त्वं कृच्छ्रेषु व्यसनेषु साक्षा-दिन्द्रपुरोहितं बृहस्पतिं प्रशिष्याः बाढ़ं शिक्षयसि उताप्योः समर्थ-योर्लिङ् अपिशब्दस्योपपदत्वात् समर्थत्वं चानयोर्बाढमिति यस्मिन् अर्थे शास इदुड्हलोः शासिवसीत्यादिना षत्वम् ॥ १९ ॥ ज० म०

आश्चर्यमित्यादि । यत्र देशे काले वा यत्र त्वां हितं वयं प्रब्रूयाम तदाश्चर्यं चित्रमेव पूर्ववत् लो कथमाश्चर्यमित्याह यस्मात्त्वं कृच्छ्रेषु व्यसनेषु साक्षात् इन्द्रपुरोधसं बृहस्पतिं शिक्षयसि बाढ़ेऽप्यु-ताभ्यां लो ॥ १९ ॥ भ०

काम इत्यादि । हे नैर्ऋताधिप ! रक्षसां नाथ ! त्वं विषादं जह्याः त्यज अस्य जनस्य पौरस्य काम इच्छा कामप्रवेदनेऽकच्चितीति लिङ् कच्चिच्छब्दस्याप्रयोगात् कामप्रवेदनञ्च जनाभिप्रायप्रकाशनम् अन्यच्च अस्मिन् विप्लवे विनाशे द्विषः शत्रवोऽपि उत अनुशोचेयुः अनुशोचन्ति किं नु बान्धवाः उताप्योः समर्थयोर्लिङ् ॥२०॥ ज० म०

काम इत्यादि । हे नैर्ऋताधिप ! राक्षसेश्वरः ! त्वं प्रमादं विषादं शोकं वा जह्याः त्यज जनस्य पौरस्यायं कामः कामोक्तावकच्चितीति लो ह्लाकोऽन्तलोपः त्वां शोको युज्यत एवेति दर्शयति विप्लवे विनाशे द्विषः शत्रवोऽपि ततोऽनुशोचेयुः बाढ़ं शोकं कुर्वन्ति किं नु बान्धवाः सुतरामेव शोचन्ति बाढ़ेऽप्युताभ्यां लो ॥ २० ॥ भ०

स इत्यादि । चेद्यदि भवान् सम्यगच्छेत् मोहं न गच्छेत् तदा स

न भवान् संप्रमुह्येचेदाश्वस्युश्च निशाचराः ॥ २१ ॥

ततः स गतवान् कर्त्तुं भ्रातुरग्निजलक्रियाम् ।

प्रोक्तवान् कृतकर्त्तव्यं वचो रामोऽथ राक्षसम् ॥ २२ ॥

अम्भांसि रुक्मकुम्भेन सिञ्चन् मूर्ध्नि समाधिमान् ।

त्वं राजा रक्षसां लङ्कामवेक्षेथा विभीषण ! ॥ २३ ॥

भवान् भ्रातृवत् यथा भ्राता जनो रक्ष्यते तद्वदिमम् अखिलं जनं यथावत् सम्यक् रक्षेत् एते च निशाचरा आश्वस्युराश्वासं गच्छेयुर्हेतु-मतोर्लिङ् अत्र प्रमोहो हेतुः जनरक्षणं निशाचराश्वासनञ्च हेतुमत् श्वसेरदादित्वाच्छपो लुक् आश्वसेयुरिति पाठान्तरम् आश्वास इवा-चरेयुरित्यर्थः आश्वसतीत्याश्वासः पचाद्यच् तदन्तात्सर्वप्रातिपदिकेभ्य इति क्विप् ॥ २१ ॥ ज० म०

स भवानित्यादि । चेद्यदि भवान् न प्रमुह्येत् मोहं न गच्छेत् तदा स भवानिममखिलं जनं भ्रातृवत् रावण इव रक्षेत् रक्षिष्यति यथावत् सम्यक् ते निशाचरा आश्वस्युः आश्वासं गच्छेयुः भव्ये वा फलहेत्वोरिति स्मो यसन्तु प्राये ॥ २१ ॥ भ०

तत इत्यादि । ततो वचनानन्तरं भ्रातुरग्निक्रियां जलक्रियाञ्च कर्त्तुं गतवान् । अथ कृतकर्त्तव्यं कृतकृत्यं राक्षसं रामः वचः प्रोक्त-वान् ॥ २२ ॥ ज० म०

तत इत्यादि । ततस्तद्वचनानन्तरं स विभीषणो भ्रातुरग्निक्रियां जलक्रियाञ्च कर्त्तुं गतवान् । अथानन्तरं कृतकृत्यं राक्षसं विभीषणं रामो वचः प्रोक्तवान् ॥ २२ ॥ भ०

अम्भांसीत्यादि । रुक्मकुम्भेन स्वर्णकलसेनाम्भांसि जलानि मूर्ध्नि सिञ्चन् पातयन् रामः प्रोक्तवानिति पूर्वेणान्वयः । हे विभीषण ! त्वम-द्यप्रभृति रक्षसां राजा लङ्कामवेक्षेथाः कार्य्याकार्य्यनिरूपणेन ईक्षसि ॥ २३ ॥ ज० म०

अम्भांसीत्यादि । रुक्मकुम्भेन सुवर्णकलसेन अम्भांसि तस्य मूर्ध्नि सिञ्चन् पातयन् समाधिमान् कृतसमाधानरचनः प्रोक्तवानिति

क्रुद्धाननुनयेः सम्यक् धनैर्लुब्धानुपार्जयेः ।
मानिनो मानयेः काले त्रस्तान् पौलस्त्य ! सान्त्वयेः ॥२४॥
इच्छा मे परमानन्देः कथं त्वं वृत्रहन्नुवत् ।
इच्छेद्धि सुहृदं सर्वो वृद्धिसंस्थं यतः सुहृत् ॥ २५ ॥

पूर्वेणान्वयः समाधिनेति पाठे समाहितेन चेतसेत्यर्थः विशुद्धत्वादनि-त्याह, हे विभीषण ! त्वमद्यप्रभृति रक्षसां राजा लङ्काम् अवेक्षेथाः कार्य्याकार्य्यविचारणेन द्रक्ष्यसि विधिनिमन्त्रणेति आमन्त्रणे वा ॥ २२ ॥ म०

क्रुद्धानित्यादि । हे पौलस्त्य ! क्रुद्धाननुनयेः प्रसादयिष्यसि ये लुब्धास्तान् धनेनोपार्जयेः दानेन ग्रहीष्यसि मानिनः सत्कारोचिते काले मानयेः पूजयिष्यसि त्रस्तान् भीतान् सान्त्वयेः समाश्वासयिष्यसि सर्वत्र निमन्त्रणे नियोगकरणे प्रार्थनायां वा लिङ् ॥ २४ ॥ ज० म०

क्रुद्धानित्यादि । हे पौलस्त्य ! त्वं क्रुद्धाननुनयेः प्रसादयिष्यसि लुब्धान् धनैर्धनदानेन उपार्जयेः ग्रहीष्यसि मानिनः सत्कारोचितकाले मानयेः पूजयिष्यसि त्रस्तानुद्विग्नान् सान्त्वयेः समाश्वासयिष्यसि सर्वत्र विधिनिमन्त्रणेति प्रार्थनायां विधौ वा लिङ् ॥ २४ ॥ म०

इच्छेत्यादि । इयञ्च मे इच्छा महती यत्त्वं वृत्रहन्वदिन्द्र इव कथमानन्देः मुदितो भविष्यसि इच्छार्थेषु लिङ् लोटाविति लिङ् इच्छार्थस्य धातोरुपपदत्वात् यतः सर्व एव सुहृत् सुहृदं वृद्धिसंस्थम् उदयस्थमिच्छेत् इच्छति इच्छार्थेभ्यो विभाषावर्त्तमान इति लिङ् ॥ २५ ॥ ज० म०

इच्छेत्यादि । इयं मम परमा महती इच्छा त्वं कथं वृत्रहन्वत् आनन्देः मुदितो भविष्यसि यीचेच्छार्थैरिति कामोक्तो लिङ् । तदेतेन किमित्याह यतो यस्मात् सर्वः सहृन्मित्रं सुहृदं वृद्धि-संस्थम् उदयस्थम् इच्छेत् वाञ्छेदिति भवद्भूतभव्ये लिङः क्याद्या इति वर्त्तमाने लिङ् इच्छार्थे वर्त्तमाने वा लिङिति परः ॥ २५ ॥ म०

वर्द्धिषीष्ठाः स्वजातेषु वध्यास्त्वं रिपुसंहतीः।
भूयास्त्वं गुणिनां मान्यस्तेषां स्थेया व्यवस्थितौ ॥२६॥
धेयास्त्वं सुहृदां प्रीतिं वन्दिषीष्ठा दिवौकसः।
सोमं पेयाश्च हेयाश्च हिंस्रा हानिकरीः क्रियाः ॥२७॥
अवसेयाश्च कार्य्याणि धर्मेण पुरवासिनाम्।
अनुरागं क्रियाः राजन्! सदा सर्वङ्कषं जने ॥ २८ ॥

वर्द्धिषीष्ठा इत्यादि। स्वजातेषु स्वजातिषु राजसेषु मध्ये त्वं वर्द्धिषीष्ठाः वृद्धिमान् भविष्यसि आशिषि लिङ् एवं वक्ष्यमाणेष्वपि सर्वत्र रिपुसंहतीः शत्रुसमूहान् वध्याः विनाशयिष्यसि हनो वधो लिङि भूयाश्च गुणिनां मान्यः श्रुतशीलवतां मानार्हश्च भविष्यसि तेषाञ्च गुणिनां व्यवस्थायां चिरकालं स्थेयाः स्थास्यसि ॥२६॥ ज०म०

वर्द्धिषीष्ठा इत्यादि। स्वजातिषु ज्ञातिसमूहेषु त्वं वर्द्धिषीष्ठा वर्द्धमानो भविष्यसि शत्रुसंहतीः शत्रुसमूहान् त्वं वध्याः हनिष्यसि हनो वधष्टीद्वलीति वधादेशः। त्वं गुणिनां मान्यो भूयाः भविष्यसि तेषां गुणिनां व्यवस्थितौ व्यवस्थायां स्थास्यसि दामागैहागिति ङेः सर्वत्र आशिषि ॥ २६ ॥ भ०

धेया इत्यादि। त्वं सुहृदां प्रीतिं धेयाः जनयिष्यसि दिवौकसो देवान्वन्दिषीष्ठाः प्रणंस्यसि सोमं पेयाः पास्यसि तथा हिंस्राः परोपघातिकाः हानिकरीः अपचयहेतुकाः क्रियाः हेयाः त्यक्ष्यसि ॥ २७ ॥ ज० म०

धेया इत्यादि। त्वं सुहृदां प्रीतिं धेयाः धास्यसि जनयिष्यसि पूर्ववत् ङेः दिवौकसो देवान् वन्दिषीष्ठाः प्रणंस्यसि सोमं पेयाः सोमपानं करिष्यसि पूर्ववत् ङेः तथा हिंस्राः परोपतापिकाः हानिकरीः अपचयहेतुभूताः क्रियाः हेयाः त्यक्ष्यसि पूर्ववत् ङेः सर्वत्र आशिषि ॥ २७ ॥ भ०

अवेत्यादि। पुनः पुरवासिनां पौराणां कार्य्याणि धर्मेणावसेयाः

घानिषीष्ट त्वया मन्युर्वाहिषीष्ट समुन्नतिः ।
रक्षोभिर्दर्शिषीष्ठास्त्वं द्रक्षीरन् भवता च ते ॥ २९ ॥
मन्युं वध्या भटवधकृतं बालवृद्धस्य राजन् !
शास्त्राभिज्ञाः सदसि सुधियः सन्निधिं ते क्रियासुः ।
संरंसीष्ठाः सुरमुनिकृते वर्त्मनि प्राज्यधर्मे
संभुत्सीष्ठाः स्वनयनयनैर्विद्विषामीहितानि ॥ ३० ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लिङ्विलसितो
नामैकोनविंशतितमः सर्गः ।

---

ज्ञास्यसि योऽन्तकर्मणि, हे राजन् ! अत्र जने अनुरागं सर्वगतं सर्वव्यापिनं क्रियाः करिष्यसि ॥ २८ ॥ ज० म०

अवसेयास्त्वित्यादि । पुरवासिनां पौराणां कार्याणि धर्मेण अवसेयाः ज्ञास्यसि शोयनाशे पूर्ववत् ङेः, हे राजन् ! विषये सर्वङ्कषमनुरागम् अनन्यकृतमनुरञ्जनक्रियाः करिष्यसि कञ्जङ्कृतौ कर्तरि शयकङीपे उभयत्र ब्यांशिषि ॥ २८ ॥ भ०

घानिषीष्टेत्यादि । मन्युः क्रोधः त्वया घानिषीष्ट हनिष्यते चिण्वद्भावो हविषश्च समुन्नतिरभ्युच्चयः वाहिषीष्ट वक्ष्यते रक्षोभिर्दर्शनपरैर्दर्शिषीष्ठाः त्वं द्रक्ष्यसे ते च राक्षसाः भवता दर्शनपरेण च द्रक्षीरन् अचिण्वद्भावपक्षः ॥ २९ ॥ ज० म०

घानिषीष्टेत्यादि । मन्युः कोपस्त्वया घानिषीष्ट समुन्नतिर्नामाभ्युदयस्त्वया वाहिषीष्ट वक्ष्यते रक्षोभी राक्षसैस्त्वद्दर्शनलालसैस्त्वं दर्शिषीष्ठाः भवता च ते राक्षसा द्रक्षीरन् द्रक्ष्यन्ते इत्यर्थः ॥२९॥ भ०

मन्युमित्यादि । अन्यच्च हे राजन् ! बालानां वृद्धानाञ्च सर्वो द्वन्द्वो विभाषैकवद्भवतीति बालाश्च वृद्धाश्च बालवृद्धं तस्य मन्युं शोकं भटवधकृतं भटानां पितृपुत्त्रादीनाञ्च यो वधः तत्कृतं वध्याः

प्रियवचनार्थप्रदानादिभिरपनेष्यसि शास्त्रार्थज्ञाः शास्त्रार्थकुशलाः ते तव सदसि सभायां सन्निधिं क्रियासुः सन्निहिता भवन्त्वित्यर्थः सुरैर्मुनिभिश्च गते सेविते वर्त्मनि मार्गे प्राज्यधर्मे भूरिपुण्ये संरंसीष्ठाः रंस्यसे द्विषां शत्रूणाम् ईङ्गितानि चेष्टितानि सुनयनयनैः शोभनाः ये नयाः तैरेव नयनैश्चक्षुर्भिरिवावस्थितैः सम्भुत्सीष्ठाः ज्ञानीयाः ज्ञास्यसि बुध अवगमने एकाचोवशोभष् ॥ २० ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे

लिङ्विलसितः षष्ठः परिच्छेदः ।

काव्यस्य विभीषणाभिषेको नामैकोनविंशतितमः सर्गः ।

मन्युमित्यादि । हे राजंस्त्वम् ! वानरष्टजस्य मन्युं शोकं वध्याः प्रियवचनेन प्रसादेन चापनेष्यसि मन्युं किम्भूतं भटानां योधानां पितृपुत्रादीनां यो वधस्तत्कृतं वानराश्च दृष्टाश्चेति समाहारः तव सदसि सभायां शास्त्रतत्त्वविदः पण्डिताः सन्निधिं क्रियासुः सन्निहिता भविष्यन्ति सुरमुनिभिः सेविते प्रचुरधर्मे पथि त्वं संरंसीष्ठाः सम्यक्प्रकारेण रतिं करिष्यसि तथा सुनया एव नयनानि तैर्द्विषां शत्रूणाम् ईङ्गितानि त्वं संभुत्सीष्ठाः सम्यक् ज्ञास्यसि सर्वत्र जानासि बुध्यीङ् वेदने क्रमात्तस्यादिजवाशिति वो भः ॥ २० ॥ भ०

इति वद्यहरिहरखानवंशसम्भवगौराङ्गमल्लिकात्मजश्री-

भरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां

विभीषणराज्याभिषेको नामोन-

विंशतितमः सर्गः ।

---

# विंशः सर्गः ।

समुपेत्य ततः सीतामुक्तवान् पवनात्मजः ।
दिष्ट्या वर्द्धस्व वैदेहि ! हतस्त्रैलोक्यकण्टकः ॥ १ ॥
अनुजानीहि हन्यन्तां मयैताः क्षुद्रमानसाः ।
रक्षिकास्तव राक्षस्यो गृहाणैतासु मत्सरम् ॥ २ ॥

इतः प्रभृति लोटमधिकृत्य तद्विवक्षितमाह लोट्चेति वचना-द्विध्यादिष्वर्थेषु लोट् ततोऽन्यत्रापि दर्शयिष्यति ।

समुपेत्यादि । ततोऽनन्तरं पवनात्मजः रामाज्ञया सीतां समुपेत्य समुपगम्योक्तवान्, हे वैदेहि ! रावणस्त्रैलोक्यस्य प्रतोदकत्वात् कण्टको हतस्तेन दिष्ट्या प्रियवचनेन वर्द्धस्व नियोगतो वर्द्धस्वेति निमन्त्रणे लोट् ॥ १ ॥ ज० म०

अथ गीमधिकृत्योच्यते तस्याः परमते लोडिति संज्ञा ।

समुपेत्येत्यादि । तदनन्तरं हनूमान् रामाज्ञया समुपेत्य समीपे-मुपागम्य सीतामुक्तवान् किन्तदित्याह, हे वैदेहि ! त्रैलोक्यकण्टकः शत्रु रावणो हतः तेन दिष्ट्या आनन्देन त्वं वर्द्धस्व विधिनिमन्त्रणे-त्यादिना निमन्त्रणेऽनुमतौ वा लोट् दिष्ट्येत्यानन्देऽव्ययं त्रिलोक्येव त्रैलोक्यं विकारसङ्केति स्वार्थे ष्यञ् ॥ १ ॥ भ०

अनुजानीहीत्यादि । अनुजानीहि अनुज्ञां प्रयच्छ प्रार्थनायां लोट् येन मयैता राक्षस्यस्तव रक्षिकाः क्षुद्रमानसाः पापाशयाः हन्यन्तां विनाशयिष्यन्ताम् अत्र विधौ कर्मणि लोट् तस्मादेतासु मत्सरं गृहाण जनय प्रार्थनायां लोट् येन गृहीतक्रोधो मामनु-ज्ञास्यसि ॥ २ ॥ ज० म०

त्वद्द्रुहाणि दुराचारा घोररूपाशयक्रियाः ।
हिंस्रा भवतु ते बुद्धिरेतासु कुरु निष्ठुरम् ॥ ३ ॥
पश्चिमं करवामैतत् प्रियं देवि ! वयं तव ।
ततः प्रोक्तवती सीता वानरं करुणाशया ॥ ४ ॥
उपशाम्यतु ते बुद्धिः पिण्डनिर्वेशकारिषु ।
लघुसत्त्वेषु दोषोऽयं यत्कृते निहतोऽसकौ ॥ ५ ॥

अनुजानीहीत्यादि । अनुज्ञां देहि ज्ञादृव्योरित्यादिना ङीः यथा एतास्तव रक्षिकाः क्षुद्रमानसाः पापाशयाः राक्षस्यो हन्यन्तामिति विधौ णी कर्मणि यक् तस्मादेतासु मत्सरं क्रोधं त्वं हास हृतक्रोधा सती मामनुज्ञास्यसीति प्रार्थनायां णी गम्यहनश्च चकारादादाने यक्-स्वपाद्योरिति जिः हसाचानहावविति आनः हेर्लोपः ॥ २ ॥ भ०

त्वद्द्रुहानीत्यादि । एता दुराचाराः घोररूपाशयक्रियाः क्रूराणि आकाराभिप्रायानुष्ठानानि यासां तास्त्वद्द्रुहाणि हनिष्यामि तदेतासु हिंस्रा हिंसनशीला तव बुद्धिर्भवतु निष्ठुरञ्च नैष्ठुर्यं कुरु भावप्रधानो निर्देशः ॥ २ ॥ ज० म०

त्वद्द्रुहानीत्यादि । घोरं भयानकरूपम् आशयोऽभिप्रायः क्रिया कर्म च यासां ता एता दुराचारा दुष्टशीला राक्षसीरहं त्वद्द्रुहाणि हनामि त्वद्द्रुहत्वन्भूषहिंसे रधादित्वात् अनृ चात्वम् एतासु ते तव बुद्धिर्हिंस्रा हिंसनशीला भवतु निष्ठुरं नैष्ठुर्यं कुरु भावप्रधाननिर्देशः ॥ २ ॥ भ०

पश्चिममित्यादि । हे देवि ! किमत्र विचारितेन तव पश्चिममन्त्यं प्रियम् एतद्वयं करवाम करिष्यामः अस्य एकत्वे बहुवचनमन्यतरस्यां ततोऽनन्तरं सीता करुणाशया सती वानरं प्रोक्तवती ॥ ४ ॥ ज० म०

पश्चिममित्यादि । हे देवि ! अलं विचारेण तवैतत् पश्चिममन्त्यं प्रियं वयं करवाम अस्मद् एकत्वे बहुत्वाविवक्षया आमन्त्रणे प्रार्थने वा णी । अनन्तरं करुणाशया सीता वानरं प्रोक्तवती ॥ ४ ॥ भ०

उपेत्यादि । लघुसत्त्वेषु क्षीणजनेषु पिण्डनिर्वेशकारिषु पिण्ड

न हि प्रेष्यवधं घोरं करवाण्यस्तु ते मतिः ।
एधि कार्यकरस्त्वं मे गत्वा प्रवद राघवम् ॥ ६ ॥
दिदृक्षुर्मैथिली राम ! पश्यतु त्वामविलम्बितम् ।

ग्रासस्य निर्वेशो निष्क्रयः तत्कारिषु ते बुद्धिरुपशाम्यतु सकरुणा भवतु सर्वत्र विधौ लोट् । किमिति चेत् यत्कृतो यज्जनितोऽयं दोषः समेतभिः क्षतः असकौ असौ रावणो निहतो व्यापादितः कुत्सायामव्ययसर्वनाम्नामकच्प्रकारैरिति अकच् ॥ ५ ॥ ज० म०

उपशाम्यत्वित्यादि । पिण्डस्य ग्रासस्य निर्वेशो निष्क्रयस्तत्कारिषु अन्नार्थं परायत्तेषु अतएव लघुसत्त्वेषु अल्पबलेषु स्त्रीजनेषु तव बुद्धिरुपशाम्यतु कृपापरा भवतु विधौ लो यत्कृते यन्निमित्तकोऽयं दोषः मदुपद्रवरूपः असकौ रावणो हत एव अव्ययसर्वनाम्नामकच् प्राक्टेरित्यादिना अकच् चात्र कुत्सार्थे तत्र चाकच्स्य व्यवस्थितविभाषितत्वात् तदुक्तं कृपायां निन्दने ग्लाने नीतौ दाने च मानिते । प्रायोऽन्यस्वरात् पूर्वोऽव्यासर्वनामतिङव्ययादिति ॥ ५ ॥ भ०

न हीत्यादि । अन्वयः न हि नैव घोरं प्रेष्यवधं करवाणि करिष्यामीतीयं मतिस्तवास्तु आशिषि लिङ्लोटाविति लोट् । अतस्त्वं कार्यकरः कार्यकरणे अनुकूलः आनुकूल्येन एधि भव असोरल्लोपः असोरेवाभ्यासलोपश्च एत्वस्य समानाश्रयत्वादसिद्धत्वे हुझल्भ्यो हेर्धिः कार्यमाह गत्वा प्रवद राघवं गत्वा राघवं समादेशं ब्रूहि ॥ ६ ॥ ज० म०

न हि प्रेष्यवधमित्यादि । अहं प्रेष्यवधं न करवाणि समर्थनायामिणोगीति आशिषि लो इति ते तव मतिरस्तु त्वं मे मम कार्यकर एधि भव इतो गत्वा राघवं प्रवद विधौ लो वक्ष्यमाणमिति हिमुक्तार्थाल्लोट्याद्देशः ह्वादयः इति शब्दः आनुकूल्यार्थोऽस्याभिधानात् ॥ ६ ॥ भ०

किं मया वक्तव्यमिति चेत्तदाह ।

दिदृक्षुरित्यादि । हे राम ! द्रष्टुमिच्छुर्मैथिली सीता अविल-

तथेति स प्रतिज्ञाय गत्वा राघवमुक्तवान्॥ ७॥
उत्सुकानीयतां देवी काकुत्स्थकुलनन्दन!।
क्ष्मां लिखित्वा विनिश्वस्य खरालोक्य विभीषणम्॥८॥
उक्तवान् राघवः सीतामानयालङ्कृतामिति।
गत्वा प्रणम्य तेनोक्ता मैथिली मधुरं वचः॥ ९॥

त्वितं द्रुतं त्वा त्वां पश्यतु सर्वत्र प्रार्थनायां लोट्। स पवनात्मजस्तथेति यथाज्ञापयसीति प्रतिज्ञाय स्वीकृत्य गत्वा राघवमुक्तवान्॥ ७॥ ज० म०

दिदृक्षुरित्यादि। हे राम! सीता त्वा त्वां द्रष्टुमिच्छुरविलम्बितं शीघ्रं त्वां पश्यतु प्रार्थने लोङ् इति गत्वा प्रवदेत्यन्वयः॥७॥ भ०

किमित्याह

उत्सुकेत्यादि। हे काकुत्स्थकुलनन्दन! उत्सुका देवी आनीयतामिति प्रार्थनायां कर्मणि लोट् एवमुक्ते रावणवधे महति प्रयासे कृतेऽपि जनवादभयात् न तया सह वासः कार्य्य इत्यभिप्रायेण राघवः क्ष्मामङ्गुष्ठेन लिखित्वा विनिश्वस्य खरालोक्य आकाशं दृष्ट्वा खरित्यव्ययं विभीषणमुक्तवानिति वक्ष्यमाणेन सम्बन्धः॥ ८॥ ज० म०

उत्सुकेत्यादि। एवमुक्ते सति राघवो जनापवादशङ्कया किं कर्त्तव्यमिति चिन्तयन् क्ष्मां लिखित्वा विनिश्वस्य खरालोक्य आकाशं दृष्ट्वा विभीषणमुक्तवान् इत्युत्तरश्लोकेनान्वयः भूमिलिखनादिकं चिन्तया भवतीति जात्युक्तिः। भावस्त्वयम् अजितेन्द्रियस्य रावणस्य वशा सीता कथं ग्राह्या लोको मां किं वदिष्यति अविचारेण त्यागेऽपि महादोषस्तस्मात् समानयतु विचार्य्य यद्युक्तं कर्त्तव्यमिति॥ ८॥ भ०

उक्तवानित्यादि। सीतामलङ्कृतामानयेति राघव उक्तवान् विधौ लोट्। विभीषणेन तेन गत्वा प्रणम्य च मैथिल्युक्ता मधुरं वचः॥ ९॥ ज० म०

उक्तवानित्यादि। अलङ्कृतां सीतां त्वमानय विधौ लोट् इति

जहीहि शोकं वैदेहि ! प्रीतये धेहि मानसम् ।
रावणे जहिहि द्वेषं जहाहि प्रमदावनम् ॥ १० ॥
स्नाह्यनुलिम्प निवस धूपाय विध्य च स्रजम् ।
रत्नान्यामुञ्च संदीप्ते हविर्जुहुधि पावके ॥ ११ ॥

विभीषणस्तुतवानित्यन्वयः । तदनन्तरं विभीषणेन गत्वा प्रणम्य मधुरं वाक्यं सीता प्रोक्ता ॥ ९ ॥ भ०

जहीहीत्यादि । शोकं पतिवियोगजं जहीहि जहातेश्चेत्यन्यतरस्यामित्वमीत्वञ्च आच हावित्याकार इति रूपत्रयं प्रीतये प्रीत्यर्थः पुनर्मानसं धेहि घटयस्व धासादेरीत्वाभावाभ्यासलोपश्च रावणे रावणविषये द्वेषं जहिहि तस्य विनष्टत्वात्प्रमदावनम् अशोकवनिकां जहाहि प्रत्युरन्तिकं याहीत्यर्थः सर्वत्र विधौ लोट् ॥ १० ॥ ज० म०

जहीहीत्यादि । हे वैदेहि ! शोकं जहीहि त्यज ओहाकोरिति जहातेरी प्रीत्यर्थं पुनर्मानसं धेहि घटय घ्वोर्दाधोरिति धाञो धेः रावणविषये द्वेषं जहिहि तस्य हतत्वात् दरिद्रो ङिर्हस्य इत्यादिना पक्षे ङिः प्रमदावनम् अशोकवनिकां जहाहि हौ ङा वेति पक्षे ङा सर्वत्र विधौ गो ॥ १० ॥ भ०

स्नाहीत्यादि । श्लोकद्वयं मिश्रेण व्याख्यातं स्नाहि स्नानं कुरु ततः कायशुद्ध्यर्थं सदनुपहतपञ्चगव्यमङ्गि भक्षय इकालुभ्यो हेर्धिः गोरेतानि गव्यानि सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यत् पञ्चगव्यानि समाहृतानीति पात्रादिदर्शनान्न ङीप् ततः पवित्रीकृतकाया सन्दीप्ते पावके हविर्जुहुधि ततः स्वामिनं गन्तुमनुष्ठितदेवकार्य्या सती त्वमालिम्प समालभस्व ततो निवस आच्छादय वस आच्छादने अदादित्वाच्छपो लुक् धातुसकारस्य परगमनं ततो धूपाय धूपितमात्मानं कुरु धूपेरायप्रत्ययः आविध्य च स्रजं मालां शिरस्याक्षिप्य व्यधताडने श्यनि ग्रहिज्यादिना सम्प्रसारणं रत्नान्यामुञ्च विन्यस्येत्ययमर्थवशात् क्रियाक्रमो द्रष्टव्यः यथा देवदत्तं भोजय स्नापय उद्वर्त्तयेति किञ्च संरोधजन्मनः असत्तन्त्रीकरणजं शोकं छिन्धि अपनय हैमीं शिविकां

अद्धि त्वं पञ्चगव्यञ्च छिन्धि संरोधजन्तमः।
आरोह शिविकां हैमीं द्विषां जहि मनोरथान् ॥१२॥
तृणेढु त्वद्वियोगोत्थां राजन्यानां पतिः शुचम्।
भवतादवियुक्ता त्वमत ऊर्द्ध्वं स्ववेश्मनि ॥१३॥

सौवर्णयानमारोह अधितिष्ठ सर्वत्र भर्त्तुर्नियोगकरणे लोट् तामारूढ़ा द्विषां मनोरथान् हृदये स्थितानभिप्रायान् जहि नाशय हौ परतो हन्तेर्जः ॥ ११ ॥ ज० म०

स्नाहीत्यादि। स्नाहि स्नानं कुरु ततोऽनुलेपनं चन्दनादिना कुरु लिपिर्मुचादिः धूपाय आत्मानं धूपान्वितं कुरु धूपतापे कसम्बतो गुपूधूपेत्यायः विवस्व वस्त्रं परिधेहि वसवङ् स्तृतौ स्रजं मालाञ्च आविध्य परिधेहि व्यध्यौ ताडे आङ्पूर्वः परिधाने ग्रहस्वपाद्योरिति जिः रत्नानि आमुञ्च परिधत्स्व सन्दीप्ते पावके हविर्जुहुधि हुझल्भ्यो हेर्धिः ॥ ११ ॥ भ०

अद्धि त्वमित्यादि। शरीरशुद्ध्यर्थं पञ्चगव्यं गोधूमादिकम् अद्धि भक्षय अदृलौभक्षे हुझल्भ्यो हेर्धिः गोरेतानि गव्यानि विकारसंघेति ष्यत्रः ओदौतोऽव्वदिति अव्वद्भावात् यवायवायाव इत्यव् पञ्चानां गव्यानां समाहार इति पात्रादित्वान्न ङीप् संरोधो बन्दीकरणं तज्जनितं तमः शोकं छिन्धि अपनय छिदिरधादित्वात् श्नन् हेर्धिः हैमीं स्वर्णमयीं शिविकां नरयानम् आरोह आरूढ़ा सती द्विषां मनोरथान् अभिलाषान् जहि नाशय जस्ते भिशाधीति हियुक्तस्य हन्तेर्जादेशः सर्वत्र विधौ निमन्त्रणे वा णी ॥ १२ ॥ भ०

तृणेढ्वित्यादि। गतायां त्वयि राजन्यानां क्षत्रियाणां पती रामः शुचं शोकं त्वद्वियोगोत्थां त्वद्वियोगप्रभवां स्थापिस्य इति कः उदस्थास्तम्भोरिति पूर्वसवर्णः तृणेढु हिनस्तु अतः अस्मात् कालादूर्द्ध्वं कालं स्ववेश्मनि अयोध्यायाम् अवियुक्ता त्वं भवतात् भूयाः तुह्योरिति तातङ् ॥ १३ ॥ ज० म०

तृणेढ्वित्यादि। राजान्यानां क्षत्रियाणां पती रामस्त्वद्वियोगात्

दीक्षस्व सह रामेण त्वरितं तुरगाध्वरे ।
इज्यस्व पत्या प्रीतेन प्रीत्या प्रेक्षस्व राघवम् ॥ १४ ॥
अयं नियोगः पत्युस्ते कार्य्या नात्र विचारणा ।
भूषयाङ्गं प्रमाणञ्चेद्रामो गन्तुं यतस्व च ॥ १५ ॥
मुदा संयुहि काकुत्स्थं स्वयञ्चाप्नुहि सम्मदम् ।
उपेह्यूर्द्ध्वं मुहूर्त्तात्त्वं देवि ! राघवसन्निधिम् ॥ १६ ॥

उत्थितां युञ्चं टयेढु हन्तु हनजनादिति स्यो डः उदवः स्यातस्यो-रिति सलोपः अतोऽस्मात् कालादूर्द्ध्वं स्ववेश्मनि अयोध्यायां त्वं पत्या अवियुक्ता भवतात् भूयात् उभयत्राशिषि गो तुह्योस्तातङ् वाशिषि ॥ १३ ॥ भ०

दीक्षस्वेत्यादि । तुरगाध्वरे अश्वमेधे रामेण सह त्वरितं दीक्षस्व दीक्षिता भूयाः आशिषि लोट् प्रीतेन पत्या इज्यस्व इष्टा भव इच्छापि कर्मणि लोट् प्रीता च सती राघवं त्वं प्रेक्षस्व ॥ १४ ॥ ज० म०

दीक्षस्वेत्यादि । तुरगाध्वरे अश्वमेधे रामेण सह त्वरितं त्वं दीक्षस्व दीक्षिता भूयाः प्रीतेन पत्या इज्यस्व इष्टा भूयाः कर्मणि यक् त्वमपि प्रीता सती राघवं प्रेक्षस्व सर्वत्राशिषि गो ॥ १४ ॥ भ०

अयमित्यादि । तव पत्युरयं नियोगः यत्कृतः स्नानादिव्यापारः अत्र वस्तुनि विचारणा न कार्य्या किमेवं न वेति एतत् प्रमाणं चेत् भूषयाङ्गं स्नानादिपूर्वकमलङ्कुरु रामं गन्तुं यतस्व ॥ १५ ॥ ज० म०

अयं नियोग इत्यादि । तव पत्युरयं स्नानादौ नियोग आज्ञा अत्रार्थे किं कर्त्तव्यमिति विचारणा न कार्य्या यदि तव रामः प्रमाणं तदा अङ्गं भूषय स्नानादिपूर्वकमलङ्कुरु रामान्तिकं गन्तुं यतस्व यत्नं कुरु ॥ १५ ॥ भ०

मुदेत्यादि । गत्वा च काकुत्स्थं मुदा हर्षेण संयुहि मिश्रय युमिश्रणे तत्र गमनेन स्वयञ्च सम्मदं हर्षं प्राप्नुहि प्रमदसंमदौ हर्षे सर्वत्र प्रार्थनायां लोट् हे देवि ! अस्मान्मुहूर्त्तादूर्द्ध्वं राघवसन्निधिं

ऊर्द्ध्वं मुहूर्त्तादङ्गाऽङ्ग! स्वामिनी स्म भव चितेः।
राजपत्नीनियोगस्थमनुशाधि पुरीजनम्॥ १७॥
उत्तिष्ठस्व मते पत्युर्यतस्वालङ्कृतौ तथा।
प्रतिष्ठस्व च तं द्रष्टुं द्रष्टव्यं त्वं महीपतिम्॥ १८॥

राघवः सन्निधीयते यस्मिन् प्रदेशे इति कर्मण्यधिकरणे चेति किप्रत्ययः तं त्वमुपेहि गच्छ॥ १६॥ ज० म०

मुद्रेत्यादि। इतो गत्वा रामं मुदा हर्षेण संयुङ्क्ष्व संमिश्रय मुमिश्रणे स्वयञ्च सम्बद्धं हर्षं प्राप्नुहि प्रार्थनायामाशिषि वा गौ संयुक्तनोर्हेर्लोपाभावः, हे देवि! यस्मात् मुहूर्त्तात् ऊर्द्ध्वं राघवसन्निधिं त्वम् उपेहि गमिष्यसि विधिनिमन्त्रणेत्यादिना प्राप्तकाले गौ राघवसन्निधिं गन्तुं प्राप्तकालासीत्यर्थः॥ १६॥ भ०

ऊर्द्ध्वमित्यादि। तथा मुहूर्त्तादूर्द्ध्वं चितेः स्वामिनी भव स्म अङ्गेति सम्बोधनपदम् अत्र स्मे लोडित्यनेन प्रैषे लोट् तत्र हि प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति चोर्द्ध्वमौहूर्त्तिक इति च वर्त्तते प्राप्तकालतायां लोट् राघवसन्निधिं गन्तुं चितेः स्वामिनी भवितुं प्राप्तकाला देवी अन्यथा कालातिक्रमे सति विरक्तोऽति रामो विरज्यते अन्यच्च इयमस्माकमाशंसा त्वं राजपत्नीनियोगस्थं महादेव्याज्ञाकरणतत्परं पुरीस्थमयोध्यावस्थितं जनम् अनुशाधि विधेयीकुरु आशिषि लोट् शाहाविति शादेशः तस्य समानाश्रयत्वादसिद्धत्वे झुभल्भ्यो हेर्द्धिः॥ १७॥ ज० म०

ऊर्द्ध्वमित्यादि। अङ्गेति सानुनयसम्बोधनेऽव्ययं मुहूर्त्तात् ऊर्द्ध्वं त्वं चितेः स्वामिनी भव पूर्ववत् प्राप्तकाले गौ चितेः स्वामिनी भवितुं प्राप्तकालासीत्यर्थः राजपत्नीनियोगस्थं महादेव्याज्ञाकरकरणतत्परं पुरीजनम् अयोध्यावासिनम् अनुशाधि आज्ञापय आशिषि गौ शासच्छ्रुशासने जह्यो धिशाधिहन्यास्तिशास्तिहिता॥ १७॥ भ०

उत्तिष्ठस्वेत्यादि। तस्मात्प्रार्थयेऽहं पत्युर्मते अभिप्राये मत्समीपागन्तव्यमिति उत्तिष्ठस्व तदर्थं घटस्व उदोऽनूर्द्ध्वकर्मणीति तङ् तथा

अनुष्ठाय यथादिष्टं नियोगं जनकात्मजा।
समारूढवती यानं पट्टांशुकवृतानना॥ १९॥
लज्जानता विसंयोगदुःखस्मरणविह्वला।
सास्रा गत्वान्तिकं पत्युर्दीना रुदितवत्यसौ॥ २०॥

अलङ्कृतो यवलङ्करणे यतस्व यत्नं कुरु लज्जया कदाचिन्नोत्सहेत इति पुनः पुनरभिधानम् अविरुद्धं यथा स्नाहीत्यादि भूयस्याङ्गमिति मन्यते तेन यावद्वयमुक्तमेवम् अलङ्कृत्य त्वं तं महीपतिं द्रष्टव्यं दर्शनार्हम् अर्हे कृत्यतृचश्चेति अवश्यद्रष्टव्ये वा आवश्यके कृत्याश्चेति सं द्रष्टुं प्रतिष्ठस्व गच्छ प्रार्थनायां लोट् समवप्रविभ्य स्थ इति तङ्॥ १८॥ ज०म०

उत्तिष्ठस्वेत्यादि। मत्समीपे आगम्यतामिति पत्युर्मतेऽभिप्रेते उत्तिष्ठस्व घटस्व उदोऽनूर्द्ध्वेहे इति सं तथा अलङ्कुरुष्व यतस्व दर्शनार्हं महीपतिं रामं संद्रष्टुञ्च प्रतिष्ठस्व प्रतिष्ठानिर्णयेत्यादिना सं सर्वत्र प्रार्थनायां लोट्॥ १८॥ भ०

अनुष्ठायेत्यादि। श्लोकत्रयम् एवमुक्त्वा भर्त्तुर्यथोद्दिष्टं नियोगं स्नानादिकमनुष्ठाय कृत्वा जनकात्मजा सां कश्चिन्मा द्राक्षीदिति पट्टांशुकवृतानना यानं शिविकामारूढवती पत्युरन्तिकञ्च गत्वा यानादवतीर्येत्यर्थात्॥ १९॥ ज० म०

अनुष्ठायेत्यादि। पत्युर्यथादिष्टं नियोगं स्नानादिकम् अनुष्ठाय कृत्वा जनकात्मजा लज्जया पट्टांशुकेनावृतानना सती यानं समारूढवती॥ १९॥ भ०

लज्जानतेत्यादि। लज्जया आनता वियोगदुःखस्य पूर्वानुभूतस्य स्मरणेन विह्वला सास्रा दीना सा पत्युरन्तिकं गत्वा सीता रुदितवती॥ २०॥ ज० म०

लज्जानतेत्यादि। असौ लज्जया अवनता सीता पत्युरन्तिकं गत्वा सास्रा सती रुदितवती यतो वियोगदुःखस्य पूर्वानुभूतस्य स्मरणेन विह्वला अतएव दीना विह्वलेति ह्वलचाले पचादित्वादच् विह्वलेति पाठे ह्वलग्लसच भये॥ २०॥ भ०

प्राप्तचारित्रसन्देहस्ततस्तामुक्तवान् नृपः ।
इच्छा मे नाददे सीते ! त्वामहं गम्यतामतः ॥ २१ ॥
रावणाङ्कपरिक्लिष्टा त्वं हृल्लेखकरी मम ।
मतिं बधान सुग्रीवे राक्षसेन्द्रं गृहाण वा ॥ २२ ॥

प्राप्तेत्यादि । ततोऽनन्तरं नृपो रामः रावणेन किमियं खण्डितचारित्र्यशीला न वेति प्राप्तचारित्रसन्देहस्तामुक्तवान् किमित्याह हे सीते ! ममेयमिच्छा यत्त्वामहं नाददे न गृह्णामि इच्छार्थेषु लिङ्लोटाविति लोट् अतोऽनिच्छातः कारणाद्यथेष्टं गम्यताम् ॥ २१ ॥ ज० म०

प्राप्तेत्यादि । तदनन्तरं रावणेनेयमुपभुक्ता न वेति प्राप्तः सीताचारित्रसन्देहो येन स नृपो रामस्तां सीतामुक्तवान् चरित्रमेव चारित्रं स्वार्थे ष्णः सन्देहविशेषणं मे ममेयमिच्छा त्वामहं नाददे न गृह्णीयां शोकेच्छार्थैरिति कारिकोक्ते शी विधाविति विद्यासागरः प्रार्थनाविवक्षेति दुर्गः अतो हेतोर्यथेष्टं त्वया गम्यतामिति ॥२१॥ भ०

किमिति नेच्छति चेदाह ।

रावणेत्यादि । रावणाङ्कपरिक्लिष्टा हरणसमये रावणोत्सङ्गस्थिता सती परिक्लिष्टा परिम्लदितवती त्वं मम हृल्लेखकरी चेतःपीडनशीला कृञो हेतुताच्छील्येति टः हृदयस्य हृल्लासेति हृदादेशः कथमहं शरणं यास्यामीति चेदाह सुग्रीवे मतिं बधान बध्नीयाः उत्ताहृय राक्षसेन्द्रं विभीषणं वा अनुगृहाण स्वीकुरु ॥ २२ ॥ ज० म०

रावणाङ्केत्यादि । पूर्वोक्तहेतुरयं हरणसमये रावणाङ्के परिक्लिष्टा परिम्लदिता त्वं मम हृल्लेखकरी चेतःपीडाकारी हृदो लेखं खण्डनं करोतीति हृत्कुष्टः चित्तन्तु चेतो हृदयं स्वान्तं हृन्मानसं मन इत्यमरवचनात् हृच्छब्देन समासः परे तु हृदयस्य हृल्लासादाविति क्वतं कृत्वा लेखस्य लासादित्वात् हृदयशब्दस्य हृदादेशमाहुः लासादौ हृच्छब्दस्य प्रयोगोऽभिधानात् हृदयशब्दस्य त्वप्रयोगोऽनभिधानादिति स्वमतं साधु वृषवात् कुत्र गन्तव्यमित्याह सुग्रीवे मतिं बधान कुरु

अथ्रान भरताद्भोगान् लक्ष्मणं प्रहृणीष्व वा ।
कामाद्वा याहि मुच्यन्तामाशा रामनिबन्धनाः ॥२३॥
क च ख्यातो रघोर्वंशः क त्वं परगृहोषिता ।
अन्यस्मै हृदयं देहि नानभीष्टे घटामहे ॥ २४ ॥
यथेष्टं चर वैदेहि ! पन्थानः सन्तु ते शिवाः ।

बन्धोगबन्धो राक्षसेन्द्रं विभीषणं वा गृहाण इसाद्धानहौ ॥२२॥ भ०

अश्रानेत्यादि । भरताद्वा भोगानश्रान भुङ्क्ष्व सर्वत्र इनः अः श्रानजिति श्रानच् लक्ष्मणं प्रहृणीष्व वा अङ्गीकुरु इजवरण इत्यस्य रूपं प्रादीनां हृस्वः स्वेच्छया वा याहि भवत्वं यत्र रोचते तत्र गच्छतां रामनिबन्धनाः पुनरपि रामो मे पतिर्भूयादित्याशा मुच्यन्तां त्यज्यन्ताम् ॥ २३ ॥ ज० म०

अश्रानेत्यादि । भरताद्वा भोगान् अश्रान भुङ्क्ष्व अशभोजने इसाद्धानहौ लक्ष्मणं वा हृणीष्व वृणिजहृत्यां प्रादित्वात् हृस्वः कामात् स्वेच्छया वा यत्र कुत्रापि याहि गच्छ रामनिबन्धना आशा-स्त्वया मुच्यन्तां पुनरपि रामो नेष्यतीत्याशास्त्यज्यन्तामित्यर्थः विधौ गौ ॥ २३ ॥ भ०

किमिति चेदाह ।

क चेत्यादि । परिशुद्धत्वात्सर्वत्र ख्यातः लोके विदितो रघोर्वंशः क क च त्वं परगृहोषिता जातकलङ्कत्वात् द्वयमप्येतद्दूरं भिन्नं सर्वत्र विधौ लोट् अतोऽन्यस्मै हृदयं देहि चित्तं परस्मै देहि मद्विधाः अनभिमते विषये न घटामहे निमन्त्रणे लोट् ॥ २४॥ ज० म०

क चेत्यादि । परित्यागे हेतुरयं ख्यातो लोकविदितो रघुवंशः क परगृहस्थिता त्वञ्च क उभयं परस्परविरुद्धमिति भावः अतोऽन्यस्मै चित्तं देहीति विधिः अनभीष्टेऽनुचिते वस्तुनि वयं न घटामहे ॥ २४ ॥ भ०

यथेष्टमित्यादि । यथेष्टं चर यथेष्टचारिणी भव विधौ लोट्,

कामास्तेऽन्यत्र तायन्तां विशङ्कां त्यज मद्गताम् ॥२५॥
ततः प्रगदिता वाक्यं मैथिलाभिजना नृपम् ।
स्त्रीसामान्येन सम्भूता शङ्का मयि विमुच्यताम् ॥२६॥
दैवाद्बिभीहि काकुत्स्थ ! जिह्रीहि त्वं तथा जनात् ।
मिथ्या मामभिसंक्रुध्यन्नवशां शत्रुणा हृताम् ॥२७॥

तव च यथेष्टं चरन्त्याः पन्थानो मार्गाः शिवा निर्विघ्नाः सन्तु भूयासुः आशिषि लोट् किञ्च कामाः अभिलाषास्तवान्यत्र तायन्तां स्फीता भवन्तु अतोऽप्याशिषि यथेष्टचारित्वात् किमयं करिष्यतीति मद्गतां विशङ्कां भयं त्यज त्यजसि विधौ लोट् ॥ २५ ॥ ज० म०

यथेष्टमित्यादि । हे वैदेहि ! यथेष्टं चर यथेष्टचारिणी भव विधौ लो यथेष्टं चरन्त्यास्तव पन्थानः शिवा निर्विघ्ना भवन्तु आशिषि लो तव कामा अभिलाषा अन्यत्र तायन्तां स्फीता भवन्तु तायृङ् पालनसन्तत्योः आशिषि लो मयि यथेष्टचारिण्यां रामः किङ्करिष्यतीति मद्गतामाशङ्कां त्यज विधौ लो ॥ २५ ॥ भ०

तत इत्यादि । ततस्तद्वचनानन्तरं मैथिलाभिजना सीता नृपं वाक्यं प्रगदिता गदितुं प्रवृत्ता आदिकर्मणि क्तः स्त्रीसामान्येन स्त्रीति कृत्वा या तव मयि शङ्का इयं सती न वेति सा विमुच्यतां मिथ्यात्वात् प्रार्थनायां लोट् ॥ २६ ॥ ज० म०

तत इत्यादि । तद्वचनानन्तरं मिथिलाभिजना मिथिलदेशे सम्भूता सीता नृपं रामं प्रगदितुं प्रवृत्ता घेचादिके क्तः जनः पचा-दित्वात् अन् अभिजनः पूर्वबान्धव इति वर्द्धमानः कुलान्यभिजना-न्ययावित्यमरः स्त्रीसामान्येन योषिदन्तरसाधारण्येन सम्भूता शङ्का मयि विमुच्यतां प्रार्थनायां लो ॥ २६ ॥ भ०

दैवादित्यादि । अन्वयः, हे काकुत्स्थ ! रामवशां पराधीनां शत्रुणा हृतां मिथ्या अभिसंक्रुध्यन् अकोपेन क्रुधद्रुहोरुपसृष्टयोः कर्मेति कर्मसंज्ञा दैवात् अनिष्टफलात् बिभीहि भयं जनय भीतो भव

चेतसस्त्वयि वृत्तिर्मे शरीरं रक्षसा हृतम् ।
विदांकुर्वन्तु सम्यञ्चो देवाः सत्यमिदं वचः ॥ २८ ॥
त्वं पुनीहि पुनीहीति पुनन् वायो ! जगत्त्रयम् ।
चरन् देहेषु भूतानां विद्धि मे बुद्धविप्लवम् ॥ २९ ॥

हेरपित्वात् कित्त्वे गुणो न भवति इतश्च जनादिमं जनं वीच्य जिह्रीहि लज्जस्व ल्यब्लोपे पञ्चमी विधौ लोट् ॥ २७ ॥ ज० म०

देवादित्यादि । हे काकुत्स्थ ! अवशां परायत्तां रावणायत्तां वा शत्रुणा हृतां माम् अभिसंक्रुध्यन् दोषं विना मह्यं कुप्यन् देवादधर्माद्बिभीहि भयं कुरु ञिभीञिभीत्यां हरिद्रोङिन्हेत्त इत्यादिना पक्षे ङिः तथा जनाल्लोकात् जिह्रीहि लज्जितो भव जनं वीच्येत्यर्थः ल्यबर्थे पञ्चमी विधौ णौ क्रुधद्रुहोरुपसर्गे सम्प्रदानस्य कर्मत्वमिति परः स्मृते क्रियाव्याप्यत्वं विवक्षम् ॥ २७ ॥ भ०

त्वय्यसंक्रान्तायां मम कीदृशं भयं लज्जा चेति चेत्तदाह ।

चेतस इत्यादि । मे चेतसो वृत्तिरात्मव्यापारः त्वयि तिष्ठति अनन्यमनस्कत्वात् रक्षसा हृतायाः मम न सर्वं हृतम् अपितु शरीरं हृतं नैवेदं मिथ्या तथाहि हे महाभूताधिष्ठानाः सम्यञ्चः सर्वत्र वर्त्तमानाः अञ्चन्तीति क्विप् अञ्चतावप्रत्यये समः समीति सम्यादेशः एते मदर्थिताः मम वचः सत्यं विदांकुर्वन्तु अवगच्छन्तु प्रार्थनायां लोट् विदांकुर्वन्त्विति निपातनम् ॥ २८ ॥ ज० म०

चेतस इत्यादि । शङ्का विमुच्यतामिति पूर्वोक्ते हेतरयं रक्षसा मम चित्तं न हृतं किन्तु शरीरमेव हृतं चेतसस्तु वृत्तिस्त्वयि स्थिता न चेदेवं तदा देवाः सम्यञ्चः सर्वत्र वर्त्तमाना इदं मम सत्यं वचो विदांकुर्वन्तु जानन्तु डाभ्याञ्चां व्यामिति वेत्तेर्डाम् सममञ्चतीति क्विप् सहसमित्तर इति सम्यादेशः ॥ २८ ॥ भ०

प्रत्येकं प्रार्थनामाह ।

त्वं पुनीहीत्यादि । हे वायो ! पुनीहि पुनीहीति जगत्त्रयं पुनः पुनः पुनामि भृशं वा पुनामीत्यभिप्रायस्त्वं जगत्त्रयं पुनन् भूतानां

खमट द्यामटाटोर्वीमित्यटन्त्योऽतिपावनाः ।
यूयमापो ! विजानीत मनोवृत्तिं शुभां मम ॥ २० ॥
जगन्ति धत्स्व धत्स्वेति दधती त्वं वसुन्धरे ! ।
अवेहि मम चारित्रं नक्तन्दिवमविच्युतम् ॥ २१ ॥

देहेषु चरन् मम बुद्धिविप्लवं बुद्धेरन्यथात्वं विद्धि अवगच्छ प्रार्थनायां लोट् पूर्वत्र क्रियासमभिहारे लोडिति लोट् तस्य परस्मैपदसम्बन्धी हिरादेशः क्रियासमभिहारे द्विर्वचनं पुनन्त्विति यथाविध्यनुप्रयोगः पूर्वस्मिन्नित्यनेन पुनातेरनुप्रयोगः तत्र हि क्रियासमुच्चयाभावात् ॥ २९ ॥ ज० म०

त्वमित्यादि । हे वायो ! त्वं जगत्त्रयं पुनीहि पुनीहीति पुनन् भृशं पुनः पुनर्वा पुनासीत्यर्थः सुड्ढ्यर्थे लोटि हिस्वाविति सर्वस्मिन् काले हि वीप्सायां द्वित्वं लोकतः सिद्धं पुनर्द्वित्वस्याप्रयोगोऽप्यभिधानात् इति हेतोः जगत्पवित्रीकरणाय भूतानां प्राणिनां देहेषु चरन् मम बुद्धेरविप्लवम् अव्यभिचारं विद्धि जानीहि ॥ २९ ॥ भ०

खमित्यादि । यूयमापोऽतिपावनाः अतिपवित्राः खमट द्यामट उर्वीमट इति वयमन्तरीक्षमटाम देवलोकमटाम भूर्लोकमटामेत्येवमभिप्रायः सर्वत्राटन्त्यो मम शुभां चित्तवृत्तिं विजानीतेति अत्र प्रार्थनायां लोट् पूर्वत्र तु आकाशादिकारकभेदात् अनेकाटनक्रियासमुच्चयः ततश्च समुच्चयेऽन्यतरस्यामिति लोट् अटेति समुच्चये सामान्यवचनस्येत्यनुप्रयोगः आकाशादुपगामिनीनामटनक्रियायां पुनरटनक्रियायाः सामान्याया अनुप्रयोगात् ॥ २० ॥ ज० म०

खमटेत्यादि । हे आपो ! यूयमतिपावना अतिपवित्राः खमाकाशं द्यां स्वर्गम् उर्वीं भूमिञ्च अटन्त्योऽटः पूर्ववत् सदाहि इति हेतोर्मम शुभां मनोवृत्तिं यूयं विजानीत प्रार्थनायां लो ॥ २० ॥ भ०

जगन्तीत्यादि । त्वं वसुन्धरे ! धत्स्व धत्स्वेति अहं पुनः पुनर्दधे भृशं वा दध इति एवमभिप्राया जगन्ति दधती मम चारित्रं नक्तंदिनमविच्युतम् अस्खलितमवेहि अत्र प्रार्थनायां लोट् पूर्वत्र क्रिया-

रसान् संहर दीप्यस्व ध्वान्तं जहि नभो भ्रम ।
इतीहमानस्तिग्मांशो ! वृत्तं त्रातुं घटस्व मे ॥ २२ ॥
स्वर्गे विद्यस्व भुव्यास्व भुजङ्गनिलये भव ।
एवं वसन् ममाकाश ! संबुध्यस्व कृताकृतम् ॥ २२ ॥

समभिहारे तस्य चात्मनेपदसम्बन्धिनः स्वादेशः ॥ २१ ॥ ज० म०

जगन्तीत्यादि । हे वसुन्धरे ! जगन्ति धत्स्व धत्स्व त्वं दधती भृशं पुनः पुनर्वा जगन्ति दधासीत्यर्थः आद्योरिति धाञ आत्मनेपदिभ्यः आभान्तस्यादिजवामिति स्वेर्धत्वम् इति हेतोस्त्वं मम चारित्रं नक्तन्दिवम् अविच्युतं रात्रौ दिवा चास्खलितम् अवेहि जानीहि प्रार्थने गो नक्तन्दिवमिति अचिभ्रुवादित्वात् साध्यम् ॥ २१ ॥ भ०

रसानित्यादि । हे तिग्मांशो ! त्वमपि अहं रसान् भौमान् संहर संहरामीति दीप्यस्व दीप्ये ध्वान्तं जहि हन्मि नभो भ्रम भ्रमामीत्येवमभिप्रायः ईहमानः जगत्यर्थक्रियासु चेष्टमानः मम वृत्तं चरित्रं त्रातुं घटस्व यतस्व अत्र प्रार्थनायां लोट् पूर्वत्र समुच्चयेऽन्यतरस्यामिति तस्य च यथायोगं हिस्वादेशः ईहमान इति समुच्चये सामान्यवचनस्येत्यनुप्रयोगः संहरेत्यादीनामीहतेः सामान्यवचनस्यानुप्रयोगात् ॥ २२ ॥ ज० म०

रसानित्यादि । हे तिग्मांशो ! सूर्य ! त्वमीहमानश्चेष्टमानो रसान् जलानि संहरसि दीप्यसे ध्वान्तं हंसि नभो भ्रमसि सर्वत्र मुखर्थं प्रार्थत्वविवक्षया हिस्वौ क्रियासमुच्चये हिस्वौ क्रियासामान्यस्यानुप्रयोग इति ईहतेरनुप्रयोग इति परे इति हेतोर्मम वृत्तं चरित्रं त्रातुं घटस्वेति प्रार्थना ॥ २२ ॥ भ०

स्वर्ग इत्यादि । त्वं चकाश ! स्वर्गे विद्यस्व अहं विद्ये भुवि आस्व आसे भुजङ्गनिलये पाताले भव भवामीत्येवमभिप्रायः सर्वत्र सन्तिष्ठन् मम कृताकृतं युक्तायुक्तं बुध्यस्व अवगच्छ अत्र प्रार्थनायां लोट् पूर्वत्र समुच्चयेऽन्यतरस्यामिति तस्य च यथायोगं हिस्वादेशः

चितां कुरु च सौमित्रे ! व्यसनस्यास्य भेषजम् ।
रामस्तुष्यतु मे वाद्य पापां मुष्णातु वानलः ॥ २४ ॥
राघवस्य मतेनाथ लक्ष्मणेनाचितां चिताम् ।
दृष्ट्वा प्रदक्षिणीकृत्य रामं प्रगदिता वचः ॥ २५ ॥

वसन्निति समुच्चये सामान्यवचनस्येत्यनुप्रयोगः विद्यमानादीनां सतः सामान्यवचनस्यानुप्रयोगात् ॥ २३ ॥ ज० म०

स्वर्गे इत्यादि । हे आकाश ! त्वमपि वसन् स्वर्गे विद्यसे भुवि तिष्ठसि भुजङ्गनिलये पाताले वससि पूर्ववत् अर्थार्थत्वविवक्षया द्विर्लौ एवं ममापि कृतमकृतञ्च कर्म बुध्यस्वेति प्रार्थना ॥ २३ ॥ म०

एवं पृथिव्यादीनि महाभूतानि कथयित्वा लक्ष्मणमाह ।

चितामित्यादि । हे सौमित्रे ! व्यसनस्यास्य मिथ्यादूषणस्य भेषजं प्रतिक्रियां चितां कुरु विधौ लोट् मम अग्नौ विशुद्धाया रामो नियोगतस्तुष्यतु अनलो वा मां पापां नियोगतः मुष्णातु दहतु दहन् मर्त्यलोकान् मोचयत्वित्यर्थः निमन्त्रणे लोट् मुषप्रुषस्तेहनमोचनपूरणेष्विति क्र्यादिः मोचने द्रष्टव्यः अनेकार्थत्वाद्दाहे ॥२४॥ ज० म०

चितामित्यादि । हे सौमित्रे ! अस्य व्यसनस्य मिथ्यादूषणस्य भेषजं प्रतिक्रियां चितां कुरु विधौ णी अद्य वह्नौ विशुद्धायां मयि रामस्तुष्यतु अनलो वा पापां मां मुष्णातु दहतु आमन्त्रणे णी मुषेरनेकार्थत्वादत्र दाहार्थः सदाहार्थस्तु भौवादिक एव यदुक्तं मुषगस्तेकपूर्त्योश्च मुषुदह्यनूरत्नाविति ॥ २४ ॥ म०

राघवस्येत्यादि । अथ राघवस्य मतेनानुज्ञातेन क्तस्य च वर्त्तमान इति षष्ठी मतिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने क्तः तस्य वा मतेनानुज्ञया चितामाचितां रचितां दृष्ट्वा प्रदक्षिणीकृत्य सीता रामं प्रगदिता वचो गदितुं प्रवृत्ता ॥ २५ ॥ ज० म०

राघवस्येत्यादि । अथानन्तरं राघवस्य मतेनानुज्ञया अनुज्ञातेन वा लक्ष्मणेनाचितां रचितां चितां दृष्ट्वा प्रदक्षिणीकृत्य सीता रामं वचः प्रगदिता कथितुं प्रवृत्ता ॥ २५ ॥ म०

प्रवपाणि वपुर्वह्नौ रामाहं शङ्किता त्वया ।
सर्वे विदन्तु शृण्वन्तु भवन्तः सप्लवङ्गमाः ॥ २६ ॥
मां दृष्ट्वा ज्वलितवपुः प्रमुषाण वह्ने !
संरक्ष क्षतमलिनां सुहृद्यथा वा ।
एषाहं क्रतुषु वसोर्यथाज्यधारा
त्वां प्राप्ता विधिवदुदीर्णदीप्तिमालम् ॥ २७ ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लोट्प्रदर्शनो नाम विंशतितमः सर्गः ।

—

प्रवपाणीत्यादि । येऽत्र सन्निहिता देवादयः ते सर्वे सप्लवङ्गमाः वानरैः सह भवन्तः विदन्तु चेतसा शृण्वन्तु श्रोत्राभ्यां मद्वचनं हे राम ! त्वया दुष्टेति शङ्किता अहं वह्नौ वपुः शरीरं प्रवपाणि नियोगतः प्रक्षिपाणि निमन्त्रणे लोट् आनिलोडिति णत्वम् ॥२६॥ ज० म०

प्रवपाणीत्यादि । हे राम ! त्वया दुष्टेति शङ्किताहं वह्नौ वपुः प्रवपाणि क्षिपाणि निमन्त्रणे गो प्रागवद्गौ ण इत्यादिना णत्वम् अत्र सन्निहिता देवादयो भवन्तः प्लवङ्गैः सह वक्ष्यमाणं मद्वचनं शृण्वन्तु ते च सर्वे तदर्थं जानन्त्विति प्रार्थये ॥ २६ ॥ भ०

मामित्यादि । हे वह्ने ! यद्यहं दुष्टा तदा ज्वलितवपुः ज्वलितशरीरः सन् भित्त्वाभावपक्षे रूपं मुषाण देहं मर्त्यलोकान् मोचय यथा वा क्षतमलिनां विशुद्धां सुहृदिव संरक्ष वा आमन्त्रणे कामचारकरणे लोट् । एषाहं त्वां विधिवत् सम्यक् प्राप्ता क्रतुषु यज्ञेषु वसोः राज्ञः आज्यधारेव उदीर्णदीप्तिमालम् उद्गतज्वालासमूहं त्वामिति ॥ २७ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लोड्विलसितं नाम सप्तमः परिच्छेदः ।
काव्यस्य सीताप्रत्याख्यानं नाम विंशतितमः सर्गः ।

## एकविंशः सर्गः ।

तामुत्क्षिप्य ततो वह्निर्मैथिलीं राममुक्तवान् ।
काकुत्स्थ ! दयितां साध्वीं त्वमाशङ्किष्यथाः कथम् ॥१॥

मां दृष्ट्वामित्यादि । हे वह्ने ! यद्यहं दुष्टा तदा ज्वलितशरीरः सन् मां दुष्टां सुप्राप्य दह पूर्ववत् यद्यहं च्युतमलिना भ्रष्टपापा अच्युतचरितामिति कचित्पाठः तदा मां सुहृदिव रक्ष आमन्त्रणे प्रार्थने वा गो एषाहम् उदीर्णदीप्तिमालम् उद्धतज्वालासमूहं त्वां विधिवत् सम्यक् प्राप्ता क्रतुषु यज्ञेषु वसोराज्यधारेव ॥ २७ ॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्री-
भरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां सीता-
परीक्षणो नाम विंशतितमः सर्गः ।

---

इतः प्रभृति लृङमधिकृत्य विलसितमाह तत्र लिङ्निमित्ते लृङ् क्रियातिपत्तौ भविष्यति भूते च हेतुमतोर्लिङित्येवमादिकं लिङो निमित्तं क्रियातिपत्तिश्च कुतश्चिद्वैगुण्यात् क्रियाया अनिष्पत्तिः क्रियातिपत्तिवैगुण्यञ्च विधुरप्रत्ययोपनिपातात् सामग्र्यभावाच्च द्रष्टव्यम् ।

समुत्क्षिप्येत्यादि । ततोऽनन्तरं मैथिलीं समुत्क्षिप्य हस्ताभ्याकाशे कृत्वा वह्निर्देहवान् राममुक्तवान्, हे काकुत्स्थ ! साध्वीं पतिव्रतामपि दयिताम् असाध्वीति त्वं यदाशङ्किष्यथाः शङ्कितवानसि तत् कथं गर्हितमेतत् न युक्तमाशङ्कितमित्यर्थः । विभाषाकथमिति लिङ् चेति अत्र कथंशब्दो गर्हायाञ्च लिङो निमित्तं यतस्तत्र गर्हायामित्यनुवर्त्तते तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ लृङ् भविष्यतीत्यधिक्रियते अत्रासाधुत्वं क्रियायाः तद्विरुद्धसाधुत्वाभियोगोपनिपातादतिपत्तिर्गम्यते तदेव साधुत्वं दर्शयति ॥ १ ॥ ज० म०

नाभविष्यदियं शुद्धा यद्यपास्यमहं ततः ।
न चैनां पक्षपातो मे धर्मादन्यत्र राघव ! ॥ २ ॥

अपि तत्र रिपुः सीतां नार्थयिष्यत दुर्मतिः ।
क्रूरं जात्ववदिष्यच्च जात्वस्तोष्यत् प्रियं स्वकाम् ॥ ३ ॥

अथ यीमधिकृत्योच्यते तस्याः परमते लृङिति संज्ञा ।

तामुत्क्षिप्येत्यादि । ततोऽनन्तरं वह्निस्तां मैथिलीम् उत्क्षिप्य हस्ताभ्यामाकाशे उद्धृत्य रामस्तत्कवान् किन्त्वदित्याह, हे काकुत्स्थ ! दयितां प्रियां साध्वीं पतिव्रतां त्वं कथमाशङ्कितवान् तदयुक्तमाशङ्कितं क्रियासम्भवे यीति यो अत्र धात्वर्थस्यानिष्पत्तिर्वाक्यादेव गम्यते ॥१॥ भ०

नेत्यादि । यद्यहमेनां नैवापास्यं नैव रक्षितवान् ततोऽरक्षणादियं शुद्धा नाभविष्यद् न भूता येनैव मया रक्षिता तेनैवेयं शुद्धेति भावः हेतुहेतुमतोर्लिङित्यतः हेतुर्हेतुमांश्च लिङो निमित्तं तत्र पालनस्य परिशुद्धेश्च हेतुहेतुमत्त्वे लिङ् निमित्ते क्रियातिपत्तौ सत्यां भूते नित्यं लृङ् तत्र वोताप्योरिति विकल्पे नाधिक्रियते अत्रापालनोपनिपातादतिपत्तिर्गम्यते तदतिपाताद्धेतुमतोऽपि पक्षपातात् त्वयैवमाचरितमिति चेदाह, हे राघव ! धर्मादन्यत्र अधर्मे न मे पक्षपातोऽनुरागः ॥ २ ॥ ज० म०

आशङ्कां व्यावर्त्तयन्नाह ।

नाभविष्यदित्यादि । यदि इयं सीता शुद्धा नाभविष्यत् न भूतवती तदाहमेनाम् अधक्ष्यं दग्धवानस्मि इहौदाहे दाहेर्घः अभ्रान्तस्येति घः हे राघव ! धर्मादन्यत्र मे मम पक्षपातो नास्त्यैव अपितु धर्माश्रित एव ॥ २ ॥ भ०

इदानीं सीतारावणयोर्यच्चेष्टितमासीत् तज्ज्ञानेनावधार्य्य प्रकाशयन्नाह ।

अपीत्यादि । तत्र रिपुः स भवान् रिपुः स रावणः भवच्छब्दोऽर्थाद्गम्यते तेनेतराभ्योऽपि दृश्यन्त इति त्रल् अपि वाढं नार्थयिष्यत दुर्मतिः यद्यदुर्मतिरदुष्टचेता अभविष्यत् तदा सीतां वाढं नार्थयिष्यत

सङ्कल्पं नाकरिष्यच्च तत्रैयं शुद्धमानसा।
सुधामर्षमवाप्स्यस्त्वं राम! सीतानिबन्धनम्॥४॥

भार्य्या मम तवेति न प्रार्थितवान् उताप्योः समर्थयोरिति उतापि-शब्दो वादार्थः लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते नित्यं लृङ् तत्र वोताप्योरिति अनुवर्त्तते उतार्थनक्रियायाः तद्विरुद्धदुर्मतित्वोपनिपाताद्दतिपत्तिर्गम्यते अर्थनमर्थः याचनं तत् करोतीति णिच् नाहमवकल्पयामि यद्यदुर्मतिरभविष्यत् क्रूरकर्प जातु कदाचित् नावदिष्यत् नोक्तवान् श्रियं विभूतिं स्वकामात्मीयाम् ईदृशी मे विभूतिरिति नास्तोष्यत् न स्तुतवान् स्तुतवांश्च जातुयदो-र्लिङ् इत्यत्र जातुशब्दोऽनवक्लृप्तिश्च लिङो निमित्तं तत्रानवक्लृप्त्य-मर्षयोरिति वर्त्तते अत्र क्रूराभिधानक्रियाया विभूत्यास्तवनक्रियायाश्च तद्विरुद्धदुर्मतित्वोपनिपाताद्दतिपत्तिः केचिल्लृङपि जात्वोरित्येतदुदाह-रन्ति तदयुक्तं तस्यालिङ्निमित्तत्वात्॥२॥ ज० म०

अपि तत्रेत्यादि। तत्र लङ्कायां रिपूरावणः सीतामपि दुर्मति-त्वात् नार्थयिष्यत न प्रार्थितवान् अपितु प्रार्थितवानेव क्रूरं परुषं जातु कदाचिन्नावदिष्यत् नोक्तवान् अपितु उक्तवानेव स्वकामात्मीयां श्रियं नास्तोष्यत् अपितु ममेदृशी महती सम्पत्तिरिति स्तुवानेव अत्र निमित्तस्य प्रार्थनादिधात्वर्थस्यानिष्पत्तेस्त्री॥२॥ भ०

सङ्कल्पमित्यादि। तत्रेयं शुभमानसेति नाहमवकल्पयामि यदीयं शुद्धमानसा नाभविष्यत् तत्र तस्मिन् रावणे इत्यं प्रीयमाणेऽपि सङ्क-ल्पमभिप्रायमकरिष्यत् कृतवती स्यात् न च कृतवती शुद्धमानसत्वात् सत्यामर्षमवाप्स्यस्त्वमिति, हे राम! न मर्षयामि यद्यशुद्धमानसा अभविष्यत् तदा सीतानिबन्धनं सीताहेतुकम् अमर्षं क्रोधं सत्यसंभूत-मवाप्स्यस्त्वं प्राप्तः स्याः तत्तु सत्यं यतः शुद्धमानसा अनवक्लृप्त्यमर्षयो-रकिंवृत्तेऽपीत्यत्र अनवक्लृप्त्यमर्षयोर्लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते वा लृङ् तत्र वोताप्योरित्यधिक्रियते अत्र सङ्कल्प-

त्वयाद्रक्ष्यत किं नास्याः शीलं संवसता चिरम् ।
अदर्शिष्यन्त वा चेष्टाः कालेन बहुना न किम् ॥ ५ ॥

क्रियायाः सत्त्वाभर्षक्रियायाश्च तद्विरुद्धमानसत्त्वोपनिपातादतिपत्तिः ॥ ४ ॥ ज० म०

सङ्कल्पमित्यादि । तत्र इत्थं प्रयतमाने रावणे बहुलं सङ्कमाभिप्रायमियम् सीता नाकरिष्यत् न कृतवती यत इयं शुद्धमानसा शुद्धहृदयत्वात् धात्वर्थस्यानिष्पत्तिः, हे राम ! सीतानिबन्धनम् अमर्षं क्रोधम् अवाप्स्यः अवाप्तवानसि इदं मृषा सङ्कल्पक्रियायामसत्त्वां क्रोधस्यानिष्पत्तिरत्र वाक्याद्गम्यते ॥ ४ ॥ भ०

अन्यथाख्यिवस्तुनि नाहमेवैकः प्रमाणं भवानपि प्रमाणमेवेति दर्शयन्नाह ।

त्वयेत्यादि । किं नाम तच्छीलं तच्चरित्रं यदस्याः सीतायाः शीलं चिरं कालं संवसता त्वया नाद्रक्ष्यत नोपलब्धमेव चेतोधर्मत्वान्नोपलब्धमिति चेत् किंवा नाम चेष्टाः शीलनिबन्धनाः क्रियाः बहुनापि कालेन त्वया नादर्शिष्यन्त न दृष्टा बभूवन् अपितु दृष्टा एव किं वृत्ते लङ्लृटाविति किंशब्दो विभक्त्यन्तो गर्हा च लिङ्निमित्तं तत्र गर्हायामित्यनुवर्त्तते तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते लङ् कर्मण्येव चिण्वदिट् अत्र शीलानुपलब्धिक्रियायाश्च तद्विरुद्धचिरवासोपनिपातादतिपत्तिर्गम्यते तथाहि शीलं संवसता ज्ञेयं तच्च कालेन भूयसेति ॥ ५ ॥ ज० म०

त्वयेत्यादि । अस्याः सीतायाः शीलं चरित्रं चिरं चिरकालं संवसता सहवासं कुर्वता त्वया किं नाद्रक्ष्यत नोपलब्धमभूत् अपितूपलब्धमेव चेतोधर्मत्वाच्चोपलब्धमिति चेदाह अस्याश्चेष्टाः क्रिया वा किं बहुना कालेन नादर्शिष्यन्त अपितु दृष्टा एव अत्र शीलचेष्टादर्शनस्य धात्वर्थस्य संवासेनानिष्पत्तिर्वाक्याद्गम्यते हृनघदृष्ट च इति पञ्चमिष ॥ ५ ॥ भ०

यावज्जीवमशोचिष्यो नाहास्यश्चेदिदन्तमः ।
भानुरप्यपतिष्यत् क्ष्मामक्षोभिष्यत चेदियम् ॥ ६ ॥
समपत्स्यत राजेन्द्र ! स्त्रैणं यद्यत्र चापलम् ।
लोकपाला इहायास्यंस्ततो नामी कलिद्रुहः ॥ ७ ॥

यावदित्यादि । अन्यच्च लोकस्याज्ञानभूतं परगृहोषितेत्येताव-तैवापरिशुद्धेत्यज्ञानात्मकमिदं तमः अज्ञानं यदि त्वं नाहास्यः न त्यक्ष्यसि तदात्मा वैलक्षण्येन मरणादवश्यं यावज्जीवमशोचिष्यः शोकमेष्यसि अतो मयाभिधीयमानः स्वयञ्च विमृशन् परिशुद्धा चेय-मित्यवेहि तेन न शोचिष्यसि अत्र भविष्यदज्ञानात्यागो हेतुः याव-ज्जीवशोचनं हेतुमत् तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ सत्यां भविष्यति नित्यं लृङ् अत्राज्ञानत्यागक्रियायास्तद्धितबोधोपदेशक-त्वमर्पितज्ञानोत्पादनिपातादतिपत्तिर्गम्यते अन्यच्च अभूतवस्तूत्पादक-सूचक उत्पातो भवति न च तथाभूतोऽस्तीति दर्शयन्नाह यदीयम-क्षोभिष्यत् दुष्टचित्ताभूत् तदा भानुरपि क्ष्मां पृथ्वीमपतिष्यत् गतो-ऽभूत् अत्रापि क्षोभो हेतुः भानुपतनं हेतुमत् तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते लृङ् अत्र क्षोभक्रियायास्त-द्धितक्षोभोपनिपातादतिपत्तिः ॥ ६ ॥ ज० म०

यावज्जीवमित्यादि । चेद्यदि इदं तमः परगृहोषिता सीता न परिशुद्धेति लोकावज्ञानं त्वं नाहास्यः न त्यक्ष्यसि तदा यावज्जीवम् अशोचिष्यः शोकं करिष्यसि अन्यच्च चेद्यदि इयं सीता अक्षोभिष्यत् दुष्टा अभविष्यत् तदा भानुरपि ऊर्द्ध्वगामी अंशुमानपि क्ष्मां पृथिवीम् अपतिष्यत् तत्र पतितोऽभवदित्यर्थः ॥ ६ ॥ भ०

अन्यच्च सत्येन सर्वता लोकपाला अदुष्टचित्तेषु सन्निधीयन्ते इति दर्शयन्नाह ।

समेत्यादि । स्त्रीणामिदं स्त्रैणं चापलं चारित्रवम्यं तदत्र सीतायां हे राजेन्द्र ! समपत्स्यत सम्पन्नमभूत् ततः कारणादमी लोकपालाः एवमादयो मूर्त्तिमन्तः कलिद्रुहः पापस्य द्रोग्धारः इह

आश्चर्य्यं यच्च यत्र स्त्री कृच्छ्रेऽवर्त्स्यत् त्वन्मते तव ।
त्रासादस्यां विनष्टायां किं किमाशंसिष्यथाः फलम् ॥८॥

नायास्यन् नागता अभूवन् चापलमत्र हेतुः लोकपालागमनं हेतुमत् ततो हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते लृङ् अत्र चापलाचरणक्रियायास्तद्विदलाचापलोपनिपातादतिपत्तिः ॥७॥ज०म०

समेत्यादि। हे राजेन्द्र ! अत्र सीतायां स्त्रैणं स्त्रीसम्बन्धि चापलं चाञ्चल्यं समपत्स्यत सम्पन्नमभूत् तदा अमी कालिद्रुहः पापद्रोहशीला लोकपाला इन्द्रादयो मूर्त्तिमन्तो नायास्यन् आगता नाभूवन् ॥ ७ ॥ भ०

अन्यच्च योषिद्धिसामान्येन नेयं द्रष्टव्येति दर्शयन्नाह ।

आश्चर्य्यमित्यादि। यच्च यत्र या भवति स्त्री यत्तय कृच्छ्रे मते इष्टेऽभिप्राये अवर्त्स्यत् प्रवृत्तिमती तदाश्चर्य्यं चित्रमेव वर्त्तते नान्येति भावः चित्रीकरणे चेत्यत्र यच्चयत्रयोरित्यनुवर्त्तते यच्च यत्र शब्द उपपदे गम्यमानं चित्रीकरणं लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते लृङ् अत्र कृच्छ्राभिप्रायानुवर्त्तनक्रियायास्तस्यां योषिदनुवर्त्तनं सामर्थ्याभावाद्गम्यते अन्यच्च स्वभावत एवं योषित् कातरा भवति ततश्च परस्त्रीहावस्थिता दुष्टेति क्रोधादहमवधिष्येति त्रासादस्यां विपन्नायां प्रच्छन्नविषयं गतायां सत्यां किं किमाशंसिष्यथाः फलं नाहमवकल्पयामि किं नाम तत्र फलं यदाशंसिष्यसि नैवेत्यर्थः अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपीत्यत्रापिशब्दात् किंवृत्तमनवक्लृप्तिश्च लिङो निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भविष्यति लृङ् अत्र फलप्राप्तिक्रियायास्तदन्यसामर्थ्याभावात् गम्यते किं किमाशंसिष्यथाः फलमिति पाठान्तरं तदयुक्तं किं किमाशंसिष्यसीत्यत्र तस्य अलिङ्निमित्ताभावात् ॥ ८ ॥ ज० म०

आश्चर्य्यमित्यादि। तव मतेऽभिप्राये यत्र देशे काले वा स्त्री योषित् यच्च कृच्छ्रे एवंविधे व्यसनेऽवर्त्स्यत् वर्त्तमानाभवत् तदाश्चर्य्यं नह्येवंविधे कर्मणि पतिव्रता वर्त्तत इति भावः स्त्रीवर्त्तमानक्रियायां

यत्र च्चामरिष्यत् स्त्री साध्वसाद्दोषवर्जिता ।
तदसूयारतौ लोके तस्या वाच्यास्पदं मृषा ॥ ९ ॥
अमंस्यत भवान् यद्वत्तथैव च पिता तव ।
नागमिष्यद्विमानस्थः साक्षाद्दशरथो नृपः ॥ १० ॥

असामर्थ्यात् धात्वर्थानिष्पत्तिः अन्यच्च स्त्री परगृहोषिता दुष्टेत्यग्नौ विशुद्धेति चेदाह मासादस्यां विपन्नायां मृतायां सत्यां त्वं नाथ किं फलम् अलप्स्यथाः नाहं दुष्टेति सीतायास्त्रासाभावेन विपत्तेरभावात् फललाभस्यानिष्पत्तिः ॥ ८ ॥ भ०

अथवा नाहं दुष्टेत्यवगच्छन्त्या योषितस्त्रास एव नास्ति येन गर्हितं मरणमाचरेदिति दर्शयन्नाह ।

यत्रेत्यादि । गर्हितमेतत् यच्च यत्र या भवति स्त्री दोषवर्जिता शुद्धचरितापि साध्वसात् पतित्रासादम्रियिष्यत् मृताभूत् नैवेत्यर्थः अदुष्टायाः साध्वसाभावात् गर्हार्थाभिव्यक्त यच्चयत्रयोः उपपदं गर्हा च लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते वा लृङ् अत्र मरणक्रियायास्तद्धेतुसाध्वसे परनिपातादतिपत्तिर्गम्यते यदि हि त्रासात् म्रियेत दोष एव स्यादित्याह तन्मरणं लोकेऽस्मिन्नसूयारतौ सत्स्वपि गुणेषु दोषाविष्करणपरे तस्या अदुष्टाया योषितः वाच्यास्पदं वचनीयाश्रयं मृषा अलीकमेव येन दुष्टैवेयं मृषा अलीकमेव येन प्रच्छन्नकृतेति यदि मरणमकरिष्यत् मृषावचनीयास्पदमभविष्यत् इतिक्रियातिपत्तौ योज्यम् अन्यथा वाक्यमिदमशरीरकं स्यात् दुष्टमवगच्छन्त्यानया प्रच्छन्नमरणं नानुष्ठितम् ॥ ९ ॥ ज० म०

यत्रेत्यादि । यच्च यत्र दोषवर्जिता सुचरिता पतिव्रता स्त्री साध्वसात् अमरिष्यत् मृता भूता तस्या मृताया असूयावति दोषाविष्करणरते लोके वाच्यास्पदं वचनीयाश्रयं तन्मरणं मृषा मिथ्या भविष्यति पतिव्रतायाः साध्वसाभावात् मरणक्रियाया अनिष्पत्तिः ॥ ९ ॥ भ०

अमंस्यतेत्यादि । यद्वद्यथा भवानमंस्यत दुष्टेति ज्ञातवान् तद्वं

नाकल्पयत्सन्निधिं स्थाणुः शूली वृषभवाहनः ।
नान्वभाविष्यतान्येन मैथिली चेत्पतिव्रता ॥ ११ ॥
आनन्दयिष्यदागत्य कथं त्वामरविन्दसत् ।
राजेन्द्र ! विश्वसृड्धाता चारित्र्ये सीतया च्युते ॥ १२ ॥

तद्यदि नान्यथा तदा तव पिता दशरथः साक्षात्प्रत्यक्षो विमानस्थः सन् नागमिष्यत् नागतवान् स्यात् अत्र दुष्टताभवनं हेतुः दशरथागमनञ्च हेतुमत् तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते लृङ् अत्र दुष्टताभवनक्रियायाश्छिद्रत्वाद्दुष्टत्वोपनिपातादतिपत्तिः ॥ १० ॥ ज० म०

असंस्कृतेत्यादि । भवान् यत् अमंसत् दुष्टेयमिति यच्च ज्ञातवान् तत्तथैव चेत् यदि तदा तव पिता दशरथो विमानस्थः सन् साक्षात् प्रत्यक्षं नागमिष्यत् नागतवान् अस्या दुष्टत्वाभावात् मरणस्यानिष्पत्तिः दुष्टत्वस्यानेनागमनस्यानिष्पत्तिः ॥ १० ॥ म०

नाकल्पयदित्यादि । मैथिली पतिव्रता सती चेद्यदि त्वत्तोऽन्येन नान्वभाविष्यत परिभुक्ताभूत् चिरवदित् तदायं स्थाणुर्महादेवः शूली वृषभवाहनः व्यक्तचिह्नः सन् सन्निधिं सन्निधानं नाकल्पयत् न कृतवान् स्यात् नाविचक्लृप इति चकारात्सौ च परस्मैपदे लृङ् अन्यानुभवनं हेतुः स्थाण्वागमनं हेतुमत् पूर्ववत् क्रियातिपत्तौ लृङ् अत्रान्यानुभवनक्रियायाश्छिद्रत्वादन्यानुभवनोपपत्तिपातादतिपत्तिः ॥ ११ ॥ ज० म०

नाकल्पयदित्यादि । पतिव्रता मैथिली चेद्यदि त्वत्तोऽन्येन नान्वभाविष्यत अनुभूता नाभूत् तदा अयं शूली वृषभवाहने व्यक्तचिह्नः स स्थाणुर्महादेवः सन्निधिं सन्निधानं नाकल्पयत् न कल्पितवान् सीतायाः पतिव्रतात्वादन्यानुभवस्यानिष्पत्तिः अननुभूतत्वे सन्निधिकल्पनस्यानिष्पत्तिः वृद्भ्यो नेम् पे इति वचनात् क्लृपेः पं हनपहृदश च इति सुत्रो मिण् ॥ ११ ॥ म०

आनन्दयिष्यदित्यादि । हे राजेन्द्र ! सीतया चारित्र्ये च्युते कलुषिते कृते सति एष धाता ब्रह्मा विश्वसृट् सर्वस्य जगतः स्रष्टा अर-

प्रणमन् ब्रह्मणा प्रोक्तो राजकाधिपतिस्ततः।
नाशोत्स्यन्मैथिली लोके नाचरिष्यदिदं यदि ॥ १२ ॥
नाशोत्स्याम वयं शङ्कामिहाधास्यन्न चेद्भवान्।

विन्दयत् कमलासनः सन् आगत्य त्वां कथमानन्दयिष्यत् दर्शनाशीर्वादादिभिरानन्दिभिरानन्दितवान् गर्हितमेतत् युक्तमागत्यानन्दयितुमित्यर्थः विभाषाकथमिलिङ्चेति कथंशब्दो गर्हे च लिङ्निमित्तं तस्मिन् क्रियातिपत्तौ भूते लृङ् अतानन्दनक्रियायास्तद्विरुद्धचारित्य-चतोपनिपातादतिपत्तिः ॥ १२ ॥ ज० म०

आनन्दयिष्यदित्यादि। हे राजेन्द्र! सीतया चारित्र्ये च्युते सति अरविन्दसत् पद्मासनो ब्रह्मा विश्वसृक् स्रष्टा धाता समस्तभुवनस्य धारयिता आगत्य त्वां कथमानन्दयिष्यत् दर्शनाशीर्वादादिभिः कथमानन्दितवान् पतितसंसर्गो हि निन्दावहति सीतायाः च्युत-चरित्रत्वे आनन्दस्यानिष्पत्तिः ॥ १२ ॥ भ०

प्रणमन्नित्यादि। ततोऽनन्तरं राजकाधिपतिः राजसमूहानां पतिः राजकं राजसमूहः गोत्रोऽक्षेत्यादिना वुञ् रामः प्रणमन् ब्रह्माणमित्यर्थात् ब्रह्मणा प्रोक्तः मैथिली यदि इदं वह्निप्रवेशनं नाचरिष्यत् नानुष्ठितवती तदा लोके दुराराधे नाशोत्स्यत् न शुद्धाभूत् किन्तु शुद्धा शुचशौचे दिवादिः अत्राग्निप्रवेशाचरणं हेतुः अशोधनञ्च हेतुमत् तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ भूते लृङ् अत्राग्निप्रवेशनाचरणक्रियायास्तद्विरुद्धाचरणोपनिपातादतिपत्तिः ॥ १२ ॥ ज० म०

प्रणमन्नित्यादि। प्रणमन् ब्रह्मणे प्रणामं कुर्वन् राजकाधिपती राजसमूहाधिपो रामो ब्रह्मणा प्रोक्तः। किं तदित्याह मैथिली यदि इदं वह्निप्रवेशनं नाचरिष्यत् नानुष्ठितवती तदा लोके नाशोत्स्यत् शुद्धा नाभूत् शुध्यशौचे धात्वर्थस्यातानिष्पत्तिर्वाक्याद्गम्यते ॥ १२ ॥ भ०

नेत्यादि। चेद्यदि भवानिह सीतां नाधास्यत् न रोपितवान् अन्तर्भावितोऽन्त्र ण्यर्थः तदा वयं किं शुद्धा नेति शङ्कां नाशोत्स्याम न

किंवा चित्रमिदं युक्तं भवान् यदकरिष्यत ॥ १४ ॥

प्रावर्त्तिष्यन्त चेष्टाश्चेदयायातथ्यवत्तव ।

अनुग्राह्ये त्वया लोके रामावर्त्स्यंस्तरां ततः ॥ १५ ॥

युक्तवन्तः अस्मिन् वस्तुनि अग्निप्रमाणत्वेन लोकोऽग्रहीष्यादित्यवयुक्त-वान् अन्यथा ब्राह्मणः सर्ववेदित्वात् कथं शङ्का स्यात् अत्राधानं हेतुः शङ्कात्यागश्च हेतुमान् अस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते लृङ् अत्रानाधानक्रियायास्तद्विरुद्धाधानोपनिपातादतिपत्तिर्गम्यते अथवा नाहमवकल्पयामि यदिदं परस्त्रीयोषिताया अग्निप्रवेशशोधनं युक्तं न्याय्यं तत् भवान् किं चित्रमकरिष्यत् विस्मयनीयं कृतवान् एवं राज्ञः कस्य व्यवस्थार्थं विशेषे प्रवर्त्तनात् अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपीत्यत्रा-पिशब्दात् किंवृत्तमनवक्लृप्तिश्च लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते लृङ् अत्र चित्रीकरणक्रियाया अतिपत्तिस्तद्विरुद्ध-स्याचित्रीकरणस्योपनिपातादतिपत्तिर्गम्यते यदि भवान् परीक्ष्य सीतायाः परिग्रहणमकरिष्यत लोकोऽपि तथाकरिष्यत् ॥१४॥ ज० म०

नाग्रोच्यामेत्यादि । यदि भवानिह वह्नौ सीतां नाधास्यत् न धारितवान् तदा तस्यां शङ्कां वितर्कं वयमपि न मोक्ष्याम न त्यक्तवन्तः अत्र धात्वर्थस्यानिष्पत्तिर्वाक्याद्गम्यते इदं किंवा चित्रं किमाश्चर्यं यद्भवान् युक्तमकरिष्यत कृतवान् युक्तकरणत्वेन चित्रीकरणस्यानिष्पत्तिः ॥ १४ ॥ भ०

प्रधानानुयायित्वाल्लोकस्येति दर्शयन्नाह ।

प्रावर्त्तिष्यन्तेत्यादि । चेद्यदि तव लोकव्यवस्थाकारिणश्चेष्टाः कर्माणि अयाथातथ्यवत् यथा अज्ञाना असमीक्ष्यकारितया प्रवर्त्तन्ते तद्वत्प्रावर्त्तिष्यन्त तथाप्रवर्त्तनात् त्वया आनुग्राह्ये व्यवस्थायां स्थाप्ये लोके हे राम ! तास्चेष्टा अवर्त्स्यंस्तराम् अतिशयेन प्रावर्त्तिष्यन्त नच तव प्रवृत्ताः अत्र रामचेष्टाप्रवर्त्तनं हेतुः लोकचेष्टाप्रवर्त्तनञ्च हेतुमत् तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते भविष्यति लृङ् अत्रापि परीक्ष्य स्वीकरणलक्षणक्रियायास्तद्विरुद्धपरीक्षितोपादानादतिपत्तिः

प्रणमन्तं ततो राममुक्तवानिति शङ्करः ।
किं नारायणमात्मानं नाभोत्स्यत भवानजम् ॥ १६ ॥
कोऽन्योऽकर्त्स्यदिह प्राणान् दुष्टानाञ्च सुरद्विषाम् ।
को वा विश्वजनीनेषु कर्मसु प्राघटिष्यत ॥ १७ ॥

अयायातथ्यवदिति वतिप्रत्ययान्तं क्रियाविशेषणं यथा तथा परयोः पर्य्यायेणेति नञः पर्य्यायेण वृद्धिः अवर्त्स्यं स्तरामिति तिङन्तेत्याति- शयिकस्तरः किमेत्तिङव्ययाम् न द्रव्यप्रधानिति स्तरं पूर्वस्यानुस्वारः ॥ १५ ॥ ज० म०

प्रावर्त्तिष्यन्तेत्यादि । हे राम ! तव व्यवस्थाकारित्वचेत् यदि यदि चेष्टाः कर्माणि अयायातथ्यवत् प्रावर्त्तिष्यन्त यथा अन्नस्यासमी- च्यकारितया यथा प्रवर्त्तन्ते तद्वत्प्रवृत्ता अभूवन् तदयायातथ्यप्रव- र्त्तनात् त्वयाऽनुशासे दुष्टव्यवस्थायां स्याप्यमाने लोके एवंविधाश्चेष्टा अवर्त्स्यंस्तराम् अतिशयेन प्रवृत्ता अभविष्यन् किमेव्याश्चेति चतराम् अत धात्वर्थस्यानिष्पत्तिर्वाक्यान्नम्यते ॥ १५ ॥ भ०

प्रणमन्तमित्यादि । ततो ब्रह्मवचनानन्तरं शङ्करो महादेवः वक्ष्यमाणं वचनं रामसुक्तवान् प्रणमन्तं तमेव शङ्करमित्यर्थात् किं नाम तत् यथा आत्मानं नारायणमजं नित्यम् अस्मिन् प्रादुर्भावे भवान्नाभोत्स्यत न बुद्धवान् अपितु तथाविधं कर्म कुर्वन् ज्ञातवानेव अत नारायणानबोधक्रियायाः तद्विरुद्धबोधनोपनिपातादप्रतिपत्तिः ॥ १६ ॥ ज० म०

प्रणमन्तमित्यादि । ततो ब्रह्मवचनानन्तरं प्रणमन्तं शङ्कराय प्रणामं कुर्वन्तं रामं शङ्कर उक्तवान् । किन्तदित्याह भवान् अजं नारा- यणस्वभावम् आत्मानं किं नाभोत्स्यत न बुद्धवान् अपितु तथाविधं कर्म कुर्वन् ज्ञातवानेव बुध्योङवेदने भ्वादिरात्मनेपदीति तः अत नारायण- बोधस्यानिष्पत्तिः ॥ १६ ॥ भ०

तदेव दर्शयन्नाह ।

क इत्यादि । यदि नारायणो न भवान् तदा तस्मादन्यः को नाम

दैत्यक्षये महाराज ! यत्र यत्राघटिष्यथाः ।
समाप्तिं जातु तत्रापि किं नानेष्यस्त्वमीहितम् ॥१८॥
तातं प्रसाद्य कैकेय्या भरताय प्रपीड़ितम् ।

सुरविद्विषां राक्षसानां दृप्तानां प्राणानकर्त्स्यत् छिन्नवान् क्षतौच्छेदने नैव विश्वजनीनेषु सर्वलोकहितेषु कर्मसु अनुग्रहलक्षणेषु को नाम प्राघटिष्यत चेष्टितवान् अत्राच्छेदनक्रियाया अघटनक्रियायाश्च तद्विरुद्धं छेदनघटनोपनिपातादतिपत्तिः सर्वत्र किंवृत्ते लङ्लृटाविति क्रियातिपत्तौ भूते गर्हायां लङ् ॥ १७ ॥ ज० म०

नारायणत्वं दर्शयति ।

कोऽन्य इत्यादि । यदि भवान् नारायणो न स्यात् तदा त्वत्तोऽन्यः क इह जगति दृप्तानां सुरद्विषां रक्षसां प्राणान् अकर्त्स्यत् भिन्नवान् कोऽपीत्यर्थः अन्यच्च विश्वजनीनेषु सर्वलोकहितेषु कर्मसु वा कः प्राघटिष्यत चेष्टितवान् न कोऽपीत्यर्थः ॥ १७ ॥ भ०

दैत्यक्षय इत्यादि । हे महाराज ! नैवेदमवकल्पयामि दैत्यक्षयनिमित्तं यत्र यत्र त्वमघटिष्यथाः यां पुनरात्मनो घटनां करिष्यसि किन्तु पुनः प्रादुर्भावे घटिष्यसे तत्रापि प्रादुर्भावत्वमीहितं चेष्टितं जातु कदाचित् समाप्तिं सिद्धिं नानेष्यः किं न नेष्यसि जातुयदोर्लिङिति जातुयच्छब्दौ अनवकॢप्तिश्च लिङ्निमित्तं तस्मिन् क्रियातिपत्तौ भविष्यति नित्यं लङ् अत्राघटनक्रियायाश्चातिपत्तिः ज्ञानेनोपलब्धं भविष्यत्प्रादुर्भावसमाप्तिनयनयोस्तद्विरुद्धयोरुपनिपातात् ॥ १८ ॥ ज० म०

दैत्यक्षये इत्यादि । हे महाराज ! दैत्यक्षयनिमित्तं यत्र त्वम् अघटिष्यथाः अनुष्ठितवानसि तत्र जातु कदाचित्त्वं ईहितं ईप्सितं किं समाप्तिं पूर्णतां न अनेष्यः न नीतवानसि अपितु नीतवानेव अत्र घटनक्रियायाः समाप्तिक्रियायाश्च ज्ञानानुपलब्धत्वादनिष्पत्तिः ॥ १८ ॥ भ०

तातमित्यादि । तातं दशरथं कैकेय्या प्रपीड़ितं सन्तापितं

सहस्रचक्षुषं रामो निनंसुः परिदृष्टवान् ॥ १९ ॥
प्रेता वरेण शक्रस्य प्राणन्तः कपयस्ततः ।
संजाताः फलिनानम्ररोचिष्णुद्रुमसद्रवः ॥ २० ॥
भ्रमरकुलाकुलोल्वणसुगन्धिपुष्पतरु
स्तरुणमधूकसम्भवविशङ्कितभृङ्गशिखः ।
शिखरशिलान्तरालपरिकॢप्तनलावसरः-
सरसफलश्रियं विततान सुवेलगिरिः ॥ २१ ॥

भरताय भरतार्थं राज्येऽभिषिच्यतामिति प्रसाद्य तद्विषये चित्तकालुष्यं त्याजयित्वा रामः सहस्रचक्षुषम् इन्द्रं परिदृष्टवान् संदृष्टवान् निनंसुः नन्तुमिच्छुः ॥ १९ ॥ ज० म०

तातमित्यादि । तातं दशरथं प्रसाद्य कैकयीविषये चित्तमालिन्यं त्याजयित्वा रामः सहस्रचक्षुषम् इन्द्रं दृष्टवान् तातं कीदृशं कैकेय्या भरतार्थं राज्येऽभिषिच्यतामिति प्रपीड़ितं निनंसुः प्रणामं कर्तुमिच्छुः ॥ १९ ॥ भ०

प्रेता इत्यादि । ततः प्रणामानन्तरं शक्रस्य प्रसन्नस्य वरेण कपयः संग्रामे प्रेताः संग्रामे मृताः प्राणन्तो जीवन्तः सञ्जाताः संवृत्ताः । कीदृशा इत्याह फलिनाः फलवन्तः फलवद्भ्यामिनच् अतएव नम्राः नमनशीलाः रोचिष्णवः दीपनशीलाः ये द्रुमास्तेषु सद्रवः सदनशीलाः दाधेट्सीत्यादिना सदे रुः ॥ २० ॥ ज० म०

प्रेता इत्यादि । ततोऽनन्तरं प्रसन्नस्य शक्रस्य वरेण युद्धे प्रेताः कपयः प्राणन्तो जीवन्तः सञ्जाताः । कीदृशाः फलिनः फलवन्तः अतएव फलभारेणानम्रा आनमनशीला रोचिष्णवो रोचनशीला ये द्रुमास्तेषु सद्रवः सदनशीलाः सतसदसिधेदोरुरिति सदेरुः ॥ २० ॥ भ०

भ्रमरेत्यादि । वरेण च स सुवेलगिरिः सरसाम् अभिनवां फलश्रियं विभूतिं विततान विस्तृतवान् भ्रमरकुलैराकुला व्याप्ता उल्वणाः सुगन्धयश्च सपुष्पास्तरवो यत्र गिरौ तरुणानाम् अभिनवानां मधू-

संवाद्भिः सकुसुमरेणुभिः समीरै-
र्वानम्रैर्बहुफलधारिभिर्वनान्तैः ।
अप्रोतद्भिर्मधुपटलैश्च वानराणा-
माप्यानो रिपुवधसम्भवः प्रमोदः ॥ २२ ॥
आयान्त्यः स्वफलभरेण भङ्गुरत्वं
भृङ्गालीनिचयचिता लतास्तरूणाम् ।

कानां यः सम्भवः तेन पिशङ्गितास्तुङ्गाः शिखाः शिखराणि यत्र शिखरशिलानामन्तरालेषु परिकूष्णा जलावसरा जलधारा यत्र जल-मपसरन्त्येभ्य इति ल्युटोरप् ॥ २१ ॥ ज० म०

भ्रमरकुलेत्यादि । सुवेलगिरिरशिरेण सरसानां फलानां श्रियं विततवान् । कीदृशः भ्रमरसमूहेन व्याप्ता उत्तमशोभनगन्धयुक्ताः पुष्प-सहिता वृक्षा यत्र अभिनवानां मधूकपुष्पाणां सम्भवोऽस्तित्वं तेन पिशङ्गिता तुङ्गा उच्चा शिखा वृक्षशिखा यत्र शिखरशिलान्तरालेषु परिकूष्णा जलावसरा जलधारा यत्र ॥ २१ ॥ भ०

संवाद्भिरित्यादि । सम्भवत्यस्मादिति सम्भवः रिपुवधः सम्भवो यस्य प्रमोदस्य स वानराणामाप्यानः वृद्धिं गतः व्यवस्थितविभाषाविज्ञा-नात् सोपसर्गस्य प्यायतेरिति पीभावो न भवति ओदितश्चेति निष्ठा-नत्वं कैराप्यानः समीरैः सकुसुमरेणुभिः संवाद्भिः वहद्भिः वनान्तैः फलभरधारिभिः अतएवानम्रैः मधुकरपटलैः अप्रोतद्भिः अच्छिन्नैरर्थात् ॥ २२ ॥ ज० म०

संवाद्भिरित्यादि । वानराणां रिपुवधसम्भवः प्रमोदः समीरा-दिभिः आप्यानो वृद्धिं गतः । कीदृशैः समीरैः संवाद्भिः सम्यगवैष-रीत्येन वहद्भिः पुष्पपरागसहितैः । वनान्तैः कीदृशैः वरफलधारिभिः उत्तमफलयुक्तैः अतएवानम्रैः आनमनशीलैः । मधुपटलैः कीदृशैरप्रो-तद्भिः चरद्भिः ॥ २२ ॥ भ०

आयान्त्य इत्यादि । तरूणां लताः स्वफलभरेण भङ्गुरत्वं स्वभेद्य-

सामोदाः चितितलसंस्थितावलोप्या
भोक्तॄणां श्रममुदयं न नीतवत्यः ॥ २२ ॥
इति भट्टिकाव्ये तिङन्तकाण्डे लङ्प्रदर्शनो नाम
एकविंशतितमः सर्गः ।

---

आमायान्त्यः गच्छन्त्यः सामोदाः अतएव भृङ्गालीनिचयचिताः चितितलसंस्थितैरेव अवलोप्तु शक्याः भोक्तॄणां कपीनां श्रमं चित्तकायक्लेशम् उदयं वृद्धिं न नीतवत्यः। विनीतवत्य इति पाठान्तरम् । उत्पूर्वादयतेः कर्त्तर्यच वृद्धिमुपगच्छन्तं श्रममपनीतवत्य इत्यर्थः ॥२२॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लङ्-
विलसितं नामाष्टमः परिच्छेदः ।
काव्यञ्च सीतासंशोधनं नाम एकविंशः सर्गः ।

आयान्त्य इत्यादि । तरूणां लता भक्तॄणां श्रमम् उदयं वृद्धिं न नीतवत्यः न प्रापिताः अपनीतवत्य इत्यर्थः । विनीतवत्य इति कचित्पाठः । कीदृश्यः लताः फलभरेण भङ्गुरत्वं स्वयमेव भेद्यत्वम् आयान्त्यः प्राप्नुवत्यः भ्रमरश्रेणीसमूहव्याप्ताः आमोदसहिताः चितितलसंस्थितैरेवावलोप्याः अवलोप्तुं शक्याः ॥ २२ ॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्री-
भरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकाया-
मेकविंशः सर्गः ।

---

# द्वाविंशः सर्गः ।

ततो रामो हनूमन्तमुक्तवान् हृष्टमानसम् ।
अयोध्यां श्वः प्रयातासि कपे ! भरतपालिताम् ॥ १ ॥
गाधितासे नभो भूयः स्फुटन् मेघघटावलि ।
ईक्षितास्यम्भसां पत्युः पयः शिशिरशीकरम् ॥ २ ॥

इतः प्रभृति लुटमधिकृत्य विवक्षितमाह तत्र भविष्यदनद्यतने लुट् ।

तत इत्यादि । ततः सीतासंयोजनानन्तरं रामो हनूमन्तं हृष्टमानसं स्वामिकार्य्यस्य निष्पादितत्वात् उक्तवान्, हे कपे ! श्वोदिने अयोध्यां भरतपालितां प्रयातासि गन्तासि तासस्त्योर्लोपः ॥१॥ ज० म०

अथ डीमधिकृत्योच्यते तस्याः परमते लुट्संज्ञा ।

तत इत्यादि । ततः सीताशुद्ध्यनन्तरं रामो हनूमन्तम् उक्तवान् कीदृशं प्रमुदितहृदयं स्वामिकार्य्यस्य निष्पादितत्वात् किमुक्तवानित्याह हे कपे ! भरतरक्षिताम् अयोध्यां रामपुरीं श्वोऽनागतेऽह्नि प्रयातासि गमिष्यसि भवद्भूतभव्ये इति भविष्यति डी भविष्यत्सामान्ये व्यविधानात् च इत्यस्य न वैयर्थ्यम् ॥ १ ॥ भ०

गाधितास इत्यादि । भूयः पुनरपि नभः गाधितासे प्रस्थातासे गाधृप्रतिष्ठालिप्सयोरित्यनुदात्तेत् त्वद्गमनवातात् स्फुटन्त्यः खण्ड्यो भवन्त्यः मेघघटा मेघपङ्क्तयो यत्र नभसि अम्भसां पत्युः समुद्रस्य पयः शिशिरशीकरं वीक्षितासे द्रष्टासि ॥ २ ॥ ज० म०

गाधितासे इत्यादि । भूयः पुनरपि नभ आकाशं गाधितासे गाधृस्थात् प्रतिष्ठाप्सयोः कीदृशं नभः स्फुटन्त्यः खण्ड्यो भवन्त्यः

सेवितासि प्लवङ्ग ! त्वं महेन्द्राद्रेरधित्यकाः ।
व्युत्क्रान्तवर्त्मनो भानोः सहज्योत्स्नाः कुमुद्वतीः ॥३॥
चन्दनद्रुमसंछन्ना निराकृतहिमश्रथाः ।
दर्शितारस्त्वया ताश्च मलयोपत्यकाः शुभाः ॥ ४ ॥

मेघघटा मेघावल्यो यत्र अम्भसां पत्युः समुद्रस्य शीतलकणकं जलम् द्रीचितासि ॥ २ ॥ भ०

सेवितास इत्यादि । हे प्लवङ्ग ! भानोरादित्यस्य व्युत्क्रान्तवर्त्मनः अत्युच्चत्वादतिक्रान्तमार्गस्य महेन्द्राद्रेः अधित्यकाः उपरिभागान् कुमुद्वतीः विद्यमानकुमुदाः सह ज्योत्स्नया सह पचादित्वे-ग्रमसमासः सज्योत्स्ना वा कुमुद्वत्यः कुमुदाकरा यासु अधित्यकासु तास्त्वं सेवितासि अनुभवितासि प्लवं गच्छतीति खच् प्लवङ्गतीति कर्त्तरि अच् वा उखउखीत्यत्र वर्गः पठते ॥ ३ ॥ ज० म०

सेवितासि इत्यादि । हे प्लवङ्ग ! हनूमन् ! महेन्द्रपर्वतस्य ऊर्द्ध्वभूमीः सेवितासि । महेन्द्राद्रेः कीदृशस्य भानोः सूर्य्यस्य उल्लङ्घितमार्गस्य उच्चत्वात् । अधित्यकाः कीदृशीः ज्योत्स्नाकुमुद्वतीभ्यां सह वर्त्तमानः ॥ ३ ॥ भ०

चन्दनेत्यादि । ताश्च पूर्वं दृष्टाः मलयोपत्यकाः मलयासन्ना भुवः शुभाः चन्दनद्रुमसंच्छन्नत्वात् निराकृतहिमश्रथाः तिरस्कृतचन्द्राः त्वया दर्शितारः श्वो द्रष्टव्याः कर्मणि लुट् चिण्वदिट् च इति चेति मकारलोपः । हिमं श्रथ्नाति मुञ्चतीति हिमश्रथः चन्द्रः श्रन्थमोचनप्रतिहर्षयोरिति कर्मण्यण् अचोदेयेत्यादिना अनुनासिकलोपो निपात्यते ॥ ४ ॥ ज० म०

चन्दनद्रुमेत्यादि । त्वया ताः पूर्वं दृष्टा मलयाद्रेरासन्नभूमयो द्रष्टव्याः हन्यहदृशश्च इति सिण् । कीदृश्यः चन्दनवृक्षव्याप्ताः अतएव शुभाः सुखदत्वात् निराकृतो हिमश्रथश्चन्द्रो याभिः हिमं श्रथ्नाति मुञ्चतीति हिमश्रथः श्रन्थगमोचने इत्यस्य पजन्तस्य अदैधावोदेत्यादिना निपातनाद्रूपम् ॥ ४ ॥ भ०

प्रतन्व्रः कोमला विन्ध्ये सहितारः स्यदन्न ते ।
लतास्तबकशालिन्यो मधुलेहिकुलाकुलाः ॥ ५ ॥
द्रष्टासि प्रीतिमानारात् सखिभिः सह सेविताम् ।
सपक्षपातं किष्किन्ध्यां पूर्वक्रीडां स्मरन् मुहुः ॥ ६ ॥
त्वया सन्दर्शितारौ ते माल्यवद्दण्डकावने ।
उपद्रुतश्चिरं द्वन्द्वैर्ययोः क्लिशितवानहम् ॥ ७ ॥

प्रतन्व्र इत्यादि । विन्ध्ये लतास्तबकशालिन्यः सकुसुमस्तबकोपेताः मधुलेहिकुलाकुलाः भ्रमरकुलसङ्कुलाः प्रतनुत्वात् कोमलत्वाच्च गच्छतस्ते तव स्यदं जवं न सहितारः न सहिष्यन्ते स्यदो जव इत्यानुनासिकलोपो निपात्यते ॥ ५ ॥ ज० म०

प्रतन्व्र इत्यादि । विन्ध्यपर्वते लतास्ते तव स्यदं वेगं न सहिष्यन्ते । कीदृश्यः प्रतन्व्रः अतिकृशाः कोमला मृद्व्यः स्तबकयुक्ताः अत एव भ्रमरसमूहव्याप्ताः ॥ ५ ॥ भ०

द्रष्टासीत्यादि । किष्किन्ध्याञ्च आरात् नातिदूरे द्रष्टासि प्रीतिमान् जातप्रीतिः सन् सखिभिर्मित्रैः सह सेविताम् अनुभूताम् एवञ्च कृत्वा पूर्वं क्रीडां स्मरन् मुहुः शेषत्वेन विवक्षितत्वात् षष्ठी न भवति सपक्षपातं सानुरागमिति क्रियाविशेषणम् ॥ ६ ॥ ज० म०

द्रष्टासीत्यादि । आराददूरे मित्रैः सहानुभूतां किष्किन्ध्यां सपक्षपातं सानुरागं यथा स्यात्तथा त्वं पूर्वक्रीडां मुहुर्वारंवारं स्मरन् प्रीतियुक्तः सन् द्रष्टासि वद्र्ष्यसि(?)दिति रः ॥ ६ ॥ भ०

त्वयेत्यादि । माल्यवान् पर्वतः दण्डकावनं दण्डकेति नामारण्यं ते त्वया सन्दर्शितारौ कर्मणि लुट् ययोर्माल्यवद्दण्डकावनयोः व्यवस्थितैः द्वन्द्वैः सीतावियोगदुःखैः चिरमुपद्रुतोऽभिभूतः सन् अहं क्लिशितवान् पीडामनुभूतवान् क्लिशः क्त्वानिष्ठयोरितीट् मृडमृदेत्यादिना किच्वन् ॥ ७ ॥ ज० म०

त्वयेत्यादि । माल्यवान् पर्वतो दण्डकावनञ्च ते त्वया द्रष्टव्ये

आसारौ भवता रम्यावाश्रमौ हरिणाकुलौ।
पुण्योदकद्विजाकीर्णौ सुतीक्ष्णशरभङ्गयोः॥ ८॥
अतिक्रान्ता त्वया रम्यं दुःखमत्रेस्तपोवनम्।
पवित्रचित्रकूटेऽद्रौ त्वं स्नातासि कुतूहलात्॥ ९॥
ततः परं भरद्वाजो भवता दर्शितो मुनिः।
दृष्टाश्च जनाः पुण्या यामुनाम्बुक्षतांहसः॥ १०॥

हनयहहश्च इति मिथ् ययोर्माल्यवद्दण्डकावनयोरहं चिरं चिर-कालं द्वन्द्वैः सीतावियोगजैर्दुःखैरुपद्रुतः सन् चर्ह क्लिशितवान् दुःक्लिशेति पचो इत्॥ ७॥ भ०

आसारावित्यादि। सुतीक्ष्णशरभङ्गयो रम्यावाश्रमौ हरिणा-कुलौ पुण्यैरुदकैर्द्विजैः पक्षिभिश्चाकीर्णौ भवता आसारौ प्राप्तौ॥ ८॥ ज० म०

आसारावित्यादि। भवता सुतीक्ष्णशरभङ्गयोर्मुन्योराश्रमौ आसारौ प्राप्तौ रमणीयौ मृगव्याप्तौ पुण्यजलविप्रव्याप्तौ॥ ८॥ भ०

अतिक्रान्तेत्यादि। अत्रेश्च तपोवनं रम्यत्वात् त्वया दुःखमति-क्रान्ता अतिक्रमितव्यम्। चित्रकूटे चाद्रौ पवित्रे पुण्ये कुतूहलात् त्वं स्नातासि॥ ९॥ ज० म०

अतिक्रान्तेत्यादि। अत्रेर्मुनेरम्यं तपोवनं त्वया दुःखं यथा स्यात्तथा अतिक्रान्ता अतिरमणीयत्वात् कष्टेन त्वं त्यक्ष्यसीति भावः। पवित्रे चित्रकूटपर्वते च त्वं कुतूहलात् स्नातासीत्यर्थः॥ ९॥ भ०

तत इत्यादि। ततः चित्रकूटात्परं गच्छता भवता भरद्वाजो मुनिर्दर्शितो द्रष्टव्यः। जनाश्च पुण्याः यामुनाम्बुक्षतांहसः यमुना-जलस्य स्नानात्पानाच्च क्षयितपापाः द्रष्टारो द्रष्टव्या वा चिण्वदिट्॥ १०॥ ज० म०

तत इत्यादि। ततश्चित्रकूटगमनात्परं भरद्वाजो मुनिस्त्वया द्रष्टव्यः। तत्र पुण्ययुक्ता जनाश्च द्रष्टारो द्रष्टव्याः यमुनाजलविनाशितपापाः॥ १०॥ भ०

स्रुत्वा स्रुत्वा दिवः शम्भोर्मूर्ध्नि स्रान्त्वा भुवं गताम् ।
गाहितासेऽथ पुण्यस्य गङ्गां मूर्त्तिमिव द्रुताम् ॥ ११ ॥
तमसाया महानीलपाषाणसदृशत्विषः ।
वनान्तान् बहु मन्तासे नागराक्रीडशाखिनः ॥ १२ ॥
नगरस्त्रीस्तनन्यस्तधौतकुङ्कुमपिञ्जराम् ।
विलोक्य सरयूं रम्यां गन्तायोध्या त्वया पुरी ॥ १३ ॥

स्रुत्वेत्यादि । अथानन्तरं या गङ्गा दिवः स्रुत्वा स्रुत्वा स्नुत्वा स्नुत्वा आभीक्ष्ण्ये न स्नुत्वेति चकारात् क्त्वा च आभीक्ष्ण्ये च द्वे भवतः शम्भोर्मूर्ध्नि स्रान्त्वा गत्वा क्षितिं गता क्त्विस्कन्दस्यन्दोरित्यनुनासिकलोपप्रतिषेधः तां पुण्यस्य मूर्त्तिमिव द्रुतां गाहितासे स्नातुं विलोभितासि ॥ ११ ॥ ज० म०

स्रुत्वेत्यादि । अथानन्तरं गङ्गां गाहितासे तस्यामवगाहं करिष्यसि । कीदृशीं दिवः स्वर्गात् स्रुत्वा स्रुत्वा स्नुत्वा स्नुत्वा शम्भोः शिरसि मूर्ध्नि स्रान्त्वा गत्वा क्षितिं गतां पुण्यस्य द्रवीभूतां मूर्त्तिमिव क्त्वि स्कन्दस्यन्द इति किच्चनिषेधात् नलोपाभावः ॥ ११ ॥ भ०

तमसाया इत्यादि । तमसायाश्च नद्याः वनान्तान् वनोपकण्ठान् महानीलसमेत्सुल्यत्विषोऽतिनीलत्वात् नागराणाम् आक्रीडो रन्तव्यं तत्शाखिनः बहु मन्तासे साधितासे । १२ ॥ ज० म०

तमसाया इत्यादि । त्वं तमसाया नद्या वनान्तान् वनप्रदेशान् बहु मन्तासे साधितासे । कीदृशान् अतिनीलत्वात् महानीलप्रस्तरतुल्यकान्तीन् नागराणाम् आक्रीडाः शाखिन उद्यानद्वक्षा यत्र । शाखिन इति पाठे नागराणामाक्रीडे रमणे साधिनः ॥ १२ ॥ भ०

नगरेत्यादि । नगरस्त्रियः अयोध्यास्त्रियः तासां स्तनेषु यत् पूर्वं न्यस्तं पश्चाद्धौतं कुङ्कुमं तेन पिञ्जरां कपिशाम् अतएव रम्यां सरयूं विलोक्य अयोध्या पुरी त्वया गन्ता गन्तव्या ॥ १३ ॥ ज० म०

नगरेत्यादि । नगरस्त्रीणाम् अयोध्यास्त्रीणां स्तनेषु पूर्वं न्यस्तं पश्चा-

आनन्दितारस्त्वां दृष्ट्वा प्रष्टारश्चावयोः शिवम् ।
मातरः सह मैथिल्यास्तोष्टा च भरतः परम् ॥ १४ ॥
आख्यातासि हतं शत्रुमभिषिक्तं विभीषणम् ।
सुग्रीवश्चार्जितं मित्रं सर्वांश्चागामुकान् द्रुतम् ॥ १५ ॥
गन्तारः परमां प्रीतिं पौराः श्रुत्वा वचस्तव ।
श्रावैतत्र पश्चात्खीनश्च समेता भरतो ध्रुवम् ॥ १६ ॥

चौतं यत् कुङ्कुमं तेन पिञ्जरां रमणीयां सरयूं नदीं विलोक्य त्वया अयोध्या पुरी गन्तव्या ॥ १३ ॥ भ०

आनन्दितार इत्यादि । अयोध्यायाञ्च त्वां दृष्ट्वा मातरः कौशल्याद्याः आनन्दितारः आनन्दिष्यन्ति आवयोश्च रामलक्ष्मणयोः सह मैथिल्याः शिवं कल्याणं प्रष्टारः प्रश्नं करिष्यन्ति भरतश्च श्रुत्वा परमत्यर्थं तोष्टा प्रीतिं कर्त्ता आसन्निततायामनिव्यन्ता इति दर्शनं तेषां णिज् न भवति अन्यथा णेरनिटीति णिलोपो न प्राप्नोति तत-श्चानन्दयितार इति स्यात् अथवा आनन्दनमानन्द इति घञन्तादा-चारे सर्वप्रातिपदिकेभ्य इति क्विप् तदन्तात्तासेरिट् अतो लोपे च रूपं सह मैथिल्योरिति पाठान्तरं तत्रापि स्यात् बहुव्रीहौ नद्यृत-श्चेति कप् भवति समासान्तविधिरनित्य इति कृत्वा ॥ १४ ॥ ज० म०

आनन्दितार इत्यादि । तत्रायोध्यायां त्वां दृष्ट्वा मातरः कौशल्याद्या आनन्दितारः आनन्दिता भविष्यन्ति मैथिल्या सहितयोराव-योः रामलक्ष्मणयोः शिवं कल्याणं प्रष्टारः प्रक्ष्यन्त्यन्तीषु । भरतः परमत्यर्थं तोष्टा तोक्ष्यति ॥ १४ ॥ भ०

आख्यातासीत्यादि । हतं शत्रुं रावणं लङ्कायामभिषिक्तं विभी-षणम् अर्जितं मित्रञ्च सुग्रीवं विशिष्टमाख्यातासि कथयितासि सर्वां-श्चागान् द्रुतमागामुकान् आगमनशीलान् ॥ १५ ॥ ज० म०

आख्यातासीत्यादि । एतानि आख्यातासि वक्ष्यसि सर्वानस्मान् द्रुतं शीघ्रम् आगमनशीलांश्च ॥ १५ ॥ भ०

गन्तार इत्यादि । त्वद्वचनं श्रुत्वा पौराः पौरजनाः परमां प्रीतिं

गते त्वयि पथानेन वयमप्यंहितास्महे ।
लब्धाहेऽहं धृतिं प्राप्ते भूयो भवति सम्मुखे ॥ १७ ॥
गते तस्मिन् गृहीतार्थे रामः सुग्रीवराक्षसौ ।
उक्तवान् श्वोऽभिगन्तास्थो युवां सह मया पुरम् ॥ १८ ॥
द्रष्टास्थस्तत्र तिस्रो मे मातॄस्तुष्टान्तरात्मनः ।
आत्यन्तीनं सखित्वञ्च प्राप्तास्थो भरताश्रयम् ॥ १९ ॥

गन्तारो गमिष्यन्ति एतन्मदागमनवृत्तान्तं श्रुत्वा सम्मुखीनः प्रतिबिम्बाश्रय इव सम्मुखो भूत्वा आमेत्यागमिष्यति भरतो भ्रुवमसंशयम् ॥ १६ ॥ ज० म०

गन्तार इत्यादि । तत्र एतद्वचनं श्रुत्वा पौराः पुरवासिजनाः परमाम् प्रीतिं गन्तारः गमिष्यन्ति एतन्मदागमनं श्रुत्वा भरतोऽपि सम्मुखीनः सन् समेता समागमिष्यति ॥ १६ ॥ भ०

गत इत्यादि । त्वयि पथा अनेन मयाभिहिते गते वयमपि अंहितास्महे प्रयातास्म अंहिगतौ भूयश्च पुनरपि भवति त्वयि सम्मुखे प्राप्ते धृतिमहं लब्धाहे प्राप्तास्मि एतीति तासिसकारस्य हकारः ॥ १७ ॥ ज० म०

गते त्वयीत्यादि । त्वयि गते सति अनेन ख्यातेन पथा वयमपि अंहितास्महे गमिष्यामः अहिङगतौ भूयः पुनरपि भवति त्वयि सम्मुखे प्राप्ते सति अहं धृतिं लब्धाहे प्राप्स्यामि ॥ १७ ॥ भ०

गते तस्मिन्नित्यादि । तस्मिन् हनूमति गृहीतार्थे अवगतसन्देशार्थे गते सति रामः सुग्रीवराक्षसावुक्तवान् युवां मया सह श्वोदिने अभिगन्तास्थः पुरमयोध्यां गमिष्यथः ॥ १८ ॥ ज० म०

गते तस्मिन्नित्यादि । तस्मिन् गृहीतप्रयोजने हनूमति गते सति रामः सुग्रीवविभीषणौ उक्तवान् । किन्तदित्याह श्वः प्रातर्मया सह युवां पुरमयोध्यां गन्तास्थः गमिष्यथः ॥ १८ ॥ भ०

द्रष्टास्थ इत्यादि । तत्र च पुनः पुर्य्यां नोऽस्माकं तिस्रो मातॄः

नैवं विरहदुःखेन वयं व्याघानिताम्महे।
अमोऽनुभविता नैवं भवद्भ्याञ्च वियोगजः॥ २०॥
एवं युवां मम प्रीत्यै कल्प्तास्थः कपिराक्षसौ।
गन्तुं प्रयतितासाथे प्रातः सह मया यदि॥ २१॥

कौशल्याद्याः खस्रादित्वाच्च ङीप् दासिप्रथमयोः पूर्वसवर्णदीर्घत्वं तुष्टान्तरात्मनः हृष्टमानसाः द्रष्टास्थः भरताश्रयञ्च भरतनिबन्धनञ्च सखित्वं मित्रत्वम् आत्यन्तीनम् अत्यन्तं गामीत्यर्थेऽर्थे अवापारपारे-त्यादिना खः प्राप्तास्थः लब्धासाथे॥ १९॥ ज० म०

द्रष्टास्थ इत्यादि। तत्रायोध्यायां नोऽस्माकं हृष्टमानसास्तिस्रो मातृर्युवां द्रष्टास्थः द्रक्ष्यथः अत्यन्तगं भरताश्रयं सखित्वं मित्रत्वञ्च प्राप्तास्थः प्राप्स्यथः॥ १९॥ भ०

नैवमित्यादि। स्लोकद्वयम् हे कपिराक्षसौ! प्रातर्मया सह गन्तुं यदि प्रयतितासाथे यत्नं कर्त्तास्थः एवं सति युष्मद्विरहदुःखेन वयं न व्याघानिताम्महे न पीड़िता भवितास्मः कर्मणि लुट् चिण्वदिट् संयोजितास्मह इति पाठान्तरं न संयोजिता भवितास्मः युजेर्ण्य-न्तस्य चिण्वदिट् इटोऽसिद्धत्वात् नेरनिटीति णिलोपः भवद्भ्याञ्च वियोगजः श्रमः खेदो नानुभविता अत्रापि चिण्वदिट् एवं मम प्रीत्यै युवां कल्प्तास्थः सम्पादितास्थः लुटि च कॢप इति तङभावपक्षः तासि च कॢप इतीट् प्रतिषेधः कपिसम्बध्यमाने चतुर्थी॥ २०॥ २१॥ ज० म०

नैवमित्यादि। हे कपिराक्षसौ! सुग्रीवविभीषणौ! प्रातर्मया सह गन्तुं प्रयतितासाथे प्रयत्नं करिष्यथ इति वक्ष्यमाणस्लोकेनान्वयः। एवं सति तदा विरहदुःखेन युष्मद्वियोगकष्टेन वयं न व्याघानिताम्महे न पीड़िताम्महे कर्मणि ङी हनग्रहदृशां च इति चिण् खेर्डीघर्ञ्चिति चेति घः इण्वर्जनेन मिणो वर्जनात् न हनस्तङ्। संयोजिता-म्महे इति क्वचित्पाठः। भवद्भ्यां मद्विरहजातः श्रमो नैवानुभविता नानुभविष्यते पूर्ववन्मिण्। एवं सति युवां मम प्रीत्यै कल्प्तास्थः नेम०

उक्तवन्तौ ततो रामं वचः पौलस्त्यवानरौ ।
अनुग्रहोऽयं काकुत्स्थ ! गन्तास्वो यत्त्वया सह ॥२२॥

अनुमन्तास्वहे नावां क्रीड़ितुं विरहे त्वया ।
अपि प्राप्य सुरेन्द्रत्वं किं नु प्रत्तं त्वयास्पदम् ॥ २३ ॥

ततः कथाभिः समतीत्य दोषामारुह्य सैन्यैः सह पुष्पकं ते ।
सम्प्रस्थिता वेगवशादगाधं प्रचोभयन्तः सलिलं पयोधेः ॥२४॥

षे ष्ठाः इति षपो ष्ठाः षे इत्यनिषेधात् ष्ठास्तुभयपदित्वं गम्यते ॥२०॥ २१ ॥ भ०

उक्तवन्तावित्यादि । ततोऽनन्तरं पौलस्त्यवानरौ विभीषणसुग्रीवौ रामं वच उक्तवन्तौ, हे काकुत्स्थ ! त्वया सह यदावां गन्तास्वः गमिष्यावः अयमनुग्रहः प्रसाद इति ॥ २२ ॥ ज० म०

उक्तवन्तावित्यादि । ततो रामवचनानन्तरं पौलस्त्यवानरौ रामं वच उक्तवन्तौ । किन्तदित्याह, हे काकुत्स्थ ! आवां त्वया सह गन्तास्वः गमिष्यावः अयं तवानुग्रहः प्रसादः ॥ २२ ॥ भ०

अनुमन्तास्वहे इत्यादि । किञ्च सुरेन्द्रत्वञ्चेन्द्रत्वं प्राप्तावप्यावां त्वया सह भवन्तमुत्पद्यमानं विरहं वियोगं नानुमन्तास्वहे पुनस्त्वया प्रत्तं दत्तं अच उपसर्गात्तः आस्पदं राज्यं प्राप्तवन्तौ अत सुतरामेव त्वया सह वियोगो न युज्यते भवन्तं विरहमिति वर्त्तमानकालः नानुमन्तास्वहे इति भविष्यत्कालेन सम्बध्यमानः साधुर्भवति धातुसम्बन्धे प्रत्यया इति एतावन्मुद्विलसितम् ॥ २३ ॥ ज० म०

अनुमन्तास्वहे इत्यादि । सुरेन्द्रत्वं प्राप्यापि आवां त्वया सह भवन्तम् उत्पद्यमानं विरहं नानुमन्तास्वहे प्राप्येत्यत प्राप्ताविति क्वचित् पाठः । त्वया किमास्पदं प्रभुत्वम् आवाभ्यां न प्रत्तं न दत्तं राज्यं प्राप्तवन्तावेव ॥ २३ ॥ भ०

अथ सर्गभङ्गार्थं छन्दोऽन्तरेण प्रकीर्णमाह ।

तच्छेषभूतमर्थवशात् प्रकीर्णकक्रियाविलसितं दर्शयन्नाह ।

तत इत्यादि । कथाभिरन्तरोक्ताभिः दोषां रात्रिं समतीत्य

सेतुं महेन्द्रं मलयं सविन्ध्यं
समाल्यवन्तं गिरिमृष्यमूकम्।
सदण्डकारण्यवतीञ्च पम्पां
रामः प्रियायाः कथयन् जगाम॥ २५॥

एते ते मुनिजनमण्डिता दिगन्ताः
शैलोऽयं लुलितवनः सचित्रकूटः।
गङ्गेयं सुतनु! विशालतीररम्या
मैथिल्या रघुतनयो दिशन्ननन्द॥ २६॥

गमयित्वा ततोऽनन्तरं ते रामादयः पुष्पकं विमानमारुह्य सैन्यैः सह अयोध्यां यातुं प्रस्थिताः पयोधेः सलिलमगाधमक्षोभ्यमपि वेगवशात् प्रक्षोभयन्तः॥ २४॥ ज० म०

तत इत्यादि। ततोऽनन्तरं कथाभिर्वाक्यैर्दीर्घां रात्रिं समतीत्य गमयित्वा ते श्रीरामविभीषणादयः सैन्यैः सह पुष्पकं विमानमारुह्य वेगवशात् समुद्रस्य अगाधमतिविस्तरं जलं प्रक्षोभयन्तः अयोध्यां समास्थिताः सम्यक् प्रस्थानं कृतवन्तः॥ २४॥ भ०

सेतुमित्यादि। एष सेतुस्त्वदर्थे मया कारितः एते च महेन्द्रादयः इत्यादि प्रियायाः सीतायाः कथयन् जगाम अयोध्याभिमुखं गतवान् ॥ २५॥ ज० म०

सेतुमित्यादि। रामः प्रियाया निकटे तानि कथयन् जगाम॥ २५॥ भ०

एते इत्यादि। शोभना तनुः शरीरं यस्याः सा त्वं, हे सुतनु! क्वचिदुकारान्तमपि स्त्रियः प्रोक्तमिति वचनात् नदीसंज्ञकत्वात् सम्बुद्धि ह्रस्वत्वं कृषिचमितनिसर्जिमज्जिभ्य इत्यौणादिकस्तनुशब्दः एते दिगन्ताः मुनिजनैस्तन्निवासिभिर्मण्डिताः भूषिताः अयं स चित्रकूटः यत्र भरतेनागम्य दृष्टोऽसि लुलितवनोऽस्मद्गमनशात् इयञ्च गङ्गा

शिञ्जानभ्रमरकुलाकुलाग्रपुष्पाः
शीताम्भःप्रविलयसंप्लवातिलीनाः।
एते ते सुतनु! पुरीजनोपभोग्या
दृश्यन्ते नयनमनोरमा वनान्ताः॥ २७॥
स्थानं नः पूर्वजानामियमधिकमसौ प्रेयसी पूरयोध्या
दूरादालोक्यते या हुतविविधहविःप्रीणिताशेषदेवा।

शिवाख्यतीर्थतया रम्या एवं मैथिल्या दिशन् कथयन् ननन्द मुदितः॥ २६॥ ज० म०

एते इत्यादि। रघुतनयो रामो मैथिल्या इति दिशन् कथयन् ननन्द। किमित्याह, हे सुतनु! ते पूर्वमनुभूता मुनिजनैः शोभिता दिगन्ताः सोऽयं मनोहरचित्रकूटपर्वतः सेयं महातीरेण रमणीया गङ्गा तीरेऽत्र तीर्थेति पाठे महातीर्थमध्ये रमणीयेत्यर्थः॥२६॥ म०

शिञ्जानेत्यादि। हे सुतनु! एते वनान्ताः पुर्यां दृश्यन्ते शिञ्जानैः कूजद्भिः भ्रमरकुलैः आकुलान्यग्राणि पुष्पाणि येषां वनान्तानां प्रविलीयतेऽस्मिन्निति प्रविलयः एरच लिमीलाभ्यां खलचोः प्रतिषेधो वक्तव्यः विभाषालीयतेरित्यादित्वं न भवति शीताम्भसः प्रविलयः कुल्या तेन यः संप्लवः प्लापना तेनाभिलीनाः कुल्यया सिच्यमानमूलत्वात् अतएव नयनमनोरमाः रमयतीति कर्त्तर्यच् पश्चात् षष्ठीसमासः एवञ्च पुरीजनानामयोध्यानिवासिनाम् उपभोग्याः तथा॥२७॥ ज०म०

शिञ्जानेत्यादि। हे सुतनु! एते ते वनान्ता दृश्यन्ते कीदृशाः शिञ्जानैः कलं ध्वनद्भिर्भ्रमरसमूहैर्व्याप्तानि अग्रपुष्पाणि येषां प्रविलीयन्ते संश्लिष्यन्ते यत्र स प्रविलयः कुल्या शीताम्भाश्चासौ प्रविलयश्चेति तेन यः संप्लवः आप्यायनं तेनातिलीनाः कुल्ययाभिषिच्यमानमूलत्वात् पुरीजनोपभोग्याः सौन्दर्यात् नयनमनोरमाः॥ २७॥ म०

स्थानं न इत्यादि। हे सीते! असौ पुरी नोऽस्माकं पूर्वजानां स्थानमधिकम् अतएव च प्रेयसी प्रियतमा दूरादालोक्यते उच्चप्रासाद-

सोऽयं देशो रुदन्तं पुरजनमखिलं यत्र हित्वा प्रयातौ
आवां सीते ! वनान्तं सह धृतधृतिना लक्ष्मणेन क्षपान्ते २८
तूर्य्याणामथ निस्वनेन सकलं लोकं समापूरयन्
विक्रान्तैः करिणां गिरीन्द्रसदृशां क्ष्मां कम्पयन् सर्वतः ।
सानन्दाम्बुविलोचनः प्रकृतिभिः सार्द्धं सहान्तःपुरः
सम्प्राप्तो भरतः समारुतिरलं नम्रः समं मातृभिः ॥२९॥

योगात् या क्रतैर्विविधैर्हविर्भिराज्यादिभिः प्रीणिता अशेषदेवा यत्र देशे पुरजनमखिलं समस्तं रुदन्तं क्षपान्ते उषसि हित्वा त्यक्त्वा छलेन आवां वनान्तं प्रयातौ सोऽयं देशः सह लक्ष्मणेन धृतधृतिना धृतसौमनस्येन ॥ २८ ॥ ज० म०

स्थानं न इत्यादि । हे सुतनु ! सेयं पुरी दूरादालोक्यते असावयोध्या नोऽस्माकं पूर्वजानाञ्च पितृपितामहादीनाञ्च स्थानम् अतिशयं प्रेयसी प्रियतमा याऽयोध्या क्रतैर्विविधैर्हविर्भिराज्यादिभिः प्रीणिता तर्पिता अशेषा देवा यत्र तादृशी, हे सीते ! सोऽयं देशः यत्र रुदन्तम् अखिलं पुरजनं हित्वा त्यक्त्वा क्षपाया रात्रेरन्ते धृतधृतिना लक्ष्मणेन सह आवां वनान्ते प्रयातौ गतौ ॥ २८ ॥ म०

तूर्य्याणामित्यादि । अथानन्तरं भरतो हनूमतः समुपलब्धरामवृत्तान्तत्वात् सानन्दाम्बुविलोचनः सानन्दाम्बूनी विलोचने यस्य तथाभूतः प्रकृतिभिः अमात्यादिभिः सार्द्धं सहान्तःपुरः अन्तःपुरेण समं मातृभिः कौशल्यादिभिः सह मातृभिः हनूमता च सह अयं नम्रः अनुद्धतः समीपं मे नाथ आगत इति तूर्य्याणां निस्वनेन सकलं लोकं सार्गप्राप्तं समापूरयन् व्याप्नुवन् करिणाञ्च गिरीन्द्रसदृशां त्वदादिषु इश इति चकारात् किन् विक्रान्तैः पादन्यासैः क्ष्मां कम्पयन् सर्वतो विधूनयन् अर्त्ति होत्यादिना युक् सम्प्राप्तः रामसमीपमित्यर्थः ॥ २९ ॥ ज० म०

तूर्य्याणामित्यादि । अथानन्तरं रामवार्त्तां प्राप्य प्रकृतिभिरमात्यैः सार्द्धम् अन्तःपुरेण सहितो मारुतिना हनूमता सहितः

अथ ससम्भ्रमपौरजनावृतो भरतपाणिधृतोज्ज्वलचामरः ।
गुरुजनद्विजबन्द्यभिनन्दितः प्रविशति स्म पुरं रघुनन्दनः ३०
प्रविधाय धृतिं पुरीजनानां युवराजं भरतं ततोऽभिषिच्य ।
जघटे तुरगाध्वरेण यष्टुं कृतसम्भारविधिः पतिः प्रजानाम् ३१

भ्रातृभिः सह भरतः सम्प्राप्त आगतः कीदृशः तूर्य्याणां चतुर्विध-वाद्यानां निस्वनेन ध्वनिना सकलं लोकं भुवनं समापूरयन् गिरीन्द्र-सदृशां कुलपर्वततुल्यानां करिणां हस्तिनां विक्रान्तैर्विक्रमैः पाद-विक्षेपैर्वा क्ष्मां पृथिवीं सर्वतः सर्वां कम्पयन् चालयन् तद्भक्तैरिति द्वितीयास्तस् आनन्दाश्रुसहिते विलोचने यस्य तादृशः नमनशीलः ॥ २९ ॥ भ०

अथेत्यादि । अथ भरतसम्प्राप्त्यनन्तरं रघुनन्दनो रामः ससम्भ्रमेण सादरेण सहर्षेण पौरजनेनावृतः भरतपाणिना धृतमुज्ज्वलं चामरं यस्य गुरुजनेन द्विजैर्बन्दिभिश्च स्तुतिपाठकैरभिपूजितैरभिष्टुतः सन् पुरमयोध्यां प्रविशति स्म प्रविष्टः ॥ ३० ॥ ज० म०

अथेत्यादि । अथानन्तरं रघुनन्दनो रामः पुरमयोध्यां प्रविष्ट-वान् कीदृशः ससम्भ्रमेण सादरेण पौरजनेनावृतो वेष्टितः । ससंभ्रमे-त्यत्र ससम्मदेति क्वचित्पाठः सम्मदो हर्षः । पुनः कीदृशः भरतपाणिना धृतमुज्ज्वलं चामरं यस्य गुरुजनैर्द्विजैर्बन्दिभिः स्तुतिपाठकैश्चाभिनन्दितः श्लाघितः ॥ ३० ॥ भ०

प्रविधायेत्यादि । प्रविश्य च पुरं प्रजानां पती रामः जनानां धृतिं प्रीतिरूपचेतोवृत्तिं परामुत्कृष्टां प्रविधाय कृत्वा भरतञ्च युव-राजमभिषिच्य ततोऽनन्तरं तुरगाध्वरेणाश्वमेधेन यष्टुं जघटे चेष्टित-वान् कृतसम्भारविधिः संभ्रियत इति सम्भारः द्रव्यगण इत्यर्थः कृतो-ऽनुष्ठितः सम्भारस्य विधिरितिकर्त्तव्यतालक्षणो येन स इति ॥ ३१ ॥ ज० म०

प्ररिधायेत्यादि । ततोऽनन्तरं प्रजानां पती रामः पुरीजनानां धृतिम् प्रविधाय दानसंवादनादिभिः प्रकृष्टां कृत्वा युवराजं भरतञ्च

इदमधिगतमुक्तिमार्गचित्रं
विवदिषतां वदताञ्च सन्निबन्धात् ।
जनयति विजयं सदा जनानां
युधि सुसमाहितमैश्वरं यथास्त्रम् ॥ २२ ॥

अभिषिच्य यौवराज्ये भरतस्याभिषेकं कृत्वा कृतसम्भारविधिः कृत-यज्ञोचितसामग्रीकः सन् तुरगाध्वरेण अश्वमेधेन यज्ञेन यष्टुं यागं कर्त्तुं जघटे चेष्टितवान् ॥ २१ ॥ भ०

कुलवितरणविद्यावैभवाम्बष्ठगोष्ठी-
वरहरिहरखानख्यातवंशाम्बुधीन्दोः ।
भुवनविदितकीर्त्तिः सेनगौराङ्गतो यो-
ऽजनि स भरतसेनो भट्टिटीकाञ्चकार ॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्री-
भरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां पुर-
प्रवेशो नाम द्वाविंशतितमः सर्गः ।

समाप्तश्चायं भट्टिग्रन्थः ।

---

नायकाभ्युदयान्तं महाकाव्यमिति परिसमापय्य तत्र जयमिच्छता अस्मिन्नादरः कर्त्तव्य इति दर्शयन्नाह ।

इदमित्यादि । इदं महाकाव्यम् उक्तेर्वचनस्य यो मार्गः पन्थाः सुसंस्कृतशब्दलक्षणः प्रपञ्चितः तेन चित्रं विस्मयनीयं सुसमाहितम् अलङ्कारयुक्तम् अधिगतं परिज्ञातं सज्जनानां विवदिषतां वक्तुमिच्छतां वदताञ्च वक्तुं प्रवर्त्तमानानां सदा विजयं जनयति सन्निबन्धात् शोभनबन्धात् कारणात् यथास्त्रमैश्वरं पाशुपतम् अधिगतमुक्तिमार्गम् अधिगतः प्राप्तः मुक्तो मोचनमार्गः क्षेपणमार्गो येन चित्रं नाना-वर्णकेन चित्रितत्वात् सुसमाहितं युधि संग्रामे विजयं विदधाति तद्वत् ॥ २२ ॥ ज० म०

दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम् ।
हस्तामर्ष इवान्धानां भवेद्व्याकरणादृते ॥ ३३ ॥
व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम् ।
हता दुर्मेधसश्चास्मिन् विद्वत्प्रियतया मया ॥३४॥
काव्यमिदं विहितं मया वलभ्यां
श्रीधरसेननरेन्द्रपालितायाम् ।

तस्मादादरः कर्त्तव्य इति तत्रापि य एव व्याकरणमधीतवान् तस्यैवात्रादरो युक्त इति दर्शयन्नाह ।

दीपतुल्य इत्यादि । अयं प्रबन्धो महाकाव्यसंज्ञकः प्रबध्यते विरच्यत इति कृत्वा शब्दलक्षणमेव चक्षुर्येषां तेषां दीपतुल्यः अतएवै-तत्काव्याधिगमात् स्वातन्त्र्येणान्यानपि शब्दान् प्रयोक्तुं क्षमत्वात् व्याकरणादृते विना हस्तामर्ष इवान्धानां हस्तामर्ष इवावबोधः यथा अन्धानां हस्तेन घटपटादिवत् स्वापराङ्गस्य संस्थानमात्रपरिज्ञानं यथावस्थितस्वरूपपरिज्ञानम् एवमनधीतव्याकरणानां न शब्दस्वरूप-परिज्ञानम् अन्यत्र शब्दश्रवणात् ततश्च तत्स्वरूपापरिज्ञानात् कुतो-ऽप्यन्यशब्दप्रयोग इति ॥ ३३ ॥ ज० म०

एवञ्च कृत्वा विद्वद्भिरनुरुध्यमानेन मयेदं काव्यं कृतमिति दर्शयन्नाह ।

व्याख्यागम्यमित्यादि । व्याख्यागम्यं व्याख्यानाद्विना बोद्धुं न शक्यते किमर्थमीदृशं कृतमिति चेत् उत्सवः सुधियामलं शास्त्रे कुशल-बुद्धीनां परं प्रमोदो जायते एवञ्च सत्यस्मिन् काव्ये विषयभूते दुर्मेधसो व्याकरणबाह्याः मया हताः नानुगृहीताः तस्माद्विद्वत्प्रियतया विद्वांसः प्रिया यस्य मम विद्वत्प्रियः तद्भावस्तत्ता तया हेतुभूतयेति ॥ ३४ ॥ ज० म०

यत्रेदं काव्यं कृतं तद्दर्शयन्नाह ।

काव्यमित्यादि । मयेदं काव्यं विहितं कृतं श्रीधरसूनुना नरेन्द्र-

कीर्त्तिरतो भवतान्नृपस्य तस्य
क्षेमकरः क्षितिपो यतः प्रजानाम् ॥ ३५ ॥

इति भट्टिकाव्ये द्वाविंशतितमः सर्गः।

समाप्तश्चायं भट्टिग्रन्थः।

---

नाम्ना न्टपेण पालितायां रक्षितायां वलभ्यां वलभीनामपुर्य्याम् अत एव काव्यविधानाय या कीर्त्तिः सा तस्यैव राज्ञो भवतात् आशिषि तातङ् यतः प्रजानां क्षेमकरः क्षेमानुकूलः आनुलोम्ये टः ॥३४॥ज०म०

इति वलभीवास्तव्यस्य श्रीस्वामिसूनोर्भट्टमहाब्राह्मणस्य महा-
वैयाकरणस्य कृतौ रावणवधे महातिङन्तकाण्डे लुङ्विल-
सितनाम्नो नवमपरिच्छेदस्य जटीश्वरो जयदेवो
जयमङ्गल इति च नामभिस्त्रिभिः सुप्र-
सिद्धस्य अनेकशास्त्रव्याख्यानुकृतौ
टीकायां काव्यस्यायोध्या-
प्रत्यागमनं नाम
द्वाविंशः सर्गः।

जयमङ्गलकृता टीका समाप्ता।

---